श्रीमल्लोकाचार्यप्रणीत.

# डिहरयस्त्रग्रन्थेश्रीमन्त्रार्थप्रकरणम्

न्त्रार्थदीपिकासहितःश्रीमद्वरवरमुनीन्द्रप्रसा-

दितव्याख्यासहितम्

मूल्यम् २—०—०

श्री शारदा प्रेस अफजल गंज चमन हैद्राबाद दक्षिण.

२.५



॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीलोकगुरवेनमः ॥

॥ श्रीमद्वरवरमुनयेनमः ॥

श्रीमद्वरवरमुनीन्द्र विरचित

# मुमुक्षुप्पडि

॥ व्याख्यानावतारिकारम्भः ॥

श्रियःपतिः, श्रीवैकुण्ठनिकेतनो, नित्यमुक्तानुभाव्यो,

---

श्रीमते रामानुजाय नमः.

श्रीलोकगुरवे नमः.

श्रीमद्वरवरमुनये नमः.

श्रीशैललक्ष्मणमुनये नमः.

अव्याद्व्याजकारुण्यनिधिरम्बुजलोचनः । श्रीरङ्गधामनिलयस्सदा श्रीरङ्गनायकः ॥

रम्यजामातरं नत्वा स्मृत्वा श्रीलोकदेशिकम् ।
करोमि बालबोधाय मन्त्रव्याख्यानदीपिकाम् ॥

"[1]प्रणतार्तिहरांशाय प्रकृष्टगुणशालिने । लीलयोद्धृतलोकाय लोकार्य गुरवे नमः" इत्युक्तरीत्या भवभयाभितप्तजनभागधेयवैभवभावितावतरणेन परमकारुणिकेन भगवता श्रीकृष्णपादलोकाचार्येण सकलचेतनोज्जीवनार्थं प्रसादितरहस्यत्रयमीमांसाशास्त्रम्—"[2]पुनश्चाहीश्वरः श्रीमान् मन्नियोगान् महीतले । जनिष्यति श्रीनगर्यो यतीन्द्रप्रवणात्मना" इत्युक्तरीत्या परमकारुणिको भगवान् श्रीरम्यजामातृमुनीन्द्रः सकलजनानां सुखग्रहणाय वृत्तिरूपेण व्याख्यातुकामः, मनोवाक्कायैः देवताचार्यप्रणामं यथावत्कृत्वा निर्विघ्नेन ग्रन्थपरिसमाप्त्यर्थं "[3]सश्लाघ्य स्सगुणी धन्यः सकुलीन स्सबुद्धिमान् । सशूरस्सच विक्रान्तो यं त्वं देवि निरीक्षसे" इत्युक्तप्रकारेण श्रीमहालक्ष्मिस्मरणरूपमङ्गलाचरणपूर्वक मारभ्यते— **श्रियःपतिरिति** । श्रीशब्दस्य, "[4]श्रीरिति प्रथमं नाम लक्ष्म्याः" इति श्रुतिसिद्धलक्ष्मीवाचकत्व-

---

१. श्रीलोकाचार्यमंगलाशासनम्. श्लो. ८ ॥
२. कुरुकापुरीमहात्म्ये ॥
३. विष्णुपुराणे. १-९-१२१ ॥
४. महानारायणोपनिषदि ॥

## निरतिशयानन्दयुक्तः, सर्वेश्वरः-

सिद्धया - मङ्गलाचरणं सिद्धम् । विशेषणचतुष्टयमध्ये श्रियःपतित्वस्य प्राथम्यं स्वरूपनिरूपकधर्माधिक्याभिप्रायेण । "आकारिणस्तु विज्ञानमाकारज्ञानपूर्वकम् । तदाकारं श्रियं ज्ञात्वा ज्ञातव्यो भगवान् हरिः" इति यज्ञमूर्ति श्रीसूक्तेः । नित्यमुक्तानुभाव्यः इति—"एवं वैकुण्ठनाथोऽसौ राजते परमे पदे । सेव्यमानस्सदा नित्यैर्मुक्तैर्भोगपरायणैः" इत्युक्तप्रकारेणापरिच्छिन्नज्ञानादिगुणविशिष्टैः नित्यैर्मुक्तैश्चानुभाव्य इत्यर्थः । 'नित्यं मुक्ताः - नित्यमुक्ताः, नित्यमुक्तैरनुभाव्यः - नित्यमुक्तानुभाव्यः' इति विग्रहः; कालत्रयेऽपि प्रकृतिसम्बन्धशून्यैर्नित्यसूरिभिरनुभाव्य इति यावत्।नित्यैर्मुक्तैरनुभाव्य इत्युक्तिरसङ्गता । 'सदा पश्यन्ति सूरयः' 'यद्वै पश्यन्ति सूरयः' इति श्रुतिस्मृतिभ्यां सूरिभोग्यत्वमात्रस्यैव परत्वलक्षणत्वोक्तेः' इति केचिद्वर्णयन्ति । तत् तत्त्वत्रयश्रीसूक्तिविरोधात् अनादरणीयम् । इयं हि तत्रत्य श्रीसूक्तिः—'तत्र, परत्वन्नाम - अकालकाल्ये आनन्दान्तशून्ये अद्वितीये देशे नित्यमुक्तयोर्भोग्यत्वेन स्थितिः' इति । तत्र व्याख्याने श्रीसौम्यजामातृदेशिकैस्सुस्पष्टं व्याख्यातम् । अतो यथोक्त एवार्थः ।

निरतिशयानन्दयुक्तः इति —'निरस्तः-अल्पीकृतः, अतिशयः इतरातिशयः, येन सः-निरतिशयः, सचासौ आनन्दश्च निरतिशयानन्दः, तेन युक्तः-निरतिशयानन्दयुक्तः' इति समासः । आनन्दवल्ल्युक्तप्रकारेण निरतिशयानन्दयुक्त इत्यर्थः ।

सर्वेश्वरः सर्वेषां-ब्रह्मरुद्रेन्द्रादीनाम्, ईशः-नियन्ता, सर्वेश्वरः। 'लोकेश ब्रह्मरुद्राणामीशस्सर्वेश्वरः स्मृतः' इत्युक्तेः ।

अत्रैवं केचिदाचार्याः वर्णयन्तिः—श्रियः पतित्वात् श्रीवैकुण्ठनिकेतनः. 'श्रियः वैकुण्ठम्-श्रीवैकुण्ठम्, श्रीवैकुण्ठमेव निकेतनं यस्य स श्रीवैकुण्ठनिकेतन' इति समासः । 'गृहंण्या गृहमुच्यते' इत्युक्तेः । पाद्मे च "वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः । रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया' इति । तथैव श्रीपराशरभट्टार्यैरप्यनुगृहीतम् "यद्दूरे मनसो यदेव तमसः पारे यदत्यद्भुतं यत्कालादपचेलिमं सुरपुरी यद्गच्छतो दुर्गतिः । सायुज्यस्य यदेव सूतिरथवा यद्ब्रह्मम्मद्रिरां तद्विष्णोः परमं पदं तव कृते मातस्समाम्नासिषुः" इति । श्रियःपतित्वात् नित्यमुक्तानुभाव्यः । तथाच 'पुंण्यास्ते परिचारकर्मणि सदा पश्यन्ति ये सूरयः" इत्युक्तप्रकारेण श्रियः परिचारकभूतैर्नित्यमुक्तैरनुभाव्य इत्यर्थः। श्रियःपतित्वात् निरतिशयानन्दयुक्तः । "श्रद्धया देवो देवत्वमश्नुत" इति श्रुतेः । श्रियःपतित्वात् सर्वेश्वरः । "यस्य वक्षसि या देवी प्रभाग्नेरिव तिष्ठति । स वै सर्वेश्वरः श्रीमान् अक्षरः पुरुषोऽव्ययः" इति पाद्मोक्तेः । सर्वेश्वरत्वात् निरतिशयानन्दयुक्तः । "असौ त्रिपाद्विभूतेश्च लीलाया अपि चेश्वरः । विभूतिद्वयमैश्वर्यं तस्यैव सुमहात्मनः" इत्यादि पाद्मोत्तरपुराणवचनोक्तप्रकारेणोभयविभूतिनिर्वाहक-

---

१. यज्ञमूर्तिकारिका॥
२. पराशरस्मृ. उत्तरखं॥
३. सामवेदे. उत्तर. १८-८-२-२-४॥
४. वि-पु. १-६-३९॥
५. तत्त्वत्रये. ३-४२॥
६ ॥
७. इतिहाससमुच्चये. ९-४१॥
८. पा-पु. उत्तर॥
९. श्रीगुणरत्नकोशे. २१॥
१०. श्रीगुणर-को. २२ ॥
११. यजुर्वेदे-तै-ब्रा. ३-१२-३-१ ॥
१२. पा-पु-उत्त ॥
१३. पा-पु-उत्त॥

**तादृशनित्यसूरिवत् आत्मानुभवपूर्वक नित्यकैङ्कर्यरसतयोज्जीवनयोग्यानामपि तस्माच्च्युतानाम् *"असन्नेव" इत्युक्तरीत्याऽसत्कल्पानां**

---

त्वाद्भगवतो निरतिशयानन्दयुक्तत्वं युक्तमित्यर्थः। निरतिशयानन्दयुक्तत्वात् नित्यमुक्तानुभाव्यो भवति, अनुभाव्यः-सेव्य इत्यर्थः। "[१]गुणाधिके हि विषये गुणसारस्य वेदिनः। रामे रामानुजस्येव दास्यं गुणकृतं भवेत्" इति वचनात्। नित्यमुक्तानुभाव्यत्वात् श्रीवैकुण्ठनिकेतनत्वम्। "[२]देवानां पूरयोध्या" "[३]यत्र देवानामधिदेव आस्ते" इत्युक्तरीत्या नित्यसूरीणां वैकुण्ठाख्यविभूतेः निकेतनत्वेन भगवतः प्रतिपादनात्। श्रीवैकुण्ठनिकेतनत्वात् श्रियःपतित्वम् इति वा योजनीयम्—इति।

**तादृशेति**—"[४]सदा पश्यन्ति सूरयः" "तद्विप्रासो व्यपन्यवो जागृवांसस्समिन्धते" "[५]कैङ्कर्यनित्यनिरतै र्भवदेकभोगैर्नित्यैरनुक्षणनवीनरसार्द्रभावैः"इत्याद्युक्तरीत्यानुभवैकरसभोग्यत्वेन स्थितनित्यसूरिवदित्यर्थः। मुक्तानामतीतकालानुभवाभावात् तेषाम् दृष्टान्तत्वेन नोक्तम्। **आत्मानुभवेति**— "[६]रसो वै सः" "[७]क्षीरवत्सुशीलगुणवान्" इत्युक्तप्रकारेण रसानां रसतया स्थितं भगवन्तमनुभूयेत्यर्थः। निरतिशयाभिनिवेशेन चेतानानुभवे क्रमेण व्युत्क्रमेणवा प्रवृत्तं भगवन्तं प्रति तत्तदनुगुणं चेतनेन यत्प्रतिवीक्षणप्रदानं सोऽनुभव इत्युच्यते। सच ब्रह्मणा सह सल्लापसंश्लेषादिरूपः। अयमेव सायुज्यमित्युच्यते। ब्रह्मणा सह एकभोगान्वयस्यैव सायुज्यशब्दार्थत्वात्।

**नित्यकैङ्कर्येति**—'[८]किञ्चित्करोतीति किङ्करः, किङ्करस्य भावः-कैङ्कर्यम्; नित्यञ्च तत् कैङ्कर्यञ्च- नित्यकैङ्कर्यम्, नित्यकैङ्कर्ये रसः-रागः, प्रीतिः, येषां ते-नित्यकैङ्कर्यरसाः' इति समासः। अनुभवजनितप्रीतिकारितनित्यकैङ्कर्ये प्रीतिविशिष्टा इत्यर्थः। कैङ्कर्यंनाम-सर्वदेशसर्वकाल सर्वावस्थोचितसर्वविधशेषवृत्तिः। तस्य नित्यत्वम्- '[९]शेषत्वमेवात्मनस्स्वरूपम्' इत्युक्तेः। '[१०]अकिञ्चित्करस्य शेषत्वानुपपत्तिः' इत्युक्तरीत्या किञ्चित्काराभावे तदनुपपत्तेश्च। (योग्यता) नाम-अनन्यार्हशेषत्वानन्यशरणत्वानन्यभोगत्वरूपाकारत्रयम्। **तस्मात्** इति, तादृशशेषशेषिभावादिसम्बन्धज्ञानात् च्युतानामित्यर्थः। च्युतेर्हेतुः 'सम्बन्धज्ञानाभाव एव' इत्यत्र प्रमाणमाह—(असन्नेवे)ति। सेयं श्रुतिः भाष्यकारेण जिज्ञासाधिकरणादिषु व्याख्यातम् "[१०]असन्नेव स भवति असद्ब्रह्मेति वेदचेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति ब्रह्मविषयज्ञानसद्भावासद्भावाभ्यामात्मनाशमात्मसत्ताञ्च वदती"ति, "[११]ब्रह्मज्ञानाज्ञानाभ्यामात्मनस्सद्भावासद्भावौ दर्शयति" इति च। (असत्कल्पानामि)ति-"[१२]तत्सादृश्यमाभावश्च तदन्यत्वन्तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाष्षट्प्रकीर्तिताः" इत्युक्तरीत्या नञः अन्योन्याभावार्थकत्वात् 'सन्न भवतीत्यसत्, असता कल्पाः-असत्कल्पाः' इति विग्रहः; "[१३]ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति पाणिनीयसूत्रेण किञ्चिन्न्यूनादृश्यार्थे आगतकल्पप्रत्ययत्वात् असच्छब्दवा-

---

* तै. आन. ६-१॥
१॥
२. यजु-आरणे-१-प्रश्न॥
३. यजु॥
४. सामवेदे. उत्तर. १८-२-२-४॥
५. श्रीवैकुण्ठस्तवे. ७५॥
६. तैत्तरीयोपनिषदि-आनन्द. ७-१॥
७. पेरियवन्दादि. ५८. पाशुर॥
८. मुमुक्षुप्पडि. १-५६॥
९. भाष्यकारमुक्तकम्॥
१०. भाष्ये. १-१-१॥
११. भाष्ये. १-१-१३॥
१२॥
१३. पाणिनी-सू. ५-३-६७॥

**संसारिचेतनानां क्लेशानुसन्धानेन अत्यन्तव्याकुलचेताः,**

च्यात् अचेतनात् किञ्चिन्न्यूनतया सदृशानामित्यर्थः । तच्च शेषशेषिभावसम्बन्धज्ञानाश्रयशून्यत्वात् असद्व्यवहारार्हत्वम् । विहिताविहितप्रवृत्तिनिवृत्तिशून्यत्वात् अचित्सादृश्यम्, चैतन्याश्रयत्वात् किञ्चिन्न्यूनमिति ध्येयम् । **संसारिचेतनानामिति**-'अनाद्यचित्सम्बन्धेन प्रवाहरूपेणागताविद्या-कर्मवासनारुचिविवशानां जन्मजरामरणादिक्लेशभाक्तया विभ्रममाणानां बद्धचेतनानामित्यर्थः । **क्लेशानुसन्धानेनेति** - आध्यात्मिकाधिदैविकाधिभौतिकरूपक्लेशानुसन्धानेनेत्यर्थः । अत्र "[1]आ-ध्यात्मिको वै द्विविधः शारीरो मानसस्तथा । शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः ॥ शिरोरोग प्रति श्यायज्वरशूलभगन्धरैः । गुल्मार्शश्वयथुश्वासश्छर्द्यादिभिरनेकधा । तथाक्षिरोगातिसारकुष्ठाङ्गामय-संज्ञिकैः ॥ भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥ कामक्रोधभयद्वेषलोभमोहविषादजः । शोका-सूयावमानेर्ष्यामात्सर्यादिमयस्तथा । मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा । इत्येवमादिभिर्भेदै-स्तापो ह्याध्यात्मिकः स्मृतः। मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः॥ सरीसृपाद्यैश्च नृणाञ्जन्यते चाधि-भौतिकः। शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवः॥ तापो द्विजवरश्रेष्ठ कथ्यते चाधिदैविकः। गर्भजन्मजरा-ज्ञानमृत्युनारकजन्तथा । दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम" इत्यादि श्रीविष्णुपुराणवचनं द्रष्ट-व्यम्। **अनुसन्धानेनेति** 'अनुसृत्यसन्धीयत इत्यनुसन्धानम्' इति व्युत्पत्याऽविच्छेदेनानुसन्धानेने-त्यर्थः। **अत्यन्तव्याकुलचित्तः** इति-'अन्तमतीत्य वर्तत इति-अत्यन्तम्, अत्यन्तं व्याकुलं चित्तं यस्य सः' इति विग्रहः । अत्र "[2]व्यसनेषु मनुष्याणां भृशं भवति दुःखितः । उत्सवेषु च सर्वेषु पितेव परि-तुष्यति" इत्यादिकमनुसन्धेयम् । "[3]एवं संसृति चक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते' इत्यहिर्बुध्न्यसंहितावचनमभिप्रेत्य—संसारिचेतनानामित्यारभ्य —अत्यन्त-व्याकुलचित्तः इत्यन्तमुक्तम् ।

ननु निखिलहेयप्रत्यनीककल्याणैकतानस्वरूपस्य परमात्मनः अत्यन्तव्याकुलचित्तत्वं कथं सम्भ-वतीति चेत्, सम्भवत्येव । परदुःखदुःखित्वरूपदयागुणस्य सत्वात् । कृपायाः परदुःखदुः-खित्वरूपत्वं श्रीसहस्रनामभाष्ये '[4]विकर्ते'ति नाम व्याख्यानावसरे श्रीपराशरभट्टारकैरनुगृहीतम् । इयं हि तत्सूक्तिः—"स्वार्थहर्षशोकाद्यभावेऽपि परार्थतत्प्रसक्तिरदोषः । अन्यथा परदुःखदुः-खित्वादयो गुणाः कथमस्य स्युः" इति । नच वाच्यम् "[5]दयाहि नाम-स्वार्थनिरपेक्षा परदुःखासहि-ष्णुता" इति रचनानुपपत्त्यधिकरणभाष्यविरोध—इति, 'परदुःखासहिष्णुत्वञ्च परदुःखदर्शनजनितदुः-खवत्वमेव' इति पर्यवसितार्थस्यानुगृहीतत्वात् । तदुक्तं श्रीमति रामायणे "[2]व्यसनेषु मनुष्याणाम्"इति। अत्र परदुःखदर्शनजनितदुःखवत्त्वस्य स्पष्टतया प्रतिपादनात् न विरोधः । अयमर्थः '[6]कर्ता' इति नाम भाष्येऽपि स्फुटः "अधिकारी फली जीवोऽपि हि, स्वयं स्वस्य यथा, सुखदुःखाभिमानी तथा; तद-तिशयेन वा तदवस्थाभिमानि हि भगवान् । यथा "व्यसनेषु मनुष्याणाम्...परितुष्यति" इति । "[7]बहु स्यां प्रजायेय" इति च । पृथगभिमानित्वे हि न बहुस्यामिति स्यात्" इति । "[8]दयान्येषां

१. वि-पु. ६-५-२,९॥
२. श्रीरामा-अयो. २-४२॥
३. अहि-सं. १४-२८॥
४. सहस्रनाम. ३८३॥
५. भाष्ये. २-२-१॥
६. सहस्रनाम. ३८२॥
७. तै-उप-आनन्द. ६-२॥
८. श्रीरंग-स्तवे. २-१०३॥

दुःखाप्रसहनम्'' इति श्रीरङ्गराजस्तवोक्तिश्चैवं प्रकारेणैव नेया। न च परदुःखदुःखित्वं दया न भवति, किन्तु गुणान्तरमेव स्यादिति वाच्यम्—जिज्ञासाधिकरणश्रुतप्रकाशिकायां परदुःखदर्शनजनितदुःखस्य कृपारूपत्वप्रतिपादनात्। इयञ्च तत्सूक्तिः—''दयाहि स्वार्थनिरपेक्षापरदुःखासहिष्णुता। अत्रानुकूलेतरजनः 'पर' इति विवक्षितः। अर्थादिकामनया परदुःखं शिशमयिषोस्तद्दुःखानुवृत्तिरनिष्टास्यात् इति तद्व्युदासाय—स्वार्थ निरपेक्षशब्दः। यद्यपि कृपया परं रक्षतश्शास्त्रसिद्धमदृष्टम्, तथाप्यदृष्टाभिसन्धिरहितस्यैव परदुःखदर्शनानन्तरमवशाश्रुपातादिमत्वदर्शनात्, तद्रक्षणदशायामप्यदृष्टाभिसन्धिराहित्यदर्शनाच्च—स्वार्थानपेक्षता युक्ता। परदुःखदर्शनजनिततादात्विकस्य दुःखनिवृत्तिरूपफलात् तत्प्रवृत्तिरिति न स्वार्थानपेक्षत्वमिति चेत्—ईदृशं स्वार्थत्वं शेषस्याप्यस्ति। तद्धि स्वार्थानपेक्षत्वं न विहन्ति'' इत्यादि। अत्र च परदुःखदर्शनजनिताश्रुपातादेस्तत्कारणदुःखस्यच कृपावत्पुरुषे स्पष्टतया प्रतिपादनात्, दयायाः परदुःखदुःखित्वरूपत्वमाचार्यानुमतमेवेति तस्य कृपागुणरूपत्वे न किञ्चिद्बाधकमिति। नच—ईश्वरस्योक्तरीत्या दुःखित्वाङ्गीकारे निर्दुःखत्वश्रुतिविरोधो दुर्वार एवेति वाच्यम्—निर्विकारश्रुतिसामान्यस्य कर्मप्रयुक्तविकारसामान्यनिषेधपरतायाः श्रीभाष्यादौ स्पष्टतयानुगृहीतत्वात् चेतनवत्कर्मप्रयोज्यदुःखाभावस्यैव तदर्थतया विरोधाभावात्। नच सर्वकर्मफलप्रदस्सर्वेश्वरः चेतनानां तत्तत्कर्मानुरूपदुःखमुत्पाद्य तद्दर्शनेन स्वयमपि दुःखितो भवतीति वचनं प्रामाणिकानामननुमतमेवेति वाच्यम् ''सञ्जातबाष्पः परवीरहन्ता रामो मुहूर्तं विमना बभूव'' इत्याद्युक्तरीत्या दण्डधरत्वप्रयुक्तदुःखप्रदानेऽपि सुखानुभवहेतुभूतशास्त्रप्रवर्तनादिकरणेऽपि, तदनादरेण विपरीतवृत्त्या सम्पादितदुःखानुभवदर्शनेन सर्वभूतसुहृदश्श्रियःपतेस्तद्दुःखदर्शनजनितदुःखवत्वे विरोधाभावात्। नचैवं 'दया-स्वार्थनिरपेक्षा परदुःखनिराकरणेच्छा' इति श्रीगीताभाष्यतात्पर्यचन्द्रिकाद्युक्तश्रीवेदान्ताचार्यश्रीसूक्तिविरोध इति वाच्यम्—परदुःखनिराचिकीर्षायाः कृपाकार्यत्वात्। निराचिकीर्षानाम निराकरणानुकूलव्यापारः। सच कृपाकार्यरक्षणान्तर्गतः। प्रकाशितश्चायमर्थः ''कृपया परं रक्षतः'' इति श्रुतप्रकाशिकायाम्। तथाच कृपाफलोपधानस्यैवाचार्यैः प्रतिपादनात् न तत्सूक्तिविरोधगन्धः। किञ्च परदुःखदर्शनजनितदुःखवत्त्वमेव दयेति श्रीरामायणे स्पष्टं प्रतिपाद्यते। बालकाण्डे द्वितीये सर्गे ''तं शोणितपरीताङ्गं वेष्टमानं महीतले। भार्या तु निहितं दृष्ट्वा रुराव करुणाङ्गिरम्॥ वियुक्ता पतिना तेन द्विजेन सहचारिणा। ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै॥ तदा तु तं द्विजं दृष्ट्वा निषादेन निपातितम्। ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत'' इति। अत्र मृतपक्षिनिमित्तरोधनश्रवणादिना ज्ञातदुःखदर्शननिमित्तस्य दुःखरूपकारुण्यस्य स्पष्टतया प्रतिपादनात् 'परदुःखदुःखित्वं—दये'ति सर्वसम्मतमेव। नच ''मानिषाद'' इत्यादिना व्याधं प्रति शापप्रदानात् शापदानस्य बकाङ्गनाशोकापनोदनव्यापाररूपतया परदुःखनिराचिकीर्षारूपदयैवात्र प्रतिपाद्यत इति वाच्यम्—शापदानात् पूर्वमेव पतिवियोगदुःखितस्त्रीपक्षिदर्शनेन कारुण्यसम्भवस्य प्रतिपादिततया निराचिकीर्षायाः कारुण्यफलत्वात्, पतिवियोगजनितदुःखस्य पतिहन्तृनिषादं प्रतिशापदानेन निराकरणासम्भवाच्च। स्पष्टीकृतश्चायमर्थो महाकविना भोजराजेन—''तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरशरानुविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्प'' इत्यादिना ग्रन्थेन। अतः परदुःखदुःखित्वमेव दयेति सिद्धत्वात् अत्यन्तव्याकुलचित्तत्वोक्तिरुपपन्ना।

---

१. श्रुत-का. १-१-१. शेषत्वलक्षणवाक्यव्याख्यानावसरे॥

२. श्रीरामा- कि. २४-२४॥

३. श्रीरामा-बा. २-११-१२॥

४. श्रीरामाय- बाल. २-१५॥

५. भोजप्रबन्धे॥

**करणकलेबरवैधुर्येण छिन्नपक्षपक्षिवत्स्थितानां करणादिप्रदानमकरोत्। तैर्व्यभिचारमकृत्वा स्वाश्रयणेनोज्जीवननिदानमपौरुषेयं**

अत्यन्तव्याकुलचित्ततया भगवतः क्रियमाणव्यापारपरम्पराक्रममाह — **करणेत्यारभ्य। करणानि** श्रोत्रत्वक्चक्षु र्जिह्वा घ्राणरूपाणि ज्ञानेन्द्रियाणि, वाक् पाणि पाद पायूपस्थरूपाणि कर्मेन्द्रियाणि च। कलेबरम् करणाश्रयभूत शरीरम्। ( **छिन्नपक्षपक्षिवदि-** ) ति अनुभवकैङ्कर्यलक्षणपक्षद्वयविहीनतया भगवन्मुखोल्लासविषयत्वलक्षण परमप्राप्तिम्, अर्वाचीनभोगप्राप्तिञ्च विना प्राकृताऽप्राकृतभोगद्वयेऽपि भग्नपक्षशकुन्तवदित्यर्थः। ( **स्थितानामि** )ति प्रलयेऽवस्थितानामित्यर्थः। ( **करणादि** ) इत्यादिपदेन - चिच्छक्ति प्रवृत्तिशक्ति निवृत्तिशक्तय उच्यन्ते। "[1]आदावीश्वरदत्तयैव पुरुष स्स्वातन्त्र्यशक्त्या स्वयन्तत्त ज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन् वर्तते। तत्रोपेक्ष्य ततोऽनुमत्य विदधत् तन्निग्रहानुग्रहौ तत्तत्कर्मफलं प्रयच्छति ततस्सर्वस्य पुंसोहरिः" इत्युक्तेः। ( **करणादिप्रदानमकरोत्** ) इति-"[2]स एकाकी न रमेत" "[3]बहुस्या म्प्रजायेय" "[4]अचिदविशेषितान् प्रलयसीमनि संसरतः करणकलेबरैर्घटयितुन्दयमानमनाः" "[5]अचिदविशिष्टान् प्रलये जन्तून् अवलोक्य जातनिर्वेद। करणकलेबरयोगं वितरसि वृषशैलनाथ करुणेत्वाम्" इत्याद्युक्तरीत्या निर्हेतुककृपया "[6]विचित्रा देहसम्पत्ति रीश्वराय निवेदितुम्। पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुते"त्याद्युक्तरीत्या करणकलेबरादि प्रदानमकरोदित्यर्थः। ( **स्वाश्रयणेने** ति करणादिभि स्स्वाश्रयणं कृत्वेत्यर्थः। अत्र "[7]स वै मनः कृष्णपदारविन्दयो र्वचांसि वैकुण्ठगुणानुवर्णने। करौ हरे र्मन्दिरमार्जनादिषु श्रुतिं चकाराऽच्युतसत्कथोदये॥ मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेङ्गसङ्गमम्। घ्राणञ्चतत्पादसरोजसौरभे श्रीमत्तुलस्यारसनान्तदर्पिते॥ पादौ हरेः क्षेत्रपथानुसर्पणे शिरो हृषीकेशपदाभिवन्दने। कामञ्च दास्ये नतुकामकाम्यया यथोत्तमश्लोकजनाश्रयारतिः" इत्यादि श्रीभागवतवचनानि अनुसन्धेयानि। ( **उज्जीवने निदानम्** )-उत्कृष्टजीवने उपायमितियावत्। अनाद्यविद्यामूलकविषयप्रावण्यविनिवृत्तये पशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहिकाऽऽमुष्मिकतत्तदभिलाषित प्रतिलम्भनमुखेन परमपुरुषार्थरुच्युत्पादनेन तत्प्रतिलम्भनार्थमित्यर्थः।

( **अपौरुषेयमि** त्यादि-'पुरुषस्वाधीनरचनाविशेषविशिष्टम्-पौरुषेयम्, तन्नभवतीति - अपौरुषेयम्; अतएव नित्यनिर्दोषत्वं वेदस्येत्यर्थः। अपौरुषेयत्वात् नित्यनिर्दोषत्वम् '[8]अपौरुषेयत्वान्निर्दोषत्वं विवक्षितम्' इतिव्यासार्योक्तेः। पौरुषेयत्वेहि भ्रम विप्रलम्भ प्रमादाशक्तिरूपदोषप्रसङ्गस्स्यात्। अपौरुषेयत्व नित्यत्व निर्दोषत्वमितिवार्थः। "[9]वाचा विरूपनित्यया" "[10]अनादिनिधनाह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः" "[11]स्वयम्भूरेष भगवान् वेदगीत स्त्वया पुरा। शिवाद्या ऋषिपर्यन्ता स्स्मर्तारोऽस्य नकारकाः" "[12]नैकश्चिद्वेदकर्ताच वेदं स्मृत्वा चतुर्मुखः" इत्यादिश्रुतिस्मृतिपुराणवचनानि अनुसन्धेयानि। वेदस्यापौरुषेयत्वादिकन्तु पूर्वोत्तरमीमांसयोः "[13]वेदांश्चैके

१. तत्त्वसारे. ४५॥
२. महोपनिष. १-१॥
३. छा-उप. ६-३-१॥
४. श्रीरंग-स्त-२-४१॥
५. दयाशतकस्तोत्रे. १७॥
६. श्रीविष्णुतत्त्वसंहितायाम्॥
७. भागवतपु॥
८. श्रुतप्र-मंगलश्लो-व्या॥
९. यजु. २ कां. ६. प्रश्न. ११. अनु॥
१०. भारते- शां-मो. २३८-९३॥
११॥
१२. लघुपारा-स्मृ. १-२१॥
१३. पूर्वमी-सू १-१-२७॥

## नित्यनिर्दोषं स्वतःप्रमाणं वेदं, तदुपबृंहणानि

सन्निकर्षम्पुरुषाख्याः'' 'शब्दइति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्। अत एवच नित्यत्वम्''इति वेदापौरुषेयत्वाधिकरणदेवताधिकरणयोः स्थापितम्। स्वतःप्रमाणत्वञ्च-स्वप्रामाण्ये मूलान्तरनिरपेक्षत्वम्। वेदस्य स्वतःप्रामाण्यम् ''औत्पत्तिकस्तु शब्दस्यार्थे सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणम्बादरायणस्याऽनपेक्षत्वात्'' इति सूत्रे स्थापितम्। अस्यायमर्थः-(औत्पत्तिकः) अनादिसिद्धस्स्वाभाविकः, नित्यइत्यर्थः (शब्दस्य) लौकिकस्य वैदिकस्यच शब्दस्वरूपस्य, (अर्थेन) तत्तत्प्रतिपाद्येन, (सम्बन्धस्तु)-प्रतिपाद्यप्रतिपादकभावलक्षणसम्बन्धस्तु, (तस्य)-धर्मस्य, (ज्ञानम्)-अवगतिसाधनम्. भवत्येव. तदवगतेः कथं यथार्थत्वमित्यत्राह—(उपदेश,इत्यादि । (उपदेशः)-विशिष्टश्शब्दः, भ्रान्तिहेतुदोषवद्याकिंचित्पुरुषकर्तृकत्वविधुरोऽनादिपरम्परयोपदिश्यमान आगतोवेदादिलक्षणश्शब्दइति यावत्। (अव्यतिरेकश्च) - व्यतिरेकः पारमार्थिकार्थप्रतिपादकत्वाभावः, अपारमार्थिकार्थप्रतिपादकत्वं वा तद्रहितश्च, (तत्)-तादृशं शब्दस्वरूपम्, (अनुपलब्धे अर्थे)- प्रमाणान्तरानवगते, अर्थे, (प्रमाणम्)-स्वतःप्रमाणम्, (अनपेक्षत्वात्)-स्वप्रामाण्ये मूलान्तरनिरपेक्षत्वात्, इति बादरायणस्याचार्यस्याप्यभिमतमि-ति। बादरायणोऽप्याह - ''श्रुतेस्तु शब्दमूलत्वात्'' इति। इदं हि सूत्रम्ब्रह्मणो निरवयवत्वञ्कार्यभूतजगद्रूपेण बहुभवनञ्च कथमुपपद्यत इत्याशङ्कां समाधत्ते श्रुतिबला द्ब्रह्मण इदमुभयमभ्युपगन्तव्यम्। ब्रह्मणश्शब्दैकप्रमाणकत्वा त्तर्कमूलानुपपत्ति र्नतत्रावतरतीति। दोषवत्पुरुषकर्तृकत्वमेव शब्दस्याऽप्रमाणतायान्तन्त्रम्, तद्रहितश्च वेदादिलक्षणश्शब्द स्स्वतःप्रमाणम्भवितुमर्हत्येव, स्वतःप्रमाणभूतश्च शब्दः प्रमाणान्तरानवगतंयमर्थं यथाप्रतिपादयति सोऽर्थस्तथैवाभ्युपगन्तव्यः, अतश्श्रौतोऽर्थो यथाश्रुत्यैव प्रतिपत्तव्यः न तत्र केवलतर्कचालनेनान्यथाप्रतिपत्तव्य इति जैमिनेर्बादरायणस्यचाशयः। एतेन वक्ष्यमाणेष्वर्थेषु एवंरीत्यार्थः प्रतिपत्तव्य इत्युक्तंभवति।

वेदशब्दः-भागद्वयात्मकवेदपरः।'वेदयतीति वेदः'इति व्युत्पत्त्याबुभुत्सुमुमुक्षुजनानां सर्वेषामपि स्वार्थप्रकाशकत्वात्-'वेद' इत्युक्तिः, इत्याचार्यैरेवोक्तम्। तदत्रानुसन्धेयम्। तत्र 'विद्यते ज्ञायते अनेनेति वेद' इत्यनुक्त्वा वेदयतीतिवेदः' इति कर्तरिव्युत्पत्तिकथनम् 'अविस्तृतास्तु गम्भीरा रामानुजमुनेर्गिरः। दर्शयन्तु प्रसादेन स्वम्भाव मखिल न्द्दढम्'' ''तद्भाष्यं सचभाष्यकृत्सच हरि स्सम्यक्प्रसीदन्तु नः'' इत्यादिवत् 'वेदशब्दः वेदाभिमानिदेवतापर्यन्तं पर्यवस्यती'त्यभिप्रायेण। वेदशब्दस्य यौगिकत्वं ''यं आत्मनः परोवेद्यः स्तं विष्णुं वेदयन्ति यत्। तद्वेदानांहि वेदत्वं यस्तं वेद सवेदवित्'' इतिभारद्वाजवचनसिद्धम्। वैय्याकरणैरपि 'हलश्चे'' ति सूत्रव्याख्याने 'विद्येते ज्ञायेते अनेन धर्माधर्माविति वेदः' इति योगवृत्तिरंगीकृता। 'असि श्छिनत्ति' इतिवत् बोधकत्वातिशयतात्पर्यात् करणस्य कर्तृत्वेनाभिप्रेत्य णिच् प्रत्ययान्तभावेन व्युत्पत्ति र्भारद्वाजेनोक्ता। 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इतिशाब्दिकवचनात् इयमपि तेषामभिमतैव।

(तदुपबृंहणानी)ति उपबृंहणं नाम-विदितसकलवेदतत्त्वार्थानां स्वयोगमहिमसाक्षात्कृतवेदतदर्थानां स्ववाक्यैस्स्वावगतवेदवाक्यार्थव्यक्तीकरणम्। अनधीतशाखान्तरार्थैस्सहाधीतशाखार्थनि-

१. शारी-सू १-३-२७-२९॥
२. पू-मी-सू. १-१-५॥
३. शा-मी-सू. २-१-२७॥
४. श्रीवचन-व्या. १-१॥
५. श्रुतप्र-मंग-श्लो॥
६. श्रुतप्र मंग-श्लो॥ ७. भारद्वा-संहि॥
८. पाणिनीयसू. ३-३-१२१॥
९॥

स्मृतीतिहासपुराणादीनिच प्रावर्तयत् । तच्छास्त्राभ्यासस्य चानेकयोग्यतापेक्षणात् तन्मार्गेण ज्ञानोत्पत्त्या चेतनोज्जीवनस्य दौर्लभ्यं विचार्य, सकलशास्त्रतात्पर्याणां सुग्रहं ज्ञापनार्थं स्वरूपोपायपुरुषार्थयाथात्म्यप्रतिपादकं रहस्यत्रयं

---

त्कर्ष इति यावत् । (स्मृतयः) पूर्वभागोपबृंहणरूपाणि आत्ततमै मन्वत्त्रिविष्णुहारीत याज्ञवल्क्यादिमहर्षिभिरभिहितानि आचारव्यवहारप्रायश्चित्तादिप्रतिपादकानि धर्मशास्त्राणि । (इतिहासाः)- ''इतिहासः पुरावृत्तम्'' इत्युक्तरीत्या पुरावृत्तप्रतिपादका उत्तरभागोपबृंहणपराः श्रीमद्रामायण महाभारतादयः।(पुराणानि)-''सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।वंशानुचरितञ्चेति पुराणं पञ्चलक्षणम्'' इत्युक्तप्रकारेणापरभागोपबृंहणपराणि सर्गादिपञ्चलक्षणोपेतानि ब्राह्मपाद्मवैष्णवादीनि। तथोक्तम् ''प्रायेण पूर्वभागार्थपूरणं धर्मशास्त्रतः । इतिहासपुराणाभ्यां वेदान्तार्थः प्रकाश्यते'' इति । आदिपदेन भगवच्छास्त्रमुच्यते । (प्रावर्तयत्)-''यो वै वेदांश्च प्रहिणोति तस्मै'' इत्याद्युक्तरीत्या चतुर्मुखमनुवाल्मीकिव्यासादिमुखेन प्रावर्तयत् इत्यर्थः ।

**तच्छास्त्राभ्यासस्य** इति-''अनन्तपारं बहुवेदितव्यम्'' इत्याद्युक्तरीत्या दुर्ज्ञेयानवधिकवेदादिशास्त्राभ्यासस्य बहुवेदनसामर्थ्य दीर्घायुष्ट्व बहुविघ्नानुपहतत्वरूपानेकयोग्यतापेक्षणादित्यर्थः । **तच्छास्त्राभ्यासस्य** इत्यादिना अस्य शास्त्रस्य फलीभूतप्रमित्यसम्भवत्वचोद्यं परिहृतम् । परमपुरुषार्थकैङ्कर्यतत्साधनादिप्रमितेस्सोपबृंहणवेदादिभिः दुस्साधत्वात् । यद्यपि अपौरुषेयनित्यनिर्दोषतया वेद एव स्वतः प्रमाणम् ; तन्मूलस्मृत्यादिभिरेव तदुपबृंहणमपि कार्यम् ; तथापि तत्सारभूतरहस्य त्रयेणैव कैङ्कर्यतत्साधन तदनुगुणस्वरूपप्रमितिस्सम्भवत्येवेति भावः । **तन्मार्गेण** इत्यादि-अनेकयोग्यतापेक्षविशिष्टशास्त्रोक्तमार्गेणेत्यर्थः । ''प्रपत्त्या वाथ भक्त्या वा महतां पौरुषेण वा । कृपया वाथ विष्णोश्च प्राप्नुवन्ति परं पदम् । बहवो हि यथा मार्गा विशन्त्येकं महापुरम् । तथा ज्ञानानि सर्वाणि प्रविशन्ति तमीश्वरम्'' इत्यादिवचनमभिप्रेत्य—**तन्मार्गेण** इत्युक्तम् । ''त्रैगुण्यविषया वेदाः'' इत्युक्तप्रकारेण वेदादेस्त्रैगुण्यविषयत्वेन सारासारविवेकचातुर्यमन्तरेण तात्पर्याशस्य दुरवबोधत्वात् तन्मार्गेण ज्ञानोत्पत्तिर्नसम्भवत्येवेति भावः । **सकलशास्त्रतात्पर्याणाम्** इति - सकलशास्त्रतात्पर्यभूतार्थपञ्चकानामित्यर्थः । तात्पर्यम् —स्वरूपोपायपुरुषार्थयाथात्म्यमिति वार्थः । 'सकलशास्त्रार्थानाम्' इत्यनुक्त्वा'सकलशास्त्रतात्पर्याणाम्' इत्युक्तिः 'अभिधावृत्तेस्तात्पर्यवृत्तिर्बलीयसी' इत्यभिप्रायेण । ''यावानर्थ उदपाने सर्वतस्सम्प्लुतोदके।तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः'' इत्युक्तरीत्या तात्पर्यार्थ एवोज्जीवनायालमिति भावः। (स्वरूपे)त्यादि - 'स्वस्यरूपम् स्वरूपम्; उप ईयते-प्राप्यते स्वाभीष्टमनेनेति-उपायः; पुरुषैरर्थ्यत इति-पुरुषार्थः,स्वरूपञ्च उपायश्च पुरुषार्थश्च स्वरूपोपायपुरुषार्थाः; यथात्मनोभावः याथात्म्यम्, स्वरूपोपायपुरुषार्थानां याथात्म्यम् यथावस्थितनेषम्प्रतिपादयतीति-स्वरूपोपायपुरुषार्थयाथात्म्यप्रतिपादकमित्यर्थः । 'स्वरूपयाथात्म्यम्, उपाययाथात्म्यम् , पुरुषार्थयाथात्म्यमि'ति याथात्म्यशब्दस्य स्वरूपोपायपुरुषार्थशब्देषु सम्बन्धोद्रष्टव्यः । राजभृत्यादिसाधरण शेषशेषिभावमात्र

---

१. अमर-का. १. धीव. १२॥
२.
३. श्वे-उप. ६-१७॥
४. उत्तरगीता. ३-१॥
५. पाद्मपु॥
६. गीता. २-४५॥
७. गीता. २-४६॥

**स्वयमेवाचार्यत्वेन स्थित्वा प्रकाशयामास ।**

**तत्र श्रीमूलमन्त्रं श्रीबदरिकाश्रमे स्वांशभूतं नरं प्रतिप्रकाशयामास । द्वयं श्रीविष्णुलोके स्वमहिष्यै लक्ष्म्यैप्रति प्रकाशयामास । चरमश्लोकन्तु रथे स्वाश्रितमर्जुनं प्रति प्रकाशयामास । अत एव *"लक्ष्मीनाथसमारम्भाम्" इति गुरुपरम्परायामादावीश्वरस्यानुसन्धानम् ।**

---

नजीवस्वरूपयाथात्म्यम् , नापि सेवाशुश्रूषणादिप्रसन्नराजगुर्वादेः धनविद्यादिप्रदानवत्, भक्तिप्रपत्तिजनितप्रसादद्वारकमोक्षप्रदत्वमात्र-उपायभूतस्येश्वरस्य स्वरूपयाथात्म्यम्: नापि परिपूर्णब्रह्मानुभवमात्रं-पुरुषार्थयाथात्म्यम्; अपितु भगवन्मुखोल्लासमात्रोद्देश्यकप्रवृत्त्यर्हत्वम्, भगवत्प्रसादद्वारकफलसाधनगोचरप्रवृत्त्यनर्हत्वम् , स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वञ्च-जीवस्वरूपयाथात्म्यम् । निरपेक्षपुरुषकारभाव विशिष्ट लक्ष्मीविशिष्टस्य, गुणविग्रहविशेषविशिष्टस्य, चेतनप्रवृत्तिसामान्यनिरपेक्ष स्वप्रसादद्वारककैङ्कर्यपर्यन्तमोक्षकरणत्वम्-उपायभूतेश्वरस्य स्वरूपयाथात्म्यम् । स्वयंप्रयोजनभगवत्प्रसादमात्रोद्देश्यकशेषवृत्तित्वम्-कैङ्कर्यलक्षणपुरुषार्थस्वरूपयाथात्म्यम् । प्रथमरहस्ये पदत्रयेण स्वरूपोपायपुरुषार्थयाथात्म्यमुच्यते । उक्तरीत्या स्वरूपोपायपुरुषार्थप्रतिपादनात् । तथैव द्वितीयरहस्ये 'प्रपद्य' इत्युक्तमाक्षिप्त जीवस्वरूपयाथात्म्यम्, 'श्रीमन्नारायणचरणौ शरणमि'ति उपाययाथात्म्यम्, 'श्रीमते नारायणाय नमः' इति पुरुषार्थयाथात्म्यञ्चोच्यते । चरमश्लोके तु युष्मच्छब्देन स्वरूपयाथात्म्यम्, 'मामेकं शरणं व्रजे'ति साधनयाथात्म्यम् , 'सर्वपापेभ्यो मोक्षयिष्यामि' इति पुरुषार्थयाथात्म्यञ्च प्रतिपाद्यते । यद्वा, स्वरूपयाथात्म्यप्रतिपादनपरः-श्रीमन्त्रः । उपाययाथात्म्यप्रतिपादनपरम्-द्वयम् । चरमश्लोकस्तु - पुरुषार्थयाथात्म्यपरइतिबोध्यम् । योजनाद्वयमपि अचार्यानुमतमेव। अयमर्थः'तत्र प्रथमरहस्यं श्रीमन्त्रः' इत्यत्र वक्ष्यते ।(**स्वयमेवे**)ति-द्वारभूतब्रह्मादीनां गुणानुगुणत्वेनागतदोषो नास्तीति भावः । (**आचार्यत्वेनस्थित्वे**)ति-अनाचार्योपदिष्टत्वदोषाभाव स्सूचितः । (**प्रकाशयामास**)-सर्वश्राव्यमकरोदित्यर्थः। 'सर्वश्राव्यम्प्रकाशंस्यात् प्रकाशमिति तद्वदेत्' इति वचनात् ।

'**प्रकाशयामासे**'ति क्रियाया विषयसापेक्षत्वात् विषयाण्याह (**तत्रे**)त्यादि । **तत्र** रहस्यत्रयेषु।

(**श्रीबिष्णुलोक**) इति-"[१]पुरा मन्त्रद्वयं ब्रह्मन् विष्णुलोके महापुरे । तस्मिन्नन्तःपुरे लक्ष्म्यै मया दत्तं सनातनम्" इतिपाद्मपुराणस्थभगवद्वचनमत्रानुसन्धेयम् । मन्त्रद्वयम्-मन्त्ररूपद्वयमित्यर्थः । स्थलत्रयेऽपि 'स्वांशभूतं, स्वमहिष्यै, स्वाश्रितम्' इत्युक्तिः 'सम्बन्धशून्यानां नवक्तव्यम्' इति भगवदभिप्राय इत्यभिप्रायेण । "इदन्ते नातपस्काय नाभक्ताय कदाचन । नचाशुश्रूषवे वाच्यं नच मां योऽभ्यसूयति" इति भगवदुक्तेः । 'पुनरपि स एव भगवान् श्रीरङ्गनाथः स्वमहिषी विष्वक्सेन श्रीपराङ्कुशनाथयामुन प्रभृतिमुखेन श्रीरामानुजसिद्धान्तनिष्णातेषु शुद्धं रहस्यत्रयसम्प्रदाय मवतारयामासे' ति वाक्यमनुसन्धेयम्' इत्यस्मदाचार्याः । तथैव रहस्यत्रयमीमांसाभाष्ये अनुग्रहीतत्वात् । "श्रीविष्णुलोके भगवान् हरिर्नारायणस्स्वयम् । प्रोक्तवान् मन्त्रराजादीन् श्रियै तापादिपूर्वकम् । साचप्रोक्तवती प्रीत्या तापपुण्ड्रादिपूर्वकम् । सेनेशायप्रिया विष्णोर्मूलमन्त्रद्वयादिकम् । सेनेशस्स्वयमागत्य

---

* श्रीकूरेशमुक्तकम् ॥

१.

२. पा-पु-

३. गीता. १८-६७॥

४. वासुदेवसंहितायाम्॥

**अथैतद्रहस्यत्रयस्य शब्दतः सुग्रहत्वेपि अर्थस्योपदेशगम्यत्वात् तद्ज्ञानेनैव सर्वोज्जीवनस्यावश्यकत्वाच्च तस्य रहस्यत्रयस्य पूर्वाचार्योपदेशपरम्परया प्राप्तानर्थविशेषान् सर्वेषां सुव्यक्तं संगृह्य लोकाचार्यः—**

---

प्रीत्या श्रीनगरीं शुभाम् । शठकोपाय मुनये तिन्त्रिणीमूलवासिने । तापादिपूर्वकं श्लोकं मन्त्ररत्नद्वया-दिकम् । विष्णुपत्न्या विशालाक्ष्या नियोगादुपदिष्टवान् । सेनेशकरुणालब्धपञ्चसंस्कारसंस्कृतः। तथा मधुरकव्यादेः पंचसंस्कारदोगुरुः । तस्मै द्रविडवेदान्तचतुर्णामुपदेशकृत् । पुनश्च नाथमुनये पञ्चसंस्कारपूर्वकम् । भट्टनाथप्रभृतिभिर्निर्मितैर्द्दिव्ययोगिभिः । दिव्यैर्विंशतिसंख्याकैस्तथाङ्गोपाङ्गसंज्ञिकैः । दुरितध्वंसिभिर्दिव्यैः प्रबन्धै स्सह देशिकः'' इत्यादिवचनबलात् तथा वक्तव्यम् ।

एवं रहस्यत्रयप्रकाशनरूपप्रकारमुक्तम् ; अथास्य ग्रन्थस्यानारम्भणीयत्वशङ्कामपनुदन्, आरम्भणीयत्वसमर्थनपूर्वकं स्वव्याख्येयप्रबन्धावतरणप्रयोजनमाह—अथेत्यारभ्य । अत्रेयं शङ्का—रहस्यत्रयस्य वेदादेरपि सुग्रहत्वे निवृत्तिफलकत्वेच व्याख्यानानपेक्षा स्यात्. विस्तृतत्वे हि पूर्वापरपर्यालोचनसापेक्षत्वेन, उपक्रमादिन्यायविचारापेक्षास्यात्. सङ्ग्रहत्वेन सुग्रहत्वेऽपि च प्रवृत्तिफलकत्वे अदृष्टार्थप्रवृत्ते र्निष्कलङ्कज्ञानसाध्यतया प्रमाणान्तराविरोधाय न्यायविचारापेक्षास्यात्-इति ।—अत्रोत्तरम्—सुग्रहत्वेऽपि निवृत्तिफलकत्वेऽपि अनादिदुर्वासनया चेतनगतयोरेव कर्तृत्वफलित्वयो रानुभाविकत्वेन, तथैव सर्वशास्त्रेषु बोधोदयेनच, सर्वशास्त्रविरुद्धेन प्रत्यक्षविरुद्धेनच रहस्यत्रयेण, जीवात्मनः कर्तृत्वफलित्वनिषेधस्यैवाऽवबोधनेन आचार्यवाक्यान्न्याययुक्तार्थग्रहणरूप श्रवणमुखेनैव रहस्यत्रयार्थज्ञानस्य सम्पादनीयत्वेन मीमांसापेक्षितैव । यदिच परमपुरुषार्थलक्षणोमोक्षः स्वप्रवृत्तिसाध्यस्स्यात्, तदा सर्वशास्त्रप्रत्यक्षविरोधशङ्कया रहस्यत्रय ममीमांस्यं स्यात्। नच तदस्ति, भगवतो जीवरक्षणार्थप्रवृत्ते रयत्नसिद्धत्वेन, सर्वज्ञसर्वशक्तिकृतत्वेन, निरपायत्वेन, प्राप्तत्वेन, सहायान्तरनिरपेक्षत्वेनच जीवस्य स्वरक्षणप्रवृत्ते स्तद्विरुद्धस्वभावतया, 'जीवस्य कष्टङ्कर्मे'तिन्यायेन दुःखावहतयाच, भगवदनिष्टत्वेनच, स्वप्रवृत्तेः भगवत्प्रवृत्तिविरोधितया मार्गान्तरानवकाशात्; प्रत्युत सर्वशास्त्रसारतमभूतरहस्यत्रये स्वप्रवृत्तेर्भगवत्प्रवृत्तिविरोधित्वप्रदिपादनेन, तद्विरुद्धे सर्वस्मिन् शास्त्रे अप्रामाण्यशङ्कया रहस्यत्रयमीमांसाया एवावश्यकत्वाच्चे—ति ।

अस्य चेतनस्य नमःपदेन ' अदृष्टद्वारकमोक्षसाधनप्रवृत्त्यनर्हत्वरूप मत्यन्तपारतन्त्र्यं स्वरूपम् ' इति प्रतिपादितत्वेऽपि अधिकारिविधया दृष्टरूपेण स्वरूपयाथात्म्यज्ञानादिकमावश्यक मित्यभिप्रेत्याह—तज्ज्ञानेनैवेति । 'पशुर्मनुष्यः पक्षीवा येच वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोःपरमम्पदम्'' '' यंयं स्पृशति पाणिभ्यां यंयं पश्यति चक्षुषा । स्थावराण्यपि मुच्यन्ते किम्पुन र्बान्धवा जनाः''इत्यादिपूक्तप्रकारेण पश्चाद्युज्जीवनस्यापि अभिमानिनः ज्ञानपूर्तेरेव हेतुत्वात्—'तज्ज्ञानेनैवे'ति अवधारण मुपपन्नमितिज्ञेयम् । अयमर्थः तत्त्वत्रयव्याख्याने प्रसादितः । 'एव' कारेण 'तदज्ञाने उज्जीवनाभावः' इत्युक्तम्भवति । ''पूर्वमर्थं विदित्वैव पश्चान्मन्त्रमुदीरयेत्। अविज्ञातार्थमन्त्रस्तु संसिद्धिन्नाधिगच्छति'' इतिपाद्मोक्तेः ।

(तस्य रहस्यत्रयस्ये)ति-रहस्यत्रयार्थस्येत्यर्थः। (उपदेशपरंपरयाप्राप्तानर्थविशेषान् )इत्यनेन स्वकपोलकल्पितत्वशङ्का निरस्ता । अत्र '' अनधीतन्तु यच्छास्त्र मधीतमिव वक्ति यः । द्विजोऽसौ

परमकृपया एतत्प्रबन्धमुखेनावदन् ।

पूर्वमेव रहस्यत्रयविषये प्रबन्धत्रयस्य कृतत्वेपि, तत्र याहच्छिकपडिनाम्नोऽति संग्रहत्वेन, परन्दपडिनाम्नोऽति विस्तृतत्वेन, श्रियःपतिपडिनाम्न उभयदोषराहित्येपि संस्कृतवाक्यबहुलत्वेन स्त्रीबालै रधिकर्तुमशक्यत्वाच्च 'एतत्त्रिविधदोषरहितः पुनरेकः प्रबन्धः कर्त्तव्य' इति विचार्य, सर्वतः पश्चाद्धि मुमुक्षुपडिनामकोयं प्रबन्धः कृतः । अत एव इतरप्रबन्धेषु सत्स्वपि सर्वेपीममधिकुर्वन्ति। किंच पूर्वप्रबन्धेष्वनुक्तार्थविशेषाणामत्र सत्वात् अयमेव सर्वेषामादरणीयः॥

अवतारिका समाप्ता.

---

क्षिपते गर्वात्तमाहुर्ब्रह्मघातुकम् । यदृच्छया श्रुतो मन्त्रश्छन्नेनाथच्छलेनवा । पत्रेक्षितोवा व्यर्थस्स्यात् प्रत्युतानर्थदो भवेत्'' इत्यादिवचनमनुसन्धेयम् । अनेन वक्तृवैलक्षण्यमुक्तम्भवति। (**स्वपरमकृपये**)ति-'स्वार्थनिरपेक्षापरदुःखासहिष्णुता-कृपे'ति श्रीभाष्ये कृपास्वरूपं निरुक्तम्। तत्र 'स्वार्थनिरपेक्षा'इत्यनेन उपदेशे, प्रबन्धकरणेच ख्यातिलाभपूजानैरपेक्ष्यं सिद्धम्। परदुःखासहिष्णुतायाम्पारम्यम्—'सेवेध्वमेतदमृतं प्रणिपत्ययाचे'' इत्युक्तरीत्या क्षीरपाने पादग्रहणमत्रसिद्धम् । 'परदुःखदुःखित्वमात्रम्पूर्वाचार्याणाम् । परदुःखापाचिकीर्षत्वं-श्रीभाष्यकाराणाम्, श्रीलोकाचार्याणाञ्च । भाष्यकारस्य 'तात्कालिकमात्रम् । श्रीलोकचार्यस्यकृपातु सार्वकालीने' त्यस्मदाचार्याः । प्रबन्धस्य नित्यत्वात् ।

(**एतत्प्रबन्धमुखेने**)ति-लौकिकभाषया सङ्गृहीतमुमुक्षुप्पडिनामकश्रेष्ठग्रन्थरूपेणेत्यर्थः ।

प्रबन्धान्तरेभ्योऽस्य प्रबन्धस्य वैलक्षण्यं वक्तुं भेदमाह-**पूर्वमेवे**त्यादिना । (**संस्कृतवाक्यबहुलत्वेने**)ति-श्रुतिवाक्यसमूहत्वेनेत्यर्थः । (**सर्वेऽपि**) इति-कूरकुलोत्तमदासप्रभृतय इत्यर्थः । (**सर्वेषाम्**)-अस्मदादीनामित्यर्थः ॥

अवतारिका समाप्ता.

---

१. सहस्रनामभाष्यारम्भे ॥

श्रीमते रामानुजाय नमः

श्रीमल्लोकगुरुप्रसादित

# मुमुक्षुप्पडि

## ॥ ग्रन्थारम्भः ॥

---

**मूलम् ॥ मुमुक्षुवुक्कु अरियवेण्डुं रहस्यं मून्रु ॥ १ ॥**

**छाया ॥ मुमुक्षोः ज्ञातव्यानि रहस्यानि त्रीणि ॥ १ ॥**

**व्याख्यानम् ॥** (मुमुक्षोः ज्ञातव्यानि रहस्यानि त्रीणि) इति—मुमुक्षुः—मोक्षेच्छावान्। "मुच्लृ-मोक्षणे" इति हिधातुः। एतेन संसारविमोचनेच्छोरित्युक्तं भवति।

---

अथ प्रबन्धस्य प्रतिवाक्यार्थं वक्तुं विषयप्रयोजनसम्बन्धाधिकारिरूपानुबन्धचतुष्टयप्रतिपादनसूचकप्रथमसूत्रम्प्रतिगृह्णाति—मुमुक्षोरित्यादिना। 'अधिकारीच सम्बन्धो विषयश्च प्रयोजनम्। अवश्यमेव वक्तव्यं शास्त्रादौतु चतुष्टयम्' इत्युक्तेः। विषयः-रहस्यत्रयम्। प्रयोजनम्-मोक्षः। सम्बन्धः-ज्ञातव्यज्ञापकरूपसम्बन्धः।अधिकारी-मुमुक्षुः।(मुमुक्षोः)इत्यनेन प्रयोजन मधिकारीच, (ज्ञातव्यानि रहस्यानि)-इत्यनेन सम्बन्धो विषयश्चोक्तः। वक्ष्यतेच। मुमुक्षुपदार्थमाह—मोक्षेच्छावानिति। 'मोक्तुमिच्छुः मुमुक्षुः' इतिव्युत्पत्त्या "जायमानं हि पुरुषं यम्पश्येन्मधुसूदनः। सात्विकस्सतुविज्ञेयः सवै मोक्षार्थचिन्तकः" इत्युक्तप्रकारेण मोक्षे इच्छावानित्यर्थः। "मोक्षोपवर्गे मृत्यौच मोचने मुष्कलद्रुमे" "मुक्तिर्मोक्षो महानन्दः" इति मोक्षशब्दस्यानेकार्थवाचकत्वात् प्रकृतोपयुक्तार्थे प्रमाणन्दर्शयति—मुच्लृ-मोक्षेण इति। धातो-र्मोक्षणस्यार्थत्वेन, सन्प्रत्ययस्य-इच्छायाः अर्थत्वेन, उप्रत्ययस्य-इच्छाश्रयभूतकर्तुः अर्थत्वेनचसिद्धत्वात्, 'मोक्षेच्छावानि'त्युक्तम्। फलितांशमाह—एतेनेति। संसारशब्देन प्रकृतिसम्बन्धउच्यते। तथाच भगवत्प्राप्तिप्रतिबन्धकप्रकृतिनिश्शेषविमोचनेच्छोरित्युक्तम्भवतीत्यर्थः।

मुमुक्षायाश्च "स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता" "जीवनम्-उज्जीवनम्, संसारोन्मोचनम्. मति कैवल्यव्यावृत्तिः" इत्यादिश्रीसूक्त्यनुसारेण कैवल्यार्थिसाधारण्यात्, "अथातो ब्रह्मजिज्ञासा" "सञ्जातमोक्षाभिलाषस्यानन्तास्थिरफल ब्रह्मजिज्ञासाह्यनन्तरभाविनी" इति उपासकसाधारण्याच्च नास्य

---

१. भारते. शां. मो. ३५८-७२ ॥
२ ” ” ३ ॥
४. वरदराजस्तवे. ८१ ॥
५. श्रुत. का. मङ्गलश्लोक (२) व्याख्याने ॥
६. शारी. सू. १-१-१ ॥
७. श्रीभाष्ये. १-१-१ ॥

आत्मप्राप्तिकामस्य मुमुक्षुत्वेपि नात्र स विवक्षितः ; तस्य रहस्यत्रयज्ञानानपेक्षत्वात्। तस्मादत्र मुमुक्षुः भगवत्प्राप्तिकामतया संसारनिवृत्तिकामो विवक्षितः । एवं भूताधिकारिणः; (ज्ञातव्यानि रहस्यानि त्रीणि) इति, अस्यावश्यज्ञातव्यान् स्वरूपोपायपुरुषार्थानिदं रहस्यत्रयं प्रतिपादयतीति रहस्यत्रयमेव ज्ञातव्यमित्यर्थः । *"स्वज्ञानं प्रापकज्ञानं प्राप्यज्ञानं मुमुक्षुभिः । ज्ञानत्रयमुपादेयमेतदन्यं नकिञ्चने"ति ह्युक्तम् । (रहस्यानि त्रीणीति) श्रीमन्त्रो द्वयं चरमश्लोकश्चेत्ययमर्थः सुस्पष्टः । एतेषां रहस्यो-

रहस्यत्रयस्याऽसाधारणाधिकारिसम्भव इतिशङ्कायां, यत्किंचिद्विमोचनार्थिनः कैवल्यनिष्ठस्योपासकस्यच शरणागत्यनधिकारितया, 'श्रीमते नारायणाय नमः' इत्युत्तरवाक्ये कैङ्कर्यप्रार्थनानुसारेण कैङ्कर्योपायप्रार्थनारूपायाः "मुमुक्षुर्वै शरणमहम्प्रपद्ये" इतिपूर्ववाक्योक्तशरणागतेः कैङ्कर्यहेतुभूत भगवत्प्राप्तिप्रतिबन्धकसंसारविमोचनेच्छावत एव सम्भावितितयाच 'संसारविमोचनेच्छावान्-मुमुक्षुपदार्थः' इति समभिव्याहारबलात् अवश्यमभ्युपगन्तव्यम्. तथाच तद्बलादेव भगवत्प्राप्तिकामतया संसारविमोचनेच्छावान् तदर्थइति अवगम्यतइति न दोषः, उक्तन्यायेनोपासकस्यापि समानम् । एवमनुभवजनित प्रीतिकारितकैङ्कर्यपर्यन्त भगवत्प्राप्तिकामतया इत्यधिकारिविशेषणस्य सुगमत्वात्, इत्थमसाधारणाधिकारिलाभमभिप्रेत्य'मुमुक्षोः' इत्यनुगृहीतमित्युत्तरम् वदति—आत्मप्राप्तिकामस्येत्यादिना। आत्मनः प्राप्तिः-आत्मप्राप्तिः, आत्मप्राप्तिं कामयतीति-आत्मप्राप्तिकामः तस्य । प्रकृतिवियुक्तब्रह्मात्मकस्वात्मानुभवकामस्येत्यर्थः । अत्र प्राप्तिशब्दः-अनुभवपरः। आत्मशब्दस्य स्वपर्यायत्वेन स्वप्रवृत्तिसाध्यभगवदनुभवकामस्योपासकस्य, स्वयम्प्रयोजनानिष्ठस्यचार्थादुक्तत्वेन तयोरपि रहस्यत्रयानधिकारत्वसिद्ध्या परार्थकैङ्कर्यनिष्ठएव मुमुक्षुशब्दवाच्यइति सिद्धम् । रहस्यत्रयज्ञानानपेक्षत्वस्य तयोरपि तुल्यत्वात्। सूत्रे-(मुमुक्षो)-रिति सामान्यनिर्देशात् प्रणवविशिष्टाष्टाक्षरस्य सर्वाधिकारत्वं श्रीलोकाचार्याभिमतमेवेति सिद्धम् । निषेधवचनानान्तु अन्यपरत्वात् नविरोधः। दुरुपदेशाधिकाराख्यग्रन्थे प्रणवविशिष्टाष्टाक्षरस्य मुमुक्षुणां स्त्रीशूद्रादीनामधिकारत्वं स्थापितमस्मत्प्राचार्यैः श्रीशैललक्ष्मणमुनीन्द्रैः। रहस्यत्रयमेव ज्ञातव्यमि)-त रहस्यत्रयार्थमेव ज्ञातव्यमित्यर्थः । यथा 'वेदवित् शास्त्रवित्' इति । 'पदं साधुविद्यात्' 'पदार्थं साधुविद्यादि'तिवच ।

'रहस्यत्रयमेवज्ञातव्यम्' इत्यत्रावधारणस्य, विध्यर्थस्यच प्रमाणन्दर्शयति—स्वज्ञानमिति । 'मुमुक्षुभिः-स्वज्ञानं प्रापकज्ञानं प्राप्यज्ञानञ्चोपादेयमि'त्येतावदनुक्त्वा 'स्वज्ञानरूपं प्रापकज्ञानरूपं प्राप्यज्ञानरूपञ्च 'ज्ञानत्रयम्' इतिपुनर्ज्ञानोक्त्या "तज्ज्ञानमज्ञान मतोन्यदुक्तम्" इत्युक्तरीत्या तत्सिद्धिपेटिकागतप्रशंसाधिकरणोक्ताऽपशुन्यायेन स्वरूपोपायपुरुषार्थयाथात्म्यरूपरहस्यत्रयार्थज्ञानमेव प्रशस्तज्ञानम्, नान्यदितिसूचितम् । त्रित्वोक्त्यैव न्यूनाधिकसंख्याव्यवच्छेदे सिद्धेपि 'अन्यन्नोपादेयम्' इतिपुनर्निषेधोक्त्या 'अन्यत्किंचननोपादेयमि'ति निषेधदृढीकृत्याच श्रुतिस्मृत्यादिषु रहस्यत्रयार्थातिरेकेण "शेषोन्योग्रन्थविस्तरः" इत्यस्यार्थस्य निरवशेषेण श्रुतिस्मृत्यादिसकलशास्त्रपरिश्रमशालिभिः श्रीशुकव्यासपराशरवाल्मीकिप्रभृतिभि महर्षिभिर्वेदपुरुषवत् लोकानुजिघृक्षयाऽऽवरणभ्रमणेन गोपुरप्रवेशन्याय एवाश्रित इत्ययमर्थश्च सूचितः ।

(रहस्यानि त्रीणीति) इति-अत्र'रहस्यानि' इति सामान्यतो निर्देशेऽपि मूलमन्त्र मन्त्ररत्न

* पाञ्चरात्रे ॥ १. श्वे. उप. ६-१७॥ | ३. वि. पु. ६-५-८७ ॥
२. अष्टश्लोक्यां. ४॥ | ४॥

क्तिः-सकलवेदान्तसारार्थप्रतिपादकतया परमगुह्यत्वात् । एवं अनेन वाक्येन-अधिकारी, तद्ज्ञातव्यं च निर्दिष्टम् ॥ १ ॥

(२) अथैतद्रहस्यत्रये प्रथमरहस्यंकिमित्याकाङ्क्षायामाह—तत्र प्रथमरहस्यं श्रीमन्त्रः इति ।

मू ॥ अदिल् प्रथमरहस्यं तिरुमन्त्रम् ॥ २ ॥

छा ॥ तत्र प्रथमरहस्यं श्रीमन्त्रः ॥ २ ॥

व्या ॥ तेषु रहस्येषु एतदधिकारिणः प्रथमं ज्ञातव्यं रहस्यं स्वरूपयाथात्म्यपरत्याज्योपादेयविभागज्ञानमन्यूनमुत्पादयन् श्रीमन्त्रः इत्यर्थः ।

अनन्यार्हशेषत्वानन्यशरणत्वानन्यभोग्यत्वरूपाकारत्रयप्रतिपादकत्वा-

---

चरमश्लोकानामेवोत्तरत्र व्याख्यानानुसारेण तत् त्रितयमेव विवक्षितमिति भावः । नचैवं 'स्वायत्ते शब्दप्रयोगे नावाचकम्पदं प्रयोक्तव्यम्' इति न्यायेन 'श्रीमन्त्रः, द्वयम्, चरमश्लोकः' इति किमिति-नोक्तमिति वाच्यम्—एतेषामेव रहस्यत्वम्मुख्यम्, नान्येषाम्; अत एव मूलमन्त्रे "गुह्यानाङ्गुह्यमुत्तमम्" इति वचनमुपपद्यत' इत्यभिप्रायेण विषयलाभदार्ढ्यसूचनाय सामान्यनिर्देशोपपत्तेः ।

"[1]मन्त्राणाम्परमोमन्त्रः गुह्यानां गुह्यमुत्तमम्।पवित्रञ्च पवित्राणाम्मूलमन्त्र स्सनातनः"इति श्रीमूलमन्त्रस्य, "[2]मन्त्राणाम्परमोमन्त्रः गुह्यानाङ्गुह्यमुत्तमम् । रहस्यानां रहस्यञ्च सद्य स्संसारतारणम् ॥ सर्वसंशयभेत्ताच सर्वकल्मषनाशनः । शरणागतिमन्त्रस्तु सर्वसम्पच्छुभावहः" इतिद्वयस्य, "[3]सर्वगुह्यतम म्भूयः श्रुणुमे परमं वचः " इति चरमश्लोकस्यच रहस्यत्वोक्ति रुपपन्नेति ।

ननु मूलमन्त्रमन्त्ररत्नयो रषट्कर्णतयोपदेश्यत्वाद्रहस्यत्वमुपपद्यते । "[4]श्रावये च्चतुरोवर्णान् कृत्वा ब्राह्मणमग्रतः" इति सर्ववर्णश्रावयितव्यत्वेनोपदिष्टमहाभारतमध्यमग्नस्य चरमश्लोकस्य कथमिव रहस्यत्वमितिचेत्, उच्यते, यद्यपि चरमश्लोकस्य सर्वश्रावयितव्यत्वं वचनासिद्धम्, तथापि तदर्थस्य मूलमन्त्रशरणागतिमन्त्रार्थविधिरूपस्य प्रपन्नाधिकारिविषयतयोपदेश्यत्वात् रहस्यत्वकथनं युक्तमेव ॥ १ ॥

(२) अथ रहस्यत्रयस्य क्रममाह—अथेति।(अथ-)विषयप्रयोजन सम्बन्धाधिकारिनिर्देशानन्तरम्। (आकाङ्क्षा-)पदस्य पदान्तरव्यतिरेकेणान्वयानुपपत्तिः । शंकावा । प्रथमशब्दस्य प्रथमयज्ञन्यायेन क्रियासापेक्षत्वात् 'ज्ञातव्यानि' इतिपूर्वसूत्रे ज्ञानक्रियाया उपात्तत्वाच्च 'प्रथमशब्दः प्रथमज्ञातव्यपर' इत्यभिप्रेत्याह—प्रथमं ज्ञातव्यमिति।(अन्यूनम्)- परिपूर्णतयेत्यर्थः। '[5]अनुक्तमन्यतोग्राह्यम्' इति वचनमवतीति भावः । (त्याज्योपादेये)ति-"[6]देहासक्तात्मबुद्धिः" इत्याद्युक्तदेहात्माभिमानादेस्त्याज्यत्वेन, देहात्माभिमानादिराहित्यस्य-उपादेयत्वेनच निरूपणीयं ज्ञानमित्यर्थः ।

श्रीमन्त्रस्य स्वरूपयाथात्म्यपरत्वादेव प्राथम्यं कथमित्याकांक्षायामाह—अनन्यार्हशेषत्वेत्यादिना।"[7]विष्णोरनन्यशेषत्वन्तथैवानन्यसाधनम्। तथैवानन्यभोग्यत्व न्तदाकारत्रयंस्मृतम्"इति हारीतोक्तप्रकारेणाऽनन्यार्हशेषत्वानन्यशरणत्वानन्यभोग्यत्वरूपाकारत्रयाणाम्पदत्रयेण प्रतिपादकत्वादित्यर्थः।

---

१. नारदीयकल्पे. अष्टाक्षरब्रह्मवि. १-११ ॥
२. पा. उ. पु ॥
३. गीता. १८-६४ ॥
४. भार. शा-३३५-४८ ॥
५. विष्णुतिलकम् ॥
६. अष्टश्लो. ४ ॥
७. वृद्धहारी. स्मृति ॥

श्चेतनस्वरूपयाथात्म्य प्रतिपादनपरे, तदनुगुणं त्याज्योपादेयविभागंच प्रतिपादयति श्रीमन्त्रे सुशिक्षितस्वरूपस्यहि, अन्यरहस्याभ्यां प्रतिपाद्यमानयोरुपायोपेययोरपेक्षा जायते तस्मात्स्वरूपयाथात्म्यपरः श्रीमन्त्रः प्रथमरहस्यमित्यत्र नविरोधः ।

किंच प्रणवस्य मन्त्रशेषो यथाविवरणं, तथा मन्त्रशेषस्य द्वयं विवरणं, द्वयस्य चरमश्लोको विवरणं । अतस्तन्न्यायेनापि एतस्य प्राथम्यं सिद्धम् ।

---

तथाहि श्रीमन्त्रः-प्रथमपदेन प्रणवेन'म् आयैवे'ति 'मकारवाच्यो जीवः, अकारवाच्यस्येश्वरस्य शेषुभूतः. नान्येषामि'त्यनन्यार्हशेषत्वम्, द्वितीयपदेन नमसा 'मनः'इति स्वरक्षणे स्वान्वयनिवृत्तेरुक्तत्वात्, अर्थात् स्वरक्षणार्थं साधनान्तरनिवृत्तिसिद्ध्याऽनन्यशरणत्वम्, तृतीयपदेन कैङ्कर्याश्रयभूतचेतनस्य "अहमन्नमन्नमदन्तमद्मि" इति भोग्यत्वेनोक्तत्वात् तेन सिद्धानन्यभोग्यत्वञ्च प्रतिपादयति ।

(**चेतनस्वरूपयाथात्म्यप्रतिपादनपरे**)इति, अनेन श्रीमन्त्रस्य जीवस्वरूपप्रतिपादकपरत्वमुक्तम् । ननु "ओमिति ब्रह्म" "ओमित्येकाक्षरम्ब्रह्म" इति श्रुतिस्मृत्यादिपर्यालोचनया प्रणवस्य ब्रह्मपरत्वम्प्रतीयते, कथन्तस्य जीवस्वरूपयाथात्म्यपरत्ववर्णनम्, तथा जीवप्राधान्यं प्रणवस्य प्रसज्यत इतिचेत्— नैवम्, राजपुरुषवाक्यवत् शब्दप्राधान्येन जीवपरस्यापि, तस्यार्थप्राधान्येन ब्रह्मपरत्वोपपत्तेः । अयमेवार्थः एतद्विवरणभूतेन मन्त्रशेषेण 'मकारवाच्यश्चेतनः नारायणस्यैव शेषभूतः, ममने'त्येवं शेषत्वनिर्वृत्तिरूपपारतन्त्र्यपर्यन्तप्रतिपादनेन विशदीक्रियत इति कृत्स्नोऽपि मन्त्रः जीवस्य भगवदनन्यार्हशेषत्वानन्यशरणत्वानन्यभोग्यत्व रूपाकारत्रय प्रतिपादनपर एवेति सिद्धम् ।

हेत्वन्तरेणापि अस्य प्राथम्यं साधयति—**किञ्चेति** । (**मन्त्रशेष**)इति नमो नारायणायेतिपदम् । "ओमित्येकाक्षरम्मन्त्रम्" इति प्रणवस्य मन्त्रत्वोक्त्या तयोस्तस्य शेषत्वंयुक्तमेव । शेषत्वञ्च तस्य व्याप्यत्वम् । विवरणक्रमो वक्ष्यते । 'मन्त्रशेषस्य द्वयं विवरणम्, द्वयस्य चरमश्लोको विवरणमि'ति-अनेन द्वितीय तृतीयरहस्यत्वन्द्वय चरमश्लोकयो स्सिद्धम् ।

ननु व्याख्यानेषु वक्तृणान्तावत् अज्ञानसंशय विपर्ययव्युदासेन व्याख्येयार्थम्बुध्वा तद्बुबोधयिषया प्रवृत्तिरिति लोकसिद्धम्; श्रोतृणामप्यापाततो व्याख्येयार्थप्रतीतौ सत्त्यां, अप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिप्रहाणेन निरवशेषतदर्थनिर्णयाय तेषु प्रवृत्तिरितिच । एवञ्च मूलमन्त्रमन्त्ररत्नयोस्तावदपौरुषेयत्वाविशेषान्नमूलमूलिभावप्रयुक्तक्रमस्सम्भवति ; नित्यनिर्दोषप्रमाणे 'अर्थम्बुध्वा शब्दरचना' इतिन्यायानवतारात् । पूर्वोत्तरभागवत् अध्ययनक्रमाभावेन प्रथममापाततो मूलमन्त्रार्थप्रतीत्यभावाच्च । मूलमन्त्रस्य 'ओमित्यग्रेव्याहरेत्' 'प्रत्यगानन्दम्' इति अथर्वणोपनिषत्खण्डद्वयगतत्वात्, मन्त्ररत्नस्य कठवल्लीद्वयोपनिषद्गतत्वाच्च । अतो मूलमन्त्रमन्त्ररत्नयोः प्रथमद्वितीयरहस्यत्वमनुपपन्नम् । इत्थं चरमश्लोकस्य तृतीयत्वमप्यनुपपन्नम् । तस्य पौरुषेयत्वेऽपि "सकृदेव" "स्थिते मनसि"इत्यादिश्लोकानाम्, षडङ्गयोगविषयपंचरात्रवचनानाञ्चोपबृंह्मणत्वसम्भवात् । शब्दतोऽर्थतश्च विशिष्यप्रत्यभिज्ञाविरहात्. मूलमन्त्रमन्त्ररत्नयोस्सर्वजीवानां स्वस्वरूपानुसन्धानरूपत्वेन, चरमश्लोकस्य चेतनविशे-

---

१. तै. भृगु. १७-६ ॥
२. तै. शिक्षा. ६-२ ॥
३. गीता. ८-१३ ॥
४. पाञ्चरात्रे ॥
५. मुमुक्षु. १-७६ ॥
६. नारायणोप. ३ ॥
७. नारा-उप. ४ ॥
८. रामा. यु-१८-३३ ॥
९. वराहपु ॥

षम्प्रति विधिरूपत्वेनच प्रत्यभिज्ञाया असम्भवाच्च श्रीकृष्णचरमश्लोकस्योपबृंहणरूपत्वेन रहस्यत्रयान्तर्भावकल्पनस्याऽमूलकत्वात् । अतोऽस्य श्रीमन्त्रस्य प्राथम्यम्, द्वयचरमश्लोकयोरानन्तर्यञ्च नयुक्तमितिचेत्—उच्यते, मूलमन्त्रमन्त्ररत्नयोः अपौरुषेयत्वेन बुबोधयिषापूर्वकवक्तृप्रवृत्तिविषयत्वाभावेऽपि, प्रेक्षावतां श्रोतॄणाम्मन्त्ररत्न चरमश्लोकप्रतिपन्ने निर्हेतुकपुरुषकारत्व विशिष्टलक्ष्मीविशिष्टस्य भगवतो निरपेक्षोपायत्वप्रार्थनारूपार्थे, केवलपरार्थानुभवकैङ्कर्यप्रार्थनारूपार्थे, 'अहमेव मोक्षयिष्यामी'ति भगवत स्स्वयमेव स्वानिष्टनिवर्तनरूपार्थेच जीवगतमोक्षरूपपुरुषार्थ तत्साधनविधिरूपसर्वशास्त्रविरोधेन प्रत्यक्ष-विरोधेनचायोग्यतानिश्चयेन मन्त्ररत्नचरमश्लोकार्थजिज्ञासाया एवानुदयेन पूर्वोक्तस्वरूपयाथात्म्यत्रयस्य मूलमन्त्रेण सम्यङ्मीमांसापूर्वकनिर्णयरूपसुशिक्षणेसति, तादृशस्वरूपानुगुणोपायोपेयप्रार्थनादियोग्यताज्ञानेन तदुभयजिज्ञासोदयेनच मूलमन्त्रस्य तदुभयमीमांसापूर्वकार्थनिर्णयहेतुभूतनिर्णयजनकत्वेन निरुक्त बोधक्रमविवक्षया पूर्वाचार्यैः प्रथममुपदेशात्, मन्त्ररत्नचरमश्लोकयोःश्रुतिस्मृतिरूपत्वेन क्रमेणोपदेशाच्च रहस्यत्रयस्याऽनाद्यध्ययनक्रमाभावेपि उपदेशक्रमाधीनाध्ययनक्रमस्सम्भवत्येव । अतो वेदान्तसमाख्यासिद्धभागद्वयक्रमवत्, मूलमन्त्रसमाख्यासिद्धो रहस्यत्रयक्रमोपि अर्थक्रमादुपपद्यते । किञ्च ''देहासक्तात्मबुद्धिः'' इत्याद्युक्तरीत्या मूलमन्त्रेण त्याज्यषट्कस्य तत्प्रतिकोट्युपादेयषट्कस्यचातिसङ्ग्रहप्रमाणतमेन मूलमन्त्रेण पूर्वापरविरोधप्रमाणान्तरविरोधनिबन्धनाप्रामाण्यशंकाशून्यतया श्रुत्यर्थापत्तिभ्यां सुस्पष्टमवगमेन, ज्ञातव्यान्तरराहित्येन परिपूर्णतयावगमेनच, द्वयप्रतिपन्नभगवदेकोपायत्वप्रार्थनायाः परार्थकैङ्कर्यप्रार्थनायाः चरमश्लोकप्रतिपन्नत्यागस्वीकारयोश्च मूलमन्त्रजनितत्याज्योपादेयज्ञानसाध्यतया, त्याज्योपादेयविभागज्ञानवत एव उक्तप्रार्थनाद्वयादिसम्भवज्ञानेन, तादृशयोग्यताज्ञानजनक तादृशविभागज्ञानजनकतया. मूलमन्त्रस्य प्राथम्यमुपपद्यते । अपिच मन्त्रब्राह्मणभागेषु परस्परप्रतिपन्नार्थवैशद्यस्य प्रायेण प्रतिपत्तॄणामानुभाविकतया. वक्ष्यमाणन्यायेन प्रणवमन्त्रशेषयोरिव रहस्यत्रयस्य विवरणविवरणिभावेन मन्त्ररत्नचरमश्लोकप्रतीतार्थाकांक्षाहेतुभूत ज्ञानजनकत्वेन मूलमन्त्रमन्त्ररत्नयो र्मन्त्ररत्नचरमश्लोकयोश्च क्रम उपपद्यते । एतत्सर्वमभिप्रेत्यैव 'अनन्यार्हशेषत्वे'त्यादिनोक्तम् ।

नच चरमश्लोकमात्रेण रहस्योपबृंहणासिद्धिरिति वाच्यम्, पञ्चमवेदसारभूतोपनिषत्सारार्थ सङ्ग्रहतया चरमश्लोकस्यैवोपबृंहणत्वरूपोपपत्तेः । कर्मयोगज्ञानयोग भक्तियोगादिविधानपूर्वकं तेषां साधनान्तरत्व भ्रमवारणाय सर्वधर्मत्यागाङ्गक शरणागतिविधिरूपत्वेन चरमश्लोकस्यैव शरणागत्यनुष्ठान करणमन्त्ररूपद्वयविवरणत्वोपपत्तेश्च । मन्त्ररत्नोक्तानुष्ठीयमानावस्थ शरणागतेः भगवता स्वयमेव विहितत्वेन शरण्याभिमतत्वरूपार्थविशेषलम्भकतया, शरणागते स्साधनत्वव्यवच्छेदस्य शरणशब्दत्यागविध्येकशब्दाहं शब्दबलेनसिद्ध्या 'अहमेव मोक्षयिष्यामि' इत्येवं भगवतः स्वयमेव स्वानिष्टनिवर्तनरूपोत्तरवाक्य प्रतिपन्नकैङ्कर्य प्रतिबन्धकनिवर्तनप्रकारोक्त्याच, तस्यैव तद्विवरणत्वावश्यम्भावात् । पाञ्चरात्रस्य वेदवत् अतिविततगहनगम्भीरतया तत्रत्यवचनानां 'इतिहासपुराणाभ्या'मिति नियमित वेदोपबृंहणत्वासिद्धेश्च । श्रीशब्दादिव्युत्पत्तिपरप्रमाणानुगृहीतेन पूर्वाचार्योपदेशपरम्पराप्राप्तमीमांसाम्यायानुगृहीतचरमश्लोकोपबृंहितेन स्वयमपि तादृशन्यायानुगृहीतेन मन्त्ररत्नेनैवाऽकारादिव्युत्पत्तिप्रमाणानुगृहीतस्य स्वयमपि तादृशन्यायानुगृहीतस्याष्टाक्षरस्य निरवशेषनिष्कलङ्कार्थनिर्णयस्याऽव्याहतत्वाच्च । श्रीरामश्रीवराहचरमश्लोकादीनां निर्णीतार्थैकदेशसंवादतया तदनुसारेण पूर्वाचार्यव्याख्यातार्थान्तरलम्भकतयाच कालक्षेपार्यभोगार्थञ्चानुसन्धानसम्भवाच्च ।--

---

१. भारते आदि. १-२७३ ॥

एतत्सर्वमभिप्रेत्य ( प्रथमरहस्यम् श्रीमन्त्र ) इत्युक्तम् ।

अस्य मन्त्रत्वोक्तिश्च *" मन्तारं त्रायत इति मन्त्रः" इत्युक्तप्रकारेण शब्दशक्त्याऽर्थबोधनेनचानुसन्धातृरक्षकत्वात् । जपहोमादिभिः कार्यं कुर्वतां उपासकानां शब्दशक्त्या रक्षको भवति । 'ईश्वरएवोपायोपेयावि'ति स्थितानां प्रपन्नानामर्थबोधनेन रक्षको भवति ।

---

मन्त्ररत्नचरमश्लोकयोश्शब्दतोऽर्थतश्च विशिष्यप्रत्यभिज्ञाविरहेऽपि, मूलमन्त्रमन्त्ररत्नप्रतिपन्नोपायोपेययो र्विवक्षिताकारविशेषसमर्पकतया प्रत्यभिज्ञासम्भवेन पूर्वोक्तप्राबल्येनच श्रीकृष्णचरमश्लोकस्यैवोपबृंहणरूपत्वेन रहस्यत्रयान्तर्भावस्य समूलकत्वाच्च । अतोऽस्य श्रीमन्त्रस्य प्राथम्यं, द्वयचरमश्लोकयो र्द्वितीयतृतीयरहस्यत्वञ्च युक्तमेव ।

ननु अष्टाक्षरस्य कथम्मन्त्रत्वम्, "[1]तच्चोदकेषु मन्त्राख्या" इत्युक्तेः, एतस्य च स्वरूपमात्रप्रकाशकत्वेनानुष्ठेयार्थ प्रकाशकत्वाभावादितिचेत्तत्राह—**अस्य मन्त्रत्वोक्तिरिति** । मन्त्रप्रसिद्धविषयस्यैव मन्त्रत्वे तादृशसूत्रतात्पर्यात् '[2]ओन्नमोनारायणायेति मन्त्रोपासकः' '[3]मन्त्राणाम्परमोमन्त्रः' इत्यादि श्रौतस्मार्तप्रसिद्धेश्चात्रापि सत्वात् ' मन्तारम्-अनुसन्धातारम्' शब्दशक्त्या अर्थबोधनद्वारेणच, त्रायत, इति स्वानुसन्धातृरक्षकत्वेन मन्त्रत्वसम्भवाच्चेति भावः ।

नचैव मर्थबोधनद्वारा रक्षके विधायके चरमश्लोके अतिप्रसङ्गः, एतादृशमन्त्रत्वस्य तत्राभ्युपगमात्, योगरूढत्वाभ्युपगमाद्वा। योगाङ्गीकारश्च तादृशार्थबोधकस्यापि प्रकृते उद्देश्यत्वात्, निरुक्तवशाच्चेति बोध्यम् ।

शब्दस्य शक्तित्वम्-फलप्रदानसामर्थ्यम् । **(जपहोमादिभिः)** इत्यत्रादिपदेन तर्पणादिकमुच्यते । **(ईश्वरएवोपायोपेयाविति स्थितानांप्रपन्नानामि)**ति - 'ईश्वरएवोपाय' इत्यनेन भगवतएव मोक्षकरणत्वम् प्रतिपादितम्। उपायशब्दस्य रक्षकत्वाद्यतिरेकेण करणत्ववाचकत्वात् । उक्तम् "[4]उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम् । वर्तते साम्प्रतञ्चैष उपायार्थैकवाचकः" इति । परमपुरुषार्थलक्षणमोक्षंप्रति भगवतस्सर्वेश्वरस्य श्रियःपते रदृष्टद्वारकचेतनप्रवृत्तिसामान्यनिरपेक्षं तत्प्रसादलक्षणादृष्टद्वारकफलकरणत्वरूप मुपायत्वमुक्तम्भवति ।

अत्र केचित्—मोक्षरूपफलंप्रति भगवतः अदृष्टद्वारकफलसाधनत्वरूपं फलकरणत्वं नसम्भवति । अनुष्ठितसाधनंप्रति भगवतः फलप्रदत्वस्यैव श्रीभाष्यादौ फलाधिकरणे सिद्धान्तितत्वात् । फलप्रदत्वञ्च - फलप्रदानानुकूलसङ्कल्पवत्त्वम् । नतु फलम्प्रति व्यापारसम्बन्धावच्छिन्नकारणत्वरूपं करणत्वम् । तथाविधङ्करणत्वञ्च - न्यासोपासनयोरेव प्रामाणिकम् । तयोरेव भगवत्प्रसादद्वारा मोक्षरूपफलम्प्रतिहेतुत्वसम्भवात् । तथाचानुगृहीतम् श्रीभाष्ये फलाधिकरणे । इयञ्च तत्सूक्तिः—"[5]फलमत उपपत्तेः" सएवहि सर्वज्ञः सर्वशक्तो महोदारो यागदानहोमादिभि रुपासनेनचाराधित ऐहिकामुष्मिक भोगजातं स्वस्वरूपावाप्तिरूपमपवर्गञ्च दातुमीष्टे" इति ।

---

* पाद्मसंहि ॥

१. पूर्वमी. सू. २-१-३२ ॥

२. अथर्वोप. नारायणोप. ४ ॥

३. नारदीयकल्पे. अष्टा. विधा. १-१११ ॥

४. अहि. संहि. ३६-३४ ॥

५. शारी. ३-२-३७ ॥

अनुगृहीतञ्चाचार्यैरपि श्रीमति रहस्यत्रयसारे साध्योपायशोधनाधिकारे—"यथाधिकरणंप्रभुर्य-जनदानहोमार्चनाभरन्यसनभावनाप्रभृतिभि स्समाराधितः । फलंदिशति देहिनामितिहि संप्रदाय-स्थितिः श्रुतिस्मृतिगुरूक्तिभि र्नयवतीभिराभाति नः" इति । "समाराधितः - प्रसादम्प्रापितः" इति तद्व्याख्या । इत्थञ्च न्यासोपासनयोरेव भगवत्प्रसादद्वारा मोक्षहेतुताया उदाहृतसूक्तौ स्पष्टतया प्रतिपादनात् भगवतः फलप्रदत्वमात्रमेवाङ्गीकरणीयमिति ।

नच "उपायस्स्वप्राप्ते रुपनिषदधीतस्सभगवान्" इत्यादौ आचार्यैरेव भगवत उपायत्वप्रति-पादनात् सर्वशक्ते स्तस्य फलप्रदत्वमुपायत्वञ्च सम्भवत्येवेति वाच्यम् ;—आचार्यैरनुगृहीतमुपायत्वम्-नतावत्करणत्वरूपम्, किन्तु फलप्रदत्वरूपमेव । तथाचानुगृहीतमाचार्यैः श्रीमति रहस्यत्रयसारे "एत-दुपायरूपत्वेन प्राप्तिरूपत्वेनचावस्थानरूपज्ञानस्य विषयत्वेन फलप्रदत्वभोग्यत्वादिवेषेणेश्वरस्योपायत्व-मुपेयत्वञ्चे"ति । "फलप्रदत्वमादाय साधनत्वोक्तेश्च उपायत्वोक्तेर्नकोपि दोषः" इति तद्व्याख्या ।

इत्थञ्च "उपायस्स्वप्राप्तेः" इत्याद्याचार्यैः प्रतिपादितमुपायत्वं फलप्रदत्वरूपमेवेति तद्वचनब-लात् भगवतो नकरणत्वरूपमुपायत्वं सम्भवत्येवेति ।

नच "स्वप्राप्ते स्साधकतमत्वात् करणमि"ति श्रीसहस्रनामभाष्ये भट्टपराशरपादै रनुगृहीततया भगवतो मोक्षकरणत्व माचार्यानुमतमेवेति वाच्यम्, उक्तरीत्या साधकतमत्वस्य फलप्रदत्वमात्रे पर्यव-सानस्यावश्यकत्वात् । अन्यथा कर्त्रधीनसिद्धिकतयापकृष्टकरणत्वस्य सर्वोत्कृष्टे भगवति अङ्गीकारे राशि भृत्यत्वानुसन्धानवन्महापराधप्रसङ्गात् । तथाचानुगृहीतन्निक्षेपरक्षायामाचार्यैः "स्वतन्त्रतयोत्कृष्टे कर्त-रि ब्रह्मणि अस्वतन्त्रतयापकृष्टकारकान्तरदृष्टेर्महापराधरूपत्वादि"ति । किञ्च भगवति विद्यमानङ्करण-त्वम् इतिकर्तव्यताविशिष्टम्, नवा । आद्ये भगवतो निरपेक्षोपायत्वसिद्धान्तविरोधः । द्वितीये कर-णत्वस्यैवासिद्धिप्रसङ्गः । तदुक्तमभियुक्तैः—"नहि तत्करणं लोके वेदेवा किञ्चिदीदृशम् । इतिकर्तव्य-तासाध्ये यस्य नानुग्रहेर्थिते"ति । अस्यार्थः—करणोपकारे अर्थिता - अपेक्षाकरणमात्रस्यावश्यकेति । तथाचोक्तयुक्त्या भगवति करणत्वासम्भवात् तस्मिन् श्रूयमाणङ्करणत्वंफलप्रदत्वरूपमेवेति अकामेनापि अङ्गीकरणीयम् ।

ननु "निवासश्शरणं सुहृत्" "श्रूयते हि कपोतेन शत्रुश्शरणमागतः" "त्वमनादिरनिर्देश्यस्त्वा-महं शरणङ्गतः" "सर्वात्मना यश्शरणं शरण्यन्नारायणं लोकगुरुम्प्रपन्नम्" "उपाये गृहरक्षित्रो श्शब्द-श्शरणमित्ययम् । वर्तते साम्प्रतञ्चैष उपायार्थैकवाचकः" इत्यादिप्रमाणैः, "अयनशब्दे ईश्वरस्योपा-यत्वं सिद्धम्" इत्याचार्यसूक्त्याच भगवतः करणत्वरूपोपायत्वस्य स्पष्टतया प्रतिपादनात् फलप्रदत्वा-तिरिक्त मुपायत्व मङ्गीकरणीयमेवेतिचेत्,—मैवम्, उदाहृतवचनेषु विद्यमानशरणशब्दस्य निरपेक्षरक्ष-कत्वरूपफलप्रदत्वार्थकत्वेन तदतिरिक्तकरणत्वार्थकत्वासम्भवात् । निरपेक्षरक्षकत्वञ्च प्रपत्त्यंगकोपासनेन

१. रहस्यत्रयसारे. उपायविभागाधिकारे ॥
२. रह. सारे. साध्योपा. अधिकारे ॥
३. सारास्वादिन्याम् ॥
४. सहस्र. भा. ३८०. नाम ॥
५. निक्षे. पूर्वरक्षाधिकारे ॥
६. सुबा. उप. ६-खं ॥
७. रामा. यु. १८-२४ ॥
८ ॥
९. भागवते. ११-५-४१ ॥
१०. अहि. सं. ३६-३४॥
११. रह. सारे. मूलमन्त्राधिकारे ॥

दीयमानफलस्याकिञ्चनविषये प्रपत्तिमात्रेण फलप्रदत्वम् । तथाचानुगृहीतमाचार्यैश्चरमश्लोकाधिकारे— "एतद्विद्याया विशेषेण वेद्याकारम् - निरपेक्षोपायत्वम्" इति । व्याख्याताचेयं श्रीसूक्तिः सारदीपिकायाम्—"एतद्विद्याया इति - निरपेक्षोपायत्वन्तु - भक्त्युपायानुष्ठानानपेक्षयास्य फलप्रदत्वम्"इति ।

इत्थञ्च कुत्रचिदधिकारिविषये गुरूपायनिरपेक्षरक्षकत्वरूपफलप्रदत्वस्यैव 'उपायार्थैकवाचकः' इत्यनेन प्रतिपादिततया तदनुरोधेनैव सर्वेषां शरणशब्दानामर्थाङ्गीकारस्य युक्तत्वात् नोदाहृतप्रमाणैः फलप्रदत्वातिरिक्तोपायत्वप्रतिपादनं सम्भवतीति ।

नच "उपाये गृहरक्षित्रोरि"ति वचने रक्षकत्वसामान्यार्थकतां व्युदस्य तद्भिन्नोपायत्वप्रतिपादनात् निरपेक्षरक्षकत्वरूपविशिष्टस्य केवलरक्षकत्वरूपशुद्धस्यच भेदासम्भवेन कथमुक्तार्थकत्वसम्भव इति वाच्यम्,—उभयोर्वास्तवभेदाभावेपि निरपेक्षरक्षकत्वत्वावच्छिन्नाविषयकप्रतीतिविषयत्वरूपपारिभाषिकभेदस्यसत्वात् तदभिप्रायेणैव तद्वचनप्रवृत्तेर्नानुपपत्तिगन्धोपि ।

ननु, भगवत्युपायत्वम् - रक्षकत्वमेवेत्युक्तिः परिकरविभागाधिकारविरुद्धा;—तत्रहि 'उपाये गृहरक्षित्रो' इति वचनमुदाहृत्य 'एतदुपायस्य चेतनाचेतनसाधारण्यात्' इत्यारभ्य,"तत्र शरणशब्दस्य एकप्रयोगे अर्थद्वयाभिधानासम्भवात्, एतदधिकारिणोऽसाधारणरूपोपायत्वाध्यवसायोऽत्रशब्दः, सर्वाधिकारिसाधारणगोप्तृत्ववरणन्तु अर्थात्सिद्धम्" इत्यन्तेन ग्रन्थेनोपायत्वस्य शब्दशक्त्या प्रतिपादितत्वसमर्थनात् फलप्रदत्वातिरिक्त मुपायत्वम्भगवति निराबाधं सिद्ध्यत्येवेति चेत्—

मैवम् । तस्मिन्नेवाधिकारे 'अभिधानवृत्ते स्तात्पर्यवृत्तिर्बलीयसी' इति न्यायेन भगवति प्रयुक्तस्य शरणशब्दस्य निरपेक्षरक्षकत्वरूपार्थतात्पर्यस्य सुव्यक्तं प्रतिपादनात् । इयञ्च तत्सूक्तिः—"[1]रक्षिष्यतीति विश्वासो गोप्तृत्ववरणन्तथा" "सर्वज्ञोपि हि सर्वेशस्सदा कारुणिकोऽपि सन् । संसारतन्त्रवाहित्वात् रक्ष्यापेक्षाम्प्रतीक्षते" इत्युक्तप्रकारेण चेतनैकान्तगोप्तृत्वस्याऽनुसन्धेयत्वात्, गोप्तृत्ववरणमत्र विवक्षितमि"ति । सारास्वादिन्यामपि 'उपायार्थैकवाचकः' इति रक्षितृत्वव्युदासस्य कृतत्वेपि निक्षेपरक्षोपपादितप्रक्रियया गोप्तृत्वमेवोपायत्वरूपसामान्याकारेण शरणशब्दार्थत्वेनोक्तम्, नात्र गोप्तृत्वस्यानुसन्धेयत्वव्युदासार्थमित्युक्तम्भवती"ति ।

इत्थञ्च भगवति विद्यमानमुपायत्वं फलप्रदत्वरूपरक्षकत्वमेवेति ।

अथ भगवति विद्यमानमुपायत्वं फलप्रदत्वरूपञ्चेत्, तस्य पराधिकरणे "[3]सामान्यात्तु।उपपत्तेश्च" तिसूत्राभ्याम्भगवति सेतुत्वरूपोपायत्वस्योक्ततया तस्य च फलप्रदत्वरूपताया भवदभिमततया पुनरपि फलप्रदत्वव्युत्पादनाय फलाधिकरणारम्भो निरर्थकः । सेतुशब्दश्च भगवता भाष्यकारेणोपायशब्देन व्याख्यातः "[4]यदुक्तं '[5]अमृतस्यैष सेतुः' इति प्राप्यप्रापकसम्बन्धव्यपदेशात् प्रापकात्परम्प्राप्यमस्तीति, तन्न, प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः । '[6]नायमात्मा प्रवचनेन लभ्यो नमेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्य स्तस्यैष आत्मा विवृणुते तनूं स्वामि'त्यनन्योपायत्वश्रवणात्" इति । अतः फलाधिकरणारम्भान्यथानुपपत्त्या फलप्रदत्वातिरिक्तमुपायत्वम्भगवति स्वीकर्तव्यमेवेति चेत्,—

---

१. अहि. सं. ३६-३४ ॥
२. लक्ष्मीतन्त्रे. १७ ६० ॥
३. शारी. ३-२-३१, ३४ ॥
४. श्रीभाष्ये. ३-२-३४ ॥
५. मुण्डकोप. २-२-५ ॥
६. मुण्डकोप. ३-२-३ ॥

नैवम्। फलाधिकरणे फलप्रदत्वरूपमेवोपायत्वं व्युत्पाद्यम्, पराधिकरणे तु फलप्रदस्य फलैक्यं व्युत्पादितमिति नफलाधिकरणारम्भवैय्यर्थ्यप्रसङ्गः। किञ्च पराधिकरण एव फलप्रदत्वरूपोपायत्वस्य प्रतिपादनेपि नोत्तराधिकरणारम्भवैयर्थ्यसम्भवः। फलाधिकरणे हि अपूर्वस्य फलप्रदत्वाभावस्यैव समर्थनीयत्वात् इति।

नच सहस्रनामभाष्ये 'योग' इति दिव्यनामव्याख्यानावसरे "अस्यैव निरुपाधिकमुक्त्युपायत्वमपि वक्ति - योगः - युज्यते प्राप्यते अनेनेति। 'अकर्तरिचकारके संज्ञायामि'ति घञ्" इत्यनुगृहीततया फलदानकर्तृत्वरूपफलप्रदत्वमेवोपायत्वमित्यङ्गीकारे घञ् प्रत्ययानुपपत्त्या तदतिरिक्तं फलकरणत्वमेवोपायत्व मित्यङ्गीकरणीयमिति वाच्यम्,—"फलसम्बिभत्सया कर्मभिरात्मानं पिप्रीषन्ति, स प्रीतोऽलं फलाये"त्यादिद्रमिडभाष्योक्तरीत्या मोक्षार्थभगवत्प्रसादहेतुतया न्यासोपासनयोरेव शास्त्रविहितत्वेन तयोरेव स्वसाध्यभगवत्प्रसादद्वारा मोक्षहेतुत्वरूपकरणत्वस्य सम्भवात्। भगवतोऽपि करणत्वाङ्गीकारे प्रयोजनाभावात्। अतः फलाधिकराणोक्तरीत्या भगवतः फलप्रदत्वमेवाङ्गीकरणीयम्। अन्यथा न्यासोपासनयोर्मोक्षकरणत्वेन शास्त्रविधानानुपपत्तेः। किञ्च "तमेवं विद्वान् अमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति श्रुत्या वेदनान्यस्य मोक्षमुख्योपायत्वरूपकरणत्वप्रतिषेधात्, न्यासोपासनयोरेव मोक्षकरणत्वाङ्गीकारः प्रामाणिकइति।

नच "स्तब्धोस्युततममादेशमप्राक्ष्यः" इत्यत्र "आदिश्यते अनेनेति - आदेशः" इति प्रत्यार्थव्याख्यानपरवेदार्थसङ्ग्रहव्याख्याने "विवक्षातः कारकाणि भवन्ति" इति न्यायेन कर्तुरेव करणान्तरनिरपेक्षत्वलक्षणेन करणसाधर्म्येण रूपेण साधकतमत्वेन करणत्वविवक्षया घञ् प्रत्यय उपपद्यते" इति प्रतिपादिततया षड्विधतात्पर्यलिङ्गोपेतसद्विद्यायां घञ्प्रत्ययान्तादेशशब्देन भगवतः करणत्वस्य सुस्पष्टमभिहितत्वात् भगवतः करणत्वं श्रुतिसिद्धमेवेति वाच्यम्,—उपनिषद्भाष्ये रङ्गरामानुजमुनिभिः महताप्रबन्धेन घञ्प्रत्ययार्थं विचार्य प्रत्ययस्य कर्तरिलक्षणापक्षस्य "कृत्यल्युटो बहुलम्" इत्यादिना कर्तर्यपि घञ्प्रत्ययसाधुत्वस्य च समर्थितत्वात्। आदेशशब्देन करणत्वं नप्रतिपाद्यते, किन्तु प्रशासनकर्तृत्वमेव प्रतिपाद्यते। अत एवोत्तरत्र तदुपष्टम्भकतया "प्रशासितारं सर्वेषामि"ति मनुवचनमेवोदाहृतम्। तस्मादुक्तयुक्तिभिर्भगवतः परमपुरुषार्थलक्षणमोक्षम्प्रति करणत्वं नसम्भवति, अपितु मोक्षाख्यफलप्रदत्वमेवेति—आहुः।

अत्र सिद्धान्तिनस्तु—भगवतस्सर्वशक्ते स्सर्वज्ञस्य परमपुरुषार्थलक्षणमोक्षम्प्रति उपायत्वरूपङ्करणत्वं सम्भवत्येव। "अमृतस्यैष सेतुः" "निर्वासश्शरणं सुहृत्" इत्यादिप्रमाणैः करणत्वरूपोपायत्वप्रतिपादनात्। करणत्वञ्च - व्यापारवदसाधारणकारणत्वम्। प्रकृते "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्" इत्यादिश्रुत्या मोक्षहेतुभूतप्रसादविशेषएव व्यापारत्वेन विवक्षितः। सच सर्वदा विद्यमानोऽपि चेतनस्य प्रातिकूल्यव्यवसायनिवृत्तिमात्रेण फलोपधानताम्भजते। ननु भक्ति-

१. सहस्रनाम. १८. ना॥
२. पाणिनीयसू. ३-३-१९॥
३. पुरुषसूक्तम्॥
४. छा. उप. ६-१-३॥
५. पाणिनीयसू. ३-३-१९३॥
६ मनुस्मृ. १२-१२२॥
७. मुण्ड. २-२-५॥ ८. सुबालोप. ६-खं॥
९. तै. नारा. १० १॥

प्रपत्त्यादिना नूतनतया जायते । तथाचानुगृहीतम् श्रीभाष्ये रचनानुपपत्त्यधिकरणे "दयाहिनाम स्वार्थनिरपेक्षापरदुःखासहिष्णुता । साच स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमानानुगुणायावकल्पते। प्रत्युतपुंस्त्वमेवावहति । तन्निग्रहएव तत्र गुणः । अन्यथा शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात् । स्वशासनातिवृत्तिव्यवसायनिवृत्तिमात्रेणाऽनाद्यनन्तकल्पोपचितदुर्विषहानन्तापराधानङ्गीकारेण निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते । यथोक्तम् "तेषां सततयुक्तानां भजताम्प्रीतिपूर्वकम् । ददामि बुद्धियोगन्तं येन मामुपयन्तिते । तेषामेवानुकम्पार्थमहमज्ञानजंतमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता इति" इति । तथैव श्रीकूरेशमिश्रैः श्रीवैकुण्ठस्तवे "क्षाम्यस्यहो तदभिसन्धिविराममात्रात्" इति । प्राहुश्च वात्स्यवरदाचार्यास्तत्त्वसारे "दुष्कर्मव्यवसायतस्तु विरतो यस्तस्य पुंसःपुरा भूयो जन्मतमार्जितान्यगुणतान्यागांस्यनादृत्य यत् । तस्यानन्तसुखाप्तयेच यतते लक्ष्मीसहायस्स्वयं तत्कारुण्यपुरस्सरो गुणगणस्तस्यायमुज्जृम्भते" इति । श्रीकृष्णपादलोकाचार्यैरेव अतिगम्भीरसन्दर्भश्रीमद्वचनभूषणे "उन्मनत्ताल् एन् निनैन्दिरुन्दाय्" एन्किरपडिये प्रातिक्कुपायमवन्निनैवु । अदुतान् एप्पोदुमुण्डु । अदु फलिप्पदु इवन्निनैवु मारिनाल्" इत्यनुगृहीतम् ।

उदाहृतवचनै र्मोक्षोपयोगिनो भगवद्गुणस्य प्रातिकूल्यव्यवसायनिवृत्तिमात्रेण समुज्जृम्भणस्य स्पष्टतया प्रतिपादनात्, तद्द्वारा भगवतो मोक्षकरणत्वं प्रामाणिकमेव ।

अनुगृहीतञ्च वेदचूडाचार्यैरेव द्रमिडोपनिषत्तात्पर्यरत्नावल्याम् "देवश्श्रीमान् स्वसिद्धेः करणमिति वदन् एकमर्थं सहस्रे सेव्यत्वादीन् दशार्थान् पृथगिह शतकैर्वक्ति तत्स्थापनार्थान् । एकैकश्यात् परत्वादिषु दशकगुणेष्वायतन्ते तथा ते तत्तद्गाथा गुणाना मनुविदधति तत्पङ्क्तयः पङ्क्तिसङ्ख्याः ॥ सेव्यत्वात् भोग्यभावात् शुभतनुविभवात् सर्वभोग्याधिकत्वात् श्रेयस्तद्धेतुदानात् श्रितविवशतया स्वाश्रितानिष्टहृत्वात् । भक्तच्छन्दानुवृत्तेर्निरुपधिकसुहृद्भावतस्सत्पदव्यां साहाय्याच्च स्वसिद्धे स्स्वयमिहकरणं श्रीधरः प्रत्यपादि" इति । तत्त्वटीकायाञ्च "प्राप्यत्वंब्रह्मणस्सिद्धयेत् ब्रह्मणत्वस्य कीर्तनात् । स्वप्राप्तेः साधनत्वं हि ब्रह्मणत्वमिहोच्यते" इति ।

श्रीमद्रङ्गरामानुजमुनीन्द्रैरपि द्रमिडोपनिषद्व्याख्याने उपक्रमे चैवमेवोक्तम् ।

तथाच भगवति मोक्षरूपफलकरणत्वस्याऽऽचार्यानुगृहीततया भक्तिप्रपत्त्यादिकं सर्वमपि उपायभूतभगवत्प्रसादजन्योऽवान्तरव्यापारं एवेत्यङ्गीकरणीयः । तथाचानुगृहीतमाचार्यै र्न्यायसिद्धाञ्जने जीवपरिच्छेदे "अमानवकरस्पर्शादारभ्यचासौ मुक्तः, ततःपूर्वस्सर्वोप्युपायव्यापारं एवे"इति ।

ननु "भक्त्यांमामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मान्तत्वतो ज्ञात्वा विशते तदनन्तरम्" इत्यादिस्मृत्युपबृंहितैः "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" "भिद्यते हृदयग्रन्थिः छिद्यन्ते

---

१. श्रीभाष्ये. २-२-३ ॥
२. गीता. १०-१०, ११ ॥
३. वैकुण्ठस्तवे. ६१॥
४. तत्त्वसारे. ४८ ॥
५. श्रीवचनभूषणे. ६७ ६८-६९ ॥
६. द्रवि-वल्ल्याम्. ७-८ ॥
७. न्याय-जीव. १॥
८. गीता. १८-५५॥
९. छा-उप. ७-२६-२॥
१०. मुण्डकोप. २-२-८॥

सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्द्रष्टे परावरे" "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" "ब्रह्मविदाप्नोति परम्" "न्यासमेषान्तपसा मतिरिक्तमाहुः" इत्यादिश्रुतिवाक्यै र्न्यासोपासनयोरेव मोक्षमुख्योपायत्वविधानात्, "प्रसत्यैतस्योक्ते प्रपदननिदिध्यासनगती" इत्याद्याचार्यसूक्त्या तयोर्भगवत्प्रसादद्वारा मोक्षहेतुत्वप्रतिपादनाच्च न्यासोपासनयोरेव मोक्षकरणत्वम्, भगवतस्तु फलप्रदत्वमेव प्रामाणिकमेवेति चेत्,—

मैवम् । "उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदि । उपायोपेयत्वे तदिह तव तत्त्वन्नतुगुणावतस्त्वां श्रीरङ्गेशय शरणमव्याज मभजम्" "सत्तास्थितिप्रयतनप्रमुखैरुपात्तं स्वार्थे सदैव भवता स्वयमेव विश्वम् । दीपप्रकाश तदिहत्वदवाप्तये त्वामव्याजसिद्धमनपायमुपायमाहुः" "आर्तेष्वाशुफला तदन्यविषयेऽप्युच्छिन्नदेहान्तरा वह्न्यादेरनपेक्षणात्तनुभृतां सत्या दिवद्व्यापिनी।श्रीरङ्गेश्वर यावदात्मनियतत्वत्पारतन्त्र्योचिता त्वय्येव त्वदुपायधीरपिहितस्योपायभावास्तुमे" इत्याद्याचार्यसूक्तिषु भगवतएव तत्प्राप्तिलक्षणमोक्षम्प्रति निरपेक्षोपायत्वप्रतिपादनपूर्वकं प्रपत्तिरुपायत्वनिषेधस्य प्रतिपादिततया, तस्यैवाऽसाधारणकारणत्वरूपकरणत्वम्प्रामाणिकम् ; न्यासादीनान्तु करणतानिर्वाहकव्यापाररूपत्वमेव । सूचितश्चायमर्थः—"त्वय्येवत्वदुपायधीरपिहितस्योपायभावास्तु मे" इत्यादिना । प्रपत्तेस्तु "त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः" इत्यादिप्रमाणै रुपायाध्यवसायरूपतयोपायत्वं नसम्भवतीत्यभिप्रेत्य "अपिहितस्योपायभावे"त्यनुगृहीतम् ।

नच "प्रसत्यैतस्योक्ते प्रपदननिदिध्यासनगती" इत्यत्रमोक्षहेतुभूतभगवत्प्रसादहेतुत्वेन न्यासोपासनयोर्विधानस्यानुगृहीततया भगवत्प्रसादद्वारा न्यासादीनामेवाऽसाधारणकारणत्वमाचार्याभिमतमेवेति वाच्यम् —"निदानन्तत्रापि स्वयमखिलनिर्माणनिपुणः" इति न्यासोपासनादीनां सिद्धोपायभूतभगवत्कृपिफलत्वस्याऽप्याचार्यैरनुगृहीततया, उपायफलीभूतव्यापारविशेषात्मकन्यासादीनामुपायत्वासम्भवात् । उक्तञ्च सारास्वादिन्यादौ श्रीमद्रहस्यत्रयसारव्याख्याने "स्वतएव रक्षणदीक्षितस्सन् स्वप्राप्तेरव्यवहितोपायः, अतः सएव प्रधानोपाय इत्युक्तेः नदोषइत्युक्तम्भवति" नैतन्मात्रम्, प्रसदनोपायस्य, तद्धेतु सुकृतपरिपाकस्यच तदधीनत्वाच्च सएव प्रधानोपाय इत्याह—निदानमित्यादिना। 'तत्रापि'—सुकृतपरिपाकहेतुकतदारोहेपीत्यर्थः । 'स्वयमि'ति - स्वप्राप्तेरव्यवहितोपायभूतस्स्वयमेव तत्प्रतिबन्धकनिवृत्त्यर्थव्यवहितोपायादीनामपि मूलकारणमित्यर्थः । तत्रोपपत्तिसूचनम्—अखिलनिर्माणनिपुण इति" इति ।

अत्रच भक्तिप्रपत्त्यो र्सिद्धोपायफलत्वस्य भगवत्प्राप्तिप्रतिबन्धकान्यथाज्ञानादिनिवृत्तिफलकतया व्यवहितोपायत्वरूपाप्रधानोपायत्वस्यच प्रतिपादनान्मोक्षम्प्रतिकरणत्वरूपं प्रधानोपायत्वम्भगवत एवेति सम्प्रदायसमधिगतोयमर्थः प्रतिपादितः ।

---

१. पुरुषसूक्तम् ॥
२. तै. आन. १-१ ॥
३. तै-नारा॥
४. रह-सारे-उपाया-रे ॥
५. श्रीरङ्गराजस्तवे. २-८७ ॥
६. शरणागतिदीपिका ॥
७. न्यासतिलके ॥
८. अहि-सं. ३६-३६॥
९. रहस्यत्रयसारे. उपायविभागाधिकारे ॥
१०. रह-सारे. उपा-रे ॥

नच न्यासोपासनयोर्मोक्षकरणत्वानङ्गीकारे फलाधिकरणविरोधः । तत्रहि भगवतः "फलमत. उपपत्तेः' इत्यादिना सूत्रगणेनाऽनुष्ठितसाधनात्तदभिलषितफलप्रदत्वमात्रस्यैव प्रतिपादनात् इति वाच्यम्;—फलाधिकरणे हि भगवत उपायत्वसमानाधिकरणम्फलप्रदत्वमात्रन्नोच्यते; किन्तु, जैमिनीमतानुयायिभिर्मीमांसकैर्धर्मस्य यादृशम्फलप्रदत्वमभ्युपगतम्, तादृशम्फलप्रदत्वमेव सर्वेश्वरे भगवति प्रतिपाद्यते । तच्च यागादीनां स्वजन्यापूर्वद्वारा फलसाधनत्वरूपङ्करणत्वात्मकमेव । नतु केवलफलप्रदत्वरूपम् । सूचितश्चायमर्थः "धर्मञ्जैमिनि रतएव" इति सूत्रेण । तन्मतनिराकरणपूर्वकम्भगवतएव सर्वफलसाधनत्वरूपं सर्वफलप्रदत्वम् "पूर्वन्तु बादरायणो हेतुव्यपदेशात्" इति सूत्रेण सिद्धान्तितम् । तथाच मीमांसकाभिमतरीत्या फलकरणत्वरूपफलप्रदत्वस्यैव फलाधिकरणसिद्धान्तितया नतदधिकरणविरोधगन्धः । फलम्प्रतिकरणभूतस्य यागादेरेव फलप्रदत्वं पूर्वतन्त्रे प्रतिपादितम् । तथाच शबरभाष्यम् "अपि वा शब्दपूर्वत्वात् यज्ञकर्मप्रधानं स्यात् गुणत्वे देवताश्रुतिः॥—अपिवेति पक्षो व्यावर्त्यते । नचैतदस्ति, यदुक्तन्देवता प्रयोजकेति, यज्ञकर्मप्रधानं स्यात्—यजतेर्जातमपूर्वम् । कुतः, शब्दपूर्वत्वात् · यद्धि फलन्ददाति तत्प्रयोजकम् । 'इदं फलन्ददाती'त्येतज्ज्ञानं शब्दपूर्वकम् । न प्रत्यक्षादिभिरवगम्यते । शब्दश्च यजतिवाच्यात् फलमाह । नदेवतायाः । कथमवगम्यते दर्शपौर्णमासयोः करणत्वेन निर्देशः "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेते"ति। तथा "ज्योतिष्टोमेन स्वर्गकामो यजेते"ति यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारः । नदेवतायाः" इति ।—अत्र च फलकरणस्यैव फलप्रदत्वम्प्रतिपादितमिति तन्न्यायेन फलाधिकरणेपि फलसाधनस्यैव फलप्रदत्वमपि प्रतिपादितमिति नानुपपत्तिः ।

नच स्वतन्त्रे भगवति कर्त्रधीनसिद्धिकतया अपकृष्टास्वतन्त्रकारकत्वरूपकरणत्वाङ्गीकारः, राज्ञी भृत्यत्वारोपवदनुचित इति वाच्यम्,—अचेतनत्वसमानाधिकरणकरणत्वस्य कर्त्रधीनसिद्धिकतयाऽपकृष्टत्वेपि सर्वशक्ते भगवति धर्मिग्राहकप्रमाणसिद्धकरणत्वस्य स्वभिन्नकर्त्रधीनसिद्धिकत्वाभावेनापकृष्टत्वाभावात् ।

तथाचानुगृहीतं श्रुतप्रकाशिकायामादेशशब्दार्थविचारे "आदेशशब्देन प्रशासिताऽभिधीयते" इत्यारभ्य, महताप्रबन्धेन घञ्प्रत्ययोपपत्तिप्रदर्शनपूर्वकं "विवक्षातः कारकाणाम्प्रवृत्तिः" इति शाब्दिकोक्तन्यायेन कर्तर्येव करणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते" इति । अत्रच षड्विधतात्पर्यलिङ्गोपेतसद्विद्यावाक्ये भगवति घञ्प्रत्ययान्तादेशशब्देन कर्तृत्वसमानाधिकरणकरणत्वस्य स्वाभाविकतया निर्देशात् नतत्रानौचित्यप्रसङ्ग इति।अतएव "स स्वेनैव फलप्रदः स्वयमपि स्वेनैव नारायणः" इति मुरारिमिश्राणां प्रयोगोपि सङ्गच्छते ।

नच "नहि तत्करणं लोके वेदेवा किञ्चिदीदृशम् । इतिकर्तव्यता साध्ये यस्य नानुग्रहेर्थिते" त्यभियुक्तोक्तरीत्या करणत्वस्येतिकर्तव्यता सापेक्षताया आवश्यकत्वात्, भगवति करणत्वाङ्गीकारे तस्यापीतिकर्तव्यतारूपकिञ्चिद्वस्तुसापेक्षतया निरपेक्षोपायत्वं नसम्भवत्येवेति वाच्यम्,—मीमांसकैश्चेतनकृतिसाध्ययागादिरूपफलकरणस्य स्वयमचेतनतया स्वरूपसिद्धौ फलोपधानादौच सामर्थ्याभावात् इति-

१. शारी. ३ २-३७ ॥
२. शारी. ३-२-३९ ॥
३. शारी. ३-२-४० ॥
४. पूर्वमीं. ९-१-९ ॥
५. कात्यायनश्रौतसू. ४-३-७७ ॥
६ ॥
७. श्रु-का. १-१-१ ॥
८. मुरारिनाटके ॥

कर्तव्यताद्यपेक्षाऽभिहिता । सिद्धरूपस्य भगवतः सर्वज्ञस्य सर्वशक्तेः करणभूतस्य कुत्रापि परापेक्षा नसम्भवति । अभियुक्तोक्तिकारिकापि यागादिरूपाचेतनकरणस्वरूपपरेति नानुपपत्तिः ।

ननु मोक्षरूपफलंप्रति भगवतः करणत्वरूपमुपायत्व न्नसम्भवति; "मुमुक्षु र्ब्रह्मोपासीत"[1] "शान्तो दान्त उपरत स्तितिक्षु स्समाहितो भूत्वाऽऽत्मन्येवात्मानम्पश्येत्"[2] "ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत"[3] "तस्मान्न्यासमेषान्तपसामतिरिक्तमाहुः"[4] "मुमुक्षुर्वैशरणमहं प्रपद्ये"[5] "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि"[6] "मामेकं शरणं व्रज" इत्यादिभिर्मोक्षम्प्रति भक्तिप्रपत्त्योरेव साधनतया विहितत्वात्, एकफलम्प्रति करणद्वयाङ्गीकारस्य निष्प्रयोजनकत्वात्, विधिप्रत्ययस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वार्थकत्वस्य तान्त्रिकैरङ्गीकृतत्वाच्च भगवति श्रूयमाण मुपायत्व मगत्या फलप्रदत्वरूपमेवेति अङ्गीकरणीय मिति चेत्, —मैवम् । "मुमुक्षुर्ब्रह्मोपासीत" इत्यादिषु श्रूयमाणलिङ्गादिप्रत्ययानां कृतिसाध्यतामात्रार्थकताया स्सिद्धान्तसिद्धत्वेन करणत्वार्थकत्वासम्भवात् । तथा चानगृहीतं वेदार्थसङ्ग्रहे "एवञ्च सति लिङ्गादेः कोऽयमर्थः परिगृहीतो भवति - "यज-देवपूजायाम्" इति देवताराधन भूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङ्गादयोऽभिदधतीति नकिञ्चिदनुपपन्नम् । कर्तृवाचिनाम्प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसम्बन्धप्रकारोहि वाच्यः " इति । श्रीमति भाष्ये जिज्ञासाधिकरणेऽपि "अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमिति अध्यवसीयते । धात्वर्थस्यच यागादेरग्न्यादिदेवतान्तर्यामिपरमपुरुषात्फलसिद्धिश्चेति 'फलमत उपपत्तेः' इत्यत्र प्रतिपादयिष्यते" इति ।

अतो लिङ्गादिप्रत्ययबलेन न्यासोपासनयोः करणत्वाप्रतिपादनात् भगवतः करणत्वमुपपन्नमेव ।

किञ्च विधिप्रत्ययस्येष्टसाधनत्वार्थकत्वेपि नोपासनादीनां करणत्वं सम्भवति । अपितु हेतुत्वमात्रमेवसम्भवति । "अमृतस्यैष सेतुः"[7] इत्यादिश्रुत्या भगवत एव मोक्षकरणतायाः प्रतिपादनात् । तथाचानुगृहीतं श्रीभाष्ये "उपपत्तेश्च"[8]—यदुक्तं "अमृतस्यैष सेतुः" इति प्राप्यप्रापकसम्बन्धव्यपदेशात् प्रापकात्परम्प्राप्यमस्तीति,तन्न प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः। "नायमात्मा प्रवचनेन लभ्यो नमेधया नबहुना श्रुतेना । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्"[9] इत्यनन्योपायत्वश्रवणात्" इति । अत्रच 'स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः' इति स्वासाधारणनिर्देशेन स्वभिन्ने स्वप्राप्तिकरणत्वमेव निषिध्यत इत्यङ्गीकरणीयम् । नतु कारणत्वसामान्यम् । तथासति स्वभिन्नानाम्बहूनां कारणानां सत्वेन तन्निषेधायोगात् । किन्तु स्वनिष्ठं यादृशं करणत्वं, तादृशं स्वभिन्नानां नसम्भवतीत्येव तदर्थाङ्गीकारात् ।

नच फलप्रदत्वरूपोपायत्वस्यैवाऽन्यत्र निषेधस्सम्भवतीति वाच्यम्, —फलप्रदत्वस्यान्यत्राप्रसक्ततया तन्निषेधानुपपत्तेः । नच फलकरणताया अप्यन्यत्राप्रसक्तिः, स्वरूपयाथात्म्यज्ञानशून्यैः कैश्चिद्भगवद्व्यतिरिक्तेपि तस्याङ्गीकारेण तन्निषेधसम्भवात् ।

नच 'स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः' इत्यत्र 'एव'कारस्याऽयोगव्यवच्छेदपरत्वमंगीकृत्य, उपा

---

१. सुबा. उप. ९ ॥
२. तै. ना. ५१ ॥ ३. तै. ना. ५० ॥
४. श्वे. उप. ६-१८ ॥
५. गीता. १८-६५ ॥
६. गी. १८-६६ ॥
७. मुण्ड. उप. २-२-५ ॥
८. शारी. ३-२-३४ ॥
९. मुण्ड. उप. ३-२-३ ॥

यत्वम्फलप्रदत्वरूपमेवेति अङ्गीक्रियत इति वाच्यम्,—फलाधिकरणविरोधात् । तत्र हि फलोपायत्वसमानाधिकरणम् फलप्रदत्वम्प्रतिपाद्यते । फलप्रदत्वस्य पूर्वाधिकरणसिद्धत्वे फलाधिकरणारम्भो निष्प्रयोजन एव । नच पूर्वाधिकरण एव भगवतः फलप्रदत्वं प्रतिपादितम् । फलाधिकरणेचापूर्वस्य फलप्रदत्वाभावः प्रतिपाद्यत इति न तदधिकरणारम्भवैयर्थ्यमिति वाच्यम्, तथा सति तदधिकरणभाष्यविरोधात् । इयञ्च श्रीभाष्यसूक्तिः "उक्तमुपासिसिषोपजननार्थं जीवस्य सर्वावस्थासु सदोषत्वं, प्राप्यस्यच परमपुरुषस्य निर्दोषत्वं, कल्याणगुणाकरत्वं सर्वस्मात्परत्वञ्च । अतः परमुपासनं विवक्षन् उपासीनानां परस्मादेवास्मात् पुरुषात्तत्प्राप्तिरूपमपवर्गाख्यम्फलमिति सम्प्रति ब्रूते" इति । अत्रोपासकानां परमपुरुषादेव फलप्राप्तेः प्रतिज्ञाततया तदपहायापूर्वस्य फलप्रदत्वनिराकरणपरत्वाङ्गीकारो भाष्यस्वारस्यविरुद्ध इति तत्कल्पनमनादरणीयमेव । तस्मात् भगवतो मोक्षकरणत्वरूपमुख्योपायत्वं निराबाधमेवेति । अत एव द्वयघटकशरणशब्दव्याख्यानावसरे रम्यजामातृमुनिभिः "उपाये गृहरक्षित्रोः"इति वचनमुदाहृत्य भगवतो रक्षकत्वरूपफलप्रदत्वातिरिक्तं करणत्वरूपमुपायत्वमेव व्यवस्थापितम्। उदाहृतवचनस्यायमर्थः—शरणमित्ययं शब्दः उपाये गृहे रक्षितरि च स्वप्रवृत्तिनिमित्तभूतोपायत्वगृहत्वरक्षकत्वान्यतमसम्बन्धेन वर्तते । साम्प्रतम्— अस्मिन्द्वये । उपायार्थैकवाचकः—उपायशब्द उपायत्वपरः । उपायत्वरूपैकार्थवाचकइत्यर्थः । वाचकशब्दः - शक्यतानिरूपकपरः । षष्ठ्यर्थश्चावच्छिन्नत्वम् । तस्य च वाचकपदार्थैकदेशे शक्यतायामन्वयः । एकपदार्थतावच्छेदकैकत्वञ्च - स्वानाश्रय धर्मावच्छिन्नशक्यतानिरूपकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्वसम्बन्धेन , धर्मिपारतन्त्र्येण एतच्छब्दार्थे शरणशब्देऽन्वेति । तथाचोपायत्वरूपैकत्वविशिष्टार्थावच्छिन्नशक्यतानिरूपकः, स्वानाश्रयधर्मावच्छिन्नशक्यतानिरूपकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्वसम्बन्धेन तदेकत्वविशिष्टश्शरणशब्दार्थं इति बोधः । स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्ववाचकपदस्य तथाव्युत्पत्तेः 'पैशुनायजेते'त्यादौ तान्त्रिकैर्व्यवस्थापितत्वात् । एवञ्च रक्षकत्वरूपफलप्रदत्वस्योपायत्वस्य चैकत्वे 'गृहरक्षित्रोः' इति प्रसक्तगृहत्वरक्षकत्वरूपप्रवृत्तिनिमित्तव्युदसनपूर्वकमुपायत्वरूपातिरिक्तार्थतात्पर्यैकशब्दासाङ्गत्यप्रसङ्गो दुर्वार एव ।

किञ्च—"तमेवं विद्वानमृतइह भवति"इत्यादिश्रुतौ तत्पदजन्यप्रतीतिविशेष्यभूतभगवदन्यस्यामृतत्वप्राप्त्यनुपायत्वप्रतिपादनात्, भगवति फलप्रदत्वातिरिक्तमुपायत्वं श्रुतिसिद्धमेव ।

नच 'विद्वानि'त्यत्र विद्वद्विशेषणीभूतवेदनादन्यस्योपायत्वनिषेधप्रतीत्या वेदनस्यैवोपायत्वं सम्भवतीति वाच्यम्,—वेदनस्य विद्वद्विशेषणतयोपस्थितत्वात् अन्यत्रान्वयासम्भवात् । भगवतस्तु तत्पदजन्यप्रतीतिविशेष्यतया नानुपपत्तिः । अत एव 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा' इत्यत्रार्थप्राधान्यात्पयस्तदा परामृष्टमिति तान्त्रिकैर्निर्णीतम्।व्याख्याता चेयं श्रुतिः भगवदन्यस्योपायत्वनिषेधपरतया द्युभ्वाद्यधिकरणे भगवता भाष्यकृता"तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुः श्रूयते"इति।अत्र 'स एव' त्युक्त्या अन्यपदार्थप्रतियोगितया भगवत एवान्वयः प्रतिपादितः ।

किञ्च—अलौकिकश्रेयस्साधनत्वरूपधर्मत्वं भगवत एव श्रुतप्रकाशिकायामाचार्यैरनुगृहीतम् । धर्मत्वञ्च व्यापारद्वारा कारणत्वमिति तान्त्रिकाभिमतमेव । अयञ्च श्रुतप्रकाशिकाग्रन्थः - "अथवा

१. अहि-सं. ३६-३७ ॥
२. शतपथब्रा. ६-१-४-१३ ॥
३. पुरुषसूक्तम् ॥ ४. श्रीभाष्ये. १-३-१ ॥
५. श्रुतप्र. १-१-१॥

"अथातो धर्मजिज्ञासा" इत्येव साधारणप्रतिज्ञा। अलौकिकश्रेयस्साधनं हि धर्मः। तदनुयायि प्रतिपाद्यम्। धर्मश्च सिद्धसाध्यभेदेन द्विविधः। सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृष्टः। यथा "येच वेदविदो विप्राः येचाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" इति" इति। अस्य वचनस्यायमर्थः—'येच वेदविदः' इत्यनेन पूर्वभागेऽपि ज्योतिष्टोमादिकं भगवत्प्रीणनमात्रम्, तद्व्याजेन भगवानेव स्वर्गाद्यलौकिकश्रेयस्साधनतया धर्मत्वेन विवक्षित इति गम्यते। वेदशब्दस्य गोबलीवर्दन्यायेन पूर्वभागपरत्वात्। विच्छब्दस्यार्थवेदनपरत्वात्। अध्यात्मविदः - "द्वासुपर्णे" त्या श्रुक्तरीत्या शरीरान्तर्वर्तिजीवपरमात्मविद इत्यर्थः। अनेन वेदान्तेषु आत्मपरमात्मविद्ये भगवत्प्रीणनमात्रम्, तद्व्याजेन भगवानेव कैवल्यमोक्षरूपालौकिकश्रेयस्साधनतया धर्मत्वेनाभिमत इति गम्यते। 'सनातनमि'ति न स्वरूपानादित्वपरम्, भगवत्स्वरूपानादित्वोक्तेः प्रकृतेऽनुपयोगात्। किन्तु ज्योतिष्टोमादेर्भगवत्प्रीतिरूपालौकिकश्रेयस्साधनत्वं यथा दृष्टादृष्टपरिकरसापेक्षम्, न तथा भगवतः फलसाधनत्वं अदृष्टद्वारककिञ्चिद्व्यापारसापेक्षम्। सर्वस्यापि व्यापारस्य भगवत्प्रसादरूपादृष्टसाध्यत्वात्। तस्माद्भगवतो धर्मत्वं सनातनमित्यभिप्रायः।"—इति।

अत एवाचार्यैः श्रीमति रहस्यत्रयसारे न्यासोपासनयोः स्वयम्प्रयोजनभगवन्मुखोल्लासरूप भगवत्प्रीतिहेतुत्वरूपम्प्रसदनोपायत्वात्मकव्याजत्वमेवानुगृहीतम् "प्रसत्त्यै तस्योक्तें" इत्यादिना।

तस्मात् "मांच योऽव्यभिचारेण भक्तियोगेन सेवते" इत्युक्तरीत्या न्यासोपासनादिरूपशास्त्रविहितव्यापारविशेषाणां शेषवृत्तिरूपकैङ्कर्यान्तर्गतमेव, न तु मोक्षकरणत्वमिति सम्प्रदायः।

ननु भगवति विद्यमानमुपायत्वं न करणत्वरूपम्, किन्तूपायत्वेन शास्त्रविहितभक्त्यादिकार्यकारित्वरूपमेव। तच्च भक्त्याद्युपायसाध्यफलस्य तन्नैरपेक्ष्येण स्वयमेव प्रदातृत्वरूपम्। तदपि फलप्रदत्वे पर्यवस्यतीति चेत्,—मैवम्। भगवतस्सर्वेश्वरस्य सर्वशक्तेः सिद्धोपायस्य स्वसाध्यभक्त्याद्युपायकार्यकारित्ववचनम् - महाराजस्य स्वभृत्यसाध्यकार्यकारित्ववचनवदनुचितमेव भवेत्। भक्त्यादिनैरपेक्ष्येण मुक्तिप्रदत्ववचनञ्च "भगवन् भक्तिमपि प्रयच्छ मे" "स्थानत्रयोदितपरभक्तियुक्तम्मां कुरुष्व" "परभक्तियुक्तम्मनस्त्वमेवाद्यैव कार्ये" त्यादिभिः पूर्वाचार्याणां भक्तिप्रार्थनावचनैर्विरुध्यते। अतो भगवति विद्यमानमुपायत्वं तादृशं न भवति, अपितु धर्मिग्राहकप्रमाणसिद्धं करणत्वरूपमेव। तथाच्चानुगृहीतमाचार्यैः श्रीमति रहस्यत्रयसारे मूलमन्त्राधिकारे नारायणशब्दव्याख्यानावसरे "इण् गतौ" इति धातोः 'ईयते अनेने' त्ययनशब्दे करणव्युत्पत्त्या ईश्वरस्योपायत्वम्, 'ईयते असौ' इति कर्मव्युत्पत्त्या उपेयत्वञ्चे" त्यादिना। "अयनशब्दे करणव्युत्पत्त्या ईश्वरस्योपायत्वञ्च सिद्धम्" इति, च। तत्रैव प्रभावव्यवस्थाधिकारे "सुदुष्करेण शोचेद्यो येनयेनेष्टहेतुना। स स तस्याहमेवेति चरमश्लोकसङ्ग्रहः" इति। अत्र च 'येन येने'ति तृतीयाश्रुत्या करणत्वम्प्रतिपाद्य, तत्तत्स्थाने 'अहमेवे'ति निवेशितत्वेन भगवतः करणत्वं व्यक्तमुक्तम्।

तथा च सर्ववेदपरमतात्पर्यविषयीभूतार्थप्रतिपादकमूलमन्त्रघटक नारायणशब्देन भगवतः करणत्वस्य कण्ठतः प्रतिपादनात्तदनुरोधेनैव सर्वत्र प्रमाणानामर्थो वर्णनीय इति सुधीभिर्विभावनीयम्।

१. पूर्वमीमां. १-१-१॥
२. भारते-वनपं. ८६-२॥
३. मुण्डकोप. ३-१-१॥
४. रहस्यत्रयसारे. ९. अधिकारे॥
५. गीता. १४-२६॥
६. स्तोत्ररत्ने. ५४॥
७. शरणागतिगद्ये॥
८. "श्रीवैकुण्ठग"॥

अर्थबोधनेन रक्षकत्वं नाम—*"देहासक्तात्मबुद्धिर्यदि भवति पदं साधु विद्यात्तृतीयं, स्वातन्त्र्यांधो यदि स्यात्प्रथमम्,

---

नच भगवतो निरपेक्षोपायत्वाङ्गीकारे तस्य सर्वव्यापकतया सर्वत्र फलोत्पत्तिप्रसङ्ग इति वाच्यम्,—यत्र तु मोक्षरुचिप्रतिबन्धकव्यवसायनिवृत्तिः, तत्रैव फलोत्पत्तिः; यत्र तु प्रतिबन्धकसद्भावः-न तत्र फलोत्पत्तिरित्यङ्गीकारात्। यथा दाहजनकस्य वह्नेस्सत्त्वेऽपि मणिरूपप्रतिबन्धकसत्त्वे कार्यानुदयः, तथेति। न च प्रतिबन्धकाभावस्यापेक्षितत्वे निरपेक्षत्वहानिरिति वाच्यम्,—यतः कारणीभूताभावप्रतियोगित्वं न प्रतिबन्धकत्वम्; किन्तु सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वमेव तदित्यङ्गीकारात्। तदुक्तमभियुक्तैः "प्रतिबन्धोऽपि सामग्री" इत्यादि।

एवञ्च पूर्वोक्तहेतुभिर्भगवतस्सर्वेश्वरस्य परमकारुणिकस्य श्रियःपतेर्नारायणस्यैव स्वरूपानुरूपमोक्षम्प्रति निरपेक्षोपायत्वरूपकरणत्वस्य, तदतिरिक्तस्य फलप्रदत्वस्य च सिद्धतया वेदान्तविहितन्यासोपासनादीनां प्रतीयमानं हेतुत्वं, मोक्षरुचिविरोधिप्रातिकूल्यव्यवसायनिवृत्तिरूपतया वा, "भज इत्येष धातुर्वै सेवायां परिकीर्तितः। तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी" इत्यादिप्रमाणानुसारेण शेषवृत्तिरूपतया वा, अतिप्रसङ्गपरिहाररूपमुक्तिव्याजतया वा, उपपादनीयम्।

तथाचानुगृहीतं चरमश्लोकप्रकरणे "इंदु-सवर्मुक्तिप्रसङ्गपरिहारार्थम्, बुद्धिसमाधानार्थम्, चैतन्यकार्यम्, रागप्राप्तम्, स्वरूपनिष्ठम्, अप्रतिषेधद्योतकम्" इत्यादिना—इति प्राहुः।

अतः 'ईश्वर एवोपायोपेयौ' इति प्रतिपादने न कोऽपि विरोध इत्यन्यत्र विस्तरः।

अत एवोपायान्तराधिकार्यपेक्षया प्रपन्नस्याधिक्यमुच्यते।"विष्णूपायोऽन्यफलः सोधमः परिकीर्तितः। अन्योपायो विष्णुफलः मध्यमः परिकीर्तितः। माधवाङ्घ्रिद्वयोपायो माधवाङ्घ्रिप्रयोजनः। यस्स एवोत्तमः प्रोक्तो माधवेनैव तेन वै" इति।

तत्प्रकारं सप्रमाणमाह—अर्थबोधनेनेति। देहेति-अस्यार्थः-(प्रपन्नः)-विहिताकारत्रयलक्षणस्वरूपः। देहे-आसक्तात्मबुद्धिः, आसक्ता-लग्ना, देहविषय आत्मेतिबुद्धिर्यस्य स तथोक्तः। भवति यदि-स्याचेत्- प्राचीनवासनावशात् इति भावः। (तृतीयम्) - प्रणवस्थेषु पदेषु तृतीयं पदं मकारम्। (साधु विद्यात्) - सम्यग्विद्यात्। अनुसन्दधीतेत्यर्थः। अनुसन्धाने सम्यक्त्वन्नाम-सदातनत्वमिति बोध्यम्। मकारस्य-जडाचेतनस्थूलदुःखरूपदेहविलक्षणस्य ज्ञानानन्दगुणस्वरूपाणुपरिमाणस्य वस्तुनो वाचकत्वात् तदर्थानुसन्धानेन देहात्मबुद्धिर्निवर्तते। तन्मूलपापानि च न प्रसज्यन्त इति भावः (स्वातन्त्र्यान्धो यदिस्यात्)-स्वातन्त्र्येण स्वस्य स्वाधीनताबुध्या, अन्धः-तिरोहितभगच्छेषत्वस्वरूपः,स्याद्यदि, तदा, (प्रथमम्)-प्रणवे आद्यं पदम्, लुप्ततादर्थ्यचतुर्थिकम् अकारं, साधु विद्यात्।लुप्तचतुर्थीकाकारोत्पन्नभगवच्छेषत्वज्ञानात् स्वातन्त्र्यभ्रमो निवर्तते। तेन स्वातिशयाधायक स्वर्गादिसाधनेषु च न प्रवर्तेत इति भावः। ननु भगवच्छेषत्वज्ञानमात्रेण कथं स्वातन्त्र्यभ्रमनिवृत्तिः, भगवच्छेषत्व-

---

* अष्टश्लो. ४॥

१. लैंगे. २-भागे. ९-१९॥

२. मुमुक्षुप्पडि. ३-४२॥

**इतरशेषत्वधीश्चेत् द्वितीयम् । आत्मत्राणोन्मुखश्चेन्नम इति च पदं, बान्धवाभासलोलः शब्दं नारायणाख्यं, विषयचपलधीश्चेच्चतुर्थीं प्रपन्नः ॥" इति**

---

ज्ञानानन्तरमपि 'अहं मम भगवत अन्येषाञ्च शेष' इति भ्रमस्यसम्भवात् । स्वशेषत्वभ्रमोहि-स्वातन्त्र्यभ्रमः।अन्यथा स्वशेषत्वंनिवर्तकनमसः प्रणवान्वयत्वकथनवैय्यर्थ्यात् इति चेत्—उच्यते-स्वातन्त्र्यभ्रमोहि द्विविधः । 'अहं स्ममैव शेषः' इत्येकः, 'अहम्मम भगवतः अन्येषाञ्च शेषः' इत्यपरः । तत्राद्यस्याकारोत्पन्नभगवच्छेषत्वज्ञानान्निवृत्तिर्विवक्षितेति न दोषः । द्वितीयस्वातन्त्र्यभ्रमनिरासाय नमसः प्रणवान्वयोऽपि सार्थक इति । **(इतरशेषत्वधीश्चेत्)**-भगवदन्यशेषत्वभ्रान्तिमान् यदि; **(द्वितीयम्)**-प्रणवे द्वितीयं पदमुकारं,साधु विद्यात् । उकारस्यावधारणार्थकस्याकारार्थान्वयेन लुप्तचतुर्थ्यर्थशेषत्वस्य-भगवदन्ययोगव्यवच्छेदकत्वात्, तदर्थानुसन्धानेनाऽन्यशेषत्वभ्रमो देवतान्तरभजनादिकञ्च निवर्तते इति भावः। **(आत्मत्राणोन्मुखः)** आत्मनः-स्वस्य, त्राणे-रक्षणे, उन्मुखः-उद्युक्तः, साधनान्तरस्वीकारदृष्टिश्चेत्, तदा, **(नम इति च पदम्)**-अनन्यशरणत्वप्रतिपादकं नमः पदं साधु विद्यात् । तथाच नमः पदार्थानुसन्धानेन 'रक्षको नाहम्मम' इति बुद्ध्या साधनान्तरेभ्यो निवर्तते इति भावः । साधनान्तरप्रवृत्तौ तु "[1]प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत्" इति विहितपूर्वप्रपदनस्मरणरूपं प्रायश्चित्तमनुष्ठेयमिति तात्पर्यम्।**(बान्धवाभासलोलः)**-बन्धवः एव बान्धवाः,बान्धवा इव आभासन्त इति-बान्धवाभासाः, आपद्यरक्षकाः, सम्पदि सर्वस्वापहारिणः शरीरसम्बन्धिनः; तेषु लोलः-आसक्तश्चेत् । 'लोल' इत्यनेन अस्यैव तेषु प्रावण्यं नतु तेषामस्मिन्निति सूचितम् । तदा, **(शब्दन्नारायणाख्यम्)**-'नारायणे' त्याख्या प्रसिद्धिर्यस्य तं, शब्दं साधु विद्यात् । चतुर्थ्या पृथगनुसन्धेयत्वस्य वक्ष्यमाणत्वात् अत्र प्रातिपदिकमात्रस्य विभज्य कथनार्थं 'आख्या' शब्दः । अत एव 'शब्दम्' इत्युक्तम् । न तु 'पदम्' इति। विभक्त्यन्तं हि पदम्। तथा च नारायणशब्दम्-"[2]माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः" इत्युक्तरीत्या निरुपाधिकसकलविधबन्धुत्वं भगवतः प्रतिपादयतीति तदर्थानुसन्धानेन देहानुबन्धोपाधिकबन्धुषु लोलत्वं निवर्तते। ननु कथं नारायणपदेन भगवतस्सकलबन्धुत्वप्रतिपादनमिति चेत्—उच्यते, तत्पुरुषसमासे कर्मणि ल्युडन्तेनायनशब्देन भगवतः प्राप्यत्वम्प्रतिपाद्यते । प्राप्यत्वञ्चाऽसङ्कोचेन सर्वप्रकारं विवक्षितम्। बन्धुलाभोऽपि प्राप्यान्तर्गतः। ततश्च परिपूर्णतया सम्पद्यपि किञ्चित्कारनिरपेक्षत्वात्,"[3]महत्यापदि सम्प्राप्ते स्मर्तव्यो भगवान् हरिः" इत्युक्तरीत्या स्वाश्रितानां सकलापन्निवर्तकत्वस्य ब्रह्मरुद्रेन्द्रादीनां वेदापहारादिषु आपत्सु द्रष्टत्वाच्च निरुपाधिकसकलविधबन्धुत्वसिद्धिरिति । **(विषयचपलधीश्चेत्)**-विषयेषु-शब्दादिषु, विहितनिषिद्धरूपेषु ऐहिकेष्वामुष्मिकेषु साभिलाषा धीर्यस्य स तथोक्तश्चेत् । **(चतुर्थीम्)**- नारायणशब्दोपरिस्थितां नमः पदान्वितां व्यक्तचतुर्थीम् । गुणानुभवजनितप्रीतिकारितसर्वदेशसर्वकालसर्वावस्थोचितनित्यनिरवद्यनिरतिशयभोग्यभगवत्कैङ्कर्यप्रार्थनाप्रकाशिकां साधु विद्यात् । तेन तदितरसुखलवजनकपरिणतिविरसबहुलदुःखचञ्चलहेय सकलविषयविमुखो भवतीति भावः। ननु न चतुर्थ्यर्थानुसन्धानेन विषयान्तरप्रावण्यानिवृत्तिः, नमःपदान्वयेऽपि कैङ्कर्यस्वार्थत्वबुद्धिनिवृत्तिरिति चेत्—उच्यते,

---

१. लक्ष्मीतन्त्रे. १७-९२ ॥
२. सुबालोप. ७ ॥
३. भारते सभाप. ९०-४२ ॥

भट्टारकोक्तिप्रकारेण स्वानुसन्धातृणां - देहात्माभिमानं, स्वातन्त्र्यम्, अन्यशेषत्वं, स्वरक्षणे स्वान्वयम्, अबन्धुसङ्गं, विषयप्रावण्यं च विनिवर्त्य स्वरूपानुरूपवृत्तिसंपादनम् ॥ २ ॥

(३) इतः परमस्य मन्त्रस्य वैभवं विस्तरेण प्रतिपादयितुं प्रथममस्यानुसन्धानक्रमकथनमुखेनास्य वैभवं वदति—(श्रीमन्त्रस्य) इत्यादिना—

मू ॥ तिरुमन्त्रत्तिनुडैय शीर्मैक्कु पोरुंपडि प्रेमत्तोडे पेणि अनुसन्धिक्कवेणुम्॥३॥

छा ॥ श्रीमन्त्रस्य यावद्वैभवपर्याप्ति प्रेम्णादृत्यानुसन्धानंकार्यम् ॥ ३ ॥

श्रीमन्त्रस्य वैभवं नाम—*"ऋचोयजूंषि सामानि तथैवाथर्वणानि चासर्वमष्टाक्षरा-

---

नमःपदनिवर्त्यकैङ्कर्यस्य स्वार्थत्वन्नाम स्वातिशयाधायकत्वम्। तथाच शेष्यतिशयाधायकस्यापि स्वार्थस्य तदेकशेषत्वरूपस्वरूपविरुद्धतया नमःपदेन निवृत्तिश्चेत्, केवलस्वार्थतयात्यन्तस्वरूपविरुद्धस्य विषयान्तरस्य निवृत्तिर्दण्डापूपिकान्यायेन सिद्धा । तथाच भगवदेकातिशयाधायकेतरभोगराहित्यलक्षणमनन्यभोगत्वं नमःपदान्वितचतुर्थ्याक्षिप्तमिति द्रष्टव्यम् । एतत्सर्वमधिकारिविशेषनियतमित्यभिसन्धाय—'प्रपन्न' इत्युक्तम्। भक्तिनिष्ठस्याङ्गप्रपत्तिसद्भावेऽपि 'प्रधानेनैव हि व्यपदेशः' इति न्यायेन न तस्य प्रपन्नशब्दव्यपदेशत्वम् । किन्तु प्रपत्तिनिष्ठस्यैवेति । प्रपन्नस्य हि विहितविषयत्यागः। भक्तिनिष्ठस्य तु अविहितप्रतिषिद्धविषयत्यागमात्रम् । विहितविषयस्तु-तस्यापि धर्मबुद्ध्या उपादेय एव तस्य ऋणत्रयावश्यतया "[1]त्रिभि ऋणवाजायते" "[2]ऋणानि त्रीण्यपाकृत्य"त्याद्युक्तरीत्या तदपकरणस्यावश्यकर्तव्यात्। सूत्रितञ्चैतद्भगवता जैमिनिना "[3]ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्" इति । प्रपन्नस्य "[4]देवर्षिभूतात्मनृणाम्पितृणान्न किंकरः" इत्युक्तत्वात् न ऋणवश्यता। किञ्च प्रपन्नस्य विहितविषयोपादानं अनन्यशरणत्वस्वरूपविरुद्धम्। भोग्यताबुद्ध्योपादानञ्चानन्यभोग्यत्व स्वरूपविरुद्धमिति । श्रीवचनभूषणमीमांसायामेतत्सर्वन्द्रष्टव्यमिति । ननु स्वरूपयाथात्म्यज्ञानवतः प्रपन्नस्य देहात्मभ्रमादिसम्भवः, यन्निवृत्त्यर्थे मन्त्रार्थानुसन्धानं विधीयते । अधिष्ठानयाथात्म्यज्ञानं हि भ्रमोत्पत्तिविरोधीति चेत्-नैवम्। शास्त्रेणोत्पन्नचन्द्रैकत्वज्ञानवतोऽपि तिमिरादिदोषानुवृत्त्या पुनश्चन्द्रद्वित्वभ्रमानुवृत्तिवत् अनादिविपरीतवासनारूपदोषानुवृत्त्या देहात्मभ्रमाद्यनुवृत्तिसम्भवात् । तथाचानवरतमन्त्रार्थानुसन्धानेन सा निवर्तनीया—इति ॥ २ ॥

एवं असाधारणविषयप्रयोजनसम्बन्धाधिकार्यभावात् इदं शास्त्रमनारम्भणीयमित्याशङ्क्य, असाधारणविषयादिसद्भावादिदं शास्त्रमारम्भणीयमिति प्रथमसूत्रे स्थापितम्, रहस्यत्रयस्य क्रमाद्यभावादिदं शास्त्रमनारम्भणीयमित्याशङ्क्य, क्रमस्य सत्वादिदमारम्भणीयमिति सिद्धान्तितम्-द्वितीयसूत्रे। अत इदं सूत्रद्वयं शास्त्रारम्भसमर्थनपरम् । अथारम्भपेटिकानन्तरं मूलमन्त्रव्याख्येयत्वोपयोगितया मूलमन्त्रोत्कर्षो विचार्यते—श्रीमन्त्रस्येत्यारभ्य - वाचकाद्वाच्य इत्यन्तम् इत्यभिप्रेत्योत्तरसूत्रमवतार-

---

* वृद्धहारीतस्मृ. ३-४५ ॥
१. यजुषि. ६-कां. ३-५ ॥
२. मनुस्मृतौ. ६-३५ ॥
३. पूर्वमीमांसा. ६-२-३१ ॥
४. भागवते. ११-५-४१ ॥

न्तस्थं यच्चान्यदपि वाङ्मयम्'' इत्युक्तसकलवेदसंग्रहत्वेन ''अन्यत्सर्वं वदति'' इत्युक्तज्ञातव्यसकलार्थप्रतिपादकत्वेन *''मंत्राणां परमो मंत्रो गुह्यानां गुह्यमुत्तमम्। पवित्रं च पवित्राणां मूलमंत्रस्सनातनः'' इत्युक्तप्रकारेण मन्त्राणां परममन्त्रत्वेन गुह्यानां परमगुह्यत्वेन पवित्राणां पवित्रत्वेन च गौरवम्।(यावद्वैभवपर्याप्ति) इति वैभवानुरूपेणेत्यर्थः ॥ (प्रेम्णाहत्यानुसन्धानं) नाम—एतदनुसन्धानदशायां शुष्कहृदयविहीनेन एतद्वैलक्ष-

---

यति—इतइति। वैभवम्—श्रुतिस्मृत्याद्यपेक्षया, भगवन्मन्त्रान्तरापेक्षया, सिद्धोपायापेक्षया, कर्मज्ञानभक्तिप्रपत्तिरूपव्याजापेक्षया च मूलमन्त्रस्य वैलक्षण्यसिद्ध्यै दशधा विशिष्य समर्थयिष्यमाणं वैभवमित्यर्थः।

(सकलवेदसङ्ग्रहत्वेन)इति-अत्रेयं शङ्का—न मूलमन्त्रस्य सर्ववेदसङ्ग्रहत्वमुपपद्यते;वेदान्तैकदेशार्थसंग्रहत्वमात्रेण, सर्ववेदार्थसंग्रहत्वासंभवात्। अन्यथा ''वेदैश्च सर्वैरहमेव वेद्यः'' इति भगवत एव वेदार्थतया भगवन्मन्त्रमात्रस्य सकलवेदसंग्रहत्वापत्तेः। ''ऋचो यजूंषि'' इत्यादिकञ्चार्थवादमात्रम्। सर्ववेदार्थभूतभगवत्परत्वादष्टाक्षरः प्रशस्त इति। एतेन ''मन्त्राणां परमो मन्त्रः'' इत्यादिकमपि व्याख्यातम्। अन्यथा ''न गायत्र्याः परो मन्त्रः'' इत्यादिविरोधात्, मूलमन्त्र मन्त्ररत्न मन्त्रराजसमाख्यादीनामन्योन्यविरोधाच्चेति।

तस्याः परिहारस्तु—मूलमन्त्रस्य सकलवेदसंग्रहत्वमुपपद्यत एव। 'सर्वमष्टाक्षरान्तस्थम्' इति वचनात्, 'गुह्यानां गुह्यमुत्तमम्'इति वचनात्, मूलमन्त्रसमाख्याबलाच्च। न चैकदेशसंग्रहस्य सर्वसंग्रहत्वासम्भवः; एतद्वचनबलादेव मूलमन्त्रार्थव्यतिरिक्तार्थानां श्रुतिस्मृत्यादिप्रपञ्चितानां तत्तत्यमूलमन्त्रार्थविवरणशेषत्वकल्पनेन मूलमन्त्रार्थस्यैव सकलवेदपरमतात्पर्यविषयत्वोपपत्तेः। न च सकलवेदवेद्यभगवत्स्वरूपपराणां सर्वेषां भगवन्मन्त्राणां सर्ववेदसंग्रहत्वापत्तिः; एतद्वचनबलादेव सर्ववेदपरमतात्पर्यविषयीभूतज्ञातव्यसकलार्थप्रतिपादकतया सर्ववेदसंग्रहत्वम्मूलमन्त्रस्यैवेति कल्पनीयत्वात्तस्य च विशिष्य निरूप्यमाणत्वात्। न च अर्थवत्वे सम्भवत्यसदर्थवादकत्वं न्याय्यम्। इत्थं—'मन्त्राणां परमो मन्त्रः' ''न मन्त्रोऽष्टाक्षरात्परः'' इत्यादिवचनबलात्, मन्त्रशब्दयोगार्थपूर्तिरपि मूलमन्त्रस्यैवोपपद्यते। तत्र हि 'मन्त्राणामि'त्यत्र निर्धारणषष्ठ्या सकलेतरमन्त्रापेक्षया मूलमन्त्रस्यैव मन्त्रशब्दयोगार्थे पारम्यमुक्तम्।समभिव्याहृतविशेषणस्य विधेयापेक्षया विशेषणत्वे सम्भवति, उपलक्षणत्वस्यान्याय्यत्वात् तस्य च पारम्यस्यानुपदमेव व्युत्पादयिष्यमाणत्वात्।एतदेव दृढयति-गुह्यानामिति।गोपनाधिक्यरूपकार्यबलात् योगार्थपूर्तिलक्षणातिशयो दृढ इति तात्पर्यम्।प्रकारान्तरेणापि गुह्यतमत्वमाह—पवित्राणामिति।अत्र'पवित्राणाम्मध्ये पवित्रमि'ति नार्थः। 'पवित्राणामिति' निर्धारणषष्ठ्या पवित्रपदनिर्दिष्टपवित्रत्वरूपविधेयान्वयोक्तौ व्याघातात्, 'मन्तारं त्रायते' इत्यनेनेष्टप्राप्त्यनिष्टनिवृत्तिहेतुत्वलक्षणरक्षणोक्त्या,अत्र पापनिवर्तकत्वातिशयोक्तौ पौनरुक्त्याच्च।अत एव उत्तम इति पदानुषङ्गोऽपि न कल्पनीयः।तथाच ''कृष्णानुसरणं परम्'' इत्युक्तरीत्या स्वेतरपावनवस्त्वन्वयप्रतिबन्धकपापनिवर्तकत्वलक्षणातिशयोऽपि गोपनातिशये मूलमित्यभिप्रेतम्। 'मूलमन्त्रः'इति विशिष्य निर्देशेन गुह्यतमत्वे तृतीयहेतु-

---

* नारदकल्पे अष्टाक्षरब्रह्मविद्या. १-११ ॥
१. गीता. १५-१५ ॥
२.
३. नारसिंहपु, १८-३२ ॥
४. वि. पु. २-६-४० ॥

**ण्यज्ञानहेतुकैतद्विषयकप्रेम्णा गुह्यानां गुह्यभूतस्यास्यानधिकारिश्रवणविषयतां परिहृत्य *''मन्त्रं यत्नेन गोपयेत्'' इत्युक्तादरेण क्रियमाणमनुसन्धानम् । एवं ''अनुसन्धानं कार्यम्''इत्युक्त्या प्रकारान्तरेणाननुसन्धानं कार्यमिति नियमो ज्ञायते ॥ ३ ॥**

---

विवक्षितः। अष्टाक्षरस्य मूलत्वं सनातनमित्यभिप्रायेण ''सनातनः'' इत्युक्तम्। किञ्च 'मन्तारन्त्रायते' इत्युक्तरक्षणस्यापि ''नित्यकिंकरः प्रहर्षयिष्यामि'' इत्युक्तनित्यकैङ्कर्यरपर्यवसायितया मूलमन्त्रस्य मन्त्रत्वमपि सनातनमित्यभिप्रायेण 'मूलमन्त्रस्सनातनः' इत्युक्तम्। तथाच 'ऋचो यजूंषी'त्युक्तऋगादिवेदचतुष्टयस्य, 'यच्चान्यदपि वाङ्मयमि'त्युक्तस्मृतीतिहासपुराणपाञ्चरात्रकर्मब्रह्ममीमांसासूत्राणाञ्च मूलमन्त्रविवरणतया श्रोतॄणां सर्वाध्यात्मशास्त्रार्थबोधावसरे मूलमन्त्रार्थगोचरविशदप्रतीत्युत्पत्त्या अष्टाक्षरस्य विशदप्रतीतिविषयार्थकत्वलक्षणमूलत्वम्, अतीतानागतसर्वाध्यात्मशास्त्रप्रवृत्तिकालीनतया सनातनम् । मन्त्रान्तराणान्तु न तथेति एवं रूपमूलत्वमपि गुह्यतमत्वे मूलमिति भावः । इत्थमस्य वचनस्य गुह्यतमत्वोपपत्तितात्पर्यातिशयात् अर्थवादत्वं दूरोत्सारितम् । एवं ''भूत्वोर्ध्वबाहुः'' इत्यादावप्यूर्ध्वबाहुत्वोक्त्या, सत्यशब्दोक्त्या, पुत्रशिष्योक्त्या, 'शृणुत' इत्युक्त्या चासदर्थवादत्वं दूरोत्सारितम् । न च 'न गायत्र्याः परो मन्त्रः' इत्यादि विरोधः; तत्तदसाधारणोत्कर्षविशेषविवक्षयान्यनिषेधसम्भवात् । न च प्रकृतेऽपि तत्प्रसङ्गः ; केवलपरार्थानुभवकैङ्कर्यपरमपुरुषार्थतत्साधनसिद्धोपायतद्व्याजभूतात्मज्ञानाप्रतिषेधाद्यर्थप्रतिपादकतया, अपेक्षितयावदर्थं प्रतिपादकतया च प्रकृतेऽसाधारणोत्कषर्स्य सर्वोत्कर्षपर्यवसानात् । एतेन मूलमन्त्र मन्त्ररत्न मन्त्रराजसमाख्यादीनां मिथो विरोधोऽपि निरस्तः । श्रीमल्लक्ष्मीनृसिंहादिदिव्यमङ्गलविग्रहतद्दिव्यात्मगुणतद्दिव्यचेष्टितादिप्रतिपादकत्वलक्षणासाधारणोत्कर्षविशेषविवक्षया मन्त्रराजत्वोपपत्तेः । विशिष्टोपायोपेयत्वादिप्रतिपादकतया परमपुरुषार्थस्वरूपानुरूपतत्साधनाद्यपेक्षितयावदर्थप्रतिपादकतया च मन्त्ररत्नत्वोपपत्तेः । पूर्वोक्तरीत्या मूलमन्त्रगतमूलत्वरूपोत्कर्षस्य सामान्यतः प्रमाणप्रतिपन्नस्य मन्त्ररत्नापेक्षयाप्युत्कर्षरूपतया योगार्थपूर्तेस्सर्वोत्कर्षपर्यवसानोपपत्तेश्च । —इति ।

(मन्त्रं यत्नेन गोपयेत्) इति अनेनास्य रहस्यत्वं सिद्धम्। अत्रायं पूर्वः पक्षः—न च 'मन्त्रं यत्नेन गोपयेत्' इत्यनेन रहस्यत्वसिद्धिः, तस्य मन्त्रसामान्यविषयत्वेन मूलमन्त्रे विशेषाभावात्। तस्य सम्पदायुर्वृद्ध्यर्थं गुरुप्रकाशनमन्त्रगोपनरूपकाम्यविधिपरत्वाच्च । अन्यथा 'आवृणोति विवृणोति वीक्षते'इतिन्यायेन गुणग्रहणनिबन्धनगोपनस्य स्वतःप्राप्तत्वेन विधिवैय्यर्थ्यप्रसङ्गाच्चेति ।

अत्र राद्धान्तः—'ऋचो यजूंषि' इत्युक्तरीत्या सर्ववेदपरमतात्पर्यविषयीभूतयावदर्थप्रतिपादकत्वस्य सामान्यतः सिद्धत्वादेव 'मन्त्रं यत्नेन गोपयेत्' इति विधिरुपपद्यते । तत्र कृतज्ञत्वनिबन्धनगुरुप्रकाशनस्य 'मन्तारं त्रायत' इत्युक्तोत्कर्षज्ञाननिबन्धनगोपनस्य च स्वतःप्राप्तस्याऽकरणे अनिष्टापत्तेरेव प्रतीयमानत्वात् । अन्यथा वाक्यभेदप्रसङ्गात् । 'सम्पदायुष्कामः' इत्यध्याहारापत्तेश्च । न च मूलमन्त्रे विशेषालाभः; अन्धकारनिरोधित्वलक्षण गुरुत्वहेतुकप्रकाशनोक्तेः, त्राणहेतुकगोपनोक्तेश्च । विपक्षे बाधकोक्तिबलेनानुवादत्वे अर्थाबाधे च सिद्धे, मूलमन्त्रस्य 'गुह्यानां गुह्यमुत्तमम्' इत्युक्तस्य गोपनोत्कर्षेण गुणोत्कर्षसिद्धेर्दुर्वारत्वात् ।—इति ॥ ३ ॥

---

* शेषसंहि १४-५०॥
१. स्तोत्ररत्ने. ४६ ॥
२. नारसिंहपु. १८-३२ ॥
३.

(४) एवं स्वस्मिन्प्रेमातिशये सत्येवायं मन्त्रः कार्यकरो भवति किमित्यत आह —मन्त्र इत्यादिना—

मू ॥ मन्त्रत्तिलुं, मन्त्रत्तुक्कुळ्ळीडान वस्तुविलुं, मन्त्रप्रदनानवाचार्यन्पक्कलिलुं प्रेमं कनक्कवुण्डानाल्ल कार्यकरमावदु ॥ ४ ॥

छा ॥ मन्त्रे, मन्त्रान्तर्गतवस्तुनि, मन्त्रप्रदाचार्ये च प्रेमाधिक्यमस्ति चेत्कार्यकरो भवति ॥ ४ ॥

ज्ञातव्यार्थज्ञापकभूतेऽस्मिन् श्रीमन्त्रे, शेषित्वशरण्यत्वप्राप्यत्वात्मकाकारत्रय-वत्तयैतन्मन्त्रप्रतिपाद्यवस्तुभूतेश्वरे, *"तन्मन्त्रं ब्राह्मणाधीनम्" इत्युक्तरीत्या मन्त्रस्याचार्याधीनत्वात्, अमुं मन्त्रं यथा प्रतिपत्त्योपदिष्टवत्याचार्ये च तत्तद्वैलक्षण्यानुरूपं प्रेम

---

ननु 'प्रियतम एव हि वरणीयो भवति'[1] इति श्रीभाष्योक्तरीत्या भक्तिप्रीतभगवत्कटाक्षविशेषेणैव "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने"[2] इत्यादिरीत्या सर्वफलसिद्धेः मन्त्रभक्तिर्विफला ; कथञ्च मन्त्रभक्तेः निष्कलङ्कमन्त्रार्थज्ञानलक्षणकार्यकरत्वम् ; अनन्यथासिद्धान्वयव्यतिरेकसहकृतप्रत्यक्षाभावात्' इति शङ्कायाम्, 'नहि वचनविरोधे न्यायः प्रभवति' 'नहि वाचनिकेऽर्थे युक्तयः क्रमन्ते' 'किं हि वचनं न कुर्यात्'इत्यभिप्रेत्य, 'मन्त्रे तद्देवतायाञ्च' इत्यादिवचनार्थमनुसन्धायोत्तरसूत्रमाहेत्यभिप्रायेणोत्तरसूत्रसङ्गतिमाह— -एवमिति । अत्र 'वस्तु' पदम् - प्रमेयपरम् ; "[3]किञ्चिदस्ति किलवस्तु निस्तुलम्" "परं यद्वस्तूकम्" "[4]वस्तु लक्ष्मीधरं विदुः" "[5]वस्तु पैतामहं धनम्" इत्यादिवत् । तथा च प्रकृते 'वस्तुनि'इत्यनेन शेषित्वशरण्यत्वप्राप्यत्वरूपप्रेमाधिक्यहेतुभूताकारप्रयुक्तईश्वरो विवक्षित इत्यभिप्रेत्याह—शेषित्वेत्यादिना। (तन्मन्त्रम्) इति-'[6]ब्रह्मविद्ब्राह्मणो विदुः' इत्युक्तेः 'ब्राह्मणाधीनम्' इत्यत्र'ब्राह्मण' शब्दः आचार्यं वदतीत्यभिप्रायेण—आचार्याधीनत्वादित्युक्तम्। 'मन्त्रं ब्राह्मणाधीनम्' इति मन्त्रगततादधीन्यप्रतियोगित्वलिङ्गेन "[7]आचिनोति हि शास्त्रार्थान्" इत्याचार्यशब्दयोगार्थप्रत्यभिज्ञयाचैतत् 'ब्राह्मण' शब्दः आचार्यपर इति भावः ।

यथावत्प्रतिपत्तिप्रकारः - श्रीवचनभूषणे आचार्यप्रकरणे द्रष्टव्यः । मूलस्थ 'मन्त्रप्रद' शब्देन प्रकृते पूर्वोक्तस्वरूपयाथात्म्यत्याज्योपादेयविभागपरिज्ञानपूर्वकमनन्यप्रयोजनतया सार्थमन्त्रोपदेष्टृत्वं विवक्षितम्। श्लोकस्थ भक्तिशब्दः - सूत्रस्थ 'प्रेम शब्देन विवृतः । न सेवामात्रं भक्तिशब्दार्थ इत्यर्थः । 'आधिक्य' शब्देन 'सदा कार्या'इति शब्दार्थ उक्तः । 'अस्ति चेत्' इति यद्यर्थकशब्देन प्रेमाधिक्याभावे कार्यसिद्धिर्नास्तीति व्यतिरेकः सूचितः । अनेन 'सा हि प्रथमसाधनम्' इत्युक्तकरणतासिद्धान्वयव्यतिरेकानुविधानं सूचितम्। (कार्यकरो भवति)इति - '[8]न जातु हीयते'इत्युक्तरीत्या

---

* विहगेन्द्रसं. २२-पटले ॥
१. श्रीभाष्ये. १-१-१. लघुसिद्धान्ते ॥
२. वरदराजस्तवे. ९ ॥
३. वरदराजस्तवे. १४ ॥
४. श्रुतप्रकाशि. मंगलश्लो ॥
५. वैराग्यपञ्चकस्तोत्रे. ६ ॥
६. पाद्मोत्तरे. लैंगेच. पूर्व. १०-१६ ॥
७. स्तोत्ररत्ने. २८ ॥

बहुलमस्ति चेदस्य कार्यकरो भवतीत्यर्थः ॥ *"मन्त्रे तद्देवतायाञ्च तथा मन्त्रप्रदे गुरौ। त्रिषु भक्तिस्सदा कार्या सा हि प्रथमसाधनम्" इत्युक्तम् ॥ ४ ॥

(५) इतः परमेतन्मन्त्रावतरणप्रकारकथनमुखेनैतदप्रतिमवैभवमाह—(संसारिणः) इत्यारभ्य ॥

मू ॥ संसारिगळ् - तङ्गळैयुं ईश्वरनैयुम्मरन्दु, ईश्वरकैङ्कर्यत्तैयुमिलन्दु, 'इलन्दोम्' एन्गिर इलवुमिन्रिक्के, संसारमागिर पेरुङ्कडलिले विलुन्दु नोवुपड, सर्वेश्वरन् - तन् कृपैयाले इवर्गळ् तैन्न अरिन्दु करैमरं शेरुम्बडि ताने शिष्यनुमाय् आचार्यनुमाय् निन्रु तिरुमन्त्रत्तै वेलियिट्टरुलिनान् ॥ ५ ॥

छा ॥ संसारिणः - आत्मन ईश्वरञ्च विस्मृत्य, ईश्वरकैङ्कर्यप्रच्युताः, 'प्रच्युता वयम्' इति क्लेशेनापि विना, संसाररूपमहासमुद्रे पतित्वा दुःखितास्तिष्ठन्ति इति, सर्वेश्वरः - स्वकृपया एते स्वज्ञानेन तीरं यथा प्राप्नुयुः, तथा स्वयमेव शिष्य आचार्यश्च सन् श्रीमन्त्रं प्रकाशयामास ॥५॥

संसारिणः-अनाद्यचित्संसर्गप्रयुक्तप्रवाहरूपाविद्याकर्मवासनारुचिविवशाः, जन्ममरणादिक्लेशभागिनश्चेतनाः ।

---

निष्कलङ्कमन्त्रार्थज्ञानरूपकार्यप्रच्युतिः कदापि न भवतीति भावः । (प्रेमाधिक्यमस्ति चेत् कार्यकरंभवति) इति सिद्धवन्निर्देशेन 'सा हि प्रथमसाधनम्' इति 'हि' शब्दद्योतिता, "यस्यदेवे परा भक्तिः"[1] इत्यादिप्रमाणप्रसिद्धिः सूच्यते । 'देवभक्तिवत् गुरुभक्तिवच मन्त्रभक्तिरपि देवताप्रसादातिशयकरी' इति 'मन्त्रे तद्देवतायाञ्च' इति वचनतात्पर्यमिति भावः । (कार्यकरमि)ति सामान्यनिर्देशेन मन्त्रार्थनिर्णयतत्साधनमननतत्कारणश्रवणतत्प्रयोजकव्यापारलक्षणकार्यजातं विवक्षितम् ।

केचिदाचार्याः - 'मन्त्रार्थप्रदाचार्ये' इत्यनुक्त्वा 'मन्त्रप्रदाचार्ये' इत्युक्त्या केवलमन्त्रप्रदाचार्येऽपि प्रेमाधिक्यं कार्यमित्युक्तम्भवति। मन्त्रार्थप्रदाचार्ययोरुभयोरपि समानत्वात् तथा प्रमाणतात्पर्याख्यग्रन्थे अभयप्रदराजपुत्रैरभिहितम्—इति प्राहुः ।

केचित्तु मन्त्रप्रदाचार्यापेक्षया मन्त्रार्थप्रदाचार्यस्याधिक्यमिच्छन्ति । "मन्त्रः प्रकृतिरित्युक्तो ह्यर्थः प्राण इति स्मृतः । तस्मान्मन्त्रप्रदाचार्यात् गरीयानर्थदो गुरुः" इति स्मृतेः—इति ।

अपरे श्रीवचनभूषणे श्रीकृष्णपादलोकाचार्यैः भागवतस्वरूपनिरूपणावसरे तेषामाचार्यसाम्यप्रतिपादनात् समत्वमेवेत्याहुः । अत्र वक्तव्यं सर्वमपि अन्यत्राचार्यप्रबन्धेषूक्तन्तत्र द्रष्टव्यमिति विस्तरभीत्या न लिख्यते ॥ ४ ॥

सामान्यवैभवं सिद्धं विशिष्यैतत्प्रसाध्यते ।
तत्राऽप्यप्रतिमं तत्तु ह्यस्मिन् सूत्रे प्रदर्श्यते ॥ इत्यभिप्रेत्याह—इतः परमिति ।

---

* पाञ्चरात्रे ॥　　　१. श्वेताश्वतरोप. ६-२० ॥

(आत्मन ईश्वरश्च विस्मृत्येति) * "दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः। नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च" इत्युक्तरीत्या स्वतःसिद्धभगवच्छेषत्वलक्षणान् स्वात्मनः, †"पतिं विश्वस्य" ‡"स्वामित्वं ब्रह्मणि स्थितम्" इत्यादिसूक्तरीत्या निरुपाधिकशेषिणमीश्वरं चाविदित्वेत्यर्थः। यद्यप्यत्र 'अविदित्वा' इत्येवं वक्तुं युक्तं, पूर्वानुभूतार्थविषयकज्ञानप्रच्युतावेव विस्मृतिशब्दप्रयोगदर्शनात्, प्रकृते तदभावाच्च; तथापि §"विस्मृतवांस्त्वां पूर्वम्" इत्युक्तरीत्या स्वतः सिद्धसम्बन्धज्ञाने सति पूर्वं ज्ञानस्य विस्मृतिसमशीलतया भानात्, सम्बन्धाधिक्यसूचनार्थमुक्तमिति ध्येयम्।

(ईश्वरकैङ्कर्यप्रच्युताः) इति, पूर्वोक्तज्ञानेन प्राप्तशेषिभूतेश्वरविषयकैङ्कर्यात्मकपरमपुरुषार्थं प्राप्तुमशक्ता इत्यर्थः। पुरुषार्थगौरवं, तदर्थमुत्पन्नानां तदप्राप्त्यावस्थानं चाभिप्रेत्य 'प्रच्युताः' इत्युक्तम्।

---

'दासभूताः' इत्यस्यार्थः - रहस्यत्रयमीमांसाभाष्ये उक्तः। तथा हि—'दासभूताः... तथैव च॥' इत्युक्तावनमश्शब्दौ उपबृंहितौ। अत्रेदमवधेयम्—दासाश्च ते भूताश्च - दासभूताः,दास्येन लब्धसत्ताका इत्यर्थः। 'स्व' शब्दः - 'आत्मानः' इत्युक्तात्मपरः। न त्वागन्तुकोपाधित इत्यर्थः। अनादिभगवन्मायातिरोहितत्वेन दास्यरसानाविर्भावात्, सत्यामपि दास्ययोग्यतायां तत्फलोपधानं नास्तीति भावः। 'सर्व' शब्दः - त्रिविधात्मवर्गपरः। 'हि' शब्दः - 'पतिं विश्वस्य' इत्यादिप्रमाणप्रसिद्धिपरः। 'आत्मानः - दासभूताः' इति व्याहतम्, व्यापनभरणस्वाम्यानामात्मपदार्थत्वात्। स्वामिनश्च स्वत्वानुपपत्तेः, इत्याशङ्का परमात्मसमाख्यया परिहृता। ननु 'असन्नेव स भवति' इत्यत्र ज्ञानस्य सत्तालम्भकत्वं [1]श्रुतमित्यत्राह—नान्यथेति। 'लक्षणम्'—भूतशब्दोपात्तभगवत्प्रियतमत्वरूपसत्ताज्ञापकमित्यर्थः। कैङ्कर्यस्यानुभवजनितप्रीतिकारितत्वेन प्रेमौत्कट्यगर्भतया, अनुभवापेक्षया कैङ्कर्यमेव भगवत्प्रियतमम्। 'असन्नेव' इत्यत्र कैङ्कर्यपर्यन्तज्ञानं भगवत्प्रियतमत्वलक्षणसत्तातिशयलाभहेतुरित्यपि विवक्षितमिति भावः। अनुभवजनितप्रीतिकारितकैङ्कर्यं [1]'गुणैर्दास्यमुपागतः' इत्यादिरीत्या निर्हेतुकभगवत्कटाक्षविशेषेण बद्धदशायामपि सम्भवतीत्यभिप्रायेणाह—'बन्धे' इति। ननु [2]'सोऽश्नुते सर्वान् कामान्' इत्यादौ अनुभवस्यैव सामान्येन ब्रह्मविद्याफलत्वश्रवणात्, मन्त्ररत्नादौ विशिष्य प्रपत्तिविद्याया एव कैङ्कर्यपर्यन्तफलश्रवणाच्च मोक्षदशायामनुभवमात्रनिष्ठानामपि सद्भावात्, [3]"प्रियो हि ज्ञानिनोऽत्यर्थम्" इत्यादिरीत्या तेषाम्भगवत्प्रियतमत्वाच्च दास्यमेव सत्तालाभहेतुरित्ययुक्तमित्यत्राह—'मोक्षे' इति। मोक्षे च तथैवेत्यर्थः। लक्ष्मीप्रभृतिदिव्यमहिषिवर्ग इवानन्तगरुडविष्वक्सेनादिसूरिवर्ग इव, भक्तेषु प्रपन्नेषु च भगवत्प्रियतमत्वतारतम्यस्य प्रामाणिकत्वात् आनन्दतारतम्यावहत्वाभावाच्च न दोष इति भावः। इत्थं दास्यापेक्षया ज्ञातृत्वस्य प्रियतमत्वज्ञापकत्वाभावेन लक्षणत्वनिषेधे सति ज्ञातृत्वप्रयुक्तमनाद्यचित्सम्बन्धनिबन्धनं यत्किञ्चित्फलोद्देश्यकादृष्टद्वारकसाधनानुष्ठातृत्वरूपं कर्तृत्वं, प्रवृत्त्युद्देश्यभोगाश्रयत्वरूपं भोक्तृत्वञ्च लक्षणं न भवतीत्यभिप्रायेण 'नान्यथा' इति सामान्यतो निर्दिष्टमिति—इति।

---

* पाञ्चरात्रे॥
† तै. उप. नारा. ११-३॥
‡ विष्वक्सेनसं॥
§ पेरियतिरुमोऴि. ६-२-२॥

१. श्रीरामा. किं. ४-१२॥
२. तै. आन. १-१॥
३. गी. ७-१७॥

(प्रच्युता वयं इति क्लेशेनापि विना) इति, स्वस्वरूपपरस्वरूपज्ञानस्य, पुरुषार्थज्ञानस्य चाभावात् स्वशेषत्वानुरूपशेषिकैङ्कर्यलक्षणपुरुषार्थच्युता वयमित्यलाभक्लेशेनापि विनेत्यर्थः।

(संसाररूपमहासमुद्रे पतित्वा दुःखितास्तिष्ठन्ति) इति, *"संसारसागरं घोरमनन्तक्लेशभाजनम्" इत्युक्तप्रकारेणानन्तक्लेशभाजनस्य केनापि स्वयत्नेनाशक्यपारदर्शनस्य संसारात्मकमहासमुद्रस्य मध्ये पतित्वा तापत्रयाभिभूताः सन्तः क्लिश्यन्तीत्यर्थः।

एतेन स्वेषामीश्वरस्य चाज्ञातत्वात्, पुरुषार्थस्याज्ञातत्वात्, संसारसागरमध्ये क्लेशेनावस्थाने सति विरोधिभूतसंसारस्य, तन्निरसनोपायस्य चाज्ञातत्वाच्च ज्ञातव्यार्थपञ्चकेऽन्यतमस्याप्यज्ञानात्तिष्ठन्तीत्युक्तम्। †"प्राप्यस्य ब्रह्मणो रूपम्" इत्यादिरीत्या सर्वशास्त्राण्यपि ह्यर्थपञ्चकं प्रतिपादयन्ति।

तानर्थान्सुग्रहमेतान् ज्ञापयितुं सकलशास्त्रसङ्ग्रहभूतश्रीमन्त्रस्य सर्वेश्वरकृतप्रकाशनप्रकार उपरिष्टादुच्यते।

---

'स्वत्वमात्मनि सञ्जातं स्वामित्वं ब्रह्मणि स्थितम्। उभयोरेष सम्बन्धो न परोऽभिमतो मम॥' इदं पाञ्चरात्रवचनम्। स्वत्वम् - यथेष्टविनियोगार्हत्वम्। स्वामित्वम् - यथेष्टविनियोक्तृत्वाभिसन्धिमत्त्वम्।

'प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः। प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च॥ वदन्ति सकला वेदास्सेतिहासपुराणकाः। मुनयश्च महात्मानो वेदवेदान्तपारगाः (पा-वेदिनः)॥" अस्यार्थः - परमपुरुषार्थतया - प्राप्यस्य, ब्रह्मणः स्वरूपतो गुणैश्च निरतिशयबृहत्वयुक्तस्य भगवतः, रूपम्, प्राप्तुः-प्राप्तिकर्तुः, प्रत्यगात्मनः-प्रति अभिमुखेन, अञ्चति जानातीति - प्रत्यक्, प्रत्यङ्चासौ आत्मा च - प्रत्यगात्मा, तस्य, स्वयम्प्रकाशभूतस्यात्मवर्गस्यच रूपम्, प्राप्तेः-भगवत्प्राप्तेः, उपायम् कर्मज्ञानभक्तिप्रपत्त्यादिरूपं साधनम्, प्राप्तेः फलम् अनुभवादिरूपफलम्, प्राप्तिविरोधि च अहङ्कारादिकंम्; अत्र प्राप्तिर्नाम निवृत्तसकलाविद्यस्य दिव्यदेशे आविर्भूतस्वगुणस्य दिव्यदेहविशिष्टस्य भगवतो दिव्यगुणविग्रहसन्निकर्षविशेषपूर्वकानुभवविशेषः पुनरावृत्तिरहितः। 'प्राप्त्युपयोगितयैव सर्वमप्यर्थजातमुपादेयम्' इति प्राप्तेः प्राधान्यं सूचयितुं सर्वत्र 'प्राप्ति' शब्दप्रयोगः। प्राप्यत्वं प्रापकत्वञ्चास्ति ब्रह्मण इति प्रथमन्तदुद्दिष्टम्। कस्य प्राप्यमित्यपेक्षायां 'प्राप्तुः' इति। तदनु उपायनिर्देशः। प्राप्तिप्रयोजनं किं इत्यपेक्षायां - फलमुद्दिष्टम्। अनन्तरं विरोधिनिर्देशः - इति उद्देशक्रमः।— इति। 'प्राप्तुः' इत्यत्र "प्राप्ताउं, प्रापकनुं,प्राप्तिक्कुकप्पानुमवने" इति श्रीवचनभूषणसूक्त्यनुसारेणार्थो वर्णनीयः। तस्यार्थः तत्रैव द्रष्टव्यः।

पूर्वम् ईश्वरत्वज्ञानं स्वयत्नविरोधिप्रथमोपकारकत्वानुसन्धानरूपञ्चेत्येवं योगार्थमात्रविवक्षया 'ईश्वर' शब्दो द्विरुक्तः। अत्र तु विशेष्यसमर्पणाय रूढ्यर्थस्यापि विवक्षितत्वसूचनाय वैरूप्येण निर्देशः

---

* जितन्तास्तोत्रे. ९-४॥
† वृद्धहारीतस्मृतौ. ८-१४१॥

१. वृद्धहारीतस्मृ. ८-१४१॥
२. श्रीवचनभू. २-७१॥

(सर्वेश्वरः स्वकृपया) इति, *"ईशेशितव्यसम्बन्धादनिदंप्रथमादपि" इत्युक्तप्रकारेण सर्वैरनादीशेशितव्यसम्बन्धवान् स्वामी †"एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः। जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते" इत्युक्तरीत्या तदनुभूयमानदुःखदर्शनजनितनिजनिर्हेतुककृपयेत्यर्थः ।

(एते स्वज्ञानेन तीरं यथा प्राप्नुयुस्तथा) इति, एवं संसारसागरेऽवस्थाय दुःखिता एते ‡"त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः" इति, §"संसारार्णवमग्नानां विषयाक्रान्तचेतसाम् । विष्णुपोतं विना नान्यत्किञ्चिदस्ति परायणम्" इति चोक्तप्रकारेण संसारनिस्तरणोपायभूतस्वज्ञानेनोत्तीर्णसंसाराः यथा कूलं प्राप्नुयुस्तथेत्यर्थः ।

(स्वयमेव शिष्य आचार्यश्च सन्) इति, ¶"नरनारायणो भूत्वा लोके धर्मशास्त्रमसङ्कोचेनोक्तवान्" इत्युक्तप्रकारेण नररूपेण स्वयं शिष्यो भूत्वा नारायणरूपेणाचार्योऽपि सन्नित्यर्थः ।

(श्रीमन्त्रं प्रकाशयामास) इति, सकलशास्त्रसङ्ग्रहभूतं तत्तात्पर्यविषयीभूतार्थपञ्चकं सुस्पष्टं प्रतिपादयन्तं श्रीमन्त्रं प्रकाशितवानित्यर्थः । 'उक्तवान्' इत्यनुक्त्वा 'प्रकाशयामास' इत्युक्तिः, इदानीं स्वयं निर्माय नोक्तवान् किन्त्वनादिं प्रकाशितवानिति, अतिगुह्यमपि एतद्दुर्गतिदर्शनाशक्त्या प्रकाशितवानिति च ज्ञापनार्था ॥ ५ ॥

---

कुतः। नारायणशब्दं विहाय सर्वेश्वरशब्दप्रयोगश्च 'ईशेशितव्य' इति लक्ष्मीतन्त्रवचनार्थविशेषस्मारणार्थश्चेत्यभिप्रेत्य सर्वेश्वरशब्दार्थमाह—ईशेशितव्येति । सर्वेश्वरशब्दस्य भगवन्नामत्वात् 'अजस्सर्वेश्वरः सिद्धः'[२] 'सर्वेश्वरस्सर्वदृक्सर्वविच्च समस्तशक्तिः परमेश्वराख्यः'[३] 'स च सर्वेश्वर एव, अतस्सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म' इत्यादिप्रयोगादिति भावः ।

(एते) - संसारिण इत्यर्थः । प्रकृतिसम्बन्धवशेन स्वयत्नस्वभोगपरा इति यावत् ।(स्वज्ञानेन) इति - स्वशब्दो भगवत्परः । स्वयत्नस्वभोगानर्हजीवस्वरूपस्य निरुपाधिकतया ईश्वरस्य स्वामिनः शेषिणः कैङ्कर्यप्रतिसम्बन्धिनः निरपेक्षप्राप्यप्रापकभूतस्य निरपेक्षविरोधिनिवर्तकस्य चेत्यर्थः । (ज्ञानेन) इति ज्ञानस्य व्याजत्वमभिप्रेतम् । (स्वयमेव) इति - आचार्यत्वम् - अवतारेण साक्षात्सम्पादयितुं शक्यम्; शिष्यत्वन्तु - अवतारेणापि स्वस्मिन् शिष्यत्वभावनयान्यत्नसम्पादनीयमिति शिष्यत्वस्याचार्यत्वापेक्षया दुर्लभतया तत्र भगवतः आदरातिशयोऽस्तीति द्योतनाय 'शिष्यत्वेन' इति प्रथमोपात्तम् । अत एव श्रीमत्परकालसूरिभिरपि 'नरनारणनाय्' इत्यत्र शिष्यावतारः प्रथमोपात्तः । "बदर्याश्रममासाद्य शकटे कनकामये। अष्टचक्रं हि तद्यानं भूतयुक्तम्मनोहरम्। तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसन्ततौ । नरनारायणौ पूर्वं तपस्तेपतुरुत्तमम् । धर्मयानसमारूढौ पर्वते गन्धमादने' इति महर्षिवचनेऽपि तथैवोपात्तः ।

'कृपया - प्रकाशितवान्' इति समभिव्याहारेण सिद्धार्थमाह—(उक्तवान्) इति । 'आनृशंस्यं परो धर्मः'[५] इत्युक्त्यानृशंस्येन परमरहस्यमपि प्रकाशितवानिति भावः ॥ ५ ॥

---

* लक्ष्मीतन्त्रे. १७-७० ॥
† अहि. सं. १४ २८ ॥
‡ जितन्ता. १-४ ॥
§ विष्णुधर्मे. १-५९ ॥
¶ पेरियतिरुमोलि. १०-६-१ ॥

१. लक्ष्मीत, १७-७० ॥
२. सहस्रना. ११ ॥
३. विष्णुपु. ६-५-८६ ॥
४. श्रीभाष्ये. १-१-१ ॥
५. श्रीरामा. सु. ३८-४१ ॥

(६) तर्ह्याचार्यतयावस्थाय प्रकाशनेनालं शिष्यत्वेन स्थितिः किमर्थेत्यत आह—शिष्यतयेत्यादिना—

मू ॥ शिष्यनाय् निन्त्रदु, शिष्यनिरुक्कुमिरुप्पु, नाट्टाररियामैयाले अत्त अरिविक्कैक्काह ॥ ६ ॥

छा ॥ शिष्यतया स्थितिः,शिष्यस्थिते लौकिकैरज्ञातत्वात् तां ज्ञापयितुम्॥६॥

आचार्यत्वेन प्रकाशितमात्रेण विना स्वयमेव शिष्यतयाप्यवस्थानं *"आस्तिको ध-

---

पूर्वं शिष्यावतारस्यादरातिशयकृतत्वमुक्तम् , तन्न, साक्षादेवाज्ञातज्ञापनायादरातिशयेनाचार्यावतारसम्भवेऽपि सर्वज्ञस्याज्ञातार्थज्ञानासम्भवेन शिष्यावतारस्यादरातिशयकृतत्वासम्भवात् । स्वातन्त्र्यकृतत्वेनैव वक्तव्यत्वाच्च । न च स्वाभिनयेनान्येषां अज्ञातज्ञापनार्थं शिष्यावतारः सम्भवति; स्वधर्मभूताचार्यत्ववत्सुकरत्वाभावेनाभिनयेन परेषामज्ञातार्थज्ञापने आदरातिशयश्च सम्भवतीति वाच्यम्, अज्ञातार्थज्ञापनस्य परेषां तावत् जिज्ञासादिसत्वे आचार्यावतारेणैव सम्भवात् । तदसत्वे शिष्यावतारेणापि असम्भवात् । कृपामात्रप्रसन्नाचार्यावतारस्य शिष्यानुवृत्तिनिरपेक्षत्वेन शिष्यलक्षणपरिज्ञानार्थे शिष्यावतार इत्यस्यासम्भवाच्च । शिष्याणान्तावत् ज्ञानार्थे शिष्यलक्षणपरिज्ञानानावश्यम्भावाच्च । आचार्योपदेशेनैव तावत् ज्ञानवत् शिष्यलक्षणपरिज्ञानसम्भवाच्च । उपदेशाप्रामाण्यशङ्कायां शिष्यावताराभिनयेनापि अन्येषान्तत्त्वज्ञानोत्पादनासम्भवप्रसङ्गाच्चेति शङ्कापरिहारपर उत्तरग्रन्थ इत्यभिप्रायेणोत्तरसूत्रसङ्गतिमाह—तर्हीति । परिहारस्तु—शिष्यावतारस्यादरातिशयकृतत्त्वं युक्तमेव । अभिनयेने परेषामज्ञातज्ञापनार्थं आचार्यावतारापेक्षया शिष्यावतारस्याधिकादरविषयत्वोपपत्तेः । न च जिज्ञासादिसत्वे शिष्यावतारवैफल्यमिति वाच्यम्; ज्ञानश्रुतेः परानुग्रहार्थप्रवृत्तहंसद्वयोक्तरैक्वस्तुतिजानश्रुतिनिन्दावाक्यश्रवणेन ब्रह्मजिज्ञासायाः ब्रह्मविद्रैक्वजिज्ञासायाश्च तत्समीपजिगमिषायाश्चोत्पत्तिवत् । शिष्यावताराभिनयेनैव तत्त्वजिज्ञासाद्युत्पत्त्युपपत्तेः । शिष्यलक्षणपरिज्ञानार्थे शिष्यावतारसम्भवाच्च । कृपामात्रप्रसन्नाचार्यविषये तत्त्वोपदेशहेतुभूतप्रसादार्थं शिष्यानुवृत्त्यनपेक्षायामपि गुरुमन्त्रदेवताद्वेषोपेक्षादीनां तत्त्वज्ञानोत्पत्तिप्रतिबन्धकतया"[1]यस्य देवे परा भक्तिः""[2]त्रिषु भक्तिः सदाकार्या" "[3]यादृशी भावना यत्र" "[4]विश्वासः फलदायकः" "[5]यस्य यावांश्च विश्वासः""[6]शुद्धभावं गतो भक्त्या"" [7]न नास्तिकाय वक्तव्यं नाभक्ताय कदाचन""[8]तद्विद्धि प्रणिपातेन"इत्यादिप्रमाणबलेन गुरुमन्त्रदेवताभक्त्यादीनां अन्वयव्यतिरेकाभ्यां अद्वेषादिरूपत्वेन तत्वज्ञानकारणतया च'आस्तिको धर्मशीलश्च'इत्यादिप्रमाणोक्तशिष्यलक्षणपरिज्ञानस्य शिष्यनिष्ठासम्पादनमुखेन तत्त्वज्ञानार्थमेवावश्यकत्वाच्च । श्रुत्याद्युक्ततत्वोपदेशप्रामाण्यस्वीकारे विरहे वा सार्वजनीनतया गुरूत्कर्षापादकस्य शुश्रूषादेः कर्तव्यतोपदेशे हेतुदर्शनाधिकरणन्यायेन लोभादिमूलत्वशंकाया दृढत्वेनात्यन्तानभिज्ञानामपि 'सजातीयेन गृह्णन्ति सजातीयमृगपक्षिणः' इति न्यायेनानुष्ठानेनैवोपदेशेन शिष्यनिष्ठासम्पादनस्य दुस्साधत्वाच्च—इति ।

(आस्तिकः) इति शास्त्रोक्तमस्तीति दृढाध्यवसायशालीत्यर्थः। इत्थमुपदेशमूलभूतशास्त्रविश्वा-

---

* पांचरात्रे ॥

१. श्वे. उप. ६-२५ ॥

२. पां-त्रे ॥

३. पां-त्रे ॥

४.

५.

६. भारते-उद्यो. ६८-५ ॥

७. भारते ॥

८. गीता. ४-३४ ॥

र्मशीलश्च शीलवान्वैष्णवः शुचिः। गम्भीरश्चतुरो धीरः शिष्य इत्यभिधीयते"*"शरीरं वसु विज्ञानं वासः कर्म गुणानसून्। गुर्वर्थं धारयेद्यस्तु स शिष्यो नेतरः स्मृतः" †"सद्बुद्धिस्साधुसेवी समुचितचरितस्तत्त्वबोधाभिलाषी शुश्रूषुस्त्यक्तमानः प्रणिपत-

---

स उक्तः। शास्त्रविश्वासाभावे गुरूपदेशवैफल्यप्रसङ्गात्। अथ सम्यग् ज्ञानहेतुभूतसत्त्वविवृद्धिहेतुभूतं धर्मानुष्ठानमाह—धर्मशीलश्चेति। (शीलवान्) - '[1]दोषैकदृक्पुरोभागी' इत्युक्तपुरोभागित्वं विना गुणग्रहणैकशील इत्यर्थः। सौशील्यगुणस्य शिष्यत्वानुपयोगात्। (वैष्णवः)-'[2]यस्य देवे परा भक्तिः' इत्याद्युक्तविष्णुभक्तिमानित्यर्थः। (धर्मशीलश्च)इति कृत्यकरणमुक्तम्। (शुचिः) इति-अकृत्याकरणमुच्यते। (गम्भीरः)-प्रणिपातसेवादौ प्रयासे सत्यपि तदनाविष्कारशील इत्यर्थः। (चतुरः)-गुर्वभिमतसर्वशुश्रूषासु समर्थ इत्यर्थः। (धीरः)-'धियं-राति इति' धीरः। 'रा दाने, आदानेच' इति धातुः। "[3]तस्मै देयन्ततो ग्राह्यम्" इत्युक्तरीत्या ज्ञातार्थबोधने अज्ञातार्थावगाहने च समर्थ इत्यर्थः।एवम्भूतः, (शिष्य इत्यभिधीयते) - उक्तगुणाष्टकशाली शिष्यशब्दमुख्यव्यवहारविषय इत्यर्थः। '[4]शासु-अनुशिष्टौ' 'अनुपूर्वः शासिः विविच्य ज्ञापनार्थः' इति शाब्दाः। अस्माद्धातोः कर्मणि यत्प्रत्यये '[5]शास इदङ्हलोः' इत्युपधाया इत्वे च षत्वे च'शिष्य'इति भवति। उक्तगुणाष्टकवान् विविच्य ज्ञापनयोग्यत्वरूपनिमित्तसम्भवात् शिष्यशब्दवाच्य इत्यर्थः।

(शरीरम्)इति-सर्वप्रकारगुरुशुश्रूषार्थतया शरीरधारणं 'शरीरं-धारयेत्' इत्यनेन विवक्षितम्। सर्वस्वदानेनापि विद्यार्थं गुरुप्रीतिस्संपादनीयेति 'वसु-धारयेत्' इत्यनेन विवक्षितम्। लब्धापि विद्या गुरुप्रीत्यर्थेत्यध्यवसायः 'विज्ञानं-धारयेत्' इत्यनेन विवक्षितः। '[6]शिष्यप्रकर्षो यशसे गुरूणाम्'इत्युक्तेः। (वासः)-वस्त्राद्यलङ्कारः, गृहाद्युपकरणं वेत्यर्थः। विद्याफलतया गृहादिलाभे च गुर्वर्थत्वबुद्धिः कार्येत्यर्थः। विद्याफलीभूतेऽनुष्ठाने, अमानित्वाद्यात्मगुणजाते, सकलविद्यापारङ्गततायां, शतायुस्सम्पूर्णतायाञ्च '[7]प्रशास्तिः सा राज्ञः' इत्याद्यनुगृहीतरीत्या गुर्वर्थबुद्धिः कार्येति 'कर्म गुणान् असून्' इति पदत्रयेण विवक्षितम्। (यस्तु इति एवंभूताध्यवसायशाली एव। विविच्य ज्ञापनं सद्यःफलमित्याभिप्रायेण 'स शिष्यो नेतरस्स्मृतः' इत्युक्तमित्यर्थः।

(सद्बुद्धिः) इति-गहनन्यायावगाहनयोग्यबुद्धिशालीत्यर्थः। (साधुसेवी)- '[8]गुरुसन्निधिमात्रेण'इत्युक्तरीत्या सन्निधानमात्रेण स्वस्य ज्ञानोदयहेतुभूतसाधुजनसेवापर इत्यर्थः।(समुचितचरितः) सम्यक् ज्ञानोदयार्थं अकृत्यकरणकृत्याकरणलेशरहित इत्यर्थः। (तत्वबोधाभिलाषी)-'[9]सुव्याहृतानि महतां सुकृतानि ततस्ततः। सञ्चिन्वन्धीर आसीत शिलाहारी शिलं यथा" "[10]मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत्। ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत्" इत्युक्तरीत्या ज्ञातार्थज्ञानसंपादनैकशील इत्यर्थः।(शुश्रूषुः) गुरुविषये सर्वप्रकारपरिचर्यापर इत्यर्थः। (त्यक्तमानः)-'[11]गुरुं प्रकाशयेत्' इत्युक्तरीत्या सार्वजनीनशुश्रूषाशालीत्यर्थः। (प्रणिपतनपरः)-'[12]प्रणिपातप्रतीकारः संरंभो हि महा-

---

* पांचरात्रे ॥ † न्यासविंशत्यां. ३ ॥

१. अमरको ॥

२. श्वे-उप. ६-२३ ॥

३. गारुडे-पूर्व. २१९-१० ॥

४. अदादिधातुः ॥

५. अष्टाध्या. ६-४-३४ ॥

६.

७. श्रीगुणरत्नको. ३० ॥ ८. पां-त्रे ॥

९. भारते-उद्यो. ३४-३४ ॥

१०. पां-त्रे. शेषसं. १४-अ ॥

११. पां-त्रे. शेषसं. १४-अ ॥

१२. रघुवंशकाव्ये ४-६४ ॥

नपरः प्रश्नकालप्रतीक्षः । शान्तो दान्तोऽनसूयुः शरणमुपगतः शास्त्रविश्वासशाली शिष्यः प्राप्तः परीक्षां कृतविदभिमतंतत्त्वतः शिक्षणीयः" इत्याद्युक्तप्रकारेण साध्यान्तरनिवृत्तिफलसाधनशुश्रूषार्त्यादरानसूयादिविशिष्टरूपशिष्यलक्षणस्य किंकैरज्ञा-

त्मनाम्' इत्युक्तरीत्या गुरुणा निग्रहे कृते तत्र हितत्वबुद्ध्या तदनुग्रहार्थं प्रणिपातशील इत्यर्थः।(प्रश्नकालप्रतीक्षः) 'प्रश्नोचितेषु परया कृपया प्रसीदन्' इत्युक्तरीत्या प्रश्नोत्तरक्षणे प्रमादपूर्वकमुत्तरलाभाय गुरोर्व्यासङ्गराहित्यदशाप्रतीक्षणपर इत्यर्थः । (शान्तो दान्तः) श्रवणोपयोगितया बाह्याभ्यन्तरकरणव्यासङ्गरहित इत्यर्थः । (अनसूयुः) गुरुणा समीचीनन्यायोपन्यसने कृते तत्र पुरोभागित्वं विना गुणग्रहणशील इत्यर्थः । (शरणमुपगतः) आत्मसम्बन्धाभावे अर्थज्ञानानधिकारात् पञ्चसंस्कारपूर्वकं स्वगतस्वीकारेण वा परगतस्वीकारेण वा प्रपन्न इत्यर्थः । (शास्त्रविश्वासशाली) प्रमाणान्तरेण केनाप्यत्यन्ताप्रसिद्धेऽपि प्रबलप्रमाणाबाधिते न्यायानुगृहीतवाक्यस्वरससिद्धे परमपुरुषार्थतत्साधनादिरूपे शास्त्रार्थे, "देवगुह्येषु चान्येषु हेतुर्देवनिरर्थकः' इत्यादिरीत्या प्रामाण्यशङ्कालेशशून्यफलपर्यन्तसत्तानिश्चयशालीत्यर्थः । (कृतवित्) कृतज्ञः । 'शिष्यः' इति पूर्ववत् । एवम्भूतः शिष्यः, (परीक्षां प्राप्तः) 'परीक्ष्य विविधोपायैः' इत्याद्युक्ताचार्यकर्तृकपरीक्षाविषयीकृतस्सन् । (अभिमतम्) - 'को धर्मस्सर्वधर्माणां भवतः परमो मतः' इत्युक्तरीत्याचार्यात्यन्ताभिमतं परमरहस्यार्थम् । (तत्त्वतः) - यथावदाकारेण । (शिक्षणीयः) - आचार्येण बोधनीय इत्यर्थः । सारतमाकारगोपनेन सामान्याकारेण बोधनं न कार्यमिति भावः ।

"परिशुद्धगुणोपेतं विशुद्धाचारतत्परम् । विरतञ्च महापापात् पितृदारादिपालकम् । शान्तं दान्तं ऋजुं सौम्यं प्रणतं भगवत्परम् । सन्तप्तहृदयं भक्त्या सक्त्या सर्वार्थसाधकम् । प्रियवाक्यं महाबुद्धिं सत्यं कुशलपाणिकम्। एवमादिगुणोपेतं शिष्यभावेन सङ्गतम्" 'शान्तोऽनसूयुः श्रद्धावान् गुर्वर्थार्थात्मवृत्तिकः । शुचिः प्रियहितो दान्तः शिष्यश्चोपरतस्सुधीः''इत्यादिवचनमादिशब्दग्राह्यम्।

(साध्यान्तरनिवृत्ति)इति-''शिष्य इत्युच्यते-साध्यान्तरनिवृत्तिः,फलसाधनशुश्रूषा, आर्तिः, आदरः, अनसूया एतद्विशिष्टः" इति हि श्रीवचनभूषणदिव्यशास्त्रे प्रसादितः । "उपदेशश्रवणमात्रमादायोपरितनाकारेण कथनमात्रं विना 'शिष्य' इति मुख्यतयोच्यत इत्यर्थः । साध्यान्तरनिवृत्तिर्नाम-स्वरूपविरोध्यैश्वर्यकैवल्यरूपप्राप्यान्तरे विस्मृत्यापि अन्वयस्य राहित्यम् । अथवा, अमुमाचार्यं विनोपरि किंचन प्राप्यवस्तु न जानामीति स्थितिः। फलसाधनशुश्रूषा नाम - " गुरुशुश्रूषया विद्या" इति प्रकारेणाचार्यस्य स्वेन क्रियमाणया शुश्रूषया सन्तोषमुत्पाद्य, ज्ञानोपजीवनकरणमुचितम् ; तस्मादाचार्येण स्वस्योपक्रियमाणतत्त्वज्ञानरूपफलस्य सिद्धेः,साधनभूता आचार्यपरिचर्या।अथवा,स्वरूपानुरूपफलसाधनेच विद्यमाना श्रोतुमिच्छा शुश्रूषा । अथवाचार्यमुखोल्लासरूपफलस्य साधनरूपा तत्परिचर्या । आर्तिर्नाम - "अज्ञानप्रदमहापृथिव्याम्" इत्यादिप्रकारेणोत्पन्नज्ञानविरोधिभूतैतद्विभूतेः शीघ्रं गमनालाभात् जायमानक्लेशः । अथवा, आचार्यविग्रहानुभवालाभे क्लेशो वा । आदरो

१.
२. शाण्डिल्यस्मृतौ. १-११६ ॥
३. सहस्रनामाध्याये. ३ ॥
४. शाण्डिल्यस्मृ. १-अध्या. ११३, ११४, ११५. श्लोकाः ॥
५. भारद्वाजसं ॥
६. श्रीवचनभूषण. ३२१. सूत्रम् ॥
७. विहगे. सं २१-पटले ॥
८. तिरुवाय्मोलि. १०-६-१ ॥

तत्वात् तत् स्वानुष्ठानेन ज्ञापयितुमित्यर्थः। उपदेशेन ज्ञापने कृते स्वोत्कर्षसम्पादनाय समागतोऽयमित्यपि ज्ञायते, अनुष्ठानेन तु ज्ञापने, अस्माकमप्येतदपेक्षितमिति हि विश्वस्य (विश्वासपूर्वकं) परिगृह्यते ॥ ६ ॥

(७) नन्वेवं शिष्यत्वेनावस्थायैतन्मन्त्रशिक्षामार्गेणैव ज्ञानमुत्पादनीयमिति कोऽयं नियमः, *'' ज्ञानशास्त्राणि''इत्युक्तज्ञानसाधनीभूतसकलशास्त्राभ्यासमार्गेण ज्ञानं कुतो नोत्पादितमित्यतः, शास्त्रजन्यज्ञानादेः, तन्मन्त्रजन्यज्ञानस्य विशेषं सदृष्टान्तमाह—सकलशास्त्रैरिति—

मू ॥ सकलशास्त्रङ्गलालुं पिरक्कुं, ज्ञानं-स्वयमार्जितम्पोले । तिरुमन्त्रत्ताल् पिरक्कुं ज्ञानं-पैतृकधनम्पोले ॥ ७ ॥

छा ॥ सकलशास्त्रैरुत्पद्यमानं ज्ञानं स्वयमार्जितवत् ।
श्रीमन्त्रेणोत्पद्यमानं (जायमानं) ज्ञानं - पैतृकधनवत् ॥ ७ ॥

---

नाम - उत्तरोत्तरानुबुभूषया यथा वर्द्धेत - तथाचार्योक्ते भगवद्गुणानुभवे उपर्युपरि जायमान आदरः। अथवा, आचार्ये पश्यति चेत् क्षुधित ओदनमिव, तदनुभवकैङ्कर्ययोरत्यासक्तिहेतुरादरः। अनसूया नाम-आचार्ये भगवद्भागवतवैभवं विस्तरेणोपपादयति 'प्रवक्ष्याम्यनसूयवे''इति प्रकारेणासूयाराहित्यम्। अथवा, आचार्यस्योत्कर्षे, सब्रह्मचारिणामुत्कर्षे च दृष्टे तत्रासूयाराहित्यम् । 'असूयाप्रसवभूः'' इत्यस्य हितमुक्तवत उत्कर्ष एव भवति ममासूयेति पूर्वैरुक्तम्। भगवद्विषयेऽप्यसूयायां कृतायां तदीयविषये किं वक्तव्यम्। ''इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे'' इति हि गीतम् । एवमेतादृशसद्गुणसम्पन्न एव साक्षात् शिष्य इत्युच्यते'' इति श्रीरम्यजामातृदेशिकैर्व्याख्यातम् ।

ननु स्वानुष्ठानमन्तरा आचार्यस्सन् शिष्यलक्षणोपदेशसंभवात्, स्वानुष्ठानेन तत्प्रदर्शनं किमर्थमिति चेत्तत्राह—उपदेशेनेति। ''गतानुगतिको लोकः न लोकः पारमार्थिकः। नद्यां सैकतलिङ्गेन नष्टं मे ताम्रभाजनम्'' इत्युक्तरीत्या लोकस्थानां याथात्म्यज्ञानस्याभावात् उपदेशेन ज्ञापने कृते स्वातिशयसंपादनाय समागतोऽयमित्यपि ज्ञायते इत्यर्थः। सूत्रे 'लौकिकैरज्ञातत्वात्' इत्यनेन पण्डितानामपि ''जन्मान्तरसहस्रेषु या बुद्धिर्भाविता नृणाम्। तामेव लभते जन्तुरुपदेशो निरर्थकः'' इत्युक्तरीत्यानुष्ठानेनैव शिष्यलक्षणपरिज्ञानं संभावितम्; कथंचित् शिष्यलक्षणशास्त्रमुखेनाचार्योपदेशबलेन तेषान्तत्परिज्ञानं संभवतु। पामराणान्तु हेतुदर्शनाधिकरणन्यायेन उपदेशेन तद्ज्ञानकथैव दवीयसीति-सूचितम्। 'तां ज्ञापयितुम्' इत्यत्र 'तां' इति जातावेकवचनम्। 'ज्ञापयितुं' इत्यनेन रामलक्ष्मण-रामकृष्णाद्यवतारेष्विवेति विवक्षितम्। 'लौकिकैरज्ञातत्वात्-शिष्यतया स्थितिः' इत्येव पर्याप्तौ 'उपदेशो निरर्थकः' इत्युक्तरीत्या शिष्यलक्षणपरिज्ञानमनुष्ठानेनैव भवतीति द्रढयितुं 'तां ज्ञापयितुम्। इत्युक्तम् ॥ ६ ॥

उत्तरसूत्रमवतारयति—नन्विति। ज्ञानशास्त्राणि-ज्ञानसाधनशास्त्राणीत्यर्थः। (शास्त्रज्ञानम्) इति श्लोके पूर्वार्धतात्पर्यार्थपरं 'सकलशास्त्रैः' इति वाक्यम्। 'श्रीमन्त्रेण' इतिवाक्यमुत्तरार्धतात्पयार्थ-

---

* तिरुवाय्मोलि. १-९-०
१. गीता. ९-१ ॥
२. स्तोत्ररत्ने. ६२ ॥
३. गीता. ९-१ ॥
४. इतिहाससमुच्चये, २-३० ॥

तत्त्वज्ञानजनकश्रुतिस्मृत्यादिसकलशास्त्रैश्चेतनानां जायमानं ज्ञानं स्वयमार्जितधनवदत्यायासलभ्यम्भवति । आचार्योपदेशहेतुना श्रीमन्त्रेण जायमानं ज्ञानं पैतृकधनवदनायासलभ्यं भवतीत्यर्थः । तथाचोक्तं *"शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम् । उपदेशाद्धरिं बुद्ध्वा विरमेत्सर्वकर्मस्वि"ति । एतेन-शास्त्रापेक्षया तत्सङ्ग्रहभूतस्य श्रीमन्त्रस्य वैभवमुक्तम् ॥ ७ ॥

(८) ननु तर्हि तिष्ठन्तुनाम शास्त्राणि,किमयं भगवन्मन्त्र एकएव अन्येऽपि बहुविधा नसन्तीति शङ्कायां, मन्त्रान्तरादस्य वैभवं वक्तुं भगवन्मन्त्राणामनेकत्वमाह —

---

परम् । तत्र शास्त्रपदं "शासनात्-शास्त्रम्. शासनञ्च प्रवर्तनम्"इति श्रीभाष्यसूक्त्यनुसारेण, "वेदाच्छास्त्रं परं नास्ति"इति वचनानुसारेण च प्रवर्तकवेदजातपरमित्यभिप्रायेण 'शास्त्रैः' इत्युक्तमित्यभिप्रेत्य—तत्त्वज्ञानजनकश्रुतिस्मृत्यादिसकलशास्त्रैः इत्युक्तम् । सर्वशाखाप्रत्ययन्यायादिसापेक्षत्वाभिप्रायं बहुवचनम् । "अङ्गानि वेदाश्चत्वारः" "पुराणन्यायमीमांसाः" इत्याद्युक्तरीत्या साङ्गोपाङ्गवेदानामेव धर्मनिर्णयकत्वाभिप्रायेण-'सकल'इत्युक्तम् । शास्त्रैः - 'चेतनानामि'ति पूरणीयमित्यभिप्रायेणोक्तं—चेतनानामिति । अन्यथा, 'स्वयमि'ति पदस्य समभिव्याहृतपरस्यानन्वयादितिभावः । 'चेतनानामि'ति पदं 'आर्जितवदि'त्यत्राप्यन्वेति । 'चेतनानामि'ति पदे षष्ठ्यर्थो ज्ञातृत्वम् । 'अहमस्य'तिवत् । तथाचार्जितसाम्यमात्मसाक्षिकमिति यावत् । 'स्वात्मनो बुध्युत्पत्तिं दृष्ट्वे'तिवत् । 'आर्जित'शब्दे 'धनमार्जयेत्' इति धनस्यार्जनकर्मत्वप्रसिद्ध्या 'आर्जितधनवदि'ति विशेष्यंस्फुटम् । अस्य आयासलभ्यमि'ति शेषः पूरणीय इत्यभिप्रायेणोक्तं—अत्यायासलभ्यमिति । अस्ति भवत्यादीनां सार्वत्रिकतया 'धनवद्भवति' इति भवतिक्रियाध्याहार्य इत्यभिप्रायेणोक्तं—भवतीति । ननु तर्हि साङ्गोपाङ्गवेदप्रवचनवैफल्यं प्रसज्येतेतिचेन्न, तत्त्वनिर्णयार्थे सपरिकरवेदानपेक्षायामपि, "वेदशास्त्रविनोदेन कालो गच्छति धीमताम्" इत्युक्तरीत्या कालक्षेपार्थं,'प्रत्यक्षेण दृष्टमपि'इत्याद्युक्तरीत्या, 'नबोधादपरंसुखम्' इत्युक्तभोगार्थञ्च तत्प्रवचनोपपत्तेः । आर्जितस्यात्यायासलभ्यत्वेन अनार्जितापेक्षया भोग्यत्वमल्पमित्यभिप्रायेण 'स्वयमार्जितधनवत्' इति विशेष्यानुपादानमित्यनुसन्धेयम् । 'आचार्योपदेशहेतुने'ति शेषः पूरणीय इत्यभिप्रायेणाह—आचार्योपदेशहेतुनेति । अनेन श्लोकस्योपदेशशब्दार्थउक्तः । उपदेशात् - उपदिश्यत इत्युपदेशः - मन्त्रः, तस्मात् । आचार्योपदेशपूर्वकमन्त्रजन्यज्ञानादित्यर्थः । 'जायमानं ज्ञानमि'त्यत्रापि पूर्ववत् 'चेतनानामि'तिपूरणीयः । 'जायमानं ज्ञानमि'त्यनेन 'हरिं बुध्वा' इत्युक्तसिद्धोपायज्ञानं विवक्षितम् । 'हरति-संहरति'' "हरति-गृह्णाति" इतिव्युत्पत्त्या हरिशब्देनेष्टप्रापणानिष्टनिवारणलक्षणसिद्धोपायत्वलाभात् । 'पैतृक'शब्देन पितृत्ववाचिना, पितुरपि दायप्राप्तत्वेन धनस्यानायाससिद्धत्वं लभ्यते । तेन दार्ष्टान्तिके मन्त्रजन्यज्ञाने वेदजन्यज्ञानइव भगवतोऽङ्गोपाङ्गप्रवर्तनप्रयासं विना शठकोपमुनिप्रभृतिसूक्तिरूपोपदेशमुखेनैवोत्पत्तिसम्भवेन मीमांसानैरपेक्ष्यं सूच्यते । अत एव 'स्वयमार्जिते'तिवत् 'पित्रार्जिते'त्यनुक्तिः । 'धन'शब्देन दार्ष्टान्तिकज्ञानेपि भोग्यत्वं भोगोपकरणत्वञ्चाभिप्रेतम् । अनेन सूत्रेण फलितांशमाह—एतेनेति ॥ ७ ॥

(भगवन्मन्त्रास्त्वि)ति, भगवच्छब्देन "इषेत्वा" इत्यादिक्रियाङ्गमन्त्राणां, पञ्चाक्षर्यादिके-

---

* पां त्रे.

१. श्रीभाष्ये. २-२-२२ ॥

२. बृहन्नारदीये. ३२-९ ॥

३: विष्णुपुराणे. ३-६-२७ ॥

४. याज्ञव. स्मृ. १-३ ॥

५. यजु. काण्डं. १-१-१ ॥

भगवदित्यादिना—

मू ॥ भगवन्मन्त्रङ्गल् तान् अनेकङ्गल् ॥ ८ ॥

छा ॥ भगवन्मन्त्रास्त्वनेके ॥ ८ ॥

व्या॥*"आस्तान्ते गुणराशिवद्गुणपरीवाहात्मनां जन्मनां सङ्ख्या"†"बहवो नृप कल्याणगुणाः पुत्रस्य सन्ति ते" "तवानन्तगुणस्यापि षडेव प्रथमे गुणाः" ‡"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन" इति §"असङ्ख्येयानादिगुणः" इति, ¶"कस्यां कस्यां योनौ त्वमुत्पन्नोसी"ति चोक्तप्रकारेण भगवद्गुणाः, गुणपरीवाहरूपावताराश्च यथा असङ्ख्यातास्तथा तत्प्रकाशकमन्त्रविशेषाश्च असङ्ख्याता इत्यर्थः । श्रूयते च "अनन्ता वै भगवन्मन्त्राः" इति ॥ ८ ॥

---

वलदेवतान्तरमन्त्राणां, "अग्निश्चे"त्यादि देवतान्तरांकितमन्त्राणाञ्च व्यावृत्तिः । साक्षाद्भगवत्परत्वं विवक्षितम् । तेषां भगवत्स्वरूपप्रतिपादकत्वाभावात्, मुमुक्षुरक्षकत्वाभावात्, मुक्तिहेतुज्ञानजनकत्वाभावाच्चेति भावः । 'अनेके' इत्यनेन भगवन्मन्त्राणां विविधविचित्रगुणविग्रहचेष्टितविशेषप्रतिपादनेन बुभुक्षुविषये-तत्तदिष्टानिष्टप्राप्तिपरिहारार्थतया , मुमुक्षुविषये-विविधविचित्रस्वात्मपरमात्मभोगार्थतया-चानेकप्रमाणोपपत्तिसिद्धमानन्त्यमभिप्रेतम् ।

(आस्तामि)ति, श्रीरंगराजस्तवे उत्तरशतके "आस्तां ते गुणराशिवत् गुणपरीवाहात्मनां जन्मनां संख्या भौमनिकेतनेष्वपि कुटीकुञ्जेषु रङ्गेश्वर । अर्च्यः स्सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः प्रीणीषे हृदयालुभि स्तव ततः श्रीलात् जडी भूयते"॥ (गुणपरीवाहात्मनां) - गुणप्रवाहरूपाणां, (जन्मनां)-अवताराणाम्, (संख्या)-इयत्तया परिगणनम्, गुणराशिवत् आस्ताम्; (परीवाहात्मनामि)ति, वात्सल्यादयो गुणाः कल्याणामृतोदधौ परे ब्रह्मणि परिपूर्णा, अवतारजन्मना प्रवहन्तीतिभावः । गुणप्रयुक्ता अवताराइति हृदयम् । (भौमनिकेतनेषु) - पांचरात्रादिशास्त्रोक्तप्रकारेण निर्मितेषु भौमेषु देवतायतनेषु, तथा श्रीवैष्णवानां, कुटीषु-गृहेषु, तथारण्यवासिनां, कुंजेषु-लतागृहवृक्षमूलादिषु, (हृदयालुभिः) - मनस्विभिः, श्रीपरांकुशादिदिव्यसूरिभिः, अर्च्यः सर्वापराधसहिष्णुः, अर्चकपरतन्त्राखिलात्मवृत्तिः, (प्रीणीषे) - अर्चकापराधमपि उपकारतया तदुपनीतं पत्रपुष्पमप्यनल्पतयामन्यमानः प्रीणीषे । सा प्रीतिः - त्वदेकवेद्या इति भावः । निरङ्कुशस्वतन्त्रस्य सर्वज्ञस्य सर्वशक्तेः कथमेतादृशार्चावतारसन्निधिरित्याशंक्याह—(तवे)ति । ततः - तस्मात् प्रसिद्धात्, (शीलात्) शीलगुणानुसन्धानात् । (जडीभूयते) भावे लट् ॥

'ते तमूचु र्महात्मानं पौरजानपदाजनाः । बहवो नृप कल्याणगुणाः पुत्रस्य सन्ति ते ॥

'तवानन्तगुणस्यापि षडेव प्रथमे गुणाः । ये त्वयैव जगत्कुक्षावन्येप्यन्तर्निवेशिताः ॥' (षडेवे)ति, ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि ।

'बहूनि मे व्यतीतानि जन्मानि तवचार्जुन । तान्यहं वेद सर्वाणि नत्वं वेत्सि परन्तप' ॥ ८ ॥

---

* श्रीरङ्गराजस्तवे. २-७४ ॥
† श्रीरामा. अयो. २-२६ ॥
‡ गीता. ४-५ ॥
§ तिरुवाय्मोलि. ३-३-३ ॥
¶ तिरुविरुत्तम्. १ ॥
१. तै. ना. २४-१ ॥

(९) ते च सर्वे एकविधा अनेकविधा वेत्यपेक्षायां तेषां द्वैविध्यमाह--त इत्यादिना॥

मू ॥ अवैदान् - व्यापकङ्गलेन्त्रु, अव्यापकङ्गलेन्त्रु मिरण्डुवर्गम् ॥ ९ ॥

छा ॥ तेच व्यापका अव्यापकाश्चेति द्विविधाः ॥ ९ ॥

व्या ॥ सर्वव्यापकीभूतभगवत्स्वरूपप्रतिपादकत्वात् व्यापकाः, भगवदवतारगुण-चेष्टितेष्वेकैकप्रतिपादकत्वात् अव्यापका इत्युभयविधा इत्यर्थः ॥ ९ ॥

(१०) वर्गद्वयस्यापि मिथस्तौल्यमाशंक्य अव्यापकापेक्षया व्यापकत्रयस्य श्रैष्ठ्य-माह—अव्यापकेत्यादिना—

मू ॥ अव्यापकङ्गलिल् व्यापकङ्गल् मून्त्रु श्रेष्ठङ्गल् ॥ १० ॥

छा ॥ अव्यापकापेक्षया व्यापकास्त्रयः श्रेष्ठाः ॥ १० ॥

व्या॥ अव्यापकभूतेभ्यः सकलमन्त्रेभ्यो *"नारायणाय विद्महे वासुदेवाय धीमहि त-न्नो विष्णुः प्रचोदयादि "ति विष्णुगायत्र्यामधीयमानं व्यापकमन्त्रत्रयं श्रेष्ठमित्यर्थः ।

अस्यां विष्णुगायत्र्यां नारायणवासुदेवविष्णुशब्दा स्तत्तन्मन्त्रप्रधाननामत्वात् साधारणाभ्यां प्रणवनमोभ्यां सहितस्य मन्त्रत्रयस्य चोपलक्षकाः ॥ १० ॥

(११) एतद्व्यापकमन्त्राणां त्रयाणामपि मिथस्तौल्यमाशंक्य तत्र महाश्रीमन्त्रस्य प्राधान्यमाह—एतेषां त्रयाणमित्यादिना—

मू ॥ इवै मून्रिलंवैत्तुक्कोण्डु पेरियतिरुमन्त्रं प्रधानम् ॥ ११ ॥

छा ॥ एतेषां त्रयाणां मध्ये महान् श्रीमन्त्रः प्रधानभूतः ॥ ११ ॥

व्या ॥ अव्यापकेभ्यः श्रेष्ठानां व्यापकमन्त्राणां त्रयाणां मध्ये 'नारायणाय विद्महे" इति प्रथमोपात्तत्वात्, अर्थपूर्त्यादेश्च †"नास्ति चाष्टाक्षरात्परः"‡"न मन्त्रोष्टाक्षरात्परः"

---

"स्वप्रकाशानि मन्त्राणि व्याप्यान्यव्यापकानिचे"ति पाद्मोत्तरवचनमभिप्रेत्य भगवन्मन्त्रस्य व्यापकत्वाव्यापकत्वरूपद्वैविध्यमाह—तेचेति ॥ ९ ॥

(नारायणायविद्महे)-नारायणं उपास्महे । (वासुदेवाय धीमहि)-वासुदेवं ध्यायामः । (तन्नो विष्णुः प्रचोदयात्) तत् ध्यानं, नः-अस्माकम्, विष्णुः-सर्वव्यापनशीलो भगवान्, प्रचो-दयात्-निर्वर्तयतु इत्यर्थः ।

"अष्टाक्षरश्च यो मन्त्रो द्वादशाक्षर एवच । षडक्षरश्च यो मन्त्रो विष्णोरमिततेजसः । एते मन्त्राः प्रधानास्स्यु र्वैदिकाः प्रणवै र्युताः" इति पांचरात्रवचनमत्रानुसन्धेयम्। प्रधानास्स्युः-श्रेष्ठाः भ-वन्तीत्यर्थः । "षडष्टद्वादशमनुः व्यापकः परिकीर्तितः" इति हयग्रीवसंहिता वचनञ्च ।

'यद्यपि "पञ्चैते व्यापका मन्त्राः पञ्चरात्रे प्रतिष्ठिताः" इति लक्ष्मीतन्त्रे जितन्ताप्रणवयोरपि व्यापकत्वमुक्तम्, तथापि श्रुत्याद्यनुसारादेवमेवाचार्यै र्निर्वाहः कृतः' इति श्रीरहस्यत्रयजीवातौ श्रीना-रायणमुनीन्द्रैरुक्तम् ॥ १० ॥

(एतेषामि)ति, इत्थं व्यापकमन्त्रत्रयसाधारणधर्ममुखेन मूलमन्त्रे मन्त्रान्तरवैलक्षण्यमुक्तम् ; अथाऽसाधारणवैलक्षण्यमाहेति सङ्गतिः । (अर्थपूर्त्यादेश्चे)त्यादिपदेन शिष्टपरिग्रह उच्यते । "यथा

---

* तै. ना. १ ॥

† नारदीयकल्पे अष्टाक्षरब्रह्मविद्या. १-४१ ॥

‡ नारसिंहपुराणे. १८-३२ ॥

१. लक्ष्मीतन्त्रे. १७-अ ॥

इत्युक्तवैभववान् श्रीमन्त्रः प्रधानभूत इत्यर्थः ॥ ११ ॥

(१२) अथान्यव्यापकरूपस्य मन्त्रद्वयस्य कोवादोष इत्याकांक्षायामाह—अन्ययोरिति॥

मू ॥ मत्तयवै यिरण्डुक्कुं अशिष्टपरिग्रहमुम् , अपूर्तियुमुण्डु ॥ १२ ॥

छा ॥ अन्ययोरशिष्टपरिग्रहोऽपूर्तिश्चास्ति ॥ १२ ॥

व्या॥वासुदेवविष्णुशब्दरूपस्यान्यव्यापकमन्त्रद्वयस्य नारायणशब्दवत् स्वरूपरूपगु-णादीनां सर्वेषामप्रतिपादकत्वेन स्वरूपमात्रप्रतिपादकत्वात् निर्विशेषचिन्मात्रवस्तुवा-

---

सर्वेषु देवेषु नास्ति नारायणात्परः । तथा मन्त्रेषु सर्वेषु नास्ति चाष्टाक्षरात्परः॥—''भूत्वोर्ध्वबाहुरद्यात्र सत्यपूर्वं ब्रवीमि वः । हेपुत्रशिष्या श्शृणुत नमन्त्रोऽष्टाक्षरात्परः ॥ अत्र ''व्यापकानांच सर्वेषां ज्यायानष्टाक्षरो मनुः । अष्टाक्षरस्य जप्ता तु साक्षान्नारायणः स्वयम्'' इति वृद्धहारीतस्मृतिवचनमनुसन्धेयम् ॥ ११ ॥

एवम्मूलमन्त्रपर्यालोचनलब्धं तत्प्राधान्यमुक्त्वा, पूर्वसूत्रविवक्षितं इतरमन्त्रयोरप्राधान्यमुपपादयितुं तदुभयपर्यालोचनलब्धमाकारद्वयं दर्शयतीति सङ्गतिं हृदिनिधायोत्तरसूत्रमवतारयति—अथेति । अन्यपदेन मूलमन्त्राद्भिन्नत्वं, व्यापकमन्त्रत्वञ्चविवक्षितमित्याह—वासुदेवेति । (स्वरूपमात्रप्रतिपादकत्वात्) व्यापकस्वरूपमात्रप्रतिपादकत्वादित्यर्थः । 'अशिष्टपरिग्रहः' इति परिग्रहशब्दसमभिव्याहारात् अशिष्टशब्दः-''वेदोऽनृतो बुद्धकृतागमोऽनृतः'' इत्याद्युक्तकुदृष्टिपर इत्यभिप्रायेणाह—निर्विशेषेति । 'कार्त्स्न्येन वेद स्तत्वावेदकः, गुणविभूत्याद्यंशे अतत्वावेदकः' इत्यभ्युपगन्तारोऽशिष्टाः । ''सत्यं ज्ञानमनन्तं ब्रह्मे''त्यादिना चिन्मात्रस्वरूपस्याकल्पितत्वोक्त्या, 'ऐकमेवाद्वितीयम्'' 'इत्यादिना द्वितीयमिथ्यात्वोक्त्याच, तदंशे तत्वावेदकत्वम्, ''तैदैक्षत, तत्तेजोऽसृजत'' इत्यादिषु गुणविभूत्यादेः स्वरूपेण प्रतिपादनेपि असत्यत्वसत्यत्वसम्भवात्, ''तै इमे सत्याः कामाः'' ''ऐतांश्च सत्यान् कामान्'' ''सैत्यकाम स्सत्यसङ्कल्पः'' इत्यादिषु सत्यशब्दस्य 'अँथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्'' इत्यादिवाक्ये षष्ठ्यन्तसत्यशब्दस्येव आपेक्षिक सत्यत्वपरत्वसम्भवाच्च तदंशे न तत्वावेदकत्वमिति वदतां विष्णुवासुदेवमन्त्रयो र्व्याप्तितत्प्रकारव्यापकगुणानां प्रतिपादनेपि नविरोधः । तेषां कल्पितत्वसम्भवात् इति अशिष्टत्वेन निर्दिश्य कुदृष्टिपरिग्रहोक्त्या व्यज्यते।मूलमन्त्रे तु नारपदेन गुणविभूत्यादीनां कल्पितत्वाभावोक्त्या कुदृष्टिमतविरोधः सर्वोपजीव्ये तत्र स्फुट इति भावः । परिग्रहशब्दः स्वमताविरोधसम्भावनाप्रयुक्तादरपरः । स्वविवक्षितज्ञातव्यसकलार्थप्रतिपादकत्वाभावः अपूर्तिशब्दार्थः । एतत्सर्वमभिप्रेत्यैव—निर्विशेषचिन्मात्रवस्तुवादिभिरितिविशेषितम् । निर्विशेषत्वं नाम सकलविशेषरहितत्वम् । विशेषो भेदः। सोऽपि-सजातीयविजातीयस्वगतरूपेण त्रिविधः । भिन्नलक्षणो भेदः-विजातीयः । भिन्नलक्षणोभेदः सजातीयः । व्यावृत्त्यनुवृत्तिभेदः स्वगतभेदः । अन्यव्यावृत्त्यादयो व्यावृत्तिधर्माः । नित्यत्वादयोऽनुवृत्तिधर्माः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति सत्यपदात् - अनृतव्यावृत्तिः, ज्ञानपदात् - जडव्यावृत्तिः । अनन्तपदात् - परिच्छिन्नव्यावृत्तिः । अनुवृत्तिः - इदंतानुवृत्तिः । धर्मपदस्य - व्यावृत्त्यनुवृत्तिशब्दादौ योजनी-

---

१. तै. उप. आनन्द. १ २ ॥
२. छा. उप. ६-२-१ ॥
३. छा. उप. ६-२-३ ॥
४. छा. उप. ८-३-१ ॥
५. छा. उप. ८-१-६ ॥
६. छा. उप. ८-१-५ ॥
७. बृ. उप. ४-३-६ ॥

दिभिः कुदृष्टिभिरत्यादरेण स्वीक्रियमाणत्वादशिष्टपरिग्रहः, व्याप्याध्याहारादिसापेक्षतारूपापूर्तिश्चास्तीत्यर्थः ।

"षडक्षरी-व्याप्यपदार्थान्, व्यापनप्रकारं, व्याप्तिफलं, व्यापकस्य गुणांश्चानुक्त्वा व्याप्तिमात्रप्रकाशकत्वात् अपूर्णा । व्यापनप्रकारबोधिकापि व्याप्यपदार्थबोधकशब्दाभावात् 'सर्वं वसति' इत्यर्थवशेन सर्वशब्दप्रवेशेपि, तत्र गुणान्वयाभावेन तत्सिद्धये

---

यम् । एवं रूपैर्विरहितत्वं - निर्विशेषत्वम् । स्वयंप्रकाशत्वम्—चित्त्वम् । मात्रशब्देन - जडत्वव्यावृत्तिः । "[1]यथा सैन्धवघनः" इतिवत् । "सत्यस्यैव ब्रह्मणः, '[2]सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्मे'ति सजातीयविजातीयनिखिलभेदनिरसनेन निर्विशेषतैव प्रतिपादिते"ति तेषामुक्तिः । अयमर्थः - श्रीभाष्यादिषु द्रष्टव्यः । (व्याप्याध्याहारादि) इत्यादिपदं · गुणवाचकपदाध्याहारपरम् ।

विष्णुवासुदेवमन्त्रयोः अर्थापूर्तिप्रकारं, श्रीमूलमन्त्रस्यार्थपूर्तिप्रकारञ्च प्रतिपादयितुं, पूर्वाचार्यप्रबन्धवाक्यमुदाहरति—षडक्षरीति । अत्रायमाशयः · षडक्षरी तावत्, विष्णुपदेन 'विषॢ व्याप्तौ' इति धातोः कर्तरि कृदन्ततया व्युत्पन्नेन, त्रिविधचेतनाचेतनरूपव्याप्यपदार्थापेक्षया जलतेजोवायूनामिवान्तस्संयोगमात्रेण व्यापकत्वं विना शरीरेषु जीवस्वरूपाणामिव धारकतयान्तःप्रवेशरूपव्याप्तौ धारकत्वरूपप्रकारस्य, अन्तःप्रवेशरूपव्याप्तिफलभूतधारणनियमनपूर्वकयादृच्छिकसुकृतादिमुखेन "[3]नित्यकिङ्करःप्रहर्षयिष्यामि" इत्युक्तचतुर्थीव्यङ्ग्यकैङ्कर्य हेतुभूतायनपदवाच्यप्राप्तिपर्यन्तफलस्य, तादृशफलपर्यन्तव्यापारहेतुभूतानां ज्ञानशक्त्यादिवात्सल्यादिरूपव्यापकस्वरूपगुणानाञ्च अप्रतिपादनेन, तत्स्वरूपमात्रस्य व्यापकत्वेनैव रूपेण प्रतिपादनेन चापूर्णा । तथा श्रीद्वादशाक्षरीमन्त्रोप्यपूर्णः । 'वस-निवासे' इत्यस्माद्धातोः कर्त्रर्थके औणादिके उंदेवञ्प्रत्यये सति, प्रत्ययस्य - ञित्त्वात् उपधावृद्धौ च सत्यां 'वसतीति-वासुदेवः' इति व्युत्पत्त्या निष्पन्नस्य वासुदेवशब्दस्य आवृत्त्याश्रयणेन "वसत्यत्रेति-वासुदेवः" इत्यधिकरणव्युत्पत्त्या धारकत्वलाभेन व्याप्तिप्रकारवाचित्वेऽपि, नारायणशब्दे बहुव्रीहिवृत्ताविव व्याप्यवाचकपदाभावात् । अन्यथा 'सर्वत्र वसती'ति पदाध्याहारप्रसङ्गात् । नच विष्णुशब्दस्य 'विषॢ - व्याप्तौ' इति व्यापनक्रियामात्रवाचिनो धातोरौणादिकनुप्रत्ययान्तत्वेन व्युत्पन्नतया धारकत्वालाभेन व्याप्तिप्रकारवाचित्वाभावेपि, वासुदेवशब्दे धातो र्व्यापनक्रियावाचित्वं विना वर्तनक्रियावाचित्वाश्रयणेनाधिकरणव्युत्पत्तौ विष्णुशब्दे ईश्वरस्य व्याप्यत्वबाधवत् बाधकाभावात्, "[4]सर्वत्राऽसौ समस्तञ्च" इत्यादिवचनबालाच्च व्याप्तिप्रकारवाचित्वमुपपद्यते ; अतएव वचनबलात् आवृत्तिः ; कर्तरिव्युत्पत्तौ अध्याहारोपि आवश्यक इति वाच्यम्,—तथापि वचनबलेनाध्याहारावृत्त्याश्रयणेन बोधस्य नारायणपदजन्यबोधापेक्षया त्रेधाविलम्बस्य दुरुद्धरत्वात् । नच नारायणपदे तत्पुरुषबहुव्रीहिवृत्तिद्वयाश्रयणेन "[5]नारस्त्विति सर्वपुंसाम्" "[6]आपो नारा इति प्रोक्ताः" इत्यादिवचनमेवाश्रयणीयमिति वाच्यम्, नारायणशब्दे तत्पुरुषबहुव्रीह्योः लोकसिद्धतया वचनस्योपष्टम्भकमात्रत्वात् । वासुदेवशब्दे औणादिकप्रत्ययकल्पनस्य, बाहुलकाधिकरणव्युत्पत्तिकल्पनस्य, अध्याहारकल्पनस्य च वचनैकमूलत्वात् । किञ्च, अध्याहारेपि सर्वशब्दस्य वासुदेवशब्दान्वयो दुर्घटः । स-

---

१. बृह. उप. ६-५-१३ ॥
२. छा. उप. ६ २-१ ॥
३. स्तोत्ररत्ने. ४६ ॥
४. वि. पु. १-२-१२ ॥
५. पाद्मोत्तरे ॥
६. वि. पु. १-४-६ ॥

भगवच्छब्दस्याध्याहर्तव्यत्वात्, व्याप्तिफलानुक्तेश्च श्रीद्वादशाक्षर्यप्यपूर्णा । अयं मन्त्रस्तु न तथा, व्याप्यपदार्थैः, व्यापनप्रकारेण, व्याप्तिफलेनच सह व्यापकगुणान् शब्दश-

कृत् श्रुतस्य सर्वशब्दस्य कर्तरि व्युत्पत्तौ च व्यापनक्रियाधिकरणसमर्पकत्वेन वर्तनक्रियाकर्तृसमर्पकत्वेनचान्वयाङ्गीकारे वक्ष्यमाणरीत्या गुणानमव्याप्यत्वेन गुणांशेऽप्यनन्वयापातात् । वाचनिकसर्वार्थाश्रयत्वरूपार्थबलेन कर्तरिव्युत्पत्तावध्याहृताधिकरणसमर्पकगुणेतरसर्वविषयसर्वशब्दातिरेकेणाधिकरणव्युत्पत्तौ वाचनिकासङ्कुचितसर्वार्थाश्रयत्वरूपार्थबलेन भगवत्स्वरूपेतरयावद्विषयस्य सर्वशब्दस्य, 'सर्वमत्रवसति, सर्वत्र वसती'ति पृथगध्याहारे विवक्षितार्थबोधस्य तुरीयविलम्बापत्तिः । अथ तत्परिहारार्थे पृथगध्याहारमपहाय वाचनिकसर्वार्थाश्रयत्वरूपार्थबलेनाधिकरणव्युत्पत्तौ अध्याहृतस्य भगवत्स्वरूपेतरयावद्विषयस्य सर्वशब्दस्यैव लाघवतर्कसहकृतवचनबलेन कर्तरिव्युत्पत्त्यन्वययोग्यतानुसारेण स्वरूपगुणेतरयावत्परतयार्थवैरूप्याश्रयणेन कर्तरिव्युत्पत्तावपि अन्वयाङ्गीकारे वचनैकमूलकव्युत्पत्तिविशेषान्वययोग्यतापरामर्शाधीनविरूपार्थकसर्वशब्दावृत्त्या विवक्षितार्थबोधस्य तुरीयविलम्बापत्तिः । "सर्वत्रासौ समस्तञ्चे"ति सप्तमीप्रथमारूपविभक्तिभेदनिबन्धन सर्वशब्दवैरूप्येण पञ्चमविलंबापत्तिश्च । अथार्थवैरूप्यनिबन्धनावृत्तिवैरूप्यपरिहारार्थं 'सर्वमत्र वसती'त्यत्र सर्वशब्दस्य गुणपरत्वं विना वासुदेवमन्त्रस्थभगवच्छब्देन गुणसिद्ध्यभ्युपगमेन तुरीयदोषपरिहारेऽपि, गुणसिद्ध्यर्थं पदान्तरसापेक्षतया विवक्षितार्थबोधविलंबरूपः पञ्चमदोषो दुर्वारः । एवं व्याप्तिफलाप्रतिपादनादपि उभयोरप्यपूर्तिर्द्रष्टव्या । पूर्वोक्तरीत्या प्राप्तिरूपस्य व्याप्तिफलस्यायनपदेनेव विष्णुवासुदेवपदाभ्या मप्रतीतेः । नारायणपदे तु- तत्पुरुषसमासे अधिकरणव्युत्पन्नायनपदेनाधारकत्वस्य, बहुव्रीहिसमासे तेनैव व्यापकत्वस्य, नारपदेन व्याप्यपदार्थानां, तत्पुरुषे कर्मणिव्युत्पन्नायनपदेन प्राप्यत्वस्य, तत्पुरुषे नारपदेन गुणानाञ्च प्रतिपादनेनार्थपूर्ति द्रष्टव्या—इति ।

अत्र तात्पर्यदीपिकाकारास्तु—मन्त्रद्वयघटकयो र्वासुदेवविष्णुशब्दयोः, अशिष्टपरिग्रहः अशिष्टकर्तृकः परिग्रहातिशयः, गुणविग्रहाद्यप्रतिपादकत्वात्, स्वाभिमतसर्वाधिष्ठानरूपस्वप्रकाशब्रह्मप्रतिपादकतयाद्वैतिमिरतिशयेन तावादृताविति भावः । एतेन द्वादशाक्षरस्य भगवच्छब्दघटितत्वात् अशिष्टपरिग्रहातिशयासंभवेऽपि नानुपपत्तिः । यद्यपि, अहिर्बुध्न्यसंहितायां "वसत्यास्मिन् यतो विश्वं तत्रापि च वसत्ययम् । वासुशब्दार्थ उद्दिष्ट" इति कर्तृसाधनतया, अधिकरणसाधनतया वा उणन्तं वासुशब्दं व्युत्पाद्य, "वागन्ता परिकीर्त्यते । तन्तुवत्सकलार्थेषु सन्तनोतीति वा स्मृतः" इति तदवयवस्य वाशब्दस्य ( अर्थमुक्त्वा ) सुशब्दस्य "प्रसूयतेऽखिलान् भावान् प्रसूति प्रेरयत्यपि । मखेष्वभिषुत स्सद्भिरिति स्वर्थोयमुच्यते" इति 'षूङ्-प्राणिगर्भविमोचने' 'षु-प्रसवैश्वर्ययोः' 'षुञ्-अभिषवे' इत्येतेभ्यः कर्तरि सम्प्रदानेच सुप्रत्यये निष्पत्तिं प्रदर्श्य, "द्योतते स्वयमेवायं सृष्ट्याद्यैः क्रीडति स्वयम् । स्तूयतेच सदादेवैः इति देवार्थ ईरितः"इति देवशब्दसमुदायार्थमुक्त्वा, "दाताच सर्वकामानां शोधितश्चान्तको सताम् । रक्षिता सर्वभूतानामिति देकार उच्यते" इति, "सर्वैं स्संभजनीयश्च वोढाच सकलात्मनाम् । वकारार्थोयमुद्दिष्टः" इति च दाञ् दैप् दाप् देङ्भ्यो दानशोधन लवन रक्षण क्रियेभ्यो लट् प्रत्ययेच तदवयवयोः देवशब्दयोर्निष्पत्तिमुक्त्वा, "इति सूक्ष्मागति स्त्वियम्" इति सूक्ष्मार्थप्रदर्शनं निगमय्य, "वकारेणात्र चाधारो वासुदेवो निरूप्यते। आकारेणादिदेवस्तु सङ्कर्षण उदीर्यते" इत्यत्र तद्बीजभूतवाकारस्य-मोक्षाधारकतां, आदिदेवशब्दैकदेशभूताकारस्य-व्यूहा-

१. वि. पु. १-२-१२ ॥

क्त्यैव प्रतिपादयतीति इतरमन्त्रद्वयापेक्षया अस्यार्थपौष्कल्यनिबन्धनाधिक्यमस्ति'' इति अन्यव्यापकमन्त्रापूर्तिम्, श्रीमन्त्रस्य पूर्तिश्च सुस्पष्टं कृष्णपादाचार्याः आहुः॥ १२॥

(१३) अस्य शिष्टपरिग्रहोऽप्यस्तीत्याह—इममित्यादिना—

दिसङ्कर्षणस्मारकतां प्रदर्श्य, ''यो वासुदेवो भगवान् मोक्षाधार स्सनातनः।सङ्कर्षण स्स एवेति वाकारार्थो निरूप्यते'' इति तयोरभेदे वाशब्दतात्पर्यमुक्त्वा, '' भुवनं कर्मचैवादौ योऽसूयत सनातनः। स सोम उदितः सोमः प्रद्युम्नः पुरुषोत्तमः । उद्दाम उदपश्चात्र संकर्षण उदीर्यते । संकर्षणदशायां हि सम्पूर्ण उदयो हरेः '' इति सकारस्य-सर्गधर्मनेतृप्रद्युम्नपरताम् , उकारस्यचोदयशब्दोदित ज्ञान प्राकट्यवत्संकर्षणपरतामुक्त्वा ''वासुदेवात्मको योऽसौ संकर्षण उदीरितः। प्रद्युम्नोपि स एवेति सुकारार्थोऽयमुच्यते '' इति सुकारबोध्येन संकर्षणप्रद्युम्नाभेदेन वासुदेवप्रद्युम्नाभेदस्यार्थसिद्धत्वमुक्त्वा, ''दत्तो येनावकाशोऽप्सु शयानेन महात्मना । क्षेत्रक्षेत्रज्ञयो र्वस्तु स्वनाभीकमलोदरे। एकारेण जगद्योनिः प्रद्युम्नःपरिपठ्यते । सङ्कर्षणात्मको यस्स प्रद्युम्नः परिकीर्त्यते । अनिरुद्ध स्स इत्येव दकारार्थो निरूप्यते'' इति दत्तावकाशशब्दैकदेशभूतदकारजगद्योनिभावाधिष्ठितैकाराभ्यां अनिरूद्धप्रद्युम्नसमुदायेन च तदभेदः प्रदर्श्यत इत्युक्त्वा, '' एवं वर्णत्रयेणोक्तं व्यूहतादात्म्यमुत्तमम् । उपसंहाररूपेण पुनर्वेति तदुच्यते । लेशतो वासुदेवाख्यः परार्थस्ते प्रदर्शितः'' इति परार्थप्रदर्शनोपसंहारः कृतः।—तथा ''व्याप्तिकान्तिप्रवेशेच्छा स्तत्तद्धातुनिबन्धनाः । परत्वेऽभ्यधिका विष्णो र्देवस्य परमात्मनः'' इत्यारभ्य त्रिविधपरिच्छेदराहित्यरूपाया व्याप्तेः, ज्ञानबलादिगुणोत्कर्षरूपायाः कान्तेः, सर्वाङ्गप्रविष्टत्व सर्वाधारत्वयो स्सर्वकालीनसकलसत्पुरुषेच्छाविषयत्वस्य च विषुवशविशादिभ्योः कथञ्चित् व्युत्पादितेन विष्णुशब्देन विगतीत्यतो धात्वन्तराच्च कथञ्चिद्व्युत्पादितेन विशब्देन सर्वप्रजनयितृत्वसर्वसमवायित्वयोः, ष्णुशब्देन-सर्वपुरुषार्थप्रसवितृत्वस्याभिधानं प्रदर्श्य, ''परस्त्वक्षर लभ्यः'' इत्यादिना ''अमृताधितसर्वार्थो ज्योतिस्त्रयसमिन्धनः । ददात्यभयमित्येष परोर्थः परिकीर्त्यते'' इति सर्वभोग्यत्वोपपादकत्वसर्वज्योतिःप्रकाशकत्वाभयप्रदत्वान्यक्षरलभ्यानीति विस्तरेण विष्णशब्दार्थः प्रदर्शितः ।—तथापि पांचरात्रप्रामाण्यानभ्युपगमात् वैष्णवपुराणादिगतस्य वासुदेवादिशब्दनिर्वचनस्य सर्वाधिष्ठानविषयतयाऽपि कथञ्चिद्योजयितुं शक्यत्वात्, नारायणशब्दस्य पुराणेष्वेव '' नारस्त्विति सर्वपुंसां समूहः परिकथ्यते '' इत्यादिना नानाजीवाभिभूषितपुरुषार्थप्रदत्वादीनां प्रतिपादितत्वात्, वासुदेवादिशब्देषु तेषामादरातिशय इत्याशयः—इतिप्राहुः ।

अन्येतु - ''पूर्वपदात्संज्ञायामगः'' इति संज्ञायामेव णत्वविधानेन''न तु नारायणादीनां नाम्नामन्यत्रसम्भवः । अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः'' इति वचनेन च निस्साधारण्यं नारायणपदम्।''उणादयो बहुलम्'' इत्यत्र संज्ञाग्रहणानुवृत्तावपि क्वचिदुणादिप्रत्ययविधौ पुनस्संज्ञाग्रहणदर्शनेन औणादिकानां प्रत्ययानां क्वचिदसंज्ञायामपि अनुमाना द्वासुदेवादिशब्दा योगेनान्यत्रसंभाव्यन्त इति साधारणाः । इत्थञ्च नारायणपदा द्वासुदेवपदादीनि प्रचुरं शैवादिभिः परिगृह्यन्त इत्याशय इत्याहुः ॥ १२ ॥

अथ मूलमन्त्रस्य चतुर्विधपरिग्रहातिशयरूपाधिक्यम्प्रसाध्यते—इममिति (विष्णुगायत्र्यामि) त्यादि, अत्रेयं शंका—श्रीमूलमन्त्रस्य विष्णुगायत्र्यां प्रथमोपादाना त्प्राधान्यमुच्यते, तदसत्—ततः

१. पाद्मोत्तरे ॥
२. अष्टा. ८-४-३ ॥
३. अष्टा. ३-३-१ ॥

मू ॥ इत्तै-वेदङ्गलुं, ऋषिहलुं, आल्वार्हलुं, आचार्यर्हलुं, विरुम्बिनार्हल् ॥

छा ॥ इमं-वेदाः, ऋषयः, सूरयः, आचार्याश्च प्रत्यपादयन् ॥ १३ ॥

व्या ॥ अयमर्थः, विष्णुगायत्र्यां व्यापकमन्त्रत्रयकथनेपि प्रथमं नारायणशब्दस्य प्राधान्येनोपादानात्, *"विश्वं नारायणमि"त्यारभ्य, *"नारायणपरं ब्रह्म तत्वं नारायणः परः।नारायणपरोज्योति रात्मा नारायणःपरः।यच्च किञ्चिज्जगत्यास्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्चतत्सर्वं व्याप्य नारायणःस्थितः" इति सकलवेदान्तनिगमनभूतनारायणानुवाके,†"एको हवै नारायण आसीन्नब्रह्मा नेशनः नेमे द्यावापृथिवी" इति महोपनिषदि,‡"चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायणः"इत्यारभ्य‡"दिशश्च प्रदिशश्च सर्वं नारायणः" इत्यन्तं मध्येच सुबालोपनिषदि, §"यस्यात्मा शरीरं यस्य पृथिवी शरीरमि"त्यारभ्य "यस्यमृत्युः शरीरमि" त्यन्तं मध्यगतपर्यायेषु §"एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्यन्तर्यामिब्राह्मणेच, वा-

---

पूर्वे द्विरभ्यस्तरुद्रशब्दप्राधान्यप्रसङ्गात्, तथाभूतमन्त्रदेवशब्दे तत्प्रसङ्गाच्च । रुद्रगायत्र्यां प्रथमं पुरुष पदोपादानेन तस्यैव सर्वापेक्षया प्राधान्यप्रसङ्गाच्च । तथैव गरुडगायत्र्यां, दन्तिगायत्र्यां च पुरुषशब्दस्य प्रथमोपादानेन तत्प्रसङ्गाच्च । विष्णुगायत्रीसमाख्यावत् नारायणपदोपक्रमस्यस्वतन्त्रवेदपुरुषेच्छाधीनत्वेन प्राधान्यनियमकत्वे मानाभावश्चेति । — अत्रोच्यते—यदुक्तं पुरुषमहादेवरुद्रशब्दानां रुद्रगायत्र्यामाम्नानेन प्रग्रिहातिशयप्रसङ्ग इति, तन्न, विकल्पासहत्वात् । किं देवतान्तरपरतया पुरुषादिशब्दानां परिग्रहातिशय आपाद्यते, उत भगवत्परतया । नाद्यः-"अम्भस्यपारे" "यमन्तस्समुद्रे" इति नारायणानुवाकादिप्रसिद्धसमुद्रशायित्वलिङ्गात्, "अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ" इत्युक्तनारायणाष्टर्चसंवादबलात्, रुद्रगायत्रीषु उपक्रमे पुरुषश्रुत्यभ्यासबलात्, शचीपतिरूढसहस्राक्षश्रुतिप्रतिबन्धिबलात्, "नतु नारायणादीनां नाम्नामन्यत्र सम्भवः" इत्यादिवचनबलात्, "रुजं द्रावयते यस्मात्तस्मा द्रुद्रो जनार्दनः" "ईशानादंवचेशानः महादेवो महत्वतः"इत्यादिवचनबलात्,विष्णुगायत्र्यामनन्यथासिद्ध भगवदसाधारण मन्त्रयोपादानबलात् , श्रीसहस्रनामाध्यायपाठबलाच्च,अम्भस्यानुवाकस्य भगवत्परतयाथर्वशिखाविलासादिषु स्थापितत्वेन पुरुषमहादेवरुद्रशब्दानां देवतान्तरपरत्वासम्भवात् । नद्वितीयः पुरुषमहादेवरुद्रशब्दानां भगवत्परत्वस्य वासुदेवविष्णनारायणशब्दाधीनतया तन्निर्णायकत्वाभिप्रायेणैव विष्णुगायत्र्यां व्यापकमन्त्रत्रयोपादानेन तस्यैव परिग्रहातिशयोपपत्तेः। अतः विष्णुगायत्र्यां प्रथमोपादानात् मूलमन्त्रस्य प्राधान्य मुपपद्यते—इति ।

"प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् । अकार उकार मकार इति । तानेकधा समभर त्तदेतदोमिति । यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् । ओं नमोनारायणायेति मन्त्रोपासकः । वैकु-

---

* तै. ना. ११-अनु ॥
† महोप. १-१-१॥
‡ सुबालोप. ६. खं ॥
§ सुबालोप. ७-खं ॥
१. तै. ना. १-अनु. १ ॥
२. तै. ना. १-३ ॥
३. तै. ना. १-१४ ॥
४. लैंगे. पूर्वे ॥
५.

सुदेवविष्णुशब्दावनादृत्य, नारायणशब्दमवलंब्य भगवत्स्वरूपादिनिर्देशाच्च अपौरुषेय-नित्यनिर्दोषस्वतःप्रमाणभूतवेदा अपि प्रत्यपादयन् ।

*"यथा सर्वेषु देवेषु नास्ति नारायणात्परः । तथा सर्वेषु मन्त्रेषु नास्ति चाष्टा-

---

ष्ठभुवनं गमिष्यति" "नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते । नारायणादिन्द्रो जायते । नारायणात्प्रजापतयः प्रजायन्ते । नारायणात् द्वादशादित्या रुद्रा वसव स्सर्वाणि च्छन्दांसि । नारायणादेव समुत्पद्यन्ते । नारायणात्प्रवर्तन्ते । नारायणे प्रलीयन्ते । " "ब्रह्मा नारायणः। शिवश्च नारायणः । शक्रश्च नारायणः । " "ओमित्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् । ओमित्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पंचाक्षराणि । इत्यष्टाक्षरं छन्दसागायत्री च । एतद्वै नारायणस्याष्टाक्षरं पदम् । यो हवै नारायणस्याष्टाक्षरं पदमध्येति।" "एकाक्षरां द्विपदां षट्पदाञ्च वाचं देवा उपजीवन्ति विश्वे" "अथ हैनं भारद्वाजः पप्रच्छ याज्ञवल्क्यम् । किन्तारकं किन्तारयतीति । सहोवाच याज्ञवल्क्यः । ओं नमो नारायणायेति तारकं चिदात्मकमित्युपासितव्यम् । ओमित्येकाक्षरमात्मस्वरूपम् । नम इत्यक्षरं प्रकृतिस्वरूपम्। नारायणायेति पंचाक्षरं परब्रह्मस्वरूपम् । " इत्याद्युपनिषद्वाक्यान्यप्यत्र द्रष्टव्यानि ।

ऋषिवचनान्युदाहरति—यथेति । नारदीयकल्पाष्टाक्षरब्रह्मविद्याध्यायस्थवचनम्। "मन्त्राणां परमो मन्त्रो गुह्यानां गुह्यमुत्तमम् । पवित्रंच पवित्राणां मूलमन्त्र स्सनातनः ॥ ११ ॥ भगवानपि देवानां देवदेवो हरिः स्वयम् । जगदष्टाक्षरेणैव सृजत्यवति हन्तिच ॥ १२ ॥ सर्ववेदान्तसारार्थः... अपुनर्भवकांक्षिणाम् ॥ १३ ॥ यस्य यावांश्च विश्वास स्तस्य सिद्धिस्तु तावती। एतावानिति नैतस्य प्रभावः परिमीयते ॥१४॥ चतुरन्तां भुवं भोक्तुं प्राप्तुं चामरराजताम् । अष्टाक्षरो ह्युपायस्स्यात् त्रिवर्गस्य तु किंपुनः ॥१५॥ बहवोऽपि महात्मानः मुनय स्सनकादयः । अष्टाक्षरं समाश्रित्य निर्जग्मुर्वैष्णवं पदम् ॥१६॥ एकोऽष्टाक्षर एवायमलमात्मविशुद्धये । क्षुद्रमन्त्रजपस्त्वन्यं केवलं कालयापनम् ॥१७॥ भूतवेतालरक्षांसि तथा रोगापमृत्यवः । अष्टाक्षरन्तु संश्रुत्य प्रद्रवन्ति दिशोदश॥ १८ ॥ यत्राष्टाक्षरसंसिद्धः महाभागो महीयते । न तत्र संचरिष्यन्ति व्याधिदुर्भिक्षतस्कराः ॥१९॥ तस्माद्विहाय सर्वाणि मन्त्रजालानि सिद्धिमान् । जपेदष्टाक्षरं विश्वमूर्तिं नारायणं स्मरन् ॥२०॥ देवदानवगन्धर्वसिद्धविद्याधरादयः । प्रणमन्ति महात्मानमष्टाक्षरविदां नरम् ॥ २१ ॥ गुरूण्यखिलपापानि जन्मान्तरकृतान्यपि । अष्टाक्षरजपेनैव क्षीयन्ते नात्रसंशयः ॥२२॥ " इत्यारभ्य, "व्यक्तंहि भगवानेष साक्षान्नारायणो नृणाम्। अष्टाक्षरस्वरूपेण मुखेषु परिवर्तते ॥३१॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायण स्स्मृतः ॥३२॥ नारायणः परं ब्रह्मे"त्यादि "आलोड्य सर्वशास्त्राणि विचार्यच पुनःपुन । इदमेकं सुनिष्पन्नं ध्येयो नारायण स्सदा ॥३९॥ किन्तस्य... सर्वार्थसाधकः ॥ ४० ॥ यथा सर्वेषु...अष्टाक्षरात्परः ॥ ४१ ॥ " इत्यादि प्रथमाध्यायवचनानि, "आसीना वा शयानावा तिष्ठन्तो यत्र कुत्रवा। नमो नारायणायेति मन्त्रैकशरणा वयम् ॥ ७० ॥" इत्यादिचतुर्थाध्यायवचनानि चात्रानुसन्धेयानि ।

---

* नारदीयक. अष्टा. १-४१ ॥
१. नारायणोपनि. २ ॥
२. नारा-उप. ३ ॥
३. नारा-उप. ४ ॥
४. यजु. तै. शाखा. २-अष्टक-८-प्रश्न. ८ अनु-६२-पं-६-७-वा ॥
५. तारसारोपनिषदि ॥

क्षरात्परः" । *"भूत्वोर्द्ध्वबाहुरत्राद्य सत्यपूर्वं ब्रवीमि वः । हे पुत्रशिष्याः शृणुत न

(भूत्वे)ति, नारसिंहपुराणवचनम् । "किं जपन् मुच्यते तात सततं विष्णुतत्परः । संसारदुःखात् सर्वेषां हिताय वद मे पितः ॥ १ ॥" इति श्रीशुकेन पृष्टः श्रीवेदव्यासः प्राह—"अष्टाक्षरं प्रवक्ष्यामि मन्त्राणां मन्त्रमुत्तमम् । यं जपन्मुच्यते मर्त्यो जन्मसंसारबन्धनात् ॥ २ ॥ हृत्पुण्डरीकमध्यस्थं शंखचक्रगदाधरम्। एकाग्रमनसा ध्यात्वा विष्णुं कुर्याज्जपं द्विजः ॥ ३ ॥ एकान्ते निर्जनस्थाने विष्णवग्रे वा जलान्तिके । जपेदष्टाक्षरं मन्त्रं चित्ते विष्णुं निधाय वै ॥ ४ ॥ अष्टाक्षरस्य मन्त्रस्य ऋषि र्नारायण स्स्वयम् । छन्दश्च देवी गायत्री परमात्मा च देवता ॥ ५ ॥ शुक्लं च वर्णमोंकारं नकारं रक्तमुच्यते । मोकारं वर्णतः कृष्णं नाकारं रक्तमुच्यते ॥६ ॥ राकारं कुंकुमाकारं यकारं पीतमुच्यते । णाकारमञ्जनाभन्तु यकारं बहुवर्णकम् ॥ ७ ॥ ओं नमो नारायणायेति मन्त्रस्सर्वार्थसाधकः । भक्तानां जपतां तात स्वर्गमोक्षफलप्रदः ॥ ८ ॥ वेदानां प्रणयेनैष सिद्धो मन्त्र स्सनातनः । सर्वपापहरः श्रीमान् सर्वमन्त्रेषु चोत्तमः ॥ ९ ॥ एनमष्टाक्षरं मन्त्रं जपन्नारायणं स्मरेत् । सन्ध्यावसाने सततं सर्वपापैः प्रमुच्यते ॥ १० ॥ एष एव परोमन्त्रः एष एव परन्तपः । एष एव परो मोक्षः एष स्वर्ग उदाहृतः ॥ ११ ॥ सर्ववेदरहस्येभ्यः सार एष समुद्धृतः । विष्णुना वैष्णवानां हि हिताय मनुजां पुरा । एवं ज्ञात्वा ततो विप्रः अष्टाक्षरमिमं स्मरेत् ॥ १२ ॥ स्नात्वा शुचिश्शुचौ देशे जपेत्पापविशुद्धये । जपे दानेच होमेच गमने ध्यानपर्वसु ॥ १३ ॥ जपेन्नारायणं मन्त्रं कर्मपूर्वे परे तथा । जपे त्सहस्रं नियुतं शुचि र्भूत्वा समाहितः ॥ १४ ॥ मासिमासितु द्वादश्यां विष्णुभक्तो द्विजोत्तमः । स्नात्वा शुचि र्जपे द्यस्तु नमोनारायणं शतम् ॥ १५ ॥ सगच्छेत् परमं देवं नारायणमनामयम् । गन्धपुष्पादिभि र्विष्णुमनेनाराध्य यो जपेत् ॥ १६॥ महापातकयुक्तोऽपि मुच्यते नात्र संशयः। हृदि कृत्वा हरिं देवं मन्त्रमेनन्तु यो जपेत् ॥ १७ ॥ सर्वपापविशुद्धात्मा सगच्छे त्परमां गतिम्। प्रथमेन तु लक्षेण आत्मशुद्धि र्भविष्यति ॥ १८ ॥ द्वितीयेन तु लक्षेण मन्त्रशुद्धिमवाप्नुयात् । तृतीयेन तु लक्षेण स्वर्गलोकमवाप्नुयात्॥ १९ ॥ चतुर्थेन तु लक्षेण हरे स्सामीप्यमाप्नुयात् । पंचमेन तु लक्षेण निर्मलं ज्ञानमाप्नुयात् ॥ २० ॥ तथा षष्ठेन लक्षेण भवेद्विष्णौ स्थिरा मतिः । सप्तमेन तु लक्षेण स्वरूपं प्रतिपद्यते॥ २१ ॥ अष्टमेन तु लक्षेण निर्वाणमधिगच्छति । स्वस्वधर्मसमायुक्तो जपं कुर्यात् द्विजोत्तमः॥ २२ ॥ एतत् सिद्धिकरं मन्त्रमष्टाक्षरमतन्द्रिताः । दुःस्वप्नासुरपैशाचा उरगा ब्रह्मराक्षसाः ॥ २३ ॥ जापितं नोपसर्पन्ति चौरक्षुद्रादय स्तथा । एकाग्रमानसो व्यग्रो विष्णुभक्तो दृढव्रतः ॥ २४ ॥ जपेन्नारायणं मन्त्रमेतन्मृत्युभयापहम् । मन्त्राणां परमो मन्त्रो देवतानां च दैवतम् ॥ २५ ॥ गुह्यानां परमं गुह्यमोङ्काराद्यक्षराष्टकम् । आयुष्यं धनपुत्रांश्च पशून् विद्या महद्यशः ॥ २६ ॥ धर्मार्थकाममोक्षांश्च लभते च जपन्नरः । एतत्सत्यंच धर्म्यंच वेदश्रुतिनिदर्शनात् ॥ २७ ॥ एतत्सिद्धिकरं नृणां मन्त्ररूपं नसंशयः ॥ ऋषयः पितरो देवा स्सिद्धा स्त्वसुरराक्षसाः। एतदेव परं जप्त्वा परां सिद्धिमितो गताः ॥ २८ ॥ ज्ञात्वा यस्त्वात्मनः कालं शास्त्रान्तरविधानतः । अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ॥ २९ ॥ नारायणायनम इत्ययमेव सत्यं संसारघोरविषसंहरणाय मन्त्रः । शृण्वन्तु भव्यमतयो मुदितास्त्वरागा उच्चैस्तरामुपदिशाम्यह मूर्ध्व बाहुः ॥ ३० ॥ भूत्वोर्ध्वबाहु...अष्टाक्षरात्परः ॥ ३१ ॥ सत्यं सत्यं पुनस्सत्यं उत्क्षिप्य भुजमुच्यते । वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः॥ ३२॥ आलोच्य सर्वशास्त्राणि विचार्यच पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ३३ ॥ " इति । —

* नारसिं. पु. १८-३२ ॥

मन्त्रोऽष्टाक्षरात्परः'' *''सर्ववेदान्तसारार्थः संसारार्णवतारकः। गतिरष्टाक्षरो नृणाम-पुनर्भवकांक्षिणाम्'' †''आर्ता विषण्णाः शिथिलाश्च भीताः घोरेषुच व्याधिषु वर्तमानाः। संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति'' ‡''नारायणेति शब्दोऽस्ति वागस्ति वशवर्तिनी। तथापि नरके घोरे पतन्ति ह्येतदद्भुतम्'' §''किं तत्र बहुभिर्मन्त्रैः किन्तत्र बहुभिर्व्रतैः। नमोनारायणायेतिमन्त्रः सर्वार्थसाधकः'' इत्यादिना वेदोपबृंहणरूपेषु स्वप्रबन्धेषु बहुस्थलेषु श्लाघापूर्वकमस्योक्तत्वात्, वेदार्थविशदीकरण-प्रवृत्ताः व्यासादिपरमर्षयश्चाद्दतवन्तः।

---

तत्रैवाध्यायान्तरे (६३ अं) सहस्रानीकंप्रति मार्कण्डेयः—''राजन्नष्टाक्षरो मन्त्रः सर्वपापहरःपरः। समस्तयज्ञफलदः सर्वशान्तिकरः प्रभुः ॥ ४ ॥ ओं नमो नारायणाय। गन्धपुष्पादि सकलमनेनैव निवेदयेत्। अनेनाभ्यर्चितो देवः प्रीतो भवति तत्क्षणात् ॥ ५ ॥'' इति।

(आर्ताः) इति, (आर्ताः)-नष्टैश्वर्यकामाः, (विषण्णाः)-अपूर्वैश्वर्यकामाः, (शिथिलाः)-भगवत्प्राप्तिरहिताः, आत्मप्राप्तिकामाः, (भीताः) भगवत्प्राप्तिव्यतिरेकेण संसरणाद्भीताः, 'यावदात्मभावि अशरीरियायू तिरिवानोरुवन्' इत्यनुगृहीतरीत्या केवलस्यापि संसारित्वात्। (घोरेषु च व्याधिषु वर्तमानाः)-''यन्मुहूर्तं क्षणं वापि वासुदेवो नचिन्त्यते।सा हानि स्तन्महच्छिद्रं सा भ्रान्तिस्साच विक्रिया'' ''वरं हुतवहज्वालपंजरान्तर्व्यवस्थितिः। नशौरिचिन्ताविमुखजनसंवासवैशसम्'' ''तदप्राप्तिमहादुःखे''त्यादिप्रसिद्धाः परमार्ताः, (नारायणशब्दमात्रम्) नारायणशब्दो मूलमन्त्रोपलक्षणम्। एकदेशेन तद्घटितसमुदायस्यापि स्मरणसम्भवात्। तत्र शब्दशक्त्या रक्षणविषयेषु 'सांकेत्यम्' इत्याद्युक्तरीत्या मन्त्रैकदेशस्यापि कार्यकरत्वात् मात्रशब्दप्रयोगः। अर्थबोधनरक्षणविषयेतु नारायणशब्दस्मारितमूलमन्त्रस्य परिपूर्णोपदेशरूपतया मन्त्रान्तरनैरपेक्ष्यं मात्रशब्दार्थः—इति।

(नारायणे ति,अस्मिन् श्लोके ''एते वै निरया स्तात'' ''संसारसागरं घोरम्'' इत्याद्युक्तरीत्या संसाराग्निविदीपनं नरकपातत्वेन विवक्षितम्। 'तथापी'त्यनेन नारायणशब्दस्मारितमूलमन्त्रस्य परिपूर्णोपदेशरूपस्य 'उपदेशाद्धरिं बुध्वा' इत्युक्तरीत्या तज्जन्यश्रवणादिज्ञानस्य सम्भवेऽपीति विवक्षितम्।

(किंतत्रे)ति, अस्मिन्श्लोके सप्ताक्षरतयोच्चार्यमाणस्यापि मूलमन्त्रस्य शब्दशक्त्याऽर्थबोधनेन च सर्वार्थसाधकत्वमुक्तम्।

(इत्यादिना) ''पुरा जन्मान्तरे तात द्वादशाक्षरसंज्ञकः।मन्त्रोऽभ्यस्तो महाप्राज्ञ तत्प्रभावानुगो भवान्। श्रूयतां कालदण्डोऽयं कामादीनांच सत्तम। पापानांचैव रोगाणां विविधस्य भयस्यच। नमो नारायणायेति प्रणवेन समन्वितः। हृदि तिष्ठतु ते नित्यं वाचि नित्यं भवत्विति'' ''त्रयो वेदाष्षडङ्गानि छन्दांसि विविधानिच। सर्वमष्टाक्षरान्तस्थं यच्चान्यदपि वाङ्मयम्'' ''विष्णुप्रियकरं मन्त्रं सर्वसिद्धिकरं नृणाम्। नमो नारायणायेति जपेत्प्रणवपूर्वकम्'' इत्यादि वचनान्यादिशब्दग्राह्याणि।

---

* नारदी. अध्या. १-४२ ॥
†
‡ विहगेश्वरसं. २४-पटले. १२ ॥
§ नारदी. अध्या. १.४०
१. गारुडपु-पूर्व. २२२-२२ ॥
२. श्रीविष्णुतत्त्वे ॥
३. वि-पु. ५.१३-२१ ॥
४. भागवते. ६-२-१४ ॥
५. भार-शा-मोक्ष. १९६-६ ॥
६. जितन्ता. १-४॥

*"सुन्दरगुण नारायण" †"श्रीमन्नारायण" इत्यारभ्य, ‡"आनन्दावहगुण नारायण" इत्यन्तं आदिमध्यावसानेषु श्रीपराङ्कुशसूरिभिः, प्रसादितत्वात् §"देशीया नागराश्च सम्यग् जानीयुः नमो नारायणाये"त्यारभ्य, ¶"अविच्छेदेन नमोनारायणे"ति श्रीमहत्सूरिभिः, ×'जिह्वा यथा काठिन्यम्भवति तथा नारायणे"त्यारभ्य, ÷"गुणप्रकाशकनारायणस्ये"ति श्रीस्वामिभिः, ‖"चतुर्मुखं नारायणः सृष्टवान्"

---

(समधिगते )ति, 'सम्यक् अधिगतम्-समधिगतम्, वस्तुनो भावः-वास्तवम्, समधिगतं समस्तवस्तुवास्तवं यै स्ते' इति विग्रहः ।

(सूरय आचार्याश्चे ति अत्र केचिदाचक्षते —सूरीणामाचार्याणांच परिग्रहातिशयोऽस्यास्तीति यदुक्तं, तन्नशोभते; सहस्रनामान्युक्त्वा' 'नामानि बहून्यभ्यस्य' 'नामसहस्रं' 'मालरिकेशव' इत्यादिषु अनन्तनाम्नामपि अविशेषेणानुसन्धेयत्वस्य दिव्यसूरिभिरेवानुगृहीतत्वात् । तथा तेषामनुसन्धानमपि सार्वत्रिकमिति सार्वजनीनमेव । आचार्याणाञ्चानुष्ठानपर्यन्तं सर्वभगवन्नामानुसन्धानम् । तथाह्याचार्यास्तावन्नशुद्धयाजिनः; 'इष्टानिष्टङ्गल्-वर्णाश्रमङ्गलैयुं, आत्मस्वरूपत्तेयुमवलम्बित्तिरुक्कुम्' 'इवन् तान् इवैतन्नै नेराकविट्टिलन्' इत्यादिसूक्तिविरोधात् । नित्याराधनक्रमेषु पूर्वाचार्यानुगृहीतेषु सर्वेष्वपि नित्यनैमित्तिकानुष्ठानोक्तिविरोधात् । श्रीमद्वरवरमुनिदिनचर्यायां अभिगमनोपादानाद्यनुष्ठानोक्तिविरोधात् । 'ज्ञानाधिक्यत्ताले प्रपन्नर् पूर्वाच यैर्हल्' इत्यनुगृहीतत्वेन ज्ञानाधिकानान्तेषां "मनसापि नलङ्घयेत्" मद्भक्तोऽपि नवैष्णवः""प्रियोऽपि न प्रियोऽसौमे"इत्यादि विशेषशास्त्रबलेन नित्यनैमित्तिकानुष्ठानावश्यम्भावाच्च। तदनुष्ठाने च 'ब्राह्मे मुहूर्ते चोत्थाय हरिरित्यक्षरद्वयम्' ब्राह्मे मुहूर्ते प्रथमं हरिर्हरिरित्युच्चारणीयम्' 'परव्यूहादिकान् पत्युः प्रकारान्प्रणिधायचे'त्यनुगृहीतरीत्या वासुदेवादिनाम्नां केशवादिद्वादशनाम्नामनुसन्धानं कार्यम् । आचमनादौ नामत्रयानुसन्धानं कार्यम् । ऊर्ध्वपुण्ड्धारणादौ 'चतुश्चक्रं नमस्यामि' इत्यनुसन्धानं कार्यम्। अतएव "१ मेल्लवेलुन्दु अरियेन्नपेररवम्"इत्यनुगृहीतम् । एवमन्यदप्युदाहर्तव्यम् । अतएव श्रीगीताभाष्ये "सततं कीर्तयन्तोमामि"त्येतद्व्याख्यानावसरे 'नारायणकृष्णवासुदेवे'त्यादीनामानुसन्धानमनुगृहीतम् । अतः श्रीमन्त्रस्य परिग्रहातिशयमात्रेणाधिक्यमुक्तं तदयुक्तमित्युक्तं भवति--इति ।

---

* तिरुवाय्मोलि १-२-१० ॥
† तिरुवाय्मोलि. १-१०-८ ॥
‡ तिरुवाय्मोलि. १० ९-११ ॥
§ तिरुप्पल्लाण्डु. ४ ॥
¶ मुदलायिरम्. ५-१-३ ॥
× पेरुमाल् तिरुमोलि. २-४ ॥
÷ पेरुमाल् तिरुमोलि. १-११ ॥
‖ ४-अन्दादि. १ ॥
१. तिरुप्पल्लाण्डु. ५ ॥
२. तिरुप्पावै. ९ ॥
३. नाच्चियारतिरुमोलि. २१ ॥
४. तिरुवाय्मोलि. ८-२-७ ॥
५. श्रीवचनभूषणे. २७८- सू ॥
६. मुमुक्षुप्पडि. ३-प्रक. २८१. सू ॥
७. श्रीवचनभूषणे. ४३. सू ॥
८. लक्ष्मीतन्त्रे. १७-९४ ॥
९. पां-त्रे ॥
१०. लक्ष्मीतन्त्रे. १७-९७ ॥
११. पाद्मेतन्त्रे ॥
१२.
१३. पूर्वदिनचर्या. ५ ॥
१४. पाद्मोत्तरे ॥
१५. तिरुप्पावै. ६ ॥
१६. गीता. ९-१४ ॥

इत्यारभ्य, *"अष्टाक्षरमभ्यस्यन्तः परमपदनिर्वाहका भवन्ति" इति श्रीमही-सारोपकारकैः, †"अहमद्राक्षं नारायणेतिनाम" इत्युपक्रमदशायां दशवारमुक्त्वा, ‡"नारायण हो? मणिवर्ण? भोगिशयनागच्छे"ति श्रीमङ्गैसूरिभिः उपक्रमोपसंहारयो रनुगृहीतत्वात्, §"दिव्यमालामादाय नमोनारायणेति वाचकमालामभ्यस्तः"¶"नारा-यणेति अविच्छेदेन वक्तुं शब्दोऽस्ति" इति, +"ज्ञानरूपोज्वलदीपमारोपितवान् नारा-यणस्य" ×"नारायणस्य नामानि"‖"दिनमद्राक्षं नारायणमद्राक्षम्" इति, /"नामानि

---

अत्रोच्यते—भगवन्नाम्नामनन्तानामनुसन्धेयत्वं दिव्यसूक्त्यनुष्ठानाभ्यां सिद्धमित्युक्तम्; तद-युक्तम्, दिव्यसूरीणां भक्तिपारवश्येन प्रपन्नतया, मुक्तानामिव "ऐनक्केन्नुं तेनुं पालुममुदुमाय तिरुमाल् तिरुनामम्" इत्यनुगृहीतरीत्या भोग्यतातिशयेन, "नेन्मालैपलकोण्डु" "विपन्यवः" इत्युक्तानन्तना-मानुसन्धेयत्वस्य द्वेधाप्रकाशनोपपत्तेः । ज्ञानाधिक्यप्रपन्नानान्तु स्वरूपज्ञानार्थमेव कस्यचिदनुसन्धेय-तया स्वरूपज्ञानपूर्तिहेतुभूतमूलमन्त्रस्यैवानुसन्धेयत्वात् । केवलभगवत्प्रियतया मन्त्रान्तरानुसन्धानस्य नित्यनैमित्तिकवत् आज्ञाकैङ्कर्यरूपत्वाभावेनाकर्तव्यत्वात्, अनन्यप्रयोजनत्वविरोधेन पावनत्वबुद्ध्या कर्तुमशक्यत्वाच्च । "यन्मुहूर्तं क्षणंवापी"त्यादेः प्रेमपारवश्यपरत्वाच्च, "सकलं कालं द्वयेनक्षिपन्" "मन्त्ररत्नानुसन्धानसन्ततस्फुरिताधरम्" इत्याद्युक्तरीत्या कालक्षेपादिरूपतया मूलमन्त्रार्थानुसन्धाने-नैव 'यन्मुहूर्तं क्षणं वापी'त्याद्यनुष्ठानसम्भवाच्च। "रंगेशविज्ञप्तिकरामयस्ये"त्याद्युक्तरीत्या भागवतकै-ङ्कर्यरूपतया मन्त्रान्तरानुसन्धानस्याधिकारिविशेषनियतत्वाच्च । 'अष्टोत्तरशतं मूलमन्त्रमावर्तेत' इत्या-द्युक्तरीत्या मूलमन्त्रस्येव विहितस्थले पुरुषसूक्तादिवैष्णवमन्त्राणामनुसन्धेयत्वेपि स्वरूपानुसन्धानपूर्त्यर्थे सन्ततानुसन्धेयत्वासिद्धेश्च। प्रेमातिशयानुकारेण सर्वमन्त्रानुसन्धानस्य "ततो निकृष्टे मयिसंनिकृष्टे" "नाय् कूलै वालाल्" "नायेन् वन्दडैन्देन्" "नहि शुना लीढापि" इत्याद्यनुगृहीतरीत्या स्वरूपानु-सन्धानशालिनां, "स्वात्माप्येनं विगर्हते" इत्याद्युक्तलज्जाभयातिशयेनैव निवृत्तिसिद्धेश्च । "गुरुं प्रकाशयेत्" इत्युक्तरीत्यानुकारेण धारणस्य साम्प्रदायिकस्य प्रकाशनार्थं, "नल्कन्त्रक्किरंगु पशु तोल् कन्त्रक्किरङ्गुमापोले" इत्यनुगृहीतरीत्या केवलभगवत्प्रियतयानुज्ञाकैङ्कर्यसिद्ध्यर्थं, 'यूयं यूयं वयं वयम्"

---

* तिरुच्चन्दविरुत्तम्. ७७ ॥

† तिरुमोलि. १-१-१ ॥

‡ शिरियतिरुमडल् ॥

§ १. अन्दादि. ५७ ॥

¶ १-अन्दादि. ९६ ॥

\+ २-अन्दादि. १ ॥

× २-अन्दादि. २ ॥

‖ २-अन्दादि. ८१ ॥

/ ३-अन्दादि ८ ॥

१. तिरुमोलि. ६-१०-६ ॥

२. तिरुवायमोलि, ४-२-३ ॥

३. यजु. का. ४-२-२९ ॥

४. गारुडे, पूर्व. २२२-२२ ॥

५.

६. पूर्वदिनच. ९ ॥

७. कूरनारायमीन्द्रविषयोऽयं श्लोक: ॥

८. श्रीभट्टारकसूक्तिः ॥

९. तिरुवायमोलि. ९-४-३ ॥

१०. तिरुमोलि. १-९-१ ॥

११. श्रीस्तवे. ५ ॥

१२. श्रीरामा-अयो. १७-१४ ॥

१३. शेषसं. १४-५० ॥

१४. तिरुप्पावैव्याख्यानसूक्तिः. ३० ॥

१५. श्रीविल्लिपुत्तूर् भगवर् श्रीसूक्तिः ॥

**बह्वन्युक्त्वा नारायणे"ति च प्रथमसूरिभिरुक्तत्वाच्च, *"अज्ञाननिवृत्तिमत्यानन्दं दत्तवान्"इत्युक्तप्रकारेण निर्हेतुकभगवत्कटाक्षेण समधिगतसमस्तवस्तुवास्तवाः सूरयश्चाहृतवन्तः ।**

**इतरमन्त्रानादरेण, अमुमेव स्वेषामुपायमनुसन्धाय, उपदेशसमये, स्वाश्रितानामप्युज्जीवनायास्यैवोपदेशात्, सूर्यनुयायिनः सर्वेऽप्याचार्याः आद्दृतवन्त इत्यर्थः ।**

---

इत्याद्युक्तरीत्या प्रयोजनान्तरपरव्यावृत्तस्वाधिकारप्रकटनार्थञ्च मूलमन्त्रमन्त्ररत्नतद्विवरणदिव्यप्रबन्धानां स्वरूपतोऽर्थतोवानुसन्धेयत्वसम्भवेपि तत्परित्यागेन केवलमुत्तारकरामकृष्णवासुदेवशब्दानामैच्छिकानुसन्धानस्य ज्ञानाधिक्यप्रपन्नेषु स्वरूपविरुद्धत्वाच्च । इत्थंचाज्ञानप्रपन्नेषु तेषामैच्छिकानुसन्धानं कैमुतिकन्यायेन स्वरूपविरुद्धमिति सिद्धम् । तस्माद्दिव्यसूरीणां सर्वेषामैककण्ठ्येन मूलमन्त्रमन्त्ररत्नस्मारकनारायणशब्दाभ्यासस्य विशिष्य दरीदृश्यमानतया तद्बलेन तयो स्सर्वमन्त्रोत्कर्षसिद्धिः । किं बहुना "मन्त्रान्तरत्तिनरुहुं मरन्दुं पोहक्कडवनल्लन्" "तिरुमन्त्रत्तिलुं द्वयत्तिलुं नियतनाहैयुम्" "सकलं कालं द्वयेनक्षिपन्" "प्रपन्नेन देवतान्तरसेवकाः । प्रयोजनपराश्चैव मन्वन्तरपरास्तथा" "क्षुद्रमन्त्रजपस्त्वन्यः केवलं कालयापनम्" "विपरीतस्पर्शमुडैय एम्बेरुमान्, विपरीतस्पर्शमुडैय मन्त्रं, विपरीतस्पर्शमुडैयवाचार्यन्, इवर्गलडैय मुमुक्षुवुक्कु त्याज्यर्" इत्यादिसूक्तिषु प्रमाणोपपत्तिसम्प्रदायसूचनमुखेन, अनुष्ठानमुखेन उपदेशमुखेन च रहस्यत्रयस्यैव पूर्वाचार्यै रतिशयेन परिगृहीततया पूर्वोक्तवेदवैदिकदिव्यसूरिपरिग्रहातिशयो निष्प्रत्यूहः ।

यत्तु-पूर्वाचार्याणामाज्ञाकैङ्कर्येषु नामान्तरानुसन्धानमस्तीत्युक्तम्; तदप्ययुक्तम्; तावता "अग्निश्च मामन्युश्चे" त्यादि देवतान्तरमन्त्राणामिव "अच्युतानन्तगोविन्दे"त्यादिनामत्रयादीनामाज्ञाकैङ्कर्यान्तर्भावेन परिग्रहसिद्धावपि, मोक्षजनकनिवर्तकज्ञानपूर्तिहेतुतया सदानुसन्धेयत्वमूलभूतपरिग्रहातिशयाऽसिद्धेः । 'सततं कीर्तयन्तो मामि"त्येतद्व्याख्यानावसरेच "नमस्यन्तश्च मां भक्त्या" इत्युक्तानां भक्तिभारावनमितदेहानां भक्तिपरीवाहरूपतयैव 'नारायणकृष्णवासुदेवे'त्याद्यनुसन्धानमनुगृहीतमिति न तद्विरोधगन्धोऽपि । तस्मात् "यथा ते तत्र वर्तेरन्" इत्युक्तरीत्या पूर्वाचार्यप्रबन्धानुष्ठानोपदेशानुसारेण स्वरूपज्ञानार्थं मूलमन्त्रएव सदानुसन्धेय इति सिद्धम् ।—इति ।

अस्मिन्सूत्रे, (वेदाः) इत्यनेन "वेदोऽखिलो धर्ममूलम्" इत्युक्तमूलप्रमाणस्य, (ऋषयः) इत्यनेन "स्मृतिशीलेच तद्विदाम्" इत्युक्तोपबृंहणप्रमाणस्य, वेदविदां शीलस्य च संग्रहः । (दिव्यसूरयः) इत्यनेन "उपदेशाद्धरिं बुध्वा" इत्युक्तरीत्या न्यायनिरपेक्षसोपबृंहणवेदार्थनिर्णायकतयोपदेशप्रमाणश्रेष्ठभूतं अपौरुषेयनित्यनिर्दोषतया स्वतःप्रमाणभूतं साङ्गोपाङ्गवेदचतुष्टयात्मकं द्रविडोपनिषदाख्यं प्रतितन्त्रसिद्धान्तसिद्धं प्रमाणं तद्विदां शीलञ्च संगृहीतम् । स्मृतिशीलयो स्संग्रहाभावे 'वेदाः, उपबृंहणानि, दिव्यप्रबन्धाः' इति सूत्रविन्यासापत्तेः । (आचार्याः) इत्यनेन "आचारश्चैव साधूनाम्"

---

* तिरुवाय्मोलि. १-१-१ ॥
१. माणिक्कमालाख्यरहस्यग्रन्थसूक्तिः ॥
२. मुमुक्षुप्पडि. २-१ ॥
३. श्रीकुरुकेशार्यश्रीसूक्तिः ॥
४. नारदक-अष्टा-१-१७ ॥
५. माणिक्कमालसूक्तिः ॥
६. तै-नारा. २४-अनु. १ ॥
७ पाद्मोत्तरे ॥
८. तै-उप-शिक्षावल्यां. ११-अनु ३ ॥
९. मनुस्मृतौ. २-६ ॥
१०. मनुस्मृ. २-६ ॥

**एतेन मन्त्रान्तरेभ्योऽस्य मन्त्रस्य विद्यमानवैभवमुक्तम् ॥ १३ ॥**

**(१४) अथ वाच्यापेक्षयास्य वैभवमाह—वाच्येति ॥**

**मू ॥ वाच्यप्रभावंपोलन्नु वाचकप्रभावम् ॥ १४ ॥**

**छा ॥ वाच्यप्रभाववन्न भवति वाचकप्रभावः ॥ १४ ॥**

---

इत्युक्तं प्रमाणं संगृहीतम् । 'प्रत्यपादयन्' इत्यनेन "सतां हि सन्देहपदेषु वस्तुषु" "त्वदीयगंभीरमनोनुसारिणः" इत्युक्तरीत्या "आत्मनस्तुष्टिरेवच" इत्युक्तं प्रमाणं सूचितमित्यनुसन्धेयम् । 'भगवन्मन्त्रास्त्वनेके' इत्यारभ्योक्तस्य फलितांशमाह—एतेनेति ॥ १३ ॥

पूर्वं मूलमन्त्रस्य भगवद्वाचकसकलमन्त्रान्तरापेक्षयाधिक्यमुक्तम्, अथ तस्य वाच्यभूतभगवदपेक्षयाप्याधिक्यमुच्यते इति सङ्गतिमाह—अथ वाच्यापेक्षयेति । "नामैतत्तव गोविन्द नामिनस्ते शताधिकम्" इत्युक्तेरिति भावः ।

ननु मूलमन्त्रो भगवदपेक्षया उत्कृष्ट इत्युक्तं, तदयुक्तम्; "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादिप्रमाणविरोधात् । नच—भगवतश्शास्त्रयोनित्वेनार्थापेक्षया शब्दस्य ज्ञापकत्वलक्षणो वैवक्षिकोत्कर्ष स्सम्भवतीति वाच्यम्, "स्वेतरवैलक्षण्यं तृणादेरप्यस्ती"ति श्रुतप्रकाशिकासूक्तिरीत्या वैवक्षिकोत्कर्षस्याव्यावर्तकत्वात् । अस्तु वा वैवक्षिकोत्कर्षविवक्षा; नच प्रकृते सापि सम्भवति; ज्ञापकत्वेनोत्कर्षस्य मन्त्रान्तरसाधारणत्वात्; परिपूर्णभगवत्स्वरूपज्ञापकत्वस्य पूर्वमेव सिद्धत्वेन कृतचरत्वात् । न च भगवत्प्रभावापेक्षया मूलमन्त्रप्रभावोऽधिक इति, तस्योत्कर्षसिद्धिरिति वाच्यम्; प्रभावशब्दार्थोत्कर्षस्य आधिक्यशब्दार्थोत्कर्षवत्तया आत्माश्रयपराहतत्वात् । भगवत्प्रभावापेक्षया मूलमन्त्रप्रभावाधिक्यस्य भगवदपेक्षया मूलमन्त्रोत्कर्षसिद्ध्यधीनत्वेन साध्याविशेषाच्च । न च भगवत्सन्निधानं विनापि रक्षकत्वं मूलमन्त्रस्यास्तीति विवक्षितमिति वाच्यम्; एतावता भगवत्प्रभावापेक्षया मूलमन्त्रप्रभावोत्कर्षासिद्ध्या उक्तदोषापरिहारात् इति चेत्—

उच्यते; भगवदपेक्षया मूलमन्त्र उत्कृष्ट इति वचनं युक्तमेव । न च 'न तत्समश्चे'त्यादिविरोधः; प्रकृते वाच्यापेक्षया वाचकोत्कर्षस्यैव विवक्षितत्वात् । ब्रह्मरुद्रेन्द्रादिशब्दानामिव "विष्णुर्नारायणः कृष्णः" इत्यादीनां मूर्तिविशेषावच्छिन्नरूढतया देवतान्तरव्यावर्तकमूर्तिविशेषविशिष्टभगवत्स्वरूपापेक्षया ज्ञापकत्वलक्षणोत्कर्षस्य विवक्षितत्वात् । न चैवं अव्यावर्तकत्वाद्यापत्तिः, मन्त्रपदयोगार्थोत्कर्षस्यैव आदित आरभ्य सिषाधयिषितया तस्य च मुक्तिजनकज्ञानहेतुत्वरूपस्य यमनियमादिपूर्वकयोगिप्रत्यक्षे दिव्यमङ्गलविग्रहस्य शुभाश्रयत्वेन विषयतया "पुंसां दृष्टिचित्तापहारिणम्" "साक्षान्मन्मथमन्मथः" इत्याद्युक्तरीत्या सकलमनुजनयनविषयतावगततया वा, मूर्तिविशेषविशिष्टभगवत्स्वरूपे वक्तव्यतया च तदपेक्षया उपदेशप्रमाणसारभूतमूलमन्त्रजनितशब्दज्ञानमुखेन अविलम्बितमुक्तिहेतुज्ञानजनकत्वस्याधिक्योपपत्तेः । न च रक्षणस्यैवोत्कर्षरूपतया उत्कर्षाश्रयत्वबाधः; 'शूरतरः' 'पण्डिततरः' इत्यादौ शौर्यज्ञानादे स्तारतम्यरूपोत्कर्षाश्रयस्य स्वाश्रयोत्कृष्टापकृष्टव्यवहारहेतुत्वदर्शनतारत-

---

१. शाकुन्तलनाटके. १-अं. २१ ॥
२. स्तोत्ररत्ने. २० ॥
३.
४.
५ श्वे-उप. ६-७ ॥
६. श्रुतप्रका. १-१-१ ॥
७. श्रीरामा-अयो. ३-२९ ॥
८ भागवते. १०-३२-२ ॥

व्या ॥ वाचकभूतस्यास्य वैभवम्-एतद्वाच्यभूतेश्वरप्रभाववन्नेत्यर्थः ॥ १४ ॥

(१५) कथमित्यत आह—तस्मिन्निति ॥

मू ॥ अवन् दूरस्थनानालुं इदु किट्टिनिन्नुदवुम् ॥ १५ ॥

छा ॥ तस्मिन्दूरस्थे सत्यप्ययं समीपस्थ उपकरोति ॥ १५ ॥

व्या ॥ वाच्यभूतस्यासन्निधानेऽपि वाचकभूतोऽयं

---

म्यरूपोत्कर्षस्य उत्कर्षानाश्रयत्वेपि प्रकृते मूलमन्त्रवाच्यभूतमूर्तिविशेषविशिष्टस्वरूपापेक्षया मूलमन्त्रे मुक्तिहेतुपरिपूर्णाविलम्बितनिवर्तकज्ञानजनकत्वरूपरक्षणात्मकयोगार्थस्य मन्त्रान्तरव्यावृत्तस्यात्रोत्पाद्योत्कर्षविशेषाश्रयत्वे बाधकाभावात्। रक्षणविलम्बाविलम्बाभ्यां वाच्यवाचकयोरुत्कर्षापकर्षसाधनसम्भवेन साध्याविशेषाभावाच्च। वाच्यवाचकयो स्सन्निधानासन्निधानाभ्यां रक्षणविलम्बाविलम्बोपपादनसम्भवाच्चेति।

अत्र वाच्यशब्दः "तमसः परमो धाता शंखचक्रगदाधरः। श्रीवत्सवक्षानित्यश्रीः" इत्यादिलक्षितनारायणशब्दप्रवृत्तिनिमित्तमूर्ति विशेषावच्छिन्नभगवत्स्वरूपपर इत्यभिप्रायेण - **ईश्वरे**त्युक्तम्। वाच्यशब्देन प्रकरणबलेन विशेषलाभोपपत्तेः। विशेषलाभायैव 'भगवत्प्रभाववदि' त्यनुक्तिरिति भावः। प्रभावशब्दोऽपि प्रकरणबलात् रक्षणरूपप्रभावपरः। मुक्तिहेतुपरिपूर्णज्ञानजनकत्वरूपसर्वोत्कृष्टरक्षणसूचनाय 'प्रभाव'इति सामान्योक्तिः। वैवक्षिकोत्कर्षे व्यावर्तयितुं 'वाच्यप्रभावात् वाचकप्रभावोऽधिकः' इत्यन्वयमुखेनानुक्त्वा 'वाच्यप्रभाववन्नभवती'ति व्यतिरेकमुखेनोक्तिरिति द्रष्टव्यः॥

उत्तरसूत्रसङ्गतिः—(कथमि)ति। (वाच्यभूतस्यासन्निधानेपि) इति, ननु कथं विभोर्भगवत्स्वरूपस्यासन्निधानत्वम्; न च देशविशेषादिविशिष्टस्याऽसन्निधानमुपपद्यत इति वाच्यम्, तस्य रक्षणानुपयोगात्। अन्यथा "एण्णिलुं वरुम्" "स्मृतो यच्छति शोभनम्" इत्यादिविरोधादितिचेत्,—सत्यम्, देशविशेषमूर्तिविशेषविशिष्टस्य देशान्तरे असन्निधानोपपत्तेः। योगिप्रत्यक्षरूपमानससन्निधानस्य अस्मदादिप्रत्यक्षरूपचाक्षुषसन्निधानस्य च "तस्मिन्दृष्टे परावरे" इत्याद्युक्तरीत्या, "अलवलमै तविर्त्तवलहन्" "शिशुपालनैयुमहप्पड तिरुत्तिचेर्त्तुक्कोल्लुम्" "सकलमनुजनयनविषयतांगतो विश्वमाप्याययन्" इत्याद्युक्तरीत्या मूर्तिविशेषावच्छिन्नस्वरूपे रक्षणोपयोगित्वसम्भवेपि देशकालविप्रकर्षदुष्टत्वात्, 'एण्णिलुमि'त्यादेश्चाक्षुषसन्निधानहेतुपरत्वात्, 'स्मृतो यच्छति शोभनमि'त्यादेर्निरुक्तमनस्सन्निधानहेतुप्रयोजकपरत्वाच्च। अतो वाच्यासन्निधानेपि वाचकसन्निधानेन रक्षणोत्कर्षात् वाच्याद्वाचकस्योत्कर्षो युक्त इतिभावः। (दूरस्थे सत्यपि) इति देशतः कालतो वस्तुतश्च विप्रकर्षो विवक्षितः। आद्यन्तविप्रकर्षौ-परव्यूहयोः, मध्यविप्रकर्षः विभवेषु, अर्चाविग्रहेष्वपि सर्वपुरुषसान्निध्याभावात्, देशविप्रकर्षः। "इतरेभ्यस्त्वितरधा" इति भक्तिशून्यानामतीन्द्रियत्वलक्षणो वस्तुविप्रकर्षश्च। मूलमन्त्रस्य तु लोकसिद्धसामग्रीसत्वे सर्वपुरुषसाधारण्येन मुक्तिहेतुपरिपूर्णज्ञानजनकतया देशतः कालतो वस्तुतश्च सन्निकर्षोऽस्तीति विवेकः। (सत्यपी)त्यनेन "नाहं पुरुषकारेण न चाप्यन्येन

---

१. श्रीरामा-यु. ११४-१५ ॥
२. तिरुवाय्मोलि. १-१०-२ ॥
३. वि-पु. १ ७-७८ ॥
४. मुण्ड-उप. २-२-७ ॥
५. मुदलायिरम्. ४-३-६ ॥
६. मुमुक्षु.-२-१८४ ॥
७. श्रीगीताभाष्योपोद्घाते ॥
८. वरदराजस्तवे. १८ ॥
९. लक्ष्मीतन्त्रे. १३-११ ॥

समीपेऽवस्थाय स्वानुसन्धातृपेक्षितसाधको भवतीत्यर्थः ॥ १५ ॥

(१६) एवं वाच्ये दूरस्थे सति वाचककृतोपकारस्थलमुदाहरति—द्रौपद्या इति ॥

मू ॥ द्रौपदिक्कु आपत्तिले पुडवै शुरन्ददु तिरुनाममिरे ॥ १६ ॥

छा ॥ द्रौपद्या आपदि श्रीनाम हि वस्त्रवर्द्धकम् ॥ १६ ॥

व्या ॥ महासदसि दुश्शासने वस्त्रमपहरति *"महत्यापदि संप्राप्ते स्मर्त्तव्यो भगवान् हरिः"इति वशिष्ठोक्तं स्मृत्वा †"शङ्खचक्रगदापाणे द्वारकानिलयाच्युत । गो-

---

हेतुना । केवलं स्वेच्छयैवाहं प्रेक्षे कञ्चित्कदाचन"इत्युक्तरीत्या मन्त्रजन्यनिवर्तकज्ञानमात्रेण रक्षणस्य काचित्कतया,योगिप्रत्यक्षमुखेन विभवावतारमुखेन च रक्षणस्य प्रायिकतया च दूरस्थत्वस्य रक्षणविरोधस्सूच्यते । (अयमि)त्यनेन लौकिकप्रत्यक्षविषयतया वस्तुविप्रकर्षो नास्तीति व्यज्यते । (समीपस्थ) इत्यनेन देशसन्निकर्षः, कालसन्निकर्षश्चोक्तः। (उपकरोति)इति मुक्तिहेतुपरिपूर्णनिर्वर्तकज्ञानजननमुखेन रक्षकमित्यर्थः। 'भगवान् हि स्वात्यन्ताभिमतेऽपि भक्त्युत्पादनायासन्निहितो गोपीष्विव कदाचित् भवति, तदापि तन्नामान्युच्चार्यमाणानि तात्कालिकव्यसननिवर्तनेनोपकुर्वन्तीत्यर्थः' इति केचित् ।

अनेन सूत्रेण वाच्यप्रभावव न्नभवती'ति पूर्वसूत्रोक्तो रक्षणोत्कर्षरूपो हेतुस्सन्निधानासन्निधानमुखेनोपपादितः ॥ १५ ॥

इत्थं सम्पूर्णार्थकमूलमन्त्रस्य स्ववाच्यापेक्षया सन्निधानासन्निधानन्यायमुखेन मुक्तिहेतुज्ञानजननेन सर्वोत्कृष्टरक्षणप्रयुक्ततारतम्यं प्रसाधितम् ; अथापूर्णार्थकभगवन्नाम्नो भगवदपेक्षया सन्निधानासन्निधानन्यायबलेन द्रौपद्यपेक्षितार्थविशेषाविर्भाववत् अत्याश्चर्यकरतयापन्निवारकत्वरूपे "यदृच्छयापि संस्पृष्टः" इत्युक्तरीत्यानुसन्धेयार्थस्वभावेन तद्बोधकदिव्यनामस्वभावेनातीन्द्रियशक्तिरूपादृष्टविधया रक्षकत्वे सुदृढप्रमाणसिद्धे सति,परिपूर्णार्थमूलमन्त्रस्य दृष्टादृष्टोभयविधया निर्वृत्तिहेतुपरिपूर्णज्ञानजननमुखेन परमपुरुषार्थलम्भकत्वं कैमुतिकन्यायसिद्धमिति सूचयितुं द्रौपदीवृत्तान्तप्रदर्शकमुत्तरवाक्यमित्यभिप्रायेणावतारयति—एवमिति ।

(नामहि) नामैव हीत्यर्थः। न तु तन्नामवाच्यमूर्तिविशेषावच्छिन्नस्वरूपमित्यवधारणार्थः । हि शब्दो हेतौ, प्रसिद्धौचेत्यनुसन्धेयम् । एतेन नाम्न एव वस्त्रवृद्धिहेतुत्वे "तस्य प्रसादाद्द्रौपद्याः कृष्यमाणेऽम्बरे तथा । तद्रूपं परमं वस्त्रं प्रादुरासीदनेकशः" इति भारतवचनविरोध इत्यपास्तम् । अत एव भगवान् "गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम् । ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पती"त्याह । "आकृष्यमाणे वसने विललाप सुदुःखिता । गोविन्देति समाभाष्य कृष्णेति च पुनः पुनः॥ शंखचक्रगदापाणे...शरणागताम्॥ आकृष्यमाणे वसने द्रौपद्यास्तु द्विशां पते । मनसा चिन्तयामास देवं नारायणं प्रभुमि"ति च। अत्र केचित् भगवतः अत्यन्ताभिमतविषयभूतायाः द्रौपद्याः प्रयोजनान्तरपरतामाहुः ; तदाचार्याणामनभिमतमेवेत्यसदाचार्याः प्राहुः ।

---

* भारते-सभा. ९०-४२ ॥
† भारते-सभा. ९०-४३ ॥
१. हर्यक्षे ॥
२. भारते सभा. ९० ४९ ॥
३. भारते-उद्योग. ४७-३९ ॥
४. भारते-सभा. ९०-४२ ॥

विन्द पुण्डरीकाक्ष रक्ष मां शरणागताम्" इति शरणागताया द्रौपद्या आपदि *गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनं" इत्युक्तप्रकारेण वाच्यभूते कृष्णे दूरस्थे सत्यपि तदवतारवाचकभूतं गोविन्दश्रीनामैव हि वस्त्रं वर्द्धयामासेत्यर्थः। नारायणशब्दार्थैकदेशवाचकनामवैभवे दृष्टेऽस्य प्रभावः किंपुनर्न्यायसिद्ध इति भावः ॥

(१७) अथ प्रकारान्तरेणाप्यस्य वैभवमाह—यथानुसन्धानेति ॥

मू ॥ शोल्लुं क्रममोलियचोन्नालुं तन्स्वरूपंकेड निल्लादु ॥ १७ ॥

छा ॥ यथानुसंधानविधानमननुसंधानेऽपि स्वस्वरूपान्नच्यवते ॥ १७ ॥

व्या ॥ सर्वोऽपि मन्त्रः स्वं शरणत्वेन विश्वस्यानुसन्दधतां नकार्यकरः, अयन्तु-

---

प्रयोजनान्तरविषये "नातिस्वस्थमना ययौ" "ऋणं प्रवृद्धमिव मे" इत्याद्युक्तरीतिरसङ्गता स्यात्। तस्मात्साऽनन्यपरेति सम्प्रदाय इति। अत्र वक्तव्यार्थं स्सर्वोऽप्यस्मत्परमाचार्यैः श्रीवचनभूषणव्याख्यानकठिनपददीपिकायां "द्रौपदिक्कु फलं वस्त्रमि" त्यत्र प्रपंचितः, तत्र द्रष्टव्य इति नात्र लिख्यते। (आपदि) इति, बहिष्ठायास्तस्या अतिमात्रक्लेशकरायामतिमात्रलज्जावहायां महासदसि वस्त्रापहाररूपाया म्महापदीत्यर्थः। 'श्री' इति पूज्योक्तिः। (किम्पुनर्न्यायसिद्धः) इति-कैमुत्यन्यायसिद्ध इत्यर्थः। "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते।स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहे" इति श्लोकोनुसन्धेयः ॥ १६ ॥

अथ मूलमन्त्रस्य वाच्यासन्निधानदशायामपि रक्षकत्वनिबन्धनयोगार्थोत्कर्षवत्, अक्रमेणोक्तावपि रक्षकत्वनिबन्धनयोगार्थोत्कर्ष स्साध्यते उत्तरसूत्रेणेत्यभिप्रेत्योत्तरसूत्रं सङ्गमयति—अथ प्रकारान्तरेणापीति।

ननु अक्रमेणोक्तो मूलमन्त्रः न रक्षकः, क्रमविधायकप्रमाणव्याकोपापत्तेः। तथाहि—"यदृच्छया श्रुतो मन्त्रः" "शास्त्रादिषु सुदृष्टापि" "अनाचार्योपदिष्टा हि" "आचार्याद्धैव" "यस्य देवे पराभक्तिः" "मन्त्रे तद्देवतायां च" "श्रद्धैव कारणं पुंसामष्टाक्षरपरिग्रहे" "मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ। यादृशी भावना यत्र सिद्धि र्भवति तादृशी" "यस्य यावांश्च विश्वासः" "विश्वासः फलदायकः" इत्यादिभिरुपदेशभक्तिश्रद्धाविश्वासमूलकत्वलक्षणक्रमाः प्रतीयन्ते। न च 'साङ्केत्यं पारिहास्यं वा" इत्यादिवचनविरोधः, तेषामर्थवादमात्रत्वात्। न चोक्तवचनानामेव भक्त्यादिप्रशंसा परत्वमस्तीति वाच्यम्, वैदिकानामवैदिकानाञ्च वैकुण्ठनामग्रहणादशेषाघविनाशने सर्वमुक्तिप्रसङ्गेन प्रबलवैदिकव्यवस्थाभङ्गप्रसङ्गेन 'क्षिपामि' इत्यादिवचनविरोधेन 'साङ्केत्यमि' त्यादेरेव अ१दर्थवादत्वावश्यम्भावादिति शङ्कामपनुदन् सूत्रार्थमाह—सर्वोऽपिमन्त्र

---

* भारते-उद्यो. ४७ ३९ ॥
१. भारते ॥
२. भार-उद्यो ४७ ३९ ॥
३. श्रीवचनभू ३३ ॥
४. चन्द्रालोके. ११७ ॥
५.
६.
७.
८ छा-उप.४-९-३ ॥
९. श्वे-उप. ६-२३ ॥
१०. शेषसं ॥
११. नारदीयकल्पे.अष्टाक्षर-विधायां. १-१००॥
१२. शेषसंहितायाम्. २-४६ ॥
१३. गारु-पु-पू. २२२-६३ ॥
१४.
१५. गीता. १६-१९ ॥

इति। अयमाशयः—अक्रमेणोक्तोऽपि मूलमन्त्रो रक्षक एव। अक्रमेणोक्तावपि भगवन्नामसामान्यस्य रक्षकतया बहुप्रमाणसिद्धत्वात्। तथाहि—"[1]हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः। यदृच्छयापि संस्पृष्टो दहत्येव हि पावकः" "[2]सकृदुच्चारितं येन हरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेन मोक्षाय गमनं प्रति" "[3]उपपातकयुक्तोऽपि महापातकवानपि। यामिन्याःपादमेकन्तु ब्रह्मध्यानं समाचरेत्" "[4]अतिपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्। भूयस्तपस्वी भवति पंक्तिपावनपावनः" "[5]अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा। य स्स्मरे त्पुण्डरीकाक्षं स बाह्याभ्यन्तर श्शुचिः" "[6]अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः। पुमान्विमुच्यते सद्यः सिंहत्रस्तै र्मृगैरिव" "[7]अयं हि कृतनिर्वेशः जन्मकोट्यंहसामपि। यद्व्याजहार विवशो नामस्वस्त्ययनं हरेः" "[8]मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः। केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति" "[9]शमयाऽलं जलं वह्नेः" "[10]हरेर्नामैव नामैव" "[11]सांकेत्यं पारिहास्यं वा" "[12]ध्यायन् कृते यजन् यज्ञैः" इत्यादिषु भगवन्नामसामान्यस्य येनकेनापि प्रकारेणोच्चारितस्य रक्षकत्वमविगीतमुक्तम्। न च उक्तवचनजातमर्थवादमात्रम्, अप्राप्ताऽबाधितार्थकत्वात्। अन्यथा विनिगमनाविरहेण क्रमविधायकानामर्थवादत्वापत्तेः। न च सर्वमुक्तिप्रसङ्गो विनिगमकः, अपरिच्छिन्नमूलप्रकृतौ साङ्केत्यादिरूपवैकुण्ठनामग्रहणरहितानामपि जीवानां "[13]गौरनाद्यन्तवती" इत्यादिश्रुतिबलेनैव सदातनत्वसिद्धेः; नचैवमपि 'वेदोक्तं कर्मधर्महेतुः, बौद्धाद्युक्तमधर्महेतुः' इति व्यवस्थाभङ्गप्रसङ्गः, 'ईश्वरो नास्ती'ति वादिनां वैकुण्ठनामग्रहणसत्वेन अशेषाघविनाशापत्तेरिति वाच्यम्; वैदिकावैदिकव्यवस्थाप्रमाणबलेन वैकुण्ठनामग्रहणस्य सद्वारकाशेषाघविनाशकत्वाङ्गीकारेण 'ईश्वरोनास्ती'तिवदतां नास्तिवादघटितसामग्रीबलेन अधर्मप्राप्तयवश्यम्भावेऽपि तत्र प्रतियोगितया वैकुण्ठनामग्रहणस्य नास्तिवादहेतुभूतपापनिर्बर्हणमुखेनाभ्युदयपर्यवसानस्य "[14]पुण्यं प्रज्ञां वर्धयती" त्यादिरीत्या क्रमेणाशेषाघविनाशकत्वस्यचाभ्युपगमेनोक्तदोषाभावात्। एतदभिप्रायेणैव भगवता स्वयमेवोक्तम्-"[15]नेहाभिक्रमनाशोस्ति "इत्यादि। अतएव "[16]कावेरी तोयमाश्रित्य वातो यत्र प्रवर्तते। तद्देशवासिनाम्मुक्तिः किमु तत्तीरवासिनामि"त्यादिकमपि सङ्गच्छते। तादृशवातगन्धरहितस्यापि देशस्य सम्भवात्। अत एवाजामिलोपाख्यानादिकमपि उपपद्यते। तत्रापि स्तोभात्मकनारायणशब्दादेः क्रमेणैवाभ्युदयपर्यवसानस्य विवक्षितत्वेन वक्तव्यत्वात्। अत एव च "[17]द्वेषाच्चैद्यो भयात्कंसः" इत्यादिकमपि युज्यते। अतएव घण्टाकर्णतदनुजादीनां मोक्षप्रदप्रथाच सम्भवति। दधिभाण्डन्यायश्च प्रसिद्धः। अतएव '[18]क्षिपामी' त्यादि वचनविरोधोऽप्यपास्तः। प्रमाणस्वभावपर्यालोचनया 'क्षिपामि'इत्यादेर्दोषांशघटितसामग्रीफलत्वाभ्युपगमात्, तत्सामग्रीविघटनमुखेन क्रमेणाभ्युदयपर्यवसानस्य गुणांशफ-

---

१. हर्यष्टके. १॥
२. गारु. पु-पूर्व. २२१-१२॥
३.
४.
५. ब्रह्मवैवर्तपु. ब्रह्मख. १७-१६॥
६. वि-पु. ६-८-१९.॥
७.
८. गारुडपु-पूर्व.२२९-४१॥
९.
१०. बृहन्नारदीयपु. ३८-१२७॥
११. भागवते. ६-२ १४॥
१२. वि पु- ६-२ १७॥
१३. मन्त्रोपनिषदि॥
१४. भार-उद्यो. ३५-७३॥
१५. गीता. २-४०.
१६. श्रीरङ्गमाहात्म्य॥
१७. भागवते-७॥
१८. गीता. १६-१९॥

त्वाभ्युपगमाच्च। तथाहि—"असत्यमप्रतिष्ठं ते" इत्यारभ्य, "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु" "मद्भक्तं श्वपचं वापि निन्दां कुर्वन्ति ये नराः। पद्मकोटिशतेनापि न क्षमामि वसुन्धरे" "एष एवाऽसाधुकर्म कारयति तं यमधो निनीषति" "हरिर्दुःखानि भक्तेभ्यो हितबुद्ध्या करोति वै। शस्त्रक्षाराग्निकर्माणि स्वपुत्राय यथा पिता" "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिषु भगवत एव पापफलप्रदत्वम्, "पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः। नष्टप्रज्ञः पापमेव नित्यमारभते नरः" इत्युक्तरीत्या पूर्वकर्मफलभूतपापप्रवर्तकत्वम्, अकृतप्रायश्चित्तानां कर्मणां फलाविनाभूतत्वञ्च सिद्धम्। "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते। स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इति गीतावचने देवतान्तरसम्बन्धस्य भगवत्सम्बन्धस्य च किंचिदंशेऽप्युपक्रान्ते सर्वथा निष्फलत्वम्, तदैव यथाकथंचित्साफल्यम्, यत्किंचिदंशस्यापि उपक्रान्तस्य त्यागे तदैवानिष्टकरत्वम्, तदभावश्च, कदापि परमपुरुषार्थसम्बन्धगन्धाभावः क्रमेण तत्पर्यवसाननियमश्चेति त्रेधा वैषम्यमुक्तम्। तद्विवरणानि बहूनि वचनानि।

तथाहि - "स्मृतो यच्छति शोभनम्" इति स्मृतिमात्रस्य भगवद्विषये सफलत्वनियम उक्तः। "हरिर्हरति...पावकः" इत्यत्र हरिसमाख्यालब्धयोगार्थे अनादिभगवत्कृषिफलीभूतहरिस्मरणसामान्यस्य, ('हरतिपापानी-')त्यनेन प्रथमं चित्तदोषहेतुपापनिवर्तकत्वं, ततश्चित्तदोषनिवर्तकत्वञ्चोक्तम्। ('दुष्टचित्तैरपी'-)त्यनेन भगवत्सम्बन्धे निर्दोषत्वं नाधिकारः देवतान्तरसम्बन्धे तु अधिकार इति सूचितम्। चित्तदोषश्च - हिरण्यकशिपुपौण्ड्रकवासुदेवादिषु प्रसिद्धः। ननु दोषघटितसामग्रीसत्वे तत्कार्यं स्यादित्याह—यदृच्छयापीति। संस्पर्शजनकादृष्टघटितसामग्रीमात्रबलेनापीत्यर्थः। वह्नौ गुञ्जापुञ्जभ्रमेण प्रवृत्तिसम्भवादिति भावः। संस्पृष्टोऽपीत्यन्वयः ('दहत्येवे',ति-दाहकएव भवतीत्ययोगव्यवच्छेदो विवक्षितः। तथाचानिष्टस्यापि दाहस्य सामग्रीस्वभावात् उत्पत्तिवत् दोषानुचिन्तनार्थतया सामग्रीवशसिद्धमपि हरिस्मरणं, तेन पापनिवृत्तिर्नभवतीति द्वेषरूपचित्तदोषसत्यपि तदुत्पादकमेवेति भावः। 'अनिच्छयापी'ति पाठे इत्थंभूतलक्षणे तृतीया। इच्छारहितपुरुषसंस्पृष्टोऽपीत्यर्थः।

"सकृदुच्चारितंयेन...मोक्षायगमनंप्रति"। ('परिकरः')-दृष्टविधया साधनीभूतशमदमादिसम्पदित्यर्थः। अनेन क्रमेण सर्वपापनिवर्तकत्वं स्फुटीकृतम्। मुक्तिपरिकरविरोधिपापनिवृत्तिसम्पादनेन परिकरसम्पादनस्य, तन्मुखेन मुक्तिसम्पादनस्य च विवक्षितत्वात्।

"उपपातकयुक्तोऽपि...समाचरेत्" अनेन ब्रह्मध्यानेन निर्दोषत्वं नाधिकार इति स्पष्टम्।

"अतिपातकयुक्तोऽपि...पावनपावनः" इति योगभ्रंशहेतुपापविशेषेण दृढं सुबद्धोऽपीत्यर्थः। 'भूय स्तपस्वी भवती'त्युक्तेः। 'अच्युत'शब्दः-योगरूढिभ्यां देवतान्तरव्यावर्तकः। तत्क्रतुन्यायेन "पवित्राणां पवित्रं यः" इत्याद्युक्तध्येयगुणलाभमाह—पङ्क्तिपावनपावन इति।

"अपवित्रःपवित्रोवा...शुचिः" ('अपवित्रः')-निर्दोषस्सन् तीर्थस्नानादिनाधिकशुद्धिरहितः। ('पवित्रः')-अधिकशुद्धिमान्। ('सर्वावस्थांगतोऽपिवा')-सर्वदोषविशिष्टः। 'पुण्डरीकाक्ष'शब्दः देवतान्तरव्यावर्तकः, स्मरणीयताहेतुभूतदिव्येक्षणसौन्दर्यपरश्च। "पृथुलोचनः। मोहयित्वा जगत्स-

---

१. गीता. १६-८ ॥
२. गीता. १६-१९ ॥
३. वराहपु ॥
४ कौषी-उप. ३-९ ॥
५. पांचरात्रे ॥
६. बृहन्नारदीयपु. २९-७६ ॥
७. भार-उद्यो. ३५-७३ ॥
८. गीता. २-४० ॥
९. भारते-अनु-दानधर्म. २५४-१० ॥
१०. भारते ॥

**स्वस्मिन्शरणत्वविश्वासपूर्वकत्वलक्षणक्रमंविना, *"सांकेत्यं पारिहास्यं च स्तोभं हेलनमेव वा" इत्युक्तप्रकारेणानुसन्धानेकृते,**

वँम्" इतिह्युक्तम्। ('सबाह्याभ्यन्तरश्शुचिः') बहिरन्तःप्रदेशावच्छिन्नस्सन् शुचिरित्यर्थः। 'अपवित्रो यः स्मरेत्, सः बहिः शुचिः' इत्यनेन भगवत्स्मरणस्य तीर्थस्नानादिस्थानीयत्वमुक्तम्। 'अपवित्रः आभ्यन्तरश्शुचिः' इत्यनेन तीर्थस्नानाद्यपेक्षयाधिक्यमुक्तम्। 'पवित्रो बहिश्शुचिः' इत्यनेन स्मरणाभावे तीर्थस्नानादे स्स्मरणकृतातिशयितशुद्धिहेतुत्वाभावेन वैय्यर्थ्यमुक्तम्। 'पवित्रः अन्तश्शुचिः' इत्यनेन स्मरणसान्निध्ये तीर्थस्नानादेरधिकफलत्वमुक्तम्। "सर्वदोषविशिष्टो यःस्मरेत्, सः बहिश्शुचिः' इत्यनेन निर्दोषस्यैव तीर्थस्नानादिकमधिकशुद्धिहेतुरिति सूचितम्। 'दुष्टोऽन्तश्शुचिः' इत्यनेन दुष्टस्याप्यन्तश्शुद्धिमपि जनयतीति अधिकोत्कर्ष उक्तः। 'सर्वावस्थांगतः' इत्यनेन 'उपपातकयुक्तोऽपि महापातकवानपि' इत्युक्तार्थ स्सूचितः।

"अवशेनापि . मृगैरिव," स्वेनेतिशेषः। स्वपदं 'पुमानि'ति वक्ष्यमाणपरम्। (**'अवशेन'**) शास्त्रवश्यतारहितेनेत्यर्थः। 'अवशेन स्वेने'त्यन्वयः। उत्पत्स्यमानानां सामग्रीनाशः. सद्य उत्पन्नानान्तु पातकानां स्वरूपेण विनाशः, 'सद्य' इत्युक्तम्। सिंहत्रस्तैः' इत्यनेन मृगाणां सिंहगर्जनमिव, पापानां पुंसामान्यकर्तृकनामकीर्तनमिति गम्यते। (मृगैरिव) मृगैरिव स्थितैरित्यर्थः।

"अयं हि कृतनिर्वेशः...हरेः" अनादिकालार्जितानां कर्मणां भोगरूपवेतनावश्यभावेऽपि भगवन्नामोच्चारयितृपुरुषसम्बन्धमेवापराधत्वेन मत्वा दण्डाभाव एव वेतनमिति भावः। (**विवशः**)- "वागस्ति वशवर्तिनी" इत्युक्तस्वाधीनवागिन्द्रियरहित इत्यर्थः। घण्टाकर्णादिवत् नामोच्चारणद्वेषिणोऽपि शिशुपालादिवत् क्रोधादिवशात् नामोच्चारणं भवतीति भावः।

मेरुमन्दरमात्रोऽपि...नश्यति" अत्र औषधपानेन क्रमेण धातुसाम्यसंपादनमुखेन राजयक्ष्मादिनाशवत् महापापनाशस्सूचितः।

'शमायालं जलं वह्नेस्तमसो भास्करोदयः। क्षान्तिः कलेरघौघस्य नामसङ्कीर्तनं हरेः' अत्र निवर्त्यस्य केशवेनाऽक्लेशेन निवृत्तेः सुखोदर्कतयाच निवृत्तौ दृष्टान्तत्रयं, निवर्त्यतारतम्यस्य निवृत्त्यप्रयोजकत्वञ्च विवक्षितम्।

'हरे र्नामैव नामैव नामैव मम जीवनम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" अत्र ज्ञानदर्शनप्राप्तिरूपसर्वविधप्राणधारणं 'जीवन' पदेन विवक्षितम्। 'ध्यायन्कृते' इत्यादिभिः प्रायेण 'कला' वित्युक्तम्। 'सत्यं सत्यमि'तिवत् अन्वयव्यतिरेकयो स्त्रिरुक्तः। (**गतिः**)-प्राप्यं प्रापकञ्चेत्यर्थः।

(**साङ्केत्यमि**)ति स्वार्थेष्यञ्। (**सङ्केतः**)-परेषां स्वेषुवैष्णवत्वबुद्धि र्भूयादिति विप्रलिप्सा। 'पारिभाषिकार्थविशेषबोधेच्छयोच्चारणं - सांकेत्यमि'तिकेचित्। (**पारिहास्यं**) परिहासः-अनुकारः। (**स्तोभं**)-अजामिलोक्तपुत्रह्वयनामवन्निरर्थकश्शब्दः। 'गीतालापपूरणार्थकृतं, निरर्थकमित्यर्थः। यद्वा, भूताविष्टस्य मन्त्रशक्त्यादिभिरालापनम्-स्तोभमि'तिकेचित्। (**हेलनम्**)-लीला। "पारिहास्य हेलनयोरवज्ञापूर्वकत्वतद्राहित्याभ्यां भेदः" इति तात्पर्यदीपिकाकारः।

(**ध्यायन् कृते**) इति कृतयुगादौ अप्रबुद्धदशायां ज्ञानादिकं सुलभम्। कलियुगे तु कीर्तनेन प्रबुद्धदशायां सुलभेन शरीरविमोकानन्तरं ध्यानादिमुखेनाऽन्यमुखेन वा तत्तत्फलाविनाभूतसा-

* भागवते. ६-२-१४ ॥ | ३. गारुड-पु-पूर्व. २२०-९ ॥

रक्षकत्वरूपस्वस्वरूपान्नच्यवत इत्यर्थः ॥ १७ ॥

(१८) अथास्य सर्वापेक्षितप्रदत्वलक्षणवैभवमाह—अयंचेत्यादिना ॥

मू ॥ इदुदान् *"कुलंदरुम्" एन्गिर्पडिये एल्लावपेक्षितङ्गलैयु कोडुक्कुम् ॥

छा ॥ अयं च "कुलंददाती"त्युक्तप्रकारेण सर्वापेक्षितप्रदोभवति ॥ १८ ॥

व्या॥ अयं मन्त्रश्च 'कुलं ददाति' इत्यारभ्य सूर्युक्तप्रकारेण तत्तदधिकारानुगुण सर्वफलप्रदो भवतीत्यर्थः ॥ १८ ॥

---

मग्रीसम्पादनेन तत्तत्फलं प्राप्नोतीत्यर्थः। अत एव "भक्त्या परमया वाऽपि प्रपत्त्या वा महामुने" इत्यादिना न विरोधः। भक्त्यादे स्सामग्रीव सम्पन्नत्वेन दृष्टविधया कारणत्वेन च मोक्षं प्रतिनियतपूर्ववर्तितया व्याजत्वस्यान्यत्र प्रपञ्चितत्वात्। व्याजानामपि अप्रबुद्धदशायां विकल्पोपपत्तेश्चे—ति।

(स्वस्वरूपादि)ति, 'अयं स्वरूपात् न च्यवते' इत्यनुक्त्वा 'स्वस्वरूपात्' इत्युक्त्या 'स्वं-आत्मीयम्, रूपम्-आकारः' इति व्युत्पत्त्या रक्षकत्वरूपस्वभावलाभेन वह्नेः दाहकत्ववत् जलतेजः क्षमाणां वह्नितमःकलिनिवर्तकत्ववत्, औषधस्य रोगनिवर्तकत्ववच्च स्वाभाविकधर्मस्य प्रच्युति र्नसंम्भवतीति गम्यते। 'स्वस्वरूपात्'इति स्वशब्देन - 'नच्यवते' इति प्रकरणलब्धं मूलमन्त्ररूपं विशेष्यं परामृश्यते। 'स्वस्वरूपं करोति' इत्यन्वयमुखेनाऽनुक्त्वा व्यतिरेकमुखेनोक्त्या, न केवलं "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इत्युक्तरीत्या परमपुरुषार्थपर्यवसानत्वलक्षणस्वरूपस्थैर्यमात्रम्, किन्तु "नेहाभिक्रमनाशोऽस्ति" इत्युक्ताल्पफलहानिलक्षणनाशाभावः, 'प्रत्यवायो नविद्यते" इत्युक्तानिष्टप्राप्तिलक्षणनाशाभावश्चाऽस्तीति गम्यते ॥ १७ ॥

पूर्वं रक्षणव्यापारासङ्कोचेन मन्त्रशब्दयोगार्थपूर्तिरुक्ता; अथ तद्घटकीभूतफलासङ्कोचेन तत्पूर्तिरुच्यत इति सङ्गतिमभिप्रेत्याह —अथास्येति।मूले,चकारस्त्ववधारणे।अनेनाऽन्ययोगव्यवच्छेदेन सर्वफलहेतुत्वं सूच्यते। नन्वस्यान्ययोगव्यवच्छेदेन सर्वफलहेतुत्वं न सम्भवति, श्रीनृसिंह श्रीराममन्त्रादीनां सर्वाभीष्टप्रदत्वस्य तत्तन्मन्त्रशास्त्रसिद्धत्वात् इति चेत्तत्राह—कुलं ददातीति। 'कुलं ददातीति। 'कुलं ददाती' त्यादि श्रीपरकालसूरिसूक्तौ ब्राह्मणबीजस्येव गायत्रीब्रह्मविद्याया इवच, अष्टाक्षरब्रह्मविद्यायाः "कामये वैष्णवत्वन्तु" इत्यादिप्रसिद्धसर्वोत्कृष्टजन्मरूपफलस्य, 'साहि श्रीरमृता सताम्" "लक्ष्मणो लक्ष्मिसंपन्नः" "अन्तरिक्षगतः श्रीमान्" "स तु नागवरः श्रीमान्" इत्यादिप्रसिद्धस्वरूपानुरूपसम्पद्विशेषरूपफलस्य, 'तनै पेणवुं पण्णु धरिक्कवुं पण्णुम्" इत्यादिप्रसिद्धस्य परमार्तिदशायां स्वार्थानुसन्धानेन धारणरूपफलविशेषस्याऽनितरसाधारणस्यानुगृहीतत्वात् अन्ययोगव्यवच्छेदेनास्य सर्वफलहेतुत्वं संभवत्येव। इत्थं तत्तन्मन्त्रशास्त्रेषु सर्वाभीष्टप्रदत्वोक्तिः प्रायिकाभिप्रायेण। यथोक्तविलक्षणजन्मसम्पद्धारणादिरूपस्य फलस्याऽर्थपंचकयाथात्म्यज्ञानमूलकस्य केवलपरार्थानुभवकैङ्कर्यपर्यन्तमोक्षस्यैव मन्त्रान्तरैस्सम्पादनसम्भावनाया अप्यभावात् इति भावः। 'सर्वापेक्षितप्रदो भवती'ति साधारणासाधारणसर्वफलप्रदत्वं विवक्षितमित्यर्थमाह—अधिकारानुगुणेति।

---

* तिरुमोलि. १-१-९ ॥
१. विष्वक्सेनसं ॥
२. गीता. २-४० ॥
३. गीता. २-४० ॥
४. जितन्तास्तोत्रे ॥
५. यजु-अष्ट ३-७ ॥
६. श्रीरामा-बाल. १८-२९ ॥
७. रामा यु १६,१७ ॥
८. विष्णुधर्मे. ६९-४७ ॥
९. श्रीवचनभूषणे. ५२-सू ॥

(१९) एतद्विवृणोति-ऐश्वर्येत्यादिना ॥

मू ॥ ऐश्वर्य कैवल्य भगवल्लाभङ्गलै आशैप्पट्टवर्हल्लुक्कु अवत्तै कोडुक्कुम्॥१९॥

छा ॥ ऐश्वर्य कैवल्य भगवल्लाभकामेभ्यस्तान्ददाति ॥ १९ ॥

व्या ॥ *"ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम्।कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति" इत्युक्तप्रकारेण ऐहलौकिकं पारलौकिकंचैश्वर्यम्, आत्मप्राप्तिरूपकैवल्यम्, परमपुरुषार्थलक्षणभगवल्लाभं च कामयमानेभ्योऽधिकारिभ्यो जपहोमादिना

---

अतएव 'अयञ्च 'कुलं ददाती'त्युक्तप्रकारेणैश्वर्यकैवल्यभगवल्लाभप्रदो भवती' त्येकसूत्रतया नानुगृहीतम्। अत्रासाधारणफलहेतुत्वप्रामाण्यस्य प्राधान्येन विवक्षितत्वात्, उत्तरसूत्रे साधारणफलहेतुत्वप्रामाण्यस्य तथा विवक्षितत्वाच्च। 'कुलं ददाती'त्यत्र कैवल्यस्य कण्ठतोऽनुक्त्या, कुलं ददाती'त्युक्तप्रकारेण कैवल्यं ददाती'त्यनन्वयात्। 'ऐहलौकिकमि'त्यादिवचने विलक्षणजन्माद्यनुक्त्या 'सर्वापेक्षितप्रदो भवती'ति तद्वचनसूचनासम्भवाच्चेति हृदयम्।

ननु "शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायिनां नित्यमपवर्गप्रदो हरिः" "न सम्पदां समाहारे विपदां विनिवर्तने। समर्थो दृश्यते कश्चित् तं विना पुरुषोत्तमम्" 'नहि पालनसामर्थ्यं ऋते सर्वेश्वरं हरिम्'"फलमतउपपत्तेः" इत्यादिभि भगवत एव सर्वपुरुषार्थसाधनत्वं नेतरेषामिति व्यवस्थापनात्, कथमेतस्य भगवत्तुल्यसम्भवः ; सति हि तस्मिन् उपकारकत्वातिशयसम्भावनापीत्याशङ्क्य, पुरुषार्थदानानुकूलकृतिमत्वरूपस्य दातृत्वस्याभावेऽपि सकलपुरुषार्थसाधनत्वप्रयोजकत्वे अस्यापि सम्भवत इत्याह --इदुदानिति' इति तात्पर्यदीपिकायां श्रीशैलकुलतिलकश्रीवीरराघवाचार्याः प्राहुः ॥ १८ ॥

(ऐश्वर्ये)ति अत्र अयोगव्यवच्छेदेन सर्वफलहेतुत्वमुच्यते। नचायोगव्यवच्छेदेन सर्वफलहेतुत्वं न सम्भवति. एकमन्त्रपरिशेषापत्त्या मन्त्रान्तरशास्त्राणां वैयर्थ्यप्रसङ्गात्, लाघवेन एकेनैव सर्वफलसिद्धौ गौरवेणान्येषामनुपादेयत्वात् इति वाच्यम् ; "नमो नारायणायेति मन्त्रस्सर्वार्थसाधकः" इत्यादिसामान्योक्तिमात्रेण विना "ऐहलौकिकमैश्वर्यं . साधयिष्यती"ति त्रिवर्गापवर्गरूपेण पुरुषार्थसामान्यं विभज्य, ऐहिकामुष्मिकरूपेण त्रैवर्गिकफलं विभज्य, आपवर्गिकफलमपि जीवात्मपरमात्मप्राप्तिरूपत्वेन विभज्य, सर्वफलहेतुत्वस्य विशिष्योक्त्या, तात्पर्यातिरेकव्यापनेन दृढीकृतत्वात्-मूलमन्त्रस्यायोगव्यवच्छेदेन सर्वफलहेतुत्वं सम्भवत्येव। नचैवमेकमन्त्रपरिशेषापत्तिः. गुणत्रयतैषम्यकृतरुचितारतम्येन व्यवस्थाया सर्वमन्त्राणां नानामन्त्रपरिग्रहोपपत्तेः। परमकारुणिकेन भगवता वेदपुरुषेण "त्रैगुण्यविषया वेदाः" इत्युक्तरीत्या सर्वपुरुषाणां तत्तत्पुरुषार्थाभिलाषवैचित्र्यानुसारेण विचित्रतत्तत्पुरुषार्थसाधनप्रवर्तनवत्, एकस्मिन्नपि फले नानासाधनभूतमन्त्राणां प्रवर्तनोपपत्तेः।

(ऐश्वर्ये)ति, ऐश्वर्यशब्दः-प्रमाणप्रसिद्ध्या ग्रामाधिपत्याद्यण्डाधिपत्यान्तपरः। कैवल्यशब्दोऽपि तथैव केवलस्वात्मानुभूतिरूपमुक्तिपरः। भगवत स्वरूपेणाऽसाध्यत्वात् "ब्रह्मविदाप्नोति सोऽश्नुते" इत्याद्युक्तप्राप्त्यनुभवादिविशिष्टवेषेण साध्यत्वमभिप्रेत्यभगवल्लाभशब्दः प्रयुक्तः। (कामयमानेभ्यः)

---

* वृद्धहारीतस्मृतौ. ३-४७ ॥

१. वि-पु. १-९-१२७ ॥

२.

३. वि-पु. १-२२-२१ ॥

४. ब्रह्मसूत्रम्. ३-२-३७॥

५. गीता. २-४५ ॥

६. तै-उप. आनन्द. १-अनु ॥

स्वयं साधनं भवन् तान् पुरुषार्थान्ददातीत्यर्थः ॥ १९ ॥

(२०) अथ कर्माद्युपायसहकारित्वलक्षणं वैभवमाह-कर्मज्ञानेत्यादिना ॥

मू ॥ कर्मज्ञानभक्तिहलिले इलेन्दवर्हल्लुक्कु विरोधियैप्पोक्कि अवत्तै तलैक्कट्टिक्कोडुक्कुम् ॥ २० ॥

छा ॥ कर्मज्ञानभक्तिषु निविष्टानां विरोधिनं निवर्त्य तास्समापयति ॥ २० ॥

व्या ॥ कर्मयोगनिविष्टे जपहोमादिना सहायतया स्वीकृतोऽयं कर्मयोगारंभविरोधिदुरितनिरसनेन तत्कर्मणोऽविच्छेदमापादयन् तत्समापयति ; प्रथमं ज्ञानयोगनिविष्टैः

---

इत्यनेन रक्ष्यापेक्षा सर्वदायोग्यसर्वफलप्रदानशक्तिसङ्कोचिकेति सूचितम् । अतएव 'ऐश्वर्यकैवल्य-भगवल्लाभान् ददाति' इत्यनुक्त्वा ऐश्वर्यादीनामपेक्षाकर्मत्वेन दानक्रिया कर्तृत्वेन च द्विरुक्तिः इति ध्येयम्। 'ददाती'त्यत्र पूर्वसूत्रस्थं 'अयमि'ति कर्तृपदमनुषज्यत इत्यनुसन्धेयम् ॥ १९ ॥

इत्थं साक्षात् सर्वफलसाधनत्वमुक्तम् । अथ तत्तत्फलसाधननिष्पादनेन सद्वारकसर्वफलसाधनत्वस्य व्युत्पादनमुखेन 'कुलं ददाती'त्यादि सूक्तिसिद्धं 'ऐहलौकिकमि'त्याद्युक्तञ्च मोक्षहेतुत्वं मोक्षसाधननिष्पादकतारूपमिति सूच्यते इत्यभिप्रायेणोत्तरसूत्रसङ्गतिमाह—अथ कर्माद्युपायेति ।

ननु मूलमन्त्रस्य सद्वारकफलहेतुत्वं न सम्भवति।साक्षात्फलहेतोः फलसाधननिष्पादकत्वे 'तद्धेतोरेव साक्षात्तज्जन्यकार्यजनकत्वे तद्वैयर्थ्यमि'ति न्यायेन द्वारिणएव फलसाधनत्वसम्भवेन द्वारवैयर्थ्यापत्तेः । न च श्रीमद्गीताभाष्ये कर्मयोगज्ञानयोगानुगृहीतभक्तियोगस्य ऐश्वर्यकैवल्यभगवल्लाभहेतुतया सिद्धान्तितत्वात्, अष्टाक्षरे सर्वार्थसाधकत्वस्य वाचनिकत्वाच्च तदुभयाविरोधेनानुकल्पतया अष्टाक्षरस्य साधनतदङ्गनिष्पादकत्वं कल्प्यत इति वाच्यम्, स्वातन्त्र्येण प्रधानफलसाधकस्याऽष्टाक्षरस्य साधनतदङ्गनिष्पादनेनाऽनुकल्पत्वकल्पनस्याऽन्यायतया 'सर्वार्थसाधकः' इत्यत्राऽर्थशब्दः प्रधानफलपर इत्येव कल्पयितुं युक्तत्वात् । तस्मात् साक्षात्फलसाधनस्य मूलमन्त्रस्य सद्वारकफलसाधनत्वं न सम्भवतीति शङ्कामपनुदन् सूत्रार्थमाह—कर्मयोगनिविष्टैरिति । अत्रायमाशयः—साक्षात्फलसाधनस्य साधननिष्पादकत्वं न सम्भवतीति तावदयुक्तम्, "सकलफलप्रदो हि विष्णुः"[1] इत्यादिप्रसिद्धस्य भगवदुपासनेन धर्मादिचतुर्विधपुरुषार्थसाधनत्वस्य भङ्गप्रसङ्गात् । इत्थं धर्मादिफलसाधनत्वमन्यत्राप्युदाहर्तव्यम् । न चात्र 'तद्धेतोरि'ति न्यायावतारः सम्भवति, साक्षात्सर्वफलसाधनत्वलक्षणमूलमन्त्रमाहात्म्याऽज्ञानिनो रजोगुणाधिक्येन बहुप्रवृत्तिशीलस्य, उपायफल्गुत्वोपेयदौर्लभ्यस्वदोषभूयस्त्वज्ञानकृतशङ्कालयवतश्च लघुसाधनत्यागगुरुसाधनप्रवृत्त्यो स्सम्भवात् । अधिकारभेदमादायैव फल्गुगुरुसाधनविधिसम्भवाच्च । महाफलनिष्पादनशक्तिमतः साधनतदङ्गनिष्पादनशक्तेः कैमुतिकन्यायेन सम्भवाच्च । अतएव श्रीमद्गीताभाष्यानुसारेण मन्त्रस्सर्वार्थसाधकः' इत्यादिवचनबलेन च मूलमन्त्रस्य सद्वारकाद्वारकैश्वर्यादिफलसाधनत्वं युक्तम् । जपहोमादिमुखेन साधननिष्पादकत्वस्य मूलमन्त्रे प्रमाणसिद्धत्वेनाऽर्थशब्दस्य प्रधानफलपरत्वस्य कल्पनाया अशक्यशङ्कत्वात् । तस्मात् मूलमन्त्रस्य त्रिवर्गापवर्गफलसाधनतदङ्गनिष्पादकतयापि फलहेतुत्वं सम्भवतीति ।(कर्मज्ञानभक्तिषु) इति समप्रधानतयोपादानात् प्रथमं कर्मयोगे ज्ञानयोगे भक्तियोगेवेति लभ्यते । अङ्गाङ्गिभावेन त्रयाणा मन्वयविवक्षायां भक्तियोगान्वयविवक्षयैव कर्मज्ञानान्वयसिद्ध्या कर्मज्ञानोक्तिवैफल्यापत्तेः, इत्यभिप्रेत्योक्तं—कर्मयोगनिविष्टैः, प्रथमं ज्ञानयोगनिविष्टैः, भक्तियोगनिविष्टैरिति । एतेन 'कर्मज्ञानानुगृहीतभक्तौ

---

१. विष्णुधर्मे. ४३-४७ ॥

**सहायतया स्वीकृतस्तु कर्मसाध्यज्ञानारम्भविरोधिपापं निवर्त्य तद्ज्ञानमनुदिनमभिवर्द्धयंस्तत्समापयति । भक्तियोगनिविष्टैः सहायतया स्वीकृतोऽयं भक्तियोगारम्भविरोधि·**

प्रवृत्तानामङ्गप्रधानविरोधिनिवृत्तिपूर्वकं तदुपचयहेतुरित्यर्थः' इत्युक्तार्थो निरस्तः। (**कर्मयोगनिविष्टैरि**)त्यादि. प्रथमं कर्मयोगे प्रवृत्तिः श्रीमद्गीताभाष्यश्रीसूक्त्यनुसारेण स्वारसकी । कर्मयोगारम्भविरोधिपुण्यपापरूपकर्मणां नाशाय 'जन्मान्तरसहस्रेषु" इत्यादिप्रकारं विना मूलमन्त्रमेव जपहोमादिमुखेन सन्निपत्योपकारकाङ्गत्वेन कर्मयोगसहायतया यदि कश्चिल्लाघवार्थं स्वीकरोति; तदा करणशरीरनिष्पादकतया निष्पन्नकरणानुवृत्तिसम्पादकतया च योगक्षेमरूपोपकारद्वयं कर्मयोगविषये मूलमन्त्रः उपकरोतीति तात्पर्यम्। (**प्रथमं ज्ञानयोगनिविष्टैरि**)त्यादि, यदि तु कश्चिल्लाघविकतरः सुकृतविशेषाधीनरुचिविशेषेण प्रथमं ज्ञानयोगमनुतिष्ठन् कर्मयोगसाध्यायाः ज्ञानयोगोत्पत्तिविरोधिकर्मनिवृत्तेस्सिद्धये पूर्वोक्तरीत्या कर्मयोगस्थाने मूलमन्त्रं ज्ञानयोगसहायत्वेन स्वीकरोति; तदा स तथैव ज्ञानयोगोपकारको भवतीति भावः। (**भक्तियोगनिविष्टैः**) इत्यादि. यदि कश्चिल्लाघविकतमः अत्यन्तोत्कटसुकृतविशेषाधीनात्यन्तिकाभिनिवेशविशेषेण प्रथममेव मुक्तानुभवप्रायं भक्तियोगमनुतिष्ठन् कर्मयोगज्ञानयोगोभयसाध्यफलसिद्ध्यर्थं मूलमन्त्रमेव तदुभयस्थाने पूर्वोक्तरीत्या सहायतया स्वीकरोति; तदापि मूलमन्त्रः तदुभयस्थाने स्थित्वा तथैव भक्तियोगोपकारको भवतीति हृदयम्। (**विरोधिनं निवृत्त्ये**)त्यनेन-पूर्वेष्टप्रापणरूपयोग· उक्तः। (**तास्समापयती**,त्यनेन स्थितेष्टपरिपालनरूपक्षेम उक्तः ।

अत्रायमर्थोऽनुसन्धेयः---(**कर्मज्ञानभक्तिषु**) इति बहुवचनानुरोधेन, पूर्वोक्तन्यायेन, 'उपायास्ते त्रयः पूर्वे कथिताश्चावधारिताः। व्याचक्ष्वाम्ब चतुर्थं तमुपायं परमम्बुजे" "उत्तारहेतवोऽमीषामुपाया विहिता मया।कर्म सांख्यं तथा योग इति शास्त्रव्यपाश्रयाः" "निक्षेपापरपर्यायो न्यासः पंचाङ्गसंयुतः। सन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥ उपायोऽयं चतुर्थस्ते प्रोक्तः शीघ्रफलप्रदः। अस्मिन् हि वर्तमानानां विधौ विप्रनिषेविते ॥ पूर्वे त्रय उपायास्ते भवेयुरमनोहराः॥" "मुमुक्षणा यत्सांख्येन योगेन न च भक्तितः" "वर्षेषु द्वादशस्वेव मनुतिष्ठन्समाहितः । क्रियाकलापमखिलं याति सायुज्यसम्पदम्। एतानि मन्त्रनामानि मयोक्तानि महामते । मन्त्रतो येन बोध्यन्ते मुक्त्युपायाः पृथक्पृथक् । उपायाश्चोदिताः पूर्वे नमे स्युस्तारकास्त्रयः" इत्यादिवचनानुरोधेन च कर्मादीनां पृथगुपायत्वं सिद्धम्। 'कर्मयोग ज्ञानयोग भक्तियोगाः' इति प्रयोगानुसाराच्च पृथगुपायत्वं दुर्वारम् । एतेषां प्रत्येकमुपायत्वे एकस्यान्यौ द्वौ अङ्गे भवतः। तथा हि ज्ञानभक्त्यनुगृहीतं कर्म जनकादिषु दृष्टम्। कर्मभक्त्यनुगृहीत ज्ञानं भरतादिषु दृष्टम् । कर्मज्ञानानुगृहीता भक्तिः प्रह्लादादिषु दृष्टा । तदुक्तम् "ज्ञानभक्त्यन्वितं कर्म जनकादिषु दृश्यते । कर्मभक्त्यन्वितं ज्ञानं प्रायेण भरतादिषु । कर्मज्ञानान्विता भक्तिः प्रह्लादप्रमुखाश्रया"इति। तेषु तेषु तत्तत्प्राधान्यात् त्रैविध्यम्।न च "पुरुषार्थोऽतश्शब्दादिति बादरायणः" इति सूत्रविरोध इति वाच्यम् ; तस्य कर्मशेषभूतकर्तृयाथात्म्यवेदनं 'ब्रह्मविदि'त्यादिनाभिधीयत इत्येतन्मात्रनिराकरणे तात्पर्यात् । "न कर्मणा न प्रजया धनेन त्यागेनैकेन अमृतत्वमानशुः" "नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन" "नाहं वेदैर्न तपसा"

१. लघ्वत्रिस्मृतौ. १-अध्या ॥
२. लक्ष्मीतन्त्रे. १७-२ ॥
३. लक्ष्मीतन्त्रे १७-४९ ॥
४. लक्ष्मीतन्त्रे. १७-७४ ॥
५. अहिर्बुध्न्यसं. ३६-२९ ॥
६.
७. ब्रह्मसूत्रम्. ३-४-१ ॥
८. तै·ना. १०-२१ ॥
९. कठोपनि. १-२-२३ ॥
१०. गीता. ११-५३ ॥

पापनिरसनेन भक्तिविवृद्धिहेतुस्सन् तत्समापयतीत्यर्थः ॥ २० ॥

(२१) एतावन्मात्रं विना प्रपन्नेष्वप्येतेन क्रियमाणोपकारमाह—प्रपत्ताविति ॥

मू ॥ प्रपत्तियिले इलिन्दवर्हळुक्कु-स्वरूपज्ञानत्तै पिरप्पित्तु, कालक्षेपत्तुक्कुं, भोगत्तुक्कुं हेतुवायिरुक्कुम् ॥ २१ ॥

छा ॥ प्रपत्तौ प्रविष्टानां - स्वरूपज्ञानमुत्पाद्य, कालक्षेपस्य, भोगस्य च हेतुर्भवति ॥ २१ ॥

व्या ॥ अयमर्थः - पूर्वोक्तकर्मादिवत् दुःशकत्वस्वरूपविरुद्धत्वरहिते सुशके

---

इत्यादीनां च निषेधानां केवलकर्मादीनां मोक्षोपायत्वनिषेधविषयत्वेनाप्युपपत्तेः । "नान्यः पन्था" इत्यादिनिषेधश्रुतौ 'अन्य' शब्दस्य वेद्यान्यपरत्वात् विरोध एव नास्ति । तथोक्तमाचार्यैर्निक्षेपरक्षायां "वेद्यान्यपरोऽन्यशब्दः" इति । तस्मात् कर्मयोगादीनां परस्परसाहचर्येण साधनत्वेऽपि तत्तदधिकार्यभिमतप्राधान्यभेदात् क्वित्वविरोधो नास्त्येव । फलोद्देशेन प्रवृत्त्यपेक्षया प्राधान्यम्, करणस्वभावप्रयुक्तव्यापारापेक्षया अप्राधान्यञ्चाधिकारिभेदेनोपपन्नमिति 'ज्ञानकर्मान्वितमि'ति वचनबलादङ्गीकरणीयम्। एवं रीत्या निक्षेपरक्षादिश्रीसूक्तेरप्यर्थो वर्णनीय इति। कर्मज्ञानाङ्गकभक्तेरेव साक्षादुपायत्वमप्यचार्यसम्मतमेव। उभयमपि श्रीवचनभूषणव्याख्याने प्रसादितम् "उपायान्तरनिष्ठानामुद्देश्यः-देवतान्तर्यामीश्वरः, उपायाः-कर्मज्ञानभक्तयः, उपेयं-भगवदनुभवः" इत्यत्र।तथा हि "आत्मस्वरूपं भगवदनन्यार्हशेषमिति वेदान्तमुखेन निश्चित्यापि अभिमतलाभस्य तस्यैवोपायत्वेन स्वीकरणानभिज्ञतयोपायान्तरनिष्ठानामुद्देश्यः - अग्नीन्द्रादिदेवतानामन्तर्यामीश्वरः। इदं कर्मयोगस्य स्वरसम् । ज्ञानयोगभक्तियोगयोरसाधारणविग्रहविषयत्वसत्वेऽपि कर्मानुष्ठानस्थलत्वेन जातत्वात्, 'कर्माराध्य एव स्वासाधारणविग्रहविशिष्टवेषं प्रकाशितवानि'त्यध्यवसायसत्वात्, 'देवतान्तर्याम्येवोद्देश्य इत्युच्यते' इत्यङ्गीकर्तव्यम्। उपायाः-प्रत्येकं मोक्षसाधनतया शास्त्रसिद्धाः कर्मज्ञानभक्तियोगाः । एतेषां प्रत्येकमुपायत्वे एकस्यान्यौ द्वौ अङ्गे भवतः । 'ज्ञानभक्त्यन्वितं कर्म जनकादिषु दृश्यते । कर्मभक्त्यन्वितं ज्ञानं प्रायेण भरतादिषु । कर्मज्ञानान्विता भक्तिः प्रह्लादप्रमुखाश्रया" इत्युक्तं हि । अथवा, (कर्मज्ञानभक्तयः) इत्यत्र वेदान्तमर्यादया कर्मज्ञानानुगृहीतभक्तिरेवोपायः, तदङ्गतया कर्मज्ञाने 'उपायाः' इत्युपचारेण वा योजनीयमि"ति । वक्ष्यते च चरमश्लोकप्रकरणे "स्वतन्त्रसाधनत्वेनोक्तकर्मयोगः"इति । एवं सुन्दरजामातृमुनीन्द्रैरपि तत्वदीपरहस्येऽप्यनुगृहीतमिति दिक्—इति ।

अस्मिन्सूत्रे "अनेनैव हि कर्माद्या योगा सिद्ध्यन्ति योगिनाम् । सिद्धेर्न तद्यपेक्षास्य तस्मादेनं परं विदुः" इत्यादिपाञ्चरात्रवचनमनुसन्धेयम् ॥ २० ॥

पूर्वं कर्माद्युपायान्तरसहकारित्वलक्षणो मूलमन्त्रोत्कर्ष उक्तः; इदानीम् "उपायोऽयं चतुर्थस्ते प्रोक्तः शीघ्रफलप्रदः"इत्याद्युक्तप्रपत्तिसहकारित्वलक्षण उत्कर्ष उच्यत इति सङ्गतिमभिप्रेत्याह—**एतावन्मात्रं विना प्रपन्नेषु** इति ।

सूत्रार्थमाह—**अयमर्थ** इति । (**दुश्शकत्वे**)ति, कर्मादिसाध्यत्वादिति भावः । (**स्वरूपविरुद्धत्वे**)ति, उपायान्तराणां स्वरूपविरुद्धत्वं नाम - भगवदत्यन्तपारतन्त्र्यरूपस्वरूपविरुद्ध-

---

१. पुरुषसूक्ते ॥
२. श्रीवचनभूषणे. ३५६-सू ॥
३. मुमुक्षुप्पडि. ३-११.॥
४. लक्ष्मीतन्त्रे. १७-७५ ॥

त्वम् । पारतन्त्र्यञ्च-पराधीनफलत्व पराधीनकर्तृत्व स्वरक्षणोपायप्रवृत्त्यनर्हत्वरूपेणत्रिविधम् । तत्र राज्ञः भृत्यः - स्वकर्मानुगुणफलमात्रे पराधीनत्वात् परतन्त्रः । पराधीनस्वीयकृतिसाध्यसाधन - प्रीतपराधीनफलकत्वात्, उपासकः-ईश्वरस्यातिपरतन्त्रः । पराधीनाखिलस्वव्यापाराधीनसाधन-ताकपराधीनफलकत्वात्, प्रपन्नः-ईश्वरस्यात्यन्तपरतन्त्रः । एवमत्यन्तपारतन्त्र्यन्नाम-स्वरक्षणोपाय प्रवृत्त्यनर्हत्वम् । एतादृशस्वरूपस्य विरुद्धत्वमेवेति भावः ।

एवमुपायान्तराणां भोगमोक्षसाधनकृत्यनर्हत्वरूपपारतन्त्र्यविशिष्टस्वरूपसंस्पर्शायोग्यतारूपविरुद्धत्ववचनम् - "[१]नाशकत्वमयोग्यत्वं नैष्फल्यानिष्टहेतुते । विवेकपरिपन्थित्वं तथाहङ्कारमिश्रता । औपाधिकत्वं शेषत्वपारतन्त्र्यविरूपते । ऐकान्त्यभङ्गकत्वञ्च श्येनादिसमता तथा । प्राप्याननुगुणत्वञ्च तथा पातककोटिता । शिष्टापरिगृहीतत्वं कलिधर्मत्वहिष्ठता । इत्येवं पञ्चदशधा" इत्युक्तपञ्चदशविध-स्वरूपविरोधस्याप्युपलक्षणम् ।

अत्र (१) नाशकत्वं नाम - "[२]न स्त्री स्वातन्त्र्यमर्हति" इत्युक्तप्रकारेण स्त्रीपारतन्त्र्यशक्तेः, पुंवद्भावस्य नाशकत्ववत्, वह्नेर्दाहकत्वशक्तेः - प्रतिबन्धकरूपमणिमन्त्रौषधादीनां नाशकत्ववच्च, चेतनस्य स्वरक्षणे स्वान्वयानर्हत्वरूपपारतन्त्र्यशक्तेः - स्वरक्षणे स्वान्वयरूपोपायान्तराणां नाशकत्वम् ।

(२) अयोग्यत्वम् - स्वप्रवृत्तिसाध्यरूपसाधनान्तरस्य हेयप्रत्यनीकविषये हेयसम्बन्धवत् पारतन्त्र्यस्वरूपवद्विषये असम्भावितत्वम् ।

(३) नैष्फल्यम् - उपायान्तराणां यथाक्रतुन्यायात्, स्वार्थानुभवकैङ्कर्ययोः साधनत्वेन परार्थानुभवकैङ्कर्ययोः असाधनत्वेन च विद्यमानत्वात्, स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वरूपपारतन्त्र्यरूपस्वरूपस्यानुरूपपरार्थानुभवकैङ्कर्यरूपफलस्यासाधनत्वम् ।

(४) अनिष्टहेतुत्वम्-स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वरूपोत्तरपदान्वितनमश्शब्दप्रतिपाद्यपारतन्त्र्यज्ञानवतां, स्वभोगस्य - नरकानुभवादत्यन्तानिष्टरूपत्वात्, तथाविधानिष्टरूपस्वार्थानुभवकैङ्कर्य - साधकत्वम् ।

(५) विवेकपरिपन्थित्वम्-भगवन्निर्हेतुककटाक्षेण "[३]नाहं विप्रो न च नरपतिः" इत्यादिरीत्या प्रत्यक्षसमानाकारोत्पन्नदेहात्मविवेकवतां, "[४]अधिकारबोधयुक्तेषु विद्यते भावभावना । अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु" इति श्रीविष्णुपुराणोक्तप्रकारेण 'देवोऽहं, मनुष्योऽहम्' इत्युक्तवर्णाश्रमभ्रमाधिकारोपायान्तरसम्भावितत्वम् ।

(६) अहङ्कारमिश्रत्वम्—'मत्फलसाधनत्वात् मदर्थमिदं कर्मे'त्यहङ्कारममकारविशिष्टपुरुषेणोपायान्तरसाध्यत्वोक्तेः, स्वातिशयाधानप्रवृत्त्यर्हत्वरूपाहङ्कारगर्भत्वम् । उपासकविषयफलसंगकर्तृत्वत्यागविधिः प्राधान्येन फलसंगकर्तृत्वत्यागपरः । अन्यथा पुरुषार्थासिद्धिप्रसङ्गात् । एतादृशोपायान्तरं - स्वभोगोद्देश्यकप्रवृत्त्यनर्हत्वरूपपूर्वपदान्वितनमश्शब्दार्थपारतन्त्र्यज्ञानवतामसम्भावितमेव हि ।

(७) औपाधिकत्वम् · कर्मानुभवार्थमीश्वरदत्तभगवत्स्वरूपतिरोधायकस्वविषयभोग्यबुद्धिजनकसुकृतविशेषमूलकब्राह्मण्यपटुकरणत्वादियुक्तशरीरेणैव साध्यत्वम् । एतादृशोपायान्तरं "[५]किमप्यत्रापि जायन्ते" "[६]श्रीशाङ्घ्रिशुचिषद्भक्तिदग्धदुर्जातिकिल्बिषः" "[७]ते वर्णानां पञ्चमाश्चाश्रमाणां"

१. चरमश्लोकटिप्पण्याः. ४- वादे ॥
२. मनुस्मृतौ. ९-३ ॥
३.
४. विष्णुपु. ६-७-५१ ॥
५. भारद्वाजसं. १ १४ ॥
६. नारदपु-हरिभक्तोदये. ३-१६ ॥
७.

इत्यादिरीत्या साधनान्तराधिकाररूपवर्णाश्रमादिहेयस्पर्शरहितानां, "ईश्वराय निवेदितुमि"त्युक्तप्रकारेण केवलस्वभोगार्थं भगवदिच्छया दत्तकरणकलेबरवतां, सदा भगवदनुभवैकपराणां, विशेषाधिकारिणामसम्भावितमेव हि ।

(८-९) **शेषत्व-पारतन्त्र्यविरूपत्वम्** - शेषत्वपारतन्त्र्यज्ञानप्रतिबध्यत्वम् । शेषत्वन्तु परातिशयाधानस्यैवार्हत्वम् । एतादृशलक्षणज्ञानवतां, स्वातिशयाधान-परातिशयाधानप्रयुक्तसाधनान्तरान्वयासम्भवात्। पारतन्त्र्यञ्च-भोगमोक्षसाधनप्रवृत्त्यनर्हत्वम् । एतज्ज्ञात्वा "तैत्तस्य सुदृशं भवेत्" इत्यवस्थितानामधिकारिणां स्वप्रवृत्तिरूपसाधनान्तरासम्भवात् । 'नाशकत्वमि, त्यत्रोपायन्तरं पारतन्त्र्यशक्तिनाशकमित्युक्तम् । 'अयोग्यत्वमि'त्यत्र 'उपायान्तरकर्तृत्वस्य पारतन्त्र्येणैकाधिकरणवृत्तित्वं नास्तीत्युक्तम् । अत्र पारतन्त्र्यज्ञानप्रतिबध्यमुच्यते । उपायान्तरकर्तृत्वं स्वरूपस्य नास्तिचेत् पारतन्त्र्यशक्तिनाशकत्वं तस्य कथमितिचेत्, आरोपितत्वेन फलद्वारा नाशकत्वं सम्भवतीति ज्ञेयम् ।

(१०) **ऐकान्त्यभङ्गकत्वम्**-अनन्योपायत्वोपेयत्वदैवत्वरूपैकान्त्यभङ्गकत्वम्।तथाहि—उपासनात्मकसाधनान्तरानुष्ठानसमये अग्नीन्द्राद्यन्तर्यामिनो भगवतः उपास्यत्वेनावश्यम्भावात् , मधुविद्यादीनामवान्तरफलस्य सत्वात् तत्तदुपासनाङ्गतयानुष्ठेयकर्मसु पटुकरणत्वादिरूपोपासनोपयुक्तफलस्य अवान्तरत्वेन, "अविद्यया मृत्युं तीर्त्वा" इत्युक्तप्रकारेण प्रत्यवायपरिहारस्य, उपासनविरोधिपापनिवृत्तेश्च प्रधानफलत्वेन चाङ्गीकारस्यावश्यकत्वात्,पितृऋणादिविमोचनसिद्ध्यर्थं तत्तद्देवतान्तरोद्देश्यस्य कर्तव्यत्वाच्च, साधनान्तराणां फलांतरदेवतांतरान्वयसम्पादनमुखेन "सर्वपापेभ्यो मोक्षयिष्यामि" "श्रीमन्नारायणचरणौ" "मामेकम्,, इत्याद्युक्तप्रकारेण प्राप्तिप्रतिबन्धकसकलपापविमोचकत्वसिद्धत्वासाधारणदिव्यमङ्गलविग्रहविशिष्टतयासुलभत्वान्तर्याम्यादिव्याव‍ृत्तस्वरूपत्व व्याजभूतस्वीकारनिरपेक्षत्वादिविशिष्टभगवत्प्रपन्नानां, "देवर्षिभूतात्मनृणां पितृणां न किङ्करः"इत्यादिप्रकारेण देवतान्तरोपायान्तरगन्धासहिष्णूनां, "अविप्लवाय धर्माणाम्' इत्यादिप्रकारेण धर्मविप्लवादिद्वारा केवलपरार्थकैङ्कर्यरूपनित्यनैमित्तिकादिकर्मानुष्ठानयुक्तत्वेन फलान्तरान्वयगन्धरहितानां, "एकान्ती तु विनिश्चित्य देवताविषयान्तरैः । भक्त्युपायं समं कृष्णप्राप्तौ कृष्णैकसाधनः" इत्युक्तप्रकारेणावस्थितानामैकान्त्यस्य भङ्गकत्वमेव हि ।

(११) **श्येनादिसाम्यं नाम** - "श्येनेनाऽभिचरन् यजेत" इत्युक्तश्येनादियागवत् , उपायान्तराणां - स्वतन्त्रस्य पूर्वतन्त्रनिष्ठस्य शेषत्वस्वरूपे विश्वासजननार्थं विहितत्वात्, एतदभिप्रायमजानतां तेषां साधनत्वेन स्वीकृतवतां पारतन्त्र्यरूपस्वरूपविरुद्धत्वेन स्वार्थानुभवकैङ्कर्यरूपानर्थावहरूपत्वम् । आस्तिकानामभिचारकर्मवत्, उपासकानां काम्यकर्मवच्च परतन्त्राधिकारिणामुपासनं निषिद्धमेव खलु ।

(१२) **प्राप्यानुगुणत्वम्** - स्वरूपानुरूपप्राप्यविपरीतफलसाधनत्वम् । स्वार्थानुभवसाधनत्वात् विपरीतफलं हि ।

---

१. विष्णुतत्वे ॥
२. रामायणे-सु. ३९-३० ॥
३. ईशावास्योप. ११ ॥
४. गीता. १८-६६ ॥
५. भागवते. ११-५ ४१ ॥
६. लक्ष्मीतन्त्रे. १७-९३ ॥
७.
८. आश्वलायनश्रौतसूत्रम् ६ ७ ॥

(१३) **पातकत्वम्** · मुमुक्षूणां यथा पुण्यस्य मोक्षप्रतिबन्धकत्वात् पापशब्दवाच्यत्वं, तथा स्वरूपयाथात्म्यज्ञानवतामुपासनादीनामनिष्टफलसाधनतया मोक्षफलसाधनरूपत्वात् "[१]अथ पातकभीतस्त्वम्" इत्युक्तप्रकारेण पातकशब्दवाच्यत्वम् ।

(१४) **शिष्टापरिगृहीतत्वम्** - नाथयामुनयतिवरादिशिष्टजनापरिग्रहत्वम् । अत्र वक्तव्यार्थोऽन्यत्र प्रपञ्चितः, तत्र द्रष्टव्यः ।

(१५) **कलिधर्मबहिष्ठत्वम्** - "[२]हरेर्नामैव नामैव नामैव मम भेषजम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" "[३]माधवन् एन्नदे कोण्डु" "[४]तिरुमालिरुंचोलमलै एन्नेनन्" "[५]एंण्णिलुं वरुम्" "[६]द्वयवक्ता त्वम्" इत्यादिप्रकारेण भगवत्स्वीकारव्याजभूतनामोच्चारणमन्तरा साधनान्तराणां कलियुगावच्छेदेन निषेधस्य दृष्टत्वात् उपायान्तराणां कलियुगधर्मबहिष्ठत्वम् ।

(स्वरूपविरुद्धत्वे ति, अत्र केचिदाहुः—"[७]यथाधिकारं शास्त्रविहितेषूपासनादिकं स्वरूपविरुद्धमिति केचिद्वदन्ति; एतदपि प्रपत्तिस्तुत्यर्थमतिवाद एव । तथा हि नित्यात्मस्वरूपस्य नाशकत्वात् स्वरूपविरुद्धमिति वक्तुं न शक्यते ; प्रपत्त्यनुष्ठानकैंकर्यभक्त्यादौ "[८]कर्ता शास्त्रार्थवत्त्वात्" "[९]परात्तु तच्छ्रुतेः" इति भगवदधीनकर्तृत्वसत्त्वात्, 'आत्मस्वरूपमत्यन्तनिर्व्यापारमि'त्युक्ते सत्त्वलक्षणभूतार्थक्रियाकारित्वाभावेन तुच्छत्वप्रसक्तेः । ज्ञानचिकीर्षाप्रयत्नाश्रयत्वरूपकर्तृत्वाभावेन 'आत्मनस्सन्निधिमात्रमेव व्यापारः' इत्युक्ते भोक्तृत्वादीनामपि अभावप्रसङ्गे अस्य संसारमिथ्यात्वापत्त्या मोक्षोपायनैरपेक्ष्यप्रसङ्गाच्च । साङ्ख्यादिवत् स्वरूपस्य कर्तृत्वाभावात् 'उपासनादिकं स्वरूपविरुद्धमि'ति न शक्यते वक्तुम्; "[१०]अचेष्टमानमासीनं श्रीः कंचिदुपसर्पति। कर्मी कर्मानुसृत्यान्यो न प्राप्यमधिगच्छति" इत्युक्तिरपि शास्त्रचोदितोपायानां न नैरर्थक्यं वदति ; पूर्वानुष्ठितकर्मविशेषाणां फलोपधायकत्वमात्रपरत्वात् । किंच मोक्षप्रतिकूलरागाद्युपाधिप्रयुक्तकाम्यनिषिद्धकर्मणामिव बन्धकत्वाभावात्, मोक्षार्थिनमुद्दिश्यैव विहितत्वाच्च उपासनादीनामनर्थावहत्वरूपविरोधोक्तिर्न शास्त्रमूला । तस्मादुपासनादीनामात्मस्वरूपं प्रति नाशकत्वासम्भावितत्वानर्थावहत्वानामभावात् केनापि प्रकारेण स्वरूपविरोधो नास्ति ।

ननु एवमपि "आत्मनो देहेन्द्रियादिविलक्षणत्वात् स्वरूपे वर्णाश्रमादिकं नास्ति' इति ज्ञानवतः 'ब्राह्मणोऽहम्, क्षत्रियोऽहम्' इत्याद्यभिमानपूर्वकं कर्तव्यवर्णाश्रमधर्माः, तन्मूलकव्यापारान्तराणि च न कर्तव्यानि' इति वर्णाश्रमादिनिबन्धनकर्मणां स्वरूपविरुद्धत्वे न कोऽपि दोष इतिचेत्, इदमप्यनुपपन्नम् । तथा हि—'स्वरूपे ब्राह्मण्यादिकं नास्ति' इति ज्ञानसम्भवेऽपि, कर्मविशेषवशात् ब्राह्मण्यादिविशिष्टशरीरेण सम्बन्धवत्त्वात्, तच्छरीरसम्बन्धप्रयुक्तक्षुत्पिपासादिपरिहारन्यायेन, एतच्छरीरपातपर्यन्तं, तत्तद्वर्णाश्रमादीनां स्वशक्तेश्चानुरूपं, अनिष्टनिवृत्तीष्टप्राप्तिविषयकशास्त्रविहितधर्माः न परित्याज्याः । तस्मादुक्तधर्माणां देहात्मविवेकवशात् अधर्मत्वमापाद्य, एतेषां त्याज्यत्वं वक्तुं न श-

---

१. विष्णुधर्मे. ६६ ७१ ॥
२. बृहन्नारदीयपु. ३८-१२७ ॥
३. तिरुवायमालि. २-७-३ ॥
४. तिरुवा-लि. १० ८-१ ॥
५. तिरुवा-लि. १-१०-१ ॥
६. शरणागतिगद्ये ॥
७. रहस्यत्रयसारे. २४-अधि ॥
८. ब्रह्मसूत्रम्. २-३-३३ ॥
९. ब्रह्मसूत्रम्. २ ३-४० ॥
१०.

क्यते। देहात्मविवेकवत एव परलोकसाधनभूतधर्मे अधिकारात्। उक्तधर्मानुष्ठानस्य स्वरूपे ब्राह्मण्यादिभ्रमो नाधिकारः। परन्तु ब्राह्मण्यादिविशिष्टशरीरसम्बन्ध एवाधिकारः। अतस्सर्वधर्मानुष्ठानस्यापि उपयुक्तप्रकृत्यात्मविवेकमूलकत्वात्. उपासनादेर्विरोधं न पश्यामः। उपासनादिकमारोपमात्रकम्, कर्मोपार्जितकरणकलेबररूपोपाधिभिरनुष्ठेयतया, कर्मयोगादिकं च स्वरूपविरोधि इति वदतां स्वरूपज्ञानद्वयश्रवणादिकानां मनःप्रभृतिसापेक्षतया तदविशेषत्वात्।

ननु एवमपि शेषत्वात् स्वरक्षणे प्राप्तिरहितस्य, अत्यन्तपरतन्त्रत्वात् स्वरक्षणाशक्तस्य च, अस्य स्वरक्षणार्थत्वेन कर्तव्यतया उपायविधानम्, तस्यानेन साध्यत्वात् 'साध्योपायत्वप्रसिद्धिश्च' इत्येतच्च कथमुपपन्नं स्यात्। तस्मात्, भक्तियोगादिकं शेषत्वानुरूपत्वाभावात् स्वरूपस्यानिष्टावहम्: अत्यन्तपारतन्त्र्यविरुद्धत्वात् असम्भावितं चेति वक्तुं किं न शक्यमिति चेत्; — इदं सर्वमोक्षप्रसङ्गादिना परिहृतप्रायम्। एतत्कृतव्याजाभावेऽपि मुक्तत्वकरणे मुक्तत्वस्यानादित्वप्रसङ्गः। "ईश्वरः, केवलस्वातन्त्र्येण मुक्तं करोती'त्युक्ते वैषम्यनैर्घृण्यादिकं प्रसज्येत। मोक्षोपायविधायकशास्त्राणां चानर्थक्यं प्रसज्येते। तस्मादुक्तं शेषत्वेन प्राप्तविषयसमाश्रयणं. स्वामिनः स्वत्वरक्षणे औचित्यञ्च सिद्ध्यति। अत्यन्तपारतन्त्र्येण तदायत्तस्वातन्त्र्यवहनं, विहितत्वात् तदभिमतोपायानुष्ठानं, फललाभस्य तत्प्रतीक्षणं च सिद्ध्यति। उक्तं शेषत्वं पारतन्त्र्यं च फलदशायां तदभिमतकैङ्कर्यं तदिच्छानुगुण्येन कर्तुं चोपयुक्तं भवति। 'एतद्विरोधात् स्वरक्षणार्थस्वव्यापारोऽनुचितः' इति वदतां, यथाशास्त्रं भगवत्प्रीत्यादिफलमुद्दिश्य क्रियमाणकैङ्कर्ये, साध्यत्वेन विधीयमानप्रपत्तौ च स्वरूपविरोधबुद्ध्याधिकाराभावप्रसङ्गः। वाक्यजन्यसंबन्धज्ञानादिमात्रातिरिक्तं किंचित् शरणं व्रजेदि'ति विहितत्वात्, विहितस्य साद्ध्यत्वमुपपन्नम्। तस्माच्छेषभूतस्य परतन्त्रस्यास्य यथाधिकारं स्वरक्षणार्थव्यापारो युक्त एव।

ननु एवमपि अनन्यार्हशेषभूतत्वेन परमैकान्तिकतया स्वात्मानं जानतः देवतान्तरद्वारकवर्णाश्रमधर्मेतिकर्तव्यताकभक्तियोगादिकं पारमैकान्त्यविरुद्धम्; शुद्धयाजिन एव हि परमैकान्तिकत्वसम्भवः इति चेत्—इदं भाष्यादिकृतनिष्कर्षानभिज्ञानकृतं चोद्यम्; प्रतर्दनादिविद्यासु 'परमात्मा इन्द्रादिशरीरकतया मुमुक्षूपास्य' इति निर्णीतम्[1]। विद्याङ्गभूतवर्णाश्रमादिकर्मसु 'देवताशरीरत्वेनावस्थितपरमात्मैवाराध्यः' इति च निर्णीतम्। तस्मात् स्वातन्त्र्येण देवतान्तरभजने वा फलान्तरकामनया स्वधर्मभूतनित्यनैमित्तिककर्मानुष्ठाने वा, पारमैकान्त्यं विरुद्ध्यते। फलान्तरसङ्गाभावेन परमात्मविशेषणभूतान् अग्नीन्द्रादीन् विशेष्यपर्यन्तान् अनुसन्धाय वा "साक्षादप्यविरोधं जैमिनिः" इति न्यायेन, अग्नीन्द्रादिशब्दान् साक्षाद्भगवद्वाचकत्वेनानुसन्धाय वा स्वस्य धर्मानुष्ठाने विधिबलेन पारमैकान्त्यविरोधो नास्ति।

ननु एवमपि अभिचारादिविधिप्रकारेण शास्त्रप्ररोचनाद्यभिसन्ध्याधिकारिविशेषे उपासनादिकं विहितम्; मुमुक्षोः प्राप्यप्रापकयोरेकत्वात्, प्राप्यानुरूपोपायस्सर्वेश्वर एक एव। अत एव हि "अथ पातकभीतस्त्वं सर्वभावेन भारत। विमुक्तान्यसमारम्भो नारायणपरो भव"[2] इति धर्मदेवता स्वपुत्रस्य 'उपासनादिकं प्राप्यविरूपमि'ति प्राह; इति चेत्—इदमप्यत्यन्तानुपपन्नम्; अभिचारादिकं फलविशेषसाधनत्वात् किल अनर्थहेतुर्जातम्। अत्र फलस्य मोक्षत्वात् तद्द्वारानर्थहेतुत्वं नास्ति; 'एकाधिकारिविशेषे एकविषयस्य गुरूपायप्रदर्शनं कृत्वा लघूपायरुचिं दर्शयति' इत्ये-

१. ब्रह्मसूत्रम्. १-२ २९॥ | २ विष्णुधर्मे. ६६-७१॥

तत् विवक्षितविपरीतं भवति। 'अङ्गेषु अङ्गिफलनिर्देशः' इति स्तुतिरूपत्वमेव हि तदा फलितं स्यात्। तदभावात् 'प्राप्यस्य एतदनुरूपमि' त्येतत् शास्त्रनेयमिति युक्तिमात्रेण प्राप्यविरोधो दुर्वचः, आगमविरोधात्। तर्केण शास्त्रस्य बाधे सर्वशास्त्राप्रामाण्यापत्तिः। 'अथ पातके'त्यादौ 'उपासनादिकं पातकशब्दवाच्यम्' इत्यत्र प्रमाणं नास्ति। तस्मात् मुमुक्षुंप्रति विहितत्वात् भक्तिप्रपत्ती यथाधिकारं परिग्राह्ये।

ननु विहितत्वेऽपि आचार्यरुचिपरिगृहीतत्वाभावात् अतिथिसत्कारादौ विहितगवालंभनादिवत् उपासनादिकं शिष्टपरिग्रहविरुद्धत्वात् अनादरणीयमिति चेत्, – तदपि निरूपकवाक्यं न भवति। आचार्यमात्रापरिग्रहे हि "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु" इति त्याज्यता। अत्र "तस्मै नमो मुनिवराय पराशराये" ति श्लाघनीयपराशरादिपूर्वाचार्यानुष्ठितत्वात् सर्वशिष्टबहिष्कारो दुर्वचः।

ननु कलियुगे यथोक्तपरमात्मोपासनाधिकारिदुर्लभत्वात् इदमेतत्कालविरोधि। अत एव "कलेर्दोषनिधे राजन् अस्ति ह्येको महान् गुणः। कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्" इत्युच्यते इति चेत्,—न; "कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे। यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः" इति एतत्कालेऽपि उपासनादेरधिकारिणस्स्वयंप्रयोजनभक्तियोगनिष्ठाः पूर्वाचार्याः बहवस्सम्भाविता एव। अन्यथा संकीर्तनव्यतिरिक्तप्रपत्तेरपि "किन्तु तस्य च मन्त्रस्य कर्मणः कमलासन। न लभ्यतेऽधिकारी वा श्रोतुकामोऽथवा नरः" इति महाविश्वासयुक्ताधिकारिणो दुर्लभत्वात् अत्रापि तत्प्रसज्येत। तस्मात् उपासनादेर्न कोऽपि विरोधोऽस्ति। अतो यथ शास्त्रमातुरादीनामवगाहनादिवत्, इदं "अकिञ्चनोऽनन्यगतिः" इत्युक्ताधिकारिणः स्वाधिकारविरुद्धमिति वक्तुं युक्तम्। उक्ताधिकारविरोधमज्ञात्वा उपासनादिके प्रवर्तमानं प्रति "नरस्य बुद्धिदौर्बल्यात् उपायान्तरमिष्यते" इत्युक्तम्; तस्मात् उपासनादिकमपि अधिकार्यन्तरं प्रति यथाधिकारमनुगुणमेव। एवमुपासनादेश्शेषत्वपारतन्त्र्यस्वरूपविरुद्धत्वाद्यभावात् तदुक्तिरसङ्गते"—ति।

अत्रास्मदाचार्यवर्याः—न हि वयं आत्मस्वरूपस्यात्यन्तनिर्व्यापारत्वं वदामः; येन तुच्छताद्यापत्तिः। न वा सन्निधिमात्रमेव व्यापारः, येन संसारस्य मिथ्यात्वापत्तिः। किन्तु "परात्तु तच्छ्रुतेः" इत्यादिसिद्धकर्तृत्वमात्मनोऽभ्युपगच्छामः। तर्हि कैंकर्य इव उपासनेऽपि कर्तृत्वं स्वरूपप्राप्तमेव स्यात् इति न वाच्यम्,—कर्तृत्वस्य 'साधनविषयत्वं फलविषयत्वञ्च' इत्याकारद्वयमस्ति। तत्र साधनविषयत्वमौपाधिकम्। कर्माधीनत्वात्, मोक्षदशायां साधनगोचरकर्तृत्वाभावाच्च। फलगोचरन्तु स्वाभाविकम्। मोक्षदशायामनुवृत्तेः। अतस्साधने कर्तृत्वमात्मन औपाधिकम्। "स्वतन्त्रः कर्ते"ति स्वातन्त्र्यावहत्वात्, नाशकम्। "शास्त्रफलं प्रयोक्तरि" इति स्वस्य फलित्वावहत्वात् अनर्थावहत्वञ्च भवति। "उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ" इतीश्वरस्यैव फलित्वात्, चेतनस्यापि भोक्तृत्वसम्भवेऽपि तस्य कुसुमादेस्सौरभ्यादिवत् परार्थत्वमेवेति भोक्तृत्वमीश्वरस्यैव। किंचाऽस्य

---

१. याज्ञवल्क्यस्मृतौ॥
२. स्तोत्ररत्ने. ४॥
३. भागवते. १२-३-५१॥
४. विष्णुधर्मे. १०९-५७॥
५.
६. स्तोत्ररत्ने २२॥
७. लक्ष्मीतन्त्रे २८-१७॥
८ ब्रह्मसूत्रम्. २-३-४०॥
९. पाणिनीयसूत्रम्. १-४-५४॥
१०. पूर्वतन्त्रे. ३-७ १८॥
११. श्रीरङ्गराजस्तवे. २-८७॥

गुणानुगुणाप्रवृत्तिः स्वरूपविरुद्धा निषिद्धा च । "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" इति, "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते" इति च सांसारिकप्रवृत्तिमात्रस्य गुणनिबन्धनत्वमुक्त्वा "गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् । जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते" इत्यत्र सत्वगुणप्रयुक्ता साधनभूतोपासनादिप्रवृत्तिरपि त्याज्यतया उक्ता । न च कैङ्कर्यप्रवृत्तिरपि सत्वमूला त्याज्या : वर्णाश्रमानुष्ठानजन्यसत्वस्य औपाधिकत्वेऽपि "सत्वस्यैषप्रवर्तकः" इति भगवन्निर्हेतुककृपाप्रवर्तितसत्वस्य निरुपाधिकतया तन्मूलकैङ्कर्यस्य सांसारिकप्रवृत्तित्वासम्भवात् । अन्यथा मुक्तिदशायां गुणानुभवकैङ्कर्यादेस्सत्वमूलत्वेन औपाधिकतापत्तेः । अत एव गुणातीतत्वहेतुतयानन्यप्रयोजना भक्तिः अत्रैवोक्ता । "मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते "इति साधनभक्तिस्स्वपुरुषार्थसिद्ध्यर्थानैकान्तिका । उपासकस्य फलित्वेन स्वस्मिन्ननुरागवत्वात् । अत एव "त्वं न्यञ्चद्भिरुदञ्चद्भिः कर्मसूत्रोपपादितैः । हरे विहरसि क्रीडाकन्दुकैरिव जन्तुभिः" इति 'मोक्षोदञ्चनहेतुरपि लीला' इत्युच्यते । तस्मात्कर्मकृतगुणानुगुणलीलारूपसाधनसांसारिकप्रवृत्तिः स्वरूपविरुद्धा ।

यच्चोक्तं 'कर्मानुष्ठाने 'ब्राह्मणोऽहमि'ति भ्रमो नाधिकारः. देहात्मविवेकवत एवाधिकारत्वात् । परन्तु ब्राह्मण्यादिविशिष्टशरीरसम्बन्ध एवाधिकारः — इति, तन्न ; साधनानुष्ठानमात्रस्य देहात्मभ्रमकार्यत्वात् । तच्च श्रीविष्णुपुराणेऽभिहितम् "अधिकारबोधयुक्तेषु विद्यते भावभावना । अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु" इति । अत्र श्रीभाष्यकाराज्ञानुवर्तिनः श्रीविष्णुचित्तार्याः—"संसारिष्वेव सनकहिरण्यगर्भादिषु भावनात्रयान्वय इत्यत्राह — 'अधिकारबोधयुक्तेषु' इति श्लोकेन । 'मत्फलसाधनत्वात् मदर्थमिदं कर्म' त्यधिकारबोधस्यापि अधिकारिणमाह— -अक्षीणेष्विति । विशेषज्ञानम् - देवादिभेदभिन्नापरोक्षात्मभ्रमः । यावद्भ्रमानुवृत्तिः; तावदधिकारबोधः । तेषु शास्त्रवश्यत्वमिति कर्मानुष्ठानमुपासनानुष्ठानञ्च वर्तते । देवमनुष्यात्मानुसन्धानविशेषानुरूपमानसवाचिकादिकर्मप्रवर्तत इत्यर्थः" इति । श्रीकुरुकेशविष्णुचित्तवरदगुरूपदेशानुयायिभिः व्यासार्यैश्चैवमेव वेदार्थसंग्रहव्याख्यानेऽभिहितम् "आदिशब्दस्याऽसंकोचात् मुक्तेष्वपि भावनात्रयप्रसङ्ग इति शंकाव्यावृत्त्यर्थं प्रयोजनमाह—अधिकार इति । "कर्मण्यैश्वर्यबोधोऽधिकारः" इत्यधिकारलक्षणम् । स्वप्रयोजनसाधनत्वात् कर्मणि स्वकीयत्वबुद्धिरधिकार इत्यर्थः । अधिकारबोध युक्तेषु - अधिकाररूपबोधयुक्तेषु, अनुष्ठेयविषयस्वकीयत्वबुद्धियुक्तेषु इत्यर्थः । मुमुक्षोः, उपासने स्वकीयत्वबुद्धिः ; बुभुक्षोः, कर्मणि स्वकीयत्वबुद्धिः । अधिकारबोधश्च केष्वित्यत्राह—अक्षीणेषु इति । विशेषज्ञानकर्मसु - विशेषज्ञानम् - 'देवोऽहम्, मनुष्योऽहम्' इत्यादि ज्ञानम् । विशेषज्ञाने तद्धेतुषु च कर्मसु विद्यमानेषु अधिकारबोधस्संभवति । तद्युक्तेषु भावनात्रयान्वय इति न मुक्तेषु प्रसंग इत्यर्थः" इति । 'देवोऽहं मनुष्योऽहम्, ब्राह्मणोऽहम् , क्षत्रियोऽहमि' त्यादिदेहात्माभिमानरूपविशेषज्ञानेषु, तद्धेतुभूतेषु कर्मसु चाक्षीणेषु सत्सु, चेतनानां 'मत्फलसाधनत्वात् मदर्थमिदं कर्मे'ति कर्मसु फलस्वाम्यलक्षणममतात्मकाधिकारबोधो भवति । तादृशाधिकारबोधयुक्तेषु, भावभावना - यज्युपास्यादि धात्वर्थः । तस्य, भावना - तदनुष्ठानानुकूलान्तरोद्योगः, स विद्यत इत्यस्यार्थः । तस्मात् उपासना-

१. गीता. ३-२७ ॥
२. गीता. १३-२० ॥
३. गीता. १४-२० ॥
४. श्वेता. उप-१२ ॥
५. गीता. १४-२६ ॥
६. वि. पु. ६-७-५१ ॥

ह्यनुष्ठानस्य साधनप्रपत्त्यनुष्ठानस्य च देहात्मभ्रममूलत्वात् स्वरूपविरुद्धत्वमावश्यकम् । न च वर्णाश्रम-धर्माणामप्यनुष्ठानं प्रसज्यते ; तस्य कैंकर्यत्वेनानुष्ठेयतया भ्रममूलत्वासम्भवात् ।

यदपि चेदमुक्तम्-'अहङ्कारगर्भमुपासनमित्येतत् अशास्त्रसिद्धत्वात् आरोपमात्रम्' इति;तन्न, 'मत्फल-साधनत्वान्मदर्थमि'ति साधने फले च ममताबुद्धिसत्वात्, अधिकारबोधाभावे साधने प्रवृत्त्यनुपपत्तेः। स्कान्देऽपि "कर्मिणो ज्ञानिनो भक्ताः स्वयत्नकृतबुद्धयः। तस्मात्कर्माद्युपायास्तु सान्तराया अनेकशः" इति।ननु फलसंगकर्तृत्वत्यागपूर्वकं हि कर्मोपासनञ्च विधीयते,कथमहङ्कारगर्भत्वमिति चेत् ; उच्यते, शास्त्रेषु विहितः फलसङ्गत्यागः स्वयत्नप्रधानफलित्वत्यागः, कर्तृत्वत्यागोऽपि प्रधानकर्तृत्वत्यागः । न तु कर्तृत्वमात्रत्यागः । "परात्तु तच्छ्रुतेः"[1] इति स्वस्याऽप्रधानकर्तृत्वसत्वात्। तदभावस्यापि अनु-सन्धेयत्वे तस्य मिथ्याज्ञानत्वेन मोक्षप्रतिबन्धात् । तत्त्वज्ञानाद्धि मोक्षः। अत एव प्रधानकर्तृत्वाभिमा-नस्यैव हि विशिष्य निषेधस्स्मार्यते "तत्रैवं सति कर्तारमात्मानं केवलन्तु यः । पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मतिः । अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्"[2] इति । अत्र भाष्यम्—"अधिष्ठानादिदैवपर्यन्तसापेक्षे सति, आत्मनः कर्तृत्वे, य आत्मा-नमेव केवलं कर्तारं मन्यते, स न पश्यतीत्यर्थः" इति । अन्यथा कर्तृत्वमात्रत्यागे "शास्त्रफलं प्रयो-क्तरि"[3] इति फलेऽप्यनन्वयस्स्यात् । अतस्साधकैः अप्रधानभोक्तृत्वञ्चानुसन्धेयमिति - अहङ्कारग-र्भत्वमनपोह्यम् ।

यच्चोक्तं — 'औपाधिककरणकलेवरसाध्यकर्मयोगादिकस्याप्यौपाधिकत्वात्, स्वरूपविरुद्ध-त्वे, स्वरूपज्ञानद्वयश्रवणादीनामपि मनःप्रभृतिसाध्यत्वात् तुल्यदोषता' इति ; तन्न, करणकले-बराणामौपाधिकत्वं विलक्षणसुकृतविशेषलब्धत्वम् । त्रैवर्णिकपटुतरदेहादिसाध्यत्वात् उपासनस्य । स्वरूपज्ञानद्वयश्रवणादिकं च सर्वयोनिष्वप्युपपद्यते।"चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन"[4]इतिवत् फलप्रपत्त्यन्वयस्य सुकृतविशेषकृतदेहारब्धत्वाश्रुतेः । किंचान्येषां करणकलेवरादिकमीश्वरेण तत्तत्क-र्मानुगुणं स्वार्थे विनियुज्यते । अन्येषां स्वदेहादौ प्रयोजनसत्वात् । अस्य विहितविषयेऽपि विरक्तस्य स्वदेहे प्रयोजनाभावात् ईश्वरेण नान्यत्र विनियुज्यते । किंचास्य प्रारब्धस्य देहस्यापकत्वमालमङ्गी-कृतम् । ननूत्तरोत्तरानुकूल्यप्रवृत्तियोग्यत्वमपि । अतोऽपीतरदेहादेस्तद्देहस्य व्यावृत्तिः ।

यदपि चेदमुक्तम्—'उपायान्तरं शेषत्वविरोधित्वात् अप्राप्तम्.पारतन्त्र्यविरोधित्वात् असंभावित-ञ्च इत्युक्ते सर्वमुक्तिप्रसङ्गः,स्वातन्त्र्यात् परिहारे वैषम्याद्यापत्तिः, मोक्षशास्त्रानर्थक्यापत्तिः,भगवत्प्री-त्युद्देशेन प्रपत्तिवृत्त्यादौ अनधिकारापत्तिः, इति; तदयुक्तम्. स्वप्रवृत्तिनिवृत्तिसापेक्षत्वेन सर्वमुक्तिवै-षम्याद्यभावात्, अज्ञस्य तत्राधिकारत्वेन मोक्षशास्त्रवैषम्याभावात्, भगवत्प्रीतेः फलान्तरस्य वा स्वानन्दस्य वा साधनत्वानभ्युपगमेन केवलपरातिशयावहत्वस्वीकारात् परातिशयाधायकत्वस्य शेषत्वानुगुणत्वाच्च । नास्य प्रपत्तेर्विरुद्धत्वम् । अनन्यप्रयोजनत्वेऽपि साधकस्य सर्वापि प्रवृत्तिः स्वा-र्थेति सैव विरुद्धा ।

ननु शेषत्वस्य स्वामिनः स्वत्वरक्षणौचित्येन स्वरक्षणार्थं साधनान्तरे प्रवृत्तिः शेषत्वानुगुणैवेति न विरुद्ध्यत इति चेत्.तन्न,"तत्तस्य सदृशं भवेत्"[5]इत्यादिविरोधात्। देहस्यापि तत्स्वत्वेन तत्पोषणमपि प्रसज्यते।परतन्त्रस्य परायत्तस्वातन्त्र्यावहत्वात्.तदभिमतोपायानुष्ठाने,विहितस्य तदभिमततया काम्या-

१. ब्रह्मसूत्रम्. २-३-४० ॥
२. गीता. १८-१६ ॥
३. पूर्वमीमांसासूत्रम्. ३-७-१८ ॥
४. गीता. ७-१६ ॥
५. रामायणे. सुन्द. ३०-३० ॥

नुष्ठानं स्यात्।अस्याधिकारिविशेषे निषिद्धत्वमप्यस्ति इति चेत्, अत्राप्युपायान्तरस्याधिकारिविशेषे निषिद्धत्वात् अनभिमतिस्तु लभ्या। अतस्साधनप्रवृत्तिः - शेषत्वपारतन्त्र्योभयस्वरूपविरुद्धा।

यदप्युक्तम्—कर्मोपासनयोर्देवतान्तरसम्बन्धो नास्ति अग्न्यादिशब्दानां अग्रनयनादिव्युत्पत्त्या वा अपर्यवसानेन वा परमात्मपरत्वात् इति; तन्न, काम्यत्वाकारेण देवतान्तरपरत्वाभावेऽपि नित्यत्वाकारस्य ऋणमोचनार्थतया तत्परत्वात्। उपासकस्य सर्वात्मना प्रपन्नत्वाभावेन ऋणित्वाच्च—

यदप्युक्तम्—'प्रापकान्तरं प्राप्यविरुद्धम्' इत्यत्र प्रमाणाभाव'इति; तन्न; मन्त्रद्वयस्थनमश्शब्दाभ्यां, "स्वयन्तु रुचिरे देशे" इत्याद्युपबृंहिताभ्यामप्रधानभोक्तृत्वस्याऽपि निषिद्धत्वेन स्वभोक्तृत्वफला भक्तिः प्राप्यविरुद्धा।

यच्चोक्तम्—'अभिचारादिकं फलविशेषसाधनत्वात्किल अनर्थहेतुर्जातम्; अत्र फलस्य मोक्षत्वात् तद्द्वाराऽनर्थहेतुत्वं नास्ति'-इति; तदपि न, 'धर्मान् परित्यज्य'इति निषेधबलादेव भक्तिफलस्याऽनिष्टानुबन्धित्वावगमात्। न च त्यागविधेरशक्तस्याधिकाराभावज्ञापकत्वम्, दुश्शकम्प्रति अशक्तेरधिकारत्वाभावस्य मानान्तरसिद्धतया विधिवैयर्थ्यात्।न च अग्न्याधानादिनिषेधस्य सन्न्यासिनोऽनधिकारत्वसूचकत्ववत् उपपत्तिः; तत्रानधिकारस्याप्राप्ततया तत्तात्पर्यकतोपपत्तेः। यद्वा विरक्तेः कामित्वापेक्षया उत्कृष्टत्वेन कामिगतफलस्यानिष्टसूचनत्वोपपत्तेश्च। ततश्च त्यागविधिसिद्धनिषेधबलेन भक्तिविध्युद्देश्यश्रुतफलस्यानिष्टानुबन्धित्वे सिद्धे विधितात्पर्यफलं 'कामनाधिकारादुद्धृत्य शेषत्वेऽवस्थापनम्' इति गम्यते। न च भक्तिफलस्य यावदात्मभाविनः, अनिष्टफलत्वे तेनोपच्छन्दनमयुक्तम्; योगेन तस्यापरिहरणीयत्वात् इति वाच्यम्; उपच्छन्दार्थनिर्णयो द्वेधा घटते। बलवदनिष्टानुबन्धित्वात्, बलवदिष्टाननुबन्धाच्च। तत्र चोपासनफलस्यानिष्टानुबन्धाभावेऽपि स्वतः कामित्वापेक्षया निरतिशयपुरुषार्थरूपस्य पारतन्त्र्याविर्भावापेक्षया स्वल्पत्वात्, पारतन्त्र्यरूपबलवदिष्टान्वयाऽयोगाच्च।विधेर्न तत्रात्यन्ततात्पर्यमिति गम्यते। विधिश्च कामिनमुद्धृत्य भगवद्भोगं प्रदर्श्य शेषत्वे स्थापयित्वा पश्चात्पारतन्त्र्यं स्थापयितुमुद्युक्तः;मध्ये उपासनफले दर्शिते विधितात्पर्यमजानन्तस्तत्फले एव रमन्ताम्। तस्य कामित्वापेक्षया निरतिशयत्वात्। तात्पर्यं जानन्तः पारतन्त्र्ये आगच्छन्तीति तात्पर्येण भक्तिमपि व्यदधात्। तस्माद् उपासनफलस्य निरतिशयानन्दरूपत्वेनानिष्टप्रसङ्गाभावेऽपि, ततोऽप्युत्कृष्टफलाननुबन्धितया विधेस्तत्रात्यन्ततात्पर्याभावः,पारतन्त्र्य एव तात्पर्यपर्यवसानञ्च युज्यत इति, श्येनविधितुल्यतोक्तौ न कोऽपि विरोधः। उक्तन्यायेन पातकत्वसाम्यमपि युक्तमेव। गुरूपायापेक्षया लघूपायरूपप्रपत्तेः पारम्यस्य वचनसिद्धत्वात्'न हि वचनविरोधे न्यायः प्रभवती' तिन्यायेन कुतर्कसञ्चारणमयुक्तम्।

यदप्युक्तम्-पराशराद्यनुष्ठितत्वात् उपासनस्याशिष्टपरिग्रहो नास्तीति, तन्न; ततोऽप्यतिशयितज्ञानादिभिः नाथयामुनयतिवरादिभिरननुष्ठितत्वेन शिष्टाचारविरोधोऽस्त्येव। श्रीपराशरादेश्शास्त्राचार्यत्वेऽपि साराचार्यत्वाभावात्। तन्नमस्कारस्तु उपकारकत्वकृतः।

यदप्युक्तम्—'कलौ कृतयुगं तस्ये'ति न्यायात् कलावपि स्वयम्प्रयोजनत्वेन तन्निष्ठानां पूर्वाचार्याणां सत्वात् न कालविरोधः इति; तन्न, कलियुगे साध्यभक्तेः सर्वाधिकारभूतायाः परांकुशादिसम्प्रदायप्राप्तायास्सत्वेऽपि साधनभक्तेः साधनप्रपत्तेश्च सम्प्रदायविच्छिन्नतयास्मिन् काले तदनुष्ठानायोगात्। न हि लक्ष्मीनाथमारभ्य साध्यप्रपत्तिसाध्यभक्त्योरिव, चतुर्मुखमारभ्य साधनप्रपत्ति-

१. रामा. आर. १५-७॥

**स्वरूपानुरूपे प्रपत्त्युपाये प्रविष्टानां-तदनुरूपभगवत्पारतन्त्र्यलक्षणस्वरूपज्ञानं विशदमुत्पाद्य,अर्थानुसन्धानादिना कालक्षेपहेतुर्भवति, *"मम सर्वदा मधु क्षीरममृतं च ल-**

---

साधनभक्त्योर्गुरुपरंपराप्राप्तत्वमवगम्यते । अत एव उच्यते "[1]हरेर्नामैव नामैव नामैव मम भेषजम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" इति । नामसंकीर्तनञ्च - "[2]त्वदंघ्रिमुद्दिश्य" त्याद्युक्तदेशकालप्रकाराधिकारादिनियमरहिता फलप्रपत्तिरुच्यते । एवमुपासनसाधनप्रपत्त्योः कलियुगधर्मत्वं नास्तीत्युक्तं भवति—इति ।

(**स्वरूपानुरूप**)इति, स्वरूपम्-अदृष्टद्वारकसाधनप्रवृत्त्यनर्हत्वरूपं भगवदत्यन्तपारतन्त्र्यम् । तस्यानुरूपत्वम्-योग्यत्वे सति प्रकृष्टसादृश्यम्।अत्र प्रपत्तिशब्देन "[3]अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः" "[4]त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः" इत्यादिप्रसिद्धं भगवच्छरणवरणमुच्यते । (**प्रपत्त्युपाय**) इति, सिद्धान्ते नित्यसिद्धभगवत्प्रसादव्यतिरिक्तस्य शरणवरणस्यापि उपायत्वाभावात् 'प्रपत्त्युपाय' इति व्यवहारस्तु नियतान्वयव्यतिरेकित्वाभिप्रायेण । 'एक' शब्द 'एव' कारादिभिः उपायवरणरूपायाः प्रपत्तेः-उपायत्वाभावस्य सिद्धत्वात् प्रपत्त्युपायतावादः नियतान्वयव्यतिरेकित्वपर इत्ययमर्थः श्रीवचनभूषणमीमांसायां "[5]प्रपत्त्युपायस्यैतेषु दोषेषु कोऽपि नास्ति"इत्यत्र 'एतेषु दोषेषु कोऽपिनास्तीत्युक्तत्वात् अन्यः कश्चन दोषोऽस्तीति ज्ञायते।स च वस्तुत उपायत्वस्य स्वस्मिन् अभावेऽपि आपातप्रतीतमुपायप्रतिपत्त्यर्हत्वम्"इति श्रीरम्यजामातृदेशिकैरेवोक्तः। अत्रापि चरमश्लोकप्रकरणेऽपि व्यक्तो भविष्यति। केचित् 'प्रपत्त्युपाय' इत्यत्र सिद्धोपायभूतं सर्वेश्वरमाहुः । "[6]प्रपत्तिः-ईश्वरः; "[7]न्यास इति ब्रह्मे"ति श्रुतेः" इति भगवद्विषयकठिनपददीपिकायामुक्तत्वात् । तथा हि - "न्यास इति ब्रह्म न्यास इत्याहुर्मनीषिणो ब्रह्माणमि"ति न्यासविद्यावाक्येन "[8]पन्था नमननामवान्" इति पांचरात्रवचनेन च प्रपत्तिवाचकशब्दस्य भगवत्परताया अन्यत्र निर्णीतत्वात्, 'प्रपद्यत इति प्रपत्तिः' इति व्युत्पत्तिनिष्पन्नस्य तस्य "[9]अकर्तरि च कारके संज्ञायामि"त्यधिकारे "[10]स्त्रियां क्तिन्" इति कर्मणि क्तिन्प्रत्ययविधानेन गतिशब्दवत् शक्त्यापि प्रपत्तव्यपरत्वमुपपद्यते-इति ।

मूलस्थ 'स्वरूप' शब्दस्याकारत्रययुक्तजीवस्वरूपपरत्वमभिप्रेत्याह—**तदनुरूपभगवत्पारतन्त्र्यलक्षणस्वरूपज्ञानमिति** । पारतन्त्र्यस्य-स्वरूपपारतन्त्र्योपायपारतन्त्र्योपेयपारतन्त्र्यरूपेण त्रिविधत्वादितिभावः । अनेन - शेषित्वाद्याकारत्रययुक्तेश्वरस्वरूपज्ञानमपि विवक्षितम् । स्वस्वरूपपरस्वरूपपुरुषार्थस्वरूपोपायस्वरूपविरोधिस्वरूपात्मकमर्थपंचकस्वरूपज्ञानं वा विवक्षितम् । ( **विशदमुत्पाद्ये** )त्यनेन - स्वरूपज्ञानस्य - स्वयंप्रयोजनत्वप्रपत्तिनिष्पादकत्ववर्धकत्वकालक्षेपभोगहेतुत्वरूपेण पञ्चधोपयोगो विवक्षितः । 'कालक्षेप' शब्देन स्वरूपविरुद्धप्रवृत्तिं विना-जीवनकालस्य मन्त्रार्थश्रवणमननध्यानतत्प्रवचनतदर्थानुष्ठानमुखेन पंचधा यापनं विवक्षितमित्याह —

---

* तिरुमोलि ६-१०-६ ॥

१. बृहन्नारदीयपुराणे. ३८-१२७ ॥

२. स्तोत्ररत्ने. २८ ॥

३. भरतमुनिकारिका ॥

४. अहि. सं. ३६-३६ ॥

५. श्रीव. भू. णे- सूत्रम् . १३५॥

६. भगवद्विषयकठिन. प्रथमश्रिय:पतिप्रवेशे ॥

७. तै. ना. ४९-अनु ॥

८. अहि. सं. ५२-अध्या. ३३-श्लो ॥

९. पाणिनीयसू. ३-३-१९ ॥

१०. पाणि. सू. ३-३-९४ ॥

क्ष्मीव्यामुग्धस्य श्रीनाम" इत्युक्तप्रकारेण प्रतिपाद्यवस्तुवत्स्वयंभोग्यत्वाद्भोगहेतुश्च भवतीति ॥ २१ ॥

---

अर्थानुसन्धानादिना इति। (प्रतिपाद्यवस्तुवदि)ति - "[१]रसो वै सः" इत्युक्तप्रकारेण एतन्मन्त्र-प्रतिपाद्यवस्तुनो भगवतः स्वयंभोग्यत्ववत्, "[२]मम सर्वदा मधुक्षीरममृतञ्च श्रीव्यामुग्धस्य श्रीनामे" त्युक्तरीत्या स्वयम्भोग्यत्वात् इत्यर्थः। अत्र "जपेद्भोगतया मन्त्रं सततं वैष्णवोत्तमः। न साधनतया जप्यं कर्तव्यं विष्णुतत्परैः" इति वचनमनुसन्धेयम्। अत्र 'भोग' शब्देन भगवद्भोगवर्धको मन्त्रार्थ-श्रवणादिपंचके आनुषङ्गिको जीवभोगो विवक्षितः।

अत्र केचित् वदन्ति—मूलमन्त्रस्य प्रपत्तिसहकारित्वं नोपपद्यते, प्रपत्तेस्सहकारिसापेक्षत्वे "[४]प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते" इत्यादिप्रसिद्धनिरपेक्षत्वसिद्धान्तभङ्गप्रसङ्गात्। न च कर्मादा-विव जपहोमादिमुखेन प्रपत्तिस्वरूपनिष्पादकतया मूलमन्त्रस्य सहायता सम्भवति; विरोधिनिवृत्तिमु-खेन जपादिद्वारकाङ्गत्वस्याऽदृष्टद्वारकस्य प्रातिस्विकशास्त्रेण विना कल्पनायोगात्, प्रपत्तेः प्रार्थनारू-पायाः विषयवैलक्षण्यज्ञानमात्राधीनतया चिकीर्षाधीनकृतिसाध्यत्वाभावेनाऽदृष्टद्वारकाङ्गरूपसाधनसा-ध्यत्वासम्भवाच्च। अत एव कर्मादाविवाविच्छेदापादकतयाऽङ्गत्वशङ्कापि न सम्भवति। मानाभा-वात्, अयत्नसिद्धत्वात्प्रपत्तेस्सकृत्कृताया एवोत्तारकत्वसिद्धान्तविरोधाच्च। एतेन स्वरूपज्ञानजननेन कालक्षेपहेतुतया भोगहेतुतया च विनियोगः प्रत्युक्तः। स्वरूपज्ञानस्य शब्दविधया मूलमन्त्रजन्यत्वेन तन्मुखेन शास्त्रार्थभूताङ्गत्वासम्भवात्। कालक्षेपस्य जीवनकालयापनरूपस्य प्रपन्नविषये साधनानुष्ठान-तद्योग्यतापादकानुष्ठानमुखेनाऽसम्भवेऽप्यावश्यककायिकप्रवृत्तिरूपाज्ञानुज्ञाकैङ्कर्यमुखेन संभवेन सदा मन्त्रार्थानुसन्धानानावश्यकत्वात्। अन्यथा जामितादोषप्रसङ्गात्। 'भोगहेतुतये'त्यत्र-'भोग'पदेन जीवभोगविवक्षायां-नमश्शब्दविरोधात्, भगवद्भोगविवक्षायां - 'कालक्षेपहेतुतये'त्यनेन कृतकरत्वात्। कालक्षेपस्य स्वतःप्रयोजनत्वेन नमश्शब्दविरोधात्। कालक्षेपाद्यर्थत्वेऽपि प्रपत्तिसहकारित्वासिद्धेश्च। न च प्रपन्नेष्वपि मूलमन्त्रस्योपयोगोऽस्तीति विवक्षितमिति वाच्यम्, तस्येतरवैलक्षण्यरूपत्वाभावेन परमप्रकृतानुपयोगात्—इति।

अत्रोच्यते - मूलमन्त्रस्य प्रपत्तिसहकारित्वमुपपद्यत एव। जपहोमादिमुखेन कर्मयोगादिनि-ष्पादकत्वादिमुखेन तदङ्गत्ववत् शब्दविधया स्वरूपज्ञानजननमुखेन प्रपत्तिस्वरूपनिष्पादकतया तदङ्ग-त्वोपपत्तेः। न चैतावता "प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते" इत्यादिप्रमाणमूलकनिवृत्त्यङ्गत्व-सिद्धान्तभङ्गः; अदृष्टद्वारकमोक्षसाधनाननुष्ठानाङ्गकत्वस्यैव निवृत्त्यङ्गत्वशब्दार्थतया दृष्टकारणसापेक्षत्वे तद्भङ्गाभावात्। एतेन 'न च कर्मादौ' इत्याद्युक्तोपालम्भोऽपास्तः। न चैवं निवृत्तेरङ्गत्वभङ्गः, अदृ-ष्टद्वारकस्यैवाङ्गत्वादितिवाच्यम्; दृष्टविधयाऽदृष्टद्वारकोपकारकत्वस्यैव "[५]न्यासः पंचाङ्गसंयुतः" "[५]षड्विधा शरणागतिः" "[६]यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" इत्युक्त-पञ्चाङ्गषडङ्गाष्टाङ्गशब्देष्विव 'सर्वधर्मान् परित्यज्य' इति ल्यप्प्रत्ययविवक्षितत्वात्, तस्यैवात्मज्ञाना-ङ्गत्वबोधके "[७]इत्यङ्गमुदितं श्रेष्ठं फलेच्छा तद्विरोधिनी" इति वचने विवक्षितत्वाच्च। स्वयंप्रयोजन-

---

१. तै. आनन्द. ७- १ ॥
२. तिरुमोलि. ६-१०-६ ॥
३. सनत्कुमारसंहिता ॥
४. लक्ष्मीतन्त्रे. १७-७४ ॥
५. लक्ष्मीतन्त्रे. १७-६० ॥
६. योगसूत्रम्. २-२९ ॥
७. अहि. सं ॥

(२२) अथ ज्ञातव्यसकलार्थप्रतिपादकत्वरूपवैभवमाह—अन्यत्सर्वमिति ॥

भगवत्प्रसादरूपाऽदृष्टकारणीभूतशरणागतिसहकारितया पञ्चषडङ्गानामिव धर्मत्यागात्मज्ञानयोरप्यदृष्टानुविद्धाङ्गत्वसम्भवाच्च । एतेनैव 'प्रमाणाभावात् अङ्गत्वं न सम्भवती'त्यपि प्रत्युक्तम् । वस्तुतः प्रायश्चित्तरूपायाः प्रायश्चित्तबुद्ध्यानुष्ठेयायास्सत्त्वोद्रेककृतभयातिरेकघटितसामग्रीवशसम्पन्नायाश्शरणागतेस्सिद्धान्ते यावज्जीवमनुष्ठेयत्वात् । अनुगृहीतञ्च श्रीकृष्णपादलोकाचार्यैरेव श्रीवचनभूषणमीमांसाशास्त्रे "[1]भयाभयङ्गलिरण्डुं मारि मारि प्राप्तिअलवुं नडक्कुम्" इति । 'अविच्छेदे प्रमाणाभावः' इति च वर्तमाननिर्देशाश्रवणनिबन्धनमयत्नसिद्धत्वमप्यप्रयोजकम् । अयत्नसिद्धाया अपि प्रार्थनारूपप्रपत्तेस्तत्त्वज्ञानस्य मन्त्रसंशीलनजनितस्यानुवृत्त्यानुवृत्तिसम्भवात् । न च "[2]सकृदेव हि शास्त्रार्थः" "[3]सकृदेव प्रपन्नाये"त्यादिविरोधः, प्रायश्चित्तस्य साधनाननुग्राहकत्वात् । "[4]लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो" इत्यादिभूतनिर्देशबलेन पूर्वकृतप्रपदनस्मरणरूपशरणागतेरेव प्रायश्चित्तत्वात् । न च शरणागतिज्ञानस्य शरणागतिरूपत्वाभावेन स्मरणं न पुनश्शरणागतिरिति वाच्यम्; अनुव्यवसायस्य व्यवसायविषयविषयकत्वनियमेन प्रमारूपशरणागतिविषयकस्य विषयांशे सत्तानिश्चयरूपत्वेन च स्मरणस्य पुनश्शरणागतित्वोपपत्तेः । द्वयमन्त्रकरणकप्राथमिकशरणागतेरपि शरणागत्यनुसन्धानरूपत्वाच्च । प्रपत्तेस्तत्त्वज्ञानादिरूपत्वेन दृष्टविधया मोक्षकारणत्वाङ्गीकारेण सकृत्कृतायाः प्रपत्तेः प्रायश्चित्ताभावेऽपि व्याजत्वरूपोत्तारकत्वस्य दुर्वारत्वाच्च । न चैवं प्रायश्चित्तवैयर्थ्यम्, "[5]उपायापायसंयोगे निष्ठया हीयतेऽनया" इति निष्ठाहानिप्रायश्चित्तत्वस्यैव वाचनिकत्वेन निष्ठासिद्ध्यर्थं वस्तुतः प्रायश्चित्तरूपशरणागतेः पुनःपुनस्सम्भवात् । तथापि मोक्षसिद्ध्यर्थं प्रायश्चित्ताकरणेन सकृत्कृतस्योत्तारकत्वभङ्गप्रसङ्गाच्च । स्वयंप्रयोजनभगवन्मुखोल्लासार्थस्वरूपज्ञानार्थतया, तथैव तन्मूलककालक्षेपार्थतया, तन्मूलकभोगार्थतया च मूलमन्त्रस्य विनियोगवत्त्वसम्भवाच्च । स्वरूपज्ञानस्य शब्दविधया मूलमन्त्रजन्यत्वेऽपि दृष्टविधयोपकारकत्वलक्षणांगत्वसम्भवात् । मन्त्रार्थानुसन्धानस्याऽनुज्ञाकैङ्कर्यान्तर्भावेन तन्मुखेनापि कालक्षेपसम्भवात् । अनुष्ठानानवरुद्धकाले मन्त्रार्थानुसन्धानसम्भवेन जामितादोषाप्रसंगाच्च । मन्त्रार्थश्रवणमननध्यानतदर्थानुष्ठानमुखेन कालक्षेपेऽपि तदप्रसंगाच्च । 'भोग' शब्देन भगवद्भोगार्थकैङ्कर्यानुनिष्पादिजीवभोगविवक्षायां नमश्शब्दविरोधाभावात् । 'कालक्षेपहेतु' शब्देन कुर्वद्रूपाणां करणानां मन्त्रार्थश्रवणादिना विषयान्तरव्यावृत्ततया तन्निवृत्तिमुखेन भगवन्मुखोल्लासार्थत्वस्य 'भोगहेतु' शब्देन - स्वभोगद्वारकभगवन्मुखोल्लासार्थत्वस्य विवक्षिततया कृतकरत्वाद्यनवकाशाच्च । मन्त्रार्थानुसन्धानाभावे करणानां विषयान्तरप्रवृत्त्यापत्तौ रजस्तमोऽभिवृद्धिप्रसङ्गेन सकृत्कृतायाः प्रपत्तेस्तत्त्वज्ञानादिरूपत्वेनोत्तारकत्वाभावापत्त्या, उक्तरीत्या कालक्षेपार्थत्वे प्रपत्तिसहकारित्वसिद्धिसम्भवाच्च । मन्त्रान्तरवैलक्षण्यपर्यवसायितया प्रपन्नेष्वपि मूलमन्त्रस्योपयोगोऽस्तीति विवक्षायामपि परमप्रकृतोपयोगसम्भवाच्चे—ति ॥ २१ ॥

उत्तरवाक्यसङ्गतिः—अथ ज्ञातव्येति । पूर्वसूत्रे 'स्वरूपज्ञान' शब्देन सूचितो मूलमन्त्रस्य ज्ञातव्यसकलार्थप्रतिपादकत्वोत्कर्षस्साध्यत इति सङ्गतिः ।

---

१. श्रीवचनभू. ४०७-सू ॥
२. लक्ष्मीतन्त्रे. १७-९० ॥
३. श्रीरामायणे. युद्ध-१८-३० ॥
४. भविष्यत्पुराणे ॥
५. लक्ष्मीतन्त्रे. १७-९१ ॥

मू ॥ *"मत्तेल्लां पेशिलुम्" एन्गिरपडिये अरियवेण्डुमर्थमेल्लामिदुक्कुळ्ळे उण्डु ॥ २२ ॥

छा ॥ "अन्यत्सर्वं वदति" इत्युक्तप्रकारेण ज्ञातव्यास्सर्वेऽप्यर्था अस्मिन् वर्तन्ते ॥ २२ ॥

व्या ॥ "त्वदष्टाक्षरमभ्यस्य—अन्यत्सर्वं वदति" इत्युक्तप्रकारेणात्मोज्जीवनहेतुभूता ज्ञातव्यार्थविशेषाः सर्वेऽप्यस्मिन्वर्तन्ते इत्यर्थः ॥ २२ ॥

---

ननु-मूलमन्त्रस्य ज्ञातव्यसकलार्थप्रतिपादकत्वरूपोत्कर्षो न सम्भवति, 'वेदयतीति वेदः' इति व्युत्पत्त्या बुभुत्सूनामास्तिकानां ज्ञातव्यार्थप्रतिपादकत्वस्यैव वेदशब्दार्थतया वेदार्थस्य सर्वस्य ज्ञातव्यत्वेन मूलमन्त्रे तत्प्रतिपादकत्वस्य बाधितत्वात् । न च मुमुक्षुज्ञातव्यसकलार्थप्रतिपादकत्वं विवक्षितम्, "[1]त्रैगुण्यविषया वेदाः" इत्युक्ततया वेदार्थस्सर्वोऽपि न मुमुक्षुज्ञातव्य इति वाच्यम्, तथापि वेदान्तप्रतिपाद्यसकलार्थप्रतिपादकत्वाभावेन बाधानुद्धारात् धर्मादिपुरुषार्थचतुष्टयतत्साधनतारतम्यपरिज्ञानार्थं पूर्वभागार्थस्यापि मुमुक्षुज्ञातव्यत्वाच्च। अन्यथा वेदे तत्प्रतिपादनवैयर्थ्यात्। न चाधिकारिचतुष्टयानुजिघृक्षया स्वातन्त्र्येणैव तत्तद्भागप्रवृत्तिस्सम्भवतीति वाच्यम्, तथा सति मूलमन्त्रवेदयोर्विवरणविवरणीभावभङ्गप्रसङ्गात् । "[2]यद्वेदादौ स्वरः प्रोक्तः" "[3]ब्रह्मणः प्रणवं कुर्यात्" "[4]ओंकारप्रभवा वेदाः" "[5]ऋचो यजूंषि सामानि "[6]समस्तशब्दमूलत्वात्" "[7]मूलमन्त्रस्सनातनः" इत्यादिप्रमाणबलेन सर्ववेदानां मूलमन्त्रविवरणत्वस्य पूर्वमेव सिद्धत्वात् "[8]पुरम्बु पिरन्ददेल्लाम्" इत्यादि सूत्रद्वयेन पूर्वभागस्य वेदान्तस्य च प्रपत्तिशास्त्रशेषत्वस्य साधयिष्यमाणत्वाच्च । तस्मात् मूलमन्त्रस्य ज्ञातव्यसकलार्थप्रतिपादकत्वरूपोत्कर्षो न सम्भवतीति शङ्कापनोदनपरमुत्तरसूत्रमिति हृदि निधाय सूत्रार्थमाह—त्वदष्टाक्षरमभ्यस्यान्यत्सर्वं वदतीत्युक्तप्रकारेणात्मोज्जीवनहेतुभूता इति । (आत्मोज्जीवनहेतुभूते) त्यनेन मूलमन्त्रस्य ज्ञातव्यसकलार्थप्रतिपादकत्वरूपोत्कर्षस्सम्भवतीत्ययमर्थस्सूचितः ।

अत्रायमभिप्रायः—मूलमन्त्रस्य यथोक्तोत्कर्षसम्भवत्येव । प्राधान्येन मुमुक्षुज्ञातव्यसकलार्थप्रतिपादकत्वस्यैवात्रोत्कर्षरूपत्वेन सिषाधयिषितत्वात् । प्राधान्यञ्च - मोक्षकारणीभूतत्यागोपादानहेतुज्ञानविषयत्वम् । तच्चाऽप्यर्थपञ्चकेऽप्यविशिष्टम् । तथा हि— मोक्षस्तावत् सिद्धान्ते भावान्तराभावन्यायेन ब्रह्मप्राप्तिरेव। अत एव "[9]ब्रह्मविदाप्नोति परम्" "[10]तमेव विदित्वाऽतिमृत्युमेति" इति ब्रह्मप्राप्तिविरोधिनिवृत्त्योर्विद्यासाध्यत्वश्रवणं स्वरूपत उपपद्यते । प्राप्तिश्च - "[11]एतमितः प्रेत्याऽभिसम्भवितास्मि" "[12]परात्परम्पुरुषमुपैति दिव्यम्" इत्यादिप्रतिपन्नम्, "[13]यो वेद निहितं गुहायां परमे व्योमन्"

---

* तिरुमोलि ८-१०-३ ॥
१. गीता २-४५ ॥
२. तै. ना. १०-२४ ॥
३. मनुस्मृतौ ॥
४. विष्णुधर्मे. ६७-६ ॥
५. वृद्धहारीतस्मृ. ३-४५ ॥
६. वामनपु ॥
७. नारदकल्पे-अष्टा-१-११ ॥
८. मुमुक्षुप्पडि. ३-२७८ ॥
९. तै. आनन्द. १-१ ॥
१०. श्वे. उप. ३-८ ॥
११. छा. उप. ३-१४-४ ॥
१२. मुण्ड. उप. ३-२-८ ॥
१३. तै. आनन्द. १-१ ॥

"आदित्यवर्णं तमसस्तुपारे"[1] इत्याद्यवगतस्थानविशेषविग्रहविशेषविशिष्टस्य सामीप्यम्; योगनिष्ठविषये "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता"[2] "परमं साम्यमुपैति"[3] इत्याद्यवगतगुणानुभवरूपसायुज्यमात्रविश्रान्तम्; प्रपत्तिनिष्ठविषये तु-अनुभवजनितप्रीतिकारितकैङ्कर्यपर्यन्तम्। एतादृशब्रह्मप्राप्तौ च भक्तिप्रपत्तिरूपब्रह्मविद्यायास्साधनत्वञ्च "दुःखजन्मप्रवृत्ति"[4] त्यादि सूत्रोक्तन्यायेन मिथ्याज्ञाननिवृत्त्यादिद्वारकम्। न चैवं ब्रह्मविद्याया दृष्टविधया मोक्षसाधनत्वे अविधेयज्ञानवादापत्तिः; दृष्टविधया मोक्षसाधनत्वस्याऽज्ञातस्य ज्ञापनेन भक्तिप्रपत्तिरूपब्रह्मविद्याद्वयस्यापि विधेयत्वाभ्युपगमात्, स्वयंप्रयोजनभगवत्प्रसादसाधनत्वज्ञापनमुखेनाप्रवृत्तप्रवर्तनस्यापि सम्भवाच्च। इत्थं ब्रह्मप्राप्तिकारणभूतं ब्रह्मविद्यासामान्यमर्थपञ्चकस्यापि मूलमन्त्रेण ज्ञानं विना नोपपद्यते। तथा हि-अदृष्टद्वारकमोक्षोद्देश्यकसाधनप्रवृत्तिः, प्रवृत्तिहेतुकात्मभोगेच्छा च जीवस्य मोक्षविरोधिनीति नमश्शब्दार्थविचारावसरे वक्ष्यते। तथा स्वयंप्रयोजनभगवत्प्रसादोद्देश्यकव्यापारः, भगवन्मुखोल्लासवर्धकचेतनप्रवृत्त्युद्देश्यानुषङ्गिकचेतनभोगश्च मोक्षम्प्रति नियतपूर्ववर्तीति वक्ष्यते। ईदृशत्याज्योपादेयविवेकाभावे निरुक्तत्यागोपादानयोरसिद्ध्या मोक्ष एव न सिद्ध्येत्। अतस्स्वामित्वप्रतिनियतनिरुपाधिकासंकुचितचेतनाचेतनविनियोक्तृत्वलक्षणशेषित्वरूपप्राप्याकारविशिष्टब्रह्मज्ञानस्य निरुक्तसाधनानुष्ठानस्वभोगोद्देशविरोधित्वेन चेतनप्रवृत्त्यनुद्देश्यानुषङ्गिकचेतनभोगजनितप्रीतिशालित्वलक्षणप्राप्याकारविशिष्टज्ञानस्य कैङ्कर्यप्रवृत्त्यानुषङ्गिकभोगसम्पादकत्वेन च प्राप्यस्वरूपज्ञानं तावदावश्यकम्। एवं स्वामित्वेश्वरत्वरूपप्राप्याकारानुसन्धानमपि निरुक्तत्यागोपादानमुखेन मोक्षहेतुरिति द्रष्टव्यम्। तदभावे कर्तृत्वभोक्तृत्वांशाविद्यासत्वेन मोक्षानुपपत्तेः। इत्थं यत्किञ्चित्फलोद्देश्यकादृष्टद्वारकसाधनानुष्ठानानर्हत्वस्वप्रवृत्त्युद्देश्यभोगाश्रयतानर्हत्वलक्षणाकारद्वययुक्तप्राप्तृस्वरूपज्ञानमपि वक्ष्यमाणन्यायेनैव मोक्षहेतुभूतब्रह्मविद्याद्वयापेक्षितमित्यवधेयम्। एवं चेतनप्रवृत्तिप्रतिरुद्धरक्षणप्रवृत्तिमत्वव्याजरूपभक्तिप्रपत्तिविषयत्वलक्षणाकारद्वयविशिष्टोपायस्वरूपज्ञानम्, प्रयत्नफलीभूतपरप्रयोजनप्रवृत्तिरूपकैंकर्यलक्षणफलस्वरूपस्य, चैतन्यफलीभूततद्विषयप्रीतिरूपफलस्वरूपस्य च भगवत्प्रियतमत्वेन ज्ञानम्, अनादिदुर्वासनाबलेन चेतनस्य स्वभोगोद्देशेन साधनानुष्ठानसंपादकतया 'प्रकृतिसम्बन्धो भगवत्प्राप्तिविरोधी' इत्येवं स्वरूपविरोधिज्ञानञ्च पूर्वोक्तन्यायेनैव ब्रह्मविद्यापेक्षितमित्यनुसन्धेयम्। एवं "देहासक्तात्मबुद्धिः"[5] इत्याद्यनुगृहीतरीत्या देहात्मभ्रमादिरूपमिथ्याज्ञाननिवृत्तिपूर्वकत्यागोपादानषट्कमुखेनापि ब्रह्मप्राप्तिरूपमोक्षहेतुत्वमर्थपंचकज्ञानस्यानुसन्धेयम्। तथा ब्रह्मप्राप्तिसाधनानुष्ठानस्य प्राप्तिकर्मकर्तृप्राप्त्युपायस्वरूपज्ञानं विनासम्भवात्, तत्त्रितयज्ञानं तावदावश्यकम्। न च तथापि विरोधिस्वरूपफलस्वरूपज्ञानमनपेक्षितमिति वाच्यम्; विरोधिस्वरूपज्ञानाभावे तन्निवृत्त्युपायानुष्ठानासम्भवेन विरोधिनिवृत्तिपूर्वकब्रह्मप्राप्तेरेवाऽसम्भवात्, देशविशेषविशिष्टब्रह्मसामीप्यलक्षणब्रह्मप्राप्तेः स्वतः पुरुषार्थत्वाभावेन प्राप्तिफलीभूतानुभवकैंकर्यपर्यवसितायास्तस्याः ब्रह्मविद्याफलत्वेन ज्ञातव्यतयाऽनुभवकैंकर्यरूपफलस्वरूपज्ञानावश्यंभावाच्च। एवं मोक्षोपयोगिबहुप्रकारत्यागोपादानहेतुज्ञानविषयत्वलक्षणम्, ब्रह्मविद्यासाध्यप्राप्तौ कर्मकर्तृभावेन साध्यसाधनभावेन प्रतिबन्ध्यप्रतिबन्धकभावेन च निरूपकतया ज्ञातव्यत्वलक्षणञ्च प्राधान्येन मुमुक्षुज्ञातव्यत्वमर्थपंचकेऽप्यनुगतम्, अनतिप्रसक्तञ्च। अत एव "प्राप्यस्य ब्रह्मणो रूपमि"[6] त्यादिवाक्ये अर्थपंचकमपि प्राप्तिसम्बन्धितयैव निर्दिष्टम्। तस्मात्

---

१. पुरुषसूक्तम्॥
२. तै. आनन्द. १-१॥
३. मुण्ड. उप. ३-१-३॥
४. न्यायसूत्रम्. १-१-२॥
५. अष्टश्लोक्यां. ४॥
६. वृद्धहारीतस्मृ. ८-१४१॥

(२३) ज्ञातव्यार्थाः कतीत्यत आह—ते चेति ॥

मू ॥ अदावदु—अञ्जर्थम् ॥ २३ ॥

छा ॥ ते च पञ्चविधाः ॥ २३ ॥

व्या ॥ स्वस्वरूपपरस्वरूपपुरुषार्थस्वरूपोपायस्वरूपविरोधिस्वरूपरूपाः पञ्चार्था

उपदेशप्रमाणभूतमूलमन्त्रेण निरवशेषनिष्कलङ्कार्थपंचकज्ञाने सति तदुपपादकार्थान्तरप्रतिपादकश्रुतिस्मृत्यादिशास्त्रजन्यज्ञानस्य कालक्षेपभोगतत्त्वनिर्णयविजयाद्यर्थतया योग्याधिकारिणां संपादनीयत्वेऽपि योग्यायोग्यसर्वमुमुक्षुसाधारण्येन मोक्षार्थं प्राधान्येन ज्ञातव्यत्वमर्थपंचकोपपादके क्वापि वेदार्थे न कथंचिदपि शंकितुं शक्यम्। तस्मान्मूलमन्त्रस्य प्राधान्येन मुमुक्षुज्ञातव्यसकलार्थप्रतिपादकत्वरूपोत्कर्षस्सम्भवतीति सिद्धम्—इति ॥ २२ ॥

(स्वस्वरूपे)त्यादि. शेषत्वे सति पारतन्त्र्यं-स्वस्वरूपस्य लक्षणम्। इदं च प्रणवनमःपदाभ्यां प्रतिपाद्यते। तत्र प्रणवेन शेषत्वं प्रतिपाद्यते। तत्राकारोत्तरलुप्तचतुर्थ्या "तादर्थ्ये चतुर्थी वक्तव्या"[1] इति शब्दवार्तिकानुसारेण पारार्थ्यरूपतादर्थ्याभिधानात्। नमःपदेन पारतन्त्र्यम्। प्राप्तशेषित्वे सति परमप्राप्यप्रापकत्वं परस्वरूपस्य लक्षणम्। प्राप्तशेषित्वं नाम प्राप्तिविशिष्टत्वे सति शेषित्वम्। प्राप्तिर्नाम सम्बन्धः। परमप्राप्यत्वं नाम परमप्राप्तिविशेषफलीभूतकेवलपरार्थानुभवकैङ्कर्यप्रतिसम्बन्धित्वम्। तादृशानुभवकैङ्कर्यप्रतिसम्बन्धित्वं नाम-तथाविधानुभवकैङ्कर्यरूपचेतनप्रवृत्त्युद्देश्यातिशयशालित्वे सति तदनुद्देश्यानुषङ्गिकचेतनभोगजनितप्रीतिविशेषशालित्वम्। परमप्रापकत्वं नाम स्वापेक्षया प्रापकान्तरशून्यत्वे सति प्रापकत्वम्। तच्च प्रापकत्वं चेतनप्रवृत्तिप्रतिरुद्धरक्षणप्रवृत्तिमत्त्वे सति वक्ष्यमाणव्याजभूतभक्तिप्रपत्तिविषयत्वे च सति निर्हेतुकस्वप्रसादरूपव्यापारसंबन्धावच्छिन्नयादृच्छिकादिकैङ्कर्यपर्यन्तफलकारणत्वरूपं बोध्यम्। इदं च परस्वरूपलक्षणम्-क्रमेण पदत्रयप्रतिपाद्यम्। भगवतश्शेषित्वशरण्यत्वप्राप्यत्वानां क्रमेणाभिधानात्। पुरुषप्रार्थनाविषयत्वं पुरुषार्थसामान्यलक्षणम्। अत्र पुरुषप्रार्थनाविषयत्वञ्च-भगवदतिशयमात्रार्थत्वविशिष्टवेषेण। इदञ्चोत्तरपदान्वितनमश्शब्देन प्रतिपाद्यते। साध्यत्वे सति उपायत्वं प्रकृतोपायसामान्यलक्षणम्। तच्च निर्हेतुकस्वप्रसादद्वारा सिद्धोपायजन्यत्वे सति दृष्टविधया मोक्षकारणत्वम्। स च कर्मज्ञानादिरूपेण बहुविधः। व्यक्तचतुर्थ्या कैङ्कर्यात्मककर्मणां, उकारेण ज्ञानस्य, प्रार्थनार्थक्रियापदेन भक्तेः, स्वस्वरूपयाथात्म्यपरेण नमःपदेन प्रपत्तेः, स्वस्वरूपकाष्ठापरेण तेनैवाचार्याभिमानस्य च प्रतिपादनमनुसन्धेयम्। स्वरूपनाशप्रयोजकाज्ञानविषयत्वं विरोधिस्वरूपसामान्यलक्षणम्। तथा च स्वस्वरूपनाशकान्यथाज्ञानविपरीतज्ञानान्यतरविषयत्वं-विरोधिलक्षणं फलितम्। स च स्वस्वरूपविरोधी परस्वरूपविरोधी पुरुषार्थविरोधी उपायविरोधी विरोधिविरोधी चेति पंचविधः। तत्र स्वस्वरूपविनाशप्रयोजकस्वस्वरूपविषयकान्यथाज्ञानविपरीतज्ञानान्यतरविषयत्वं - स्वस्वरूपविरोधिलक्षणम्। स्वस्वरूपविनाशकपरस्वरूपविषयकान्यथाज्ञानविपरीतज्ञानान्यतरविषयत्वं परस्वरूपविरोधिलक्षणम्। इतिरीत्या तत्तल्लक्षणानि द्रष्टव्यानि। स्वस्वरूपविपरीतज्ञानम्-देहात्मभ्रमादिः। अतो देहादयस्स्वस्वरूपविरोधिनः। स्वस्वरूपान्यथाज्ञानञ्च-अन्यशेषत्वस्वप्रयत्नस्वभोगार्हत्वरूपस्वस्वातन्त्र्यादिज्ञानम्। परस्वरूपविपरीतज्ञानम्-देवतान्तराणां शेषित्वादिज्ञानम्, कर्मादीनां साधनत्वज्ञानम्, स्वात्मस्वरूपादीनां प्राप्यत्वज्ञानञ्च। परस्वरूपान्यथाज्ञानम् अन्यार्हशेषत्वनिरूपकत्वेन

१. अष्टाध्या- १-४-४४ ॥ वार्तिकम् ॥

इत्यर्थः ॥

*"प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च । वदन्ति सकला वेदास्सेतिहासपुराणकाः । मुनयश्च महात्मानो वेदवेदार्थवेदिनः" इत्युक्तप्रकारेणैतदर्थपञ्चकमेव हि सकलवेदशास्त्रप्रतिपाद्यम्; तस्मात्तत्सङ्ग्रहभूतस्यास्य तदेव प्रतिपाद्यम् ।

अयं मन्त्रः—प्रणवेन - प्रत्यगात्मस्वरूपं, नमसा - विरोध्युपायस्वरूपं;

---

सोपाधिकशरण्यत्वेन स्वार्थानुभवकैङ्कर्यप्रतिसंबन्धित्वरूपप्राप्यत्वेन च ज्ञानम् । पुरुषार्थस्वरूपविपरीतज्ञानम् त्रैवर्गिकादीनां पुरुषार्थत्वज्ञानम् । पुरुषार्थस्वरूपान्यथाज्ञानम्-भगवदनुभवकैङ्कर्यादीनां स्वार्थत्वेन ज्ञानम् । उपायस्वरूपविपरीतज्ञानम्-परार्थकैङ्कर्यरूपपरमपुरुषार्थलक्षणमोक्षं प्रति अनुपायभूतानां प्रत्युत तत्प्रतिबन्धकस्वार्थानुभवादिहेतुभूतानां कर्मयोगज्ञानयोगभक्तियोगप्रपत्तियोगाचार्याभिमान-स्वगतस्वीकाराणामुपायत्वज्ञानम् । उपायविषयकान्यथाज्ञानञ्च-मोक्षं प्रति अदृष्टसाधनत्वेन ज्ञानम् । विरोधिस्वरूपविपरीतज्ञानन्तु विरोधिभूतदेहविरोधित्वेन भगवदात्मकत्वेन चानुकूलभूतानां विषशस्त्रादीनां विरोधित्वेन ज्ञानम्। विरोधिस्वरूपान्यथाज्ञानञ्च विरोधिभूतदेहेन्द्रियादेः "शरीरमाद्यं खलु धर्मसाधनम्" इत्युक्तसाधनान्तरसाधनत्वादिज्ञानप्रयुक्तानुकूल्यज्ञानम् ।

( प्राप्यस्ये )ति, "[1]तमेवैकं जानथात्मानम्" "[2]तमेव विदित्वा" "[3]इदमेकं सुनिष्पन्नं ध्येयो नारायणः" "[4]तत्त्वमेको महायोगी हरिर्नारायणः परः" इत्यादिषु मुमुक्षुज्ञातव्यत्वेन एकत्वसंख्यायाः, "[5]द्वे ब्रह्मणी वेदितव्ये" "[6]पृथगात्मानं प्रेरितारञ्च मत्वा" इत्यादिषु द्वित्वसंख्यायाः, "[7]भोक्ता भोग्यं प्रेरितारञ्च मत्वा त्रयं यदा विन्दते ब्रह्म मे तत्" "[9]त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" "[10]स्वज्ञानं प्रापकज्ञानं प्राप्यज्ञानं मुमुक्षुभिः" इत्यादिषु त्रित्वसंख्यायाः, सारार्थचतुष्टयरीत्या चतुष्ट्वसंख्यायाश्चान्यथासिद्ध्यभिप्रायेण ज्ञातव्यार्थेष्वर्थपंचकस्यैव प्राधान्ये प्रमाणतया प्रचयशिष्टपंचत्वसंख्यापरमिदं वृद्धहारीतस्मृतिवचनमिति भावः । अत एव "[11]अर्थपञ्चकतत्त्वज्ञाः महाभागवतास्स्मृताः" "[12]पञ्चार्थज्ञाः" इत्युक्तम् ।

मन्त्रस्यार्थपञ्चकप्रतिपादकत्वक्रमं दर्शयति—अयं मन्त्र इति । (प्रणवेन प्रत्यगात्मस्वरूपमि) ति "[13]अकारार्थायैव स्वमहम्" इत्युक्तप्रकारेण 'भगवदनन्यार्हशेषत्वाश्रयो जीवः' इति प्रत्यगात्मस्वरूपं प्रतिपादयतीत्यर्थः। नमसा विरोध्युपायस्वरूपमि)ति—'मः' इति षष्ठ्यन्तमकारेण ज्ञातृत्वबलायातकर्तृत्वेन "[14]स्वतन्त्रः कर्ता" इत्यनुशासनन्यायेन भगवच्छेषत्वविरोधिस्वस्वातन्त्र्यस्योक्तत्वात् - विरोधिस्वरूपम् , 'न' इति तन्निषेधोक्त्या नञा स्वरक्षणे स्वान्वयनिवृत्तेरुक्तत्वात् अत्यन्तपरतन्त्रस्याधिकारिणः अर्थात् शेषिण एवोपायत्वसिद्ध्या उपायस्वरूपञ्च प्रतिपाद्यत इत्यर्थः । केचित्

---

* वृद्धहारीतस्मृ ८-१४१ ॥
१. कुमारसंभवे ५ ३३ ॥
२. मुण्ड उप. २-२ ५॥ ३. श्वे. उप. ३-८ ॥
४. भारते. आनु १८६-११ ॥
५. भारते. शा. मो. ३५७-८८ ॥
६. वि. पु. ६-५-६४ ॥
७. श्वे. उप. १-६ ॥
८. श्वे. उप. १-१२ ॥
९ ब्रह्मसूत्रम्. १-४-६ ॥
१० पाञ्चरात्रे ॥
११.
१२.
१३. अष्टश्लो. ३ ॥
१४. पाणिनीयसूत्रम्. १-४-५४ ॥

**नारायणपदेन-परस्वरूपं, तत्र चतुर्थ्या फलस्वरूपञ्च प्रतिपादयति ॥ २३ ॥**

'द्रौपद्या सहितास्सर्वे नमश्चक्रुर्जनार्दनम्' इति स्थानप्रमाणेन नमस उपायवाचकत्वमङ्गीकृत्योपायस्व-रूपप्रतिपादकत्वमाचक्षते। अपरे नमश्शब्दस्योपायपरता'नामयति-वशीकरोति भगवन्तम्'इति व्युत्पत्त्या। दर्शिता चेयं व्युत्पत्तिरहिर्बुध्न्यसंहितायां "नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम्। प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन्।अतो वा नम उद्दिष्टं यत्त नमयति स्वयम्' इति प्राहुः।अन्ये तु-सिद्धोपायपरतापि नमसोऽहिर्बुध्न्यसंहितायां दर्शिता—"पन्था नकार उद्दिष्टो मः प्रधान उदीर्यते। विसर्गः परमेशस्तु तस्यार्थोऽयं निरूप्यते। अनादिः परमेशो यश्शक्तिमानच्युतः प्रभुः। स्वप्राप्तये प्रधानोऽयं पन्था नमननामवान्" इति वदन्ति। आचार्याभिप्रायस्तु पूर्वोक्तार्थ एवेति। (**नारायणपदेन परस्वरूपम्**) इति, समासद्वयेन फलितपरत्वसौलभ्यादिविशिष्टप्राप्यभूतपरस्वरूपमित्यर्थः। (**चतुर्थ्या फलस्वरूपमि**)ति नारायणपदोत्तरव्यक्तचतुर्थीविभक्त्या सर्वदेशसर्वकालसर्वावस्थोचिताशेषवृत्तिरूपकैङ्कर्यरूपफलस्वरूपमित्यर्थः।

श्रीनिगमान्तदेशिकास्तु—"आदौ प्राप्यं परममनघं प्राप्तृरूपं च मादौ इष्टोपायन्त्वयनमसोरीप्सितार्थे चतुर्थ्याम्। तद्व्याघातं ममकृतिगिरि व्यंजयन्तं मनुं तं तत्प्रायञ्च द्वयमपि विदन् सम्मतस्सर्ववेदी" इति प्राहुः। अस्यार्थः-'परममनघं प्राप्यं आदौ व्यञ्जयन्तं,प्राप्तृरूपञ्च मादौ व्यञ्जयन्तं, इष्टोपायन्त्वयननमसोर्व्यञ्जयन्तं, ईप्सितार्थं चतुर्थ्यां व्यंजयन्तं, तद्व्याघातं ममकृतिगिरि व्यंजयन्तं, मनुं तं, तत्प्रायं च द्वयमपि विदन् सर्ववेदी सम्मतः' इत्यन्वयः। (**आदौ**)-अः आदिर्यस्य, तस्मिन् अकारे नारायणपदे चेत्यर्थः।(**परममनघम्**)-श्रियःपतिं निखिलहेयप्रत्यनीककल्याणैकतानानन्तज्ञानानन्दस्वरूपम्। श्रियःपतित्वेन समस्तकल्याणगुणाकरत्वेन हेयप्रत्यनीकतया च परमप्राप्यभूतमित्यर्थः। (**प्राप्तृरूपं च**)-प्राप्तुः प्रत्यगात्मनः स्वरूपम्। प्रकृतेःपरत्वज्ञातृत्वज्ञानस्वरूपत्वशेषत्वादिस्वरूपनिरूपकान् धर्मान्, निरूपितस्वरूपविशेषकानाकिंचिन्याद्याकारविशेषञ्चेत्यर्थः। (**मादौ**)-मः आदिर्यस्य तस्मिन्। प्रणवस्थमकारे नारपदे चेत्यर्थः। (**इष्टोपायन्तु**)-सिद्धोपायं शरणवरणं च। (**अयननमसोः**)-अयनपदनमःपदयोः। 'ईयते अनेने'त्ययनमिति करणव्युत्पत्त्या प्राप्तिसाधनं सिद्धोपायम्, नमश्शब्दस्य शरणवरणपरत्वेनाचार्यैरुक्तत्वात् नमःपदे शरणवरणं चेत्यर्थः। (**ईप्सितार्थम्**)"कुरुष्व मामनुचरम्""क्रियतामिति मां वद" "अनवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिंकरो भवानि" इत्यादिभिः प्रार्थ्यमानं परार्थकैंकर्यरूपार्थमित्यर्थः। (**चतुर्थ्याम्**)-नारायणशब्दस्य चतुर्थ्याम्। पारार्थ्यरूपतादर्थ्यवाचिचतुर्थ्या शेषत्वकार्ये कैंकर्ये लक्षणया बोध्यत इति ज्ञेयम्। (**तद्व्याघातम्**)-तस्य कैंकर्यस्य विहतिकारणमित्यर्थः। करणान्तघञन्तो व्याघातशब्दः। (**ममकृतिगिरि**) ममकृतिः ममकारः, तस्य वाचके शब्दे। "अनादिवासनारूढमिथ्याज्ञाननिबन्धना। आत्मात्मीयपदार्थस्था या स्वातन्त्र्यस्वतामतिः। मेनेत्येवं समीचीनबुद्ध्या सात्र निवार्यते" इत्युक्तप्रकारेण 'नमः' इतिनिषेध्यस्वस्वातन्त्र्यवाचके 'म' इति पदेइत्यर्थः।"द्व्यक्षरस्तु भवेन्मृत्यु

१. भारते वनपर्व. १९२-५७॥
२. अहि सं. ५२-अध्याये-११-श्लो ॥
३. अहि-सं. ५२-अ. ३२,३३ श्लो ॥
४. श्रीरहस्यत्रयसारे अर्थपञ्चकाधिकारे ॥
५. श्रीरामायणे अयो. ३१-२२ ॥
६. श्रीरामायणे आरण्य. १५-७ ॥
७. शरणागतिगद्ये ॥
८. अहि-सं. ५२-२६ ॥
९. भारते. शां.राज. १३-४ ॥

(२४) अथैतन्मन्त्रार्थवैभवमाह—पूर्वाचार्या इति ॥

मू ॥ पूर्वाचार्यर्हल् इदिलर्थमरिवदर्कु मुन्बु तङ्गलै पिरन्दाइलाह निनैत्तिराईल्; इदिलर्थज्ञानं पिरन्दपिन्बु *"पिरन्दपिन् मरन्दिलेन्" एन्गिरपडिये इत्तैयोलिय वेरोन्ट्राल् कालक्षेपं पण्णियरियार्हल् ॥ २४ ॥

छा ॥ पूर्वाचार्या एतदर्थज्ञानात्पूर्वं आत्मन उत्पन्नान्नानुसन्दधते; एतदर्थज्ञानोत्पत्त्यनन्तरम् "उत्पत्तेः पश्चान्न विस्मरामि" इत्युक्तप्रकारेणानेन विनान्येन कालं न क्षिपन्ति ॥ २४ ॥

व्या ॥ नाथयामुनयतिवरादिपूर्वाचार्याः *"तदानीमहं नोत्पन्नः" इत्युक्तप्रकारेण एतन्मन्त्रार्थज्ञानात्पूर्वमात्मनोऽनुत्पन्नाननुसन्दधते; एतदर्थज्ञानोत्पत्त्यनन्तरं * "उत्पत्तेः

---

द्व्यक्षरं ब्रह्मणःपदम्।ममेति द्व्यक्षरो मृत्युः न ममेति च शाश्वतम्"इत्यादिप्रमाणात् स्वस्वातन्त्र्यबुद्धिः कैंकर्यव्याघातकरीति भावः। (व्यंजयन्तम्)-प्रकाशयन्तम्; एवमर्थपञ्चकज्ञापकमित्यर्थः। (तं मनुम्) "न मन्त्रोऽष्टाक्षरात्परः" इत्यादिषु भगवत्स्वरूपरूपगुणादिप्रतिपादकत्वेन सर्वोत्कृष्टत्वेन च प्रसिद्धं मूलमन्त्रम्। (तत्प्रायश्च-द्वयम्) मूलमन्त्रवदर्थपंचकबोधकं द्वयञ्च, चरमश्लोकमपीत्यर्थः। 'अपि' शब्दश्चरमश्लोकं समुच्चिनोति। 'च' शब्दस्तस्यार्थपंचकपरत्वं समुच्चिनोति। द्वये चरमश्लोके च श्रीमन्नारायणशब्देन मामहंशब्दाभ्यां च प्राप्यस्वरूपम्, 'प्रपद्ये'इत्युत्तमपुरुषेण'व्रजे'ति मध्यमपुरुषेण'त्वा' इति पदेन 'माऽशुचः'इति वाक्येन च प्राप्तृस्वरूपम्, 'शरण' पदाभ्यां प्राप्त्युपायः,उत्तरखण्डचतुर्थीनमश्शब्दाभ्यां, 'सर्वपापेभ्यो मोक्षयिष्यामी'ति वाक्येन च,फलस्वरूपम्, उत्तरवाक्यनमश्शब्दस्थषष्ठ्यन्तमकारेण'सर्वधर्मान्'इति पदेन च विरोधिस्वरूपञ्च ज्ञेयम्।एवं रहस्यत्रयं विदन् सर्ववेदी सम्मतः मोक्षोपयुक्तं सर्वं जानातीति भावः—इति ॥ २३ ॥

(अथैतन्मन्त्रार्थवैभवमाह )ति, प्रसंगात् 'आचार्या आदृतवन्तः' इति यत्पूर्वमुक्तम्, तदपि न शब्दस्वरूपमात्रविषयम्, तेषां सिद्धोपायनिष्ठत्वात्; किन्तु सार्थविषयमित्यभिप्रायः।

शब्दस्वभावप्रयुक्तं मूलमन्त्रस्य मन्त्रान्तरापेक्षया वैलक्षण्यमुक्तम्; अथ प्रस्तुतार्थपंचकोत्कर्षनिबन्धनमूलमन्त्रस्य स्वापेक्षयोत्कृष्टार्थकत्वलक्षणमुच्यत इति संगतिः।

अत्र पूर्वाचार्यशब्दः ज्ञानाधिक्यप्रपन्नपर इत्यभिप्रायेणाह - नाथेति। (एतन्मन्त्रार्थज्ञानात्) मूलमन्त्रस्यार्थपंचकज्ञानात् इत्यर्थः। (आत्मनः)-अर्थपंचकेऽपि विपरीतज्ञानशालिनः स्वानित्यर्थः। (उत्पन्नान्नानुसन्दधते) - सत्तालाभहेतुत्वेनोत्कृष्टज्ञानलाभरूपजन्मशालिनः इति ज्ञात्वा न तिष्ठन्तीत्यर्थः। 'जन्माभावः - स्वात्मसाक्षिकः' इति सूचनाय 'नानुसन्दधते' इत्युक्तम्। (उत्पन्नान्) इत्यनेन सत्तालाभहेतुज्ञानवानेव जातः; अन्यस्तु जातोऽपि मृत एवेति सूच्यते। सूत्रे प्रतियोगितयापि जन्मज्ञानं नास्तीति सूचयितुं 'तदानीमहंनोत्पन्न' इतिवदनुक्त्वा जन्मज्ञानं नास्तीत्युक्तम्। जन्मज्ञानवत्तया क्षणमपि न तिष्ठन्तीति सूचनाय 'नानुसन्दधत' इत्युक्तम्। एवं सत्तालाभहेतुज्ञानविषयत्वरूपार्थोत्कर्ष उक्तः, अथ मुख्यप्रमाणोक्तिपूर्वकं कालक्षेपहेतुज्ञानविषयत्वरूपार्थोत्कर्षमाह—एतदर्थज्ञानोत्पात्यनन्तरमिति। स्वेषां मूलमन्त्रस्यार्थपंचकज्ञानोत्पत्त्यनन्तरमित्यर्थः। (उत्पत्तेः पश्चात्

---

* तिरुच्छन्दविरुत्तप्रबन्धे. ६६ ॥ | १. नारसिंहपुराणे. १८-३२ ॥

पश्चात् न विस्मरामि" इति दिव्यसूरिसूक्त्युक्तप्रकारेणैतन्मन्त्रार्थेन विनान्येन केनचिदपि कालक्षेपं न कुर्वन्तीत्यर्थः ।

वेदशास्त्रैर्दिव्यसूरिसूक्तिभिश्च कालक्षेपे क्रियमाणेऽपि तेषामेतन्मन्त्रार्थान्तर्भावेनानुसन्धानात् "अन्येन कालं न क्षिपन्ति" इत्युक्तौ न विरोधः ॥ २४ ॥

---

नविस्मरामि) - ज्ञानलाभरूपजन्मानन्तरं भक्तिपारवश्यान्न विस्मरामीत्यर्थः। ज्ञानाधिक्यप्रपन्ननिष्ठायां भक्तिपारवश्यप्रपन्ननिष्ठा प्रमाणीकृतेति ज्ञेयम् । भक्तिपारवश्यप्रपन्नेषु मन्त्राधीनज्ञानवत्त्वाभावेन एतत्सूत्रपूर्वपक्षसिद्धान्तयोरप्रवृत्तेः । (अन्येन)-क्षुत्पिपासादिशमनेन, नित्यनैमित्तिकाद्यनुष्ठानेन, उभयवेदान्तप्रवचनेन चेत्यर्थः । (कालक्षेपम्)-जीवनकालयापनमित्यर्थः । (न कुर्वन्ति) इत्युक्त्यानुष्ठेयार्थज्ञानमेव नास्ति, कुतोऽनुष्ठानमिति सूच्यते ।

ननु तर्हि 'वेदशास्त्रविनोदेन कालो गच्छति धीमताम्' 'प्रातर्द्यूतप्रसङ्गेन मध्याह्ने स्त्रीप्रसङ्गतः । रात्रौ चौरप्रसङ्गेन कालो गच्छति धीमताम्' 'पठित्वा भाष्यम्' इत्यादिवचनवैयर्थ्यापत्तेरिति चेत्तत्राह—वेदशास्त्रैरित्यादिना । सर्वशास्त्राणामर्थपञ्चकप्रतिपादकत्वादिति भावः ।

अनेन सूत्रेण मूलमन्त्रस्य स्वापेक्षयोत्कृष्टार्थकत्वलक्षणं मन्त्रान्तराद्वैलक्षण्यमुक्तम् । अत्रेमौ पूर्वपक्षसिद्धान्तौ—

ननु मूलमन्त्रस्य स्वापेक्षयोत्कृष्टार्थकत्वलक्षणं मन्त्रान्तराद्वैलक्षण्यमयुक्तम् ; अर्थबोधनार्थत्वे शब्दस्य, तदपेक्षयार्थस्योत्कर्षविवक्षायां - तादृशोत्कृष्टार्थकत्वस्याव्यावर्तकत्वापत्तेः ; शब्दैकगम्यार्थसत्तानिश्चयस्य शब्दाधीनतया वैवक्षिकोत्कर्षविवक्षायां वैपरीत्यापत्तेश्च । मोक्षजनकज्ञानविषयत्वेनार्थोत्कर्षविवक्षायां तादृशोत्कृष्टार्थकत्वस्य 'संसारिणः आत्मानमि'त्यत्र सिद्धत्वेन कृतकरत्वापत्तेः, भगवत्स्वरूपमादाय तादृशोत्कृष्टार्थकत्वस्य भगवन्मन्त्रमात्रे सत्त्वाच्च । तादृशयावदर्थकत्वविवक्षायां 'अन्यत्सर्वं वदती'त्यनेनैव गतार्थत्वापत्तेः । तस्य शब्दस्वभावकृतवैलक्षण्यरूपत्वेनार्थोत्कर्षकृतवैलक्षण्यस्य प्रस्तुतस्यासिद्धिप्रसङ्गाच्च ।—न च स्वार्थज्ञानमात्रस्य सत्तालाभहेतुत्वं विवक्षितम्; मात्रपदेन न्यूनार्थकमन्त्रेषु नातिप्रसङ्गः ; अस्य सत्ताहेतुज्ञानविषयत्वलक्षणार्थोत्कर्षनिबन्धनत्वेन च 'ज्ञानात्पूर्वमि'ति प्रस्तुतसिद्धिश्चेति वाच्यम् ; सत्ताशब्देन आत्मस्वरूपसत्ताविवक्षायां - आत्मनस्स्वरूपस्य नित्यप्राप्तत्वेन लाभासम्भवात्, विवक्षायां दत्तोत्तरत्वात्, विलक्षणजन्महेतुत्वविवक्षायां 'अयञ्च कुलं ददाती'त्यादिना गतार्थत्वापत्तेः ।—एतेन स्वार्थज्ञानमात्रेण कालक्षेपहेतुत्वं विवक्षितमित्यपास्तम् । क्षुत्पिपासादिशमनरूपानिषिद्धप्रवृत्त्या, नित्यनैमित्तिकाद्यनुष्ठानेन च कालक्षेपस्य दरीदृश्यमानत्वात्, "आमोक्षं लक्ष्मणार्य त्वत्प्रबन्धपरिशीलनैः । कालक्षेपोऽस्तु नस्सद्भिस्सहवासमुपेयुषाम्" इत्यनुगृहीतरीत्या स्वमतस्थापनपरमतनिरसनार्थप्रवृत्त्या, द्रविडोपनिषद्भाष्यश्रवणमननप्रवचनैश्च कालक्षेपस्य दरीदृश्यमानत्वाच्च । - एतेनैव स्वापेक्षयात्यन्ताभिनिवेशेन ज्ञायमानार्थकत्व मन्त्रान्तराद्वैलक्षण्यमिह विवक्षितमिति निरस्तम्। भगवन्मन्त्राणां सर्वेषामप्यर्थानुसंधानार्थमनुसन्धेयतया निरुक्तवैलक्षण्यस्य मन्त्रान्तरसाधारणत्वात् ।— न च जपहोमादिमुखेन शब्दशक्त्या रक्षणबलेन नार्थाभिनिवेश इति वाच्यम्; "अविदित्वा ऋषिंछन्दो दैवतं योगमेव च" इत्याद्यनुसारेण जपादेरपि देवताध्यानपूर्वं-

---

१. प्रार्थनापञ्चकस्तोत्र. ४ ॥ | २.

कस्यैव कार्यकरणतया, तत्राप्यर्थज्ञानाभिनिवेशस्याविशिष्टत्वात् । —न चोपासकानामर्थज्ञानाभिनिवेशेनैवं मूलमन्त्रस्यानुसन्धेयतया स्वापेक्षयात्यन्ताभिनिवेशेनाऽधिकारिविशेषेण ज्ञायमानार्थकत्वं मूलमन्त्रस्य सम्भवतीति वाच्यम्; अस्य मन्त्रान्तरसाधारण्येन दत्तोत्तरत्वात्।—न चोपासकानां देवताध्यानवत् जपादेरप्यवश्यकर्तव्यत्वेनार्थानुसन्धाने नाभिनिवेश इति वाच्यम् ; अस्यार्थस्य मूलमन्त्रेऽप्यविशेषेण प्रस्तुतासिद्धिप्रसङ्गात् । —न च स्वापेक्षयात्यन्ताभिनिवेशेन मुमुक्षुज्ञायमानार्थकत्वं विवक्षितम् ; मूलमन्त्रश्च मुमुक्षुभिरर्थज्ञानार्थमेवानुसन्धीयत इति न दोष इति वाच्यम् ; निरुक्तवैलक्षण्यस्य मोक्षजनकज्ञानविषयार्थकत्वपर्यवसायितया मन्त्रान्तरव्यावृत्तत्वेऽपि गतार्थत्वेन पराहतत्वात्, कर्मयोगादिसाधनान्तरनिष्ठानां जपाद्यर्थमेव मूलमन्त्रस्यानुसन्धेयतया मुमुक्षूणामपि मूलमन्त्रतदर्थानुसन्धानयोर्विशेषाभावाच्च ।— न च नाथयामुनयतिवरादिपूर्वाचार्याणामर्थानुसन्धानार्थमेव मूलमन्त्रस्यानुसन्धेयतया स्वापेक्षयाभिनिवेशेन ज्ञायमानार्थकत्वं मूलमन्त्रस्यैवेति वाच्यम्, साधनान्तरनिष्ठानामपि मुमुक्षुत्वाविशेषेणात्यन्ताभिनिवेशेन प्रपन्नज्ञायमानार्थकत्वस्य वैवक्षिकतया परिभाषामात्रत्वात् । अन्यथा "पशुर्मनुष्यः पक्षी वा" इत्याद्युक्ताचार्याभिमानान्तर्भूतानां शब्दानुसन्धानस्यापि अनावश्यकत्वेन पुनरुक्तन्यायापत्तेः । —न चाभिनिवेशेनोत्कृष्टाधिकारिज्ञायमानार्थकत्वं विवक्षितम्, अभिमानान्तर्भूताश्च ज्ञानानुष्ठानहीनतया नोत्कृष्टा इति वाच्यम् ; तथापि 'वाच्यप्रभाववन्नभवति वाचकप्रभावः' इति न्यायेन वाच्याद्वाचकस्यैवोत्कृष्टतयात्यन्ताभिनिवेशेनानुसन्धेयत्वापत्तेः, 'प्रपत्तौ प्रविष्टानाम्' इत्युक्तन्यायेन प्रपन्नानामपि मूलमन्त्रस्यानुसन्धेयत्वाच्च, साधनान्तरनिष्ठानामपि उत्कृष्टत्वाविशेषेण केषुचिदुत्कृष्टाधिकारिषु शब्दार्थानुसन्धानसाम्येन विनिगमनाविरहाच्च ।— नच "नार्हन्ति शरणस्थस्य" इत्याद्युक्तरीत्या साधनान्तरनिष्ठापेक्षया प्रपन्ना एवोत्कृष्टा इति वाच्यम्, 'भजनद्दुर्लभमेकस्य विपुलम्' इत्यादिरीत्या साधनान्तरनिष्ठानामप्युत्कृष्टत्वेन वैपरीत्यापत्तेः । — न च साधनान्तरानुष्ठानं भ्रान्तिकृतमेव ; तथा च मुमुक्षुसामान्यस्य प्रपन्नत्वेनार्थानुसन्धानार्थमेव मूलमन्त्रानुसन्धानमिति वाच्यम्, तथा सति कर्माद्युपायान्तरसहकारित्वरूपोत्कर्षव्युत्पादकोक्तिविरोधापत्तेः, उपायान्तरनिष्ठस्वप्रयोजनपररूपाधिकारिद्वयस्योद्देश्योपायोपेयभेदव्युत्पादकश्रीवचनभूषणसूक्तिविरोधापत्तेश्च, मुमुक्षूणां सर्वेषां प्रपन्नत्वे प्रपत्तेर्भक्तेश्च प्रारब्धनाशतदभावरूपफलभेदस्य भङ्गप्रसंगाच्च, कैङ्कर्यपर्यन्तानुभवकेवलानुभवरूपप्रतितन्त्रसिद्धान्तसिद्धफलभेदभङ्गप्रसङ्गाच्च । तस्मात्प्रपन्नेषु स्वगतस्वीकाररूपसाधनभेदवत् स्वार्थपरार्थानुभवकैङ्कर्यरूपफलभेदवच्च, "वैकुन्दत्तमरुं मुनिवरुम्" "भक्तैर्भागवतैस्सह" इत्यादि प्रसिद्धानुभवकैङ्कर्यरूपफलभेदशालिनां साधनान्तरनिष्ठत्वतदभावरूपवैलक्षण्यमपि प्रामाणिकमिति तेषामप्युत्कृष्टाधिकारित्वाविशेषात्, तेषु जपहोमादिमुखेन मूलमन्त्रस्वरूपानुसन्धानस्य देवताध्यानरूपेण तदर्थानुसन्धानस्य चाविशेषाच्च । मूलमन्त्रस्य स्वापेक्षयात्यन्ताभिनिवेशेनोत्कृष्टाधिकारिभिर्ज्ञायमानार्थकत्वलक्षणमन्त्रान्तराद्वैलक्षण्यं न सम्भवती—ति ।

अत्रोच्यते —मूलमन्त्रस्य स्वापेक्षयोत्कृष्टार्थकत्वं युक्तमेव। अर्थपञ्चकरूपस्वार्थज्ञानमात्रस्य सत्तालाभहेतुत्वेनार्थस्य स्वापेक्षयोत्कृष्टत्वात् । - न चैवं 'संसारिणः' 'अयञ्च कुलं ददाती'ति सूत्राभ्यां गतार्थता, मूलमन्त्रार्थज्ञाने मोक्षहेतुत्वस्य विलक्षणजन्महेतुत्वस्य च तत्र व्युत्पाद्यत्वात्, इह च मोक्ष-

१. भारद्वाजस्मृतौ ॥
२. लक्ष्मीतन्त्रे. १७-६३ ॥
३. श्रीरहस्यत्रयसारे अधिकारिविभागाधिकारे ॥
४. सहस्रगीताम्. १०-९-९ ॥
५. पाञ्चरात्रे ॥

हेतुभूतज्ञानलाभरूपविलक्षणजन्मान्वयव्यतिरेकानुविधायिन्याः, "[1]असन्नेव स भवति" "तदानीं नोत्पन्नः" इत्यादिप्रसिद्धायाः, "दासभूतास्स्वतः सर्वे" इति वचने "स्वोजीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि" इति वचने च 'भूत'पदेन, 'सत्ता'पदेन च मोक्षापेक्षया पृथङ्निर्दिष्टाया भगवत्प्रियतमत्वरूपायाः "[2]प्रियतम एव हि वरणीयो भवती"ति श्रीभाष्यसूक्त्यनुगृहीतायास्सत्तायाः लाभहेतुत्वस्य व्युत्पाद्यत्वाच्च।

एवं स्वार्थज्ञानमात्रेण कालक्षेपहेतुत्वमपि मन्त्रान्तराद्वैलक्षण्यमिति युक्तं वक्तुम्। "[3]देहधारणं परमात्मसमाराधनसमाप्तिप्रसादप्रतिपत्ति येन्गिर बुद्धिविशेषमुम्" इति श्रीवचनभूषणमीमांसासूक्त्यनुगृहीतरीत्या क्षुत्पिपासादिशमनरूपानिषिद्धप्रवृत्तेः मूलमन्त्रार्थज्ञानजनितानुष्ठानरूपत्वात्। अन्यथा तस्यानन्यभोग्यत्वस्वरूपविरुद्धतया निषिद्धत्वापत्तेः। नित्यनैमित्तिकाद्यनुष्ठानस्यापि केवलाज्ञाकैङ्कर्यरूपत्वात्, स्वमतस्थापनपरमतनिरासार्थप्रवृत्तेः नमश्शब्दार्थानुसन्धानजनितविरोधिनिवर्तनरूपत्वात्, उभयवेदान्तप्रवचनस्यापि "पठित्वा भाष्यं तत्प्रवचनम्" इत्याद्याज्ञानुज्ञाकैङ्कर्यरूपत्वाच्च।

यद्यपि सत्तालाभार्थे मन्त्रार्थानुसन्धानं तेनैव कालक्षेपश्चेत्येतद्द्वयमपि न लोकप्रसिद्धम्, तथापि नाथयामुनयतिवरादिपूर्वाचार्येषु प्रसिद्धमेवेति नाननुष्ठानपराहतत्वदोषः। अत एव "[4]यन्मुहूर्तं क्षणं वापि" "[5]वरं हुतवहज्वाला" "वासुदेवे मनो यस्य" "[6]पिरन्दपिन् मरन्दिलेन्" "मैरप्पनो इनि यानेन्मणियैये" इत्यादिप्रमाणजातमुपपद्यते। इत्थं स्वापेक्षयात्यन्ताभिनिवेशेन ज्ञायमानार्थकत्वं मन्त्रान्तराद्वैलक्षण्यमित्यपि युक्तम्। न च मन्त्रान्तराणामर्थानुसन्धानार्थत्वेनानुसन्धेयतया तत्साधारण्यम्, उपासकानां देवताध्यानवत् जपहोमादिमुखेन शब्दशक्त्या रक्षणस्थले अर्थानुसन्धानाभिनिवेशाभावात्। न च तत्रापि देवताध्यानार्थं तदावश्यकमिति वाच्यम्, मन्त्राणामुच्चारणमात्रेण पापक्षयार्थत्वस्य काम्यफलार्थत्वस्य चाविगीतत्वात्।

न चैवं 'वृद्धिमिच्छतः' इति न्यायापातः, स्वापेक्षयाभिनिवेशेनाधिकारिविशेषेणज्ञायमानार्थकत्वस्य विवक्षितत्वात्। उपासकानामर्थानसन्धानाभिनिवेशेनैव मूलमन्त्रस्यानुसन्धेयत्वात्। न चैवं मन्त्रान्तरसाधारण्यमुपासकानां देवताध्यानवत् जपादेरपि अवश्यकर्तव्यत्वेनार्थज्ञाने नाभिनिवेश इत्युक्तौ प्रस्तुतासिद्धिरिति वाच्यम्, स्वापेक्षयाभिनिवेशेन मुमुक्षुज्ञायमानार्थस्य विवक्षितत्वात्। न चैवं गतार्थतापत्तिः, 'मुमुक्षुज्ञायमानपदेन मोक्षार्थं ज्ञायमानत्वस्याविवक्षितत्वात्। मुमुक्षूणां सिद्धोपायनिष्ठतया स्वयंप्रयोजनभगवत्प्रसादार्थमेव मूलमन्त्रार्थस्यानुसन्धेयतया तेषां जपहोमादिमुखेन मन्त्रस्वरूपानुसन्धानमनपेक्षितमिति विवक्षितत्वात्।

न च कर्मयोगादिसाधनान्तरनिष्ठानां जपाद्यर्थमेव मूलमन्त्रस्यानुसन्धेयतया मुमुक्षूणां मूलमन्त्रतदर्थानुसन्धानयोर्न विशेष इति वाच्यम्, नाथयामुनयतिवरादिपूर्वाचार्याणामर्थानुसन्धानार्थमेव मूलमन्त्रस्यानुसन्धेयत्वात्। तेषामनन्योपायत्वेन उच्चारणमात्रेण पापक्षयाद्यर्थं जपहोमादिद्वारकोपासनमुखेन काम्यफलार्थं वा मूलमन्त्रस्वरूपस्यानुसन्धेयत्वात्। अनन्योपायत्वेन मोक्षार्थमपि तदभावाच्च। न च साधनान्तरनिष्ठानामपि मुमुक्षुत्वमस्त्येव, प्रपन्नज्ञायमाना-

---

१. तै. उप. आनन्द. ६-१॥
२. श्रीभाष्ये लघुसिद्धान्ते. १-१-१॥
३. श्रीवचनभूषणे. २४४-सू॥
४. गारुडे पुराणे पूर्वखण्डे. २२२-२२॥
५ वि. पु. २-६-४३॥
६. सहस्रगीत्याम्. १-१०-१०॥

र्थकत्वविवक्षा तु परिभाषमात्रम्, अन्यथाचार्याभिमाननिष्ठानां शब्दानुसन्धानस्येवार्थानुसन्धानस्यापि अनावश्यकत्वेन पुनरुक्तन्यायापत्तिरिति वाच्यम्, स्वापेक्षयाऽभिनिवेशेनोत्कृष्टाधिकारिज्ञायमानार्थकत्वस्य विवक्षितत्वात्. मन्त्रानुसन्धानस्यार्थानुसन्धानार्थत्वविचारावसरे अभिमाननिष्ठोदाहरणस्यास्थानविजृम्भितत्वाच्च । न च 'वाच्यप्रभाववन्नभवति वाचकप्रभावः' इति न्यायेन वाच्याद्वाचकेऽपि अनुसन्धानाभिनिवेशस्सम्भवतीति वाच्यम्, तत्र विग्रहावच्छिन्नभगवत्स्वरूपात्मकवाच्यापेक्षया रक्षणांश एव वाचकस्योत्कर्षसाधनेनार्थपञ्चकरूपवाच्यापेक्षयानुसन्धानांशे मूलमन्त्रस्याभिनिवेशासिद्धेः, अर्थपञ्चकानुसन्धानार्थमेव मूलमन्त्रस्यानुसन्धेयत्वात् ।

न च 'प्रपत्तौ प्रविष्टानामि'ति न्यायेन प्रपन्नानामपि स्वरूपेण मूलमन्त्रोनुसन्धेय इति वाच्यम्, "[1]पुण्डरीकाक्षनामसङ्कीर्तनामृतम्" "[2]भक्तामृतम्" "[3]भाष्यामृतम्" "[4]पाराशर्यवचस्सुधाम्" "[5]तोण्डर्कमुदुण्णचोल्मालैहल्" इत्यादिवत् अर्थभोग्यतानिबन्धनभोग्यतयैव तत्र मूलमन्त्रस्यानुसन्धेयत्वोक्तेः । —न च साधनान्तरनिष्ठानामप्युत्कृष्टत्वाविशेषेण विनिगमनाविरहः; साधनान्तरानुष्ठानस्य भ्रान्तिमूलकत्वेन तेषामपकृष्टत्वात् । न चैवं 'कर्मज्ञानभक्तिषु' इति सूत्रविरोधः ; भ्रान्तिमूलकसाधनान्तरसहकारित्वस्यैव तत्र व्युत्पादनात् । न चातत्त्वज्ञानान्मोक्षाभावेन साधनान्तरव्याघातः; अनादिस्वयत्नस्वभोगवासनया प्रथमं भ्रान्त्या प्रवृत्तानां "[6]नेहाभिक्रमनाशोऽस्ति" इत्याद्युक्तरीत्या कर्मयोगाद्यनुष्ठाननिर्मलीकृतमनस्कानां सत्वविवृद्ध्या तत्त्वज्ञानोदयेन कर्मयोगादौ साधनत्वभ्रमस्य प्रवृत्युद्देश्यफलभोक्तृत्वभ्रमस्य च निवृत्तिसम्भवात् ।

न चैवमपि प्रपन्नत्वे फलभेदो न स्यादिति वाच्यम्; प्रथममेव मूलमन्त्रेण स्वरूपयाथात्म्यज्ञानपूर्वकं उत्तरवाक्यप्रतिपन्नकैङ्कर्याभिरुच्या पुरुषकारवरणपूर्वकं सिद्धोपायस्वीकाराभावेन तत्त्वज्ञानदशायां भगवदेकोपायत्वाध्यवसाये सत्यपि "[7]कर्म कैङ्कर्ये अन्तर्भवती' त्याद्यनुगृहीतरीत्या प्रारब्धकर्मयोगाद्यनुवृत्तिसद्भावेन च साधनान्तरनिष्ठानां कर्मयोगादेरेव मुक्तिव्याजतया फलभेदोपपत्तेः । "[8]इमं धर्ममिति कथनमर्जुनाभिप्रायेण" "[9]वेदपुरुषस्योपायान्तरविधानं दुष्टपशोर्यष्टिं बध्वा गमयितार इव अहङ्कारममकाराभ्यामागतं गर्वं त्यक्त्वा ज्ञानोत्पत्त्यर्थम्" "[10]एकफलं प्रति दुर्लभमार्गस्य सुलभमार्गस्य चोपदिष्टत्वात् उभयं विना भगवत्प्रसाद एवोपायो भवेत्" इत्यादिनिष्कर्षकरहस्यत्रयमीमांसासूक्तिषु "[11]वेदान्तङ्गलुपायमाह विधिक्किरपडि येन्नेनिल्" इत्यादिनिष्कर्षकश्रीवचनभूषणमीमांसासूक्तिषु च साधनान्तरमेव नास्तीति सिद्धान्तितत्वेन "[12]उपायान्तरनिष्ठानामुद्देश्यः" इत्यादिसूक्तौ च 'नैयायिकस्य वायुरप्रत्यक्षः' "[13]यस्यामतं तस्य मतम्" इत्यादाविव मतत्वद्वारकसम्बन्धः षष्ठ्यर्थ इति वक्तव्यत्वेन तत्सूक्तिविरोधाभावाच्च ।

---

१. गारुडे पुराणे पूर्वे. २२०-१६ ॥
२. तिरुवाय्मोलि तनियन् ॥
३. श्रुतप्रकाशिकादौ ॥
४. श्रीभाष्यमङ्गलश्लोकः. २ ॥
५. तिरुवाय्मोलि. ९-४-९ ॥
६. गीतायां. २-४० ॥
७. मुमुक्षुप्पडि, ३. प्रकरणे. ८५-सू ॥
८. मुमु-डि. ३. प्र. १४-सू ॥
९. मुमु-डि. ३. प्र. ८२-सू ॥
१०. मुमु-डि. ३. प्र. ८६-सू ॥
११. श्रीवचनभूषणे. १२८-सू ॥
१२. श्रीवचनभू. ३६५-सू ॥
१३. केनोपनिषदि. २-३ ॥

(२५) वाचकशक्तेरेव सर्वसाधनसामर्थ्ये सत्यपि एतद्वाच्यभूते किमिति श्रद्धां कुर्वन्तीत्यत्राह—वाचकादिति ॥

मू ॥ वाचकत्तिल्काट्टिल् वाच्यत्तिले ऊन्ऱुहैक्कु अडि – 'ईश्वरने उपायोपेयम्' एन्ऱु निनैत्तिरुक्कै ॥ २५ ॥

छा ॥ वाचकाद्वाच्ये श्रद्धाहेतुः 'ईश्वर एवोपायोपेयौ' इति प्रतिपत्त्यावस्थितिः ॥

व्या ॥ अयमर्थः - स्वयं सर्वफलसाधनत्वे साधनान्तरसहकारितया कार्यसाध-

---

एतेन "प्रापकान्तरमङ्कुं उपायम्" इत्यादिसूक्तिर्व्याख्याता । प्रपत्तिव्याजव्यतिरिक्तव्याजरूपं कर्मयोगादिकमदृष्टद्वारकमोक्षकरणरूपोपायत्वेन ज्ञायते; ज्ञानिभिस्तु तादृशोपायत्वेनाज्ञायमानं तद्रक्षणप्रवृत्तिविरोधित्वेन निषिद्धरूपापायत्वेन ज्ञायत इत्यर्थः । अयमर्थः श्रीमद्द्रमिडोपनिषद्व्याख्यादौ श्रीकलिजिज्जगदाचार्यादिभिरनुगृहीतः, तत्र द्रष्टव्यः ।

तस्मात् प्रथममेव प्रपत्तिव्याजनिष्ठानां तत्त्वज्ञानदशायां कर्मयोगादिव्याजनिष्ठानाञ्च, प्रामाणिकयोः प्रारब्धनाशतदभावरूपफलयोः कैङ्कर्यकेवलानुभवरूपफलयोश्च प्रमाणबलेन व्यवस्थासम्भवेऽपि कर्मयोगादिचतुष्टये अदृष्टद्वारकमोक्षकरणत्वस्य स्वार्थकैङ्कर्यफलत्वस्य नमश्शब्दादिनिषिद्धत्वेनाप्रामाणिकतया मुमुक्षूणां सर्वेषां तत्त्वज्ञानदशामारभ्य अभ्रान्तत्वेऽपि, प्रथममेव स्वरूपयाथात्म्यज्ञानेन प्रपत्तिव्याजनिष्ठानां पूर्वाचार्याणां "सततमनिरताऽशुद्धाः" इत्याद्युक्तरीत्या प्रथमं साधनान्तरनिष्ठापेक्षया उत्कृष्टतमत्वात्, 'अगाधभगवद्भक्तिसिन्धवे" इत्याद्युक्तरीत्या स्वयंप्रयोजनभक्तिनिष्ठत्वेन "भजनसुखमेकस्य विपुलमि"त्युक्तार्थहानिप्रयुक्तनिकर्षशङ्काया अप्यभावाच्च । तेषामर्थानुसन्धानार्थतयैव मन्त्रानुसन्धानस्य वक्तव्यतया सार्वकालिकार्थानुसन्धानानुसारेणोत्कृष्टाधिकारिभिश्च स्वरूपापेक्षयाभिनिवेशेन ज्ञायमानार्थकत्वलक्षणमूलमन्त्रस्य मन्त्रान्तराद्वैलक्षण्यं सम्भवत्येवेति ॥ २४ ॥

(**वाचकशक्तेरेव सर्वसाधनसामर्थ्ये**) इति, शब्देनैव "ऐहलौकिके" त्या...कुप्रकारेण सर्वफलसाधनसम्भवे किमर्थमर्थपर्यन्तधावनं तेषामित्यर्थः । उत्तमाधिकारिणो ह्याचार्याः । "माधवाङ्घ्रिद्वयोपायो माधवाङ्घ्रिप्रयोजनः। स उत्तमाधिकारी स्यात्कृतकृत्योऽत्र जन्मनी"ति लक्षणात्। अतस्तेषां शब्दे साधनता बुद्धिस्त्याज्येति । न तैस्त्याक्ता । न चात्रोपायशब्दः फलप्रदातृत्वपरः, "अन्योपायो विष्णुफलो मध्यमः परिकीर्तितः" इत्युक्तेरिति भावः ।

'वाचकात्'-वाचकापेक्षया इत्यर्थ इत्याह—**तदपेक्षयेति** । शब्दशक्त्या सर्वफलप्रदत्वरूपं शङ्काबीजं सूचयितुं 'श्रीमन्त्रात्' इत्यनुक्त्वा 'वाचकात्' इत्युक्तमित्यभिप्रायेण—**सर्वफलसाधनत्व** इत्याद्युक्तम् । अनेन वाच्यात् वाचकोत्कर्षमुक्त्वा, वाचकाद्वाच्योत्कर्षोक्तिर्व्याहतेत्यपि शङ्काबीजं सूच्यते । रक्षणांशे सन्निधानासन्निधानाभ्यां वाच्याद्वाचकोत्कर्षः पूर्वमुक्तः; अनुसन्धानांशे शेषशे-

---

१. श्रीवचनभू. ११७-सू ॥
२ लक्ष्मीतन्त्रे. १७-६२ ॥
३. स्तोत्ररत्ने. १ ॥
४. श्रीरहस्यत्रयसारे अधिकारिविभागाधिकारे ॥
५. वृद्धहारीतस्मृतौ. ४-४७ ॥

नत्वे चास्य वाचकशक्तेरेव सर्वसाधनसामर्थ्येऽपि तदपेक्षया पूर्वोक्तप्रकारेणैतन्मन्त्रवाच्यवस्तुनि पूर्वाचार्याः श्रद्धां कुर्वन्तीत्यत्र हेतुः,ये उपेयान्तरपरा भूत्वा इमं मन्त्रं साधनत्वेन स्वीकुर्वन्ति,ये चोपायान्तरपरा भूत्वा सहकारितया स्वीकुर्वन्ति, तद्वैलक्षण्येन उपायोपेयानुभावपीश्वर एवेति प्रतिपत्त्यावस्थितिरिति।

एवं "श्रीमन्त्रस्य" इत्यारभ्य एतावत्पर्यन्तं - यथाविध्येवानुसन्धेयत्वरूपवैभवम् (३-४-सू), स्वयमेव शिष्याचार्यभावावस्थितेनेश्वरेण प्रकाशितत्वप्रयुक्तमस्याधिक्यम् (५-६-सू), सकलशास्त्रापेक्षया (७-सू) सकलमन्त्रापेक्षया (८ ९-१०-११-१२ १३-सू) वाच्यापेक्षया वाचकमहत्त्वम् (१४-१५-१६ सू),अक्रमेणानुसन्धानेऽपि स्वकार्यकरत्वरूपम् (१७-सू), अपेक्षितसकलफलप्रदत्वरूपम् (१८-१९-सू), कर्माद्युपायसहकारित्वरूपश्चोत्कर्षम् (२०-२१-सू), ज्ञातव्यसकलार्थप्रतिपादकत्वप्रयुक्तं महत्त्वम् (२२-२३-सू), प्रतिपाद्यार्थगौरवविशेषं च (२४-२५-सू),निरूपयामास।तस्मादेतन्मन्त्रप्रभावः सर्वजनसुग्रहतया दर्शितः ॥ २५ ॥

---

षिभावेन वाचकाद्वाच्योत्कर्ष इदानीमुच्यत इति परिहाराभिप्रायः। (पूर्वोक्तप्रकारेणे)ति, 'पूर्वाचार्याः' इति वाक्योक्तप्रकारेणेत्यर्थः।(एतन्मन्त्रवाच्यवस्तुनि) - शेषित्वशरण्यत्वप्राप्यत्वाकारत्रययुक्ततया मूलमन्त्रबोध्ये भगवत्स्वरूप इत्यर्थः। (ईश्वर एवे)ति, 'ईश्वरः' इत्यनेन सर्वप्रवर्तकत्वात् तस्यैवोपायोपेयभावो युक्त इति सूच्यते। अवधारणेन कर्मज्ञानभक्तिप्रपत्त्याचार्याभिमानानां व्याजत्वमेवेति सूच्यते। एवं पुरुषकारगुणविग्रहविभूतीनामनुभाव्यत्वेऽपि भगवत्प्रियत्वेनानुभाव्यत्वम्, न तु स्वत इत्यपि अवधारणार्थोऽनुसन्धेयः। उपेयांशेऽप्यवधारणान्वयात्। अत्रोपायशब्दः-भगवत्प्रसादरूपादृष्टद्वारकमोक्षकरणपरः। 'उपेय' शब्दः-अनुभवकैङ्कर्यार्थसमीपगमनपरः। (प्रतिपत्तिः-) दृढाध्यवसायः। 'प्रतिपत्तिः' इत्यनुक्त्वा 'प्रतिपत्त्यावस्थितिः' इत्यनुगृहीतत्वात्, मन्त्रशेषस्थपदद्वयार्थनिष्ठैव मन्त्ररत्नवर्द्धिता चरमश्लोकविजृम्भिता त्रिवर्गार्थम्, अपवर्गार्थं वा जपहोमादिमुखेन मूलमन्त्रस्वरूपानुसन्धानत्यागे कारणम्, सकलकल्याणगुणगर्भत्वेनोपायोपेयभावरूपमूलमन्त्रप्रधानार्थस्य स्वयं भोग्यतया सदा मूलमन्त्रार्थानुसन्धाने च कारणमिति भावः।

उपोद्घातार्थं निगमयति—एवमिति। (तस्मादेतन्मन्त्रप्रभावः) इति, सारतमशास्त्रार्थप्रतिपादकभूतैतन्मन्त्रस्य साधारणासाधारणरूपप्रभाव इत्यर्थः। परार्थकैङ्कर्यतत्साधनसिद्धोपायप्रतिपादकशास्त्रं, सारतमशास्त्रमित्युच्यते। तत्प्रतिपादकत्वं रहस्यत्रयस्यैवेत्याचार्यैस्तत्र तत्रोक्तम्। श्रीमन्निगमान्तदेशिकैश्च श्रीरहस्यत्रयसारे सारनिष्कर्षाधिकारे प्रसादितम् "श्रुतिपथविपरीतं क्ष्वेलकल्पं श्रुतौ च प्रकृतिपुरुषभोगप्रापकांशो न पथ्यः। तदिह विबुधगुप्तं मृत्युभीता विचिन्वन्त्युपनिषदमृताब्धेरुत्तमं सारमार्याः" इति।

अत्रास्मदाचार्याः—इदं हि रहस्यत्रयमीमांसाशास्त्रं शारीरकमीमांसाशास्त्रवत्, अध्यायचतुष्टयात्मकम्। श्रीनिगमान्तगुरुभिश्च "कारणत्वमबाध्यत्वमुपायत्वमुपेयता। इति शारीरकस्थाप्यमिह चापि व्यवस्थितम्" इति श्रीमति रहस्यत्रयसारे अनुगृहीतम्। तत्र मूलमन्त्रप्रकरणात्मके प्रथमेऽध्याये - सिद्धोपायाधिकारिभूतनिष्कृष्टजीवस्वरूपं मूलमन्त्रप्रतिपाद्यं विशोध्यते। अत एवासौ अधिकार्यध्याय इत्युच्यते। द्वयप्रकरणात्मके द्वितीयेऽध्याये इष्टविषया ज्योतिष्टोमाद्यङ्गभूतफलज्ञानतत्कामनासाधनज्ञानतच्चिकीर्षाप्रयत्नवत् इष्टविषया सिद्धोपायाङ्गभूतं मन्त्र-

(२६) अथैतन्मन्त्रस्य द्विधा वाक्यार्थमाह—एतत्प्रतिपाद्य इति ॥

मू ॥ इदुतन्निल् शोल्लुहिरवर्थम्-स्वरूपमुम्, स्वरूपानुरूपमानप्राप्यमुम्; स्वरूपमुम्, उपायमुम्, फलमुमेन्नवुमाम् ॥ २६ ॥

छा ॥ एतत्प्रतिपाद्योऽर्थः - स्वरूपश्च, स्वरूपानुरूपं प्राप्यश्च; स्वरूपश्च, उपायश्च, फलं चेति वा ॥ २६ ॥

---

रत्नपूर्वोत्तरखण्डप्रतिपाद्यमुपायोपेयप्रार्थनाद्वयं विशोध्यते । अत एवायमङ्गाध्याय इत्युच्यते । चरमश्लोकपूर्वार्धप्रकरणात्मके तृतीयेऽध्याये सिद्धोपायात्मकमदृष्टद्वारकमोक्षसाधनं, साध्योपायात्मकशरणागतिरूपदृष्टद्वारकमोक्षसाधनञ्च सपरिकरं विचार्यते । अत एवासौ साधनाध्याय इत्युच्यते । चरमश्लोकोत्तरार्धप्रकरणात्मके चतुर्थेऽध्याये सपरिकरसिद्धोपायफलं दृष्टादृष्टरूपं विचार्यते । अत एवैष फलाध्याय इत्युच्यते । तत्र प्रथमाध्याये प्रथमे पादे 'मुमुक्षोः, तत्त्वे'ति पेटिकानन्तरं 'श्रीमन्त्रस्ये'त्यारभ्य 'वाच्यादि'त्यन्तं मूलमन्त्रव्याख्येयत्वोपयोगितया मूलमन्त्रोत्कर्षो विचार्यते । अत एवायमुपोद्घातपाद इत्युच्यते । अनन्तरं प्रणवार्थपादो द्वितीयः,नमश्शब्दार्थपादस्तृतीयः, नारायणशब्दार्थपादश्चतुर्थः । अङ्गाध्याये, वेद्यपादः प्रथमः, शरणागतिरूपविद्यापादो द्वितीयः, फलप्रतिसम्बन्धिपादस्तृतीयः, फलप्रार्थनापादस्तुरीयः । साधनाध्याये, त्याज्यपादः प्रथमः, त्यागपादो द्वितीयः, स्वीकार्यपादस्तृतीयः, स्वीकारपादश्चतुर्थः । फलाध्याये, फलिपादः प्रथमः, निवर्त्यपादो द्वितीयः, निवृत्तिपादस्तृतीयः, निष्ठापादश्चरमः । अन्ते चरमश्लोकार्थनिष्ठाक्रमनिरूपणात् इति विवेकः । तदुक्तमाचार्यैः—"अधिकारी साधनाङ्गं साधनं फलमित्यमी । अत्राध्यायचतुष्कार्थाः पादार्थानभिदध्महे ।। मन्त्रप्रभावमनुराजपदत्रयार्थां वेद्यञ्च वेदनमुपेयतदर्थने च । त्याज्यं त्यजिश्च करणे अपि सिद्धसाध्ये प्रोक्ताः क्रमात्फलिनिवर्त्यनिवृत्तिनिष्ठाः"[1] इति ।—इति ॥ २५ ॥

वैभवं सम्प्रदर्श्येत्थं मूलमन्त्रस्य देशिकः ।
वाक्यार्थमभिधत्ते यद्द्वेधा स्वीयकृपावशात् ॥

एवं करिष्यमाणमूलमन्त्रव्याख्यानोपोद्घाततया मूलमन्त्रे परिचिक्षिप्रासिद्ध्यर्थं मूलमन्त्रस्य प्रभावः प्रपञ्चितः । अथ मूलमन्त्रः व्याख्यायते । तत्र "पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना। आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्" इत्युक्तरीत्या वाक्ययोजनामुखेन मूलमन्त्रो व्याख्यायत इत्यवतारयति—अथैतन्मन्त्रस्येति ।

ननु मूलमन्त्रस्य वाक्यार्थो दुर्निरूपः । "अर्थैकत्वादेकं वाक्यं साकाङ्क्षश्चेद्विभागे स्यात्"[2] इति पूर्वमीमांसासूत्रे एकप्रयोजनकत्वस्यैकेष्टसाधनतावच्छेदकावच्छिन्नशाब्दज्ञानजनकत्वरूपत्वेन, तस्य 'घटमानय येन जलमाहर्तासि' इत्यादाविव विशिष्टैकार्थप्रतिपादकतयैव वक्तव्यत्वेन, मूलमन्त्रस्थपदार्थानामेकशाब्दज्ञाननिष्ठैकेष्टसाधनतावच्छेदकघटकविषयताकान्वयप्रतियोगित्वासम्भवेन च मूलमन्त्रस्य वाक्यत्वस्यैवाभावेन वाक्यार्थस्य सुदूरापास्तत्वात् । —अथ स्यात् मूलमन्त्रस्य 'स्वरूपं स्वरूपानुरूपं प्राप्यञ्च' वाक्यार्थः । मूलमन्त्रे प्रथमद्वितीयपदार्थभूतस्य स्वरूपस्य तृतीयपदार्थभूतस्य प्राप्यस्य च परस्परानुरूपत्वलक्षणवैशिष्ट्यसद्भावेन मूलमन्त्रस्य स्वरूपप्राप्यरूपार्थद्वयमादाय विशिष्टैकार्थप्रतिपादकत्व-

---

१. पराशरोपपुराणे. १६-१८ ॥ २. पूर्वमीमांसा. २-१-४६ ॥

सम्भवात् । न चैवमपि प्रथमद्वितीयपदार्थयोर्मिथोऽनन्वयः ; अनेककारकान्वितैकक्रियापदस्थले मिथोऽनन्वितार्थकानामपि कारकपदानां क्रियापदेन एकवाक्यत्ववत्, मूलमन्त्रस्थप्रथमद्वितीयपदयोस्तृतीयपदेनैकवाक्यत्वोपपत्तेरिति ;—मैवम् ; स्वरूपशब्देन - जीवात्मविवक्षायां 'नारायणाय स्वामि' त्यस्यापि स्वरूपप्रतिपादकतया, प्राप्यशब्देन - परमात्मविवक्षायां, अकारस्यापि प्राप्यप्रतिपादकतया च 'स्वरूपं प्रथमद्वितीयपदार्थः, प्राप्यं तृतीयपदार्थः' इति व्यवस्थानुपपत्तेः । अयनशब्दस्य प्राप्यत्वेन प्राप्यप्रतिपादकत्ववत् "अव - रक्षणगतिहिंसादिषु" इति धातुपाठानुसारेण अकारस्यापि तत्सम्भवाच्च । स्वरूपशब्देन कण्ठोक्तजीवस्वरूपविवक्षायां, तस्य मकारमादाय प्रथमपदे सम्भवेऽपि द्वितीयपदे असम्भवात् । षष्ठ्यन्तपदे विशेषणतया कण्ठोक्तिविवक्षायां नारपदमादाय तृतीयपदेऽपि तत्प्रसङ्गात्, स्वरूपानुरूपप्राप्यप्रतिपादनार्थं पदद्वयेन स्वरूपोक्तिवैफल्याच्च । प्राप्ये स्वरूपानुरूपस्य दुर्वचत्वाच्च । पितृपुत्रादेरिव सादृश्यस्य बाधितत्वात् । 'ब्राह्मणस्वरूपानुरूपं वेदाध्ययनादिकम्' इत्यादाविव बलवदनिष्टाननुबन्धीष्टसाधनत्वविवक्षायां व्युत्पत्तिविरोधेन तस्य वाक्यार्थत्वासम्भवात् । न हि 'ब्राह्मणकमण्डलुः' इत्यादौ ब्राह्मणसमीपवर्तित्वादेरिव निरुक्तानुरूप्यस्य क्वापि वाक्यार्थविषयानुभवपथानारोहे कस्यापि विमतिरस्ति । किञ्च निरुक्तवैशिष्ट्येन प्रथमद्वितीयपदार्थविषयकशाब्दज्ञानत्वस्य एकेष्टसाधनतावच्छेदकत्वे मानाभावेन नोक्तवैशिष्ट्यमादाय विशिष्टैकार्थप्रतिपादकत्वं मूलमन्त्रस्योपपद्यते । इष्टत्वेन ज्ञातेष्टसाधनताज्ञानमात्रस्य प्रयोजनपर्यवसायितया क्वापि कदापि कस्यापि प्रमाणपथानारूढत्वात् । अपि च कृत्यनन्तरं भविष्यत्वरूपप्राप्यत्ववत्तया ज्ञातस्यैवेष्टसाधनता ज्ञानं प्रयोजनपर्यवसायीति प्राप्यत्वेनायनपदोपात्तस्यापि सिद्धवस्तुनो ज्ञानं न प्रयोजनपर्यवसायीति न तस्य वाक्यार्थत्वमुपपद्यते । न च सिद्धोपरञ्जकं किञ्चित्साध्यं श्रूयते । अन्यच्च 'स्वरूपं प्राप्यञ्च वाक्यार्थः' इत्ययुक्तम् ; समन्वयाधिकरणन्यायेन पुरुषार्थतत्साधनयोरेव वाक्यार्थत्वात्, प्राप्यमात्रस्वरूपज्ञानस्य चातथात्वात् । एतेन 'स्वरूपोपायफलरूपं पदत्रयप्रतिपाद्यं वाक्यार्थः' इति परास्तम् । स्वरूपपदेन जीवात्मविवक्षायां, तृतीयपदेऽतिप्रसङ्गात् । नमःपदस्य सखण्डस्य स्वसम्बन्धनिषेधपरतया च तत्रोपायस्य शक्त्या लक्षणया व्यञ्जनया वा प्रत्येतुमशक्यत्वाच्च । श्रुत्यर्थापत्त्यभावेन लक्षणाया असम्भवाच्च तथा व्यञ्जनाया असम्भवाच्च । करणव्युत्पन्नायनपदेनोपायस्य कण्ठोक्ततया मध्यमपदबोध्यत्वोक्त्यसम्भवग्रस्तत्वाच्च । फलपदेनापि स्वरूपेण साध्यविवक्षायां तृतीयपदे तत्प्रतीतिगन्धाभावात् । अयनपदार्थस्य किञ्चिदुपरक्तस्य साध्यत्वसम्भवेऽपि तदुपरञ्जकानुपादानेन तस्य फलत्वे तात्पर्यासम्भवाच्च । 'नारायणाय स्वामि'ति स्वरूपस्यैव साध्यत्वप्रतीत्या नारायणस्योद्देश्यत्वेनाकारेण 'फलमपि हेतुः' इति शाब्दिकोक्तरीत्या 'अध्ययनेन वसति' इत्यादौ अध्ययनादेरिव साधनत्वेनैवान्वयस्य वक्तव्यत्वाच्च । फलपदेन केवलसाध्यविवक्षायां पुरुषार्थपर्यवसानाभावप्रसङ्गाच्च । इष्टरूपसाध्यविवक्षायां इष्टत्वेन प्रतीतस्य साधनत्वेनैवान्वयस्य प्रकृते वक्तव्यतया साध्यत्वालाभप्रसङ्गाच्च । स्वरूपोपाययोर्वैशिष्ट्यासम्भवेन स्वरूपविशिष्टोपायस्य वाक्यार्थत्वासम्भवाच्च । फलोपाययोस्साध्यसाधनभावरूपैकेष्टसाधनतावच्छेदकाविच्छिन्नज्ञानविषयतावच्छेदकवैशिष्ट्यस्य सत्त्वेन फलविशिष्टोपायस्य वाक्यार्थत्वसम्भवेऽपि फलस्वरूपयोस्तादृशवैशिष्ट्याभावेन स्वरूपस्योपायान्वयं विना स्वातन्त्र्येण फलान्वयमासाद्य वाक्यार्थवर्णनासम्भवाच्च । स्वरूपोपाययोरनुरूपत्वं 'न फलेऽनन्वयः' इत्युक्तप्रायम् । पदोपस्थितपदार्थयोरेव मिथोऽन्वयप्रतियोगितया फलोपायवाचिपदाभावेन स्वरूपोपाययोः फलोपायाभ्यामन्वयासम्भवाच्च । नमश्शब्दव्यङ्ग्यत्वेनाभिमतस्योपायस्य भगवत्स्वरूपात्मकस्य निरपेक्षोपायत्वे सर्वमुक्तिप्रसङ्गेन सापेक्ष-

१. भ्वादि. ९६ ॥

**व्या ॥ श्रीमन्त्रस्य प्रतिपाद्योऽर्थः-अस्यात्मनः शेषत्वपारतन्त्र्यरूपस्वरूपं, तत्स्वरूपानुरूपकैङ्कर्यलक्षणप्राप्यश्च;**

---

त्वे निर्हेतुकत्वसिद्धान्तभङ्गप्रसङ्गेन च फलोपाययोर्विशिष्टयोर्वाक्यार्थद्वयवर्णनासम्भवाच्च । आवृत्तिप्रसङ्गेन तात्पर्यग्राहकाभावेन च वाक्यार्थद्वयवर्णनासम्भवाच्च । तृतीयपदव्यङ्ग्यकैङ्कर्यस्य फलत्वासम्भवाच्च । सुखस्यैव स्वत इष्टत्वेन फलपदमुख्यार्थत्वात् । अस्मत्सिद्धान्ते ज्ञानस्यैव सुखरूपत्वाच्च। अनुगृहीतञ्च भगवता भाष्यकारेण "अनुकूलविषयज्ञानमेव ह्यानन्द इत्युच्यते" इति । तस्मात् मूलमन्त्रस्य वाक्यार्थौ दुर्निरूप एवेति शङ्कां परिहरन् सूत्रार्थमाह-**श्रीमन्त्रस्येति**। सूत्रस्थैतच्छब्देन मूलमन्त्रः-परामृश्यत इत्यभिप्रेत्योक्तम्—**श्रीमन्त्रस्येति** । अनेनान्यत्र शेषत्वपारतन्त्र्यलक्षणस्वरूपं तदनुगुणकेवलपरार्थकैङ्कर्यञ्च न क्वापि मन्त्रे प्रतिपाद्यत इत्यर्थस्सिध्यति । तथा च पूर्वं स्वापेक्षयातिशयितार्थकत्वलक्षणमन्त्रान्तरवैलक्षण्यमुक्तम्; अत्रातिशयितवाक्यार्थमुखेन तदुच्यत इति सङ्गतिस्सूचिता । 'एतत्प्रतिपाद्य' इति समुदायरूपेण मूलमन्त्रं परामृश्य, तत्प्रतिपाद्यत्वोक्तिमहिम्ना 'अर्थ' शब्दः वाक्यार्थपर इत्यभिप्रायेण 'वाक्यार्थमि'त्यवतारिकायामुक्तम् । यद्यपि शेषत्वपारतन्त्र्यलक्षणस्वरूपद्वयस्य शब्दतः प्रतिपाद्यम्; 'नारायणाय स्याम्, मः न स्याम्' इति तृतीयचतुर्थवाक्याभ्यां परार्थकैङ्कर्यप्रार्थनायाः स्वार्थकैङ्कर्याभावप्रार्थनायाश्च प्रतिपाद्यत्वात्; तथापि 'नारायणाय स्यामि'त्यनेन धातोरुत्पत्त्यर्थकत्वमाश्रित्य आत्मनो नारायणविषयकेच्छासाध्यत्वस्य 'मः न स्याम्' इत्यनेनात्मनस्स्वसाध्यत्वाभावस्य च प्रार्थनाप्रतिपाद्यते । तत्रात्मनस्स्वरूपेण साध्यत्वासम्भवेन कैङ्कर्योपरक्तस्यैवात्मनस्साध्यत्वेन वाच्यतया विधिनिषेधयोरेकरूपतया च कैङ्कर्यतदभावप्रार्थनयोर्लाभः।तथा च प्रार्थनाविषयतयात्मनस्साध्यत्वकण्ठोक्त्या 'एतत्प्रतिपाद्यार्थः-प्राप्यम्' इति वक्तुं युक्तमिति ज्ञेयम् । 'स्वरूपम्' इत्यत्र 'आत्मनस्स्वरूपमि'त्यादिना पूरणीयमित्यभिप्रेत्योक्तम्—**अस्यात्मन** इति। 'सकलशास्त्रैरुत्पद्यमानमि'तिवदिति भावः । तेन 'स्वरूपम्' इत्यत्र 'स्व' शब्देनात्मीयवाचिना समभिव्याहृतचेतनसम्बन्धित्वलाभात्, चेतनस्य यावदात्मभाविधर्मभूतं शेषत्वं पारतन्त्र्यञ्च विवक्षितमित्यभिप्रायेणोक्तम्-**शेषत्वपारतन्त्र्यस्वरूपमिति**।तत्रात्मीयत्वस्य यावदात्मभावित्वरूपसम्बन्धरूपतया शेषवृत्त्यर्हत्वलक्षणशक्तिविशेषः, स्वरक्षणान्वयानर्हत्वलक्षणशक्तिविशेषश्च-स्वरूपशब्दविवक्षित इति भावः । 'स्वरूपञ्चे'-ति चशब्दः इतरेतरयोगार्थः । स्वरूपप्राप्ययोः परस्परविशिष्टयोर्वाक्यार्थत्वात् । प्राप्यस्य वाक्यार्थत्वनिर्वाहकं स्वरूपेण वैशिष्ट्यमाह—**तत्स्वरूपानुरूपमिति** । अनुरूपत्वञ्च-अनुगुणत्वम् । निर्वाहकत्वमिति यावत्।'नियस्य स्वरूपयोग्यस्ये'ति न्यायेन शेषवृत्त्यर्हतारूपस्वरूपव्यापकत्वात्, शेषवृत्तिफलोपधानरूपप्राप्यस्य व्याप्यस्य व्यापकोपपाद्यत्वाच्च । 'स्वरूपानुरूपं प्राप्यमि'त्येतावन्मात्रोक्तौ प्राप्यमात्रं वाक्यार्थ इति भ्रमस्स्यात्; प्रथमद्वितीयपदयोः प्राप्यपदविवक्षितकैङ्कर्यफलोपधानप्रतिपादकत्वाभावेन 'प्राप्यमात्रं वाक्यार्थः' इति हि न युक्तम् । अतः 'प्राप्यञ्चे'ति ज्ञेयम् । यद्यपि 'नारायणाय स्याम्' इत्यत्रोत्पत्तेरेवाध्याहृतधात्वर्थतया 'साध्यञ्चे'ति वक्तव्यम्; तथापि 'स्याम्' इत्युक्तात्मनः स्वरूपेण नारायणविषयकेच्छारूपचतुर्थ्यर्थसाध्यत्वाभावेन कैङ्कर्योपरक्तस्यैवात्मनस्साध्यत्वेन वाच्यतया 'ग्रामं गच्छती'त्यादौ ग्रामादेरिवात्मनः प्राप्यत्वलक्षणं साध्यत्वमित्यभिप्रायेण-**कैङ्कर्यलक्षणप्राप्यश्चे**-त्युक्तम् । तथा च 'प्राप्यञ्चे'त्यस्य स्वरूपेणसध्यं कैङ्कर्यं व्यञ्जनया वाक्यार्थ इति फलितार्थः । यद्यपि च 'स्वरूपानुरूपप्राप्यप्रार्थनाचे'त्येव वाच्यम्; प्राप्यप्रार्थनाया एव 'स्यामि'ति लिङा प्राधान्येन प्रतिपाद्यत्वात् । तथापि निरुपाधिकरक्षकभगवत्प्रीतिमात्रोद्देश्यकप्रवृत्तिफलोपहित 'स्यामि'ति स्वरू-

**शेषत्वरूपस्वरूपं, तत्स्वरूपानुरूपोपायः, उपायलभ्यं फलं चेति वेत्यर्थः।**

पप्रतिपादनपूर्वकप्राप्यप्रार्थनाप्रतिपादनस्य 'निरुपाधिकरक्षको भगवान् जीवस्य स्वरक्षणान्वयाभावे केवलपरार्थकैङ्कर्यरूपं फलं संपादयती'त्येतदर्थपरतया प्रार्थनाप्रतिपादनं प्रार्थनीयार्थप्रतिपादनशेष इत्यभिप्रायेण 'प्राप्यं वाक्यार्थः' इत्युक्तम् । च शब्दः-पूर्ववत् ।

इत्थं केवलभगवत्प्रीतिः परमपुरुषार्थः, अनन्यप्रयोजनकैङ्कर्योपरक्तः जीवात्मा व्याजभूतचरमोपायः' इत्येवं पुरुषार्थतत्साधनपरत्वेन योजनां प्रदर्श्य, सूत्राणां विश्वतोमुखत्वे तदुपबृंहणीयस्य सर्ववेदसङ्ग्रहस्य विश्वतोमुखत्वस्य कैमुत्यसिद्धतया लक्षणानुषङ्गविपरिणामाध्याहारपदतदर्थवाक्यतदर्थतदुभयतात्पर्यविषयगौरवपङ्क्तबहुप्रमाणप्रसिद्धबहुवाक्यान्तरास्वारस्यादिबाधकरहिततात्पर्यभेदमात्रनिबन्धनयोजनाभेदस्सर्वत्र ग्राह्य इति सूचयन् 'केवलपरार्थकैङ्कर्यं परमपुरुषार्थः, स्वरूपज्ञानपूर्वकस्वरक्षणान्वयस्वभोगान्वयनिवृत्त्युपरक्तः, परमात्माहष्टद्वारकफलकरणरूपपरमोपायः' इत्येवं पुरुषार्थतत्साधनपरत्वेन योजनान्तरं दर्शयतीत्यभिप्रायेण तद्वाक्यार्थमाह—**शेषत्वरूपस्वरूपमिति**। अत्र 'एतत्प्रतिपाद्योऽर्थः' इत्यनुषञ्जनीयम् । मूलस्थस्वरूपशब्दः-पूर्ववद्यावदात्मभाव्याकारपरः । तत्र चानन्यार्हशेषत्वमात्रं विवक्षितमित्याह—**शेषत्वरूपं स्वरूपमिति**। पूर्वं पदत्रयार्थस्य वक्तव्यतया स्वरूपशब्देन शेषत्वपारतन्त्र्योभयविवक्षायामपि, प्रकृते अर्थत्रयोक्त्या क्रमप्रमाणेन नमश्शब्देन पारतन्त्र्यप्रतिपादने उपायप्रतिपादनशेषत्वस्य विवक्षितत्वादिति भावः । 'स्वरूपमुम्' इत्यनन्तरं 'स्वरूपानुरूपमान' इति अनुपञ्जनीयमित्यभिप्रायेणाह –**तत्स्वरूपानुरूपोपाय इति** । तच्च फलेऽप्यन्वेति । अत्रोपायशब्देनाहष्टद्वारककरणं विवक्षितम् । तच्च प्रकृते फलोपधायकरूपम् । तस्य स्वरूपानुरूपत्वं सिद्धोपायोपरंजकस्य नमश्शब्दार्थस्वरक्षणान्वयानर्हतारूपशक्तिविशेषफलीभूतस्य स्वरक्षणान्वयाभावस्य भगवत्प्रीतिहेतुप्रतियोगिकतया भगवत्प्रीतिमात्रोद्देश्यकप्रवृत्त्यर्हतारूपप्रणवार्थशक्तिविशेषोपपादकत्वात् । तथा च तेन सम्बन्धेन स्वरूपविशिष्टोपायो मूलमन्त्रस्यावान्तरवाक्यार्थ इति भावः । (**उपायलभ्यं फलं चेति**, अत्र फलपदेन भगवत्प्रीतिमात्रोद्देश्यकप्रवृत्तिप्रार्थनायाः 'नारायणाय स्वामि'त्युक्ताया विषयीभूतं केवलपरार्थकैङ्कर्यपर्यन्तं भगवत्प्रियतमत्वं विवक्षितम् । अत एव स्वस्यापि प्रियतमत्वं विवक्षितम्। तादृशफलस्य स्वरूपानुरूपत्वं-तादृशप्रवृत्तिफलोपधानस्य तादृशप्रवृत्तियोग्यतोपपादकत्वात्। तथा च स्वरूपानुरूपोपायसाध्यस्वरूपानुरूपं फलं महावाक्यार्थ इति भावः । (**इति वा**) इति-इत्युक्तिरपि सम्भवतीत्यर्थः । पूर्वयोजनायां भगवत्प्रीतेस्सुखरूपत्वेन फलत्वसम्भवेऽपि प्रकृते कैङ्कर्यस्य सुखरूपत्वाभावेन फलत्वमुक्त्यसम्भवग्रस्तमिति शङ्कायाम्, ज्ञानमेव सुखम् , तस्य च सुखत्वम्-अनुकूलविषयकत्वम् । विषयानुकूल्यञ्च शक्तिविशेषः । तथा च कैङ्कर्यस्यापि भगवदपेक्षया स्वापेक्षया चात्यन्तानुकूलत्वात् सुखत्वं सम्भवतीति परिहारमभिप्रेत्य—**इति वे**त्यनुगृहीतम् । अत एव 'अन्तर्यामित्वमुपायत्वमुपेयत्वञ्चे'ति वत् 'स्वरूपमुपायः फलञ्चे'ति नानुगृहीतमिति ज्ञेयम् ।

अथ पूर्वोक्तशङ्काया उत्तरमुच्यते—यदुक्तं मूलमन्त्रस्य वाक्यार्थो दुर्निरूप इति, तन्न, सुनिरूप एव।एकेष्टसाधनतावच्छेदकावच्छिन्नशाब्दज्ञानजनकत्वरूपैकप्रयोजनकत्वमादायैकवाक्यत्वस्य 'घटमानय, येन जलमाहर्तासि'इत्यादौ वक्तव्यत्वेऽपि मूलमन्त्रस्थपदार्थानामेकशाब्दज्ञाननिष्ठैकेष्टसाधनतावच्छेदकघटकविषयताकान्वयप्रतियोगित्वसम्भवेन मूलमन्त्रस्यैकवाक्यतया वाक्यार्थस्य सूपपादत्वात् ।

तथा हि मूलमन्त्रस्य स्वरूपम्, स्वरूपानुरूपं प्राप्यञ्च वाक्यार्थः;मूलमन्त्रे प्रथमद्वितीयपदार्थभूतस्य स्वरूपस्य तृतीयपदार्थभूतस्य प्राप्यस्य च परस्परानुरूपत्वलक्षणवैशिष्ट्यसद्भावेन मूलमन्त्रस्य स्वरूपप्राप्य-

तत्र प्रथमयोजनायां प्रणवनमोभ्यां स्वरूपं, नारायणपदेन प्राप्यं चोक्तम् । अन-

रूपार्थद्वयमादाय विशिष्टैकार्थप्रतिपादकत्वसम्भवात् । न चैवं प्रथमद्वितीयपदयोर्मिथोऽनन्वयः। तयोस्तृतीयपदेनैव एकवाक्यत्वसम्भवात् । प्रथमद्वितीयपदयोर्वक्ष्यमाणरीत्या विवरणविवरणिभावेन एकवाक्यत्वोपपत्तेश्च । न च स्वरूपशब्देन विशिष्टैकार्थप्रतिपादकजीवात्मविवक्षायां तृतीयपदेऽतिप्रसङ्गः। स्वपदस्यात्मीयपरत्वाश्रयणेन 'स्वञ्च तद्रूपञ्च - स्वरूपमि'ति व्युत्पत्त्या स्वरूपशब्दस्य शेषत्वपारतन्त्र्यरूपयावदात्मभाव्याकारपरतया तस्यानतिप्रसङ्गात् । न च लुप्तव्यक्तचतुर्थ्योस्तादर्थ्यपरतयानुशासनाविशेषेण कथं नातिप्रसङ्ग इति वाच्यम् ; ''अहमपि न मम भगवत एवाहमस्मि'' इत्यादि श्रुत्यनुसारेण प्रणवस्य सिद्धवन्निर्देशतया तत्र च नियतच्छ्रवणबाधपरिहारायाकारवाच्यभगवत्प्रीतीच्छाजन्यकृत्यर्हत्वलक्षणस्वरूपतादर्थ्यपरतया, तृतीयपदस्य पौनरुक्त्यपरिहाराय 'नारायणाय स्याम्' इत्येवं भगवत्प्रीतीच्छाजन्यप्रवृत्तिलक्षणकैङ्कर्यफलोपधानप्रार्थनामुखेन वृत्तितादर्थ्यपरतया च तृतीयपदस्य यावदात्मभाव्याकाररूपस्वरूपपरत्वशङ्कानवकाशात् ।

न चैवं 'रहस्यत्रयं क्रमेण स्वरूपोपायपुरुषार्थपरम्' इति सिद्धान्तव्याकोपः ; तत्र स्वरूपपदस्यानन्यार्हशेषत्वानन्यशरणत्वानन्यभोगत्वज्ञानानन्दस्वरूपतया तादृशस्वरूपविशेष्यकशाब्दबोधजनकत्वरूपतत्परत्वस्य मूलमन्त्रे कार्त्स्न्येन सम्भवात्, अन्यत्रासम्भवाच्च । न च प्राप्यप्रतिपादकत्वस्य प्रथमपदेऽतिप्रसङ्गः ; भगवतः किञ्चिदुपरक्तस्यैवायनपदवाच्यप्राप्यत्वस्य वक्तव्यतया 'नारायणाय स्याम्' इत्यत्र साध्यत्वनिर्दिष्टस्य जीवात्मनो नारायणप्रीतीच्छाजन्यप्रवृत्तिविषयत्वलक्षणतादर्थ्यघटकप्रवृत्तिलक्षणकैङ्कर्यविशिष्टवेषेण साध्यत्वमादाय भगवतः प्राप्यत्वस्य तादृशकैङ्कर्यप्रतिसम्बन्धित्वेन उपपादनीयतया च व्यञ्जनया स्वरूपेण प्राप्यभूतकैङ्कर्यपरत्वस्य नारायणपद एव सम्भवात्।

'अव-रक्षणे'इति धातुपाठप्रसिद्ध्यनुसारेण रक्षणबोधकस्य प्राप्यपरत्वे मानाभावेन,प्रणवस्य''भगवत एवाहमस्मि'' इति सिद्धवन्निर्देशरूपतया तादृशकैङ्कर्यस्वरूपयोग्यतापरस्य व्यञ्जनया स्वरूपेण प्राप्यभूतकैङ्कर्यफलोपधानलम्भकत्वाभावेन च प्राप्यपरत्वासम्भवाच्च।अदृष्टद्वारकस्वरक्षणे स्वान्वयानर्हत्वरूपस्य प्रवृत्त्युद्देश्यस्वभोगानर्हत्वरूपस्य च पारतन्त्र्यस्य स्वरूपशब्दार्थस्य नमश्शब्दविवक्षिततया षष्ठ्यन्तमकारेण नारशब्देन च जीवस्वरूपकण्ठोक्तेरप्रयोजकत्वाच्च ।

'भगवत्प्रीत्यर्थप्रवृत्तियोग्योऽहम्, तथैव स्याम्' इत्येवं तृतीयपदोक्तकैङ्कर्यप्रार्थनायां प्रणवस्य शेषत्वरूपहेतुपरतया 'अन्यशेषत्वापेक्षयातिक्रूरभूतस्वशेषत्वायोग्योऽहं स्वशेषत्वरहितः स्याम्' इत्येवं नारायणपदशेषभूतानुषक्तनमश्शब्दार्थस्वभोगार्थप्रवृत्तिराहित्यप्रार्थनायां नमश्शब्दस्य फलपारतन्त्र्यरूपहेतुपरतया अकारेण निरुपाधिकरक्षकत्वस्योक्ततया नमश्शब्देन स्वरक्षणानर्हत्वस्योक्ततया च, भगवत एव स्वरक्षणे प्रवृत्त्युद्देश्यफलाश्रयत्वस्य वक्तव्यतया 'स्वरक्षणे स्वान्वयानर्होऽहं भगवत एव स्याम्' इत्येवमनुषक्तनमश्शब्दान्विततृतीयपदार्थभूतायां भगवत्प्रीतिमात्रोद्देश्यकैङ्कर्यरूपनिष्कृष्टप्राप्यप्रार्थनायां नमश्शब्दस्य साधनपारतन्त्र्यरूपहेतुपरतया च प्रणवनमश्शब्दाभ्यां स्वरूपद्वयोपादानस्य प्रयोजनवत्तरत्वात् नान्यतरोपादानवैफल्यशङ्कावकाशः ।

न च प्राप्ये स्वरूपानुरूपत्वं दुर्वचम् ; भगवत्प्रीतिमात्रोद्देश्यकप्रवृत्तियोग्यतालक्षणानन्यार्हशेषत्वस्य 'नित्यस्य स्वरूपयोग्यस्ये' त्यादिव्याप्त्यनुरोधेन तादृशप्रवृत्तिफलोपधानव्याप्ततया व्याप्यव्यापकयोरेकाधिकरणवृत्तित्वरूपसादृश्यशालितया सादृश्यस्यैवात्रानुरूपशब्देन विव-

न्तरयोजनायां प्रणवेन शेषत्वं, नमसोपायः, नारायणपदेन फलं चेति विवेकः ॥ २६ ॥

---

क्षितत्वात् । न चानुरूप्यस्य वाक्यार्थतया भानं व्युत्पत्तिविरुद्धम् । पदैकवाक्यतास्थले पदार्थद्वयसंसर्गस्य सांसर्गिकविषयतापेक्षणेऽपि, वाक्यैकवाक्यतास्थले अवान्तरवाक्यार्थतया संसर्गस्य स्वरूपत एव महावाक्यता निर्वाहकत्वेन लोकसिद्धतया शाब्दबोधे सांसर्गिकविषयत्वानपेक्षणात् । न हि 'धूमवानयं पर्वतः' इत्यत्र पदार्थयोरभेदसंसर्गस्येव 'धूमवानयं पर्वतः, तत्र पर्वते वह्निरस्ति' इति वाक्यार्थयोर्ज्ञाप्यज्ञापकभावरूपसंसर्गस्य वाक्यैकवाक्यता निर्वाहकस्य शाब्दबोधे संसर्गविधया भानमस्ति ।

इत्थञ्च प्रकृतेऽपि 'अनन्यार्हशेषत्वादनन्यशरणत्वाच्च भगवद्भोगमात्रोद्देशेन प्रवर्ते' इत्यभिप्रायेण प्रवृत्तस्य महावाक्यस्य स्वरूपद्वयं वस्तुतस्तदनुरूपं प्राप्यञ्च वाक्यार्थ एवेति सिद्धम् । न च निरुक्तानुरूप्यलक्षणवैशिष्ट्येन प्रथमद्वितीयपदार्थविशिष्टतृतीयपदार्थविशिष्टशाब्दज्ञानत्वस्य एकेष्टसाधनतावच्छेदकत्वे मानाभावः; येनोक्तवैशिष्ट्यमादाय मूलमन्त्रस्य विशिष्टैकार्थप्रतिपादकत्वं न स्यात्; मूलमन्त्रेण भगवत्प्रीतिमात्रोद्देश्यकप्रवृत्तिरूपफलोपधाने शेषत्वपारतन्त्र्यरूपलिङ्गद्वयविशिष्टप्रार्थनायोग्यतारूपसाध्यवैशिष्ट्यं जानतः प्रवृत्त्या भगवत्प्रीतिरूपेष्टसाधनताज्ञानपूर्वकं भगवत्प्रीतीच्छायास्तद्धेतुभूतप्रार्थनायास्स्वभोगार्थप्रवृत्तिनिवृत्तीच्छायाः भगवत्प्रवृत्तिप्रतिबन्धकस्वरक्षणान्वयनिवृत्तेर्भगवत्प्रीत्युद्देशेन कैङ्कर्यप्रवृत्तेश्चानुभाविकतया निरुक्तशाब्दज्ञानस्य शेषत्वरूपयोग्यताज्ञानपारतन्त्र्यरूपयोग्यताज्ञानपरार्थप्रवृत्तिस्वार्थप्रवृत्तिनिवृत्तिप्रार्थनायोग्यताज्ञानपूर्वकभगवत्प्रीतितद्धेतुप्रवृत्तीच्छामुखेन परार्थप्रवृत्तिस्वार्थप्रवृत्तिनिवृत्त्योस्सम्पादकतया निरुक्तवैशिष्ट्येन निरुक्तशाब्दज्ञानस्य एकेष्टसाधनतावच्छेदकावच्छिन्नत्वात्, योग्यताज्ञानस्येष्टसाधनताज्ञानरूपत्वात्, अयोग्यताज्ञानस्यानिष्टसाधनताज्ञानपर्यवसायित्वाच्च ।

एतेन इष्टत्वेनेष्टज्ञानं, न प्रवर्तकमिति निरस्तम् । अकारवाच्यनिरुपाधिकरक्षकभगवत्सुखार्थव्यापारविषयत्वस्यैव प्रणवपर्यवसन्नार्थतया इष्टतावच्छेदकरूपेण उपस्थितेष्टसाधनताज्ञानसत्त्वात् । अत एवानिष्टत्वेनानिष्टज्ञानं न निवर्तकम्; अपि तु अनिष्टतावच्छेदकरूपेण तद्ज्ञानमिति ताद्भिकैरङ्गीकारेऽपि न प्रकृतार्थसिद्धिविरोधः । स्वभोगार्थप्रवृत्त्यनर्हत्वस्वरक्षणप्रवृत्त्यनर्हत्वरूपपारतन्त्र्यद्वयज्ञानस्य निरुपाधिकरक्षकभगवत्प्रीतिकरत्वज्ञानपर्यवसायितया तादृशप्रवृत्तिनिवृत्तिप्रार्थनायास्तादृशनिवृत्तेश्च मन्त्रजन्यज्ञानेन सुलभत्वात् । निवृत्तिहेतुभूतस्यानिष्टतावच्छेदकरूपेणोपस्थितानिष्टसाधनताज्ञानस्य सत्त्वात् । इत्थं फलसाधनविषयतया द्विविधायाः प्रवृत्तेः, तथाभूताया निवृत्तेश्च सामग्रीचतुष्टयसद्भावशेषत्वद्विविधपारतन्त्र्यरूपपर्षाङ्गघतात्पर्यलिङ्गान्तर्गतोपपत्त्युपन्यासमुखेन प्रवृत्तिनिवृत्तिप्रार्थनाद्वयोक्त्या दृढीकरत्वाच्च ।

न चायनपदेन प्राप्यत्वेनोपात्तस्य सिद्धवस्तुनः स्वरूपेणासाध्यत्वात्, स्वरूपेण साध्यज्ञानस्यैव प्रयोजनपर्यवसायित्वात्, अन्यस्य स्वरूपेण साध्यस्यानुपादानाच्च, नात्र प्राप्यं वाक्यार्थ इति वाच्यम्; 'नारायणाये'ति चतुर्थ्यास्तादर्थ्यवाचितया तदतिशयेच्छासाध्यव्यापारविषयत्वस्यैव तादर्थ्यशब्दार्थतया च 'नारायणाय स्याम्' इत्युत्तमव्यङ्ग्यात्मन एव व्यापारविशिष्टवेषेण साध्यतया, जीवात्मसाध्यत्वोपपादकतया व्यक्तचतुर्थ्यन्तपदक्रियापदयोस्समभिव्याहारव्यङ्ग्यस्य केवलपरार्थकैङ्कर्यस्य स्वरूपेण साध्यस्य वाक्यार्थत्वसम्भवात् ।

एतेन 'समन्वयाधिकरणविरोधात् केवलस्वरूपं केवलप्राप्यञ्च न वाक्यार्थः' इत्यपास्तम् । निरुपाधिकरक्षकभगवत्प्रीत्यर्थव्यापारस्य स्वरूपयोग्यता प्रतियोगितया प्रणवेन सर्वविधबन्धुभगवत्प्रत्यर्थव्यापारस्य फलोपधानप्रतियोगितया, तृतीयपदेन च लाभेन भगवत्प्रीतिकैङ्कर्ययोः पुरुषार्थतत्साधनयोः प्रतिपादनात् । 'नासाधितं करणमि'ति न्यायेन कैङ्कर्यस्य स्वरूपेण साध्यत्वलाभाय प्राप्यं वाक्यार्थ इत्युक्तिसम्भवाच्च ।

इत्थं 'स्वरूपोपायफलरूपं पदत्रयप्रतिपाद्यं वाक्यार्थः' इत्यपि युक्तम् । स्वरूपशब्देन स्वार्थकैङ्कर्यनिवृत्तिपरार्थकैङ्कर्यप्रवृत्तिहेतुज्ञानविषयप्रणवप्रतिपाद्यानन्यार्हशेषत्वस्य सिद्धवन्निर्दिष्टस्य स्वरूपयोग्यतारूपस्य स्वरूपतादर्थ्यस्य विवक्षिततया तृतीयपदेऽनतिप्रसङ्गात्, नमश्शब्दस्य नमनक्रियावाचित्वेऽपि सखण्डस्य स्वसम्बन्धमात्रनिषेधपरतया अकारोक्तरक्षकत्वसम्बन्धस्य निषेध्यसम्बन्धरूपतया च नमश्शब्देन स्वरक्षणे स्वान्वयनिषेधे सति भगवदुपायत्वस्यार्थाल्लाभसम्भवाच्च, जीवपरमात्मनोरुभयोरपि रक्षणान्वयाभावे तृतीयपदोपात्तफलस्याऽऽकस्मिकत्वप्रसङ्गेन श्रुतार्थापत्तिसत्त्वात्, "उपाये गृहरक्षित्रोः"[1] इति प्रथमनिर्देशेन रक्षकत्वस्य चेतनैकान्तस्य चरमकारणत्वरूपकरणत्वात्मकोपायत्वस्य च भिन्नभिन्नत्वेनाकारेण भगवतो रक्षकत्वसिद्धावपि नमश्शब्देन भगवदुपायत्वस्यार्थिकसिद्धिसम्भवाच्च ।

करणल्युत्पन्नायनशब्देन उपायत्वसिद्धावपि सिद्धस्वरूपस्य भगवतश्चरमकारणत्वेऽतिप्रसङ्गेन उपरञ्जकापेक्षायां मकारोपात्तात्मस्वरूपयाथात्म्यज्ञानकार्यस्य भगवद्रक्षणप्रवृत्तिविरोधिस्वरक्षणान्वयनिवृत्तेरेव नमश्शब्दोपात्तायास्सिद्धसाध्यसमभिव्याहारन्यायेन तृतीयपदोक्तफलोपरञ्जकत्वेन वक्तव्यतया नमश्शब्देनैव उपायत्वस्यार्थात्सिद्धिरिति वक्तुं युक्तत्वाच्च । नमश्शब्दस्य स्वभोगार्थप्रवृत्त्यनर्हत्वलक्षणपारतन्त्र्यपरत्वे अवधारणार्थकद्वितीयाक्षरेण गतप्रायत्वापत्त्या करणोपरञ्जकस्वरक्षणान्वयनिषेधफलोपधानव्याप्यतदयोग्यतालक्षणशक्तिविशेषपरतयैवानन्यथासिद्धार्थकत्वस्य वक्तव्यत्वाच्च । फलपदेन स्वरूपेण साध्यविवक्षायामपि 'नारायणाय स्वामि'त्यनेन जीवात्मन एव साध्यत्वप्रतीत्या विरोधगन्धाभावाच्च । 'नारायणाय स्वामि'ति जीवगतसाध्यत्वरूपश्रुतार्थापत्तिसिद्धपरोद्देशप्रवृत्तिरूपतादर्थ्यचतुर्थीसिद्धकैङ्कर्यप्रतिसम्बन्धित्वेनायनपदार्थस्य फलत्वे तात्पर्यसम्भवाच्च । नारायणपदार्थस्य 'स्वामि'त्युक्तसाध्यान्वयार्थमुद्देश्यत्वेन साधनत्वान्वयावश्यम्भावेऽपि कैङ्कर्यप्रतिसम्बन्धित्वेन साध्यत्वस्य वास्तवस्य सम्भवाच्च । 'स्वामि'ति पदसमभिव्याहारसिद्धकैङ्कर्यप्रतिसम्बन्धित्वेनार्थसाध्यत्वस्य चतुर्थ्यर्थतादर्थ्यघटकत्वेन शब्दत इष्टत्वस्य च सिद्धिसम्भवेन नारायणपदार्थस्य च 'स्वामि'त्युक्तसाध्ये उद्देश्यतया साधनत्वेनान्वयेऽपि तस्येष्टरूपसाध्यपरत्वसम्भवेन केवलसाध्यपरत्वनिबन्धनपुरुषार्थापर्यवसानाप्रसङ्गाच्च ।

स्वरक्षणान्वयानर्हत्वपरनमश्शब्दबलादेव स्वरक्षणान्वयस्य स्वफलीभूतस्वरक्षणान्वयनिवृत्तिमुखेन भगवत्प्रीतिमात्रोद्देश्यकप्रवृत्त्यर्हत्वलक्षणस्वरूपोपपादकत्वेन नमश्शब्दार्थोपरक्तोपायस्य स्वरूपोपपादकत्वलक्षणवैशिष्ट्यसिद्ध्या तेन सम्बन्धेन तद्विशिष्टोपायज्ञानस्य केवलपरार्थप्रवृत्तिरूपैकेष्टसाधनतावच्छेदकावच्छिन्नत्वेन तादृशवैशिष्ट्यस्य विशिष्टैकार्थप्रतिपादकत्वलक्षणस्वोक्तवाक्यत्वोपपादकत्वसिद्ध्या च स्वरूपविशिष्टोपायस्य वाक्यार्थत्वसम्भवाच्च ।

इत्थं साध्यनिर्देशात्मकतृतीयपदव्यङ्ग्यकेवलपरार्थकैङ्कर्यफलोपधानहेतुतया फलस्वरूपयोरेकवाक्यार्थताप्रयोजकवैशिष्ट्यसद्भावेन स्वरूपस्योपायान्वयमन्तरेण स्वातन्त्र्येण फलान्वयमासाद्य वाक्या-

१. अहि-सं. ३६-३४ ॥

र्थवर्णनसम्भवाच्च। 'व्याप्यस्य यद्यदधिकरणं तत्तदधिकरणवृत्तित्वमेव व्यापकस्य व्याप्यसादृश्यम्, तदेव तस्य तदानुरूप्यञ्चे'ति पूर्वमेवोक्तम्। न च फलोपाययोः पदवाच्यत्वाभावात् ताभ्यां स्वरूपान्वयः; अनन्यार्हशेषत्वरूपस्वरूपस्यापि वाक्यार्थत्वेनापदार्थतयान्वयानपेक्षणात्। महावाक्यताप्रयोजकसांसर्गिकविषयतारहितवैशिष्ट्यस्य हेतुहेतुमद्भावरूपस्य उपायोपरञ्जकनमश्शब्दप्रतिपाद्यस्वरक्षणान्वयनिवृत्तौ तृतीयपदार्थभूतजीवात्मस्वरूपे च केवलपरार्थकैङ्कर्यरूपफलोपरक्ते शेषत्वात्मकस्वरूपस्य सम्भवेन स्वरूपविशिष्टयोः फलोपाययोर्महावाक्यार्थत्वसम्भवात्।

न च प्रकृतोपायस्य निरपेक्षत्वे सर्वमुक्तिप्रसङ्गेन, सापेक्षत्वेऽपसिद्धान्तप्रसङ्गेन च न फलावच्छिन्नोपायो वाक्यार्थः, इति वाच्यम्; नमश्शब्दार्थफलीभूतस्वरक्षणान्वयनिवृत्त्युपरक्तोपायस्य फलान्वयेऽतिप्रसङ्गाभावात्। अदृष्टद्वारकफलसाधनाननुष्ठानस्यैव नमश्शब्दार्थफलतयाऽपसिद्धान्तप्रसङ्गाभावाच्च। न चैवं भक्तिप्रपत्त्यनपेक्षाप्रसङ्गः; भक्तिप्रपत्त्योस्तत्वज्ञानादिरूपत्वेन दृष्टविधया मोक्षकारणत्वस्यान्यत्र प्रपञ्चितत्वेन भूतभव्यसमुच्चारणन्यायेन तृतीयपदव्यङ्ग्यफलकारणीभूततृतीयाक्षरोपात्तज्ञानरूपत्वात्। न च भक्तिप्रपत्त्योः प्रसादहेतुत्वावश्यम्भावेन मोक्षं प्रति नियतपूर्ववृत्तित्वेन चाऽदृष्टद्वारकसाधनत्वापत्तिः; तयोस्स्वयंप्रयोजनभगवत्प्रीतिहेतुत्वेऽपि "सर्वपापेभ्यो मोक्षयिष्यामी"ति सङ्कल्पहेतुप्रीतिजनकत्वाभावेनाऽदृष्टद्वारकत्वाभावात्।

न चैवं भक्तिप्रपत्तिभ्यामेव मोक्षसिद्धौ सिद्धोपायस्याऽन्यथासिद्ध्यापातः; स्वर्गहेतुशरीरान्तरारम्भवत्, मोक्षहेतुभूतार्चिरादिगतिवच्च भक्तिप्रपत्त्योर्द्वारफलत्वेन मोक्षवदेवोपायफलत्वस्य प्रमाणबलेनाऽभ्युपगन्तव्यतयाऽन्यथासिद्धिशङ्काऽनवकाशात्। न च द्वारफलेऽप्युपायस्य सापेक्षत्वनिरपेक्षत्वविकल्पापत्तिः; उत्तरोत्तरद्वारफलानां पूर्वपूर्वस्वरक्षणान्वयाभावोपरक्तसिद्धोपायफलत्वाभ्युपगमात्। अद्वेषादीनां केवलपरार्थकैङ्कर्यपर्यन्तानां नमश्शब्दार्थफलीभूतसिद्धोपायोपरञ्जकस्वरक्षणान्वयनिवृत्तिरूपत्वस्य, तृतीयपदव्यङ्ग्यफलरूपत्वस्य च "इष्टं हि विदुषाम्" इति न्यायेन प्रमेयशेखराख्यप्रबन्धे निष्कृष्टोपदेशमुखेनाऽर्चिरादिनामकप्रबन्धे प्रमाणोपपत्तिसम्प्रदायप्रदर्शनमुखेन च प्रपञ्चितत्वात्। अनुगृहीतञ्च वेदान्ताचार्यैः "तैलान्धस्त्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचिन्मुक्तैश्वर्यान्तसम्पन्निधिरपि भविता कश्चिदित्थं विपश्चित्" इति। न च मूलमन्त्रस्य योजनाद्वयाङ्गीकारे आवृत्तिप्रसङ्गः; सैन्धवादिपदेषु अश्वलवणाद्यनेकार्थपरत्वे अश्वत्वलवणत्वादिप्रकारकोपस्थितिद्वयार्थपदोपस्थितिद्वयरूपावृत्तिप्रसङ्गवत्, स्वयम्प्रयोजनकेवलभगवत्प्रीतिरूपेष्टसाधनकैङ्कर्यपरत्वे केवलपरार्थकैङ्कर्यरूपेष्टसाधनस्वरूपानुरूपस्वरक्षणान्वयनिवृत्त्युपरक्तसिद्धोपायपरत्वे च मूलमन्त्रस्याकारादिपदषट्के कस्यापि पदस्य भिन्नप्रकारकोपस्थितिजनकत्वनिबन्धनावृत्तिप्रसङ्गगन्धाभावाच्च। इयांस्तु विशेषः—स्वरूपप्राप्यपरत्वे स्वरूपद्वयं योग्यतारूपं शाब्दम्, तद्घटकीभूतं भगवत्प्रीतिरूपं तत्फलं व्यङ्ग्यम्; केवलपरार्थकैङ्कर्यरूपं साधनमपि व्यङ्ग्यं; स्वरूपेण साध्यञ्च। स्वरूपोपायफलपरत्वे तु स्वरूपं शाब्दम्; किञ्चिदुपरक्तसिद्धस्वरूपं करणम्, तत्र स्वरक्षणान्वयनिवृत्तिरूपसिद्धोपायोपरञ्जकं स्वरक्षणान्वयानर्हत्वरूपस्वरूपोक्त्या व्यङ्ग्यं फलम्; अद्वेषादिद्वारा परार्थकैङ्कर्यरूपं व्यङ्ग्यमिति। आवृत्तिप्रसङ्गाभावादेव सैन्धवादिष्विव न तात्पर्यग्राहकापेक्षा; विनिगमनाविरहेण योग्यतासहकृतशब्दस्यैव योजनाद्वयतात्पर्यग्राहकत्वात्। तस्मान्मूलमन्त्रस्य वाक्यार्थस्सुनिरूप इति।

शारीरकशास्त्रमिव पदत्रयेऽपि क्रमेण तत्त्वोपायपुरुषार्थाः प्रतिपाद्यन्त इति योजनान्तरमाह—स्वरूपमिति। शारीरके हि प्रथमाध्याये जीवस्य जगत्कारणत्वनिराकरणपूर्वकमीश्वरस्यैव तथा-

---

१. भारते. आदि. १-६५ ॥ | २. रहस्यत्रयसारे. उपोद्घाताधिकारे ॥

त्वं व्यवस्थापितमिति तन्मुखेन जीवस्य तत्कार्यत्वतदन्तर्यामित्वयोर्द्वितीये "नात्माश्रुतेः" इत्यत्र नित्यतायाः, "ज्ञोऽत एवे'त्यत्र ज्ञातृत्वस्य, "उत्क्रान्तिगत्यागतीनाम्" इत्यत्राणुत्वस्य, "कर्ता शास्त्रार्थवत्त्वात्" "परात्तु तच्छ्रुतेः" इति परार्थकर्तृत्वस्य च प्रतिपादनात् पूर्वद्विकेन स्वरूपं प्रतिपाद्यत इति वक्तुं शक्यते । उपायत्वोपेयत्वयोरुत्तरद्विकेन प्रतिपादनात् 'उपायः फलञ्चे'ति वक्तुं शक्यत इत्यस्मदाचार्याः । अत एवोक्तं श्रीमति रहस्यत्रयसारे वेदचूडाचार्यैः "कारणत्वमबाध्यत्वमुपायत्वमुपेयता । इति शारीरके स्थाप्य इह चापि व्यवस्थितः" इति ।

केचित् 'कृत्स्नोऽपि मन्त्रः, स्वरूपपरः, प्राप्यपरो वेति वाक्यार्थमाहुः । तथाचार्यैरेव परन्दपडिरहस्येऽभिधानात् । तथा हि - 'अस्य 'स्वरूपमुच्यत' इति 'प्राप्यमुच्यत' इति च वाक्यार्थः । 'स्वरूपमुच्यत' इत्यस्य विरोधिस्वरूपम्, उपायस्वरूपम्, फलस्वरूपम्, अधिकारिस्वरूपम्, भगवत्स्वरूपञ्चेत्यर्थपञ्चकपरत्वेऽपि, अधिकारिस्वरूपस्य प्रथमतः अपेक्षितत्वात्, प्रसिद्धिप्राचुर्याच्च 'स्वस्वरूपमुच्यते' इत्यर्थो वक्तव्यः । अत्र प्रणवेनैव हि आत्मस्वरूपमुच्यते, नमसा नारायणपदेन च उपायोपेयस्वरूपकथनात्, कथं कृत्स्नोऽपि मन्त्रः 'स्वरूपमुच्यत' इत्युक्तिस्सम्भवतीति चेत्, प्रणवप्रतिपाद्यभगवच्छेषत्वस्यात्मनस्स्वरूपवत्, उत्तरपदप्रतिपाद्यभगवदेकसाधनत्वसाध्यत्वयोरपि अस्य स्वरूपत्वात् पदत्रयमपि स्वरूपप्रतिपादनपरमिति वक्तुं युक्तत्वात् न दोषः । नारायणपदप्रतिपाद्यशेषवृत्तेः प्राप्यत्ववत्, पूर्वोक्तभगवच्छेषत्वस्य, अन्यशेषत्वराहित्यस्य स्वस्वातन्त्र्यनिवृत्तेः, सिद्धोपायस्वीकारस्य, तदीयशेषत्वस्य च इतः पूर्वमप्राप्तत्वात्, उपरिष्टात् प्राप्तव्यत्वाच्च तत्प्रतिपादकपदद्वयमपि प्राप्यस्वरूपं प्रतिपादयतीत्यत्र न कोऽपि दोषः । " इति—इति ।

अन्ये-कृत्स्नोऽपि मन्त्रः-उपायपरः, पुरुषार्थपरो वा। तथा हि प्रणवस्तावत् "ओंकारो भगवान् विष्णुः" 'तस्य वाचकः प्रणवः" "ओमिति ब्रह्म" "ओन्तत्सदिति निर्देशः ब्रह्मणस्त्रिविधस्स्मृतः" इत्यादिभिर्ब्रह्मवाचकत्वेन प्रसिद्धः । स च रक्षकत्वादिप्रवृत्तिनिमित्तकतया, व्याकरणे "अवतेष्टिलोपे चे"ति व्युत्पादितः। अहिर्बुध्न्यसंहितायां तु "ओतमस्मिन्मितं सर्वमित्यर्थस्स्थूल उच्यते । ओङ्कारेण मकारेण संसर्गस्तारकाश्रयः। द्वौ वर्णौ गमकावेतौ ओतस्य च मितस्य च । यत्किञ्चिद्भगवतोऽन्यत्तन्मितं सर्वमिष्यते । शक्तिमान् भगवद्वाच्यस्तच्छक्तेः प्रविजृम्भणम् । सङ्कल्पनीयस्सङ्कल्पः इति यत्ते पुरोदितम् । तत्र सङ्कल्पनीयोऽर्थो भूतिश्शुद्धेतरात्मिका । अव्याहता तु तत्प्रेक्षा सङ्कल्पस्तत् सुदर्शनम् । कल्प्यकल्पात्मकं सर्वं तदेतन्मितमिष्यते । मितं तदोतं सूत्रेण मणिवद्भगवत्यजे । अवतिस्तु प्रवेशार्थो गतिर्व्याप्तिः प्रवेशनम् । मितं प्रविष्टे देवेशे पुष्करे परमाणुवत् । ओते मिते च देवेशे प्राविध्यस्सूत्रवन्मणौ । स्थूलोऽयं प्रणवस्यार्थः" इत्यादिना सकलपदार्थाधाराधेयभावादिनिमित्तकतोक्ता । पाञ्चसंहितायाञ्च "ओङ्कारो वर्णव्यत्यासः स्यादकारस्य पञ्चज । मकारवर्णव्यत्यासो वकारस्या-

---

१. ब्रह्मसूत्रम्. २-३-१८ ॥
२. ब्र. सू. २-३-१९ ॥
३. ब्र. सू. २ ३-२० ॥
४. ब्र. सू. २-३-३३ ॥
५. ब्र. सू. २-३-४० ॥
६. रहस्यत्रयसारे मूलमन्त्राधिकारे ॥
७. विष्णुपुराणे. २-८-५४ ॥
८. योगसूत्रम्. १-२७ ॥
९. तैत्तिरीयोप. शिक्षावल्याम्. ८-१ ॥
१०. गीता. १७-२३ ॥
११. अहि. सं. ५०. अ ॥
१२. पाञ्चसं. चर्यापादे ॥

प्युदीरितः । अन्तर्बहिश्च तत्सर्वं व्याप्नोति तदुदीर्यते । (अथवा तन्तु सन्तानं वृत्तेर्वाथ भविष्यति ।) टेश्चलोपो वकारस्य प्रसारणमतः परम् । पूर्वत्वं चोपसर्गेण स्यादन्तश्चाद्गुणः कृतः । यस्मिन्नोतमिदं सर्वं तदेवमभिधीयते । अवते रक्षणार्थत्वात् अटिलोपे च वर्तते । वकारस्योपधायाश्च द्वयोरूढागमस्स्मृतः । गुणे च रूपं यत्सर्वं त्रायते यत्परं पदम् । अभिधेयमिति प्रोक्ता निरुक्तिः प्रणवस्य सा" इति धातुत्रयात्प्रणवस्य प्रवृत्तिर्दर्शिता। "अव्यक्तार्थतयोङ्कारः केवलो नैव साधकः" इति शाण्डिल्याद्युक्तप्रक्रियया औपचारिकान्यविषयप्रयोगदर्शनजनितान्यपरत्वशङ्कानिरासाय निस्साधारण्यनारायणपदमपेक्षते । गुणविशेषोपस्थापनार्थतया च । न प्रणवानर्थक्यम् । नारायणपदसमानाधिकरण्याच्च । नमश्शब्दयोगलुप्तचतुर्थ्यन्तता तारस्यावधार्यते । नमश्शब्दश्च "उपाधिरहितेनाऽयं येन भावेन चेतनः । नमति ज्यायसे तस्मै तद्वा नमनमुच्यते । भगवान्मे परो नित्यमहं प्रत्यवरस्सदा । इति भावो नमः प्रोक्तो नमसः कारणं हि सः । नाम्यत्यपि वा देवं प्रह्वीभावयति ध्रुवम् । प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् । अतो वा नम उद्दिष्टं यत्तन्नामयति स्वयम् । वाचा नम इति प्रोच्य मनसा वपुषा च यत् । तन्नमः पूर्णमुद्दिष्टमतोऽन्यन्न्यूनमुच्यते । इयं करणपूर्तिस्स्यादङ्गपूर्तिमिमा शृणु ।" इत्यादिन्यासपरत्वेन व्याख्यातः । अतो 'रक्षकत्वादिविशिष्टाय नारायणाय नमः' इत्येकवाक्यतया कृत्स्नोऽयम्मन्त्र उपायपरः । —"बद्धाञ्जलिपुटा हृष्टा नम इत्येव वादिनः" इत्यादिदर्शनात् शेषवृत्तिर्वा नमसेर्यते । अहिर्बुध्न्येऽपि नमसश्शेषवृत्त्यर्थतां जगौ । "प्रेक्षावतः प्रवृत्तिर्या प्रह्वीभावात्मिका स्वतः । उत्कृष्टं परमुद्दिश्य तन्नमः परिगीयते । लोके चेतनवर्गस्तु द्विधैव परिकीर्त्यते । ज्यायांश्चैव तथाज्यायान् नैवाभ्यां विद्यते परः । कालतो गुणतश्चैव प्रकर्षो यत्र तिष्ठति । शब्दस्तं मुख्यया वृत्त्या ज्यायानित्यवलम्बते । अतश्चेतनवर्गोऽन्यस्स्मृतः प्रत्यवरो बुधैः । अज्यायाश्चाऽनयोर्योगश्शेषशेषितयेष्यते। अज्यायांसोऽपरे सर्वे ज्यायानेको मतः परः । नन्तृनन्तव्यभावेन तेषां तेन समन्वयः । नन्तव्यः परमश्शेषी शेषा नन्तार ईरिताः । नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः । नीचोच्चयोस्स्वभावोऽयं नन्तृनन्तव्यतात्मकः" इति । एवञ्च कृत्स्नोऽपि मन्त्र एकवाक्यतया पुरुषार्थमभिधत्त इति वदन्ति । —तदेतत् योजनाद्वयमप्याचार्यैर्नादृतम् । यद्यपि परन्दपडिरहस्ये तनिप्रणवरहस्ये च प्राप्यपरत्वेन वाक्यार्थो वर्णितः, तथापि उपायपरत्वेनानुक्तत्वात् अनादरणीयम् ।

अन्ये तु-श्रुत्युक्ततारत्र्यक्षरत्वाविरोधेनैव कृत्स्नस्य मन्त्रस्य स्वरूपोपायपुरुषार्थान्यतमपरत्वमिच्छन्ति । तथा हि - अहं पदसमानार्थः तारोऽन्यः प्रणवः पुनः । बोधयन्त्रक्षकत्वादि नारायणविशेषणम् । पौनरुक्त्यं निराकार्यं भगवद्वासुदेववत् । यद्वा नारायणपदेनाकारार्थविशेषणात् । नमःपदं शेषवृत्तिन्यासान्यतरबोधकम् । कर्तुमर्हः करोमीति क्रियासमिति वा पुनः । अध्याहार्यं स्वरूपादित्रयान्यतमधीस्ततः । तदेव 'आय नारायणायैवाहं नमस्कर्तुमर्हो नमस्करोमि' इति वा स्वरूपोपायपुरुषार्थान्यतमबोधो मन्त्रवाक्यात् जायत इति वदन्ति । अत्रापि प्रयोजनत्रये चरमयोजनाद्वयोपेक्षायामुक्तो हेतुः-आद्ययोजनापि अनन्यार्हशेषत्वमात्रलाभेऽपि अनन्यशरणत्वाद्यलाभात्, अव्यवहितान्वये संभवति व्यवहितान्वयस्यान्यायत्वाच्चोपेक्षिता । 'अकारवाच्याय नारायणायैव स्वम्, अहं नमस्यन्, न मे देहादिकम् नाहं स्वतन्त्रोऽस्मी'ति वाक्यद्वयतया कृत्स्नोऽयमपि मन्त्रस्स्वरूपपर इति योजनापि असम्बन्धिपदव्यवहितान्वयासम्भवादेवोपेक्षिता । न च पूर्वोक्तिविरोधः, कृत्स्नस्य मन्त्र-

---

१. शाण्डिल्यस्मृतौ. ५-७१ ॥
२. अहि. सं. ५२-९,१३ ॥
३. भारते. शान्ति. मोक्ष. ३४४-४५ ॥
४. अहि. सं. ५२-२ ॥

स्य स्वरूपज्ञानजनकत्वे सत्येव तदुपपत्तेरिति वाच्यम् ; तस्याः-"पदत्रयेऽत्र संक्षेपात् भाव्यानन्यार्हशेषता । अनन्योपायता स्वस्य तथानन्यपुमर्थता" इत्युक्तरीत्या वाक्यत्रयपक्ष एवाऽऽकारत्रयविशिष्ट स्वरूपलाभेनोपपत्तेः । प्राप्यादीनां सर्वेषामात्मसम्बन्धित्वात् , स्वरूपप्रतिपादने मन्त्रस्य तात्पर्यमिति रम्यजामातृदेशिकैरभिधानात् । न चैवमिह 'सङ्ग्रहणे श्रीमान् गोप्ता शेषी समाधिकदरिद्रः। शरणं सर्वशरीरी प्राप्यस्सेव्यश्च साधुभिर्भाव्यः' इति भगवदाकारविशेषाणामपि मन्त्रतो लाभात् तत्परत्वसिद्ध्यभावो निर्निबन्धन इति वाच्यम्; शाब्दप्राधान्यस्यैव निबन्धनत्वात् । "तौरे स्वरूपतादर्थ्यं स्थितितादर्थ्यमन्तरा । अन्ये प्रवृत्तितादर्थ्यमिति मन्त्रार्थसङ्ग्रहः" इति सुन्दरजामातृमुन्युक्तजीवसामान्यजीवस्वाभाविकाकारपरत्वयोजनायां प्रार्थनापदस्याध्याहाराभावेन स्वरूपयाथात्म्यपरत्वं सुगमम् । तदुक्तं तैरेव "तस्मादनन्यशेषोऽयमनन्यशरणस्तथा । अनन्यभोगश्चात्मेति पदत्रयसमीरितः । अतश्शेषी शरण्यश्च प्राप्यश्च भगवानिति । ज्ञानादपास्तमज्ञानमहङ्कारार्थकामजम् । एवं प्रकारसंपन्नं मन्त्रेणानेन कृत्स्नशः। आत्मस्वरूपयाथात्म्यं सामान्येनोपवर्णितम्"इति।अभियुक्तोक्तौ बुद्धिर्मन्त्रोदितस्वरूपयाथात्म्यज्ञानकार्यभूतोऽध्यवसायरूपो ज्ञानविकासः, द्वयैकनिष्ठता पश्चादपि तदुक्तोपायेपेयान्यानन्वयः । तथा हि-जातस्वरूपविज्ञानस्वीकृतोत्तमसाधनः । प्राप्योपायान्तरत्यागी भूया इति तदाशयः ।

अन्ये तु "मूलमन्त्रेण स्वात्मानं देवाय निवेदये"ति नित्यानुरोधात् वाक्यद्वयपक्षे कृत्स्नोऽपि मन्त्र आत्मसमर्पणपरः । तथा हि—चतुर्थी सम्प्रदानत्वे बोधिकाभिमताऽत्र नः । सम्प्रदानत्वमन्यत्र दीयमानार्थशेषिता । नात्र यद्यपि तद्युक्तं नित्यस्वत्वात्परात्मनः । तथापि संरक्ष्यतया स्वस्य तस्मै समर्पणात् । अमुख्यं संप्रदानत्वं चतुर्थ्यन्तस्य बोध्यते । नीचभावेन सन्देयमात्मनो यत्समर्पणम् । विष्ण्वादिभ्यश्चतुर्थी तत् सम्प्रदानप्रदर्शिनी । इत्यहिर्बुध्न्यकथितानीतिरष्टाक्षरे समा । प्रणवो विनियुक्तश्च श्रुत्यैवात्मसमर्पणे । अतश्चतुर्थ्या बोद्धव्या कथञ्चित्सम्प्रदानता । शठार्युक्तिमुदाहृत्य रक्ष्यत्वेन समर्पणम् । रम्यजामातृदेवैश्च प्रणवार्थ इतीरितः । अकारः पूर्ववत् ज्ञेयो नारायणविशेषणम् । स्वरूपपरतापक्षे प्रथमान्तत्वनिश्चयात् । मकारः प्रथमान्तोऽस्यां योजनायामपीष्यते । 'मया समर्पित' इति चोपस्कारेण योजना । नमश्शब्देन रक्ष्यत्वं निषेध्यं स्वनिरूपितम् । स्वरक्ष्यत्वनिषेधस्य यद्वोकारेण सिद्धितः । स्वस्यानपेक्षकर्तृत्वं निषेद्धव्यं समर्पणे । अथवा गोबलीवर्दनयेनेतररक्ष्यता । निषिद्धा मध्यमे वर्णे नमसा तु स्वरक्ष्यता । सम्भवत्यनुषङ्गे हि नाध्याहारोररीकृतिः । श्रीवैकुण्ठगद्ये च भगवता भाष्यकृता "श्रीमता मूलमन्त्रेण मामैकान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्वेति याचमानः प्रणम्यात्मानं भगवते निवेदयेत्" इति मूलमन्त्रस्यात्मनिवेदने विनियोगात् प्रमाणसम्प्रदायानुरोधेयं योजनेति वदन्ति ।

उक्तहेतोरेवेयमपि नादृता । अहिर्बुध्न्यवचनन्तु नमश्शब्दस्थूलयोजनाप्रतिपन्नसमर्पणोद्देश्यत्वपरा विष्ण्वादिपदोत्तरचतुर्थीति वदन् उक्तयोजनानुकूलम् । प्रणवश्च तदाहिर्बुध्न्यपाञ्चादिसंहितोक्तरीत्या चतुर्थ्यन्तो भगवत्पर एव । नात. प्रथमान्तमकारार्थानन्वयदोषः ; नित्योक्तिरपि एतद्योजनाभिप्रायैव । गद्योक्तावपि मूलमन्त्रकरणकत्वस्याव्यवहिते याचने व्यवहितोच्चारणवैयर्थ्यप्रसङ्गात् , तद्विशिष्टे वा प्रधानेऽपि निवेदनेऽन्वयो गम्यत इति न ततोऽप्युक्तयोजनासिद्धिः । अथ 'नारायणा-

---

१. रहस्यत्रयसारे मूलमन्त्राधिकारे ॥
२. दीपसङ्ग्रहे ॥
३. दीपसङ्ग्रहे ॥
४. स्तोत्ररत्ने. ५२ ॥

यैवाऽहं स्यां, न मम स्यामि'ति कृत्स्नोऽपि मन्त्रः पुरुषार्थप्रार्थनापर इति योजनाप्यत एवोपेक्षिता । 'आद्यं पदद्वयमुक्तदिशा निवेदनापरपर्यायनिक्षेपपरम्, चरमन्तु पदं पुरुषार्थप्रार्थनापरम्; अथवा, आद्यं भरन्यासपरम्; उत्तरपदद्वयमनिष्टनिवृत्तीष्टप्राप्तिप्रार्थनापरम्; अथवा, आद्यं पुरुषार्थप्रार्थनापरम्, चरमं पदद्वयं प्रह्वीभावभरन्यासपरमि'ति योजनाद्वयन्तु गद्यानुगुणमप्यपेक्षितस्वरूपविवेकासिद्धिप्रसङ्गात् अनादृतम्। यदि तु नित्यगद्ययोः 'निवेदयेत्' इति "किङ्करोऽस्मीति चात्मानं देवायैवं निवेदयेत्' इत्यादिवत् विज्ञापनमात्रपरः, तदा ततो मन्त्रस्य स्वरूपपरत्वमेव सिद्ध्यतीति बोध्यम् ।

अन्ये तु—प्रणवस्तावदात्मसमर्पणपरः; "ओमित्यात्मानं युञ्जीते"ति श्रुतेः । वसुरण्यादिमन्त्रावयवस्तत्र प्रणव इति न भ्रमितव्यम्; "हविर्गृहीत्वात्मरूपं वसुरण्येति मन्त्रतः । जुहुयात्प्रणवेनाग्नावच्युताख्ये सनातने" इति ग्रहणसमर्पणयोर्विभज्य विनियोगात् । "प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्" इति वेधत्वेन निरूपिते समर्पणे धनुष्ट्वेन निरूपितस्य प्रणवस्य करणत्वबोधनाच्च । तन्मयः - तेन संसर्गविशेषं प्राप्तः, न तु तेनैकीभूत इत्यर्थः । 'शरवदि'ति दृष्टान्तविरोधापत्तेः । यद्यप्येतानि वचनानि स्वतन्त्रप्रणवस्यैव समर्पणपरतां बोधयन्ति, तथापि तुल्यन्यायतया मन्त्रावयवस्यापि तथात्वम् । चतुर्थी च संप्रदानत्वबोधिका । तथा च 'भगवतो मां समर्पयामी'ति वा, 'अहं समर्पितः' इति वा प्रणवार्थः । भगवच्छरीरतया तदेकपारतन्त्र्यस्यात्मनस्स्वकीयत्वासम्भवः, पूर्वकृतसमर्पणानुशयनिमित्तं शेषेण बोध्यते । चतुर्थी तादर्थ्ये । अयञ्चार्थो यामुनाचार्यैरनुसंहितः "तदहं तव पादपद्मयोरहमद्यैव मया समर्पितः...नियतस्वमिति प्रबुद्धधीरथवा किन्नु समर्पयामि ते" इति च । अतस्स्वरूपोपायपरो मन्त्र इति वदन्ति ।

तदपि भ्रान्तिरूपस्य स्वरूपसमर्पणस्य नियमतोऽननुष्ठेयत्वात्, तद्विधायकशास्त्रस्य चोत्तरकालिकस्वशेषत्वबोधनिवर्तकतया अप्रतिबुद्धाधिकारिविषये सावकाशत्वात्, यामुनाचार्यसूक्तेश्च आत्मनः नियतशेषत्वानिष्कर्षणायाप्रतिबुद्धाधिकारिकृतसमर्पणानुकरणपूर्वकतन्निराकरणे प्रवृत्तत्वात्, मन्त्रस्य नियतानुसन्धेयस्वरूपयाथात्म्यपरत्वमेवोचितमित्यनादृतम् । यदप्याद्यं पदं स्वरूपपरम्, उत्तरपदद्वयन्तु वाक्यद्वयतयाऽनिष्टनिवृत्तीष्टप्रार्थनाप्रतिपादनमुखेन तद्गर्भाध्यवसायपरमुपायपरमेकवाक्यतया वा, नारायणोद्देश्यकन्यासपरमिति योजनाद्वयम्, तदपि व्युत्पत्तावुपायस्योपेयपूर्वकत्वाद्व्यवसाये लक्षणापत्तेश्चोपेक्षितम् ।

योजनाद्वयेऽपि मन्त्रार्थं प्रदर्शयति--तत्रेति । **प्रणवनमोभ्यां स्वरूपम्**-प्रणवेन 'आयैव मू' इति भगवन्मुखोल्लासमात्रोद्देश्यप्रवृत्त्यर्हत्वरूपशेषत्वस्वरूपम्, नमसा - अर्थात्सिद्धादृष्टद्वारकफलसाधनगोचरप्रवृत्त्यनर्हत्वरूपात्यन्तपारतन्त्र्यस्वरूपञ्चेत्यर्थः । **नारायणपदेन प्राप्यम् इति**--'नारायणाये'ति पदेन "अस्मै कालं सकलमपि सर्वत्र सकलास्ववस्थास्वाविस्युर्मम सहजकैङ्कर्यविधयः" इत्युक्तरीत्या भगवन्मुखविकासहेतुभूतवृत्तिविशेषात्मककैङ्कर्यलक्षणप्राप्यमित्यर्थः ॥ २६ ॥

---

१. जितन्तास्तोत्रे. १-१४ ॥
२. तैत्तरीयोप. नारा. ५१-१ ॥
३.
४. मुण्डकोप. २-२-४ ॥
५. स्तोत्ररत्ने. ५२ ॥
६. अष्टश्लोक्याम् . ३ ॥

(२७) फलविशेषः कीदृश इत्यत्राह—फलेति ॥

मू ॥ फलमिरुक्कुंबडि - प्रमेयशेखरत्तिलुम्, अर्चिरादिगतियिलुं शोन्नोम् ॥

छा ॥ फलप्रकारः प्रमेयशेखरे, अर्चिरादिगत्यां चोक्तः ॥ २७ ॥

---

फलमिति - अत्र फलशब्देन सिद्धोपायसाध्यमिष्टमुच्यते । फलप्रकारः—फलावस्थितिप्रकार इत्यर्थः । केवलपरार्थकैङ्कर्यस्य यावदात्मभावित्वमात्रं, न फलावस्थितिः; अपि तु अद्वेषप्रभृतेस्सर्वस्यापि चिकीर्षापूर्वकचेतनव्यापारस्योत्पत्तिक्षणमारभ्य यावत्कालभावित्वमित्यभिप्रायः । प्रमेयशेखरे-प्रतिपाद्यप्रतिपादयोरभेदोपचारः । प्रमेयशेखराख्यप्रबन्ध इत्यर्थः । तथा हि—"निर्हेतुकभगवत्कटाक्षेणाऽज्ञातसुकृतं भवति । तदन्वद्वेषो भवति । तेन भगवद्भागवतविषयेष्वाभिमुख्यं जायते । तदनु त्याज्योपादेयविभागज्ञाने कौतुकं भवति । तेन सात्विकसम्भाषणं भवति । तेन सदाचार्यसमाश्रयणं भवति । तदनु त्याज्योपादेयनिश्चयो भवति । तदनु प्राप्यान्तरे वैराग्यं, परमप्राप्येऽभिनिवेशश्च भवति । तदनन्तरं प्राप्यान्तरनिवृत्तेः, परमप्राप्यसिद्धेश्च मूलभूतसिद्धोपायस्वीकारो भवति । तदनन्तरं भगवत्प्राप्तौ त्वरा जायते । अनन्तरं "¹अहं स्मरामी"त्युक्तप्रकारेणेश्वरस्मृतिविषयो भवति । अनन्तरं भूतसूक्ष्मशरीरपरिष्वङ्गो भवति । अनन्तरं परमात्मसंसर्गो जायते । ततः हार्दानुग्रहेण मार्गविशेषप्रकाशो भवति । अनन्तरं हृदयगुहानिर्गमनं भवति । तदनु मूर्धन्यनाडीनिष्क्रमणं भवति । तदन्वर्चिरादिमार्गगमनं भवति । अनन्तरमातिवाहिकसत्कारो भवति । तदन्वावरणातिक्रमणं भवति । तदनु प्रकृत्यतिलङ्घनं भवति । अनन्तरं विरजास्नानं भवति । अथ सूक्ष्मशरीरविश्लेषो भवति । तदन्वपहतपाप्मत्वादिगुणगणप्रादुर्भावो भवति । ततोऽमानवकरस्पर्शो भवति । तदनु भगवत्सङ्कल्पकल्पितदिव्यदेहप्राप्तिर्भवति । ततः अकालकाल्यदिव्यदेशप्राप्तिर्भवति । तदन्वैरम्मदीयसरस्स्नानं भवति । तदनु दिव्यालङ्कारो भवति । तदनु दिव्यविमानारोहणं भवति । तदनु तिल्यकान्तारप्रवेशो भवति । अनन्तरं दिव्याप्सरस्सत्कारो भवति । अनन्तरं तिल्यगन्धप्रवेशो भवति । तदनु ब्रह्मगन्धप्रवेशो भवति । तदन्वप्राकृतगोपुरप्राप्तिर्भवति । ततो दिव्यनगरप्राप्तिर्भवति । अनन्तरं सूरिपरिषत्प्रत्युद्गमनं भवति । तदनु राजमार्गगमनं भवति । तदनु ब्रह्मतेजःप्रवेशो भवति। तदनु दिव्यगोपुरप्राप्तिर्भवति । तदनु ब्रह्मवेश्मप्रवेशो भवति । तदनु दिव्यमण्टपप्राप्तिर्भवति । तदनु दिव्यपरिषत्प्राप्तिर्भवति । तदनु सपत्नीकसर्वेश्वरदर्शनं भवति । तदनु स्तुतिप्रणामाञ्जलिप्रमुखसंभ्रमानुवर्तनं भवति । तदनु परमात्मसमीपप्राप्तिर्भवति । तदनु पादपीठपर्यङ्कारोहणं भवति । तदनु भगवदुत्संगसङ्गो भवति । तदन्वालोकनालापाद्यनुभवो भवति। तदन्वालिङ्गनाद्यनुभवो भवति। तदनु स्वरूपरूपगुणविग्रहाद्यनुभवो भवति । तदन्वनुभवजनितप्रीतिप्रकर्षो भवति । तदनु नानाविधविग्रहपरिग्रहो भवति । तदनु सर्वदेशसर्वकालसर्वावस्थोचितसर्वप्रकारकैङ्कर्यप्राप्तिर्भवति" इति ।

अर्चिरादिगत्यामिति-अर्चिरादिशब्देन "²अर्चिर्दिनपूर्वपक्षे"त्याद्युक्ताऽष्टादशदेवता विवक्षिताः। 'गम्यते-अनेनेति-गतिः । अर्चिरादिसम्बन्धिनी गतिः अर्चिरादिगतिः । अर्चिरादिदेवतातिवाह्यो मार्ग इति यावत् । तदादिफलपरम्पराप्रतिपादके प्रबन्ध इत्यर्थः । (तत्रैव ज्ञातव्य) इति - स्वातन्त्र्येण भोग्यतया सदानुसन्धेयत्वेन वैलक्षण्यसूचनार्थं प्रमाणोपपत्तिसम्प्रदायमुखेन विशदप्रतिपत्त्यर्थञ्च

---

१. श्रीवराहचरमश्लोकः ॥ | २. वरदगुरुप्रसादितश्लोकः । 'सत्सङ्गादि'ति ॥

व्या ॥ अयमर्थः-अस्यात्मनः प्राप्यभूतं फलमर्चिरादिमार्गेण परमपदं प्राप्य परिपूर्णं भगवन्तमनुभूय तदनुभवजनितप्रीतिप्रेरणया क्रियमाणाशेषवृत्तिरित्ययमर्थः

सङ्ग्रहविस्तराभ्याञ्च प्रबन्धद्वये अद्वेषोपक्रमत्वमुक्तैश्वर्यान्तत्वलक्षणफलावस्थितिप्रकार उक्तः, तत्रैवानुसन्धेय इति भावः।

ननु तृतीयपदगम्यं फलं भगवन्मुखोल्लासहेतुभूतवृत्तिविशेषात्मकं कैङ्कर्यमित्युक्तम्। न तावत्कैङ्कर्यं फलम्। "[1]परमं साम्यमुपैति" "[2]मम साधर्म्यमागताः" इत्यादिषु साम्यप्रतीतेः। "[3]पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धनः। स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते।" "[4]परेण परधर्मा च भवत्येष समेत्य वै। विशुद्धधर्मा शुद्धेन बुद्धेनैव स बुद्धिमान्। विमुक्तधर्मा मुक्तेन समेत्य भरतर्षभ। वियोगधर्मिणा चैव वियोगात्मा भवत्यपि। विमोक्षिणा विमोक्षी च समेत्येह सदा भवेत्। विकर्मणा शुचिश्चैव भवत्यमितदीप्तिमान्। विमलात्मा च भवति समेत्य विमलेन वै। केवलात्मा च भवति केवलेन समेत्य वै। स्वतन्त्रेण स्वतन्त्रश्च स्वतन्त्रत्वमुपाश्नुते" इत्यादिषु स्वतन्त्रत्वस्य कण्ठोक्तत्वाच्च। कैङ्कर्यञ्च न पुरुषार्थतया दृष्टम्; तदपि 'नमश्शब्देन केवलं परार्थतया प्रतिपाद्यते' इति भवतामभिमतम्; तच्च न पुरुषार्थः; स्वगतसुखभावान्यत्वात्। तदसाधनत्वाच्च । साधनत्वं वा|साध्यमेव परमपुरुषार्थः; तदपि चेत्, स्वगतं न नमश्शब्दे उपपद्यते। परगतश्चेत् उक्तानुपपत्तिः। मुक्तावपि पारतन्त्र्यस्वीकारे स्वतन्त्रेच्छया पुनरावृत्तिरपि कदाचित्स्यात्। "[5]अशरीरं वाव सन्तम्" इत्युक्तरीत्याऽशरीरस्य च कैङ्कर्यासम्भवः; सशरीरजीवस्य प्रियाप्रियसम्बन्धनियमात् तत्प्रसङ्गः। नापि "[6]सोऽश्नुते सर्वान्कामान्" "[7]निरस्तातिशयाह्लादसुखभावैकलक्षणा। भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता" इत्यादिप्रमाणप्रसिद्धो भगवदनुभवः; तस्य चतुर्थीप्रतिपाद्यत्वाभावात्, '[8]ब्रह्मवेद ब्रह्मैव भवति" "[9]यत्र त्वस्य सर्वमात्मैवाभूत्" "[10]तद्भावभावमापन्नस्तदासौ परमात्मना। भवत्यभेदी भेदश्च तस्याऽज्ञाननिबन्धनः" इत्याद्यैक्यबोधकवचनविरोधश्च पक्षद्वयेऽप्यवशिष्टः। अतः किमत्र प्रतिपाद्यं फलमित्यपेक्षायामाह —अस्यात्मनः प्राप्यभूतं फलमित्यादिना। अयम्भावः-परसाम्यश्रुतिः-आनन्दविषयीणीति "[11]भोगमात्रसाम्यलिङ्गाच्चे"ति सूत्रकृतैवोक्तम्। मुक्तस्य जगद्व्यापाराभावेऽपि भोक्तव्यस्य सप्रकारब्रह्मविशिष्टत्वात् आनन्दसाम्योपपत्तिः। इदमेव सायुज्यशब्देनोच्यते। 'सयुजो भावः सायुज्यमि'ति व्युत्पत्तेः। 'सामरस्यं हि सायुज्यं वदन्ति ब्रह्मवादिनः" इति शाकटायनोक्तेश्च। न त्वैक्यम्, साम्यश्रुतिविरोधात्। 'ब्रह्मैव भवती'त्येवशब्दस्येवार्थः। "[12]विष्णुरेव भूत्वे"त्यादिवत्। भवतिर्वा '[13]परात्परम् पुरुषमुपैति" "[14]ब्रह्मविदाप्नोति परम्" इत्यादिनैकार्थ्याय प्राप्त्यर्थकः। '[15]भू-प्राप्तौ' इति हि पठ्यते। व्यत्ययेन परस्मै पदम्। '[16]ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतेरपि स्वयमप्या-

---

१. मुण्डकोप. ३-१-३ ॥
२. गीता. १४-२ ॥
३.
४. भारते. शान्ति. मोक्ष. ३१३-२६,३० ॥
५. छान्दोग्योप. ८ १२-१॥
६. तैत्तिरीयोप. आनन्द. १-१ ॥
७. विष्णुपु. ५-५-५९ ॥
८. मुण्डकोप. ३-२-९ ॥
९. बृहदारण्योप. ४-४-१४ ॥
१०. विष्णुपुराणे. ५-७-९५ ॥
११. ब्रह्मसूत्रम्. ४-४-२१ ॥
१२. यजुषि. १. काण्ड. ७-२४ ॥
१३. मुण्डकोप. ३-२-८ ॥
१४. तै. उप. आनन्द. १-१ ॥
१५. चुरादिः ॥
१६.

सङ्ग्रहेण प्रमेयशेखरे विस्तरेणार्चिरादिगत्यां चोक्तस्तत्रैव ज्ञातव्य इति ॥ २७ ॥

---

विर्भूतस्वरूपस्सन् परं ब्रह्म प्राप्नोतीत्यर्थः । 'परमात्मना । भवत्यभेदी'ति देवादिभेदविरहपरमिति 'देवादिभेदेऽपध्वस्ते'[1] इति तत्रत्यवचनादेवावगम्यते। 'यत्र त्वस्ये'त्यादिकञ्च 'अन्यश्च राजन् स परस्तथान्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः'[2] इत्युपबृंहितम् । "अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः । 'ते नैतन्नाभिजानन्ति पञ्चविंशकमच्युतमि"[3] त्यैक्यज्ञानस्य भ्रमत्वम्, "जन्ममृत्युभयाद्भीतास्साङ्ख्ययोगाश्च काश्यप । षङ्विंशमनुपश्यन्ति शुचयस्तत्परायणाः"[4] इति भेदज्ञानस्य मोक्षहेतुता च कण्ठोक्ता । "पृथगात्मानं प्रेरितारञ्च मत्वा"[5] "जुष्टं यदा पश्यत्यन्यमीशम्"[6] इत्यादि श्रुतयश्च, "यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विजः । तदा स केवलीभूतष्षड्विंशमनुपश्यति"[7] इति वचनोपबृंहिताः परश्शतं द्रष्टव्याः । "स्वराट्-अकर्मवश्यः"[8] इति भाष्य एव व्याख्यातम् । स्वातन्त्र्यमप्यकर्मवश्यत्वमेव । "स्वतन्त्रत्वमुपाश्नुत" इत्यत्र स्वातन्त्र्यं सजातीयपारतन्त्र्याभावः । "आत्मदास्यं हरेस्स्वाम्यं स्वभावञ्च सदा स्मर"[9] "दासभूताः स्वतस्सर्वे ह्यात्मानः परमात्मनः । नान्यथा लक्षणन्तेषां बन्धे मोक्षे तथैव च"[10] "सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः। किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः"[11] "आगच्छ वत्स भद्रन्ते पुण्डरीक महामते । मद्रूपधारी नित्यात्मा मम पारिषदाश्रय"[12] "[13]येन येन धाता गच्छति तेन तेन सह गच्छति" 'अनुसञ्चरन्'[14] इत्यादिभिर्मुक्तावपि किङ्करत्वावगमात्, मुक्तशरीरस्याऽकर्मकृतत्वात्, न प्रियाप्रिययोगप्रसङ्गः । आत्माभिमानानुगुणत्वात् पुरुषार्थव्यवस्थायाः कैङ्कर्यस्य पुरुषार्थत्वं सम्भवत्येव । भगवताऽचेतनवत् चेतनस्यापि स्वार्थमेवोपात्तत्वात् 'मदुपादानप्रयोजनं मत्कैङ्कर्याधीनभगवन्मुखोल्लाससिद्ध्येत्' इतीच्छा सम्भवात् परार्थकैङ्कर्यस्य पुरुषार्थत्वोपपत्तिः । स्वस्याप्यस्त्येव चानन्दः तन्मुखोल्लासकारणम् । साधनत्वेन तूद्देश्यो नासौ फलतया स्वतः । "कदा-प्रहर्षयिष्यामी"[15] त्युक्तौ हर्षफलं स्वतः । साक्षात्कारादिकं पूर्वं साधनत्वेन कीर्तितम् । न चात्यर्थप्रियं लब्ध्वा स्वाम्यावर्तयितुं क्षमः । न शङ्क्या पुनरावृत्तिः पारतन्त्र्येऽपि तत्त्वतः । "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमाङ्गताः ।"[16] इति स्वेच्छाकृताप्यस्य नावृत्तिरिति दर्शितम् । 'शब्दादनावृत्तिरि'[17]ति सूत्रकारोऽप्यसूत्रयत् । श्रुतिस्तद्विषयीभूता भाष्यकारैरुदाहृता—इति ॥ २७ ॥

---

१. विष्णुपु. २-१४-३३ ॥
२. भारते. शा. मो. ३२३-७८ ॥
३. भारते. शा. मो. ३२३-७९ ॥
४. भारते. शा. मो. ३२३-८० ॥
५. श्वे. उप. १-६ ॥
६. श्वे. उप. ४-७ ॥
७. भारते. शा. मो. ३२३-७७ ॥
८. श्रीभाष्ये. १-३-७ ॥
९. पाञ्चरात्रे ॥
१०. पाञ्चरात्रे ॥
११. श्रीविष्णुतत्त्वे ॥
१२. इतिहाससमुच्चये. ३२-१६५ ॥
१३.
१४. तै. उप. भृगुवल्ल्याम . १०-५ ॥
१५. स्तोत्ररत्ने. ४६ ॥
१६. गीता. ८-१५ ॥
१७. ब्रह्मसूत्रम् . ४-४-२२ ॥

(२८) अथास्य प्रतिपदमर्थं विवक्षुः प्रथममक्षरपदसङ्ख्यामाह—अयं चेति ॥

मू ॥ इदुतान् एट्टुतिरुत्तक्षरमाय् मून्रुपदमायिरुक्कुम् ॥ २८ ॥

छा ॥ अयं चाष्टाक्षरस्त्रिपदः ॥ २८ ॥

---

इत्थं वाक्ययोजनामुखेन मूलमन्त्रो व्याख्यातः । अथ 'पदच्छेदः पदार्थोक्तिः' इत्यादिव्याख्यानलक्षणश्लोके पदच्छेदशब्दो 'व्याख्येयस्वरूपोपलक्षणार्थः' इत्यभिप्रेत्याक्षरपदसङ्ख्याप्रदर्शनमुखेन मूलमन्त्रो व्याख्यायत इत्यभिप्रेत्यावतारयति—अथास्येति । यद्येवं वाक्यार्थः ; तर्हि, अष्टाक्षरत्वं पदत्रयत्वञ्च मूलमन्त्रस्य न स्यादित्युत्थितेरवान्तरसङ्गतिः । पूर्वं मूलमन्त्रवाक्यार्थानुपपत्तिर्निरस्ता, इदानीं मूलमन्त्रस्वरूपानुपपत्तिर्निरस्यत इति वा सङ्गतिः ।

ननु मूलमन्त्रस्याष्टाक्षरत्वं तावदयुक्तम् । पूर्वोक्तरीत्या वाक्ययोजनाङ्गीकारे "नम इति द्वे अक्षरे नारायणायेति पञ्चाक्षराणि" इति श्रुत्युक्तसप्ताक्षरत्वसम्भवेऽपि प्रणवस्य "ओमित्येकाक्षरम्" इत्युक्तैकाक्षरत्वासम्भवात् । प्रणवस्य वर्णत्रयात्मकत्वं विनोक्तवाक्ययोजनाया असम्भवात् । न च एकाद्व्यादिहल्संयुक्तस्य तद्वियुक्तस्य वा अजन्तरवियुक्तस्यैकस्याच एव एकाक्षरपदार्थतया प्रणवस्यैकाक्षरत्वं सम्भवतीति वाच्यम् : तथा सति प्रथमं प्रणवरूपैकाक्षरस्यानन्तरं नकारमकाररूपाक्षरद्वयस्य ततः क्रमिकपञ्चाक्षराणामुपदेशपूर्वकमष्टाक्षरोद्धारस्याऽमूलकत्वापत्तेः । 'ओं नेति द्वे अक्षरे म इत्येकाक्षरम्' इत्यादिरूपेण 'ओं नम इति त्रीण्यक्षराणि' इत्यादिरूपेण वा, "नमो नारायेति पञ्चाक्षराणि णायेति द्वे अक्षरे' इति वा, अन्यथा वा मन्त्रोद्धारसम्भवात्। ऐच्छिकत्वस्यागतिकगतित्वाच्च। 'ओमित्यग्रे व्याहरेत्' इत्यादिक्रमविधायकपूर्ववाक्यत्रयेणैव मन्त्रस्वरूपोद्धारस्य प्रचयशिष्टमन्त्राक्षरसङ्ख्यायाश्च सिद्ध्या 'ओमित्येकाक्षरमि'त्यादिवाक्यत्रयवैयर्थ्याच्च । 'एकाक्षरं प्रथमपदम् , द्व्यक्षरं द्वितीयं पदम् , पञ्चाक्षरं तृतीयं पदम्' इति द्योतनाय यथा श्रुतिनिर्देश इति प्रयोजनस्य सम्भवतस्त्यागायोगाच्च । एवं प्रणवस्याक्षरत्रयात्मकस्य पदत्रयरूपस्य 'अस्मि' इत्यध्याहृतक्रियापदसहितस्याऽनन्यार्हशेषत्वपरतया एकवाक्यत्वं, नमश्शब्दस्याक्षरद्वयात्मकस्य पदद्वयरूपस्यानुषक्ततृतीयाक्षरक्रियापदविशिष्टस्यानन्यशरणत्वपरत्वेनैकवाक्यत्वं, तृतीयपदस्यानुषक्ततृतीयाक्षरविशिष्टस्य 'स्याम्' इत्यध्याहृतक्रियापदविशिष्टस्य'मः न स्याम्'इत्यनुषक्तवाक्यान्तरविशिष्टस्याऽनन्यभोग्यत्वविशिष्टभगवद्भोगार्थप्रवृत्तिप्रार्थनाप्रतिपादनमुखेनाऽनन्यभोग्यत्वपरतया एकवाक्यत्वमिति स्वीकर्तव्यतया अष्टाक्षरत्वे निरुक्तवाक्ययोजनाभङ्गप्रसङ्गो दुर्वार इति मूलमन्त्रस्याऽष्टाक्षरत्वमयुक्तम् । ननु 'ओमित्यग्रे व्याहरेत्' इत्यादिवाक्यबलादेव निरुक्तपदत्रयसिद्ध्या 'ओमित्येकाक्षरम्' इत्यादिनिर्देशवैफल्यतादवस्थ्यम् । अन्यथा 'ओमित्यग्रे व्याहरेत् म इति पश्चात्' इत्यादिरूपेण वा,'ओं नम इत्यग्रे व्याहरेत्' इत्यादिरूपेण वा अन्यथा वा निर्देशसम्भवात्। तस्य वाक्यत्रयपरत्वे एकाक्षरत्वोक्त्या व्याघाताच्च । अत ऐच्छिकत्वमेवगतिरिति चेन्मैवं । 'ओमित्यग्रे व्याहरेत्' इत्यादिवाक्यत्रयं निरुक्तवाक्यत्रयद्योतकम्। 'ओमित्येकाक्षरमि'त्यादिवाक्यत्रयम् 'ओमि'ति ब्रह्मवाचकम् , अव्ययरूपं पदम् ; 'नम' इति नमनक्रियावाचकमव्ययरूपं पदम् ; 'नारायणाये'ति नमश्शब्दयोगात् "उपपदविभक्त्यन्तं पदम्" इत्येवं पदत्रयद्योतकम् । न च विनिगमनाविरहः; 'ओमित्येकाक्षरमि'ति निर्देशस्य विनिगमकत्वात् । प्रणवस्याऽक्षरत्रयात्मकतया पृथग्वाक्यत्वे तदनुपपत्तेः । अतो वाक्यत्रयाङ्गीकारेण मूलमन्त्रस्वरूपमष्टाक्षरमित्ययुक्तम् । इत्थं निरुक्तवाक्ययोजनाङ्गीकारेण मूल-

**ङ्या ॥ अयं मन्त्रः *"ओमित्येकाक्षरं नम इति द्वे अक्षरे नारायणायेति पञ्चाक्षराणि इत्यष्टाक्षरं छन्दसा गायत्री चेति" *"ओमित्यग्रे व्याहरेत् नम इति पश्चान्नाराय**

---

मन्त्रस्वरूपं पदत्रयात्मकमित्यपि न युक्तम् । पदशब्दस्य तार्किकरीत्या शक्तिपरत्वे, शाब्दिकरीत्या विभक्त्यन्तपरत्वे वा निरुक्तवाक्यत्रयाभ्युपगमे पदत्रयासम्भवात् । तार्किकरीत्या अकारमकारयोः प्रकृतिप्रत्ययात्मकत्वे वर्णत्रयात्मकस्य प्रणवस्य पदपञ्चकरूपत्वात्, 'लुप्यमानार्थाभिधायी शिष्यमाणश्शब्दः' इति विभक्त्यनध्याहारपक्षे पदत्रयरूपत्वात्, 'नमः' इत्यस्यापि पदत्रयरूपत्वात्, मकारानुषङ्गपक्षे पदचतुष्टयरूपत्वात्, 'क्रियापदं विना वाक्यमबोधकम्' इति पक्षे प्रणवस्य पदचतुष्टयरूपत्वात्, नमश्शब्दस्य पदपञ्चकरूपत्वात्, व्यक्तचतुर्थ्यन्तस्य 'स्यामि'त्यध्याहृतक्रियापदसहितस्य मकारानुषङ्गविशिष्टस्य 'म् मः न स्याम्' इति वाक्यान्तरसहितस्य नारपदायनपदघटितस्य च चतुर्दशपदात्मकत्वाच्च । शाब्दिकरीत्या प्रणवस्य पदचतुष्टयात्मकवाक्यरूपत्वात्, मध्यमपदस्यापि तथात्वात्, तृतीयपदस्यापि सप्तपदघटितवाक्यरूपत्वाच्च । तस्मान्मूलमन्त्रस्य पूर्वोक्तयोजनाद्वयेऽपि अष्टाक्षरत्वं पदत्रयत्वं चानुपपन्नमिति चेत्तत्राह—**अयम्मन्त्रः ओमित्येकाक्षरमिति** ।

अयमत्राभिप्रायः—मूलमन्त्रस्याष्टाक्षरत्वमुपपद्यत एव । पूर्वोक्तरीत्या वाक्ययोजनाङ्गीकारेऽपि 'ओमित्येकाक्षरम्' इत्युक्तैकाक्षरत्वसम्भवात् । प्रणवस्याऽकारोकारयोस्सन्ध्यविवक्षया अकारोकारयोर्गुणे कृते व्यञ्जनस्याऽभेदकतया एकाक्षरत्वस्याप्युपपत्तेः ।

न च एकाद्विपञ्चाक्षरमुखेन मन्त्रोद्धारस्याऽमूलकत्वापत्त्या तस्य पदत्रयसूचकतया, सम्भवतः प्रयोजनस्याऽन्याय्यतया च 'ओमित्यग्रे व्याहरेत्' इत्यादिकमक्षरत्रयात्मकप्रणवविशिष्टवेषणाष्टाक्षरस्य निरुक्तवाक्यत्रयात्मकत्वपरम्; 'ओमित्येकाक्षरम्' इत्यादिकन्तु ब्रह्मवाचकाव्ययैकाक्षरप्रणवविशिष्टतया तस्य पदत्रयत्वपरमित्येवावश्यवक्तव्यतया तस्य वाक्यत्रयत्वपरत्वाङ्गीकारे 'ओमित्येकाक्षरम्' इत्युक्तमेकाक्षरत्वं सम्भवतीति वाच्यम्;—'ओमित्येकाक्षरमि'ति वाक्येन ब्रह्मरूपैकार्थशक्तप्रणवविवक्षायां मानाभावात् । त्र्यात्मन एवाऽस्यैकाक्षरत्वस्योपपादितत्वात् । एतेन 'ओमित्यग्रे व्याहरेदि'त्यादिवाक्येन गतार्थतया 'ओमित्येकाक्षरमि'त्यादिवाक्यवैयर्थ्यापत्त्या न पदत्रयपरत्वसिद्धिरिति प्रत्युक्तम् । 'ओमित्येकाक्षरमि'त्यादेर्मूलमन्त्रवाक्यत्रयपरत्वेऽपि त्र्यात्मकस्यैव प्रणवस्य एकाक्षरत्वोपपत्तेः । अतो निरुक्तवाक्ययोजनापरत्वेऽपि मूलमन्त्रस्वरूपस्याऽष्टाक्षरत्वं युक्तम् ।

किं च 'ओमित्यग्रे व्याहरेत्' इत्यादि वाक्यत्रयनिर्देशशैलीमहिम्नैव प्रचयशिष्टमूलमन्त्राक्षरसंख्यावत्. तत्पदत्रयस्यापि सिद्ध्या गतार्थत्वमपरिहार्यम् । 'ओमित्यग्रे व्याहरेत्' इत्यादिवाक्यत्रयस्य मूलमन्त्रवाक्यत्रयत्वपरत्वमेकाक्षरत्वोक्त्या व्याहतञ्च ।

न च 'ओमित्यग्रे व्याहरेत्' इत्यादिवाक्यत्रयमेव मूलमन्त्रवाक्यत्रयत्वपरम् । 'ओमित्येकाक्षरमि'त्यादिवाक्यत्रयन्तु मूलमन्त्रपदत्रयत्वपरम् । एतद्व्यवस्थापकञ्च 'ओमित्येकाक्षरमि'ति वाक्यमिति न व्याघातोऽपीति वाच्यम्; पदत्रयत्वस्यापि प्राथमिकवाक्यत्रयनिर्देशशैलीमहिम्नैव सिद्धिसम्भवेन वाक्यत्रयान्तरवैफल्यतादवस्थ्यात्: स्थितगतिचिन्ताश्रयणे प्रचयशिष्टाक्षरसङ्ख्यानाश्रयणेनाऽक्षरसङ्ख्याकण्ठोक्तिदार्ढ्यायेति वक्तुं शक्यत्वात्; प्रणवस्य सर्ववेदसङ्ग्रहत्वप्रसिद्ध्यनुसारेण वेदाद्यन्तानुसन्धानानुसारेण अकारस्य प्रणवप्रकृतित्वश्रुत्यनुसारेण 'प्रत्यगानन्दामि'त्यादिखण्डे 'तानेकधा समभरत्-

---

* नारायणोपनिषदि. ३ ॥

णायेत्युपरिष्टात्'' इति चोक्तप्रकारेण अष्टाक्षरात्मकः पदत्रयात्मकश्चेत्यर्थः ।

---

देतदोमि'ति वचनानुसारेण च ब्रह्मरूपैकार्थशक्ताऽव्ययरूपैकपदात्मकत्वपरत्वेनैकार्थशक्तैकपदतया प्रणवस्याऽनेकाक्षरत्वोक्तिव्याघात इत्यस्याऽसम्भवाच्च । एकार्थशक्तैकपदतया एकाक्षरत्वाभ्युपगमे योजनाद्वयतात्पर्यकल्पनागौरवप्रसङ्गाच्च । 'ओं नारायणाय नमः' इति मन्त्रविन्यासापत्त्या व्यक्तचतुर्थीवैयर्थ्यापत्त्या च मूलमन्त्रस्य पदत्रयात्मकत्वानुपपत्तेश्च । 'ओमित्येकाक्षरमि'त्यादिवाक्यत्रयस्य मूलमन्त्रवाक्यत्रयपरत्वेऽपि 'तानेकधाऽसमभरदि'त्युक्त्या सन्धिमादाय एकाक्षरत्वोक्तिरुपपादितत्वाच्च । अतो वाक्यत्रयाङ्गीकारेणैव मूलमन्त्रस्याष्टाक्षरत्वसिद्धिरिति सिद्धम् ।

अपि च 'ओमित्येकाक्षरमि'त्यादिवाक्यत्रयस्य मूलमन्त्रपदत्रयत्वपरत्व एव एकाक्षरत्वोक्त्युपपत्तिरित्ययुक्तम् । मूलमन्त्रस्य सर्ववेदसङ्ग्रहत्वाष्टाक्षरत्वयोरेकत्रैकदा बहुप्रमाणप्रतिपाद्यत्वविरोधात्, अष्टाक्षरत्वस्य विशेषणत्वे सम्भवत्युपलक्षणत्वस्याऽन्याय्यत्वात्, सर्ववेदसङ्ग्रहत्वस्यार्थपञ्चकप्रतिपादकतयैव वक्तव्यत्वात् । तस्याश्च प्रणवस्याक्षरत्रयात्मकत्वं विनाऽनुपपत्तेः । अतस्सन्ध्यक्षरमादाय त्र्यात्मकस्य मूलमन्त्रस्थस्य प्रणवस्य एकाक्षरत्वमुररीकार्यम् । न त्वेकार्थशक्तैकपदरूपत्वेनैकाक्षरत्वम् ।

यदपि निरुक्तवाक्ययोजनाङ्गीकारे मूलमन्त्रस्वरूपं पदत्रयात्मकमिति तार्किकरीत्या शाब्दिकरीत्या वा वक्तुमयुक्तमिति, तदपि मन्दम् । प्रणवस्य ब्रह्मरूपैकार्थशक्ततयाऽव्ययरूपतया च द्वेधा पदत्वेऽपि मूलमन्त्रस्थप्रणवस्य मन्त्रोद्धारशास्त्रे ''संहितायामि'त्यधिकारसूत्रानुसारेण सन्धिविवक्षया एकाक्षरत्वस्य तदविवक्षया त्र्यक्षरत्वस्य च प्रमितत्वेन मूलमन्त्रस्य तार्किकरीत्या शाब्दिकरीत्या वा पदत्रयात्मकत्वे मानाभावात् । न च 'ओमित्यग्रे व्याहरेत्' इत्यादिवाक्यत्रयनिर्देशशैलीमहिम्नैव विभक्त्यन्तत्रयात्मकत्वमवगम्यत इति वाच्यम् । वाक्यत्रयात्मकत्वसूचकतयाऽपि तादृशनिर्देशोपपत्तेः । न च 'ओमित्येकाक्षरमित्या'दिवाक्यत्रयमेव तत्सूचकमिति वाच्यम् । विनिगमनाविरहेण क्रमविधायकस्य अक्षरसङ्ख्याविधायकस्य च वाक्यत्रिकद्वयस्य निरुक्तवाक्ययोजनादार्ढ्यार्थं वाक्यत्रयत्वसूचकत्वोपपत्तेः । 'ओमित्येकाक्षरमि'त्युक्तेर्वाक्यत्रयत्वपरत्वेऽप्युपपत्तेरुक्तत्वात् । न च विनिगमनाविरहेण पदत्रयसूचकत्वं किं न स्यादिति वाच्यम् । 'प्रत्यगानन्दम्' इत्यादिमूलमन्त्रान्तर्गतप्रणवोद्धारवाक्यविरोधात् । प्रणवस्य सर्ववेदसङ्ग्रहत्ववेदाद्यन्तानुसन्धानाकारप्रकृतिकत्वविरोधात्, 'ओं नारायणाये'ति मन्त्रविन्यासापत्तेः, व्यक्तचतुर्थीवैयर्थ्यापत्तेश्च ।

न चैवं पूर्वाचार्याणां मूलमन्त्रे पदत्रयात्मकत्वव्यवहारविरोधः । 'पद्यते-गम्यते-अनेने'ति व्युत्पत्त्याऽर्थत्रयगमकत्वरूपेण वाक्यत्रयस्यैव पदत्रयशब्दविवक्षिततत्वात् । ''एतद्वै नारायणस्याऽष्टाक्षरं पदं यो ह वै नारायणस्याष्टाक्षरं पदमध्येति'' इति प्राकरणिकपदशब्दस्य एकमहावाक्यार्थगमकत्वरूपेण महावाक्यपरत्वद्योतनाय 'ओमित्यग्रे व्याहरेत्' इत्यादिद्विविधवाक्यत्रयनिर्देशप्रयोजनभूतवाक्यत्रयत्वं वक्तुं वाक्यशब्दस्थाने पदशब्दप्रयोगोपपत्तेश्च। अतो वाक्यत्रयाङ्गीकारेणैव मूलमन्त्रस्य अष्टाक्षरत्वं पदत्रयत्वञ्च सिद्धमिति ।

केचित्-मूलमन्त्रबीजभूतेन मध्यमाक्षररहितेन प्रणवेन विशिष्टस्य मूलमन्त्रस्य पूर्णप्रणवरहितस्याऽष्टाक्षरत्वं वा, समस्ते नारायणशब्दे नारपदं पृथक्कृत्य प्रणववियुक्तस्याष्टाक्षरत्वं वोपपद्यते । तत्रापि,

---

१. पाणिनीये. ६-३-११४ ॥    |    २. नारायणोपनिषदि. ३ ॥

**अस्याष्टाक्षरत्वनिरूपणसमये 'ओमित्येकाक्षरमि'ति प्रणवस्यैकाक्षरत्वेन 'नम इति द्वेऽक्षरे' इति नमसो द्व्यक्षरत्वेन 'नारायणायेति पञ्चाक्षराणी'ति नारायणपदस्य पञ्चाक्षरत्वेन च श्रुत्या प्रतिपादनात् समस्तनारायणपदे नारपदविभागेन षडक्षरत्वं सम्पाद्य प्रणवेन विनाष्टाक्षरत्वं वदतां पक्षोऽवैदिकत्वेनानादरणीयः ॥ २८ ॥**

उकारार्थस्य नमश्शब्देन, अकारार्थस्य 'नारायणाय स्वामि'तिवत्, 'नारायणायाऽसि' इत्यावृत्त्या, मकारार्थस्योत्तमपुरुषेणाक्षेपात्, नारपदे नरशब्दाच्च सिद्धेः। इदञ्च कल्पद्वयं "तत्रोत्तरायणस्यादि बिन्दुमान् विष्णुरन्ततः। बीजमष्टाक्षरस्य स्यात् तेनाऽष्टाक्षरता स्मृता" इति वचनेन सिद्धम्। तत्र 'तेने'त्यनेन बीजत्वाकारविशिष्टपरामर्शे मध्यमाक्षररहितप्रणवविशिष्टवेषेण मूलमन्त्रस्याष्टाक्षरत्वसिद्धिः। आदित्वाकारविशिष्टपरामर्शो सन्ध्यविवक्षया पृथक्कृतेनाऽयनपदेन तत्सिद्धिरिति पूर्णप्रणवरहितस्याप्यष्टाक्षरत्वं वर्णयन्ति; तदयुक्तमित्याह—**अस्याष्टाक्षरत्वनिरूपणसमय** इति। अयम्भावः—मन्त्रोद्धारप्रकरणे प्रणवसहितस्यैव मन्त्रस्याष्टाक्षरत्वेन 'ओमित्यग्रे व्याहरेत्' इत्यादिखण्डे 'प्रत्यगानन्दमि'त्यादिखण्डे च प्रणवस्वरूपनिर्देशमुखेन वर्णत्रयसमुदायरूपत्वोक्तिमुखेन च श्रुतिसिद्धतया बीजाक्षरविशिष्टस्य पृथक्कृताऽयनपदविशिष्टस्य वा मन्त्रस्याऽष्टाक्षरत्वप्रतिपादकस्मृतेरप्रमाणत्वात्। यद्यपि विरोधाधिकरणे विरुद्धप्रत्यक्षश्रुतिद्वयवत् विरुद्धश्रुतेरपि स्मृत्यनुमेयत्वं सम्भवतीत्युक्तम्; तथापि वार्तिकेऽपि अननुष्ठापकत्वलक्षणं विरुद्धस्मृतेरप्रामाण्यं प्रपञ्चितमिति वैदिकाष्टाक्षरत्वविरुद्धं स्मार्ताऽष्टाक्षरत्वमनादरणीयमेवेति।

अत्र केचित्-न प्रणवविशिष्टमूलमन्त्रः सर्वाधिकारः,'न शूद्रो वेदमधीयीते'ति सामान्यनिषेधविरोधात्, "न स्वरः प्रणवोऽङ्गानि" इत्यादिविशेषनिषेधविरोधात्, अपशूद्राधिकरणन्यायविरोधात्, "तान्त्रिकं वैश्यशूद्राणामि"ति व्यवस्थाविरोधात्, पूर्वाचारविरोधात्, प्रमाणाभावाच्चेति वदन्ति।

तदपि अत्रत्यश्रीसूक्त्या निरस्तप्रायं ध्येयम्। कथमिति चेत्, उच्यते,-सावधानेन शृणु!

यदुक्तं 'सामान्यनिषेधविरोधात्' इति, तन्न; अप्रसक्तप्रतिषेधायोगात्। न हि "न कलञ्जं भक्षयेत्" "न परदारां गच्छेत्" इत्यादिवत् शूद्रेष्वध्ययनस्य प्रसक्तिः। स्वतो दुःखरूपत्वात्। न च तत्त्वज्ञानार्थं रागतः प्रसक्तिरस्तीति वाच्यम्; रागतो ग्रहणस्याऽध्ययनशब्दार्थत्वाभावात्। 'अदृष्टार्थस्वाध्यायसंस्कारोऽध्ययनमि'ति हि सिद्धान्तः। यदि ग्रहणमात्रमध्ययनं स्यात्, तर्ह्यध्ययनोत्सर्गानन्तरमनध्ययनकाले च कर्माङ्गोच्चारणमपि न स्यात्। तदानीमध्ययननिषेधात्। न चाऽन्योच्चारणस्यैवाऽध्ययनशब्दार्थत्वात् न दोष इति वाच्यम्; तस्यापि पुरोहितोच्चारणानुच्चारणरूपत्वेन तद्दोषतादवस्थ्यात्। अनुगृहीतञ्च भाष्यकारैः "अध्ययनञ्च स्वाध्यायसंस्कारः" इति।

किञ्च तत्त्वज्ञानरूपदृष्टार्थग्रहणस्यैवाध्ययनशब्दार्थत्वे तदङ्गतया देशकालादिनियमविधयोऽपि नोपपद्यन्ते। तद्देशकालादिकमन्तरापि केवलवेदवाक्यग्रहणतज्जन्यशाब्दबोधयोः निष्पत्तिसम्भवेन तेषामङ्गत्वानुपपत्तेः। न हि प्रधानानुपकारकस्याङ्गत्वसम्भवः। तस्माददृष्टार्थव्यापार एवाऽध्ययनशब्दार्थः। स च शूद्राणामप्रसक्त एव।

१. नारदीयकल्पे, अष्टा. १-५४ ॥
२. नारदी. अष्टा. १-१०२ ॥
३. ब्रह्मरात्रे, समयाध्याये. ४॥
४.
५.
६. श्रीभाष्ये. १-१-१ ॥

नापि "स्वाध्यायोऽध्येतव्यः" इति सामान्यविधिबलात् तत्प्रसक्तिः। "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इति वेदविदाचार्योपनीताधिकारिलाभेनैव तस्य निराकाङ्क्षत्वात्। न च शूद्राणामुपनयनमस्ति, येन तस्य तत्प्रसक्तिः सम्भाव्येत। शूद्राणामुपनयनाभावः "संस्कारपरामर्शात् तदभावाभिलापाच्च" "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हती"त्युच्यते। एतेन 'अनधीयाना व्रात्या भवन्ति' इत्यतस्तत्प्रसक्तिसम्भवशङ्कापि दूरोत्सारिता। अध्ययनाकरणे प्रत्यवायश्रुतेः जन्मसिद्धऋणत्रयवत्तारूपपातकनिबन्धनत्वेन। 'न शूद्रे पातकं किञ्चित्' इति शूद्राणां तन्निषेधेनैव तस्याऽप्यप्रसक्तेः। न शूद्रो नाधीयीते'ति वाक्यं शूद्राणा न्यायसिद्धस्वाध्ययननिषेधकम्। अथास्तु वा तन्निषेधकं; तथापि न विरोधः। यथा "शूद्रो बहुपशुरयज्ञीयः" इति शूद्राणां यज्ञनिषेधेऽपि यजिधात्वर्थदेवपूजाया अविरोधः। तद्वदेवानेकाङ्गकलापविशिष्टाध्ययननिषेधेऽपि वेदग्रहणमात्रस्याविरोधात्। 'यजेते'त्यनेन विशिष्टदेवताराधनवत् 'अधीयीते'त्यनेनापि विशिष्टग्रहणस्यैव प्रतीतेः।

किञ्चाऽध्ययनविधेर्नियमविधिरूपतया तन्निषेधस्यापि नियमनिषेधात्मकत्वेन पक्षप्राप्तस्याध्ययनस्य निषेधाभावाच्च। विधिवाक्यात् यद्धर्मावच्छिन्नस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताबोधः आनुभाविकः। नञ्समभिव्याहृतनिषेधवाक्यात् तद्धर्मावच्छिन्नस्यैव बलवदनिष्टानुबन्धित्वबोधः आनुभाविकः। तथा च 'अधीयीते'त्यनेन नियमविशिष्टाध्ययनस्यैव बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनता बोधात्, 'नाधीयीते'त्यनेनापि नियमविशिष्टाध्ययनस्यैव बलवदनिष्टानुबन्धित्वं बोध्यते। विधिवाक्यात् ब्राह्मणेषु प्रसक्तस्यैवाध्ययननियमस्य शूद्रेषु निषेधात्। तस्मात् 'शूद्रो नाधीयीते'ति वाक्यस्य सर्वदापि अदृष्टार्थव्यापाररूपाध्ययनाभावमात्रपरत्वात् न तेन शूद्राणां दृष्टार्थाक्षराधिकारविरोधः। प्रणवविशिष्टाष्टाक्षरस्य दृष्टार्थत्वं नाम—निरवशेषनिष्कलङ्कमोक्षार्थतत्त्वशाब्दबुद्धिं प्रति दृष्टविधयैव हेतुत्वम्। तत्राऽधिकारो नाम-अर्थित्वविशिष्टं सामर्थ्यम्। अर्थित्वञ्च-सर्वेषाम्मुमुक्षूणामविशिष्टं; सामर्थ्यञ्च-अबधिराणां प्रेक्षावतामपि प्रतिपन्नमेव। न च शूद्रमुमुक्षूणां श्रवणमष्टाक्षरं न गृह्णतीति वक्तुं शक्यम्। नापि ततश्शाब्दबुद्धिर्जायत इति। तस्मात् दुर्वारस्तेषामधिकारः।

नन्वेवमष्टाक्षरस्य दृष्टार्थत्वेऽपि तन्नियमस्याऽदृष्टार्थत्वमवर्जनीयम्; तथा च नियमेन तद्ग्रहणस्यादृष्टार्थग्रहणरूपत्वात्, तस्याऽप्यध्ययनशब्दार्थत्वात्, तत्र तेषां कथमधिकारसम्भव इति चेन्न; मूलमन्त्रस्यैव सर्ववेदमूलत्वेन प्रबलप्रमाणत्वात्, तस्यैवार्थपूर्तेश्च तद्व्यतिरिक्तस्य तथात्वाभावेन तन्नियमस्यापि दृष्टैकप्रयोजनकत्वात्। प्रत्युत सर्वाधिकारत्वेन भवत्परिगृहीतस्मार्ताष्टाक्षरादीनामेवाऽयं दोषो दुरुद्धरः। तद्ग्रहणस्य तन्नियमस्य च अस्मदुक्तरीत्याऽदृष्टार्थत्वासम्भवात्, अनभ्युपगमाच्च। अदृष्टार्थत्वेन अध्ययनशब्दार्थतया निषिद्धत्वात्। न चादृष्टार्थवेदाक्षरग्रहणस्यैवाऽध्ययनशब्दार्थत्वान्न दोष इति वाच्यम्; अङ्गाध्ययने अव्याप्तेः। तस्माद्भवन्मते स्त्रीशूद्रादिकर्तृकतान्त्रिकाष्टाक्षरादिग्रहणस्याऽदृष्टार्थजपाद्यर्थत्वात्, मुक्त्युपायभूतन्यासविद्याप्रयोगकरणमन्त्राध्ययनरूपत्वाच्च। तत् 'शूद्रो नाधीयीते'ति वाक्यविरुद्धमेव।

किञ्चास्मन्मते वैष्णवानां दुर्जात्यपगमाभ्युपगमेन नैतद्वाक्यविरोधप्रसङ्गशङ्कापि। त्वन्मते तु शूद्रत्वादीनां मरणाभिस्थायित्वाभ्युपगमेन तद्वाक्यविरोधो दुष्परिहर एव। तस्मात्तवैवायं

---

१. यजुरारण्यके. २-१५॥
२.
३. ब्रह्मसूत्रम्. १-३-३६॥
४. मनुस्मृतौ. १०-१२६॥
५.

निषेधो विरोधीति नास्मदभिमतवैदिकाष्टाक्षरदृष्टार्थग्रहणसर्वाधिकारत्वस्याऽनेन वाक्येन सह विरोध इति सर्वमवदातम् ।

अथ यदुक्तं "न स्वरः प्रणवोऽङ्गानी"ति विशेषनिषेधविरोधात् इति, तदप्यनुपपन्नम् । विकल्पासहत्वात् । किन्तावत् शूद्रादीनां स्वराद्यनुसन्धानमात्रं निषिद्ध्यते-उत शूद्रादीन् प्रति ब्राह्मणैस्तदुपदेशो वा । न तावदाद्यः-अनधीतवेदानां शूद्रादीनां स्वराद्यनुसन्धानस्यैवाऽप्रसक्तत्वात्, तज्ज्ञानहीनानां तदुच्चारणासम्भवाच्च । न चोपश्रवणादिना तदुच्चारणं निषिद्ध्यत इति वाच्यम् । तर्हि परिशिष्टाभ्यनुज्ञातापत्तेः । न हि स्वरप्रणवविधुराणां सर्वेषाम्मन्त्रभागानामुपश्रवणादिना शूद्रादिभिरनुसन्धानं वैदिकैरनुमन्यते, येन स्वरादिमात्रस्यात्र तन्निषेधस्स्यात् । अथ नापि द्वितीयः - "तस्माच्छूद्रसमीपे नाध्येतव्यमि"ति शूद्रसमीपोच्चारणसामान्यस्य निषिद्धत्वेन शूद्रश्रवणोदरे स्वरप्रणवाद्युपदेशस्याऽप्रसक्तत्वात् । न च दृष्टप्रयोजनान्तरकामनया प्रसक्तस्य विध्यतिक्रमस्यात्र प्रतिषेधः क्रियत इति वाच्यम् । तर्हि स्वरप्रणवादिव्यतिरिक्तसर्वमन्त्रभागविषये तदतिक्रमस्याभ्यनुज्ञा स्यात् । स्वरप्रणवादिमात्रस्यैवात्र निषेधात् । न चेष्टापत्तिः । शूद्रादिभिः पुरुषसूक्तादिभिरपि आराधनप्रसङ्गात् । तेषान्तदुपदेशलाभेन तत्सामर्थ्यसम्भवात् । न च सर्ववर्णसाधारणपञ्चसंस्कारादिविधायकप्रमाणप्राप्तमन्त्रोच्चारणविषयोऽयं स्वरादिवर्जनविधिरिति न विरोध इति वाच्यम् । तथा सति "एतया निषादस्थपतिं याजयेदि"त्यादिप्रमाणसिद्धक्रियास्वपि स्वरादिवर्जनप्रसङ्गात् । न च 'स्वरः' इत्यादिनिषेधस्य पाञ्चरात्रमात्रप्रतिपादितकर्मविषयत्वात् न दोष इति वाच्यम् । पञ्चसंस्कारादिकर्मणां पराशरस्मृत्युत्तरखण्डपाद्मोत्तरादिप्रतिपादितत्त्वात्, "चरणं पवित्रमि"त्यादिश्रुतिप्रतिपादितत्वाच्च । तत्र प्रणवार्थग्रहणस्य तद्विरोधाभावेनेष्टसिद्धिप्रसङ्गात् । एवं रागप्राप्तग्रहणस्यापि पाञ्चरात्रप्रतिपादितकर्मान्तर्भावेन तत्र सर्वेषामधिकारस्य विरोधाभावाच्च ।

किञ्च "सदा प्रपन्नशूद्राणां सर्वेषां मोक्षकाङ्क्षिणाम् । मन्त्रसायुज्यादिसिद्ध्यर्थं द्विजधर्मोक्तवद्भवेत्" इति पराशरसंहितातृतीयाध्यायवचनेन प्रपन्नमुमुक्षुशूद्रविषये द्विजधर्मातिदेशेन 'न स्वरः प्रणवोऽङ्गानि नाप्यन्यविधयस्तथा । स्त्रीणाञ्च शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते" इति सामान्यवचनस्यामुमुक्षुशूद्रविषयत्वाच्च ।

अपि च "तारादिर्मुक्तये पुनः" इति पूर्वोक्तपाञ्चरात्रपराशरसंहितातृतीयाध्यायवचनेनैव प्रणवादिकमन्त्रग्रहणानां मोक्षार्थत्वस्य, बीजादिकमन्त्रग्रहणानां भोगार्थत्वस्य च व्यवस्थापितत्वेन तद्बलेनापि 'न स्वरः' इत्यादेर्भोगार्थशूद्रादिविषयत्वसिद्धेश्च ।

अन्यच्च "भगवद्दास्यवृत्तिश्च भगवत्कीर्तनादिकम् । सदा प्रणवसंयुक्तमूलमन्त्रद्वयादिकम् । वेदस्वरादिवर्जं स्यात् शूद्राणाम्मन्त्रजापने" इति तत्रत्यवचनेनैव सच्छूद्राणां रागप्राप्तभगवद्दास्यस्य तद्गुणकीर्तनादिकस्य सदा सप्रणवमूलमन्त्रद्वयवैशिष्ट्यस्यादृष्टार्थजपस्य स्वरादिरहितमन्त्रवैशिष्ट्यस्य च व्यवस्थापितत्वेन तद्बलेनापि 'न स्वरः' इत्यादेरप्रपन्नशूद्रादिविषयत्वसिद्धेश्च ।

परञ्च "त्रैवर्णिकानां वेदोक्तसम्यग्भक्तिमतां हरौ। आहुरप्युत्तमस्त्रीणामधिकारन्तु वैदिके" इति

---

१.
२.
३. तै. उप. ना. १-अनु ॥
४. पा. सं. ३-१०७ ॥
५. नारदी. अष्टा. १-१०२ ॥
६. पा. सं. ३-१०५ ॥
७. पा. सं. ३-१०३ ॥
८. व्योमसं.

व्योमसंहितावचनेनाऽपि समीचीनभक्तियुक्तानां शूद्रादीनां तादृशभक्तियुक्तोत्तमस्त्रीणाञ्च वैदिकाधिकारस्योक्ततया 'न स्वरः' इत्यादेर्मन्दाधिकारिविषयत्वसिद्धेश्च ।

अपरञ्च बृहदारण्यकचतुर्थाध्यायचतुर्थब्राह्मणे च मैत्रेयीं स्वभार्यां प्रति ब्रह्मविद्योपदेशात् तद्बलेनापि 'न स्वरः' इत्यादेर्मन्दाधिकारिविषयत्वसिद्धेश्च ।

अतश्च योगयाज्ञवल्क्यस्मृतौ गार्गिम् स्वभार्यां प्रति याज्ञवल्क्येन विस्तरेण योगोपदेशपूर्वकं प्रणवाद्युपदेशदर्शनेन तद्बलेनापि'न स्वरः' इत्यादेर्मन्दादिकारिविषयत्वसिद्धेश्च। एतच्च' मन्त्रं स प्रणवं प्रणामसहित प्रवर्तयध्वं मुहुः''इति सर्वाधिकारस्तोत्रप्रबन्धे तदधिकारिणस्सर्वान् प्रति श्रीकुलशेखरेण प्रणवानुसन्धानविधानात्, तद्बलेनापि 'न स्वरः' इत्यादेरमुमुक्षुविषयत्वसिद्धेश्च ।

अथ च कल्पसूत्रव्याख्यातृश्रीभट्टनाथकर्तृकद्वितीयद्रविडप्रबन्धचतुर्थशतकपञ्चमदशकचतुर्थगाथायां '' मूलमाहिय ओत्तैयेलुत्त मून्त्रुमात्तिरै उळ्ळेलवाङ्गि'' इति तदधिकारिणः स्त्रीशूद्रादीन् प्रति यथाक्रमं त्रिमात्रप्रणवोच्चारणविधानात्, तद्बलेनापि 'न स्वरः' इत्यादेर्मन्दाधिकारिविषयत्वसिद्धेश्च ।

अथ किञ्च ''कण्णपुरमोन्त्रुडैयानुक्कु अडियेनोरुवर्क्कुरियेनो'' इति प्रणवार्थानुसन्धानपूर्वकं ''निन्तिरुवेट्टेलुत्तु कत्तु नान्'' इति श्रीपरकालसूरिभिस्स्वस्य सप्रणवाष्टाक्षरस्याऽनुगृहीतत्वात् ''ओमेन्त्र वायुमि''ति तद्विषये पूर्वाचार्यैर्मङ्गलाशासनाच्च तद्बलेनापि 'न स्वरः' इत्यादेर्मन्दाधिकारिविषयत्वसिद्धेश्च ।

अथापि च ''चतुःपञ्चाब्दसम्भूतो बालस्त्वं नृपनन्दन'' ''जप्तव्यं यन्निबोधैतत् तन्नः पार्थिवनन्दन । हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपिणे। ओं नमो वासुदेवाय शुद्धज्ञानस्वभाविने'' इत्यादिना ध्रुवस्याऽनुपनीतस्य चतुःपञ्चाब्दसंभूतबाल्यावस्थायां सप्तर्षिभिस्सप्रणवद्वादशाक्षरोपदेशस्य श्रीविष्णुपुराणादिसिद्धत्वेन तन्न्यायेन स्त्र्यादीनामत्राधिकारनिर्णयात्, तेनापि 'न स्वरः'इत्यादेरन्यथासिद्धेश्च।

अथान्यच्च ''ओं नमो वासुदेवाय तस्मै भगवते सदा ... ओं नमो विष्णवे तस्मै नमस्तस्मै पुनःपुनः'' इत्यादिष्वनुपनीतेनासुरबालेन प्रह्लादेनापि सप्रणवद्वादशाक्षराद्यनुसन्धानेन तद्बलेनापि तस्यान्यथासिद्धेश्च ।

अथ परञ्च श्रीहरिवंशे''इति ब्रुवन् घोरतमो जात्या हीनोऽन्यचिन्तकः।पिशाचो भगवद्भक्तः स माधिं समपद्यत''इत्यारभ्य''नासिकाग्रं समालोक्य पठन् ब्रह्म सनातनम्। निर्वातस्थो यथा दीपः प्रोच्चरत्प्रणवं सदा।प्रणवं वाचकं मत्वा वाच्यं ब्रह्मेति निश्चितः''इत्यादिना घण्टाकर्णपिशाचस्यात्यन्तनिकृष्टजातिवृत्तस्यापि भगवत्प्रेमबलेन सप्रणवयोगाभ्यासस्य प्रतिपादितत्वेन तन्न्यायानुरोधेनापि 'न स्वरः' इत्यादेरन्यथासिद्धेश्च । पिशाचा हि मानुषश्वपाकापेक्षयाप्यत्यन्तनिकृष्टाः । तेषूक्तमस्य ब्रह्मराक्षसस्यापि कैशिकवृत्तान्ते श्वपाकाश्रयणदर्शनात्। अयन्तु घण्टाकर्णः मुखदीपिकापिशाचत्वात् ततोऽप्यधमः। ''ततस्स भगवान्विष्णुः पिशाचौ मांसभक्षकौ । ददर्शाऽथ महाघोरौ दीपिकाधारिणौ हरिः'' इति

---

१. मुकुन्दमाला. १८ ॥
२. मुदलायिरप्रबन्धे. ४-५-४ ॥
३. तिरुमोलि. ८-९-३ ॥
४. वरवरमुनिसूक्तिः ॥
५ वि. पु. १-११-३४ ॥
६. वि. पु. १-११-५४ ॥
७. वि. पु. १-१९-७८, ८४ ॥
८. हरिवंशे. विष्णुप. १२४ ॥

तत्रैवाऽभिधानात् । तत्राप्ययं श्वयूथसहचारिचण्डालजातीयः "उत्सार्य श्वगणान्सर्वान्यत्नेन महता तदा । सुखासनं समास्थाय समाधौ यतते श्वपः" इति तत्रैवाऽभिधानात् । अस्य च निरतिशयवृत्तनिकर्षोऽपि भगवते सद्योहतब्राह्मणोत्तमशवोपहारनिवेदनेनैव सुव्यक्तः । अन्यच्चाप्युच्यते—'तेषामनुमहाघोरौ पिशाचौ विकृताननौ । प्रांशू पिङ्गलरोमाणौ दीर्घजङ्घौ महाहनू ॥ लम्बकेशौ विरूपाक्षौ हीहीहाहेतिवादिनौ । खादन्तौ मांसपटकं पिबन्तौ रुधिरं बहु । आन्त्रवेष्टितसर्वाङ्गौ दीर्घौ कृशकृतोदरौ । लम्बमानमहाप्रान्तशूलप्रोतशिरोदरौ । कर्षन्तौ शवयूथानि बाहुभ्यान्तत्र तत्र ह । हसन्तौ विविधं हासं स्वजाती सदृशं नृप । वदन्तौ बहुरूपाणि वचांसि प्राकृतानि च । कम्पयन्तौ महावृक्षानूरुपादपघट्टनैः । सृक्विणी लेलिहन्तौ च दन्तान् कटकटायिनौ । अस्थिस्नायुसमाकीर्णौ धमनीरज्जुसन्ततौ" इत्याद्युक्त्वा, अथ योगारम्भे च "तस्मिन्नेव समे देशे पीत्वा च रुधिरं बहु । भक्षयित्वा यथाकामं मांसराशिं विचक्षणः । अपस्पृश्य तत्रैव पार्श्वे संस्थाप्य साधनम् । आन्त्रपाशं महाघोरं संस्थाप्य विपुलम्महत्" इत्यादि । तथा चैवं जात्या श्वपाकपिशाचस्य वृत्तेन ब्रह्महत्यादिनियतस्य वासेन श्मशाननित्यस्यातिहेयस्यापि घण्टाकर्णस्य सप्रणवयोगाभ्यासस्य प्रबलप्रमाणसिद्धत्वात् 'न स्वरः' इत्यादिर्निषेधोऽवैष्णवविषय एवेति ।

अथापरञ्च "गोप्यस्संस्पृष्टसलिला अङ्गेषु करयोः पृथक् । न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत" इति श्रीभागवतदशमस्कन्धषष्ठाध्याये पूतनासंहारकस्य भगवतो गोपिकाभिर्बीजाक्षरन्यासाद्यनुष्ठानपूर्वकं रक्षाविधिप्रयोगानुष्ठानदर्शनात् "न स्वरः प्रणवोऽङ्गानि नाप्यन्यविषयस्तथा" इति वचनं भगवद्विषये प्रेमशून्यविषयमेव ।

अथेदञ्च "आसन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति । तेभ्योऽधिगन्तुं निगमान्तविद्या वाल्मीकिपार्श्वादिह पर्यटामी"ति भवभूतिनापि स्त्रीणामपि "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्याद्युक्तवैदिकविद्याभ्यासार्हत्वज्ञापनेन तादृशलोकप्रसिद्ध्यनुसारात् 'न स्वरः' इत्यादेरविद्वच्छूद्रविषयत्वोविषयत्वसिद्धेश्च ।

एवं देवहूतिं प्रति कपिलस्य साङ्गभक्तियोगोपदेशः, पार्वतीं प्रति रुद्रस्य सप्रणवाष्टाक्षरोपदेश इत्यादिकं श्रीभागवतपाद्मादिप्रसिद्धमप्युदाहर्तव्यम् । विस्तरभयान्न लिख्यते ।

ननु सत्यमेवं सर्वेषामधिकारोऽस्ति तथापि नेदानीन्तनेषु एतन्न्यायावतारः । [यथा "द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्षचर्या" इति । 'सद्योवधूनामुपनयनं कृत्वा विवाहः कार्यः' इत्यादिहारीतवचनस्य 'पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनन्तथा" इति यमवचनेन युगान्तरविषयत्वम् ।] प्राचीनजन्माभ्यासयोगवासनाबलेनैव तेषां ब्रह्मविद्याधिकारस्य "धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे सम्प्राप्ताः संसिद्धिं श्रमणी यथे"ति श्रीशौनकवचनेन निर्धारितत्वात् इति चेन्न । घण्टाकर्णादीनां प्रथमं भगवति प्रद्वेषस्यैव दर्शनेन तेषु पूर्वजन्मवासनाकल्पनस्य बाधितत्वात् । न च तत्रापि कुबेरशङ्कराद्यनुग्रहबलेन विशेषाधिकारसिद्धिः । राजसतामसदेवतानुग्रहस्यैवंविधविशेषाधिकारसम्पा-

१. हरिवंशे: वि-प.
२. हरिवंशे वि-प. १२३-१ ॥
३. हरिवंशे. वि-प. १२४ ॥
४. भागवते. १०-६-२१ ॥
५ उत्तररामचरिते ॥
६. छा. उप. १-४-१ ॥
७. विष्णुधर्मे. १०२-२९ ॥

दकत्वे सत्त्वोत्तरसदाचार्यानुग्रहस्यापि तस्य कैमुत्यसिद्धत्वात् । यदाहुः—"[1]न ह्यम्मयानि तीर्थानि न देवामृच्छिलामयः। ते पुनन्त्युरुकालेन दर्शनादेव साधव." इति। उद्धवगीतायाञ्च भगवतैवोक्तम्—"[2]अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन। सुगोप्यमपि वक्ष्यामि त्वम्मे भृत्यस्सुहृत्सखा॥ "[3]श्रीभगवान्॥ न रोधयति मां योगो न साङ्ख्यं धर्म उद्धव। न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा। व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः। यथावरुन्धे सत्सङ्गस्सर्वसङ्गापहो हि माम्। सत्सङ्गेन हि दैतेयाः यातुधानाः खगा मृगाः । गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः । विद्याधरा मनुष्येषु वैश्याश्शूद्रास्स्त्रियोऽन्त्यजाः।रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ । बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः । वृषपर्वा बलिर्बाणो मयश्चाऽथ विभीषणः । सुग्रीवो हनुमान्वृक्षो गजो गृध्रो वणिक्पथः। व्याधः कुब्जा व्रजे गोप्यः यज्ञपत्न्यस्तथापरे । ते नाधीतश्रुतिगणाः नोपासितमहत्तमाः । अव्रतातप्ततपसस्सत्सङ्गान्मामुपागताः।केवलेन हि भावेन गोप्यो गावो नगा मृगाः।येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा । यं न योगेन साङ्ख्येन दानव्रततपोध्वरैः । व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद्यत्नवानपि" इत्यादिना ।

अथ परञ्च "[4]एकाक्षरां द्विपदां षट्पदाञ्च वाचन्देवा उपजीवन्ति विश्वे - वाचं गन्धर्वाः पशवो मनुष्याः" इति प्रणवमन्त्रशेषद्वयविषयत्वेन रहस्यत्रयमीमांसासारप्रकाशिकाद्युदाहृतयोभयत्रादिसम्प्रतिपन्नया श्रुत्यैव सर्वदेवगन्धर्वपशुमनुष्याणां प्रणवमन्त्रशेषद्वयोपजीवनस्य प्रतिपादितत्वात्, अस्य च पूर्वोक्तवचनन्यायशतेनानुगृहीतत्वात्, "[5]श्रद्धैव कारणं पुंसामष्टाक्षरपरिग्रहे" इति चेतनानामष्टाक्षरग्रहणे प्रमेयविश्वासहेतुकारणीभूतप्रमाणविश्वासपूर्वकत्वरातिरिक्ताधिकारादिनैरपेक्ष्यस्योक्तत्वाच्च 'न स्वरः' इत्यादेस्सोपबृंहणश्रुतिविरोधेनाप्रामाण्यापत्त्या तदन्यथानयनस्याकामेनापि स्वीकर्तव्यत्वाच्च ।

एतेन "[6]कपिलाक्षीरपानेन ब्राह्मणीगमनेन च । शूद्रे वेदाक्षरेणैव निष्कृतिर्न विधीयते" इत्यादिकमपि दत्तोत्तरम्। निषेधस्य विहितव्यतिरिक्तविषयत्वात् , नो चेत्स्वपरिणितब्राह्मणीगमनस्यापि वर्जनीयत्वापातात्। तस्मात्'न स्वरः' इत्यादेरस्मत्सिद्धान्तविरोधमुपपादयितुमीश्वरोऽपि नेश्वर एवेति दिक् ।

प्रत्युत त्वन्मतरीत्या अस्य'न स्वरः'इत्यादेरर्थवर्णने तवैव महानर्थः प्रसज्यते।तथा हि यथा उपनिषत्सु गुणसामान्यनिषेधो गुणविशेषनिषेधे पर्यवस्यति.तथा'[7]मन्त्रमात्रोक्तिरिष्यते' इति मन्त्रभागसामान्याध्ययनविध्यनुरोधात् "शूद्रे वेदाक्षरेणैव" "[8]अथ हास्य वेदमुपशृण्वतः" "[9]न स्त्रीशूद्रौ वेदमधीयाताम् ' इत्यादिनिषेधोऽपि न स्वरः' इत्याद्युक्तस्वरप्रणवाद्यध्ययननिषेध एव पर्यवस्येत् । तथा च स्त्रीशूद्रादीनां स्वरप्रणववर्जं सर्ववेदाध्ययनं प्रसज्यते । न च प्रयोजनाभावात् न तत्र तेषां प्रवृत्तिरिति वक्तुं शक्यम् ; जपाद्वा स्वरूपतो धारणे वा तस्यालौकिकपुरुषार्थसाधनत्वस्य लघुसिद्धान्तभाष्यासिद्धत्वात् ।

१ इतिहाससमुच्चये २५ ६७ ॥
२ भागवते. ११-११-४९ ॥
३ भागवते. ११ १२ १,-९ ॥
४. यजुषि. २. अष्टके ८.प्रश्न ७-अनु.९१-पं ॥
५ नारदीयकल्पे. अष्टाक्षरब्रह्मविद्यायां.१ १०० ॥
६ लघुपराशरस्मृतौ. १-७४ ॥
७ नारद. अष्टा. १-१०२ ॥
८. गौतमधर्मे. २-१२-३ ॥
९.

किञ्च 'स्वर्गकामो यजेत' इति स्वर्गकामादिपदे लिङ्गस्याविवक्षितत्वात् स्त्रीणामपि यागादिषु अधिकारोऽस्ति । पूर्वतन्त्रषष्ठाध्यायतृतीयाधिकरणे सिद्धान्तितत्वात् । यजमानसाध्यापेक्षणाद्यङ्गनिरपेक्षकर्मविशेषेषु तासां पत्यनुमतिमात्रेण स्वतःप्रयोगसम्भवाच्च । तत्र तासां प्रवृत्तेर्निरर्गलत्वापातात् ।

ननु स्वरप्रणवादिविहीनानां वेदानां धर्मानुष्ठानोपयोगित्वं स्वतो धारणेन पुरुषार्थसाधकत्वं वा स्यात्; "सकलाङ्गोपसंहारे काम्यं कर्म प्रसिद्ध्यति" इति न्यायात् तस्मात्प्रयोजनाभावात् न स्त्रीशूद्रादीनां सर्ववेदाध्ययनप्रसङ्ग इति चेन्न । 'नातिरात्रे षोडशिनं गृह्णाति' इत्यनेनातिरात्रे षोडशिग्रहणाभावेऽपि क्रतिवैगुण्यं नास्तीति सिद्धवत् 'न स्वरः प्रणवोऽङ्गानि नाप्यन्यविधयस्तथा । स्त्रीणान्तु शूद्रजातीनाम्मन्त्रमात्रोक्तिरिष्यते' इत्यनेनैव स्त्रीशूद्रादीनां स्वरप्रणवाङ्गादिवैकल्येऽपि प्रधानानुष्ठानवैकल्यं नास्तीति सिद्ध्या तेषां तत्प्रवृत्तेर्निरर्गलत्वात् ।

किञ्च 'न स्वरः' इत्यनेनाऽचूसामान्यस्य निषेधप्रतीत्या तस्योदात्तादिविशेषनिषेधपर्यवसनज्ञापकविशेषवचनाभावेन त्वन्मते स्त्रीशूद्रादीनामष्टाक्षरादिघटकाच्सामान्यवर्जनप्रसङ्गाच्च । न च प्रकरणबलात् विशेषसिद्धिः । स्वरसामान्यस्यापि प्रकृतत्वात् । न च मन्त्रघटकानामचां मन्त्रशरीरानुप्रविष्टत्वात्, तेषां 'मन्त्रमात्रोक्तिरिष्यते' इति विहितत्वेन 'न स्वरः' इत्यत्र तन्निषेधायोगात्, उदात्तादिनिषेधमात्रे पर्यवसानसिद्धिरिति वाच्यम् । अचामप्युदात्तादिरूपेणैव मन्त्रशरीरानुप्रविष्टतया तेषामपि निषेधायोगात् । न ह्यचामच्त्वेनैव मन्त्रशरीरत्वं नोदात्तादिरूपेणेत्यत्र नियामकमस्ति । न च श्रुतिवाक्यात् अग्निमस्सहैवोद्धृतस्याष्टाक्षरस्यानन्तरं स्मृत्या 'षष्ठाद्ययोरुदात्तस्स्यात्' इत्यादिना स्वरविधानात् अनन्तरविहितत्वमेवोदात्तादीनां मन्त्रशरीराननुप्रवेशज्ञापकमिति वाच्यम् । उद्धारदशायां सहैवोद्धृतानां स्वराणामेव स्मृतेर्विशेषतो बोधकत्वात् । न हि 'ओमित्येकाक्षरम्' इत्यादिस्वरविहीनमुद्ध्रियते । किञ्च "ओं नमो नारायणायेति मन्त्रोपासकः" इत्यत्र सस्वरमेवाष्टाक्षरानुपूर्वीमुपादाय 'इति मन्त्रे'ति विशिष्टस्यैव मन्त्रत्वोक्त्या दुर्वार एवोदात्तादीनां मन्त्रशरीरान्तर्भावः । अपि च 'न प्रणवः' इति निषेधोऽपि तवैव विपरीतः । "तस्य प्रकृतिलीनस्य" इति श्रुत्याकारस्यापि लीनप्रणवाभेदस्य प्रतिपन्नत्वेन स्मार्ताष्टाक्षरगतप्रथमाक्षरस्यापि स्त्रीशूद्रादिभिर्वर्जनप्रसङ्गात् । न च प्रणवप्रकृतिभूतस्याकारस्य प्रणवभेदे सति 'तस्य प्रकृतिलीनस्य' इत्येतदुपपद्यते । 'प्रकृतिलीनप्रणवाभिन्नस्याकारस्ये'ति हि तदर्थः । न च 'न प्रणवः' इति स्थूलप्रणवमात्रनिषेध इति वक्तुं शक्यम् । तद्विशेषकप्रमाणाभावात् । न च स्थूलप्रणवस्यैव सर्वेषु मन्त्रेष्वङ्गतया प्रसक्तत्वात् लीनप्रणवस्य तादृशप्रसक्त्यभावाच्च स्थूलप्रणवस्यैव निषेध इति वाच्यम् । तथा सत्यङ्गभूतस्थूलप्रणवस्यैव निषेधेनाङ्गिप्रणवस्यानिषेधापातात् । तस्य सर्वमन्त्रेषु प्रसङ्गाभावात् । तथा 'न-अङ्गानी'ति निषेधोऽपि तवैव विरोधि । 'अमि'ति बीजमन्त्रस्य 'नमः' पदस्य 'आये'ति शक्तिमन्त्रस्य चाङ्गत्वेन त्वन्मते तेषां स्त्रीशूद्रादिभिस्त्यागप्रसङ्गात् । न चेष्टापत्तिः । 'नारायण' इत्येतावन्मात्रस्यानुसन्धानप्रसङ्गात् । न च तथानुसन्धीयते । न च मन्त्रशरीरानन्तर्गतानामङ्गानामेव 'न-अङ्गानी'ति निषेधाभ्युपगमात्, तेषां च बीजादीनां मन्त्रशरीरान्तर्गतत्वाच्च न दोष इति वाच्यम् । तत्रापि 'अमि'त्यस्य त्यागतादवस्थ्यात् । न

---

१. यजुषि. २ ५-३० ॥
२.
३. यजुषि.
४. तै. उप. ६-१०-२४ ॥

च "तत्रोत्तरायणस्यादिर्बिन्दुमान् विष्णुरन्ततः" इति वचनेनाऽयनपदाद्यक्षराकारस्यैव बीजत्वोक्त्या तस्यापि मन्त्रशरीरत्वमस्तीति वाच्यम्।[१] 'बिन्दुमान्विष्णुरन्ततः। बीजमष्टाक्षरस्य स्यात्' इति बिन्दुविशिष्टवेषेणैव तस्य बीजत्वोक्त्या विशिष्टबीजस्वरूपस्य मन्त्रशरीरत्वाभावेन तद्दोषतादवस्थ्यात् । यदि च 'अधिकन्तु प्रविष्टं न तद्धानिः' इति न्यायेन बिन्दुविशिष्टस्याप्यकारस्य मन्त्रशरीरत्वानपायात् 'न-अङ्गानी'ति न तस्य निषेध इत्युच्यते; तर्हि प्रणवस्याप्यकारघटितत्वेनैव मन्त्रशरीरानुप्रविष्टतायाः सूपपादत्वात्तस्यापि स्त्रीशूद्रादिभिस्स्वीकारापत्तेः । न च बीजघटकोऽकार एव मन्त्रशरीरभूतः, न च प्रणवघटकः, तस्यैवायनशब्दाद्यक्षरत्वस्य प्रमाणसिद्धत्वादिति वाच्यम् बीजघटकाकारस्य सर्वसङ्ग्रहतायाः श्रीवेदान्ताचार्यैः श्रीरहस्यत्रयसारे मूलमन्त्राधिकारेऽनुगृहीतत्वेन तेनैव तस्य प्रणवप्रकृतित्वस्यापि सिद्धेः । किञ्च "अष्टाक्षरशरीराङ्गप्रणवाद्यक्षरेण तु"[२] इति वचनेनाष्टाक्षरशरीरभूतस्यैव प्रणवस्य तत्त्रेणाङ्गत्वस्याप्युक्ततया विशिष्टप्रणवस्यैव मन्त्रशरीरत्वेन तद्दोषतादवस्थ्याच्च। अपि च स्मार्ताष्टाक्षरे प्रणवप्रतिच्छन्दतयैव तत्स्थाने बीजं विहितमिति श्रीवेदान्ताचार्यैरनुगृहीतत्वेन प्रतिच्छन्दस्यैव त्वया मन्त्रशरीरानुप्रवेशस्योक्तत्वात् । स्थानिनस्तस्य कैमुत्यसिद्धतया तद्दोषतादवस्थ्यस्य वज्रलेपायितत्वाच्च। किञ्च 'न अङ्गानी'ति कतिपयाङ्गनिषेधो वा सर्वाङ्गनिषेधो वा। नाद्यः विकलाङ्गस्य मन्त्रस्य काम्यमानपुरुषार्थसाधनत्वायोगात् । "सकलाङ्गोपसंहारे काम्यं कर्म प्रसिद्ध्यति"इति न्यायात् । नापि द्वितीयः-पुरुषार्थसामान्यसाधनत्वायोगात्।न ह्यङ्गशून्यस्य करणत्वसम्भवः।तदुक्तं"न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम्।इतिकर्तव्यता साध्ये यस्य नानुग्रहेऽर्थिता"[३]इति। तथा 'नाप्यन्यविधयः' इत्येतदपि तवैवानिष्टम्। तेन मन्त्रोक्तिव्यतिरिक्तजपहोमतर्पणदेवताध्यानादीनां निषेधेन स्त्रीशूद्रादीनां तेषां त्वन्मते वर्ज्यत्वापातात् । न चेष्टापत्तिः । मन्त्रग्रहणस्य वैयर्थ्यापातात् । आत्महविस्समर्पणाद्यर्थं हि त्वन्मते मन्त्रग्रहणम् । तदेवं 'न स्वरः' इत्यादिवचनस्यापादचूडन्तवैवानिष्टापादकत्वात् अवश्यमन्यथा नेयमेव।तर्हीदं वचनं किंपरमिति चेत्? श्रूयतामवधानेन।स्त्रीशूद्राणामपशूद्राधिकरणन्यायेन उपनयनाद्यभावेनाऽलौकिकसामर्थ्याभावात् न्यायप्राप्तादृष्टार्थस्वरप्रणवादिनिवृत्त्यनुवादपूर्वकं रागप्राप्तदृष्टार्थमन्त्रोक्तिमात्रस्य भगवदभिमतत्वज्ञापनपरमिदं वचनम् । मन्त्रपदेनार्थप्रत्यायनद्वारा रक्षकत्वोक्त्या तदुक्तेः केवलरागप्राप्तत्वलाभात् । 'इष्यते' इत्यनेन 'श्रुतिस्स्मृतिर्ममैवाज्ञा'[४] इत्युक्तभगवदभिमतत्वज्ञापनाच्च । तत्र पूर्वार्धे 'स्वरः प्रणवः' इति शब्दौ समानाधिकरणौ. समानलिङ्गवचनत्वादिना प्रथमप्रतीतस्य सामानाधिकरण्यस्य चकारादिभञ्जकाभावेन त्यागायोगात्। अत एव हि "कप्यासं पुण्डरीकाम्"[५]इत्यादौ वैयधिकरण्यमाचार्यैर्दूषितम्।तथा च स्वरात्मकप्रणवनिषेधः 'न स्वरः प्रणवः' इत्यनेनोक्तः।स्वरात्मकः प्रणवो नाम क इति चेत् . प्रणवो द्विविधः। अक्षरत्रयसंहिताकार एकः । केवलमेकाक्षरः - अपरः। तत्राक्षरत्रयसंहिताकारस्य प्रणवस्य मकाररूपहल्सहितत्वात् न केवलस्वरात्मकत्वम् । केवलैकाक्षरस्य तु मकारघटितत्वे प्रमाणाभावेन बिन्दुभूषित ओकारात्मकत्वेन भवति केवलस्वरात्मकत्वम्।तत्राक्षरत्रयसंहितारूपः प्रणवो योऽष्टाक्षरघटकः स ब्रह्मशेषभूत जीवस्वरूपवाचकः । "अकार उकार मकार इति तानेकधा समभरत्तदेतदोमिति"[६] इति तमुद्धृत्य "प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम्"[७]इति तस्य प्रणवस्य ज्ञानानन्दलक्षणेन ब्रह्मशेषभूतपुरुषेण सह

१. नारदी. अष्टा. १-५४ ॥
२. रहस्यत्रयकारिका १ १३ ॥
३. भाट्टकारिका.
४. विष्णुधर्मे. ७६-३१ ॥
५. छा. उप. १-६-७ ॥
६. नारायणोपनिषदि. ४ ॥
७. नारायणो. ४ ॥

वाच्यवाचकभावनिबन्धनसामानाधिकरण्यनिर्देशबलेन तल्लाभात् । अनक्षरत्रयात्मकः प्रणवश्च-"ओमित्यङ्गीकारे, ब्रह्मणि च 'इत्याद्युक्तरीत्या केवल ब्रह्मस्वरूपवाचक एव। योऽयं ब्रह्मस्वरूपवाचकः केवलस्वरात्मकः प्रणवः, स एव "यद्वेदादौ स्वरः प्रोक्तः" इत्यादौ स्वरशब्देन श्रूयते । न चास्याकारप्रकृतिकत्वाभावश्शङ्क्यः; तदवयवकस्यैव तत्प्रकृतिकत्वमिति नियमस्यालाभावात् । "अकारो वै सर्वावाक्"इति श्रुत्याऽकारस्य सर्ववर्णप्रकृतित्वाच्च। तथा चेत्थं श्रुतिप्रसिद्धस्वरप्रणव एव "ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते" इत्यादिसामान्यविधिना तत्तन्मन्त्राङ्गविधायकविशेषविधिना च सर्वमन्त्रोच्चारणाङ्गतया प्रसक्तः । इत्थं प्रसक्तमिदं स्वरप्रणवोच्चारणमदृष्टार्थमेवेति दृष्टार्थग्रहणे तत्प्रापकाभावात् स्वत एव निवृत्तौ तदिदमनूद्यते 'न स्वर. प्रणवः' इति स्वरः प्रणवनिषेध एवायम् । 'अङ्गानि'इत्यनेन ऋषिच्छन्दोदेवताशक्तिबीजवर्णविनियोगस्थान स्वरनियमादिसमस्तादृष्टार्थाङ्गनिवृत्तिरनूद्यते।न चात्र सर्वाङ्गनिवृत्तेरनूदितत्वेन पार्थक्येन स्वरप्रणवनिवृत्त्यनुवादो व्यर्थ इति शङ्क्यम् ; तस्य स्वातन्त्र्येणापि तन्निवृत्तेर्ज्ञापनार्थत्वात्।सम्प्रतिपन्नं हि स्वरप्रणवस्य स्वातन्त्र्येणाऽप्यदृष्टार्थत्वम् । 'नाप्यन्यविधयः' इत्यनेनाङ्गिविधिनिवृत्तिरनूद्यते । तेन मन्त्राङ्गकादृष्टार्थजपहोमादीनां निवृत्तिरुक्ता । न चैतेषामनुवादानां निष्प्रयोजनत्वम् ; तेषु भगवदभिमतत्वविधानार्थत्वात् । गम्यते हि स्वतस्सिद्धानामेवार्थानां शास्त्रतः प्रतिपादने तत्र भगवदभिमतत्वम् । तथा चेत्थमस्य वचनस्य दृष्टार्थाष्टाक्षरसर्वाधिकारत्वज्ञापकपूर्वोक्तश्रुत्याद्यनुकूलत्वमेव।एतेन 'स्त्री शूद्रा विनताश्चैव मन्त्रं प्रणववर्जितम्' 'नमो नारायणायेति नित्यमोङ्कारपूर्वकम्। भवेदष्टाक्षरम्मन्त्रं विप्राणां मुक्तिदायकम् । अकारं विन्दुसंयुक्तं नमो नारायणाय च । लक्ष्मीनारायणम्मन्त्रं भवेदष्टाक्षरं शुभम् । अध्याप्य विधिवच्छूद्रान्'' इत्यादिकमपि व्याख्यातम्। सामान्यप्रणवनिषेधस्य स्वरप्रणवरूपविशेषनिषेधपर्यवसायित्वात्, अदृष्टार्थकर्मविषयत्वाद्वा । तस्मात् न स्वरः' इत्यादिविशेषनिषेधपरतया त्वदभिमतानां प्रमाणानामन्यथासिद्धत्वात् दृष्टार्थप्रणवादिग्रहणसर्वाधिकारत्वस्य पूर्वोक्तश्रुत्यासिद्धत्वात् नात्र कश्चिद्विरोधगन्धोऽपीत्यास्तां विस्तरः ।

अथ यदुक्तम् 'अपशूद्राधिकरणन्यायविरोधादि'ति, तदपि दत्तोत्तरम् । अपशूद्राधिकरणे हि शूद्राणामदृष्टसाधनसामर्थ्याभावान्मोक्षं प्रति अदृष्टसाधनीभूतासु वैदिकविद्यासु अनधिकारो राद्धान्तितः । न ह्यस्माभिः शूद्राणां तदङ्गीक्रियते । येन तदधिकरणविरोधस्स्यात् । किन्तु दृष्टार्थमन्त्रग्रहणस्यैव शूद्रादिसर्वाधिकारत्वं ब्रूमः । न च दृष्टार्थमन्त्रग्रहणादौ शूद्रादीनां सामर्थ्याभावस्तदधिकरणसिद्धः । यदाहुः - तत्प्रकाशिकाचार्याः "उपासनोपायश्रवणधारणादिक्षमत्वलक्षणं सामर्थ्यं तस्यापि लोकसिद्धमित्यत्राह— असामर्थ्याच्चेति।अलौकिकसामर्थ्याभावादित्यर्थः" इति । पूर्वतन्त्रापशूद्राधिकरणेऽपि 'स्वाच्छन्द्येन विद्यामार्जयतोऽपि न सिद्ध्यधिकारः" इति पार्थसारथिमिश्रेण शूद्राणामपि विद्यार्जनाभ्युपगमेन दृष्टसामग्रीसामर्थ्यसम्भवो दर्शितः । यत्तु श्मशानकल्पशूद्रसमीपाध्ययननिषेधबलेन दृष्टसामग्र्यसम्भवः प्रतिपिपादयिषितः ; सोऽपि"विप्रांद्विषड्गुण-

१.
२. तै. ना. ६-१०-२४ ॥
३.
४. मनुस्मृतिः २-७४ ॥
५.
६ शेषसंहि. २-अ ॥
७. श्रुतप्र. १-३-३३ ॥
८ शास्त्रदीपिकायाम् ॥
९. भागवते. ७-९-१० ॥

युतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् । मन्ये तदर्पितमनोवचनेहितार्थप्राणः पुनाति भुवनं न तु भूरिमानः'' ''[1]श्वपचोऽपि महीपाल विष्णुभक्तो द्विजाधिकः'' ''[2]ते वैष्णवा भुवनमाशु पवित्रयन्ति'' '[3]न शूद्रा भगवद्भक्ता विप्रा भागवतास्स्मृताः । अपार्थकं प्रभाषन्ते शूद्रा भागवता इति'' ''[4]स विप्रेन्द्रो मुनिश्श्रीमान् स यतिस्स च पण्डितः'' इत्यादीनामन्ततो गत्वा त्वयापि वैष्णवशूद्रादीनां ब्राह्मणादिवत्पूज्यत्वांशे प्रामाण्यस्य स्वीकृतत्वात्, [5]शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा। वीक्षते जातिसामान्यात् स याति नरकं नरः'' इत्यादीनां जातिज्ञानप्रयुक्ततदवमतिनिषेधपरत्वस्य त्वयापि स्वीकृतत्वात्, श्रीभक्तिसारसमीपे अध्ययनं त्यजतां ब्रह्मचारिणां तदध्ययनविस्मरणस्य पुनर्भक्तिसारानुग्रहबलात् तत्स्मरणस्यच श्रीगुरुपरम्पराप्रसिद्धत्वात्, श्मशाननिवासिश्वपचाधमजातीयघण्टाकर्णादिभिः प्रणवानुसन्धानदर्शनाच्च । ''तस्मात् शूद्रसमीपे नाध्येतव्यमि''त्यादेरवैष्णवशूद्रविषयताया अकामेनापि स्वीकर्तव्यत्वादेव न प्रभवति तस्मात् नास्माकमपशूद्राधिकरणविरोधः । किन्तु तवैव। तथा हि त्वन्मते हि''[6]ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत''इतितैत्तिरीयविहिता या न्यासविद्या मोक्षोपायभूता, सद्विद्यादितुल्या सैव शरणागतिस्सर्वाधिकारा, नान्या । '[7]भक्तौ रङ्गपते यथा खलु पशुच्छागादिवद्वेदनध्यानोपासनदर्शनादिवच्च सामिच्छन्त्यभिन्नार्थताम् । व्यक्त्यैक्यात् शरणागतिप्रपदनत्यागात्मनिक्षेपणन्यासाद्येषु तथैव तन्त्रनिपुणैः पर्यायता स्मर्यते'' इति न्यासतिलकेऽनुगृहीतत्वात्। तस्याश्च विद्यायाः तान्त्रिकप्रयोगकरणमन्त्रस्तान्त्रिकाष्टाक्षरद्वयादिः तस्य चाध्ययनमन्त्रसंस्कार इत्यादिकमभ्युपगम्यते । तदिदं सर्वमपशूद्राधिकरणविरुद्धमेव । तत्र हि शूद्राणां मोक्षोपायतया वेदविहितब्रह्मविद्यासामान्येऽनधिकारो राद्धान्तितः । तद्विरुद्धम् तद्विशेषन्यासविद्यायास्सर्वाधिकारत्वम् । किञ्च तत्र शूद्रादीनां इतिहासपुराणश्रवणं नोपायविद्यार्थमित्युक्तम् । तद्विरुद्धम् पाञ्चरात्रश्रवणादिना न्यासविद्यायास्तान्त्रिकप्रयोगकल्पनम् । अपि च ''[8]संस्कारपरामर्शात्तदभावाभिलापाच्च''इति सूत्रे मोक्षोपायब्रह्मविद्योपदेशस्योपनयनसापेक्षत्वात्, तद्रहितानामनधिकार उक्तः। तद्विरुद्धञ्च-स्त्रीशूद्रादीनामधिकारकल्पनम्। अन्यच्च-''[9]तदभावनिर्धारणे च प्रवृत्तेः'' इति सूत्रेणाऽनिर्धारितशूद्रत्वाभावकस्य ब्रह्मविद्यानधिकार उक्तः । तद्विरुद्धञ्च वैष्णवशूद्रादीनां शूद्रत्वं नोपैतीत्यभ्युपगम्य, तेषामेव न्यासविद्यायामधिकारकल्पनम् । इतरञ्च-''[10]श्रवणाध्ययनार्थप्रतिषेधात्'' इति सूत्रेण ''[11]पशुर्वा एतच्छमशानं यच्छूद्रः, तस्माच्छूद्रसमीपे नाध्येतव्यम्''इत्यादिना शूद्रत्वजातिवैशिष्ट्यमप्यभ्युपगम्य तेषां द्वयादिवेदमन्त्राध्ययनतदर्थश्रवणतदनुष्ठानाभ्युपगमपूर्वकं न्यासविद्याधिकारवचनम्।न च द्वयादीनां वैदिकमन्त्रत्वाभावश्शङ्क्यः ''[12]अधिगतनिगमष्यद्पदोऽयं द्विखण्डः'' इत्याचार्यसूक्त्या तत्सिद्धेः । तस्य ''[13]अथातः श्रीमद्द्वयोत्पत्तिः'' इत्यादिना कठवल्लीखण्डद्वयोपनिषदाम्नातत्वाच्च । स्मृतीनामपि वेदमूलत्वेनैव प्रामाण्यात्, स्मृतिसिद्धानामपि मन्त्राणां वेदमन्त्रत्वानपायाच्च । अन्ततो गत्वापि 'ॐ नमो नारायणाये'त्यत्र स्मार्ताष्टाक्षरे प्रथमाक्षरस्य वैदिकाष्टाक्षरबीजत्वाङ्गी-

---

१. नारदीयपु. पूर्व. ३४-४१ ॥
२. पाद्मोत्तरे. २२४-७० ॥
३. भारते. आश्वमे. ११८-३२ ॥
४. गारुडपु. पूर्व. २१९ ९ ॥
५. इतिहाससमुच्चये. २६-२६ ॥
६. तै. ना. ६-५० ॥
७. न्यासतिलके. १६ ॥
८ ब्र सू. १ ३-३६ ॥
९ ब्र सू. १-३-३७ ॥
१०. ब्र. सू. १-३-३८ ॥
११.
१२. अष्टश्लोक्यां. ५ ॥
१३. कठ. द्वयोपनि ॥

कारात् तस्य सर्ववेदसङ्ग्रहत्वस्य श्रीवेदान्ताचार्यैरनुगृहीतत्वाच्च तस्य वेदाक्षरत्वस्य त्वया दुरपह्नवत्वाच्च । न च विशेषवचनबलेन शूद्रादिभिस्तदध्ययनं नानुपपन्नमिति वाच्यम् ; तादृशविशेषश्रुत्यनुपलम्भात् । स्मृतिरस्तीति चेत् ; किन्तेन, श्रुतिविरुद्धस्मृतीनामप्रामाण्यात् । तथा पञ्चमवेदसारभूत गीतोपनिषत्तात्पर्यत्वेन परमगुह्यभूतस्य चरमश्लोकस्यापि कृष्णानुष्टुप्मन्त्रत्वेन तत्सर्वाधिकारत्वस्मृतेरपि दुर्लभत्वाच्च। तस्मान्न कथञ्चिदपि शूद्रादीनां वेदान्तर्गतरहस्यत्रयाध्ययनं विशेषप्रमाणपदवीमरोहेदिति त्वन्मते तेषां तदध्ययनाद्यभ्युपगमः ''श्रवणाध्ययनार्थप्रतिषेधात्'' इति सूत्रविरुद्ध एव। ननु तवापि समानोऽयं दोष इति चेत्, भ्रान्तोऽसि. न हि वयं वैष्णवानां शूद्रत्वजातिसद्भावमभ्युपगच्छामः । येन ' शूद्रसमीपे नाध्येतव्यम्'' इति श्रुतिविरोधस्स्यात् । किन्तु ''अपार्थकं प्रभाषन्ते शूद्रा-भागवता इति'' इत्यादिप्रमाणानुसारात् पूर्वं शूद्रजातावुत्पन्नानां वैष्णवानां भगवत्सम्बन्धमाहात्म्यात् शूद्रत्वमपैतीति वदामः। तस्मान्नास्माकं विरोधः।रञ्च' स्मृतेश्च''इति सूत्रे ' अथ हास्य वेदमुपशृण्वतः''इत्यादिना शूद्रादीनां वेदोपश्रवणादिनिषेधात् अनधिकारस्स्थापितः।तद्विरुद्धश्च शूद्रादीनामेव सतां साक्षादेव मन्त्राध्ययनादिकमिति । तस्माद्यावता वैष्णवशूद्रादीनां जात्यपगमः, न्यासापेक्षया शरणागतेर्भेदः, शरणागतेरनुपायतया सद्विद्यादिकोटिबहिर्भावः, मन्त्रग्रहणस्य दृष्टार्थत्वमित्यादिकमस्मत्प्रतितन्त्रं त्वया नाभ्युपगम्येत ;० न तावत्पर्यन्तं तत्रापशूद्राधिकरणविरोधनिस्तारसम्भावना भविष्यतीति सिद्धं त्वन्मतं दुर्मतमेवेति ।

अथ यदुक्तं ''तान्त्रिकं वैश्यशूद्राणाम्''इति व्यवस्थाविरोधात् इति, तन्न; तस्या व्यवस्थाया वैधकर्मविषयत्वात् । ''त्रिविधं कर्म सम्प्रोक्तं पाञ्चरात्रामृतार्णवे । वैदिकं तान्त्रिकञ्चैव तथा वैदिकतान्त्रिकम् । वैदिकं ब्राह्मणानान्तु राज्ञां वैदिकतान्त्रिकम् । तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकन्तु वा'' इति तत्प्रकरणात्। किञ्चास्या व्यवस्थायाः कर्मविशेषणमात्रविषयत्वमेवावश्यमायुष्मतोऽप्याश्रयणीयम्। नो चेत् त्रैवर्णिकान्तर्गतस्य वैश्यस्य श्रौतस्मार्तानेकवैदिककर्माधिकारस्य बहुप्रमाणसिद्धत्वेन तस्य केवलशूद्रतौल्योक्तेरप्रामाण्यापातात्।तथा हि ''ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः। ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्तास्सततं ब्रह्मवादिनाम्' इतिगीतासप्तदशाध्यायगतश्लोकद्वयभाष्ये त्रैवर्णिकानां सर्वेषां वेदाध्ययनयज्ञादिषु प्रणवान्वयं प्रदर्श्य,अन्ते''तस्मात् ब्रह्मवादिनां वेदवादिनाम्,त्रैवर्णिकानाम्।यज्ञदानतपः क्रियाः,विधानोक्ताः वेदविधानोक्ताः,आदावोमित्युदाहृत्य,सततं-सर्वदा प्रवर्तन्ते,वेदाश्चोमित्युदाहृत्यारभ्यन्ते; एवं वेदानां वैदिकानां च यज्ञादीनां कर्मणां ओमितिशब्दान्वयो वर्णितः। ओमितिशब्दान्वितवेदधारणात्, तदन्वितयज्ञादिकर्मकरणाच्च ब्राह्मणशब्दनिर्दिष्टानां त्रैवर्णिकानामपि ओमितिशब्दान्वयो वर्णितः'' इति भाषितम्। एवं ' षट्कर्मा ब्राह्मणः त्रिकर्माणौ क्षत्रियवैश्यौ'' इति वैश्यानां क्षत्रियतुल्यतयाऽध्यापनयाजनप्रतिग्रहवर्जं सर्ववैदिककर्माधिकार उक्तः । एवमितिहासादिषु तुलाधारप्रभृतयो वैश्याः जाजलिप्रभृतीन् ब्राह्मणान्प्रति धर्मोपदेष्टारोऽपि दृष्टाः।''वेदाहं जाजले धर्मं सरहस्यं सनातनम्''इति हि तुलाधारेण वैश्येन स्वस्य परमगुह्यब्रह्मगतिविद्यया सह

१. ब्र. सू. १-३-३८ ॥
२. भार. आश्व. ११८-३२ ॥
३. ब्र. सू. १-३-३९ ॥
४. गौतमधर्मे. २-१२-३ ॥
५. ब्रह्मरात्रे. ४-अ ॥
६. ब्रह्मरात्रे. ४. अ ॥
७. गीता. १७-२३, २४ ॥
८. गीताभाष्ये. १७ २४ ॥
९. वासिष्ठधर्मे. १ ॥
१०. भारते. शा. मोक्ष. २६८-५ ॥

"कृष्णं धर्मं सनातनम्" इत्युक्तसिद्धोपायनिष्ठामभिधायानुकूल्यसङ्कल्पप्रातिकूल्यवर्जनादिकमुपदिश्य 'सर्वेषां यस्सुहृन्नित्यं सर्वेषाञ्च हितेरतः। कर्मणा मनसा वाचा स धर्मं वेद जाजले" इत्यानुकूल्यादिनिष्ठस्य ब्रह्मविद्यासिद्धिमुपदिश्य 'स्पर्धां जहि महाप्राज्ञ ततः प्राप्स्यसि यत्परम्"इति 'स्पर्धां जही'ति स्वसदृशभागवतविषये स्पर्धाया ब्रह्मविदपचाररूपतया तस्याश्च ब्रह्मविद्यानिष्पत्तिप्रतिबन्धकतायाः "एवं मुक्तिफलानियमस्तदवस्थावधृतेः"इति सूत्रसिद्धतया क्रूरनिषिद्धत्वेन तद्वर्जनमपि विधाय'ततः प्राप्स्यसि यत्परमि'ति'ब्रह्मविदाप्नोति परम्" इत्युक्तब्रह्मविद्याफलसिद्धिमुपदिश्य जाजलिः शिक्षित इति श्रूयते। एवं श्रीकाञ्चीपूर्णेन वैदिकोत्तमं भाष्यकारं प्रति "अहमेव परं तत्त्वं दर्शनं भेद एव च' इत्यादिमहारहस्यषडर्थशिक्षणादेव हि'रामानुजमुनेर्मान्यमि"ति सर्वलोकप्रसिद्धिमाचार्यत्वं तस्योद्घुष्यते। यदि वैश्यानां वैदिकानधिकारस्स्यात्, कथं तर्हि काञ्चीपूर्णविषये श्रीरामानुजार्येण पञ्चसंस्कारादिप्रार्थनमुपपद्यते। न हि भाष्यकारस्याधिकारविवेको नास्तीति वक्तुं शक्यते।तस्मात्पाञ्चरात्रमात्रप्रतिपादितवैधकर्मविषयेयं व्यवस्थेति अवश्यमाश्रयणीयम्। तथा च पञ्चसंस्कारादीनां पराशरस्मृत्युत्तरखण्डपाद्मोत्तरखण्डाद्युपबृंहित 'चरणं पवित्रमि'त्यादि श्रुतिसिद्धत्वात् दृष्टार्थमन्त्रग्रहणस्य रागप्राप्तत्वेन वैधकर्मत्वाभावाच्च नात्र तद्व्यवस्थाविरोधगन्धोऽपि। किञ्च "सदा तान्त्रिकमन्त्रस्स्यात् वेदस्वरविवर्जितः। मूलादिसर्वमन्त्राणां विधिरेष सदा भवेत्" इति पराशरसंहिता तृतीयाध्यायवचनेन स्वरविहीनमात्रस्यैव तान्त्रिकमन्त्रलक्षणत्वोक्त्या सप्रणवमन्त्राङ्गकर्मनिष्ठानामपि स्वरवर्जनमात्रेण तान्त्रिकनिष्ठायास्सुलभत्वेन विरोधाभावाच्च। एतेन "अष्टाक्षरश्चयो मन्त्रो द्वादशाक्षर एव च। षडक्षरश्चयो मन्त्रो विष्णोरमिततेजसः। एते मन्त्राः प्रधानास्स्युः वैदिकाः प्रणवैर्युताः। प्रणवेन विहीनास्तु तान्त्रिका एव कीर्तिताः" इत्येतदपि व्याख्यातम्। प्रणवयुक्तानामपि तान्त्रिकमन्त्रत्वसत्त्वेन एतद्वचनानां प्रणवविहीनानां तान्त्रिकत्वायोगव्यवच्छेदमात्रपरत्वात्। "प्रणवेन विहीनास्तु तान्त्रिका एव कीर्तिताः"इत्यनेन हि प्रणवविहीनानां तान्त्रिकत्वायोगमात्रं प्रतीयते। न तु प्रणवयुक्तस्य तान्त्रिकत्वाभावोऽपि। न ह्यत्र प्रणवविहीना एव तान्त्रिका इत्युच्यते। किन्तु प्रणवविहीनास्तान्त्रिका एवेति। ननु "वैदिकाः प्रणवैर्युताः" इत्यनेन प्रणवयुक्तत्वावच्छेदेन वैदिकत्वमुच्यते इति चेत्। किन्तेन? न ह्यत्र 'न वैदिकाश्शूद्राणामि'ति निषेधः श्रूयते। न च "तान्त्रिकं वैश्यशूद्राणाम्"इत्यन्ययोगव्यवच्छेदपरम्; 'तान्त्रिकमेवे'त्यवधारणाश्रवणात्। अवधारणकल्पेन प्रकरणशैलीविरोधात्। न हि "वैदिकं ब्राह्मणानान्तु राज्ञां वैदिकतान्त्रिकम्" इत्यनयोर्वाक्ययोरवधारणकल्पनं सम्भवति। 'सर्वेषां तान्त्रिकन्तु वे'त्यनेन विरोधात्। न च 'तान्त्रिकं वैश्यशूद्राणामि'त्यत्र विरोधाभावात् तत्कल्पनम्। "सदा प्रणवसंयुक्तमूलमन्त्रद्वयादिकम्। वेदस्वरादिवर्जं स्यात् शूद्राणां मन्त्रजापने। तारादिर्मुक्तये लक्ष्मीबीजादिर्भुक्तये पुनः। सदा प्रपन्नशूद्राणां सर्वेषां मोक्षकाङ्क्षिणाम्। मत्स्यायुत्वादिसिद्ध्यर्थं द्विजधर्मोक्तवद्भवेत्" इति पाञ्चरात्रपराशरसंहितातृतीयाध्यायभगवद्वचनैस्सहास्यापि विरुद्धत्वात्। तस्मात्"वैदिकं ब्राह्मणानान्तु"इत्यादिकं सर्वं प्रायिकत्वाभिप्रायमेव, न नियमपरमिति न कश्चिद्विरोधः इति। अपि च विदुरशबरीधर्मव्याधादीनां

१. भारते. वन. ८६-२६॥
२. भारते. शा मो. २६८-९॥
३. भारते. शा-मो. २७०-१९॥
४. ब्र. सू. ३४५०॥
५. तै. आनन्द. १-१॥
६. तै. उप. ६-१॥
७. पराश. सं. ३-१०६॥
८. पाञ्चरात्रे॥
९. पराशरसं. ३-१०४॥

वैदिकब्रह्मविद्यानिष्ठत्वस्याऽपशूद्राधिकरणभाष्ये श्रीभाष्यकारैः शौनकवचनेनोपपादितत्वात् 'तान्त्रिकं वैश्यशूद्राणाम्'इति प्रायिकोक्तिरपि विद्याविहीनशूद्रविषयैव । न च शौनकवचनस्य प्रारब्धविदशूद्रमात्रविषयत्वात् प्रकृते तन्न्यायानवतारश्शङ्क्यः । पराङ्कुशादिकर्तृकपूर्वसिद्धविद्यायामेवास्माभिस्तेषामन्वयोक्त्या तापःपुण्ड्रनामसंस्कारपूर्वकगुरुपरम्परोपदेशदशायामेव तत्सिद्ध्या मन्त्रसंस्कारकाले सर्वेषामपि तत्सिद्धविद्यात्वेन विरोधाभावात्।न च शरणागतिविद्याया अन्यतरविद्यापेक्षया न्यूनताशङ्का । "सत्कर्मनिरतास्सिद्धास्सांख्ययोगविदस्तथा । नार्हन्ति शरणस्थस्य कलाङ्कोटितमीमपि" इत्यादिना तस्याः समाभ्यधिकत्वाभावात् । न च विदुरादीनां पूर्वजन्माभ्यासजनितापुरुषतन्त्रमानसब्रह्मचिन्तासन्तानानुवृत्तिमात्रस्यैवाऽभ्युपगमात् न तद्वृत्तानामेतद्वचनसङ्कोचकत्वमिति वाच्यम् । चतुर्वेदधरान् ऋषीन्प्रति धर्मव्याधेन ब्रह्मविद्याप्रवचनस्य महाभारतप्रसिद्धत्वेन तस्यापुरुषतन्त्रव्यापारत्वस्य वक्तुमशक्यत्वात्। किञ्च' तान्त्रिकं वैश्यशूद्राणाम्" इत्यस्य सावधारणत्वं वदन् वादी प्रष्टव्यः।तेनावधारणेन किं व्यवच्छिद्यते इति।वैदिकं कर्मैवेति चेत्।किमिदं वैदिकं कर्म।प्रणवसहिताष्टाक्षराङ्गकर्मेवेति चेत्; तर्हि तावन्मात्रनिषेधे पुरुषसूक्ताद्यङ्गकभगवदाराधनाधिकारश्शूद्रादीनां दुर्वारस्स्यात् । किञ्चोपनयनसंस्काराभावेन वेदाध्ययनानर्हाणां शूद्रादीनां प्रणवघटितमन्त्राङ्गककर्मणामेवाप्रसक्ततया तद्व्यवच्छेदायोगाच । न च विशेषविधिबलेन तत्प्रसक्तिः । तर्हि कोऽयं विशेषविधिः । वैष्णवत्वनिमित्तकाष्टाक्षराङ्गकनित्यनैमित्तिकादिविधिरेवेति चेत्। किं 'वैष्णवोऽष्टाक्षराङ्गककर्म कुर्यात्' इति 'वैष्णवत्वरूपसामान्यधर्मपुरस्कारेण प्रवृत्ता,उत 'वैष्णवशूद्रस्तथा कुर्यादि'ति विशेषधर्मपुरस्कारेण । न तावदाद्यः तस्य त्रैवर्णिकवैष्णवपरिग्रहेणैव शान्ताकाङ्क्षतया शूद्रेषु तत्प्रसञ्जकत्वायोगात् । नापि द्वितीयः-विशेषप्रमाणप्रतिपन्नस्य प्रतिषेधायोगात् । न च कलञ्जभक्षणादिवत् रागप्राप्तमेव शूद्राणां वैदिककर्म निषिध्यत इति वाच्यम् रागप्राप्तकर्मत्वयोर्व्याघातात्। विधीयमानं हि कर्म।न हि रागप्राप्ते विधिरस्ति।उक्तञ्च तत्र "त्रिविधं कर्मसम्प्रोक्तमि"ति वैदिकादीनां वैधकर्मत्वम् । ननु नास्माभिरत्र केवलरागप्राप्तशूद्रादिकर्तृकाष्टाक्षरग्रहणस्य व्यवच्छेद उच्यते; किन्तु त्रैवर्णिकाचार्यकर्तृकदक्षिणालोभहेतुकशूद्रादिविषयकाद्यष्टाक्षराद्यङ्गकपञ्चसंस्काराद्येव व्यवच्छिद्यते । तस्मान्नोक्तदोषावकाश इति चेत् - न: 'तस्माच्छूद्रसमीपे नाध्येतव्यम्" "मन्त्रं नियतमग्र्याणां यो हीनाय प्रयच्छति । स वै हीनगुरुर्न्यस्तेन सार्धं पतत्यधः" इत्यादिनैव तन्निवृत्त्या तत्प्रसक्त्यभावात्।नच तत्रापि विशेषशास्त्रेण प्रसक्तिसिद्धिः।तत्किं सामान्यधर्मपुरस्कारेण प्रवृत्तम् उत विशेषेणेति । पूर्ववद्विचारेणैव तदनुपपत्तेः । तस्मात् "तान्त्रिकं वैश्यशूद्राणाम्"इत्यादेस्सावधारणतया नियमपरत्वं न कथञ्चिदुपपद्यत इति दृष्टार्थवैदिकाष्टाक्षरग्रहणसर्वाधिकारत्वस्य न कोऽपि विरोध इति विस्तरभयात् विरम्यते ।

अथ यदुक्तं 'पूर्वाचारविरोधात्' इति, तदप्यनुपपन्नम् । विकल्पासहत्वात् । तथा हि सर्वशिष्टाचरणात् पूर्वाचारविरोधः प्रतिपिपादयिषितः; कतिपयादाचरणाद्वा।नाद्यः अस्मत्कूटस्थैस्सर्वैर्विशिष्टैस्स्त्रीशूद्रादिवैष्णवानां वैदिकाष्टाक्षरोपदेशात्, श्रीलोकाचार्याद्यनुगृहीतसर्वाधिकाररहस्यत्रयव्याख्यासु सर्वासु वैदिकाष्टाक्षरस्यैव व्याख्यातत्वाच्च । नापि द्वितीयः-कतिपयानाचरणस्य सर्वधर्मानुगतत्वेन सर्वेषां धर्माणां त्याज्यतापत्तेः । ननु सर्वलोकप्रत्ययिततमपूर्वपुरुषाचार एव पूर्वा-

१ लक्ष्मीतन्त्रे. १७-६२ ॥

२.

३ भारद्वाजसं. १-२५ ॥

चारशब्देन विवक्षित इति चेन्न ; तस्यापि विकल्पासहत्वात्। किं तादृशाः पुरुषाः भगवदवताररूपा विवक्षिताः-उत भगवदभिमताः पौराणिकाः,नो चेत्पराङ्कुशादयः, अन्यथा यामुनादयो वा। नाद्यः-बौद्धमतप्रवर्तनगोपकन्योन्मादनादीनां धर्मत्वापत्त्या भगवदाचाराप्रामाण्यस्य त्वयैवोक्तत्वात् । नापि द्वितीयः - पञ्चपाण्डवैकदारग्रहणसुग्रीवज्येष्ठभार्यागमनचतुर्मुखकृतस्वपुत्रिकापाणिग्रहणेन्द्रचन्द्रपराशरादिधर्मव्यतिक्रमसाहसादीनां धर्मत्वापत्त्या तेषामपि तथात्वस्य त्वयैवोक्तत्वात्। नापि तृतीयः-पराङ्कुशादीनां विदुराद्यपेक्षयाप्यतिशयितप्रभावत्वेन "तेषां तेजोविशेषेण प्रत्यवायो न विद्यते" "तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरः" इति न्यायेन तदाचाराणामस्मान्प्रत्यनुष्ठापकत्वाभावस्य त्वयैवोक्तत्वात् । तेषां वैष्णवमात्रप्रत्ययिततमत्वेन सर्वलोकप्रत्ययिततमत्वाभावाच्च । एतेन तुरीयकल्पोऽपि प्रत्युक्तः । उभयवादिसम्प्रतिपन्नपूर्वाचार्याचारग्राहकप्रमाणाभावाच्च । ननु नास्माभिस्सर्वेषां भगवदाचारादीनामप्रामाण्यं प्रतिपाद्यते,किन्तु शास्त्रविरुद्धानामेवेति चेन्न; तस्यापि विकल्पासहत्वात्।किं शास्त्रविरुद्धत्वं नाम स्मृतिविरुद्धत्वं श्रुतिविरुद्धत्वं वा । नाद्यः-शाक्यादिग्रन्थानामपि वेदमूलत्वे प्रामाण्यापत्तिवारणाय स्मृतीनां मूलसिद्धेः शिष्टनिबन्धनत्वस्यैवावश्याङ्गीकर्तव्यतया दुर्बलतया शिष्टाचारबाधायोगात् । नापि द्वितीयः-श्रुतिविरुद्धत्वस्य ग्रहणाग्रहणश्रुत्योर्व्यभिचरितत्वात् । न चाश्रुतित्वे सति श्रुतिविरुद्धत्वमव्यभिचरितमिति वाच्यम् । 'नादित्यो यूपः' 'न यजमानः प्रस्तरः' 'नायुर्घृतम्' इत्यादिप्रत्यक्षे व्यभिचारात्। न च विषये श्रुत्यपेक्षया दुर्बलत्वे सति श्रुतिविरुद्धत्वमव्यभिचरितमिति वाच्यम् । आचारे श्रुत्यपेक्षया दुर्बलत्वासिद्धेः । अध्ययनपरम्परया शिष्टैः प्रवर्तनादेव हि वेदानां वेदत्वमन्येषामतथात्वञ्च ज्ञायते। बहवः शिष्टाः, 'यं यं वेदा ब्रूयुः, त एव वेदाः ; यन्न वेदा ब्रूयुः, न ते वेदाः' इत्येव हि व्यवस्था । किञ्च, अतिविततगहनगम्भीरतया दुर्ग्रहेषु वेदार्थेषु यमर्थं शिष्टा अभिमन्यन्ते, तत्रैव हि वेदानां प्रामाण्यम्। अत एव हि "को धर्मस्सर्वधर्माणां भवतः परमो मतः" इति ज्ञानाधिकाभिमतिरन्विष्यते।आहुश्च परमाचार्याः—"विधयश्च वैदिकास्त्वदीय गम्भीरमनोऽनुसारिणः" इति । "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति लोकप्रसिद्ध एवायमर्थः । श्रुतिरप्यन्ततो गत्वा "तथा तेषु वर्तेथाः" इति शिष्टाचारमेव प्रमाणयति । आह चापस्तम्बः-"धर्मज्ञसमयः प्रमाणं। वेदाश्च" इति । वेदात्पूर्वमाचारप्रामाण्यमनुष्ठापनांशे वेदानामाचारमुखनिरीक्षकत्वरूपमप्राधान्यञ्च-'वेदाश्च' इति चकारेणाऽन्वाचयार्थेन दर्शितम्। श्रेष्ठसमाचारस्यानुष्ठापनांशेऽनन्यसाधारणं प्राधान्यञ्च—"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरे जनाः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति गीतम् । प्रसिद्धञ्च शास्त्रविरुद्धेऽप्यर्थे शिष्टानुष्ठिते निर्विचिकित्समनुधावनम् । "पितुर्दशगुणं माता गौरवेणाऽतिरिच्यते" इत्यादिना चिरकार्युपाख्यानेन चोपबृंहितायाश्श्रुतेर्विरुद्धं पितृवचनमात्रेण मातृहननम् । अत एव हि जामदग्न्यकृतमातृशिरच्छेदस्य साहसपक्षनिक्षेपः शास्त्रविद्भिरभिमन्यते । एवं "न हिंस्यात्सर्वा भूतानि" अस्वर्ग्यं लोकविद्विष्टं धर्मम-

---

१. भागवते. १०-३३-३० ॥
२.
३. भारते अनु. २५४-३ ॥
४. स्तोत्ररत्ने. २० ॥
५. शाकुन्तलनाटके. १. अङ्के. २२. श्लो ॥
६. तै. शिक्षा. १२-५ ॥
७. आपस्तम्बधर्मे. १ १-२-३ ॥
८. गीता.३-२१॥ ९. वसिष्ठधर्मे. १ ३.अ॥
१०.
११. बृहन्नारदीयेपु. १२-१२ ॥

प्याचरेन्न तु" इत्यादिशास्त्रविरुद्धं पितृवचनमात्रेण सर्वप्राणिहिंसाकरं सागरेण भूलोकभेदनम्, एवमेव कण्डुकृता गोहत्तिरपि "राजहा ब्रह्महा गोघ्नः" इत्यादिना प्रतिषिद्धा।तदेतत्त्रितयमप्युदाहृत्य,मातुर्महाशोककरम्. सर्वलोकविद्विष्टम्, पितुरपि प्राणहानिकरम्, पितृवचनपरिपालनम्, आचार्यादिवचनमप्यतिलङ्घ्य दाशरथिना सामान्यधर्मप्रवर्तनार्थमवतीर्णेनाऽनुष्ठितं हि दृश्यते।तस्मादिदपेक्षया पूर्वाचारस्य दौर्बल्यासम्भवात्, स्वविषये श्रुत्यपेक्षया दुर्बलत्वे सति श्रुतिविरुद्धत्वमाचारप्रामाण्यप्रयोजकमित्युक्तिर्दुरुक्तिरेव । अथ श्रेष्ठसमाचाराणां कर्तव्यबुद्ध्यानुष्ठितानां हेतुदर्शनविधुराणामस्त्येव प्रबलप्रमाणत्वम् । यद्देशिकानुगृहीतमप्रामाण्यम्,तत्सर्वं लोभादिमूलकाचारविषयम् । न कर्तव्यतयानुष्ठितविषयम् । तथा च पूर्वाचारप्रामाण्यस्याविप्रतिपन्नत्वेन प्रकृते तद्विरोधस्सूपपाद इति चेत्,—अलमनवधानेन । पूर्वमेव कतिपयानाचरणस्यादोषताया उक्तत्वात् । —ननु प्रत्ययिततमसर्वशिष्टानाचरणे दोष एव।प्रत्ययिततमास्तु पुराणादिप्रसिद्धा उभयवादिसम्प्रतिपन्ना एव।तथा च तादृशविदुरकैशिकपराङ्कुशादिभिस्सर्वैस्त्रैवर्णिकशिष्टैर्वेदग्रहणस्य वर्जितत्वात्, तदाचारविरोधोऽत्र दुष्परिहर एवेति चेन्न : तेषामाचाराणां दृष्टहेत्वन्तरदर्शनेनात्र प्रामाण्यायोगात् । तथा हि "शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे" इति यद्विदुरवचनम्, तत् न वैदिकानधिकारप्रयुक्तम् । तच्चरमकाले धर्मपुत्रं प्रति अशरीरवाण्या यतिसंस्कारविधानादेव तस्य सर्ववेदाधिकारस्य सिद्धत्वात्। किन्तु-लोकसङ्ग्रहार्थं वा नैच्यानुसन्धानप्रयुक्तं वा स्वोपदेशेन धृतराष्ट्रस्य दृढतरप्रत्ययो नस्यात्,देवर्षिवरमुखेनोपदेशे तु प्रत्ययदार्ढ्यं स्यादिति तन्मुखेनोपदेशार्थं स्वानुपदेशव्याजमात्रकथनं वेत्यन्यथासिद्धम् । एवमेव कैशिकपराङ्कुशाद्याचाराणामप्यन्यथासिद्धिर्द्रष्टव्या । न हि खगाधालेशवैभवमात्रेण ब्राह्मणोत्तमयशापचारमहापातकनिबन्धनब्रह्मराक्षसत्वजातिमोचकस्य कैशिकस्य स्वदुर्जातिदोषसद्भावसम्भावनाशङ्कागन्धमप्यर्हति । तस्मात्तस्य "नमो नारायणेत्युक्त्वा श्वपाकः पुनरागमत्" इत्यत्र प्रणवचतुर्थ्योरमुक्तकण्ठमनुसन्धानम्- "अत्र द्वयम्" इति भाष्यकारेणातिगुह्यतया गोपनवदेव।नानधिकारप्रयुक्तम् । "नेल्वहैयाल् नमो नारायणावेन्रु" "वायिनाल् नमो नारायणावेन्रु" इत्यादिषु "गुरुमुखमनधीत्य प्राह वेदानशेषान्" इत्यनधीत्यैव सर्ववेदप्रवचनार्हस्यापि श्रीभट्टनाथस्य प्रणवचतुर्थीविधुरानुसन्धानदर्शनेन तस्याऽवश्यं लोकसङ्ग्रहार्थत्वस्य वक्तव्यतया तथैवात्रापि अन्यथासिद्धेश्च । एवं पराङ्कुशस्य स्वप्रबन्धेषु मुक्तकण्ठं संहिताकारप्रणवाननुसन्धानमपि भट्टनाथाद्यनुसन्धानवत् सर्वाधिकारस्वरूपप्रबन्धधर्मप्रयुक्तमेव। तस्यैव दिव्यप्रबन्धसामान्ये अन्वितत्वात्।न हि त्रैवर्णिकदिव्यसूरिप्रबन्धेषु सर्वाधिकारेषु कुत्रचित्संहिताकारप्रणवानुसन्धानं श्रूयते।ननु 'वेदत्तुक्कोमेन्नुमदुपोल्'' इत्यादिश्रूयत एवेति चेत्,—भ्रान्तोऽसि । न हि स प्रबन्धः सर्वाधिकारः।किन्तु श्रीवैष्णवमात्राधिकारः। उपदेशरूपत्वात्। न ह्युपदेशसत्पात्रभूतानां चरमपर्वनिष्ठानां प्रणवानुसन्धानं निषिद्धम् । किन्तु अवैष्णवस्त्रीशूद्रादीनामेव दिव्यसूरिप्रबन्धेषु प्रतिदशकावसानं फलान्तरश्रुतेरपि दर्शनात् अविशेषाधिकारिणामपि अधिकारप्रतीतेः, शाक्यादिभिरपि तदभ्यासस्य पूर्वाचार्यैरभ्युपगतत्वाच्च ते सर्वाधिकारा इति तत्रैव प्रणवानुसन्धानं वर्जितम्।एतेन तत्त्वदीपकृन्निगमान्तदेशिकप्रभृत्यनुगृहीतसर्वाधि-

---

१.
२. भारते. उद्योग. ४१-५ ॥
३. वराहपु. १३९-५३ ॥
४. शरणागतिगद्ये ॥
५. पल्लाण्डु. ११ ॥
६. मुदलायिरम्. ४-५-२ ॥
७. मुदलायिरम्. प्रथमश्लोकः ॥

कारशब्दोऽपि व्याख्यातः। एवं श्रीमधुरकविसूरिं ब्राह्मणोत्तमं प्रति श्रीपराङ्कुशेनाचार्यकरणात्, तादृशेन लोकसारङ्गमहामुनिना स्कन्धे योगिवाहमारोप्य श्रीरङ्गनाथसन्निधिम्प्रति आतिवाहिकपतगेश्वरप्रणवरथादिकृत्यकरणात्, श्रीभक्तिसारम्प्रति महाव्याघ्रपुरे स्वामिना यागमध्ये अग्रपूजाप्रदानात्, श्रीपरकालस्य श्रीकृष्णपुरनाथेन अष्टाक्षरोपदेशाच्च सर्वेषामत्रैवर्णिकदिव्यसूरीणां प्रणवाधिकारस्य कैमुत्यसिद्धतया तत्प्रबन्धेषु तदनुसन्धानस्य सर्वाधिकारार्थत्वस्यैवाऽवश्यवक्तव्यत्वाच्च। न योगिवाहस्य श्वपचत्वजात्यनपगमे तस्य भगवद्गर्भगृहान्तरानयनं तच्छरीरानुप्रविष्टस्य भगवद्विग्रहस्य निर्विचिकित्सं युष्माभिस्सेवनमित्यादिकमुपपद्यते। ततश्चेत्थं पञ्चमजातीयस्यापि जात्यपगमाद्यभ्युपगमे पराङ्कुशादीनां कैमुत्यसिद्ध इति दुर्वार एव हि तेषां प्रणवाद्यधिकारः। —ननु दिव्यसूरयो न केवलं बद्धचेतनाः, अपि तु भगवदभिनवदशावतारभूताः। तथैव श्रीमद्रहस्यत्रयसारेऽनुगृहीतत्वात्। तथा च यथा मत्स्यकूर्मवराहादिरूपेणावतीर्णस्यापि भगवत उत्कृष्टकुलानुवर्तनीयत्वं सर्ववेदाद्यधिकारित्वञ्च भवति, तद्वदेव दिव्यसूरीणामपि तत्सर्वं भवतीति नैतावता जात्यपगमादिसिद्धिरिति चेन्न,—तथा सति हंसहयग्रीवादीनामिव दिव्यसूरीणामपि सर्ववेदान्तप्रवर्तनाधिकारे सत्यपि तेषां स्वप्रबन्धेषु संहिताकारप्रणवानुसन्धानवर्जननियमस्याऽन्यथासिद्धेस्त्वयैव निर्वाह्यत्वेनास्मदिष्टसिद्धेरक्षतत्वात्। —ननु सत्यमस्माभिरन्यथासिद्धिर्निर्वाह्यैव, तथापि न त्वदिष्टसिद्धिः। लोके पञ्चमादिजातीयैस्संहिताकारेण प्रणवाद्यनुसन्धानं न कर्तव्यमिति नियमशिक्षार्थतयैव तस्यान्यथासिद्धेर्निर्वाह्यत्वात् इति चेत्; तर्हि योगिवाहस्य लोकसारङ्गमहामुनिस्कन्धारोहाद्यनुष्ठानस्यापि विशेषाधिकारिविषये सामान्यजातिनियमवर्जनमप्यावश्यकमिति विशेषनियमशिक्षार्थत्वसिद्ध्याऽस्मदिष्टसिद्धेर्निष्प्रत्यूहत्वात्। न च तेषां स्वप्रबन्धेषु प्रणवाननुसन्धानादिकमेव नियमशिक्षार्थं स्वजातिविपरीताचरणं सर्वं बौद्धावतारवृत्तिवत् केवलस्वातन्त्र्यकृतमित्यत्र किञ्चिन्नियामकमस्ति। किञ्च, यदि योगिवाहादीनां साक्षाद्भगवदवतारत्वमेव स्यात्, तर्ह्येवं शङ्क्येतापि। न चैतदुपपद्यते। श्रीमद्रहस्यत्रयसारे गुरुपरम्पराधिकारे तेषां भगवदवतारत्वोक्तेरौपचारिकत्वस्य दर्शितत्वात्। —"पूर्वोत्पन्नेषु भूतेषु तेषुतेषु कलौ प्रभुः। अनुप्रविश्य कुरुते यत्समीहितमच्युतः" एन्गिरपडिये पराङ्कुशपरकालादिरूपत्ताले अभिनवदशावतारत्तैप्पण्णि मेघङ्गल् समुद्रजलत्तै वाङ्गि सर्वोपजीव्यमान तण्णीराह उमिलुमाप्पोले वेदार्थङ्गलिल् वेण्डुं सारतमांशत्तै सर्वर्क्कुं अधिकरिक्कलान भाषैयाले सङ्ग्रहित्तुक्काट्टियुम्" इति हि तत्रत्या सूक्तिः। तथा-सारास्वादिन्याम्-"तत्त्वत्रयाधिकारत्तिले 'शिल जीवर्हळै विग्रहविशेषत्ताळुम्, शक्तिविशेषत्ताळु-मधिष्ठित्तु अतिशयितकार्यङ्गळै नडत्तुहिरदुवुं विभवभेदम्' एन्नुं तामे निष्कर्षित्तरुलिनपडियै इदुवुं विभवावतारविशेषमेन्नु करुत्ताले यित्तै ओरु दशावतारमाह अरुलिचेयूदार्" इति। तथा च पराङ्कुशादीनां भगवदवतारत्वोक्तेः "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वम्"[1] इत्यादिन्यायेन वा, स्त्रीशूद्रादिषु श्रीवेङ्कटेशवत्कार्यकालानुप्रवेशेन वान्यथासिद्धत्वात्, तेषां साक्षाद्भगवदवतारत्वं दुर्लभमेव। अत एव हि युष्मदीयैः श्राद्धादिकाले दिव्यसूरिवर्जं भगवदाराधनं क्रियत इति लोकप्रसिद्धिः। नन्वस्त्वेवं, तथापि न त्वदिष्टसिद्धिः। दिव्यसूरिभिस्स्वजातिनियमातिक्रमाणां भूतावेशन्यायेन भगवदावेशकृतत्वशङ्कया तेषां प्रामाण्यायोगात् इति चेत्—भ्रान्तोऽसि। "अनुप्रविश्य कुरुते यत्समीहितमच्युतः" इति स्वाभिमतकार्यार्थभगवदनुप्रवेशो ह्युच्यते। यदि तेषामतिक्र-

---

१ गीता. १०·४१ ॥

मांणां केवलभगवदनुप्रवेशकारितत्वं ब्रूषे, तर्हि तादृशस्य प्रबन्धवचनस्य भगवदभिमतत्वेन तत्प्रबन्धानां प्रमाणतया परिग्रहवत् तदाचाराणामपि भगवदभिमतत्वसिद्ध्या तेषामपि प्रमाणतयाङ्गीकारस्यावश्यकत्वेनाऽस्मदिष्टसिद्धेर्निष्प्रत्यूहत्वात् । तस्माद्दिव्यसूरिप्रभृतीनां सर्ववेदाधिकारत्वस्य तत्तदाचारादिभिरेव सिद्ध्या नास्मदभिमतवैदिकाष्टाक्षरसर्वाधिकारत्वस्य तदाचारविरोधगन्धोऽपि । प्रत्युत तवैव तदाचारविरोधो दुष्परिहरः।तथा हि पूर्वाचार्यग्रन्थेषु कुत्रचिदपि ''अं नमो नारायण'इत्यनुसन्धानस्याश्रुततया त्वदभिमतताान्त्रिकमन्त्रोपदेशस्य सम्प्रतिपन्नसर्वशिष्टबहिष्कृतत्वेन ''अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु'' इति निषिद्धतया तस्यायुक्तत्वात् । किञ्च योगिवाहेन स्वप्रबन्धाद्यगाथात्रयादिषु क्रमेणैवाक्षरत्रयानुसन्धानेन स्वस्य संहिताकारप्रणवानुसन्धानसूचनपूर्वकं प्रणवानधिकारिणामपि प्रणवस्थाने असंहिताकारप्रणवानुसन्धानमेव कार्यमिति ज्ञापितत्वेन प्रणवस्थाने युष्माभिः 'अम्' इति बीजानुसन्धानस्य तद्विरुद्धत्वाच्च। अपि च श्रीपराङ्कुशेन चरमप्रबन्धाद्यगाथाद्यपादत्रयादिषु उद्गीतप्रणवाक्षरत्रयानुसन्धानेन स्वस्य सर्ववैदिकविद्याप्रवचनाधिकारज्ञापनपूर्वकप्रणवानधिकारिणामपि तत्स्थाने व्यस्तप्रणवाक्षरत्रयानुसन्धानमेव कार्यमिति शिक्षिततया तत्परित्यागेन युष्माभिः प्रणवस्थाने बीजानुसन्धानस्य तद्विरुद्धत्वाच्च । अन्यच्च ''अदिलुं अन्यशेषत्वं कलिहैये प्रधानम् । भगवच्छेषत्वत्तिलुं अन्यशेषत्वं कलिहैये प्रधानम्'' इत्यादिनानुगृहीतस्योकारार्थावश्यकत्वस्य, ''मैरन्दुं पुरन्तोलामान्दर''.''अडियेन् ओरुवर्क्कुरियेनो''इति श्रीभक्तिसारपरकालसूरिभ्यामपि आदृतत्वेन तादृशप्रतिपादकोकारापेक्षापूर्वकं युष्माभिरनुष्ठीयमानस्य तान्त्रिकमन्त्रग्रहणस्य तद्विरुद्धत्वाच्च । तस्मात्त्वन्मतमेव पूर्वाचारविरुद्धमिति नास्माकं तद्विरोधगन्धोऽपीति सर्वं समाहितम् ॥

अथ यदुक्तं 'प्रमाणाभावात्' इति; तदप्यत्यन्तमनुपपन्नम् । रागप्राप्तस्य दृष्टार्थमन्त्रग्रहणस्य प्रमाणान्तरानपेक्षणात् । किञ्च, ''गतिरष्टाक्षरो नृणामपुनर्भवकाङ्क्षिणाम्'' इत्यादिसामान्यवचनेनैव तद्ग्रहणसिद्धेश्च।अपि च''एकाक्षरां द्विपदां षट्पदां च वाचं देवा उपजीवन्ति विश्वे-वाचं गन्धर्वाः पशवो मनुष्याः'' इति श्रुतेः प्रणवमन्त्रशेषद्वयविषयतया श्रीरहस्यत्रयमीमांसाभाष्यसारप्रकाशिकाद्युदाहृततयोभयवादिसम्प्रतिपन्नाया एवात्र प्रमाणत्वाच्च।अयमर्थः—'एकाक्षरां-वाचम्'—''ओमित्येकाक्षरम्'' इत्युक्तं प्रणवम् । 'द्विपदां-वाचम्'—''नम इति पश्चात् । नारायणायेत्युपरिष्टात्'' इत्युक्तपदद्वयात्मकं मन्त्रशेषम् । 'षट्पदां-वाचम्'—''षट्पदोऽयं द्विखण्डः'' इत्यादिरहस्याद्युक्तं मन्त्ररत्नञ्च। सर्वे देवाः, सर्वे गन्धर्वाः, सर्वे पशवः,सर्वे मनुष्याश्च, उपजीवन्ति-तत्त्वज्ञानार्थमभ्यस्यन्तीत्यर्थः । अत्र मन्त्रशेषस्य पृथगुपादानं तस्य प्रणवविवरणत्वस्य द्वयविवरणित्वस्य च ज्ञापनमुखेन विवरणविवरणिभावेनैव सर्वेषामुपजीवनमिति ज्ञापनार्थम् । एतेन प्रणवादीनां दृष्टार्थत्वस्यैव सर्वाधिकारत्वमिति सिद्धम् । अत्र 'पशु' ग्रहणं गजेन्द्रादिवत् सम्भवाभिप्रायेण । यद्वा पशु शब्दः-पशुकल्पपरतया मनुष्यशब्दविशेषणम् । तथा च ''पशवो मनुष्याः' इत्यनेन - ''तस्माच्छूद्रो बहु पशुरयज्ञीयः''इत्युक्ताः पशुकल्पाः शूद्रादय उच्यन्ते।तस्माच्छूद्रादीनामपि दृष्टार्थमन्त्रग्रहणस्य निरुक्तश्रुतिसिद्धत्वात् नात्र प्रमाणदौर्लभ्यमिति । प्रत्युत तवैवायं प्रमाणदौर्लभ्यरूपो दोषो दुस्तरः । न हि

१. बृहन्नारदीयेपु. १२-१२ ॥
२. मुमुक्षुप्पडि. १-६१, ६३ ॥
३. ४ अन्दादि. ६८ ॥
४. तिरुमोलि. ८-९-३ ॥
५. नारदी. अष्टा. १-४१ ॥
६. यजु. अष्टके. २. प्रश्न ८,अनु-७, पं-९१॥
७. अष्टश्लो. ५ ॥

(२९) पदत्रयार्थस्य भेदाकाङ्क्षायामाह—पदत्रयमपीति ।

मू ।। मून्रुपदमुम् मून्रर्थत्तै चोल्लुहिरदु ।। २९ ।।

छा ।। पदत्रयमपि अर्थत्रयम् आह ।। २ ।।

(३०) तानर्थान् विशदयति—तच्चेति ।

मू ।। अदावदु-शेषत्वमुम्, पारतन्त्र्यमुम्, कैङ्कर्यमुम् ।। ३० ।।

छा ।। तच्च-शेषत्वम्, पारतन्त्र्यम्, कैङ्कर्यञ्च ।। ३० ।।

व्या ।। एतदभिप्रायेणैव पूर्वं *"स्वरूपञ्च स्वरूपानुरूपं प्राप्यञ्च" इति वाक्यार्थो वर्णितः ।। ३० ।।

---

स्त्रीशूद्रवैष्णवाः 'अं नमो नार अयण' इति मन्त्रं गृह्णीयुरिति वचनलेशं पश्यामः । ननु यदि तान्त्रि-
काष्टाक्षरस्मरणं स्त्रीशूद्राद्यर्थं न स्यात् तर्हि तस्य किं प्रयोजनमिति चेत् किं कुर्मो वयम्।पशुमा-
रणकर्मदारुणा हि मीमांसकाः श्रुतिविरुद्धां स्मृतिमुपलभ्य तज्जीवदशां नानुमन्यन्ते । यदाह जैमिनिः
—"[1]विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति । "ओमित्येकाक्षरम्, नम इति द्वे अक्षरे, नारा-
यणायेति पञ्चाक्षराणि, इत्यष्टाक्षरं छन्दसा गायत्री च" इति ह्यष्टाक्षरोद्धारश्रुतिः । अत्र 'ओम्' इ-
त्यादीनामेकाक्षरत्वादेः प्रत्यक्षसिद्धत्वेऽपि पुनस्तदुक्तेः 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन
प्रतिपदमक्षरसङ्ख्यानियमार्थत्वात्।'इत्यष्टाक्षरम्'इत्युक्तेश्च एवमेवाष्टाक्षरत्वं नान्यथेति नियमार्थ-
त्वाच्च । तद्विरोधेन 'अमित्येकाक्षरम्, नार अयणेति पञ्चाक्षराणि, नार अयणायेति षडक्षराणि' इ-
त्यादिश्रुतिकल्पनस्यासम्भवेन तान्त्रिकाष्टाक्षरस्मृतिर्निर्मूलतया वेष्टनस्मृ..वत् अप्रमाणैव । अथ श्रुति-
विरुद्धस्मृतीनां मूलश्रुत्युपलम्भदशायां कल्पान्तरे लोकान्तरे वा सम्भवेदिति मत्याश्रयणेऽप्यस्याप्रामा-
ण्यमेव । उभयतो भ्रष्टत्वात् । न हि वैष्णवास्तान्त्रिकाष्टाक्षरं गृह्णीयुः।तस्य नारपदविच्छेदेन संज्ञात्वा-
पगमेन भगवदसाधारण्यप्रयोजकत्वासम्भवेन अशिष्टपरिग्रहार्थत्वात् । नापि शैवादयो गृह्णीयुः।। 
वैष्णवधर्मशास्त्रोद्धृतत्वात् । तस्मान्मूलोपलम्भसम्भावनायामपि तदधिकार्यलाभात् वैयर्थ्यमेवास्य ल-
लाटपट्टलिखितमिति तूष्णीमुपशाम्यतु भवान् इति सर्वं समञ्जसम् ।। २८ ।।

(पदत्रयमपीति)-त्रित्वसङ्ख्यया विरोधद्योतकाऽपि शब्देन च, न तु 'नारायणाय'इत्येकप-
दमात्रमर्थगमकमिति सूच्यते । तथा च 'अर्थगमकत्वरूपकेवलयोगप्रवृत्तिनिमित्तमादाय वाक्यमेव
अत्र 'पद' शब्दविवक्षितम्' इति भावः ।। २९ ।।

(तच्चे,ति-अर्थत्रयञ्चेत्यर्थः । (शेषत्वम्) - परगतातिशयाधानेच्छया उपादानार्हत्वमित्यर्थः ।
(पारतन्त्र्यम्) - अदृष्टद्वारकफलसाधनानुष्ठाने, फलभोगे च परकीयत्वप्रयुक्तं पराधीनत्वमित्यर्थः ।
(कैङ्कर्यम्)-किङ्करवृत्तिफलोपधानमित्यर्थः । अत्र, शेषत्वम् शाब्दम् । पारतन्त्र्यम्, कैङ्कर्यं च-
स्वसम्बन्धनिषेधेन तादर्थ्यप्रार्थनया च व्यङ्ग्यमित्यनुसन्धेयम् ।

अथ स्यात्,प्रकृते पदभेदप्रयोजकोऽर्थभेदो दुर्वचः।न च-'शेषत्वपारतन्त्र्यकैङ्कर्याणि क्र-
मेण पदत्रयार्थाः'इति वाच्यम्।तादर्थ्यरूपशेषत्वस्य'[2]तादर्थ्ये चतुर्थी वक्तव्या'इत्यनुशासनबलेन च-

---

* ९०-पुटे. ४-पं ।।

१. पूर्वमीमां. १-३-३ ।।

२. पाणि. वार्तिकम् ।।

तुर्थीशक्यार्थतया वाक्यभेदरूपपदभेदप्रयोजकार्थरूपत्वासम्भवात्। "शेषः परार्थत्वात्" इति सूत्रव्याख्यानावसरे 'परोद्देशप्रवृत्तिश्च पारार्थ्यमभिधीयते' इति तान्त्रिकैरुक्ततया परगतातिशयाधानेच्छाजन्यप्रवृत्तिविषयत्वस्यैव शेषशब्दप्रवृत्तिनिमित्तत्वेन प्रणवस्य-'म् आयैवाऽस्मि' इत्येवम् "भगवत एवाऽहमस्मि" इत्यादेरिव वर्तमानापदेशरूपत्वे प्रत्यक्षबाधेन नित्यवच्छ्रवणविरोधात्। 'म् आयैव स्याम्' इत्युक्तौ 'नारायणाय स्याम्' इत्यनेन पौनरुक्त्यात्।'आय नारायणाय स्याम्' इति पदैकवाक्यत्वसम्भवेन प्रणवस्य प्राथमिकवाक्यान्तरत्वासम्भवप्रसङ्गाच्च। 'परः-स्वव्यतिरिक्तः, तन्त्रम्-नियामको, यस्य, सः-परतन्त्रः' इति व्युत्पत्त्या पराधीनत्वस्यैव पारतन्त्र्यशब्दार्थतया,तस्य सखण्डनमश्शब्दबोध्यवाक्यार्थत्वासम्भवाच्च। स्वरूपस्थितिप्रवृत्तीनां भगवता स्वरूपेण सङ्कल्पतश्च धार्यत्वलक्षणपराधीनत्वस्यैव प्रणवप्रतिपन्नरक्ष्यरक्षकभावशेषशेषिभावलक्षणसम्बन्धद्वयविरोधिनिवर्तकत्वाभावेन,यत्किञ्चिन्निषेधपरत्वे त्वप्रसक्तप्रतिषेधापत्तेश्च, स्वभोगोद्देशेन प्रवृत्तेः स्वरक्षणे स्वान्वयस्य च 'मम नास्ति' इत्येवं निषेधे प्रत्यक्षबाधापत्तेश्च। 'म् मः, न स्याम्' इत्येवं प्रार्थनापरत्वे "स्वरूपानुरूपमान प्राप्यमुम्" इति पूर्वोक्तस्य नमश्शब्दे स्वरूपपरत्वस्य भङ्गप्रसङ्गाच्च। स्वरूपं निर्दिश्य 'म् मः न स्याम्' इति निषेधप्रार्थनाया अनवकाशपराहतत्वाच्च। अन्यथा प्रणवे स्वरूपोपदेशवैयर्थ्यस्य वज्रलेपत्वापाताच्च। 'शेषकिङ्कर' शब्दयोः पर्यायत्वेन कैङ्कर्यस्य तृतीयवाक्यार्थत्वासम्भवाच्च। कैङ्कर्यस्य शेषत्वरूपस्य चतुर्थीवाच्यत्वेन वाक्यार्थत्वासम्भवाच्च। 'नारायणायास्मि'इति सिद्धवन्निर्देशाभ्युपगमे प्रणवेन पौनरुक्त्यापत्त्या पदैकवाक्यत्वापत्त्या गतार्थत्वापत्त्या च 'नारायणाय स्याम्' इत्यध्याहारावश्यम्भावेन तादर्थ्यप्रार्थनाया एव वाक्यार्थतया वक्तव्यत्वाच्च—इति।

उच्यते। शेषत्वादित्रयं वाक्यार्थ इति युक्तमेव। "परगतातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपम्-स शेषः, परः-शेषी" इति वेदार्थसङ्ग्रहश्रीभाष्यकारसूक्त्यनुसारेण शेषत्वस्य नानापदार्थघटिततया'ब्राह्मणाय सूपः'इत्यादौ परांशस्य चतुर्थीप्रकृतिलभ्यतया,तद्गतातिशयाधानांशस्य सिद्धे चतुर्थीप्रकृत्यर्थे विषयत्वाम्यथानुपपत्तिबललभ्यतया, इच्छापेक्षया विषयत्वांशस्य प्रकृतिप्रत्ययार्थसंसर्गत्वेन लभ्यतया, इच्छापेक्षया साध्यत्वरूपयोग्यतालक्षणशक्तिविशेषस्य प्रत्ययस्य चाऽपरपदार्थस्य च संसर्गत्वेन लभ्यतया, उपादानार्हत्वरूपव्यापारविषयत्वात्मकशक्तिविशेषस्य सिद्धे अपरपदार्थे साध्यत्वानुपपत्तिलभ्यतया च इच्छांशस्यैवानन्यलभ्यतया चतुर्थीवाच्यत्वेन शेषत्वरूपोपाधेरपदार्थत्वेन वाक्यार्थत्वसम्भवात्।उकारार्थानन्यार्हत्वविशिष्टशेषत्वविशिष्टस्य मकारार्थस्य वाक्यार्थत्वसम्भवाच्च। शेषलक्षणश्रीभाष्यकारसूक्तौ "उपादेयत्वमेव" इत्यत्र उपादानार्हत्वस्यैव साध्यत्वानुपपत्तिलभ्यार्थत्वस्योक्तत्वेन प्रत्यक्षबाधानवकाशाच्च। "स एकाकी न रमेत""ईश्वराय निवेदितुम्" "स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी" इत्याद्यनुसारेण भगवतस्स्वार्थमेव सकलजगज्जन्मस्थितिलयनिमित्तोपादानभूततया, चेतनस्य स्वभोगोद्देशेनापि प्रवृत्तौ सर्वशेषिभूतपरभोगन्यूनताप्रसङ्गेन, पारतन्त्र्यशब्दस्य पराधीनत्ववाचित्वेऽपि'परभोगोद्देशेनैव प्रवृत्त्यर्हत्वं स्वभावः'इत्येवंरूपस्य फलभोगे पराधीनत्वस्य निरुपाधिकसौहार्दशालिनो भगवतस्सत्यसङ्कल्पस्य चेतनप्रवृत्तिसामान्यमनपेक्ष्य स्वाभाविकसौहार्दरूपनिर्हेतुकानुग्रहेण 'अहमेव रक्षिष्यामि' इत्येवंरूपसङ्कल्पविरोधितया, फलार्थभगवत्प्रसादोद्देश्यकचेतनप्रवृत्तेर्भगवदीयचेतनरक्षणप्रवृत्तिप्रतिबन्धकत्वेन केवलपरभोगरूपचेतनोद्देश्य-

१. पूर्वमीमां. ३-१-२ ॥
२. पूर्व. वार्तिकम् ॥
३. महोपनिषदि. १-१ ॥
४. श्रीविष्णुतत्त्वे ॥
५. श्रीरङ्गराजस्तवे. २-८७ ॥

(३१) एतत्पदत्रयेऽपि प्रथमपदं किमित्यपेक्षायाम्—'अत्र प्रथमपदं प्रणवः' इत्याह ।

सू ॥ इदिल् मुदल्पदं प्रणवम् ॥ ३१ ॥

छा ॥ अत्र प्रथमपदं प्रणवः ॥ ३१ ॥

व्या ॥ तथा च श्रुतिः "ओमित्यग्रे व्याहरेत्" इति। स्मृतिश्च *"प्रणवाद्यं नमोमध्यं नारायणपदान्तिमम् । मन्त्रमष्टाक्षरं विद्यात् सर्वसिद्धिकरं नृणाम्" इति ॥ ३१ ॥

(३२) अथ प्रणवार्थं विवक्षुस्तस्याक्षरत्रयात्मकतामाह—अत्रेति ।

---

स्यादृष्टद्वारकसाधनानुष्ठानं परकीयमेवेत्येवंरूपस्य फलसाधनानुष्ठाने पराधीनत्वस्य च प्रकृते पारतन्त्र्यशब्दविवक्षिततया नमश्शब्देनं स्वभोगोद्देश्यकप्रवृत्त्यर्हत्वलक्षणस्य परभोगं प्रत्यदृष्टद्वारकसाधनानुष्ठानानर्हत्वरूपस्य च शक्तिविशेषस्य स्वसम्बन्धनिषेधत्वरूपेण प्रतिपादने प्रणवावगतसम्बन्धद्वयविरोधिनिवर्तकतया नमश्शब्दस्याप्रसक्तप्रतिषेधत्वानापत्तेश्च । स्वभोगोद्देश्यकप्रवृत्त्यनर्हत्वलक्षणस्य अदृष्टद्वारकस्वरक्षणप्रवृत्त्यर्हत्वरूपत्वस्य च स्वसम्बन्धनिषेधाभ्युपगमेनात्रापि प्रत्यक्षबाधानवकाशाच्च । 'शेष-किङ्कर' शब्दयोः पर्यायत्वेऽपि, प्रणवे शेषवृत्त्यर्हत्वलक्षणस्वरूपतादर्थ्यस्य, तृतीयपदे शेषवृत्तिफलोपधानलक्षणवृत्तितादर्थ्यस्य विवक्षिततया पौनरुक्त्यानवकाशाच्च । पूर्वोक्तशेषत्वरूपस्वरूपयोग्यतावत्कैङ्कर्यफलोपधानस्यापि वाक्यार्थत्वसम्भवाच्च। 'नारायणाय स्याम्' इत्यध्याहृतकैङ्कर्यप्रार्थनायाः महावाक्यार्थत्वेऽपि तत्प्रार्थनोक्तेः केवलभगवद्भोगार्थप्रवृत्तिरूपं कैङ्कर्यं भगवत्प्रियतमत्वेन चेतनस्य परमपुरुषार्थ इत्येवं सिद्धोपायफलभूतकैङ्कर्यप्रतिपादन एव तात्पर्यात् । कैङ्कर्यस्य व्यङ्ग्यार्थस्यापि अर्थतः प्राधान्यमादाय कैङ्कर्यं वाक्यार्थ इत्युक्तेरुपपत्तेश्च —इति ॥ ३० ॥

पूर्वत्र मूलमन्त्रस्य पदत्रयात्मकत्वं साधितम् । अथ तत्पदत्रयं क्रमेण व्याख्यातुं पदत्रयक्रमः समर्थ्यत इति सङ्गतिः।(अत्र)-श्रीमन्त्रे। (प्रथमपदम्)-'पद्यते गम्यते,अनेन' इति पदम्। प्रथमं वाक्यमित्यर्थः । प्रणवरूपमूलार्थज्ञाने सत्येव मन्त्रशेषरूपविवरणप्रवृत्तेर्वक्तव्यत्वादिति भावः । प्रणवपदेन-"प्रणवो धनुश्शरो ह्यात्मा" इत्यादिवचने प्रणवस्य आत्मसमर्पणे करणमन्त्रत्वोक्त्या त्रयात्मकतया स्वरूपपरत्वं प्रत्यभिज्ञामुखेन सूचितम् । "ओं नमो नारायणायेति मन्त्रोपासकः" 'अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्वयम् । छन्दश्च देवी गायत्री परमात्मा च देवता ॥ शुक्लवर्णञ्च ओंकारं नकारं रक्तमुच्यते।मोकारं वर्णतः कृष्णं नाकारं रक्तमुच्यते।राकारं कुङ्कुमाभं तु यकारं पीतमुच्यते॥ णाकारमञ्जनाभन्तु यकारं बहुवर्णकम् । ओं नमो नारायणायेति मन्त्रः सर्वार्थसाधकः" "अष्टाक्षरमहामन्त्रं सर्वपापप्रणाशनम् । वक्ष्यामि तव राजेन्द्र पुरुषार्थैकसाधनम् ॥ विष्णुप्रियकरं मन्त्रं सर्वसिद्धिप्रदायकम्। नमो नारायणायेति जपेत्प्रणवपूर्वकम्" इत्यादिश्रुतिस्मृत्यादिकमत्रानुसन्धेयम्॥३१॥

(अत्र)-प्रणव इत्यर्थः । यथा मकारः, तथा अकार उकारश्च वर्णान्तरम् , न तु सन्ध्यक्षरैकदेश इत्यर्थः । "प्रत्यगानन्दम्" इत्यादिखण्डे "भूरिति ऋग्वेदादजायत" इत्यादिवाक्ये च

---

* पाञ्चरात्रे ॥　　१. मु. २-२-४ ॥
२. नारायणोप ॥
३. नारसिंहपु. १८-५-७ ॥
४. बृहन्नारदीयपु. १५-३७-३८ ॥
५. नारायणोप ॥
६. गोपथब्रा. पूर्वभागे. १-६ ॥

**मू ॥ इदु-'अ' एन्नुम् 'उ' एन्नुम् 'म' एन्नु मून्नु तिरुवक्षरम् ॥ ३२ ॥**

**छा ॥ अत्र 'अ' इति 'उ' इति 'म' इति त्रीणि श्रीअक्षराणि ॥ ३२ ॥**

**व्या ॥ अयं प्रणवः असंहिताकारेण त्र्यक्षरः, त्रिपदः, अर्थत्रयं बोधयति। संहिताकारेण एकाक्षरः, एकपदः, एकार्थप्रकाशकश्च भवति हि ॥ ३२ ॥**

---

"अकार उकार मकार इति" इति वर्णान्तरयोरेव कण्ठोक्तेः मकारसाहचर्यात्, "तानेकधा समभरत्" इति वर्णान्तरयोरेव सन्धिविवक्षया सम्भरणश्रवणाच्चेति भावः। (त्रीणि) इति-न त्वेकार्थशक्ताव्ययरूपैकाक्षराणीत्यर्थः। तटस्थशाब्दिकवाक्यात् मन्त्रोद्धारवाक्यस्य बलीयस्त्वादिति भावः। (श्री) इति मन्त्रोद्धारश्रुतिसिद्धत्वेन पूज्यत्वं विवक्षितम्। —ननु प्रणवस्य एकाक्षरत्वे अनन्यार्हशेषत्वरूपार्थासिद्धिः; त्र्यक्षरत्वे 'ओमित्येकाक्षरम्" इति श्रुतिविरोधः, अष्टाक्षरत्वासिद्धिश्चेत्यत आह—अयं प्रणवः असंहिताकारेणेति। संहिताया एकाक्षरत्वम्, असंहितायास्त्र्यक्षरत्वञ्चेति न विरोध इति भावः। 'मकारे अकारशब्दः स्मृत्यनुरोधेन गौणः प्रत्युक्तः' इति तात्पर्यदीपिकायाम्।

(अर्थत्रयम्)-इति, लुप्तविभक्तिकाकारस्य भगवच्छेषत्वरूपार्थप्रकाशकत्वात्, अवधारणार्थकोकारस्य अनन्यार्हत्वसम्बन्धार्थप्रकाशकत्वात्, मकारस्य तादृशशेषत्वाश्रयभूतज्ञातृत्वादिविशिष्टजीवात्मरूपार्थप्रकाशकत्वाच्चेत्यर्थः। (एकार्थप्रकाशकश्च) इति जीवस्वरूपरूपैकार्थप्रकाशक इत्यर्थः। "प्रणवो जीववाची स्यात् सामान्यादर्थसम्भवात्। शब्दतो जीववाची स्यात् राजपूरुषशब्दवत्" इत्युक्तेः। केचित् "ओमित्यात्मानं युञ्जीत" इति श्रुत्युक्तप्रकारेण आत्मसमर्पणपरत्वात् एकार्थप्रकाशकत्वमित्याहुः। अन्ये "ओमिति ब्रह्म" इति रीत्या ब्रह्मप्रतिपादकत्वात् एकार्थत्वमित्याहुः।

बृहत्कठिनपददीपिकायाम् 'प्रणवस्य संहिताकारलक्षणम् '[4]अव-रक्षणे इत्यस्माद्धातोः "[5]अन्येभ्योऽपि दृश्यते" इति क्विप्प्रत्यये, धातोर्वकारस्य '[6]लोपो व्योर्वलि" इति लोपे, "[7]वेरपृक्तस्य" इति वकारलोपे कृते अकारमात्रे स्थिते, कृदन्तत्वात् प्रातिपदिकसंज्ञायां '[8]तादर्थ्ये चतुर्थी वक्तव्या" इति चतुर्थ्यां कृतायां, तस्याश्च "[9]सुपां सुलुक्" इत्यादिना लोपे कृते 'अ' इति चतुर्थ्यन्तवाचिपदं भवति। 'उ' इति द्वितीयं पदम् अवधारणार्थमव्ययम्। तस्यार्थवत्त्वात् "[10]अर्थवदधातुः" इति सूत्रेण प्रातिपदिकसंज्ञायां '[11]ङ्याप्प्रातिपदिकात्" इत्यधिकृत्य "[12]स्वौजसमौट्" इत्यादिना विहितस्य प्रथमैकवचनस्य सोः, "[13]अव्ययादाप्सुपः' इति लोपे कृते 'उ' इति प्रथमान्तं पदं भवति। अकारस्य उकारे परतः "[14]आद्गुणः" इति गुणे कृते 'ओ' इति रूपं भवति। ततः "[15]मन ज्ञाने' इत्यस्माद्धतोः "[16]उणादयो बहुलम्" इति ड्विच्प्रत्यये कृते, मन्यतेष्टिलोपे कृते, ड्विच्प्रत्ययस्य "वेरपृक्तस्य" इति लोपे कृते 'म्' इति क्षेत्रज्ञवाचि तृतीयं पदं भवति। ज्ञातेत्यर्थः। एवं त्रयाणां पदानां समाहारात्मनस्त्र्यक्षरस्य संहिताकारवशात् लोकवेदयोः एकाक्षरत्वव्यपदेशः" इति ॥ ३२ ॥

---

१. दीपसंग्रहे ॥ २ तै. नारा. ५० ॥
३. तै. शिक्षा. ८-१ ॥
४. भ्वादिधा ॥ ५. पाणि ३-२-१७८ ॥
६. पाणि. ६-१-६६ ॥ ७. पाणि. ६-१ ६७ ॥
८. पाणिं वार्तिकम् ॥ ९. पाणि. ७-१-३९ ॥
१०. पाणि. १-२-४५ ॥
११. पाणि ४-१-१ ॥
१२. पाणि. ४ १-२ ॥
१३. पाणि. २-४-८२ ॥
१४. पाणि. ६-१-८७ ॥
१५. दिवादिधा ॥
१६. पाणि. ३-३-१ ॥

(३३) अस्याक्षरत्रयस्यापि उत्पत्तिक्रमं सदृष्टान्तमाह— पात्रत्रय इत्यारभ्य ।

मू ॥ मून्रु तालियिले तयिरै निरैत्तुक्कडैन्दु वेण्णै तिरट्टुमापोले, मून्रु वेदत्तिलुं मून्रक्षरत्तैयुमेडुत्तदु ॥ ३३ ॥

छा ॥ पात्रत्रये दधि पूरयित्वा मथित्वा नवनीतोद्धारवत्, त्रिभ्यो वेदेभ्यः त्रीण्यक्षराणि चोद्धृतानि ॥ ३३ ॥

व्या ॥ * "भूरिति ऋग्वेदादजायत । भुव इति यजुर्वेदात् । सुव इति सामवेदात् । तानि शुक्राण्यभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त । अकार उकार मकार इति । तानेकधा समभरत् । तदेतदोमिति" †"अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः । वेदत्रयान्निरदुहद्भूर्भुवस्स्वरितीति च" इति श्रुतिस्मृत्युक्तप्रकारेण सर्वेश्वरः ऋग्यजुस्सामात्मकवेदत्रयात् 'भूः भुवः सुवः' इति व्याहृतित्रयं प्रकाश्य तद्व्याहृतित्रयञ्च नैर्मल्याय सुवर्णमग्निनेव स्वसंकल्पेन प्रतप्य, तस्मात् अकारोकारमकाररूपमक्षरत्रयं च क्रमेण यथा प्रकाशनं स्यात्तथोद्धृतवानित्यभिप्रायेण—पात्रत्रयगतदधि पृथक्पृथक् मथित्वा तत्सारनवनीतोद्धारवत्, त्रिभ्यो वेदेभ्यस्त्रीण्यक्षराणि चोद्धृतानीत्युक्तम् ॥ ३३ ॥

---

(सदृष्टान्तमाह) इति, 'पात्रत्रये' इत्यस्य दार्ष्टान्तिकम् 'त्रिभ्यो वेदेभ्यः' इति वक्ष्यते । दधि इत्यस्य 'धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयतदुपायान्'इति दार्ष्टान्तिकमभिप्रेतम् । (पूरयित्वा) इत्यनेन कात्स्र्न्येनापातप्रतीतिर्विवक्षिता । (मथित्वा) इत्यनेन विचारो विवक्षितः । (नवनीत) इत्यस्य "त्रीण्यक्षराणि" इति दार्ष्टान्तिकं वक्ष्यते । (उद्धारवत्) इत्युक्तपिण्डीकरणस्य—"उद्धृतान्" इति पदविवक्षितं, वेदत्रयापेक्षया सारार्थत्वेन संहृत्यानुसन्धानं दार्ष्टान्तिकत्वेनाभिप्रेतम् । "पात्रत्रये" इतिवदनुक्त्वा "मून्रुवेदत्तिलुं मून्रक्षरत्तैयुम्" इति चशब्दद्वयप्रयोगमहिम्ना दृष्टान्ते पात्रत्रयस्य सारासारमिश्रभिन्नभिन्नदधिमत्त्वं, प्रत्येकमसारासङ्कीर्णसारभूतभिन्नभिन्ननवनीतत्वञ्चास्ति । दार्ष्टान्तिके तु "भूरिति ऋग्वेदादजायत" इत्यादिश्रुतिबलेन व्याहृतित्रयस्य,प्रत्येकम् "ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिः—ब्रह्मलोकमुन्नीयते" इत्यादिवचनसिद्धवेदत्रयप्राप्यत्वलक्षणसारत्वात् , वेदत्रयस्य प्रत्येकं धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयतत्साधनरूपसारासारमिश्रार्थकस्यापि. प्रत्येकमकाराद्येकैकवर्णापेक्षया सारार्थकत्वेनानुसन्धाने, अकारादेश्च प्रत्येकं ऋग्वेदाद्यपेक्षया सारार्थत्वानुसन्धाने च मानाभावेन, अकारादिवर्णत्रयस्य समुदितवेषेणैव ऋग्वेदादिप्रत्येकापेक्षया सारार्थत्वेनानुसन्धानलक्षणमुद्धरणं सम्भवतीति सूच्यते । यद्यपि एवं सति "त्रिभ्यो वेदेभ्यः" इति वक्तुमयुक्तम् । ऋग्वेदादेः प्रत्येकमेव अकारादिसमुदायापेक्षया असारार्थत्वात् । तथापि वेदेषु नैकस्यैव अकारादिसमुदायापेक्षया असारार्थकत्वम् । किन्तु त्रयाणामपि प्रत्येकम् अकारादिसमुदायापेक्षया असारार्थकत्वम् । किन्तु त्रयाणामपि प्रत्येकम् अकारादिसमुदायापेक्षया असारार्थकत्वमित्यभिप्रायेण "त्रिभ्यो वेदेभ्यः" इत्यनुगृहीतमिति न दोषः ।

---

* ऐतरेयब्राह्मणे. ५-५-३२ ॥
† मनुः. २-७६ ॥

१. प्रश्नोप. ५-७ ॥

(३४) अनेन फलितमाह—अतोऽयमिति।

मू ॥ आहैयाल् इदु सकलवेदसारम् ॥ ३४ ॥

छा ॥ अतोऽयं सकलवेदसारः ॥ ३४ ॥

व्या ॥ अक्षरत्रयस्यापि एकैकवेदस्य सारत्वेन समुद्धृतत्वात्, अक्षरत्रयात्मकोऽयं प्रणवः-सकलवेदसार इत्यर्थः ॥

एवम् "एतत्प्रतिपाद्योऽर्थः" इत्यारभ्य एतावता मन्त्रस्य वाक्यार्थम् (२६-सू), अक्षरसङ्ख्या पदसङ्ख्या (२८-सू), पदत्रयस्य चार्थत्रयप्रतिपादकत्वम् (२९-३० सू), तत्र प्रणवस्य प्राथम्यम् (३१-सू), अक्षरत्रयात्मकत्वम् (३२-सू), तस्याक्षरत्रयस्य वेदत्रयसारत्वेनोत्पन्नत्वात् (३३-सू), तत्समुदायरूपप्रणवस्य सकलवेदसारत्वञ्चोक्तम् - (३४-सू) ॥ ३४ ॥

---

यद्यपि "अक्षरत्रयञ्च क्रमेण यथाप्रकाशनं स्यात्तथा" इति क्रमेणाविर्भावस्यानुगृहीतत्वात्, "अक्षरत्रयस्यापि एकैकवेदस्य सारत्वेन समुद्धृतत्वात्" इत्युत्तरसूत्रे प्रत्येकमेकैकवेदस्यापि सारत्वावधित्वेनानुगृहीतत्वाच्च उक्तार्थाभावश्शङ्कितुं शक्यते। तथापि "अकारो वै सर्वा वाक्" इति सर्ववेदसारत्वेन प्रमाणसिद्धस्याकारस्य ऋग्वेदमात्रसारत्वानुपपत्तेः, अवधारणमात्रस्योकारस्य यजुर्वेदसारत्वानुपपत्तेः, चेतनवाचिमकारमात्रस्य सामवेदसारतायाः शारीरकमीमांसाप्रतिषिद्धत्वात्, "वेदैश्च सर्वैरहमेव वेद्यः" इति भगवत एव सर्ववेदवेद्यत्ववचनविरोधात्, "वेदानां सामवेदोऽस्मि" इति प्रतिपाद्यप्रतिपादकभावनिबन्धनसामानाधिकरण्यविरोधात्, सम्बन्धमात्रस्योकारार्थस्य विशेषणमात्रस्य मकारार्थस्य च वस्तुत्वस्यैव दुर्लभतया तयोरेकैकवेदसारत्वासम्भवात्, ब्रह्मस्वरूपनिरूप्ययोस्तयोर्ब्रह्मस्वरूपज्ञानमन्तरेण दुर्ज्ञेयतया पार्थक्येन वेदसारत्वेन प्रतिपत्तुमशक्यत्वात्, सूत्रस्थचकारद्वयवैयर्थ्यापातात्, 'क्रमेण' इति क्रमोक्तेस्सारतमसारतरसाराणामकारोकारमकाराणामुद्धरणे कालिकक्रमपरत्वेन अन्यथासिद्धेः, "एकैकवेदस्य" इति प्रत्येकवेदसम्बन्धोक्तेश्च अक्षरत्रयस्यापि प्रत्येकमेकैकवेदसारांशवत्त्वज्ञापनमात्रपरत्वात्, वेदान्तसारभूतयोरुकारमकारयोर्वेदान्तसारभूते अकारे लयासम्भवेन "तस्य प्रकृतिलीनस्य" इति श्रुतिविरोधस्य दुष्परिहरत्वापाताच्च यथोक्तार्थ एव तात्पर्यमित्यनुसन्धेयम्।

(शुक्राणि)-हिरण्यानि। (निरबृहत्)-सारत्वेन प्राचीकशदित्यर्थः। "भूर्भुवस्स्वरितीति च" इति एकैकस्माद्वेदात् एकैकव्याहृतेस्सारत्वेनाविर्भावं सूचयितुम् 'इति' शब्दावृत्तिः। तथा च त्रिवारमितिशब्दमनुषज्य 'भूरिति भुव इति सुवरिति च वेदत्रयात् निरबृहत्' इत्यर्थः। प्रजापतिः-परमात्मा नारायणः। अत एव "सर्वेश्वरः" इत्युक्तम्।

(भूरि)ति-अत्र बृहत्कठिनपददीपिका—'कारणरूपं ब्रह्म कार्यरूपं भवतीति भूः। (भुवः)-भवः-संसार इत्यर्थः। तम्, अस्यति-क्षिपतीति भुवः। "असु क्षेपणे"। समाश्रितानां संसारसमुद्भूतं निरस्यत इति भुवः-मुक्तिप्रदः। (सुवः)-सूः प्रसूतिः जगत्। "षूङ्-प्राणिप्रसवे"। ताम् ऋच्छति-प्रविशतीति सुवः"—इति। (व्याहृतित्रयम्) इति—"भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः" इति श्रुतिः, "पद्मासनस्थो भगवान् परमं तप आस्थितः। कालेन महता धाता व्याजहार स भूरिति॥

---

१. गी. १५-१५ ॥
२. गी. १०-२२ ॥
३. तै-शिक्षा. ५-१ ॥
४. श्रीरङ्गमाहात्म्ये दशाध्या. २-२४ ॥

(३५) अथ उक्ताक्षरत्रयस्य क्रमेणार्थं विवक्षुः प्रथममकारार्थमाह—तत्राकार इत्यारभ्य ।

मू ॥ इदिल्, अकारं - सकलशब्दत्तुक्कुं कारणमाय्, नारायणपदत्तुक्कु सङ्ग्रहमायिरुक्कैयाले, सकलजगत्तुक्कुं कारणमाय्, सर्वरक्षकनान- वेम्बेरुमानै चोल्लुहिरदु ॥ ३५ ॥

छा ॥ तत्र, अकारः-सकलशब्दकारणत्वात्, नारायणपदसङ्ग्रहत्वाच्च, सकलजगत्कारणं सर्वरक्षकं स्वामिनमाह ॥ ३५ ॥

व्या ॥ एतदक्षरत्रये, प्रथमोऽकारः, * "नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः" इत्युक्तप्रकारेण लौकिकसकलशब्दकारणभूतं वेदं प्रति † "प्रणवाद्यास्तथा वेदाः" ‡ "ओङ्कारप्रभवा वेदाः" इत्याद्युक्तरीत्या कारणभूतस्य प्रणवस्य § "तस्य प्रकृतिलीनस्य" इत्युक्तरीत्या स्वयं कारणभूतः, ¶ "अकारो वै सर्वा वाक्" ** "समस्तशब्दमूलत्वादकारस्य स्वभावतः" इत्युक्तप्रकारेण सकलशब्दकारणभूतत्वात्, समस्तवस्तुशरीरतया सर्वरक्षकं सर्वेश्वरं प्रतिपादयन्नारायणपदसङ्ग्रहत्वाच्च †† "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति" ‡‡ "स एव सृज्यस्स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च" इत्यादिषूक्तप्रकारेण सकलजगत्कारणं सर्वरक्षकं स्वामिनं वदतीत्यर्थः ।

अनेन अस्मिन्नक्षरे प्रकृत्यर्थः कारणत्वम्, धात्वर्थो रक्षकत्वञ्चोक्तं भवति ।

अस्याकारस्य नारायणपदसङ्ग्रहतया रक्षकवाचित्वकथनेऽपि धातुसिद्धवेषमवलम्ब्यैव वक्तव्यं हि ॥ ३५ ॥

---

व्याहृतिः प्रथमा साभूत् प्रथमं व्याजहार यत्। द्वितीयं तप आतिष्ठद्भुव इत्यब्रवीत्ततः ॥ व्याहृतिस्सा द्वितीयाभूद्द्वितीयं व्याजहार यत् । तृतीयं तप आतिष्ठत्सुव इत्यब्रवीत्ततः । व्याहृतिस्सा तृतीयाभूत् तृतीयं व्याजहार यत्" इति स्मृतिश्चात्रानुसन्धेया । (स्वसङ्कल्पेन) इति-सङ्कल्पः मानसव्यापारविशेषः । "सङ्कल्पः कर्म मानसम्" इत्युक्तेः ॥ ३३ ॥

(अनेन)-पूर्वोक्तन्यायेनेत्यर्थः ।

(सकलवेदसारः) इति, वेदत्रयात् अक्षरत्रयोद्धरणमयुक्तम्, "ऋचो यजूंषि" इत्यादिवचने वेदान्तरादपि सारार्थकत्वप्रतीतेः इति शङ्कानिरासाय—सकलशब्दः । पुरुषार्थतत्साधनावबोधनांशे बुभुक्षूणां मुमुक्षूणां चोपयोगाधिक्येन "भूरिति ऋग्वेदादजायत" इत्यादौ वेदत्रयस्य पृथगुपादानेऽपि "येमृषयस्त्रयीविदा विदुः" इत्यादिवत् श्रुतिस्मृत्योर्वेदत्रयादक्षरत्रयोद्धारवचनमुपलक्षणमिति भावः । उद्धरणमपि न सारार्थकत्वेनानुसन्धानम् । उच्चारणमात्रेणातिशयितादृष्टसाधनत्वेन अन्यथासिद्धिसम्भवात् इति शङ्कापरिहाराय—वेदसार इत्युक्तम् । 'वेदयति' इति व्युत्पत्त्या

---

* वि-पु. १-५-६३ ॥
† अत्रिस्मृ. १-९ ॥
‡ ध्यानविन्दूप. १५ ॥
§ तै-ना. १०-२४ ॥ ¶ ऋगारणे ॥
** वामने ॥ †† तै-भृगु. १-१ ॥
‡‡ वि-पु. १-२-७० ॥
१.
२. यजु-अष्टके. १-२-१-२५ ॥

आस्तिकाग्रेसरान् तत्त्वबुभुत्सून्प्रति स्वार्थबोधकत्वं वेदशब्दप्रवृत्तिनिमित्तम् । तादृशवेदानां सारम्-उत्कृष्टमित्यर्थः । "तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्" इति न्यायात्, 'ज्ञानं प्रमा' इत्युत्सर्गाच्च । "मायां न सेवे" इत्यादि "भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इत्यादिवचनाच्च । अत्र वेदत्वस्य विशेषणत्व-विवक्षया सारतमार्थप्रतिपादकत्वं सारपदेन विवक्षितम् ॥

उक्तार्थान्निगमयति — एवमिति ॥ ३४ ॥

(अथे)ति-इत्थं करिष्यमाणव्याख्यानोपोद्घाततया मूलमन्त्रवाक्यार्थस्वरूपं तत्क्रमनियामकञ्च निरूप्य, इदानीमुपपत्तिसिद्धेन प्राथम्येन प्रथममकारो व्याख्यायत इति भावः ।

(नाम रूपञ्च) इति, देवादिस्थावरान्तानां भूतानां नाम-सुरनरमृगवृक्षादिजात्यभिधानम् । रूपम्-अनिमेषद्विपदचतुष्पदशाखित्वादि । कृत्यम्-हविर्भोगयज्ञाद्यनुष्ठानस्रुक्चमसाद्युपादानत्वा-दिकम् । वेदशब्देभ्य एव ज्ञात्वा निर्ममे इत्यर्थः । प्रपञ्चनम्-कृत्यानामवान्तरभेदम् ।

"प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः । वाङ्मयं प्रणवस्सर्वं तस्मात्प्रणवमभ्यसेत् ॥

"ओङ्कारप्रभवा वेदा ओङ्कारप्रभवास्स्वराः । ओङ्कारप्रभवं सर्वं जगत्स्थावरजङ्गमम् ॥

अत्र पूर्वःपक्षः —

न तावत्, अकारस्य कारणत्वं रक्षकत्वञ्चोभयं निमित्तमिति युक्तम् । 'अव-रक्षणे' इति धातु-पाठानुसारेण योगवृत्त्या रक्षणस्य निमित्तत्वेऽपि, कारणत्वस्य निमित्तत्वे मानाभावात् । कारणत्व-विशिष्टविषयत्वया प्रयोगप्रत्ययोर्लोके वेदे चादर्शनेन, रूढिकल्पनाया अनवकाशाच्च । न च "अव-रक्षणगतिहिंसादिषु" इति धातुपाठबलेन कारणत्वमपि योगवृत्तिनिमित्तम्, अत एव "अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत्" इति श्रीपराशरभट्टार्यैरनुगृहीतमिति वाच्यम् । तथा सति रक्षकत्वस्य कारणत्वान्तर्भावेन कारणत्वं रक्षकत्वञ्चोभयं निमित्तमित्युक्तिभङ्गापत्तेः । अनुगृहीतञ्च श्रुतप्रकाशि-कायां "क्षेमान्तर्भूतस्वर्गादिफलप्रदत्वस्य पृथगुक्तिरनपेक्षिता" इति । किञ्च 'गम-गतौ' 'हिंसि हिं-सायाम्' इत्यादिधातुनिष्पन्नगन्तृहिंसादिशब्दानामिव "अव-रक्षणगतिहिंसादिषु" इति धातुनिष्पन्न-स्याप्यकारस्य गन्तृत्वादिविशेषधर्मनिमित्तकत्वमेव। न तु "संयोगहेतुरवरोऽपि दृष्टः" "नान्यो हेतुर्विद्यते ईशनाय" "सकारणं करणाधिपाधिपः" इत्यादिहेतुकारणादीनामिव कारणत्वरूपसामा-न्यधर्मनिमित्तकत्वम् । अपि च 'सत्ताद्यर्थनिर्देशश्च उपलक्षणम्" इति शाब्दिकोक्तरीत्या धातूनाम-नेकार्थत्वेऽपि अर्थविशेषप्रसिद्धिप्राचुर्यानुसारेण तत्परत्वमेव युक्तम् । अत एव "धातुलीनमुपसर्ग इवार्यम्" इत्यर्थविशेषतात्पर्यग्राहकतया उपसर्गापेक्षा तान्त्रिकैरुक्ता । एवञ्च "अव-रक्षणगतिहिंसा-दिषु" इति पाठेऽपि रक्षणार्थ एव प्रसिद्धिप्राचुर्यात्, अर्थद्वयाङ्गीकारे विलम्बिताविलम्बितवृत्तिद्वय-विरोधः । नापि विष्णुत्वनिमित्तकत्वम् । विष्णुरक्षकत्वप्रसिद्धिनिबन्धनप्रयोगप्राचुर्येण "अ इति ब्रह्म" "अकारो विष्णुवाचकः" इत्यादिवचनोपपत्तेः ।

---

१. वि-पु. ६-५-८७ ॥
२. भारते-उद्योगे. ६८-५ ॥
३. अष्टश्लोक्याम्. १ ॥
४. श्रुत-का. १-१ १ ॥
५. श्वे-उप. ५-१२ ॥
६. श्वे-उप. ६-१७ ॥
७. श्वे-उप. ६-९ ॥
८. काशिकावृत्तिः ॥
९. कौमुद्यामुत्तरार्धे भूधातुप्रकरणे ॥
१०. ऐतरेयारण्यके. २-३-८ ॥
११.

न च नारायणपदसङ्ग्रहत्वात् कारणत्वादिनिमित्तकत्वम्। हेतोरसिद्धेः, अप्रयोजकत्वाच्च। अष्टाक्षरस्य मूलमन्त्रसमाख्याबलेन, "सर्वमष्टाक्षरान्तस्थम्" इत्यादिवचनबलेन, अर्थपञ्चकपरत्वरूपोपपत्तिबलेन च सर्ववेदसङ्ग्रहत्ववत्, अकारस्य विशिष्य नारायणपदसङ्ग्रहत्वे मानाभावात्. तदैकार्थ्येन तत्सङ्ग्रहत्वे वैपरीत्यापत्तेः। अकारोपात्तरक्षकत्वापेक्षया नारायणपदे तत्पुरुषबहुव्रीहिसिद्धसर्वाधारत्वसर्वव्यापकत्वयोर्विशेषधर्मत्वाभावाच्च । सर्वज्ञत्वसर्वशक्तित्वादिवत् कारणत्वस्य निमित्तत्वाभावेऽपि अकारस्य प्रसिद्धरक्षकत्वमादायैव नारायणपदसङ्ग्रहत्वसम्भवाच्च । सङ्ग्रहविस्तरपदयोरेकनिमित्तत्वे पौनरुक्त्यापत्त्या नारायणपदसङ्ग्रहत्वस्य विष्णुत्वनिमित्तकत्वप्रयोजकत्वोक्त्यसम्भवाच्च ।

नापि सकलशब्दकारणत्वात् अकारस्य कारणत्वादिनिमित्तकत्वमिति वक्तुं शक्यम् । 'शब्दत्वात् शब्दनिमित्तकत्वम्' इतिवत्, 'कारणत्वात् कारणनिमित्तकत्वम्'इत्यस्योपहास्यत्वात्। शब्दार्थयोर्वाच्यवाचकभावप्रयोजकसाजात्यस्यानुगतानतिप्रसक्तस्य औत्सर्गिकस्य वा क्वाप्यदर्शनेन दुर्वचनत्वेन च 'कारणीभूतशब्दः कारणीभूतस्यार्थस्य वाचकः' इत्यस्याप्युक्त्यसम्भवपराहतत्वाच्च ।

अथ स्यात् स्वेतरसर्वशब्दकारणस्य अकारस्य स्वेतरसर्वार्थकारणब्रह्मवाचकत्वं न्याय्यम् । स्वस्वेतरसर्वशब्दार्थाभावकाले तु अकारब्रह्मणोरसत्त्वेन तयोर्वाच्यवाचकभावाभावे, अकारस्यार्थशून्यत्वानित्यत्वयोरन्यतरप्रसङ्गात् । अकारस्य कदाचित् अर्थशून्यत्वे, "आयैवासि" इत्यादिषु नित्यवच्छ्रुतस्याकारवाच्यापेक्षया आत्मनित्यशेषत्वस्य भङ्गापत्तौ, मूलमन्त्रस्याप्रामाण्यप्रसङ्गात् । अत एव देवताधिकरणे नित्यस्य वेदस्यानित्यार्थसंयोगात् अप्रामाण्यमाशङ्क्य, अर्थानां प्रवाहानादित्वेन परिहृतमिति । मैवम् । अस्मत्सिद्धान्ते सत्कार्यवादाभ्युपगमेन, सूक्ष्मचिदचितां महाप्रलयेऽपि सत्त्वेन स्वेतरसर्वार्थाभावकाले असत्त्वस्य ब्रह्मण्यसम्भवात् । सिद्धान्ते अद्रव्यस्य शब्दसामान्यस्य आकाशावस्थारूपस्य अवस्थावत्त्वरूपकार्यत्वाभावेन प्रलयकाले असत्त्वोपपत्त्या, स्वेतरसर्वशब्दाभावकाले असत्त्वस्य अकारे असम्भवाच्च । सिद्धान्ते सर्वशब्दानामाहङ्कारिकतया अकारस्य सर्वशब्दकारणत्वानभ्युपगमाच्च । न च सकलाध्यात्मशास्त्रपरमतात्पर्यविषयीभूतयावदर्थप्रतिपादकत्वरूपसकलशास्त्रव्याख्येयत्वात्मकसमस्तशब्दमूलत्वेन सकलशब्दकारणत्वमिति वाच्यम्, विकल्पासहत्वात् । निरुक्तं सकलशब्दकारणत्वं किं नारायणपदसङ्ग्रहत्वमुखेन कारणत्वादिनिमित्तकत्वे हेतुः? उत-साक्षात्? नाद्यः-व्याप्तिसामान्यप्रतिपादकयोर्विष्णुवासुदेवशब्दयोर्व्याप्तिविशेषप्रतिपादकनारायणपदसङ्ग्रहत्वात्, अकारस्य व्याप्तिसामान्यप्रतिपादकस्य समस्तशब्दमूलत्वमात्रेण नारायणपदसङ्ग्रहत्वासिद्धेः । नारायणपदसङ्ग्रहत्वाभावेऽपि सर्वरक्षकत्वसर्वशेषित्वरूपसर्ववेदपरमतात्पर्यविषयार्थप्रतिपादकत्वेन समस्तशब्दमूलत्वोपपत्तेश्च । नान्त्यः उक्तरीत्या कारणत्वनिमित्तकत्वाभावेऽपि समस्तशब्दमूलत्वोपपत्तेः रक्षकत्वोक्तिमात्रेण सर्वशास्त्रतात्पर्यविषयार्थसिद्धकारणत्वोक्तिमात्रेणापि तदसिद्धेस्तुल्यत्वात् । अन्यथा "[1]स कारणं करणाधिपाधिपः" इत्यादौ कारणत्वसमभिव्याहारेण गुणान्तरोक्तिवैपरीत्यापत्तेर्वज्रलेपत्वात्। कारणत्वेन सर्वाक्षेपे रक्षकत्वेनैव तत्सम्भवाच्च । रक्षकत्वस्य धातुपाठप्रसिद्धार्थत्वेन तन्निमित्तकत्वस्य समस्तशब्दमूलत्वाप्रयुक्तत्वाच्च । समस्तशब्दमूलत्वेन विष्णुत्वनिमित्तकत्वसाधनस्य कथमपि शङ्कितुमशक्यत्वाच्च ।

न चैवं "[2]समस्तशब्दमूलत्वात्" इति वचनविरोधः । "[3]ऊर्ग्वा उदुम्बरः" इत्यादौ सजातीयात्सजातीयोत्पत्तिर्युक्तेत्यौचित्यावलम्बेन प्रशंसावत्, "सजातीययोस्सम्बन्धो युक्तः" इत्यौ-

१. श्वे. ६-९ ॥ | २. वामने ॥ | ३. यजुषि. अष्टके. १-१-३-२३ ॥

चित्यावलम्बनेन सजातीयसर्वकारणत्वरूपसदसत्साजात्यगुणमादाय वाच्यवाचकभावदार्ढ्यप्रशंसासम्भवात् । तस्मिन्वचने कारणत्वादिनिमित्तकत्वानुक्तेश्च । इत्थं समस्तशब्दमूलत्वस्य कारणतारूपस्य व्याख्येयत्वरूपस्य वा साक्षात्परम्परया वा कारणत्वादिनिमित्तकत्वे साधकत्वाभावात् न अकारस्य कारणत्वादिनिमित्तकत्वं सम्भवतीति ॥

अत्र सिद्धान्तः—

अकारस्य कारणत्वं रक्षकत्वञ्च निमित्तमिति तावद्युक्तमेव । "अ इति ब्रह्म" इति वचनानुसारेण रूढिवृत्त्या कारणत्वरूपनिरतिशयबृहत्त्वस्यापि धातुपाठानुसारेण योगवृत्त्या रक्षकत्वस्येव निमित्तत्वावश्यम्भावात् । "अथातो ब्रह्मजिज्ञासा" इत्यत्र योगरूढब्रह्मशब्दानुसारेण निरतिशयबृहत्त्वविशिष्टस्य भगवतो नारायणस्य जिज्ञास्यतयोद्देशे कृते, तस्य भगवतो निरतिशयबृहत्त्वज्ञापकं किमिति एवमुद्देश्यतावच्छेदकव्यञ्जकरूपलक्षणस्य लक्ष्यव्यक्तिविशेषजिज्ञासायां "जन्माद्यस्य यतः" इति "यतो वा इमानि" इति श्रुतिप्रत्यभिज्ञापकसूत्रेण जगज्जन्मादिकारणत्वं निरतिशयबृहत्त्वज्ञापकत्वेन श्रुतिविवक्षितमित्यभिप्रायेण लक्षणकथनेन कारणत्वस्यैव निरतिशयबृहत्त्वरूपत्वात् । तस्य श्रुतप्रकाशिकायामेव विस्तरेण आचार्यैरुपपादितत्वाच्च। "अ इति ब्रह्म" इति वचने निरतिशयबृहत्त्वस्य प्रवृत्तिनिमित्तत्वेन विशेषणत्वे सम्भवस्तुपलक्षणत्वस्यान्याय्यतया, 'अकारवाच्यं निरतिशयबृहत्त्वविशिष्टं भगवत्स्वरूपम्' इति तात्पर्याश्रयणेन निरतिशयबृहत्त्वविशिष्टभगवत्स्वरूपे रूढिकल्पनायास्सावकाशत्वाच्च । किञ्च "अव-रक्षणगतिहिंसादिषु" इति धातुपाठानुसारेण कारणत्वमपि योगवृत्त्यैव निमित्तम् । अत एव "अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत्" इत्याद्यनुगृहीतम् । न चैवं रक्षकत्वं पृथङ्निमित्तं न भवेत् इति वाच्यम् । 'उत्पत्तिक्षणादनन्तरं नाशक्षणात्पूर्वं वस्तुनः कालसम्बन्धरूपावस्थानं स्थितिः" इति, इष्टप्राप्तयनिष्टनिवृत्तिमत्तया अवस्थानस्यापि क्षेमशब्दार्थस्थितौ सामान्यरूपेणान्तर्भावेऽपि, इष्टप्रापणानिष्टनिवारणलक्षणरक्षात्वेन रक्षकत्वस्य स्थितिकारणत्वोक्त्या लाभेन भगवति विशिष्य सकलफलप्रदत्वरूपगुणानुसन्धानाय रक्षणस्य पृथङ्निमित्तत्वेन निर्देशोपपत्तेः । अत एव भगवता बादरायणेन "जन्माद्यस्य यतः" इत्युक्त्वा "फलमत उपपत्तेः" इति पृथक्सूत्रितम् । अनुगृहीतञ्च श्रुतप्रकाशिकायां "शास्त्रसाधारणस्य परमप्रयोजनस्यैव हि पृथगुक्त्यपेक्षा" इति । न च 'धातुपाठानुसारे गन्त्रादिशब्देष्विव, विशेषधर्माणां बहूनां प्रकारत्वापत्त्या, ब्रह्मशब्दकारणशब्दादिष्विव निरतिशयबृहत्त्वरूपं कारणत्वं निमित्तं न भवेत्' इति वाच्यम् । लाघवानुगृहीतवचनबलेन निरतिशयबृहत्त्वरूपजगज्जन्मादिकारणतासामान्यात्मकैकधर्मस्य निमित्तत्वे सिद्धे धातुपाठस्य रूढिनिमित्तविवरणत्वोपपत्तेः । न चैवमपि रक्षकत्वमपि सामान्यरूपेणैव निमित्तं स्यादिति वाच्यम् । अवनादिशब्देषु रक्षणस्य विशिष्योपस्थितिर्धातुपाठस्वारस्यादवगम्यते। तथापि विशिष्योपस्थितानामपि धर्माणां समुदायरूपेण जगज्जन्मादिकारणत्वरूपतया, वस्तुतो जगज्जन्मादिकारणत्वं विशेषधर्मरूपमेव योगवृत्तौ निमित्तमिति न विरोधः । न चैवमपि रक्षकत्वरूपार्थस्य प्रसिद्धिप्राचुर्येण प्रथमोपस्थित्या, विलम्बिताविलम्बितवृत्तिद्वयविरोधः । "अ इति ब्रह्म" इत्यादिवचनरूपतात्पर्यग्राहकबलेन तस्या-

---

१. ऋगारण्यके. २-३-८ ॥
२. शारीरकमी. १-१-१ ॥
३. शारीरक. १-१-२ ॥
४. तै-भृ. १-१ ॥
५. शारीरक. ३-२-३८ ॥
६. श्रुतप्र-मङ्गलश्लोकव्या ॥

दोषत्वात्। "भगवत एवाहमस्मि" "उकारेणोच्यते लक्ष्मीः"इत्यादिवचनबलेन उकारे अवधारणार्थकत्वलक्ष्मीवाचकत्वयोः, नमश्शब्दे साधनपारतन्त्र्यफलपारतन्त्र्यपरत्वस्य सखण्डाखण्डरूपत्वस्य, नारायणशब्दे तत्पुरुषबहुव्रीहिनिमित्तद्वयस्य, अयनशब्दे कर्मकरणाधिकरणरूपव्युत्पत्तित्रयस्य च प्रमाणबलेनाभ्युपगमात् सर्ववेदसारस्य मूलमन्त्रस्य गुणानुभवजनितप्रीतिकारितकैङ्कर्यरूपपरमपुरुषार्थपरत्वान्यथानुपपत्त्या वचनबलेन सकलकल्याणगुणसमष्टिरूपजगज्जन्मादिकारणत्वसामान्यान्तर्गतानेकगुणविशेषपरत्वस्य, विलम्बिताविलम्बितयोगवृत्तिद्वयेन अवश्याभ्युपेयत्वाच्च। न चैवं "जगदुदयरक्षाप्रलयकृत्" इति सूक्तौ रक्षायाः कारणत्वान्तर्भावविरोधः। इष्टप्राप्त्यनिष्टनिवृत्तिमत्तया अवस्थालक्षणजीवस्थितिपरस्य रक्षापदस्य अजहल्लक्षणया स्थितिसामान्यपरत्वात्। तस्याश्च "विष्णुः पात्यत्र पाति च" "स एव पात्यत्ति च" इति वचनानुसारित्वेनादोषत्वात्। विष्णुत्वनिमित्तकत्वमपि युक्तमेव। "अकारो विष्णुवाचकः" इत्यादौ विष्णुत्वस्य वाचकतायां विशेषणत्वस्वारस्यात्, वाचकशब्दस्वारस्याच्च विष्णुत्वोपलक्षितवस्तुनि प्रसिद्ध इत्यर्थवर्णनायोगात्।

किञ्च, नारायणपदसङ्ग्रहत्वात् कारणत्वादिनिमित्तकत्वं युक्तम्। तथा हि तत्र न तावद्धेतोरसिद्धिः। "सर्वमष्टाक्षरान्तस्थम्" इतिवत् "अकारो वै सर्वा वाक्" इत्युक्ततादात्म्यस्य पूर्वोक्तन्यायेन सर्वशास्त्रव्याख्येयत्वात्मकसर्ववाङ्मूलत्वरूपतया, सर्ववाङ्मूलत्वस्य च नारायणरूपविशेष्यांशमादायोपपादने, "वेदैश्च सर्वैरहमेव वेद्यः" इत्युक्तप्रकारेण अव्यावर्तकतया, "कारणन्तु ध्येयः" इति परमपुरुषार्थलक्षणमोक्षार्थमुपास्याकारत्वेनोक्तस्य समस्तकल्याणगुणसमष्टिरूपस्य कारणत्वस्य निमित्तत्वमादाय सर्वेषु वेदान्तवाक्येषु कारणवाक्यानामिव अकारस्य सर्ववाक्प्राधान्यमित्येवमुपपाद्यतया सर्ववागन्तर्गततत्सारभूतनारायणपदसङ्ग्रहत्वस्यापि कैमुतिकन्यायेन सिद्धेः। अत एव सद्विद्यादिसकलकारणवाक्यानाम् "एको ह वै नारायण आसीत्" इत्यादिवाक्यानाञ्चैवअकारनारायणपदयोस्सामान्यविशेषसमर्पकत्वसम्भवाच्च। नाप्यप्रयोजकत्वम्। कारणत्ववत् गुणसमष्टिरूपत्वाभावेन रक्षकत्वमादाय सङ्ग्रहत्वासम्भवात्। रक्षकत्वस्य प्रसिद्धार्थत्वेऽपि वचनसिद्धत्वेन कारणत्वनिमित्तकत्वावश्यम्भावे तदन्तर्भावेन, रक्षकत्वस्यापि सिद्ध्या, विलम्बिताविलम्बितवृत्तिद्वयाविरोधेन रक्षकत्वं विशेषरूपेण न पृथङ्निमित्तमिति शङ्कायाम्-"एकाक्षरां द्विपदां षट्पदाञ्च वाचं देवा उपजीवन्ति विश्वे" इत्यस्मिन् प्रणवमन्त्रशेषमन्त्ररत्नानां त्रयाणामपि प्रशंसापरे वाक्ये "त्रिपदाम्" इत्यनुक्त्वा "एकाक्षराम्" इति प्रणवस्य, "द्विपदाम्" इति मन्त्रशेषस्य च पृथङ्निर्देशस्य च प्रणवमन्त्रशेषयोर्मूलमूलिभावपरतयैव साफल्यस्य वक्तव्यतया अकारस्य प्रणवप्रकृतित्वेन श्रुतिसिद्धतया च सिद्धेन नारायणपदसङ्ग्रहत्वेन हेतुना परिहर्तव्यत्वाच्च। अकारोक्तनिरुपाधिकरक्षकत्वस्य नियमनार्थधारणतदर्थव्यापनयोः प्रकृत्योक्तिमुखेन निरुपाधिकरक्षकत्वात्, तदेकप्रीत्यर्थप्रवृत्तिप्रार्थना तत्फलीभूतप्रवृत्तिश्च युज्यत इत्येव प्रत्ययांशेनोक्तिमुखेन च नारायणपदेन विवरणेन नारायणपदसंग्रहत्वे निरुक्तशङ्कापरिहारसम्भवाच्च। "वेदैश्च सर्वैरहमेव वेद्यः" "विष्णुनामा स वेदेषु वेदान्तेषु च गीयते" "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः" इत्यादिषु समस्तकल्याणगुणगणविशिष्टत्वेन नारायणरूपदेवताविशेषस्यैव सर्ववेदान्तता-

१. रहस्याम्नायब्रा ॥ २. पां. लै ॥
३. अष्टश्लो. १ ॥
४. वि-पु. १-२-६७ ॥
५. वि-पु. १-२-७० ॥
६. गी. १५-१५ ॥
७. अथर्वशिखोप ॥
८. महोप..१-१-१ ॥
९. यजुषि-अष्टके. २-८-७-९१ ॥
१०. वि-पु. ६-४-४ ॥
११. भारत-वनप. ७६-२६ ॥

त्पर्यविषयत्वेन सर्ववेदसंग्रहप्रणवप्रकृतिभूताकारस्य नारायणरूपदेवताविशेष एव सकलकल्याणगुणसमष्टिभूतकारणत्वादिगुणबाधकत्वावश्यम्भावे सति रूढ्या देवताविशेषपरनारायणपदसंग्रहप्रणवप्रकृतिभूताकारस्य कारणत्वादिगुणबोधकत्वावश्यम्भावे सति कैमुतिकन्यायेन कारणत्वरक्षकत्वशेषित्वप्रतिपादकत्वावश्यम्भावाच्च। रूढनिमित्तैक्येऽपि कारणत्वरक्षकत्वादेर्व्यापकत्वधारकत्वादेश्च योगवृत्तिनिमित्तस्य भिन्नत्वेन अपौनरुक्त्याच्च। एकवाक्यस्थपदद्वयस्य एकरूढिनिमित्तमुखेन पौनरुक्त्यादबोधकत्वेऽपि, वाक्यैकवाक्यस्थपदद्वयस्य पौनरुक्त्यशङ्कानवकाशाच्च। न च "विष्णवे असि" "विष्णवे स्थाम्"[1] इत्यनयोः पौनरुक्त्यशङ्कानवकाशः॥

अपि च—सकलशब्दकारणत्वात् कारणत्वादिनिमित्तकत्वं युक्तम्। "कारणत्वात् कारणत्वनिमित्तकत्वम्" इति वा, "कारणत्वसाजात्यात् स्वेतरस्वसजातीयकारणत्वलक्षणसाजात्याद्वा वाच्यवाचकभावः" इति वा अविवक्षितत्वात्। "शब्दत्वात् शब्दनिमित्तकत्वम्" इति तौल्यस्य वा "ऊर्वा उदुम्बरः"[2] इत्यादिवत् असदर्थवादत्वस्य वा न शङ्कावतारः। किन्तु सर्वाध्यात्मशास्त्रव्याख्येयत्वमेव विवक्षितम्। अत एव सिद्धान्ते प्रलये सर्वशब्दाभावेऽपि शब्दस्याहङ्कारिकत्वेऽपि न क्षतिः। न च तत्रोक्तविकल्पासहत्वम्, सर्ववाङ्मूलस्याकारस्य भिन्नभिन्नार्थकसर्ववेदवाक्यसंग्रहत्वावश्यम्भावे सति, उक्तरीत्या स्वपर्यायभूतनारायणपदसङ्ग्रहत्वस्य कैमुतिकन्यायेन सिद्धत्वात्, रक्षकशेषित्वातिरिक्तफलत्वोपायत्वादिगुणविशेषाणामपि सर्वशास्त्रपरमतात्पर्यविषयतया, तत्प्रतिपादनार्थं कर्मकरणव्युत्पत्तिसिद्धनारायणपदसिद्धार्थसंग्रहत्वावश्यम्भावेन, नारायणपदसंग्रहत्वाभावे समस्तशब्दमूलत्वासिद्धेश्च, आद्यकल्पे दोषाभावात्। अत एव अन्त्यकल्पेऽपि दोषाभावाच्च। रक्षकत्वोक्त्या फलत्वोपायत्वपरशास्त्रसङ्ग्रहत्वासिद्धेः, कारणत्वस्य सकलगुणसमष्टिरूपत्वस्य आचार्यैरेवानुगृहीतत्वात्, "सकारणं करणाधिपाधिपः" इत्यादौ गुणान्तरोक्तेर्विवरणविवरणिभावेन साफल्यात्, सकलजगज्जन्मादिनिमित्तोपादानभावस्य सर्वकल्याणगुणात्मकत्वं विना अनुपपत्तिवत्, रक्षकत्वस्य तदभावात्, कारणत्वरूपरक्षकत्वे सर्वकल्याणगुणानामघटकत्वात्, रक्षकत्वस्य फलत्वोपायत्वानियमाच्च।

न चैवं प्रथमकल्पानुत्थितिः, समस्तशब्दमूलत्वस्य साक्षादेव हेतुत्वसम्भवेन द्वारहेतूक्तिवैफल्यात् इति वाच्यम्; महावाक्यविषया सकलकल्याणगुणपरानन्तवेदवाक्यसङ्ग्रहस्याकारस्य नित्यवस्तुसमूहवाचिनारपदघटितत्वया पदविषया सकलकल्याणगुणपरनारायणपदसङ्ग्रहत्वमावश्यकम्। तादृशनारायणपदसङ्ग्रहस्य गुणसमष्टिरूपकारणत्वनिमित्तकत्वमावश्यकमिति हेत्वन्तरसूचनार्थत्वात्, विलम्बिताविलम्बितवृत्तिद्वयगम्यार्थतात्पर्यभाहकतया समस्तशब्दमूलत्वस्य रक्षकत्वनिमित्तकत्वप्रयोजकतयोक्तत्वाच्च। व्यक्तिविशेषे सर्वगुणसङ्ग्रहाभावे व्यक्तिविशेषे गुणविस्तारानुपपत्त्या समस्तशब्दमूलत्वस्य विष्णुत्वनिमित्तकप्रयोजकतयाप्युक्तप्रायत्वाच्च॥

अन्यच्च समस्तशब्दमूलत्वस्य कारणत्वादिनिमित्तकत्वे प्रयोजकत्वं "समस्तशब्दमूलत्वात्" इत्यादिवचनसिद्धम्। तथा हि तस्मिन्वचने, शब्दशब्दः—अध्यात्मशास्त्रपरः; अपशुन्यायेन सामान्यशब्दस्य प्रशस्तशब्दपरत्वात्। मूलपदम्—व्याख्येयपरम्। व्याख्येयतात्पर्यज्ञानार्थमेव व्याख्यानप्रवृत्त्या, व्याख्येयोपस्थितिपूर्वकव्याख्येयार्थज्ञानं विना तत्तात्पर्यबुबोधयिषया तत्र प्रवृत्त्यसम्भवेन, व्याख्येयस्य व्याख्याने परंपरया कारणत्वेन मूलशब्दार्थत्वसम्भवात्। [अकारस्य]—मूलमन्त्रगतप्रणवस्थाकारस्येत्यर्थः। "समस्तशब्दमूलत्वात् स्वभावतः"[2] इति समानाधिकरणे पञ्चम्यौ। स्वभावपदम्—

१. यजु. १-अष्ट. १-३-२३॥ | २. श्वे. ६-९॥

सनातनत्वपरम्। "मूलमन्त्रस्सनातनः" इत्यत्र मूलत्वस्य सनातनोत्वाक्तिवत्। [समस्तवाच्यमूलत्वात्]—शब्दतदितरसाधारण्येन समस्तवस्त्वपेक्षया निमित्तोपादानत्वरूपकारणत्वादित्यर्थः। [ब्रह्मणः]—योगवृत्त्या जगज्जन्मादिकारणत्वसकलफलप्रदत्वरूपद्विविधनिरतिशयबृहत्वविशिष्टस्य, रूढया विष्णुत्वविशिष्टस्य चेत्यर्थः। ब्रह्मशब्दयोगरूढत्वस्याचार्यैस्समर्थितत्वात्। "स्वभावतः" इति पूर्ववत्। अनादिकालमारभ्य "तदैक्षत बहु स्यां प्रजायेयेति" "सोऽकामयत बहु स्यां प्रजायेयेति" "तदात्मानं स्वयमकुरुत" इत्याद्युक्तज्ञानचिकीर्षाप्रयत्नवतःस्वयमेव स्वेच्छया सर्वविकारान्प्रति धारकतयाधारभूतस्य ब्रह्मणस्स्वयमेव रक्षकत्वं शेषित्वञ्च युक्तम्। इत्येवं धातुचतुर्थीसिद्धयोस्स्वप्रसादोद्देशेन चेतनप्रवृत्तिसामान्यनिरपेक्षतया निरुपाधिकयो रक्षकत्वशेषित्वयोरुपपादकतया, कारणत्वमपि अकारार्थ इति "स्वभावतः" इति पदसामर्थ्यात् ज्ञाप्यते। [वाच्यवाचकसम्बन्धः]—वाच्यवाचकयोश्शक्तिविशेषरूपः। [अर्थात्]—वस्तुस्वभावादित्यर्थः। अकारस्य समस्तशब्दमूलत्वलक्षणात्स्वभावात् ब्रह्मणः समस्तवाच्यमूलत्वलक्षणात्स्वभावादपि। [तयोः]—अकारब्रह्मणोः। "वाच्यवाचकसंबन्धः—अर्थात्प्रतीयते" इत्यन्वयः। अयमभिप्रायः—वेदशब्दस्य तावत् 'वेदयति' इतिव्युत्पत्त्या अपशून्यायेन प्रशस्तज्ञानजनकत्वं प्रवृत्तिनिमित्तम्। ज्ञानप्राशस्त्यं ज्ञेयोत्कर्षात्। स च समन्वयाधिकरणन्यायेन सकलकल्याणगुणविशिष्टस्य भगवतस्स्वरूपतो धर्मतश्च निरतिशयभोग्यत्वम्। एवम्भूतसकलवेदतात्पर्यविषयार्थप्रतिपादकत्वं—समस्त शब्दमूलत्वम्। तच्च "अकारो वै सर्वा वाक्" "अक्षराणामकारोऽस्मि" इत्यादिवचनसिद्धम्॥

किञ्च, "यो वेदादौ स्वरः" इत्यादौ "तस्य प्रकृतिलीनस्य" इति प्रकृतित्वात् सिद्धम्। प्रकृतिशब्दस्य आदिकारणपरत्वात्। प्रकृतित्वञ्च - वेदापेक्षया, स्वरशब्दितप्रणवापेक्षया वा। वेदप्रकृतित्वं-सर्ववेदव्याख्येयत्वम्। सर्ववेदप्रकृतिभूतप्रणवप्रकृतित्वोक्तावपि तदेव फलितम्। "तस्य प्रकृतिलीनस्य" इत्यनेनाकारत्वावस्थापन्नस्येति विवक्षितम्। [यः परः] - प्रधानः, वाच्यतयोत्कृष्टः। 'तात्पर्य- तत्परत्वम्' इत्यादौ बहुव्रीह्यन्तर्गतपरशब्दे तस्यैवाभिधानात्। "यः परः" इति वाच्यस्य प्रसिद्धवन्निर्देशेन अकारवाच्यत्वेन प्रमाणान्तरप्रसिद्धो विष्णुः 'यः परः' इत्यनूद्यते। एवञ्च महेश्वरशब्दः-, न रुद्रे रूढः। विष्णुमनूद्य रुद्रत्वविधानासम्भवात्। तस्मादिदं वाक्यं विष्णोस्सर्वनियन्तृत्वेन पारम्यपरम्। न तु रुद्रस्याकारवाच्यत्वपरम्। "महेश्वरः - सः" इत्युद्देश्यविधेयव्यत्यासप्रसङ्गात्।

इत्थञ्च—सर्ववेदसङ्ग्रहस्याकारस्य सर्ववेदप्रतिपाद्योत्कृष्टार्थप्रतिपादकत्वं सिद्धम्। उत्कृष्टार्थश्च न भगवत्स्वरूपमात्रम्। "तदेवाग्निस्तद्वायुः" इत्याद्युक्तरीत्या भगवत्पराणामग्न्यादिशब्दानामपि समस्तशब्दमूलत्वप्रसङ्गात्। अतस्सकलकल्याणगुणविशिष्टभगवत्प्रतिपादकतयैव उत्कृष्टार्थप्रतिपादकत्वं वाच्यम्। तच्च - समस्तकल्याणगुणसमष्टिभूतकारणत्वविशिष्टभगवत्प्रतिपादकत्वेनैवोपपादनीयम्। अतस्सर्वार्थापेक्षयोत्कृष्टार्थप्रतिपादकः अकारस्सर्वोत्कृष्टरूपकारणत्वविशिष्टभगवत्प्रतिपादक इति "वाच्यवाचकसम्बन्धः" इत्यत्र वाचकशब्दप्रयोगमहिम्ना "अ इति ब्रह्म" इत्यादिवचनस्वारस्यसिद्धो रूढया कारणत्वनिमित्तकत्वपक्षो व्यज्यते। एतेन - "समस्तशब्दमूलत्वात्" इति वचनस्य असदर्थवादत्वशङ्का, तस्मिन्वचने कारणत्वादिनिमित्तकत्वानुक्तिशङ्का च दूरोत्सारिता। तस्मात् समस्तशब्दमूलत्वात्, नारायणपदसङ्ग्रहत्वाच्च अकारस्य कारणत्वरक्षकत्वविष्णुत्वरूपधर्मत्रयनिमित्ताकत्वं सम्भवतीति सिद्धम्—इति।

---

१. नारदीयकल्पे-अष्टाक्ष. १-११॥
२. छा-उप. ६-२-३॥
३. तै-आनन्द. ६-२॥
४. तै-आनन्द. ७-१॥
५. तै-ना. १०-२४॥
६. श्वे. ४-२॥ तै-नारा. १-७॥

(सकलजगत्कारणमिति)- त्रिविधचेतनाचेतनप्रपञ्चस्य निमित्तोपादानसहकारिरूपेण साक्षादुत्पादकमित्यर्थः। तथा हि—" बहु स्याम् " इति सङ्कल्पविशिष्टो निमित्तकारणम्, नामरूपविभागानर्हतया स्वविशेषणीभूतसूक्ष्मचिदचिद्विशिष्टस्सन्नुपादानकारणम्, ज्ञानशक्त्यादिविशिष्टस्सन् सहकारिकारणञ्च ब्रह्मैव भवतीत्यर्थः। कथं नित्यविभूतेः, तत्रस्थानां नित्यानाञ्च कार्यत्वमिति चेत्, उच्यते नित्येच्छाविशिष्टवेषेण निमित्तकारणम्,अप्राकृताचिज्जीवविशिष्टवेषेणोपादानकारणम्, विनियोगोपयोगिज्ञानादिविशिष्टवेषेण सहकारिकारणञ्चेति स्थापितत्वात्। तथोक्तं "[1]चिदाचित्त्रयात्रिविधकारणम्" इत्याचार्यहृदयश्रीसूक्तिव्याख्यानावसरे आचार्यैरेव—"नित्यविभूतियिल् - इच्छाविशिष्टवेषत्ताले निमित्तमायुम्, अप्राकृताचिज्जीवविशिष्टवेषत्ताले उपादानमायुम्, विनियोगोपयोगिज्ञानादिविशिष्टवेषत्ताले सहकारियायुम्" इति। ब्रह्मणः सकलजगत्कारणत्वं तत्त्वत्रयतत्त्वशेखरादिषु प्रपञ्चितमिति नात्रप्रपञ्चितम्॥

(सर्वरक्षकम्) इति - सर्वशब्दः -"[2]विश्वतःपृष्ठेषु सर्वतःपृष्ठेषु अनूत्तमेषु लोकेषु" इत्यादाविव समष्टिचेतनानामप्राकृतचेतनानाञ्च सङ्ग्रहार्थः। अत एव जगत्पदानुपादानम्, सर्वशब्दोपादनञ्च। सर्वशब्दप्रयोगे पूर्वप्रत्यभिज्ञापत्तेः, सर्वशब्दो योग्यतया चेतनपरो वक्तव्यः। (स्वामिनमि)ति-'एम्बेरुमानि'त्यस्यार्थ उक्तः। अस्मत्स्वामिनमित्यर्थः। अनेन "भक्तैर्भागवतैस्सह" इत्यादिरीत्या भक्तानामेव मुख्यं देवताविशेषनिरूपकत्वमिति सम्प्रदायस्सूचितः। अत एव "[3]श्रीमन्नारायणो नः पतिः" इति वेदान्ताचार्यैरनुगृहीतम्। (वदती)ति - रूढ्या योगेन च प्रतिपादयतीत्यर्थः।

(अनेन) - सूत्रेणेत्यर्थः। (प्रकृत्यर्थः) - "प्रणवस्य प्रकृतिरकारः" इति वेदार्थसङ्ग्रहश्रीसूक्तिरीत्या प्रकृतिसंज्ञिकस्याकारस्यार्थ इत्यर्थः। (धात्वर्थः) इति - "अव - रक्षणे" इत्यस्माद्धातोर्निष्पन्नस्याकारस्य रक्षकत्वमर्थ इत्यर्थः। तस्मादकारस्य सर्ववाचकजातप्रकृतिभूतस्य "[4]प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्रप्रतिपादितोपादानकारणत्वेन सर्ववाच्यजातप्रकृतिभूतपरब्रह्मवाचकत्वात् अनेन कारणत्वमभिधीयते। तदुक्तम्—" समस्तशब्दमूलत्वात्...अर्थात्प्रतीयते" इति। अत एव हि—"अकारो वै सर्वा वाक्" इति सामानाधिकरण्यश्रुतिः कारणत्वनिबन्धना। यथा "[5]सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति तज्जत्वतल्लत्वतदनत्वनिबन्धनं जगद्ब्रह्मणोस्सामानाधिकरण्यम्, तद्वदत्रापि। अनेनोपादानत्वप्रतिपादनेन लयस्थानत्वञ्च प्रतीयते। लयस्थानमेव हि उपादानम् "[6]सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" इत्यादिश्रुतेः। अस्य स्वभावत एवोपादानकारणवाचिनः पदस्य व्युत्पत्त्यनुसारात् "अव - रक्षणे" इत्यस्माद्धातोः "[7]अन्येभ्योऽपि दृश्यते" इति कृतस्य कर्तरि क्विप्प्रत्ययस्य अनुबन्धलोपं कृत्वा "[8]लोपो व्योर्वलि" इति धातोर्वकारस्य "[9]वेरपृक्तस्य" इति प्रत्ययवकारस्य च लोपेकृते 'अ' इति रूपं भवति। अनेन - सर्वरक्षकस्सर्वेश्वरोऽभिधीयते।" इति तत्त्वदीपश्रीसूक्तिरत्रानुसन्धेया।

ननु "अकारो ब्रह्मविष्ण्वीशकमठेषु" इति कोशात्, अकारस्य ब्रह्मविष्णुशिववाचकत्वस्य सिद्धत्वात् कथं विष्णुवाचकत्वमात्रपर्यवसानमिति चेत् - उच्यते। रूढ्या सर्वत्राकारस्य नारायण-

१. आचार्यहृदये. १२० ॥
२. छा-उप. ३-१३-७॥
३. रहस्यत्रयसारे॥ ४. शारीरक १-४-२३॥
५. छा. ३-१४-१॥
६. छा. ६-२-१॥
७. पाणिनीय सू. ३-२-१७८॥
८. पाणिनीय. ६-१-६६॥
९. पाणिनीय. ६-१-६७॥

परत्वदर्शनात्। "अकारो विष्णुवाचकः"[1] "यो हवै श्रीपरमात्मा नारायणस्स भगवान् अकारवाच्यः" "अइति ब्रह्म" "अक्षराणामकारोऽस्मि" "अक्षराणामकारस्त्वम्" "अ इति भगवतो नारायणस्य प्रथमाभिधानम्" इति श्रुतिस्मृतिभ्याम्। तस्मात् श्रुतिस्मृतिविरुद्धकोशपाठोऽनादरणीयः। कोशादेश्शक्तिग्रहांशे प्रामाण्यं हि न स्वतः। वेदातिरिक्तस्य शब्दस्य स्वतःप्रामाण्यायोगात्। दृश्यते हि— "वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रःप्रजापतिः" इतिकोशस्य ब्रह्मशब्दस्य वेदतपसोश्शक्तिग्राहकस्य "वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि। तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने॥ यस्मिन्प्रयुज्यमाने तु गुणयोगस्सुपुष्कलः। तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः" इतिगरुडपुराणान्तर्गतश्रीरङ्गमाहात्म्यवचनेन पुरुषोत्तमादन्यत्र ब्रह्मशब्दस्यामुख्यताप्रतिपादकेन बाधः। उक्तपुराणवचनस्येव कोशस्यापि श्रुतिमूलकत्वे उभयोस्समबलत्वेन एकस्यापरस्य बाधायोगात्। उक्तञ्च श्रीभाष्ये "तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः" इति। यथा "पीलुःकाण्डे द्रुमे गजे" इति पीलुशब्दस्य गजे शक्तिप्रतिपादकस्य कोशस्य - "चरुस्स्थाल्यां हविष्यपि" इति चरुशब्दस्य स्थाल्यां शक्तिप्रतिपादकस्य च कोशस्य न्यायेन बाधो दृश्यते। "तेष्वदर्शनात्" इति पूर्वतन्त्रप्रथमाध्यायतृतीयपादस्थशास्त्रप्रसिद्धपदार्थाधिकरणे—पीलुशब्दस्य वृक्षविशेषे आर्याणां प्रयोगेः गजे म्लेच्छानां, चरुशब्दस्य हविष्यार्याणां स्थाल्यां म्लेच्छानां प्रयोगः, तत्रोभयत्रापि तयोश्शब्दयोश्शक्तिः, आर्याणामिव म्लेच्छानामपि प्रयोगे अभियुक्तत्वात् इति पूर्वपक्षं प्रापय्य, शब्दैकसमधिगम्यधर्माधर्मयोरविप्रतिलिप्सया शब्दार्थतत्त्वविवेचनचतुराणामार्याणां व्यवहारस्य केवलदृष्टार्थप्रवृत्तम्लेच्छव्यवहारापेक्षया प्रबलत्वात्, आर्यव्यवहारानुरोधात् पीलुशब्दस्य वृक्षविशेषे शक्तिः, गजे लक्षणया शक्तिभ्रमाद्वा प्रयोगः। तथा च चरुशब्दस्य हविषि शक्तिः, स्थाल्यां लक्षणया शक्तिभ्रमाद्वा प्रयोग इति व्यवस्थापितम्। एवं "पुण्डरीकं सिताम्भोजम्" इति कोशस्य पुण्डरीकशब्दस्य सिताम्भोजपरत्वग्राहकस्य रक्ताम्भोजपरत्वग्राहकाभ्यां न्यायश्रौतव्यवहाराभ्यां बाधः। "जातिनैमित्तिकं यथास्थानम्" इति पूर्वतन्त्रनवमाध्यायतृतीयपादस्थस्तरणमन्त्रोहाधिकरणे "मौद्गञ्चरुं निर्वपेत् श्रियै श्रीकामः" इति विहितायामिष्टौ "पौण्डरीकाणि बर्हींषि भवन्ति" इति स्तरणार्थत्वेन विहितेषु पुण्डरीकेषु अतिदेशतः प्राप्तस्य "दर्भैं स्तृणीतहरितैः" इति प्रकृतिगतस्य मन्त्रस्थदर्भपदस्थाने पुण्डरीकं पदं हरितपदस्थाने रक्तपदमूहितव्यमिति व्यवस्थापितत्वात् पुण्डरीकपदस्य रक्ताम्भोजपरत्वावगतेः। एवं "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी"[4] इति श्रौतव्यवहारोऽपि रक्ताम्भोजपरत्वग्राहकः। पाणिपादतलनखनेत्रान्तताल्वुजिह्वाधराणां सप्तानां रक्तत्वस्य महापुरुषलक्षणत्वेन सामुद्रिकोक्ततया पुरुषोत्तमाक्षियुगलोपमानवाचिनः पुण्डरीकपदस्य श्वेताम्भोजपरत्वायोगात्। अतः कोशस्य लोकप्रयोगमूलकतयैव प्रामाण्यात् लोकप्रयोगस्य शक्तिभ्रमादिमूलकत्वे तन्मूलकः कोशस्तदंशेऽप्रमाणमेवेति।

अत्र शैवाः "यद्वेदादौ स्वरःप्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यःपरस्समहेश्वरः"[5] इति तैत्तिरीयश्रुतौ महेश्वरशब्दवाच्यस्य रुद्रस्यैव अकारवाच्यत्वकथनात् तस्यैव जगत्कारणत्वादिकमभ्युपगमनीयमिति आहुः।

---

१. तारसारोप॥
२. हरिवंशे-विष्णुप. १३२-५५॥
३॥
४. छा-उप. १-६-७॥
५. तै-उप-नारा. १०-२४॥

(३६) रक्षकत्वंनाम किमित्याकाङ्क्षायामाह—रक्षकत्वं नामेति ।

**मू ॥ रक्षिक्कैयावदु विरोधियैप्पोक्कुहैयुम्, अपेक्षितत्तैक्कोडुक्कैयुम् ॥ ३६**

**छा ॥ रक्षकत्वं नाम विरोधिनिवर्तकत्वम्, अपेक्षितप्रदत्वञ्च ॥ ३६ ॥**

व्या ॥ रक्षकत्वं-अनिष्टनिवर्तकत्वेष्टप्रापकत्वरूपेण द्विविधम्; तस्मात् ईश्वरस्य चेतनरक्षकत्वं तद्दुःखावहविरोधिनिवर्तनम्, सुखावहापेक्षितप्रदानञ्चेत्यर्थः ॥ ३६ ॥

(३७) एतेषामनेन निवर्त्यं विरोधि, देयमपेक्षितञ्च किमित्यत्राह—एतदिति ।

**मू ॥ इवै यिरण्डुं चेतनर निन्र निन्र अलवुक्कीडायिरुक्कुम् ॥ ३७ ॥**

**छा ॥ एतदुभयञ्च तत्तच्चेतनानुरूपम् ॥ ३७ ॥**

व्या ॥ (तत्तच्चेतनानुरूपम्) इति, तत्तदधिकारानुगुणं भवतीत्यर्थः ॥ ३७ ॥

---

तदसमञ्जसम्। तस्य अनपहतपाप्मत्वोक्तेः,अज्ञत्वाशक्तत्वादिप्रतिपादनश्रुतिस्मृतिविरोधाच्च।तस्य कारणत्वादिकं नास्त्येवेति विस्तरेणान्यत्र प्रपञ्चितम्। "यद्वेदादौ" इति श्रुतिः सर्वशेन रुद्रेणैव पाद्मोत्तरे नारायणपरत्वेनोपबृंहिता—"यो वेदादौ स्वरःप्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परस्समहेश्वरः ॥ योऽसावकारवाच्यो वै विष्णुर्नारायणो हरिः । स एव पुरुषो नित्यः परमात्मा महेश्वरः ॥ तस्यांशभूतमैश्वर्यं यस्मिन्कस्मिन्हि वर्तते । तस्मिन्नीश्वरशब्दादिः प्रोच्यते मुनिभिस्तथा ॥ निरुपाधीश्वरत्वन्तु वासुदेवे प्रतिष्ठितम् । आत्मेश्वर इति प्रोक्तो वेदवादैस्सनातनैः ॥ तस्मान्महेश्वरत्वन्तु वासुदेवे प्रतिष्ठितम् । असौ त्रिपाद्विभूतेस्तु लीलाया अपि चेश्वरः ॥ विभूतिद्वयमैश्वर्यं तस्यैव सकलात्मनः । श्रीभूनीलापतिर्योऽसावीश्वरस्समुदाहृतः । तस्मात्सर्वेश्वरत्वन्तु वासुदेवे प्रतिष्ठितम्" इति ॥ ३५ ॥

भगवतः कारणत्वस्य तत्त्वशेखरतत्त्वत्रयादिषु विस्तरेण प्रपञ्चितत्वात् तदपहाय,असङ्कुचितसर्वरक्षकत्वमत्र प्रसाध्यते—रक्षकत्वन्नामेति । रक्षणं द्विविधम् । बाह्यमाभ्यन्तरञ्च ।आभ्यन्तरं - अन्तर्यामितया सत्तानुवर्तनरूपं चेतनाचेतनसाधारणम् । बाह्यरक्षणन्तु - चेतनमात्रविषयम् । तच्चेष्टप्रापणमनिष्टनिवर्तनञ्च । चेतनविषये भगवतः रक्षकत्वं विरोधिनिवर्तकत्वे सति अपेक्षितप्रदत्वमित्यभिप्रेत्याह—रक्षकत्वन्नामेति ॥ ३६ ॥

विषयविशेषानिर्देशात् सर्वविषयत्वसिद्धेः, तत्रतत्र विरोध्यपेक्षितानि विविच्य ज्ञापयितुं, व्यवस्थितत्वमाह—एतदुभयञ्चेति ।

(एतेषाम्) - जीवात्मनाम् । (अनेन) - ईश्वरेण ।

(एतदुभयञ्चे)ति - (उभयञ्च)-इष्टत्वघटितभावरूपरक्षकत्वं, इष्टविरोधित्वघटितमभावरूपरक्षकत्वञ्चेत्यर्थः । एवं रूपत्वात्, तत्तदधिकारानुगुणमिति वक्तुं - एतच्छब्दप्रयोगः । (उभयञ्चे)ति अन्योन्यनिरपेक्षतया एकक्रियान्वयरूपसमुच्चयो विवक्षितः । न त्वितरेतरयोगः । तेन भावरूपेष्टप्रदत्वस्य इष्टविरोधिसंसर्गाभावसम्पादकत्वस्य च प्रत्येकं रक्षकतारूपत्वलाभात्, केवलदुःखनिवृत्तिदशायां दुःखनिवृत्तिमपि विना स्वरूपेणावस्थानदशायाञ्च रक्षकत्वसिद्धिः । (चेतन) शब्दः - वक्ष्य-

---

१. पाद्मोत्तर. २२६-७०, ७१, ७२, ७३, ७४, ७५ ॥

(३८) एतदेव व्यक्तीकरोत्युपरिष्टात्—संसारिणामित्यादि ।

॥ संसारिहळुक्कु, विरोधि - शत्रुपीडादिहळ् । अपेक्षितम् - अन्नपानादिहळू । मुमुक्षुक्कळुक्कु, विरोधि - संसारसम्बन्धम् । अपेक्षितम् - परमपदप्राप्ति । मुक्तर्क्कुं, नित्यर्क्कुं, विरोधि - कैङ्कर्यहानि । अपेक्षितं - कैङ्कर्यवृद्धि ॥ ३८ ॥

छा ॥ संसारिणां, विरोधी - शत्रुपीडादि । अपेक्षितं - अन्नपानादि । मुमुक्षूणां, विरोधी संसारसम्बन्धः । अपेक्षिता - परमपदप्राप्तिः । मुक्तानां नित्यानाञ्च, विरोधी-कैङ्कर्यहानिः । अपेक्षिता-कैङ्कर्यवृद्धिः ॥ ३८ ॥

व्या ॥ (संसारिणाम्) इत्यादि देहात्माभिमानिनां, शब्दादिविषयानुभव एव धात्रेष्वनस्थतां, संसारिणां निवर्त्यं विरोधी शत्रुजनोत्पादितपीडादिकम् । प्राप्यरूपमपेक्षितम् - अन्नपानादिकमित्यर्थः । (शत्रुपीडादि) इत्यादिपदेन - आधिव्याधिप्रभृतिप्रयुक्तपीडोच्यते । (अन्नपानादि) इत्यत्रादिपदम् - स्रग्वस्त्राभरणाङ्गरागाङ्गनालिङ्गनादिपरम् ॥

(मुमुक्षूणाम्) इति, मूलतः संसारमुच्छिद्य परमपदं गन्तुकामानाम्मुमुक्षूणां निवर्त्यविरोधी - मिथ्याज्ञानेन असद्व्यापारेण मलिनदेहेन च सहैतद्विभूत्यवस्थितिरूपस्संसारसम्बन्धः । प्राप्यत्वेनापेक्षिता - भगवदनुभवाद्यनुकूलपरमपदप्राप्तिरित्यर्थः ॥

(मुक्तानाम्) इति, निवृत्तसंसाराणां, अस्पृष्टसंसारागन्धानां, भगवदनुभवजनितप्रीतिकारितकैङ्कर्यपराणां, मुक्तानां, नित्यानाञ्च, विरोधी - प्राप्तशेषिभूतसर्वेश्वरचरणकैङ्कर्यस्य स्वरूपानुरूपस्य विच्छेदः । अपेक्षिता - उत्तरोत्तरकैङ्कर्यवृद्धिरित्यर्थः ॥

इत्थञ्च तत्तदधिकारानुगुणं विरोधिनिवर्तकोऽपेक्षित प्रदश्चेश्वर एव सर्वरक्षक इत्युक्तं भवति ॥ ३८ ॥

---

माणानुसारेण संसारिमुमुक्षुमुक्तनित्यरूपचतुर्विधजीवपरः । (तत्तदधिकारानुगुणमि)ति - तत्तदधिकारज्ञाप्यमिति यावत् । वह्निमत्त्वं धूमवत्त्वस्यानुगुणमितिवत् । साध्यस्य साधनोपपादकत्वात्, उपपादकस्य उपपाद्यानुगुणत्वात् ॥ ३७ ॥

अधिकाराणां प्रदर्शनार्थं स्थलत्रयमुदाहरति—(संसारिणामि)ति । संसारित्वस्य मुमुक्षुषु अतिप्रसङ्गवारणायाह—देहात्माभिमानिनामिति । अत्र संसारिशब्देन - देहविशिष्टतया सञ्चरणकारणं प्रवाहरूपेण तत्कार्यञ्च, अहङ्कारममकारकार्यं विषयप्रावण्यञ्च सदानुवृत्तं विवक्षितम् । भगवद्भक्तिकृतविषयप्रावण्यस्य मुमुक्षुष्वपि सत्वात्तद्व्यावृत्त्यर्थं अहङ्कारादिकार्यत्वलाभाय अहङ्काराद्युक्तिः । चेतनोज्जीवनाय भगवत्सङ्कल्पेन मुमुक्षूणामपि कादाचित्कानिषिद्धविषयप्रावण्यसद्भावात् सदानुवृत्तमित्युक्तम् । विरोधिपदं - संसारित्वविशिष्टस्य स्वाभिमतविरोधिपरम् । विरोधित्वञ्च - एकदेशकालावच्छेदेनैकस्मिन्विषये इच्छासमानाधिकरणभिन्नद्वेषविषयत्वम् । एकवचनं - जात्यभिप्रायम् । शत्रुपीडादिपदम् - शत्रुप्रयुक्तस्वकीयदुःखपरम् । (प्राप्यरूपमि)त्यत्र, 'संसारिणाम्' इति पदमनुषज्यते । अपेक्षितपदम् भावरूपापेक्षितपरम् । एकवचनं पूर्ववत् । (अन्नपानादिकम्) - 'अन्नञ्च पानञ्च'

इति विग्रहः । पानशब्दः - पानीये लाक्षणिकः । शत्रुपीडात्वादिकं द्विष्टतावच्छेदकम्, अन्नत्व-पानीयत्वादिकमिष्टतावच्छेदकमभिप्रेतम् । (आधिव्याधि) इति - मानसज्वरदेहजज्वरादयः । "[1]आध्यात्मिको द्विविधः शारीरो मानसस्तथा । शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः ॥ शिरोरोग-प्रतिश्यायज्वरशूलभगन्धरैः । गुल्मार्शश्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥ तथाक्षिरोगातिसारकुष्ठाङ्गामय-संज्ञिकैः । भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥ कामक्रोधभयद्वेषलोभमोहविषादजः । शोका-सूयावमानेर्ष्यामात्सर्यादिमयस्तथा" इति वैष्णवोक्तेः ॥ (अङ्गनालिङ्गनादि) इत्यादिपदम् - क्रीडादिपरम् ॥

अत्र मुमुक्षुपदेन संसारार्तिभूमकार्यसंसारनिवृत्त्युत्कटेच्छासाधनपरमपदप्राप्त्यभिनिवेशातिशय-वत्त्वं विवक्षितमित्यभिप्रायेणाह—**मूलत** इति । तेन मन्दाधिकारिणां मुमुक्षूणां संसारसम्बन्धत्वस्य द्विष्टतावच्छेदकत्वाभावेऽपि न क्षतिः । न वा मुमुक्षुत्वस्य संसारसम्बन्धे अपेक्षितविरोधित्वज्ञाप्यतया मुमुक्षुत्वेन संसारसम्बन्धे अभिमतविरोधित्वं ज्ञातुं शक्यमिति शङ्कावकाशः । मुमुक्षाकारेण परमपद-प्राप्त्यभिनिवेशातिशयपरत्वान्मुमुक्षपदस्य । "[2]रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति" इत्यादि-प्रमाणानुसारेण परमपुरुषार्थभूतपरमपदप्राप्तेस्स्वत इष्टत्वात्, तत्प्रतिबन्धकतयैव संसारनिवृत्तावुत्कटे-च्छोदायाच्च । विरोधिपदम् - पूर्ववत् । संसारपदम् - सूक्ष्मस्थूलदेहविशिष्टतया सञ्चरणलक्षण संसारकारणमूलप्रकृतिपरमित्यभिप्रायेणाह—**मिथ्याज्ञानेनेति** । (**मिथ्याज्ञानेन**) - उत्पत्तिविना-शादियोगेन असत्यशब्दवाच्याचेतनविषये आत्मज्ञानेनेत्यर्थः । (**असद्व्यापारेण**) - तद्देहात्माभि-मानादिहेतुकसंसारदुष्कर्मप्रवृत्त्येत्यर्थः । अनेन संसारसम्बन्धे द्विष्टतावच्छेदकम् - अहङ्कारममकाररूपा-विद्यापुण्यापुण्यकर्मवासनारुचिमूलकमलभाण्डदेहसम्बन्धापादकत्वं विवक्षितमिति । (**प्राप्यत्वेन**)इति, अत्रापि 'मुमुक्षूणाम्' इति अनुषज्यते । अत्र पाषाणकल्पमोक्षेच्छावतः परमपदप्राप्तेरनपेक्षितत्वात्, मुमुक्षुपदस्य परमपदप्राप्तीच्छया तत्प्रतिबन्धकमोक्षेच्छावतः परमपदप्राप्तिरपेक्षितेत्युक्तिपर्यवसानेन सा-ध्याविशेषप्रसङ्गाच्च परमपदप्राप्तीच्छावतो गुणानुभवकैङ्कर्योत्कटेच्छावत्वनियमाच्च परमपदप्राप्तिशब्दो गुणानुभवकैङ्कर्यलाभोपलक्षणार्थ इत्यभिप्रायेण—**भगवदनुभवादी**त्युक्तम्।आदिशब्दः - कैङ्कर्यपरः॥

अत्र श्रीवीरराघवताताचार्याः - "मुमुक्षुक्कलुक्कु" इत्यत्र प्रकृतिसम्बन्धविनिर्मोकापेक्षितत्वा-विशेषात् कैवल्येच्छवोऽपि सङ्गृह्यन्ते। परमपदश्चात्र विरजोत्तरदेशमात्रपरः । "[3]विरजापरमव्योम्नोर-न्तरा केवलं स्मृतम्" इति वचनात् । आचार्यव्याख्याने च - "भगवदनुभवादिहळुक्कु" इत्यादि-शब्दः - आत्मानुभवसङ्ग्रहार्थं इत्याहुः । भगवदनुभवकामनाशून्यमात्मपरस्सन् केवलं कैवल्येच्छूंश्च सङ्गृह्णाति । विरोध्यपेक्षितयोरादिशब्दौ - आत्मानुभवप्रतिबन्धकसंसारसम्बन्धात्मानुभवविच्छेदप्र कृतिसम्बन्धनिवृत्यात्मानुभवानुवृत्तिपरौ । मुमुक्षुशब्दस्य कैवल्यकामसङ्ग्राहकत्वे मुक्तशब्दस्य केवल-सङ्ग्राहकतया वक्तव्यतया कैङ्कर्यविच्छेदवृद्धिरूपविरोध्यपेक्षितप्रदर्शनस्यासाङ्गत्यप्रसङ्गात् इत्याहुः—" इति प्राहुः ।

केवलोपासकस्वप्रयोजनपरपरार्थकैङ्कर्यनिष्ठास्सर्वेऽपि - मुमुक्षुशब्दवाच्याः । तत्तदधिकारानुरो-धेन तत्क्रतुन्यायात् वाक्यार्थो वर्णनीय इत्यस्मदाचार्यः ।

मुक्तपदम् - निवृत्तसंसारपरम्, नित्यपदम् - अस्पृष्टससारगन्धसूरिपरमित्याह—**निवृत्तेति** । अनेन पदद्वयेन नित्यसूरिवाचकपदसमभिव्याहारानुगृहीतेन गुणानुभवजनितप्रीतिकारितकैङ्कर्यपरत्व-मनुगतमिष्टानिष्टज्ञापकमभिप्रेतमित्यभिप्रायेण—**भगवदनुभवे**त्यादिकमुक्तम् । अत्र कैङ्कर्यपरत्वं -

१. वि-पु. ६-५-२, ३, ४, ५ ॥ २. तै-उप-आनन्द. ७-१ ॥ ३. पाद्मोत्तरे. २२९-अध्याये ॥

न कैङ्कर्येच्छावत्त्वम्।कैङ्कर्येच्छावत्त्वस्य कैङ्कर्यहानेर्द्विष्टत्वे कैङ्कर्येष्टत्वे च ज्ञापकत्वासम्भवात्।द्विष्टतावच्छेदकैष्टतावच्छेदकयोरेव द्विष्टत्वेष्टत्वज्ञापकत्वात् । कैङ्कर्येच्छावत्त्वस्य मुमुक्षुसाधारण्याच्च । किन्तु भगवद्गुणानुभवजनितप्रीतिकारितकैङ्कर्यशालित्वमिति भावः । अत्रानुगतरूपेणानिर्देशः - कैङ्कर्यपरेषु द्वैविध्यसूचनाय । विरोधिपदं प्राग्वत् । '' कैङ्कर्यहानिः '' इत्यत्र कैङ्कर्यपदम् - न राजभृत्यादिसाधारणशेषवृत्तिमात्रपरम् । 'मुक्तानां नित्यानाम्' इति विशेषोपादानानुपपत्तेः । किन्तु अनुभवजनितप्रीतिकारितकेवलपरार्थशेषवृत्तिपरमित्यभिप्रायेणाह—**प्राप्तशेषीति** । (अपेक्षिता) इति - अत्रापि '' मुक्तानां नित्यानाम् '' इत्यनुषङ्गः । कैङ्कर्यशब्दःपूर्ववत् । वृद्धिशब्दः - उत्तरोत्तरकालसम्बन्धनैयत्यपर इत्यभिप्रेत्योक्तम्—**उत्तरोत्तरेति** ।

ननु - भगवतोऽसङ्कुचितसर्वरक्षकत्वमुक्तम् , तदसङ्गतम् ; सुखप्रदत्वस्यैव रक्षकत्वरूपतया '' एते वै निरयास्तात स्थानस्य परमात्मनः '' इति वैकुण्ठस्थानापेक्षया अन्येषां दुःखावहत्वस्योक्ततया, '' क्षेत्राणि '' इत्यादिश्लोके - ''त्वत्पादपद्मप्रवणात्मवृत्तेर्भवन्ति सर्वे प्रतिकूलरूपाः '' इति गृहक्षेत्रादेस्तत्त्वज्ञानिनां दुःखावहत्वेनोक्ततया च सांसारिकशब्दादिविषयानुभवेषु सुखत्वभ्रान्तेरेव ' अनुकूलविषयं ज्ञानमेवानन्द इत्युच्यते '' इति वदतां मते वक्तव्यतया, शब्दादिविषयानुभवप्रदत्वस्य रक्षकत्वरूपत्वासम्भवेन संसारिचेतनान्प्रति भगवतो रक्षकत्वानुपपत्तेः । '' वस्त्वेकमेव दुःखाय '' इत्यादौ, '' तदेव प्रीतये भूत्वा '' इत्यादौ च '' वस्तु वस्त्वात्मकं कुतः...तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् '' इति च सर्वस्यापि वस्तुनस्संसारदशायामनुभूयमानं भोग्यत्वं भ्रान्तिसिद्धम् , न तु वास्तवम् , इत्युक्ततया 'अप्राकृतपदार्थानां भोग्यत्वमेव, प्राकृतपदार्थानां कार्त्स्न्येनाभोग्यत्वमेवधर्मः' इति सूचनाच्च ।

न च एकस्यैव देशकालभेदेन भोग्यत्वमभोग्यत्वञ्च सम्भवतीति वाच्यम् । ज्ञानातिरिक्तसुखदुःखवादे सुखदुःखानुभवहेतुज्ञानविषयत्वलक्षणभोग्यत्वाभोग्यत्वयोरेकत्रसम्भवेऽपि, 'सुखंदुःखञ्च अनुकूलप्रतिकूलवस्तुविषयकज्ञानद्वयम्' इति सिद्धान्ते अनुकूलप्रतिकूलत्वयोश्श्यामत्वरक्तत्वयोरिव पुरुषभेदेनैकस्मिन्वस्तुन्यसम्भवात् । विरुद्धधर्माणां देशकालरूपावच्छेदकभेदेन एकत्र सम्भवेऽपि पुरुषभेदेन एकदेशकालावच्छेदेन एकत्रासम्भवस्य सार्वजनीनत्वात् ।

किञ्च - '' अनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः '' इति श्रीभाष्यसूक्त्यनुसारेण भगवतश्चेतनविषये केवलानिष्टनिवर्तकत्वदशायां रक्षकत्वं न स्यात् । सुखप्रदत्वस्याभावात् । दुःखनिवर्तकत्वस्यापि रक्षकशब्दार्थत्वे नानार्थत्वप्रसङ्गात् । लाघवेन सुखप्रदत्वस्यैव रक्षतिधात्वर्थत्वाच्च ।

अपि च वर्तमानदुःखस्य तन्निवृत्तिं विना स्वरूपेणावस्थानदशायां, भगवतश्चिदचिदपेक्षया रक्षकत्वं न स्यात् । दुःखनिवर्तकत्वस्याप्यभावात् । अन्यच्च - सुखदुःखनिवृत्त्योः परम्परासाधनप्रदानदशायां रक्षकत्वं न स्यात् । न च साक्षात्परम्परया वा सुखदुःखनिवृत्तिप्रयोजककर्तृत्वमेव रक्षकत्वमिति वाच्यम् , दुःखस्य तन्निवृत्तिप्रतियोगितया कारणत्वेन दुःखसाधनादिप्रदस्यापि रक्षकत्वापत्तेः ।

---

१. भारते-शा-मो. १९६-६ ॥
२. हस्तिगिरिमाहात्म्ये. ७-अ० ॥
३. श्रीभाष्ये ॥
४. वि-पु. २-६-४७, ४८, ४९ ॥
५. श्रीभाष्ये ॥

अस्तुवा अनुकूलत्वप्रतिकूलत्वयोः पुरुषभेदेन एकदेशकालावच्छेदेन एकत्र सम्भवः, तथापि असङ्कुचितसर्वरक्षकत्वं दुर्निरूपम्। चेतनव्यक्तीनामानन्त्येन तत्तद्व्यक्तित्वेन तत्तत्पुरुषापेक्षया तत्तद्वस्तुषु अनुकूलत्वप्रतिकूलत्वयोर्दुर्ज्ञेयतया, वस्तुगतानुकूल्यप्रातिकूल्यज्ञापकपुरुषगतानुगताकारस्य दुर्निरूपत्वात्। न च तत्तदधिकारानुगुण्येन तत्तत्पुरुषापेक्षया सुखप्रदत्वदुःखनिवर्तकत्वरूपं रक्षकत्वं ज्ञातुं शक्यमिति वाच्यम्, अधिकारशब्देन - फलेच्छाविवक्षायाम्, फलस्य - सुखदुःखाभावान्यतररूपतया, सुखत्वदुःखत्वयोः पुरुषभेदेन व्यवस्थाया असिद्धौ, फलेच्छारूपाधिकारानुगुण्येन सुखप्रदत्वदुःखनिवर्तकत्वरूपरक्षकत्वव्यवस्थाया ज्ञातुमशक्यत्वात्।

न च शत्रुपीडादीनां सांसारिकत्वावच्छेदेन दुःखत्वम्, अन्नपानादीनां सुखत्वञ्च ज्ञातुं शक्यमिति वाच्यम्; देहविशिष्टवेषेण सञ्चरणरूपसंसारित्वस्य मुमुक्षुष्वपि सत्वात्। एवं 'मुमुक्षुत्वावच्छेदेन संसारसम्बन्धो दुःखरूपः परमपदप्राप्तिस्सुखरूपे'ति ज्ञातुं शक्यमिति निरस्तम्। मुमुक्षूणामपि इदानीन्तनानां संसारसम्बन्धस्य सुखरूपत्वदर्शनात्। विद्यमानस्यैव सुखरूपत्वदर्शनेन भाविन्याःपरमपदप्राप्तेः सुखरूपत्वासम्भवाच्च।एतद्देहावसानानन्तरं नित्यसुखस्थानप्राप्तिर्भवति चेत्, अवश्यं स्यादित्येवं नित्यस्थानप्राप्तेस्सुखरूपत्वेन अनुभवस्य संसारिष्वपि सम्भवाच्च।

इत्थं 'मुक्तानां नित्यानाञ्च अनुगतरूपेण कैङ्कर्यहानिर्दुःखरूपा, कैङ्कर्यवृद्धिस्सुखरूपे'ति च न युक्तम्। "नित्यकिङ्करः प्रहर्षयिष्यामि" "नित्यकिङ्करो भवानि" इत्यादिप्रसिद्धकैङ्कर्यस्य हानेरेव शशशृङ्गायमाणत्वात्। कैङ्कर्यस्य नित्यत्वादेव कैङ्कर्यमादाय दुःखनिवर्तकत्वापूर्वसुखप्रतिलम्भनरूपरक्षकत्वासिद्धेश्च। केवलानुभवपरमुक्तविषये कैङ्कर्यमादाय रक्षकत्वलाभासम्भवाच्च। मुक्तानां नित्यसूरीणाञ्च प्रयोजकद्वयेन रक्षकत्वविवक्षायां मुक्तत्वस्य कैवल्यार्थिष्वतिप्रसङ्गाच्च।तस्माद्भगवतोऽसङ्कुचितसर्वरक्षकत्वं न सम्भवतीति शङ्कायामाह—इत्थञ्चेति।

अत्रायमाशयः—भगवतोऽसङ्कुचितसर्वरक्षकत्वं सम्भवत्येव। कुतः? सुखप्रदत्वस्य रक्षकत्वरूपत्वेऽपि "एते वै निरयास्तात"इत्यत्र वैकुण्ठस्थानापेक्षयैवान्येषां दुःखावहत्वेनोक्ततया "क्षेत्राणि मित्राणि"इत्यादिश्लोके गृहक्षेत्रादीनां तत्त्वज्ञान्यपेक्षयैव दुःखावहत्वेनोक्ततया च सांसारिकशब्दादिविषयानुभवे "अनुकूलविषयकज्ञानमेव ह्यानन्द इत्युच्यते" इति वदतां मतेऽपि सुखत्वप्रतीतेरौपाधिकसुखत्वविषयकतया औत्सर्गिकप्रामाण्यस्य सम्भवतस्त्यागायोगेन सुखत्वभ्रान्तेरवक्तव्यतया शब्दादिविषयानुभवप्रदत्वस्य रक्षकत्वरूपत्वसम्भवेन सांसारिकचेतनान्प्रति भगवतो रक्षकत्वोपपत्तेः। "वस्त्वेकमेव दुःखाय" इत्यादौ "वस्तु वस्त्वात्मकं कुतः" इति स्वभाववाचिना आत्मशब्देन-अनुकूलत्वप्रतिकूलत्वधर्मिस्वरूपवस्तुनोऽनुकूलत्वप्रतिकूलत्वधर्मरूपं वस्तुस्वभावो न भवति यावदात्मभाव्याकारो न भवतीत्युक्ततया, "तदेव प्रीतये भूत्वा" इत्यादौ "तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्" इति स्वरूपवाचिना आत्मशब्देन-सर्वं वस्तु तत्तच्चेतनकृतविविधविचित्रपुण्यपापरूपोपाधितो देशकालपुरुषभेदेन सुखरूपं, न तु स्वरूपेणेत्युक्ततया च सर्वस्यापि वस्तुनस्संसारदशायामनुभूयमानं भोग्यत्वं भ्रान्तिसिद्धम्, न तु वास्तवमित्यनुक्ततया, 'अप्राकृतपदार्थानामेव भोग्यत्वं धर्मः, प्राकृतपदार्थानामभोग्यत्वमेव धर्मः' इत्यसूचनाच्च। 'प्राकृतपदार्थानामभोग्यत्वमेव धर्मः'

---

१. स्तोत्ररत्ने॥
२. शरणागतिगद्ये॥
३. हस्तिगिरिमा॥

इत्युक्तौ "कामान्नी कामरूप्यनुसंचरन्" "तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यादिश्रुतिविरोधाच्च।

न च विरुद्धधर्माणामेकत्र देशकालभेदेन सम्भवेऽपि पुरुषभेदेन एकदेशकालावच्छेदेन एकत्रासम्भवस्य सार्वजनीनतया, 'सुखं दुःखं च अनुकूलप्रतिकूलवस्तुविषयकज्ञानद्वयमेव' इति सिद्धान्तेऽनुकूलत्वप्रतिकूलत्वधर्मयोः श्यामत्वरक्तत्वयोरिव पुरुषभेदेन एकस्मिन्वस्तुनि असम्भव इति वाच्यम्; विरुद्धधर्माणां तथाभावेऽपि, अस्मत्सिद्धान्ते " शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः" इत्यादिप्रमाणबलेन सर्वेष्वपि वस्तुषु विविधविचित्रभावरूपशक्तिविशेषाभ्युपगमेन तत्तद्वस्तुगतस्यैकधर्मस्य शक्तिविशेषस्यैव 'इदम्मे भूयात्, इदं मे मा भूयात्' इति पुरुषभेदेन रागद्वेषहेतुभूतसाक्षात्कारविशेषव्यंग्यस्य, पुरुषभेदेन एकदेशकालावच्छेदेन एकवस्तुगतानुकूलत्वप्रतिकूलत्वरूपतया, तस्यैव शक्तिविशेषस्य एकशब्दव्यक्तिगतैकधर्मस्यैव भिन्नभिन्नशब्दापेक्षया तारत्वमन्द्रत्वादिरूपत्ववत् पुरुषभेदेनानुकूलत्वप्रातिकूलत्वोपपत्तेः।

किंचोत्याद्यप्ययुक्तम्। "दुःखस्य प्रतिकूलतया तन्निवृत्तिरिष्टा भवति, न त्वनुकूलतया" इति श्रीभाष्यसुक्त्यनुसारेण इष्टत्वस्य सुखदुःखनिवृत्तिसाधारणतयानुगतप्रष्टदेत्वस्यैव रक्षतिधात्वर्थत्वेन नानार्थत्वाप्रसङ्गेन, केवलदुःखनिवर्तकत्वदशायामपि भगवतो रक्षकत्वाक्षतेः। न च लाघवेन सुखप्रदत्वमेव रक्षतिधात्वर्थ इति वाच्यम्; सुखत्वस्यानुकूलविषयकज्ञानत्वरूपतया, आनुकूल्यस्य च 'इदम्मे भूयात्' इतिच्छाहेतुसाक्षात्कारविषयाननुगताक्तसनुमेयशक्तिविशेषरूपतया प्रत्यक्षोपस्थितानुगतोपजीव्यभूतेष्टत्वस्यैव रक्षतिधातुप्रवृत्तिनिमित्तघटकत्वौचित्यात्। तस्य पदजन्यप्रतीतिप्रकारत्वाभावेऽपि परिचायकतया प्रवृत्तिनिमित्तत्वोपपत्तेः।

अपिचेत्याद्यप्ययुक्तम्। दुःखनिवृत्तिवत् दुःखात्यन्ताभावस्यापि इष्टतया वर्तमानदुःखस्य तन्निवृत्तिं विना स्वरूपेणावस्थानदशायामपीष्टप्रदत्वलक्षणरक्षकत्वस्याव्याहतत्वात्। अन्यंचेत्याद्यप्ययुक्तम्। इष्टत्वस्य सुखसाधनाद्यनुगतत्वेन दुःखसाधनादिव्यावृत्तत्वेन च तत्प्रदत्वस्यैवानुगतानातिप्रसक्तस्य रक्षकपदार्थत्वात्। अत एव

दुःखात्यन्ताभावस्यापि नेष्टत्वम्; दुःखनिवृत्तित्वाभावात्। न च दुःखसंसर्गाभावत्वमिष्टतावच्छेदकम्; दुःखसाधननिवृत्तावव्याप्तेरित्यपि दूषणं दूरीकृतम्। इष्टविरोधिसंसर्गाभावत्वस्यैव सर्वानुगतस्य दुःखनिवृत्ताविष्टतावच्छेदकत्वात्।

अस्तुवेत्यादिना, अनुकूलत्वप्रतिकूलत्वोभयनिरूपकपुरुषभेदस्य दुर्ज्ञेयतया, भगवतोऽसंकुचितरक्षकत्वं दुर्निरूपमित्युक्तमप्ययुक्तम्। तत्तदधिकारानुगुण्येनानुकूलत्वप्रतिकूलत्वयोस्सुज्ञेयत्वात्। आधिकारपदेन फलसाधनानुष्ठानहेतुभूतधर्मस्य विवक्षितत्वात। तत्तत्पुरुषापेक्षितस्यैव फलपदेन विवक्षितत्वाच्च। स च धर्मः-संसारित्वम्, मुमुक्षत्वम् मुक्तत्वम्, नित्यत्वं च।

न च संसारित्वस्य मुमुक्षुष्वतिप्रसङ्गः; शत्रुपीडादीनां तदभिमतविरोधित्वाभावात्, अन्नपानादीनां तदपेक्षितत्वाभावाच्चेति वाच्यम्, संसारिशब्देन देहविशिष्टतया संचरणकारणानां प्रवाहरूपेण तत्कार्याणां च, अहङ्कारममकारविषयप्रावण्यानां सदानुवृत्तानां विवक्षितत्वात्। भगवद्भक्तिकृतविषयप्रावण्यस्य मुमुक्षुष्वपि सत्त्वात्, तद्व्यावृत्त्यर्थं अहङ्कारादिकार्यत्वलाभाय-अहङ्काराद्युक्तिः। चेतनोज्जीवनाय भगवत्सङ्कल्पेन मुमुक्षूणामपि कादाचित्कानिषिद्धविषयप्रावण्यसद्भावात्-सदानुवृत्तानामित्युक्तम्। मुमुक्षुत्वाधिकारदूषणमप्ययुक्तम्। संसारार्तिकार्योत्कटमोक्षाभिलाषस्य मुमुक्षुपदेन विवक्षितत्वात्। तस्य "भवन्ति सर्वे प्रतिकूलरूपाः" इति न्यायेन कात्स्‍र्न्येन संसारसम्बन्धे प्रातिकूल्योपपत्तेः। अत एव इदानीन्तनेषु मन्दाधिकारिषु संसारसम्बन्धे सुखरूपत्वदर्शनेऽपि बाधकाभावाच्च। भाविन्या नित्यसुखस्थानप्राप्तेस्सुखरूपत्वस्येदानीमननुभवेऽपि, अपेक्षितत्वे बाधकाभावेन तस्यैव सुखरूपशब्देन विवक्षितत्वाच्च। निरुक्तमोक्षाभिलाषकार्योत्कटपरमपदप्राप्त्यपेक्षाया इदानीन्तनायास्संसारिष्वनतिप्रसङ्गाच्च।

मुक्तत्वनित्यत्वाधिकारदूषणमप्ययुक्तम्। पूर्ववन्निवर्त्यविरोधिनोऽत्र विवक्षितत्वेन मुमुक्षुषु प्रसिद्धस्य कैंकर्यविच्छेदस्य मुक्तेषु नित्येषु चापेक्षितविरोधित्वसम्भवेन, अ-

(३९.)कथमीश्वरस्यैव सर्वरक्षकत्वम्, मातापितृप्रभृतिदेवतान्तरपर्यन्तरक्षकान्तरदर्शनादित्यत्राह-ईश्वरेति ।

प्रसिध्यभावाच्च । पूर्ववदपूर्वसुखप्राप्तेरविवक्षितत्वेन सिद्धस्यैव कैंकर्यस्य उत्तरोत्तरकालसम्बन्धेनाभिलाषस्य तत्प्रदानेन रक्षकत्वस्य च सम्भवाच्च । मुक्तेषु गुणवृत्तिनिष्ठाभेदे सत्यपि नित्यसूरिषु तदभावेन तत्समभिव्याहारेण मुक्तपदस्यानुभवजानितप्रीतिकारितकैंकर्यनिष्ठपरतया, केवलानुभवपरेष्वनतिप्रसङ्गाच्च । अत एव वृत्तिनिष्ठत्वरूपानुगतप्रयोजकत्वस्य विवक्षिततया, कैवल्यार्थिष्वतिप्रसङ्गशंकाया अप्यनवकाशाच्च । अनुगतप्रयोजकविवक्षायामपि द्वैराश्यव्युत्पादनाय नित्यमुक्तरूपेणोक्तिसम्भवाच्च । तस्माद्भगवतोऽसंकुचितसर्वरक्षकत्वं सम्भवत्येवेति सिद्धम्-इति । एतत्सर्वमपि "रक्षकत्वन्नाम" इत्यारभ्य "अपेक्षिता कैंकर्यवृद्धिः" इत्यन्तव्याख्याने स्फुटमेवेति ध्येयम्।

(सर्वरक्षकः)-इति, ननु अनादिकालानुवृत्तसंसारदुःखसहितान् क्षेत्रज्ञान् सर्वज्ञत्वादिगुणसम्भवेऽपि अनुद्धरन् ईश्वरः सर्वरक्षक इति व्यवहारः कथंघटत इति चेत्, अस्योत्तरम्-विरोधिपरिहारे मूलमन्त्राधिकारे कुमारवरदाचार्यैरेवोक्तम् । तथा हि "स्वरूपस्य स्वभावस्य नियमेनैव रक्षणात्। अनिष्टवारणादेश्च योग्यत्वान्नित्यरक्षकः॥ द्विविधं खलु भगवतो रक्षकत्वं-सर्वविषयसत्तादिरक्षणरूपमेकं नित्यरक्षकत्वम्, संसारविषयेऽप्यनिष्टनिवारणादिरूपमपरन्तु रक्षकत्वं कादाचित्कम्, यत्किंचिद्व्याजसापेक्षम् । अतस्सर्वक्षेत्रज्ञविषयानिष्टनिवारणादिरूपरक्षणयोग्यत्वस्यानादिसिद्धत्वात्, काले तद्रक्षणात्, रक्षणस्य कादाचित्कत्वेऽपि रक्षणयोग्यरक्षकशब्दस्य मुख्यवृत्तत्वात्, आगामिपुरुषार्थप्राप्त्यनुरूपस्वरूपरक्षणसातत्याच्च भगवतस्सर्वदा रक्षकत्वमुपपन्नमिति" इति ॥ ३८ ॥

अथ ब्रह्मरुद्रादीनां रक्षकत्वं भगवतो रक्षकत्वसंकोचकमिति शंकापरिहारपरमुत्तरसूत्रमित्यभिप्रायेणाह-कथमिति ।

मू।। 'ईश्वरनै योऴिन्दवर्हळ् रक्षकरल्लर्' एन्नुमिडं प्रपन्नपरित्राणत्तिले शोन्नोम् ।। ३९ ।।

छा।। 'ईश्वरव्यतिरिक्तानामरक्षकत्वम्प्रपन्नपरित्राणेऽवोचाम।।३९।।

व्या।। 'निरुपाधिकबन्धुत्वेन सर्वकालेष्वप्यपरित्यज्य रक्षन्तं सर्वेश्वरं विनौपाधिकबन्धवो मातापितृप्रभृतयोऽर्वाचीनदेवताश्च न रक्षकाः' इत्ययमर्थस्सहेतुकं प्रपन्नपरित्राणाख्यप्रबन्धे ह्युक्तः, तत्रैव द्रष्टव्य इत्यर्थः ।। ३९ ।।

---

अयमत्र शंकाभिप्रायः—भगवतोऽसंकुचितसर्वरक्षकत्वं विषयसंकोचाद्बाधितम् । ब्रह्मरुद्रेन्द्रादीनां रक्षकत्वस्य बहुप्रमाणसिद्धत्वात् । लोके नृपमातापित्रादीनां रक्षकत्वप्रसिद्धेश्च । न च भगवतस्सर्वरक्षकत्वप्रमाणानुसारेण तत्राप्यन्तर्यामितया भगवत एव रक्षकत्वमिति वाच्यम् । अन्तर्यामित्वेन कर्तृप्रेरकतया प्रयोजककर्तृत्वेन सर्वरक्षकत्वोपपत्त्या साक्षात्सर्वरक्षाकर्तृत्वे मानाभावात् । अत एव ब्रह्मरुद्रेन्द्राणां रक्षकत्वव्यभिचारो बहुप्रमाणसिद्धः । तस्मात् मातापितृभर्तृभ्रातृपुत्राणां धनस्य च रक्षकत्वव्यभिचारो लोकसिद्ध इत्यपास्तम् । ब्रह्मादीनां कादाचित्करक्षकत्वमादायापि भगवतस्सर्वसमानेऽपि रक्षणे साक्षात्कर्तृत्वभङ्गात्—इति ।

अयमत्र परिहाराभिप्रायः-"तेजोऽतस्तथा ह्याह" इत्याद्यधिकरणन्यायेन, ज्योतिराद्यधिष्ठानाधिकरणन्यायेन, संज्ञामूर्त्यधिकरणन्यायेन च जीवानां रक्षकत्वस्य भगवत्पर्यन्तस्यैव वक्तव्यतया जीवकर्तृकरक्षणे साक्षात्कारणीभूतानां ज्ञानचिकीर्षाप्रयत्नानां निरपेक्षाश्रयत्वेन भगवतोऽसंकुचितसर्वरक्षणकर्तृत्वोपपत्तेः । अत एव ब्रह्मरुद्रादीनां रक्षकत्वव्यभिचारोक्तेः । कादाचित्करक्षकत्वे भगवदधीनत्वोक्तिमुखेन तत्रापि भगवत एव कर्तृत्वं मुख्यमिति द्योतनार्थत्वाच्चे—ति ।

मूले 'ईश्वर' पदं-निरुपाधिकासंकुचितयोगवृत्तिनिमित्तबलात्, प्रकरणबलाच्च भगवत्परमित्यभिप्रायेणोक्तं-निरुपाधिकेति। रक्षकत्वस्य निर्हेतुकत्वमुपपादयितुम्-ईश्वरत्वेन निर्देशः। "ईशेशितव्यसम्बन्धादानिदं प्रथमादपि-रक्षिष्यत्यनुकूलान्नः" इत्युक्तेः। "ईश्वरव्यतिरिक्तानामरक्षकत्वम्" इत्युक्त्या-अनिदं प्रथमेशितव्यसम्बन्धाभावात्, भगवद्व्यतिरिक्ताः निर्हेतुकरक्षका न भवन्तीति भावस्सूच्यते। (तत्रैव द्रष्टव्यः) इति-अपेक्षितार्थस्यात्रानुक्तिः विस्तरभिया; अत्र वक्तव्यं स्वातन्त्र्येण प्रबन्धान्तरे प्रपंचितम्, तत्रैव द्रष्टव्यः इत्यर्थः।

(अर्वाचीनदेवताश्चे) त्यत्र- "स्वरक्षणेऽप्यशक्तस्य को हेतुः पररक्षणे। स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्वदा" इति वचनमनुसन्धेयम्।

प्रपन्नपरित्राणग्रन्थः-

"मुमुक्षोर्मोक्षार्थं सर्वेश्वरमाश्रितस्य अनन्यगतित्वाकिंचन्ये अपेक्षिते।

अनन्यगतित्वं नाम-"निवर्तय दुःखं मा वा रक्षकान्तरशून्योऽहम्" इति प्रकारेण सर्वेश्वरं विनान्यः कश्चन रक्षको नास्तीति स्थितिः। भ्रातृ-पुत्र-माता-पितृ-ब्रह्म-रुद्रादयो रक्षका न भवन्ति किमिति चेत्-उच्यते। भ्रातरो रक्षका न भवन्तीत्ययमर्थः-वालिविषये, रावणविषये च द्रष्टव्यः। पुत्रा रक्षका न भवन्तीत्ययमर्थः-रुद्रविषये, कंसविषये, च द्रष्टव्यः। मातापितरौ रक्षकौ न भवत इत्यर्थः-कैकेयिविषये, हिरण्यविषये च द्रष्टव्यः। मातापितृभ्यां यौवनविरोधीत्युपेक्षणम्, क्षामकाले मनुष्यं दृष्ट्वा गुल्मे स्थापनम्, मूल्यमुक्त्वा विक्रयणम्, विपदागमे अनादर्तुं चिन्तनम्, अर्थक्षेत्राद्यर्थं हिंसनम्, मरणावस्थायाम्-"अज्ञानेन द्रव्यं निक्षिप्तं चेत् वदवदेति परितः स्थित्वा" इत्युक्तप्रकारेण ईश्वरं स्मृत्वा तीरं यथा न प्राप्नुयात् तथा व्याकुलीकरणम्, मारणमित्यादीनि क्रियन्ते। स्त्रीणां भर्तारो रक्षका न भवन्तीति धर्मपुत्रादिविषये, नलविषये च द्रष्टव्यम्। एतेषां रक्षकत्वाभावेऽपि लोकानां दृष्टिप्रदौ चन्द्रादित्यौ किमिति रक्षकौ न भवत इति चेदुच्यते। तौ चेश्वराज्ञाभीत्या स्वेच्छासंचारमप्राप्य

घटिकाभागं कृत्वा नियमेनोदयास्तमयौ प्राप्य, हिरण्यरावणादिहस्तगतौ, तेषां नीचवृत्तिं कुर्वन्तौ संचरन्तौ कौ चिदिति रक्षकौ न भवतः। लोकत्रयपालकश्चेन्द्रः-कदाचिदस्मत्पदच्युतिर्भवतीति भीतः, शापोपहतः, ब्रह्महत्ययाभिभूतः, इन्द्रजिद्धस्तगतः, महाबलिप्रभृतिभिरपहतैश्वर्यः, स्रवदश्रुनेत्रः, नम्रशिराः, संचरतीति रक्षको न भवति। ब्रह्मा च मधुकैटभाभ्यां क्लेशम्प्रापितः, अपहतवेदः, 'नेत्रभ्रष्टो धनभ्रष्टः' इति भूमिमुलिखन्, रुद्रहस्तेन छिन्नशिरा इति न रक्षकः। रुद्रश्च सकलप्राणिसंहारैकवृत्तिकः, पिपासया परिश्रान्तानां मुखेषु हुताशनक्षेपक इवातिक्रूररूपः, स्वाश्रितं 'छित्वा देहि, दग्ध्वा देहि' इति क्रूरदास्यं कारयिता, स्वाश्रितं बाणासुरं 'मस्तककुसुमम्लानिर्यथा न स्यात्, तथा रक्षेयम्' इति प्रतिज्ञां कृत्वा, स्वस्मा अंजलिं कृतवतां कराणामर्कवनच्छेदनमिव च्छेदनं दृष्ट्वा 'प्राणस्थितौ लवणवाणिज्येन जीवामः' इति मुखनयनमाच्छाद्य गतवान्, लोकगुरोस्स्वपितुर्ब्रह्मणो मस्तकं छित्वा पातकी सन्, स्वाधिकृते ग्रामे स्वमुपद्रवं कृत्वा प्राप्तशृंखलास्संचरन्त इव सकपालहस्तः, प्रत्यनावृतद्वारं प्रविश्य स्वं प्रकाशयन्, संचरितवांश्चेति न रक्षको भवति। अथार्थो रक्षको भवेत्किमिति निरूपणे तस्करापहार्यत्वात्, कामापहार्यत्वात्, व्याध्यपहार्यत्वात्, परैर्विरुध्य विषभक्षणं कृत्वा स्वेनैव मरणे हेतुत्वाच्च रक्षको न भवति।

ईश्वरस्तु-मातापितृभ्यां त्यक्तदशायामपि "पश्चात्स्थित्वा दासस्य बन्धुस्सन् वर्धयित्वा" इत्युक्तप्रकारेण स्वस्वरूपं विहाय रूपान्तरमङ्गीकृत्य मातृमुखं दर्शयित्वा, मृदुवचनानि वदन् भ्रातॄणां भर्तॄणां चोदासीनदशायां स्वयमेवाभिमत्य कण्ठे पात्रिकां बध्वा दौत्यं कृत्वा भ्रूविक्षेपस्थले रथं संचार्य वक्षसि बाणमारोप्य मृतान् जीवयित्वा नारायणत्वप्रयुक्तसम्बन्धेनोदरचापल्येनान्तास्स्थित्वा सत्तां रक्षन् स्थित इति अयमेव सर्वेषां रक्षको भवति।

अथाकिंचन्यं नाम-कर्मज्ञानभक्तिषु तद्धेतुभूतात्मगुणेषु च अन्वयं विना तद्विपरीतैः परिपूर्णतयावस्थितिं स्वस्वरूपस्य सर्वप्रकारेण नारायणस्यात्यन्तपरतन्त्रतया स्थितिं चानुसन्धाय 'अस्मत्कार्यस्य वयं प्राप्ता न भवामः' इति स्थितिः। एतदुभयत्र-

(४०.) अनन्तरमर्थबलादस्मिन्पदेऽनुसन्धेयं श्रियःपतित्व-माह—रक्षणकाल इत्यारभ्य ।

मू॥ रक्षिक्कुम्पोदु पिराट्टिसन्निधि वेण्डुहैयाले, इदिले श्रीस-बन्धमनुसन्धेयम् ॥ ४० ॥

छा॥ रक्षणकाले श्रीसम्बन्धस्यापेक्षितत्वात्, अत्र श्रीसम्ब-न्धोऽनुसन्धेयः ॥ ४० ॥

---

तो नारायणमेव उपायोपेयत्वेनाश्रयणात् निर्भरतया स्थितस्य शरीरावसानकाले प्राप्तिसमये "नयामि" इत्युक्तप्रकारेण सर्वेश्वरस्स्वयमेव स्वामी सन्नागत्यार्चिरादिमार्गेण परमपदं नीत्वा नित्यमुक्तैरेकपंक्तौ स्थापयित्वा नित्यकैंकर्यं दत्वा दयां कुर्यात्" ॥ ३९ ॥

इत्थमकारस्य वाच्यार्थ उक्तः, अथ व्यंग्यार्थ उच्यत इत्यभिप्रायेणोत्तरसूत्रसङ्गतिमाह-अनन्तरमिति । श्रियःपतित्वं—अकारस्य व्यंग्यार्थः ।

श्रियःपतित्वमकारव्यंग्यार्थो न भवति, भगवद्रक्षकत्वरूपाकारार्थस्य श्रीसम्बन्धाक्षेपकत्वाभावात् । न च श्रीसहितस्यैव भगवतो रक्षकत्वात् तस्य तदाक्षेपकत्वमिति वाच्यम्; तत्र मानाभावात् । न च "लक्ष्म्या सह हृषीकेशः" इत्यादिकं प्रमाणम्; "सहैव दशभिः पुत्रैः भारं वहति गर्दभी" इत्यादौ इव "लक्ष्म्या सह" इत्युक्तसाहित्यस्योपलक्षणत्वात् । अन्यथा भगवतोऽनन्याधीनत्वभङ्गप्रसङ्गात् । न च लक्ष्म्याः पत्नीत्वयुक्तपारतन्त्र्यसद्भावेन भगवतस्तत्सापेक्षत्वे स्वातन्त्र्यभूतानन्याधीनत्वं सम्भवतीति वाच्यम्; पितापुत्राभ्यां सम्भूय क्रियमाणरथादौ, वास्तवपारतन्त्र्यविशिष्टस्यापि पुत्रस्य पितृवत्स्वातन्त्र्याविशेषेण, प्रकृतेऽपि "लक्ष्म्या सह" इत्युक्तसाहित्यस्य विशेषणत्वे रक्षणक्रियायां सहकारित्वेन लक्ष्म्या अपि स्वातन्त्र्या-

व्या॥ "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकस्सर्वसिद्धान्ते वेदान्तेऽपि च गीयते" इत्युक्तप्रकारेण रक्षकस्येश्वरस्य चेतनरक्षणसमये तदपराधस्वस्वातन्त्र्यप्रयुक्तोपेक्षां विहाय

पत्यौ वास्तवपारतन्त्र्यस्याप्रयोजकतया रक्षणकार्ये स्वतन्त्रान्यानधीनत्वस्याप्रसङ्गात् इति शङ्कां परिहरन् सूत्रार्थमाह—लक्ष्म्येति । अयमत्र परिहाराभिप्रायः-श्रियःपतित्वमकारस्य व्यंग्यार्थो भवत्येव । भगवद्रक्षकत्वरूपाकारार्थस्य श्रीसम्बन्धाक्षेपकत्वात्। श्रीविशिष्टस्यैव भगवतस्सर्वत्र रक्षकत्वात् । तत्र च "लक्ष्म्या सह" इत्यादेरेव प्रमाणत्वात् । तत्र लक्ष्मीसहितत्वस्य विशेषणत्वे सम्भवति उपलक्षणत्वस्यान्याय्यत्वात् । नचैवं भगवतोऽनन्याधीनत्वभङ्गप्रसङ्गः, लक्ष्म्याः पत्नीत्वप्रयुक्तपारतन्त्र्यसद्भावेन भगवतस्तत्सापेक्षत्वेऽपि स्वतन्त्रानन्याधीनत्वसम्भवात् । न च पितापुत्राभ्यां सम्भूय क्रियमाणरथादौ वास्तवपारतन्त्र्यविशिष्टस्यापि पुत्रस्य पितृवत् स्वातन्त्र्याविशेषेण, प्रकृतेऽपि "लक्ष्म्या सह" इत्युक्तसाहित्यस्य विशेषणत्वे रक्षणक्रियायां स्वातन्त्र्यापत्त्या पत्नीत्वप्रयुक्तपारतन्त्र्यमप्रयोजकमिति वाच्यम्; रथादौ पितापुत्रयो रथत्वाद्यविच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नतक्षणादिव्यापाराणां, तक्षत्वादिकारणतावच्छेदकस्य चाविशेषेण द्वयोरपि स्वतन्त्रकारणत्वेऽपि, प्रकृते श्रीश्रीशयोश्चेतनकर्मकरक्षणक्रियायामेकधर्मावच्छिन्नकारणताकत्वे मानाभावेन पत्नीत्वप्रयुक्तपारतन्त्र्यस्य राजभृत्यादिन्यायेन घटकत्वरूपपरम्पराकारणत्वप्रयोजकत्वसम्भवात् । सम्भवति च भगवद्वाल्लभ्यातिशयात् राजभृत्याद्यपेक्षयापि फलाविनाभूतघटनातिशयः। किंच "लक्ष्म्या सह" इत्यत्र "सहयुक्ते अप्रधाने" इति तृतीयया क्रियायाः प्राधान्यप्रतीत्या घटकत्वेनैव लक्ष्म्या अन्वयो वचनसिद्धः । अतो न भगवतोऽनन्याधीनत्वभङ्गः ।—इति ।

पूर्वसूत्रस्थं 'ईश्वर' पदम्-अत्रानुषज्यते-इत्यभिप्रायेण-रक्षकस्येश्वरस्येत्युक्तम् । (चेतनरक्षणसमये) इति-आश्रितचेतनरक्षणफलोपधानसमये इत्यर्थः। "क्रा-

रक्षितुं निदानभूतकृपां जनयितुं पुरुषकारभूताया लक्ष्म्यास्सन्निधा-

रुण्यरूपया"-'कारुण्यम्-ईश्वरकारुण्यम्, रूपयति-प्रकाशयति इति कारुण्यरूपा' इति व्युत्पत्तिमभिप्रेत्याह-**निदानभूतां कृपां जनयितुमिति** । कृपोद्भावनवचनम्-वात्सल्यक्षमाद्युद्भावनस्याप्युपलक्षणम् ।

"मत्प्राप्तिं प्रति जन्तूनां संसारे पततामधः । लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमार्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत्" "अहं मत्प्राप्त्युपायो वै साक्षाल्लक्ष्मीपतिस्स्वयम् । लक्ष्मीःपुरुषकारेण वल्लभा प्राप्तियोगिनी । एतस्याश्च विशेषोऽयं निगमान्तेषु शब्द्यते" "आकिंचन्यैकशरणाः केचिद्भाग्याधिकाः पुनः । मत्पदाम्भोरुहद्वन्द्वं प्रपद्य प्रीतमानसाः । लक्ष्मीं पुरुषकारेण वृतवन्तो वरानन । मत्क्षमां प्राप्य सेनेश प्राप्यं प्रापकमेव माम् । लब्ध्वा कृतार्थाः प्राप्स्यन्ते मामेवानन्यमानसाः" इत्यादिभगवच्छास्त्रस्थशेषिवचनमभिप्रेत्याह-**पुरुषकारभूताया** इति । अनेन श्रियः उपायत्वप्रतिपादकश्रुतिस्मृत्यादिवचनानां पुरुषकारत्वेन वरणीयतापरत्वमुक्तं भवति। तथा चोक्तम्-श्रीमद्रहस्यत्रयसारव्याख्याने सारदीपिकायाम्-"वाचःपरमिति-वाचःपरम्-वाचामगोचरं हरिम्, प्रार्थयिता-शरणत्वेन जिगमिषुः, नियतम्-नियमेन, श्रियं प्रपद्येत्-शरणं व्रजेत्, पुरुषकारत्वेनेति भावः" इति । "अहं मत्प्राप्त्युपायो वै" इति भगवद्वचनेनैवायमर्थःप्रतीयते । तथा हि-'लक्ष्मीपतिः' इत्यनेन-पुरुषकारसम्बन्धः, 'साक्षात्' इत्युपायान्तरव्यावृत्तिः, 'स्वयम्' इति लक्ष्मीव्यावृत्तिश्चोक्ता । 'वल्लभा' इत्यस्य 'मम' इत्यादिः । 'मम वल्लभा लक्ष्मीः पुरुषकारेण प्राप्तियोगिनी' इत्यन्वयः। अत्र 'मम वल्लभा' इति पुरुषकारहेतुवाल्लभ्यमुक्तम् । अत्र "रथन्तरे प्रस्तूयमाने सम्मीलयेत् । बृहति प्रस्तूयमाने समुद्रं मानसा ध्यायेत्" इति रथन्तरसामप्रस्तूयमानवेलायां सम्मीलनम्, बृहत्सामप्रस्तूयमानसमये समुद्रध्यानं च "साम्नोर्व्यवस्थया यस्मात् निर्देशो मीलनादिषु । तस्मान्न सङ्करो युक्तो न त्वेवं मोक्षणादिषु" इति व्यवस्थाम्नानेन इतिव्यवस्थितौ "एकार्थत्वाद्विभागस्स्यात्" इति पूर्वतन्त्रे नावमिकाधिकरणे

व्यवस्थापितम्; तन्न्यायेन "अहं मत्प्राप्त्युपायः लक्ष्मीःपुरुषकारेण वल्लभा प्राप्तियोगिनी" इति व्यवस्थितामिति स्पष्टम्। (एतस्याश्चे) ति, अत्र 'अहम्मत्प्राप्त्युपायः' इति उभयोर्धर्मव्यवस्थायाः प्रकृतत्वात् 'वल्लभा' इत्यत्र क्लृप्तं 'मम' पदमत्रापि योजनीयम्। 'मम एतस्याश्च' इति सिद्धम्। (विशेषोऽयमि) ति, पूर्वोक्तव्यवस्थाम्नानेन, उपायत्वं-'भगवदितरावृत्तित्वे सति भगवद्वृत्तिः' इति, पुरुप कारत्वं-'लक्ष्मीतरावृत्तित्वे सति लक्ष्मीवृत्तिः' इति च सिद्धत्वात् तद्वृत्तित्वे सति तदितरावृत्तिरूपधर्मस्य वाचकविशेषशब्देन-उपायत्वं पुरुषकारत्वं चोक्तम्। "अहं मत्प्राप्ति" इत्यादिपूर्ववाक्ये प्रतिनियतधर्मद्वयस्य प्राप्तत्वात्, प्रापकवाक्यावगतद्वित्वविरुद्धैकत्वं-प्रापकवाक्यावगतबहुत्वविरुद्धग्रहैकत्ववत्, अविवक्षितम्। 'मम एतस्याश्च इमौ विशेषौ-उपायत्वपुरुषकारत्वरूपप्रतिनियतधर्मौ' इति पर्यवासितम्। (निगमान्तेषु शब्द्यते) इति-प्रतिनियतधर्मत्वेन वेदान्तेषु प्रतिपादयतीत्युक्तेः,ईश्वरस्य लक्ष्म्याश्च सामान्येन मोक्षोपयोगित्वबोधकश्रुतिस्मृत्यादिवचनानामुक्तव्यवस्थितविशेषेषु "छागो वा मन्त्रवर्णात्" इत्युक्तछागपशुन्यायेन पर्यवसानमित्यस्य व्यवस्थापकवचनस्य तात्पर्यम्। "मैत्रायणीयोपनिषदि "तस्मिन्नेव यजमानैः सैन्धवघन इव लीयन्त्येषा वै ब्रह्मैकतानामात्रं हि सर्वे कामास्समाहिताः" इति। सैन्धवघन इवेति-यथा सैन्धवघन उदके प्राप्तः तत्र लयं प्राप्नोति-तत्समानाकारतया दुर्ग्रहविवेको भवति, रसविशेषेण विवेक्तुं च योग्यः। तद्वद्ब्रह्मणि प्रलीनोऽपीति भावः। अत्र च ब्रह्मैकतानुवादेन लयरूपताविधिः प्रतीयते। तदयं भावः-सर्वेषु मोक्षप्रकरणेषु "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिरूपेणाभेदप्रतिपादकत्वेन प्रतीयमानानां वाक्यानामयमेवार्थ इति" इति पाराशरविजयश्रीसूक्तिरीत्या वेदान्तप्रतिपाद्योऽर्थः एतत्प्रतिनियतधर्म इत्यनेन-सर्वत्रोपायप्रकरणेषु "उदाराम्" "अमृतं दुहाना" "पदनिर्वाणदायिनी" "संसारार्णवतारिणी" "विमुक्तिफलदायिनी" इत्यादिरूपेणोपायत्वप्रतीयमानवाक्यानामेतत्प्रतिनियतधर्म एवार्थः इति प्रबलप्रमाणभूतभगवच्छास्त्रेणैव वेदान्ततदुपबृंहणस्थवाक्यानां व्याख्यातत्वात्, तद्विरुद्धकल्पनमन्यायमेव। 'एतस्या अयं च विशेषो निगमान्तेषु शब्द्यते' इत्यन्वये संमुच्चे-

तन्यस्याप्रकृतत्वात्, समुच्चयो व्यर्थः। 'एतस्या अयन्तु विशेषः' इति कथने, चकारस्य- तु शब्दार्थकत्वं क्लिष्टम्। चकारस्य भिन्नक्रमत्वं च क्लिष्टम्। 'अयमेव विशेषः' इति चेत् विशेषान्तराणां बहूनां सत्त्वात् बाधश्च प्रसज्यते। उभयोर्धर्मप्रतिनियमस्य प्रक्रान्तत्वात्, पुरुषकारत्वमात्रस्य निगमान्तप्रतिपाद्यत्वकथनस्य न्यूनत्वात्, 'एतस्यास्त्वयं विशेषः निगमान्तेषु शब्द्यते' इत्युक्तिरपि असङ्गता। तस्मात् 'मम एतस्याश्च इमौ विशेषौ निगमान्तेषु शब्द्यते' इत्येवार्थो वक्तव्यः। किंच "अन्यथा लक्षणं न भवेत्" इति अन्यलक्षणनिषेधकण्ठोक्त्या पुरुषकारत्वलक्षणव्यतिरेकेणोपायत्वं लक्ष्म्या नास्तीति सिद्धम्। किंच श्रीमन्निगमान्तगुरुवर्यैरपि श्रीमद्रहस्यत्रयसारादिषु लक्ष्म्याः पुरुषकारत्वमेव "अर्थस्वभावानुष्ठानलोकदृष्टिगुरूक्तिभिः। श्रुत्या स्मृत्या च संसिद्धं घटकार्थावलम्बनम्" इत्यादिना स्थापितम्। तैरेव विरोधपरिहाराख्यग्रन्थे भगवत उपायत्वमेव नियतस्वरूपम्, अस्याःपुरुषकारत्मेव लक्षणमिति व्यवस्थापितम्-"ईश्वरस्य दण्डधरत्वं, लक्ष्म्याश्च पुरुषकारत्वमित्येवमुभयमपि "युवत्वादौ तुल्ये" "वाचःपरं प्रार्थयिता प्रपद्येन्नियतः श्रियम्" इत्युक्तप्रकारेणानादिभगवत्संकल्पव्यवस्थया व्यवस्थितमेतत्। अतो विलक्षणगुणसम्बन्धयुक्तः स्वतन्त्र एव स्वामी स्वसङ्कल्पाधीनपुरुषकारमुखेनैव रक्षतीति प्रमाणसम्प्रदायाभ्यामवगम्यते" इति। तस्मात् भगवतः फलप्रदत्वे सति फलकरणत्वरूपोपायत्वम् इति, क्षमाद्युद्भावनद्वारा भगवदीयोपायभावप्रयोजकत्वरूपपुरुषकारत्वं लक्ष्म्यास्तदितरावृत्तित्वे सति तद्वृत्तिरूपधर्मइति च सिद्धम्। अयमर्थस्तु द्वयस्थप्रथमपदे व्यक्तीभविष्यति। प्रपंचितोऽयमर्थःश्रीतत्त्वप्रकाशिकायामस्माभिः।

**(पुरुषकारे)** ति-कृपाद्युद्भावनद्वारा भगवत्कर्तृकरक्षणप्रयोजकत्वं-पुरुषकारत्वमित्यर्थः। एतादृशपुरुषकारत्वं लक्ष्म्या असाधारणमित्यभिप्रायेणाह—लक्ष्म्या इति। "एतत्सापेक्षसम्बन्धादन्येषाममलात्मनाम्। देवीसूरिगुरूणां च घटकत्वं न तु-स्वतः" इति वादिकेसरिभिःदीपसंग्रहे अनुगृहीतामिति भावः। पुरुषं करोतीति पुरुषकारः। कर्मण्यण्। शब्दस्वभावात्पुल्लिङ्गत्वम्। "पूर्णत्वात्पुरुष" इति निरु-

नस्यावश्यापेक्षितत्वात्, रक्षकवाचकेऽस्मिन्नकारे तस्य लक्ष्मीसम्बन्धोऽप्यनुसन्धेय इत्यर्थः ।

अत्र लक्ष्मीत्यनुक्त्वा, श्रीत्युक्तिः-'श्रयते इति श्रीः' इति व्युत्पत्तिसिद्धानित्यसेवाकर्तृत्वेनास्या विद्यमानाविनाभावस्य, 'श्रीयत इति श्रीः' इति व्युत्पत्तिसिद्धचेतननित्यसेव्यत्वस्य च प्रकाशनार्थम् ॥ ४० ॥

---

क्त्या क्षमादिपूर्णं करोतीति व्युत्पत्तिरत्राभिप्रेता । 'पुरुषं करोति रक्षकं करोतीति पुरुषकारः' इति वा ।

(सन्निधानस्ये)ति-सन्निधिपदेन-मातृत्वप्रयुक्तवात्सल्यातिरेककृतमानससङ्कल्पमुखेन, "किमेतन्निर्दोषः क इह जगति" इत्याद्युपदेशमुखेन "पुरतः पतितं देवी धरण्यां वायसं तदा । तच्छिरःपादयोस्तस्य योजयामास जानकी" इत्यादिव्यापारमुखने च सान्निध्यं विवक्षितम् । (आवश्यकत्वात्) इति पदेन श्रीमच्छब्दबलात्, तदुपबृंहणवचने "लक्ष्म्या मह" इति अप्रधाने तृतीयानिर्देशाच्च घटकत्वं विवक्षितम् । (अनुसन्धेयः)-अकारस्य शाब्दबोधानन्तरं व्यंग्यमर्यादया ज्ञातव्य-इत्यर्थः । अनुसन्धानशब्दोपाधितया श्रीसम्बन्धस्यावश्यज्ञातव्यत्वं व्यज्यते ।

(लक्ष्म्यासह-सर्वसिद्धान्ते) इति-अत्र "प्रथमो मन्त्रसिद्धान्तो द्वितीयस्त्वागमाह्वयः । तृतीयस्तन्त्रसिद्धान्तस्तुरीयस्तदनन्तरः" इतिश्लोकोऽनुसन्धेयः ।

(अत्र लक्ष्मीत्यनुक्त्वा) इति-यद्यपि "लक्ष्म्या सह" इत्यादिस्पष्टार्थकवचनप्रत्यभिज्ञानाय 'लक्ष्मीसम्बन्धः' इति वक्तव्यम्; तथापि "रक्षणकाले श्रीसन्निधानस्यापेक्षितत्वात्" इति सिद्धवन्निर्देशमहिम्ना "लक्ष्म्या सह" इत्यादिवचनस्यार्थतः प्रत्यभिज्ञानमभिप्रेत्य मूलप्रमाणस्मारणाय श्रीशब्दप्रयोगः। 'श्रीमत्' इति मतुबर्थस्य

(४१.) इतश्चास्मिन्नकारे 'ईश्वरस्य लक्ष्मीसम्बन्धो नियमेन प्रकाशते' इत्यमुमर्थमाप्तवचनेन दर्शयति-अत्रेत्यादिना ।

मू॥ अत्र भगवत्सेनापतिमिश्रर्वाक्यम्-"अवन्मार्वुविट्टुप्पिरियिलिव्वक्षरंविट्टुप्पिरिवदु" ॥ ४१ ॥

छा॥ अत्रभगवत्सेनापतिमिश्रवाक्यम्-"तद्वक्षस्स्थलं त्यजति चेत् एतदक्षरं त्यजति" ॥ ४१ ॥

व्या॥ अत्र ज्ञानाधिकैः श्रीसेनापतिमुनिभिरनुगृहीता वा-

---

विवक्षितत्वद्योतनाय सामान्यवाचिसम्बन्धशब्दप्रयोगश्चेति भावः ॥ ४० ॥

इत्थं-उपबृंह्योपबृंहणप्रमाणस्मारणपूर्वकं, सहकारितासम्बन्धेन अकारयोगवृत्तिनिमित्तभूतभगवत्कर्तृकजगद्रक्षणव्यङ्ग्यत्वं लक्ष्मीसम्बन्धस्योक्तम् । अथ अविनाभावसम्बन्धेन अकाररूढिवृत्तिनिमित्तभूतभगवद्विग्रहविशेषव्यङ्ग्यत्वमुच्यत इति उत्तरवाक्यसङ्गतिमाभिप्रेत्याह-इतश्चास्मिन्निति । आप्तत्वम्-यथार्थदृष्टत्वे सति यथार्थवादित्वम् ।

(अत्र)-लक्ष्मीसम्बन्धरूपव्यङ्ग्यार्थे (भगवत्सेनापतिमिश्रवाक्यम्)-ब्रह्मशब्दस्य निरतिशयबृहत्त्ववत्, भगवच्छब्दस्य पूर्णषाड्गुण्यवत्त्वं मुख्योऽर्थः । तस्य लोकोत्तरबृहत्त्ववत्, अस्य अलौकिकार्थसाक्षात्कारवत्त्वं प्रयोगप्राचुर्यसिद्धोऽर्थः । प्रकृते तु "ज्ञानाधिक्येन प्रपन्नाः पूर्वाचार्याः" इत्यनुगृहीतरीत्या स्वरूपयाथात्म्यज्ञानं विवक्षितमित्यर्थद्योतनाय-ज्ञानाधिकैरित्युक्तम् । 'सेनापति' शब्दः-नामधेयपरम् । 'मिश्र' शब्दः-पूजोक्तिः । (श्रीसेनापतियतिः)-भगवद्रामानुजसकाशनिरन्तरसंवासाधिगतनिखिलश्रुत्यन्ततत्त्वार्थश्रीवत्सचिह्नमिश्रशिष्यः । (वाक्यम्)-अनुस-

र्ता—"क्षणमपि विश्लेषयोग्या न भवामि" इति तस्य वक्षसि नित्यं वसन्त्या अस्यास्तद्वक्षोवियोगे सति, तत्प्रतिपादकैस्तदक्षरवियोगस्स्यादित्यर्थः । अत्र 'इति' इत्यध्याहार्यम् । अन्यथा पूर्ववाक्यानन्वयापत्तिः ।

अनेन—'तद्वक्षस्सम्बन्धस्यास्या नित्यत्वात्, तत्प्रतीतिस्थले एतस्याश्च प्रतीतिनिश्चयात्, तद्वक्षस्यन्वयवत् तद्वाचकाकारेऽप्यन्वयोऽप्यस्या नित्यः' इत्युक्तम्भवति ॥ ४१ ॥

---

न्धेयमिति शेषः । लक्ष्मीसम्बन्धरूपव्यङ्ग्यार्थे पूर्वाचार्यवाक्यं व्यङ्ग्यत्वसाधकविशेषपरतयानुसन्धेयमिति भावः । नियामकविशेषदर्शनाय परमाचार्यसूक्तिमुदाहरति—क्षणमपीति । (क्षणमपि)इति—भगवतो निजभुजद्वयेय गाढालिङ्गनयोग्यस्थलभगवद्वक्षसः क्षणविश्लेषोऽपि लक्ष्म्या न सोढुं शक्य इति तत्सूक्त्यभिप्रायः । 'लक्ष्मीः तद्वक्षस्थलं त्यजति चेत्' इति विशेष्य पदाध्याहार्यमित्याभिप्रायेणाह-नित्यं वसन्त्या इति । (तद्वक्षस्स्थलम् )इत्यत्रतच्छब्दार्थः-सदा लक्ष्मीवक्षस्कत्वेन प्रसिद्धो भगवान् । (वियोग) इति-उत्तरदेशसंयोगपर्यन्तं विवक्षितम् । गाढालिङ्गनार्थो विभागोऽपि न सह्यः, उत्तरदेशसंयोगस्य का कथा इत्याशयेन-'विट्टु-पिरियिल्' इत्युक्तमु । अन्यथे) ति-अन्यथा "तद्वक्षस्स्थलम्" इत्यस्य ग्रन्थकारवाक्यत्वे, सेनापतिमिश्रवाक्यत्वेन ग्रन्थकाराभिप्रेतमन्यत्कल्पनीयं स्यात् । तच्च नास्तीति तात्पर्यम् ।

अत्र केचित्-'अकारव्यङ्ग्याश्रियःपतित्वम्' इति सम्प्रदायश्रद्धाविजृम्भितमात्रम् । अन्यथा "श्रीवत्सवक्षा नित्यश्रीः" "ययौ वक्षस्स्थलं हरेः" इत्यादिप्रसिद्धाया विष्णुवक्षस्स्थलालयाया अकारेण व्यंजनयानुपस्थितौ वक्षसि स्थितिर्न स्यात् इति, वक्षस्स्थितिवत् अकारेणोपस्थितिरपि नियतेत्युक्तिः परीक्षकपरिहासनीयत्वापत्तेः । न

चाकारस्य भगवति रूढतया लक्ष्म्यालिङ्गितवक्षस्कत्वं रूढिनिमित्तमिति लक्ष्मीसम्बन्धबोधो लभ्यत इति वाच्यम्; एवं तर्हि श्रियःपतित्वस्यैव रूढिनिमित्तत्वापत्तौ 'श्रियःपतित्वमकारव्यंग्यार्थः' इति सिद्धान्तभङ्गप्रसङ्गात्। यदि च मन्त्ररत्ने श्रीमत्पदेन निर्दिष्टस्यापि श्रीसम्बन्धस्य नारायणशब्देनापि निर्देशे पौनरुक्त्यापत्त्या नारायणादिशब्देषु रूढिप्रवृत्तिनिमित्तमन्यदेवेत्युच्येत; तर्हि तदेवकारस्यापि रूढिवृत्तिनिमित्तमिति नाकारस्य श्रियःपतित्वं रूढिवृत्तिनिमित्तव्यङ्ग्यार्थः। अतो वक्षस्स्थलपरित्यागे अकारपरित्याग इति वाक्यमसदर्थवाद एवे-ति।

अत्रोच्यते–"तमसः परमो धाता शंखचक्रगदाधरः" "जातोऽसि देवदेवेश शङ्खचक्रगदधर" "शमितानिखिलतापं शंखचक्रादिचिह्नम्" इत्यादिप्रतिपन्नशंखचक्रादिविशिष्टविग्रहविशेषस्यैव, ब्रह्मरुद्रेन्द्रादिशब्देषु चतुर्मुखत्वत्रिनेत्रत्वसहस्राक्षत्वादिविशिष्टविग्रहवत्, विष्ण्वादिशब्देषु रूढिनिमित्ततया तत्पर्यायस्याकारस्यापि तादृशविग्रहविशेष एव रूढिनिमित्तमिति, लक्ष्मीसम्बन्धनियतविग्रहविशेषबोधकस्याकारस्य लक्ष्मीसम्बन्धव्यंजकत्वावश्यम्भावेन "लक्ष्म्या अकारव्यङ्ग्यत्वाभावे भगवद्वक्षस्स्थलसम्बन्धो न स्यात्" इति श्रीसेनापतिमिश्रसूक्त्यनुसारेण श्रियःपतित्वमकारव्यङ्ग्यार्थ एव। तत्सूक्तौ संप्रदायश्रद्धाविजृम्भितत्वोक्तिश्च, अकारप्रवृत्तिनिमित्तविग्रहविशेषे लक्ष्मीवक्षस्कत्वाविनाभावाज्ञाननिबन्धना। लक्ष्मीवक्षस्कत्वनियतविग्रहविशेषनिमित्तकाकारेण विष्णुवक्षस्स्थलालयाया लक्ष्म्या व्यंजनयानुपस्थितौ, वक्षसि स्थितिर्न स्यादित्यापादनस्य परीक्षकहृदयङ्गमत्वात्। न च श्रीपतित्वमेवरूढिनिमित्तमिति तस्य व्यङ्ग्यत्वभङ्गप्रसङ्गः, श्रीपतित्वं कस्मिन्नात्मस्वरूपेऽस्ति, कस्मिन्नास्तीति जिज्ञासायां, शंखचक्रादिचिह्नितविग्रहविशेषावच्छिन्नात्मस्वरूपत्वस्यैव तद्व्यंजकत्वेन वक्तव्यतया, तस्यैव निमित्तौचित्यात्। एवं च मन्त्ररत्ने श्रीमच्छब्दसमभिव्याहारोऽप्युपपद्यते–इति ॥ ४१. ॥

इत्थं सूत्रद्वयेन हेतुद्वयमुखेन लक्ष्मीसम्बन्धस्याकारव्यङ्ग्यार्थत्वमुक्तम्; अथ तृतीयचतुर्थहेतुद्वयमुखेन लक्ष्मीसम्बन्धस्य व्यङ्ग्यत्वमाहेति सङ्गतिमभिप्रेत्योत्तरसूत्रमव-

(४२). पुनश्चामुमर्थम् स्थिरीकर्तुमीश्वरचेतनवाचकयोरकारमकारयोर्द्वयोरप्येतस्या विद्यमानमनवरतान्वयं सदृष्टान्तमाह—भर्तुरित्यारभ्य ।

तारयाति—पुनरिति (स्थिरीकर्तुम्)—स्थिरीकरणम् हेत्वन्तरेणापि संस्थापनम् ।

ननु-'अकारमकारसमभिव्याहारव्यङ्ग्यं श्रियःपतित्वम्' इत्यपि न सम्भवति; अकारार्थरक्षणसहकारित्वेन श्रीसम्बन्धाक्षेपस्यानुपदमेव निरस्ततया, मकारस्य ज्ञातृत्वादिविशिष्टजीवप्रतिपादकस्य श्रीसम्बन्धगन्धव्यंजकत्वासम्भावितया च तदुभयसमभिव्याहारव्यंजकत्वशङ्काया दूरापास्तत्वात् । न च शय्यास्थितभर्तृरंजनार्थं खट्वासुप्तशिशुपोषणार्थं च भार्यात्वजननीत्वाकारेण स्त्रियश्शय्याखट्वयोरपरित्यागवत्, ईश्वरजीववाचकाकारमकारापरित्यागो लक्ष्म्या अपि सम्भवतीति वाच्यम्; भर्तृशय्यास्थितेर्भार्या भोगार्थतया, शिशोःखट्वास्थितेर्जननीकर्तृकस्वापनमुखेन पोषणार्थतया च भार्यायास्सामीप्यसम्बन्धेन शय्याखट्वयोरपरित्यागसम्भवेऽपि, अकारमकारयोर्लक्ष्मीसापेक्षव्यापारमुखेन ईश्वरजीवबोधकत्वाभावेन, लक्ष्म्या बोध्यतासम्बन्धेनाकारमकारापरित्यागे मानाभावात् । स्त्रियश्शय्याखट्वयोरपि अपरित्यागस्यानियततया लक्ष्म्या अकारमकारापरित्यागस्य नियततया च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्याच्च । अकारार्थरक्षणेन व्यंग्यत्वस्य पूर्वमेवोक्ततया पुनस्तदुक्तिवैफल्याच्च । ज्ञातृत्वरूपेण जीवबोधकस्य मकारस्याकारसमभिव्याहारेऽपि लक्ष्मीसम्बन्धव्यंजकधर्मपरत्वासम्भवेनाकारसमभिव्याहारोक्तिवैफल्याच्चेति शङ्कायाः, "श्रद्धया देवो देवत्वमश्नुते" "तया स राजर्षिसुतः" इत्यादिश्रुतिस्मृतिमूलकेन "यस्या वीक्ष्यमुखं तत्" इत्याद्याचार्यवचनेन च भगवत्कृतेन रक्षणस्य लक्ष्मीमुखोल्लासार्थतया रक्षकत्ववाचिनाकारेण रक्षणफलमुखोल्लासशालिलक्ष्मीपतित्वं व्यङ्ग्यमिति निर्बाधम् । "श्रियं वासय मे कुले मातरं पद्ममालिनीम्" ···निजदेवीं मातरं श्रियं वासय मे कुले"

मू॥ भर्त्ताविनुडैय पडुक्कैयैयुम्, प्रजैयिनुडैय तोट्टिलैयुं विडादेयिरुक्कुम्मातावैप्पोले, प्रथमचरमपदङ्गळै विडादेयिरुक्कुमिरुप्पु ॥ ४२ ॥

छा॥ भर्तुश्शय्याम्, प्रजायाः डोलां चापरित्यजन्ती मातेव प्रथमचरमपदे न परित्यजति ॥ ४२ ॥

व्या॥ शेषभूतायास्स्वस्वरूपानुरूपं भर्तारं रसयितुं तच्छ-

---

"त्वंमाता सर्वलोकानाम्" इतिश्रुतिस्मृत्यनुसारेण "त्वजनयसि माता तदसिनः" इत्याद्याचार्यवचनेन च लक्ष्म्या मातृत्वेन जीवरक्षकतया रक्ष्यवाचिना मकारेण रक्षकलक्ष्मीपतित्वं व्यज्यत एव । न च रक्ष्यत्वेन मकारस्य न जीववाचकत्वमिति वाच्यम् । अकारस्य रक्षकवाचित्वेन जीवस्यैव रक्षणकर्मत्वेनच, ज्ञातृत्वेन जीववाचकस्य मकारस्याकारसमभिव्याहृतस्य रक्ष्यत्वेन जीवव्यंजकत्वस्य निर्बाधत्वात्। अत एव स्त्रियाः पतिशिशुरंजनपोषणार्थं शय्याखट्वयोरपरित्यागवत्, लक्ष्म्याः प्रथमचरमपदापरित्याग इत्युपपद्यते । अकारस्य लक्ष्मीमुखोल्लासफलकरक्षणवाचकत्वेन शय्यास्थानीयत्वस्य, मकारस्य अकारसमभिव्याहारेण जीवात्मस्वरूपे रक्ष्यत्वव्यंजकतया खट्वास्थानीयत्वस्य चोपपत्तेः । गोदाविंशत्सूक्तिषु सप्तदशसूक्तौ अनुगृहीतमकारेण प्रेमातिशयेन रंजनपोषणार्थं नियमेन नन्दगोपश्रीकृष्णशय्याखट्वयोरपरित्यागशालिन्या यशोदाया एव दृष्टान्तत्वेन विवक्षिततया तद्वैषम्याभावाच्च । रक्षणमूलत्वेन रक्षणफलत्वेन च श्रीसम्बन्धस्य द्वेधा व्यङ्ग्यत्वसूचनाय अकारेण व्यंग्यत्वस्य द्विरुक्तिसम्भवाच्च । अत एव समभिव्याहारोक्तिसाफल्याचेत्युत्तरं वदन्सूत्रं व्याचष्टे-अयमर्थ इति ।

अनुमोदनेन रञ्जकत्वरूपहेतुमुखेन, मातृत्वेन रक्षकत्वरूपहेतुमुखेन च व्यंग्यत्वमत्र लक्ष्म्यास्साध्यत इति सूचनाय दृष्टान्तोपपादनमित्यभिप्रायेणाह—स्वस्या-

य्यामपरित्यजन्ती, रक्षकत्वरूपस्वस्वरूपानुरूपं प्रजां रक्षितुं तद्बालं चापरित्यजन्ती मातेव, इयमपि भर्तृभूतस्येश्वरस्य प्रतिपादकं प्रथमपदमकारम्, प्रजाभूतचेतनानाम्प्रतिपादकं चरमपदम्मकारं च तत्तद्विषये स्वस्या विद्यमानसम्बन्धानुरूपे रसयितृत्वरक्षकत्वे अवलम्ब्य न परित्यजन्तीत्यर्थः ॥ ४२ ॥

---

शेषत्वेति । अत्र भर्तृप्रजामातृशब्दाः-परस्परप्रतियोगिकाः । अकारः-शय्यास्थानत्वेन विवक्षितः । अनुगृहीतंच वेदान्तदेशिकैश्शब्दस्यार्थापेक्षया शय्यास्थानीयत्वम्-"तल्पं कल्पान्तयूनोश्शठजिदुपनिषद्दुग्धसिन्धुं विमथ्नन्" इति । शय्याया भार्यानुमोदनहेतुभर्तृभोगस्थानत्वेन, अकारस्य-लक्ष्म्या अनुमोदनहेतुभूतभगवद्रक्षणप्रतिपादकत्वेन च सादृश्यं द्रष्टव्यम् । मकारः-खट्वास्थानीयत्वेन विवक्षितः । खट्वायाः प्रजासुखकरसुप्तिमुखेन प्रजारक्षणस्थानत्वेन, मकारस्य-अकारसमभिव्याहारबलेन चेतनसुखकरजननीस्तनन्धयभावरूपसम्बन्धमुखेन भगवद्रक्ष्यत्वबोधकत्वेन च सादृश्यं विवक्षितम् । पूर्वसूत्रे 'लक्ष्मीः' इत्यध्याहृतं विशेष्यपदमत्रापि 'मातेव' इत्यनन्तरमनुषंजनीयामित्यभिप्रायेणाह-इयमिति । (प्रथमपदमकारम्)इति-लुप्तचतुर्थ्यन्तयुक्तमकारमित्यर्थः । (चरमपदं मकारम्)—लुप्तप्रथमान्तयुक्तम्मकारमित्यर्थः । (तत्तद्विषये)—ईश्वरचेतनविषये ।

अत्र श्रीवीरराघवाचार्याः-'प्रथमपदान्वयस्तद्वाच्यशेषतया मकारे उपस्थितिः । चरमपदान्वयस्तदर्थरक्षकतया अकारे उपस्थितिः । मकारेणास्या अभिधानं जीवत्वपक्षे सुघटम् । विभुत्वेऽपि ज्ञातृत्वादिभिः ब्रह्मशब्दार्थापरिच्छेदार्थराहित्याच्च । केचित्तु पूर्वोक्तेनप्रकारेण सङ्कल्प्य प्रकारान्तरेणाप्यस्या उपस्थितिमाह-भर्ताविदुडैय इत्यादिना । अकारेण भगवतो जगत्सृष्ट्यादिव्यापाराभिधानात्, तस्यच "क्रीडेयं खलु" इति न्यायेन विना श्रियं रसाजनकत्वात्, अकारोक्तकारणत्वान्य-

(४३). प्रागुक्तदृष्टान्तं कस्मिंश्चिद्विशेषे दर्शयति—श्रीनन्दगोपमिति ।

मू॥ श्रीनन्दगोपरैयुं कृष्णनैयुं विडाद यशोदैप्पिराट्टियैप्पोल

छा॥ श्रीनन्दगोपं कृष्णं चापरित्यजन्ती यशोदेव ॥४३॥

व्या॥ भार्याभूतस्वस्वरूपानुगुणं रसयितुं भर्तारं श्रीनन्दगो-

---

थानुपपत्त्या श्रिय उपस्थितिरिति अकारार्थापरित्यागः । मकारार्थनिरूपितरक्षकत्वा-न्यथानुपपत्त्यधोनोपास्थितिरेव मकारार्थापरित्याग इत्याहुः । कठश्रुतिसिद्धोकारोप-स्थाप्याभिप्रायकोऽयं ग्रन्थ इत्यन्ये। अपरेतु अकारार्थोपस्थित्यनन्तरभाविनी मकारो-पस्थितेःपूर्वभाविनी चात्र लक्ष्म्युपस्थितिरिति मध्ये उपस्थितत्वमेव प्रथमचरमपदा-परित्यागः इत्याहुः-इति प्राहुः ।

अत्र "मकारेणास्या अभिधानं जीवत्वपक्षे सुघटम्" इत्यानुगृहीतत्वात् श्रियः जीवकोट्यन्तर्भूतत्वं कुत्राप्याचार्यैः नोक्तमिति दूषणं प्रत्युक्तम् । श्रीकुरुकेशाचार्य-शिष्यैःश्रीविष्णुचित्ताचार्यैः श्रीविष्णुपुराणव्याख्याने "भगवान् विभुत्वेन सर्वगतः, अस्यास्तु शक्तिवशात् अणुत्वेऽपि तत्रतत्र सन्निधानात् सर्वगतत्वमुक्तम्" इत्यनुगृ-हीतत्वात् श्रियः जीवत्वं दुरपह्नवम्। लोकाचार्यैश्च प्रसादितं तनिद्वयरहस्ये "अस्याः-स्वरूपस्याणुत्वेऽपी" ति । श्रीमति रहस्यत्रयसारव्याख्याने "द्वितीयलक्षणं लक्ष्मि जीवकोटियेन्नुमभिप्रायत्ताले" इति अनुगृहीतत्वात् श्रियःजीवत्वं वेदान्ताचार्याभि-मतमिति सिद्धम् । अस्माभिः श्रीतत्वप्रकाशिकायामयमर्थः प्रपंचितः ॥४२॥

(दृष्टान्तविशेषेण)-दृष्टान्तविशेषमोदाहरणमुखेन । (दर्शयति)—स्प-ष्टयतीति भावः ।

शय्यास्थं श्रीनन्दगोपं, खट्वास्थं श्रीकृष्णंचेति विवक्षितम् । (श्रीनन्दगोपम् )—इति श्रीशब्दः पूजोक्तिः । नन्दनामकं गोपमित्यर्थः ।

पमपरित्यजन्ती, मातृभूतस्वस्वरूपानुगुणं रक्षितुं पुत्रं कृष्णमपरित्यजन्ती "अम्बरमे" इति गाथोक्तप्रकारेण मध्ये वर्तमाना यशोदेव, प्रथमचरमपदवाच्यौ ईश्वरचेतनावुभावपि इयं न परित्यजतीत्यर्थः ॥ ४३ ॥

(४४). ननु ईश्वरशेषत्वमात्रमुच्यते, न लक्ष्मीशेषत्वमप्यस्मिन्वाचके, अतःकथं 'अस्या अपि शेषभूता वयम्' इत्यङ्गीकुर्म इति चेत्, तत्राह—केनचिदित्यादिना ॥

मू॥ ओरुवनाडिमै कोल्लुम्पोदु 'गृहिणिक्कु' एन्नूने आवणैयोलै एळुदुवदु, आहिलुम्पणिशेय्वदु गृहिणिक्किरे, अदुपोले नाम्पिराट्टिक्कडिमैयायिरुक्कुम्पडि ॥ ४४ ॥

---

(कृष्णम्) इति-"मध्ये विरिंचगिरिशंप्रथमावतारः" इत्यनुगृहीतरीत्या परत्वं स्थगयितुं "आत्मानं मानुषं मन्ये" इतिवत् "अहं वो बान्धवो जातः" इति श्रीकृष्णसूक्त्यनुसारेण 'अयमपि प्राकृतःकश्चिन्मनुष्यः' इत्यनुसन्धानमेव भगवदभिमतमित्यभिप्रेत्य एकवचननिर्देशः । (अम्बरमे) इति गोदाविंशत्सूक्तिषु सप्तदशसूक्तौ नन्दगोप यशोदाश्रीकृष्णानां क्रमेण प्रबोधनेन यशोदाया भर्तृरंजनाय पुत्रपोषणाय च मध्ये अवस्थानावगमादिति भावः । सूत्रे 'यशोदेव' इत्यनन्तरं "प्रथमचरमपदे नपरित्यजन्ती" त्रिपूर्वसूत्रवाक्यशेषं पूरणीयमित्याभिप्रायेणाह-प्रथमेति । यद्यपि, अकारार्थ कथनावसरे चरमपदव्यंग्यार्थकथनमयुक्तम्, तथापि लक्ष्म्यामातृत्वप्रयुक्तजीवरक्षकत्वेनव्यंग्यत्वमपि अकारसमभिव्याहारमहिमलभ्यतया अकारव्यंग्यार्थकथनपरमेव सूत्रद्वयमिति न दोषः ॥४३॥

(नन्वि) ति-इत्थं हेतुचतुष्टयमुखेन सूत्रचतुष्टयेन लक्ष्मीसम्बन्धस्य व्यं-

छा॥ केनचिच्छेषवस्तुस्वीकारकाले 'गृहिण्यै' इति हि न विक्रयपत्रं विलिख्यते, तथापि गृहिण्याःखलु दास्यवृत्तिः क्रियते, तद्वद्वयं श्रियोदासभूताः ॥ ४४ ॥

व्या॥ लोके कश्चिद्दासदासीप्रभृतिशेषवस्तुस्वीकारकाले स्वनाम्नैव हि क्रयपत्रं विलिखति, न तु गृहिणीनाम्नापि, तथापि गृहिण्यै हि शेषवृत्तिरनुष्ठीयते, तथैवानेनाकारेणेश्वरशेषत्वमात्रप्रतिपादनेऽप्यस्माकं लक्ष्मीशेषत्वं सिध्यतीत्यर्थः ॥ ४४ ॥

---

ग्यत्रमुक्तम् । तच्च-अकारप्रकृत्यर्थपर्यालोचनलभ्यम् । अथ लुप्तविभक्त्यर्थपर्यालोचनलभ्यं हेतुं सूत्रत्रयेण वक्तुं लोकसिद्धन्यायं तावदाहेति हृदयम् ।

(कश्चिदि) ति-कश्चिद्गृहस्थइत्यर्थः । (स्वीकारकाले)-क्रयदशायामित्यर्थः । लोकसिद्धां क्रयपत्रस्थितिमुक्त्वा, ततःकिमिति शङ्कायां, दार्ष्टान्तिके व्यंग्यार्थसिद्धेरनुष्ठानपर्यन्तप्रामाण्यं वक्तुं दृष्टान्ते आर्थिकार्थसिद्धेःफलं दर्शयाति- तथापी ति । गृहिणीदास्योक्तिं विनैव पत्रलेखनेपीत्यर्थः । अपिशब्देन-गृहिणीदासवृत्तेर्लेखनस्य च विरोधं सूचयाति । खल्विति प्रसिद्धिपरः । गृहिणीप्रीत्युद्देशेन शेषवृत्त्यनुष्ठानं सर्वलोकप्रसिद्धमित्यर्थः । गृहयजमानप्रीत्यर्थतयैव तद्धर्मपत्नीप्रीतेरपि उद्देश्यतया क्रयपत्रे यजमानशेषत्वोक्तिरेवपत्नीशेषत्वमाक्षिपतीति भावः । ततोऽपि किमिति शङ्कायां दृष्टान्ते शिक्षितोऽर्थो दार्ष्टान्तिकेऽप्याविरुद्ध इति दर्शयाति-तथैवेति । गृहिणीशेषवृत्तिवदित्यर्थः । (लक्ष्मीशेषत्वम्) इति-ईश्वरव्यतिरिक्तनिरुपाधिकस्वेतरसर्वस्वामिन्याः शेषत्वमित्यर्थः । "अस्या ममच शेषं हि विभूतिरुभयात्मिका । इति श्रुतिशिरःसिद्धं मच्छास्त्रेष्वपि मानद" इति भगवच्छास्त्रस्थभगवद्वचनमत्रानुसन्धेयम् । (सिध्यती) ति-"ईशाना देवी भुवनस्याधिपत्नी" इत्यादिषु

स्वामित्वकार्यनियमनस्य स्वामित्वस्य च कण्ठोक्त्या स्वामित्वफलीभूतं शेषित्वमपि लक्ष्म्यास्सिद्धमिति तच्छेषत्वं सर्वेषामपि सिद्धमितिभावः ।

अत्र कश्चिदाह-'लुप्तचतुर्थीसंमभिव्याहारसिद्धशेषित्वव्यंग्यं श्रियःपतित्वमित्युक्तम्, तदयुक्तम् । 'भगवतो यच्छेषित्वं तत् लक्ष्म्या अपि' इत्यत्र मानाभावात् । "उभयाधिष्ठानंचैकं शेषित्वम्" इति श्रीराममिश्रवाक्यस्य भगवत उपायान्तरासहत्ववत् उपेयान्तरासहत्वप्रतिपादकप्रमाणजातविरुद्धत्वात् । न च गृहिण्या दासशेषित्वन्यायेन लक्ष्म्या जीवशेषित्वसिद्धिरिति वाच्यम् । गृहिणीपरामर्शनियतधर्मशास्त्रसिद्धानां गृहकार्याणां गृहिण्यनुमतिरीत्याकरणे गृहकार्याणामसिद्धिप्रसङ्गेन, दासंप्रति यजमानशेषित्वस्यैवासिद्धिप्रसङ्गेन दासशेषिक्रयपत्रे यजमानमात्रशेषित्वलेखनेन गृहिणीशेषित्वासिद्धिवर्णनसम्भवेऽपि, शास्त्रैकगम्यभगवच्छेषित्वस्य लोकदृष्टिरीत्या लक्ष्मीशेषित्वाक्षेपकत्वोक्तेरुपहास्यत्वात्-इति ।

अत्रोच्यते-लुप्तचतुर्थ्यन्वयिलक्ष्मीशेषित्वरूपाकारार्थोऽपिलक्ष्मीसम्बन्धव्यंजक एव । 'भगवतो यच्छेषित्वं तत् लक्ष्म्या अपि' इति नियमे मन्त्ररत्नोत्तरवाक्यस्थादिपदस्य तदुपबृंहणस्य, "विष्णोः श्रीरनपायिनी" इत्यादेश्च प्रमाणत्वात् । अत एव शेषित्वस्यव्यासज्जयवृत्तित्वपरश्रीराममिश्रसूक्तिरपि घटते। नचैवमनन्योपेयत्वप्रमाणजातविरोधःअनन्योपायत्वपरवचनानां प्रधानोपायान्तरासहत्वपरत्ववत्, अनन्योपेयत्वपरवचनानां प्रधानोपेयान्तरासहत्वपरतया विरोधाभावात्। प्राधान्यंच-अदृष्टद्वारकसाक्षात्फलकारणत्वम् । साक्षाद्दृष्टद्वारकफलकारणत्वम् । अदृष्टद्वारकं दृष्टद्वारकंवा परंपरयाफलकारणत्वंचोपायस्याप्राधान्यम् । स्वेतरप्राप्तीच्छानधीनेच्छाविषयप्राप्तिमत्त्वं उपेयस्य प्राधान्यम् । स्वेतरप्राप्तीच्छाधीनेच्छाविषयप्राप्तिमत्त्वं-उपेयस्याप्राधान्यम् । न च गृहव्यापाराधिकृतगृहिणीशेषत्वाभावे दासस्य यजमानशेषत्ववत्, शास्त्रैकगम्यभगवच्छेषत्वस्य लक्ष्मीशेषत्वं विनानिर्वाहो नन्यायसिद्ध इतिवाच्यम् । गृहिणीशेषत्वस्य यजमानेष्टत्वेन यजमानशेषत्वोपपादकतया दासस्य गृहिणीशेषत्वासिद्धिसम्भवे, तन्न्यायेनैव लक्ष्मीशेषत्वस्य भगवदिष्टतया भगवच्छेषत्वोपपादकतया लक्ष्मीशेष-

(४५). अथ पूर्वोक्तहेतूननूद्येश्वरस्य श्रियश्च कदापि न पृथक्स्थितिरित्याह—तस्मादिति।

मू॥ आह प्पिरित्तु निलैयिल्लै ॥ ४५ ॥

छा॥ तस्मान्न विश्लिष्य स्थितिरस्ति ॥ ४५॥

---

त्वस्यापि सिद्धिसम्भवात् । विष्णुपत्नीत्वोक्तेः पत्नीधर्मातिदेशकतया लक्ष्म्याश्शास्त्रवश्यत्वाभावेऽपि स्वासन्ताभिमतसर्वभर्तृव्यापारनिर्वाहिकाया गृहिण्या इव लक्ष्म्या अपि स्वात्यन्ताभिमतभगवदीयसर्वव्यापारनिर्वाहकत्वसिद्धौ, लक्ष्मीशेषत्वं विना भगवच्छेषत्वस्यानिर्वाहसम्भवाच्च-इति ॥ अस्मिन्सूत्रे "यस्य श्रीर्नित्यहृद्या निरुपधिगृहिणी नन्दति छन्दवृत्त्या यस्यापत्यंप्रजेशप्रभृति विहरणं यस्य विष्वक् परार्ध्यम् । लीलाभोगप्रभेदव्यतिभिदुरमिदं यस्य विश्वं विभूति स्सत्तासिद्धानुकंपानिधिरवतु सनस्सप्तलोकीगृहस्थः" इत्ययंश्लोकोऽनुसन्धेयः ।

इत्थं रक्षकत्वविग्रहविशेषप्रत्ययार्थान्वयरूपधर्माविनाभावात् लक्ष्मीसम्बन्धस्य व्यंग्यत्वमुक्तम् । अथाकारवाच्यविग्रहविशेषविशिष्टरूपधर्म्यविनाभावात् तस्या व्यंग्यत्वमाहेति सङ्गतिः ।

**(अथ)** इति-रक्षकत्वविग्रहविशेषप्रत्ययार्थान्वयरूपधर्माविनाभावरूप लक्ष्मीसम्बन्धव्यंग्यार्थोक्त्यनन्तरमित्यर्थः । **(पूर्वोक्तहेतूननूद्य)** ति सूत्रस्थतच्छब्दपंचम्यन्तार्थः । लक्ष्म्या भगवत्कर्तृकरक्षणे सहायत्वात्, भगवद्विग्रहविशेषरूपरूढिनिमित्ताविनाभावात्, लक्ष्म्यनुमोदनस्य भगवत्कर्तृकजगद्रक्षणफलत्वात्, पत्नीत्वेन घटकत्वमात्रमन्तरेण मातृत्वेन घटकत्वमादायापि रक्षकत्वसम्भवात्, लक्ष्मीशेषत्वस्य भगवच्छेषत्वव्यापकतया शेषवृत्तेर्मिथुनप्रतिसम्बन्धिकत्वाच्च हेतुपञ्चकेण विग्रहविशेषविशिष्टलक्ष्म्या विग्रहविशेषविशिष्टभगवदपेक्षया पृथक्स्थितिर्नास्तीत्यर्थः । तथाच निरुक्ताविनाभावादपि विग्रहविशेषविशिष्टभगवद्वाचकाकारस्य लक्ष्मीसम्बन्धव्यंजकत्वं सम्भवतीति भावः ॥४५॥

ननु-प्रभाप्रभावत्न्यायेन पुष्पपरिमलन्यायेनचाविनाभावइत्युक्तम्, तदसङ्गतम्।

(४६).एतत्पृथक्स्थित्यभावस्य दृष्टान्तद्वयमाह—यथा प्रभाया इति ।

मू॥ प्रभैयैयुम् प्रभावानैयुम्, पुष्पत्तैयुम्मणत्तैयुम्पोले ॥४६॥

छा॥ यथा प्रभायाःप्रभावतश्च, पुष्पस्य परिमळस्य च॥४६॥

व्या॥ प्रभाप्रभावतोः, पुष्पपरिमळयोश्च पृथक्स्थित्यभाववदित्यर्थः ।

"अनन्या राघवेणाहं भास्करेण प्रभा यथा" "अनन्या हि मया सीता भास्करेण प्रभा यथा" इति प्रभाप्रभावतोरिवानयोः पृथक्स्थितिर्नास्तीति तयोर्वचनाभ्यामवगम्यते । "प्रसूनं पुष्यन्तीमपि परिमळर्द्धिं जिगदिषुः" इतीश्वरं पुष्पस्थानीयं श्रियम्परिमळ-

लक्ष्मीसम्बन्धप्रयुक्तातिशयविवक्षायामनन्याधीनत्वभङ्गात् तदविवक्षायां विशेषदृष्टान्तवैफल्यात् । "अनन्याहिमया सीता' इत्यादेश्च प्रशंसामात्रत्वात्, "प्रसूनं पुष्यन्तीम्" इत्यादेरपि स्वयंकल्पितप्रशंसामात्रत्वाच्चेति, तत्राह—अनन्येति अत्रायमाशयः—भगवतो लक्ष्मीसम्बन्धस्यैवातिशयरूपत्वेनाभेदेनातिशयज्ञापकत्वविवक्षायां बाधकाभावात् । "श्रद्धया देवो देवत्वमश्नुते" "तया सराजर्षिसुतः" इत्यादौ 'धान्येन धनवान्' इत्यादाविव इत्थंभूतलक्षणे तृतीयाश्रवणात् । "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इत्यादावपि जनकात्मजाया एवाप्रमेयतेजोरूपत्वेन विवक्षितत्वात् । यद्वा राजगुर्वाद्यनुमतिपूर्वकभृत्याशिष्याद्यधीनातिशयवतो राजोऽपि राजगुर्वादेस्स्वातन्त्र्यदर्शनेन, स्वाधीनान्यप्रयुक्तातिशयभाक्त्वस्य स्वातन्त्र्यभञ्जकत्वाभावेन भगवदभिमतत्वपरिज्ञानेन भगवदीयसर्वव्यापारेषु लक्ष्म्यासह चरणानुमोदनादिकरणे भगवतः प्रीत्यतिशयजननेन "श्रद्धया देवो देवत्वमश्नुते" "तया सराजर्षिसुतः-शु-

स्थानीयश्च भट्टार्याः प्राहुः । तस्मात्पुष्पपरिमळयोरिवैतयोः पृथक्स्थितिर्नास्तीत्यर्थात्सिद्धम् ॥ ४६ ॥

(४७). उक्तमपृथक्स्थितिमनुवदन्नेतन्मिथुनं चेतनानामुद्देश्यमित्याह-तस्मादिति ।

---

शुभे" इत्यादौ करणे तृतीयाश्रयणेऽपि न दोषः । प्रभाप्रभावन्न्यायप्रतिपादकादिव्यदंपतिवचने दृष्टान्तबलेन 'अनन्या' इति शब्दस्य तादात्म्यपरत्वं विनापृथक्सिद्धार्थपरत्वं सूचितम् । एवं च तस्य वचनस्यासदर्थवादत्वशङ्का निर्निबन्धना । अपृथक्सिद्धधर्मत्वं च लक्ष्म्याः "प्रसूनं पुष्यन्तीम्" इत्याद्याचार्यसूक्तिसिद्धम्। "अहन्ता ब्रह्मणस्तस्य साहमस्मि सनातनी" इत्यादिवचनेन लक्ष्म्याः परत्वचिह्नेषु प्रधानानिरूपकतया भगवतश्शेषत्वेन स्वेतरसर्वावधिकातिशयरूपत्वे सति अपृथक्सिद्धधर्मत्वस्य सिद्धतया, आचार्यसूक्तौ स्वयंकल्पितप्रशंसामात्रत्वप्रलपनस्य महापापफलीभूताज्ञानमात्रविजृम्भितत्वात्। तस्माद्वाच्याविनाभावाल्लक्ष्मीसम्बन्ध अकारव्यंग्यार्थ इति स्थितम् ।

**(प्रसूनमि)** ति-श्रीगुणरत्नकोशे श्रीपराशरभट्टः-"तव स्पर्शादीशं स्पृशति कमले मङ्गलपदं तवेदं नोपाधेरुपनिपतितं श्रीरासि यतः । प्रसूनं पुष्यन्तीमपि परिमलर्द्धिं जिगदिषुर्नचैवं त्वा देवं स्वदत इति कश्चित्कवयते ॥४६॥

**(एतन्मिथुनं चेतनानामुद्देश्यमि)** त्यनेन-'शेषत्वस्य मिथुननिरूप्यत्वस्य "पतिं विश्वस्य" "पतिं पतीनाम्" इत्यादिप्रमाणशतप्रतिपन्नजगच्छेष्येकत्वबाधप्रसङ्गपराहतत्वात्, चतुर्थ्यर्थ एव व्यंजक इति न युक्तम्' इत्युक्तिर्दूरोत्सारिता । लुप्तचतुर्थ्यर्थभूतायाश्शेषत्वघटकप्रार्थनाया दिव्यदम्पतिविषयिण्याः विषयतासम्बन्धेन व्यासज्यवृत्तित्वात्, "उभयाधिष्ठानं चैकं शेषित्वम्" इति पूर्वाचार्यैरनुगृहीतत्वात्, उकारेण तद्विवरणप्रमाणजातेन जगच्छेष्येकत्वस्य सदृढत्वेऽपि, एकोनशे-

मू॥ आह इच्चेर्ति उद्देश्यमाय् विट्टदु ॥ ४७ ॥

छा॥ तस्मादेतन्मिथुनमुद्देश्यमभूत् ॥ ४७ ॥

व्या॥ एतन्मिथुनस्योद्देश्यत्वादुभयोरपि न प्रत्येकमुद्देश्यता उभयोर्विश्लेषे हि रावणशूर्पणखयोरिवानर्थ एव फलति । उभयोराश्रयणेन खलु श्रीवीभीषणवत्सुखप्राप्तिः ॥ ४७ ॥

(४८). अथ विभक्त्यर्थं विवक्षुः प्रथमं विभक्तिं निर्दिशति-

---

षित्वाश्रयैकत्वपरतया वा निरुपाधिकशेष्यैकत्वपरतया वा विरोधगन्धाभावाच्च। भगवत्प्रीतेरेवान्येच्छानधीनजीवेच्छाविषयतया, लक्ष्म्यादिप्रीतेर्भगवत्प्रीतीच्छाजन्येच्छाविषयतयाप्यैकरस्यजुषोश्शेषिदम्पत्योश्शेषिकर्मसु विशेषणविशेष्यत्वं श्रुतम् । "कस्मान्नरोचते" इति वेदान्ताचार्यैरनुगृहीतरीत्या शेषिकर्मणि अशेषवृत्तावपि मिथुनस्यैव प्रतिसम्बन्धितया कैङ्कर्यवृत्तिहेतुभूतेच्छाया अपि 'दिव्यदम्पतीप्रीतौ स्याताम्' इति विषयतासम्बन्धेन व्यासज्यवृत्तित्वे बाधकाभावात् । 'भगवान् प्रीतो भूयात्, तदर्थं लक्ष्मीप्रत्युक्तभगवत्प्रियतमत्वशालिन्यास्मदीयशेषवृत्त्या लक्ष्मीरपि प्रीता भूयात्' इतीच्छायाः कैङ्कर्यप्रवृत्तौ हेतुभूताया व्यासज्यवृत्तित्वावश्यम्भावाच्च । कैंकर्यस्य मिथुनप्रतिसम्बन्धित्वनियमेन तद्धेतुभूतेच्छाया अन्येच्छाप्रयुक्ताया अपि लक्ष्मीप्रीतिमात्रविषयिण्या असम्भवाच्च । तस्मात् लुप्तचतुर्थ्यर्थ एव लक्ष्मीसम्बन्धव्यंजक इति सिद्धम् ॥

सूत्रफलितार्थमाह-**एतन्मिथुनस्ये**ति । विपक्षे दोषं दर्शयति-**उभयोरि**ति। यथानुष्ठाने फलमाह-**उभयोराश्रयणेने**ति ॥ अयमर्थः "इवन् मुन्निडुमवर्हळै अवन् मुन्निडुमेन्नुमिडम्-अभयप्रदानत्तिलुं काणलाम्" इति श्रीवचनभूषणसूत्रव्याख्याने स्फुटः ॥४७॥

(अथ) इति-लुप्तचतुर्थ्यर्थव्यंग्यश्रीसम्बन्धप्रतिपादनानन्तरमित्यर्थः । अ-

अत्रेति ।

मू॥ इदिले चतुर्थि येरि कलियुम् ॥ ४८ ॥

छा॥ अत्र चतुर्थी प्राप्ता लुप्यते ॥ ४८ ॥

व्या॥ अस्मिन्नकारे चतुर्थी जाता "सुपांसु लुक्" इत्यादिसूत्रेण लुप्यत इत्यर्थः ॥ ४८ ॥

---

कारार्थानन्तरमिति वार्थः । (विभक्त्यर्थम्) इति-"न केवला प्रकृतिः प्रयोक्तव्या नापि केवलप्रत्ययः"इति न्यायेनाकारस्य साधुत्वार्थं पदत्वार्थं च विभक्त्यन्तत्वावश्यम्भावेन तत्र विभक्त्यर्थं वक्तुमिच्छुः वक्ष्यमाणार्थोपोद्घातत्वेन प्रथमं विभक्तिस्वरूपमाहेत्यर्थः ।

(अस्मिन्नकार) इति ।

ननु, प्रणवस्थाकारो न चतुर्थ्यन्तः । चतुर्थी विभक्त्यश्रवणात् । न च समासान्तर्गतविभक्तेरिव लोपस्सम्भवति । "सुपोधातुप्रातिपदिकयोः" इतिवत् व्यस्तपदविभक्तेर्लोपविधायकाभावेऽपि "सुपांसु लुक्" इत्यादिसूत्रेण छन्दसि सुपां स्वादेशस्यलुको लोपस्य पूर्वसवर्णदीर्घादेशश्च विधानात्, प्रणवस्थाकारे छान्दसो विभक्तिलोप इति वाच्यम् । "अच्युताहं तवास्मीति" इत्यादिप्रमाणानुसारेण प्रणवस्थाकारस्य सम्बुध्यन्तत्वमाश्रित्य, भाषावदेव "एङ्ह्रस्वात्" इत्यादिना लोपसम्भवेन छान्दसलुक्कल्पनस्यान्याय्यत्वात् । अस्तु वा लुक्कल्पनम्; तथापि "अहं ब्रह्मास्मि" इत्यादिप्रमाणानुसारेण "म्-अ एवास्मि" इत्यर्थाश्रयणमेव युक्तम् । प्रथमैकवचने लुक्कल्पनस्यैव "एकवचनमुत्सर्गतःकरिष्यते" इति महाभाष्यवचनानुसारेणाङ्गीकर्तव्यत्वात् । न चैवं व्यक्तचतुर्थ्यन्ततृतीयपदविरोधः; तत्र जीवब्रह्मणोश्शेषशेषिभावेन भेदस्यैव प्रतीतेरिति वाच्यम्; भावानवबोधात् । न हि "अहं ब्रह्मास्मी" ति शुद्धाद्वैतमभिप्रेतम् । येन "ब्रह्मशेषभूतोऽहं, ब्रह्मास्मी" त्यनयोर्व्याघातस्स्यात् । अपितु "तत्त्वमसी" तिवत्, अहंपदस्य स्वशरीरकब्रह्मपरत्वाश्रयणेन विशिष्टाद्वैतं विवक्षितम्,

तथा च जीवद्वाराहन्त्वाश्रयीभूतं वस्तु ब्रह्मेत्यर्थः। तस्य च जीवविशिष्टाभेदे पर्यवसानात्। जीववैशिष्ट्यस्य च जविशररिकत्वरूपतया शरीरशरीरिभावस्य शेषशेषिभावघटिततया च न विरोधगन्धः। तस्मात् प्रथमातिक्रमे कारणाभावात्, प्रणवस्थाकारः प्रथमैकवचनान्तः, सम्बुन्ध्यन्त एव वा न चतुर्थ्यन्त इति चेत्।

उच्यते-प्रणवस्थाकारः-चतुर्थ्यन्त एव। "अहमपि न मम भगवत एवाहमस्मि" इत्यादिश्रौतप्रणवनमश्शब्दाविवरणबलेन तथैवावगमात्। तत्र हि "अहमपि न मम" इति नमश्शब्दविवरणं क्रियते। तत्र अहंपदेन नमश्शब्दे प्रणवस्थमकारानुषङ्गो व्यज्यते। आपिशब्देन 'अहमपि मम न' इति नमश्शब्दे ममकारनिवृत्तिरपि विवक्षितेति व्यज्यते। 'मम न' इत्यनेन 'मः' इति पदं-अस्मच्छब्दपर्यायभूतं षष्ठ्यन्तामिति व्यज्यते। 'मम न' इत्यनेन नमश्शब्दे 'मः न' इत्यन्वयो व्यज्यते। 'मम न' इत्यत्र 'मम नास्ति' इति क्रियापदानुषङ्गोऽभिप्रेतः। "भगवत एवाहमस्मि" इति प्रणवे अस्मिपदाध्याहारस्य वक्ष्यमाणत्वात्। 'भगवत एवाहमस्मि' इति प्रणवविवरणवाक्ये भगवच्छब्देन, अकारार्थरक्षणोपयोगिकल्याणगुणजातम्, भगवच्छब्दस्य "तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः" इत्याद्युक्तरीत्या योगरूढतयाकारस्य विष्णौ रूढिरपि व्यज्यते। 'भगवते' इति चतुर्थीकण्ठोक्त्या अकारस्य लुप्तचतुर्थ्यन्तत्वं स्पष्टीकृतम्। एवकारेण स्थानप्रमाणेन उकारस्यावधारणार्थकत्वं सूचितम्। 'अहम्' इत्यनेन प्रणवे 'म्' इति पदम्-अस्मच्छब्दपर्यायभूतं प्रथमान्तामिति सूचितम्। 'अस्मि' इत्यनेन प्रणवस्य "तिङ्सुबन्तचयो वाक्यम्" इत्युक्तवाक्यत्वसिद्धये क्रियापदाध्याहारस्सूचितः। अनेन वर्तमानापदेशरूपेण नित्यवच्छ्रुतेन "परगतातिशयाधानेच्छयोपादानार्हत्वरूपमेव शेषत्वं लुप्तचतुर्थीसमभिव्याहारलभ्यं स्वरूपतादर्थ्यशब्दितम्, न तूपादानफलोपधानम्" इत्यपि सूचितम्। इत्थं "ब्रह्मणे त्वा महस ओमित्यात्मानं युंजीत" इत्यपि प्रणवस्थाकारस्य लुप्तचतुर्थ्यन्तत्वे प्रमाणमनुसन्धेयम्।

न च चतुर्थीविभक्तिश्रवणापत्तिः, सम्बुध्यादेरिव भाषायां लोपाविधानादिति वाच्यम्। उक्तप्रमाणबलेन "सुपांसु लुक्" इत्यादिसूत्रेण छान्दसलुक्कल्पनसम्भवात्। न च सम्बुध्यन्तत्वाश्रयणेन लोपसम्भवे, छान्दसलुक्कल्पनमन्याय्यमिति वाच्यम्।

सम्बुध्यन्तत्वे 'तव' इति पदाध्याहारप्रसङ्गेन, श्रौतविवरणप्राबल्येन च छान्दसलुक्कल्पनस्यैव प्रामाणिकत्वात्। "अच्युताहं तवास्मी" त्यादेः फलितार्थकथनपरत्वोपपत्तेः। अत एव मन्त्ररत्ने षष्ठीतत्पुरुषस्य स्वारसिकत्वेऽपि "श्रीमन्नारायण स्वामिन्" इत्याद्युपबृंहणमुपपद्यते।

एतेनाकारोपरिप्रथमाविभक्तेर्लुक्कल्पनमपास्तम्। "भगवत, एवाहमस्मि" इति श्रौतविवरणविरोधात्, "ब्रह्मणे त्वा महस ओमित्यात्मानं युंजीत" इति श्रुतिविरोधाच्च। तत्र हि "व्यत्ययो बहुलम्" इत्यनुशासनेन 'तुभ्यम्' इत्यस्य "त्वामौ द्वितीयायाः" इत्युक्तत्वादेशाश्रयणेन "ब्रह्मणे महसे, आय-रक्षकाय, तुभ्यमेव, अहमस्मि" इत्येवं "ब्रह्मणेत्वा महसे" इत्यस्य प्रणवेन पदैकवाक्यतयान्वयावश्यम्भावेन, लुप्तचतुर्थ्यन्ताकारस्याकामेनाभ्युपगन्तव्यत्वात्। "इत्यात्मानं युंजीत" इति शेषशेषिभावरूपसम्बन्धफलोपधानपर्यन्तशेषशेषिभावसम्बन्धानुसन्धाने विनियोगबलादपि तथैवान्वयस्य वक्तव्यत्वाच्च।

अपि च, अकारस्य लुप्तप्रथमान्तत्वे व्यक्तचतुर्थ्यन्तपदविरोधः। न च अपर्यवसानवृत्त्याहंपदस्य ब्रह्मपरत्वेन शरीरशरीरिभावसूचनमुखेन शेषशेषिभावसिध्द्या नार्थविरोध इति वाच्यम्। विवरणविवरणिनोरेकविभक्त्यन्ततया शब्दस्वरूपेणैक्यरूप्यस्य, शेषत्वप्रकारकशाब्दबोधरूपफलमुखेनैकरूप्यस्य च सम्भवतस्त्यागात्। अहंपदपर्यायमकारस्य शरीरिपर्यन्तत्वाश्रयणेन शेषित्वरूपव्यक्तचतुर्थ्यर्थलाभाभ्युपगमे सुखरोपदेशप्रत्याख्याने "महतो वंशस्तम्बाल्लट्वकृष्यते" इति महाभाष्योक्तरीत्या विवक्षितार्थलाभस्यातिप्रयाससाध्यत्वापत्तेश्च। तस्मात् प्रथमातिक्रमे कारणसत्वात् प्रणवस्थाकारः लुप्तचतुर्थ्यन्तएवेति सिद्धम्।

"तत्राकारः सकलशब्दकारणत्वात्" इति स्वशब्देनोक्तः "अत्र श्रीसम्बन्धोऽनुसन्धेयः" इति पुनः परामृष्टः अकारः, अत्रापि 'अत्र' इति पदेन परामृश्यत इत्यभिप्रायेणोक्तं-अस्मिन्नकार इति। (चतुर्थी)—चतुर्थीविभक्तिः॥ ४८॥

(४९.) विभक्त्यन्तरेषु सत्स्वपि चतुर्थीप्राप्तिः कथमिति श-ङ्कामनुवदति—चतुर्थीप्राप्तिःकथमिति चेदिति ।

मू॥ चतुर्थि येरिनपडि एन्नेन्निल् ॥ ४९ ॥

छा॥ चतुर्थीप्राप्तिः कथमिति चेत् ॥ ४९ ॥

(५०.) तस्योत्तरमाह—नारायणेति ।

मू॥ नारायणपदत्तुक्कु संग्रहमायिरुक्कैयाले ॥ ५० ॥

छा॥ नारायणपदसंग्रहत्वात् ॥ ५० ॥

व्या॥ अस्याकारस्य चतुर्थ्यन्तनारायणपदसंग्रहत्वात्, अत्रा-पि चतुर्थीप्राप्तेत्यर्थः । अन्यथोभयोस्संग्रहविवरणत्वासिद्धेः ॥५०॥

---

'विभक्त्यन्तत्वेऽपि छान्दसलुक्कल्पनापेक्षया सम्बुद्धिलोपकल्पनमेव ज्यायः, छान्दसलुक्कल्पनेऽपि प्रथमोपस्थितप्रथमाविभक्तेर्लुक्कल्पनमेव ज्यायः' इति शङ्काद्वय-मत्राभिमेतम् ।

'अत्र' इत्यनुषङ्गः । अकारे चतुर्थीविभक्तेः परत्वेन प्राप्तिःप्रकारः क इत्यर्थः। येन छान्दसलुक्कल्पनस्यावकाश इति भावः ॥ ४९ ॥

'स्थलान्तरे श्रौतविवरणबलात् अकारो लुप्तचतुर्थ्यन्तः'. इत्यादिदोषेषु सत्स्वे-व, सहश्रुतिविवरणबलादपि तथेति स्फुटदोषान्तरपरम्-'नारायणपदसंग्रहत्वा'दिति सूत्रम् । प्रथमचरमवाक्ययोरुपपाद्योपपादकभावापन्नार्थकत्वेन विवरणविवरणिभा-वादुपपादकत्वकथनावसरदानाय उपपाद्यं समर्पयितुं प्रणवस्थाकारे लुप्तचतुर्थ्यन्त-त्वमावश्यकमिति भावः ।

ननु अकारस्य नारायणपदसंग्रहत्वात् समानविभक्तिकत्वमावश्यकमिति न यु-क्तम्; नारायणपदस्यान्तः प्रविश्य धारकतया व्यापकत्वोक्तिमुखेन, अकारार्थरक्ष-

(५१.) 'अनया कोऽर्थ उच्यते' इत्यत्राह—अनयेति ।

मू॥ इत्तालीश्वरनुक्कु शेषमेन्गिरदु ॥ ५१ ॥

छा॥ अनयेश्वरस्य शेष इत्युच्यते ॥ ५१ ॥

कत्वविवरणरूपत्वस्य भिन्नविभक्तिकत्वेऽपि अविरोधादिति चेन्न;—भावानवबोधात् । न ह्यत्राकारार्थसमर्थनमूलोक्तरीत्या प्रकृत्योर्विवरणविवरणिभावो विवक्षितः । अपि तु प्रथमचरमपदयोः । "अहं आत्मैवास्मि" इति प्रणवरूपं वाक्यं प्रथमपदम् । 'अहं नारायणाय स्यामि' ति वाक्यं चरमपदम्" इति पूर्वमेव निर्णीतम् । एवं च 'अहं आत्मैवास्मि' इति नित्यवच्छ्रवणरूपेण प्रथमवाक्येन अकारयोगार्थरक्षणव्यंजितसकलकल्याणगुणानुभवजनितप्रीतिकारितभगवन्मुखोल्लासमात्रोद्देश्यकानन्यार्हशेषवृत्तियोग्यतां त्रिविधात्मवर्गेऽपि स्वस्वानुसन्धानमुखेन ज्ञापयित्वा, द्वितीयवाक्यरूपनमश्शब्देन मध्यमाक्षरविवरणपूर्वकम्, तृतीयवाक्येन रक्षणप्रकारकथनमुखेन व्यंजितगुणगणकण्ठोक्तिमुखेन प्राधान्येन भगवन्मुखोल्लासमात्रोद्देशरूपप्रार्थनात्मकचतुर्थ्यर्थकण्ठोक्तिमुखेन च तादृशयोग्यतारूपशेषत्वोपपादकतादृशशेषवृत्तिफलोपधानप्रार्थनाप्रतिपादनमुपपद्यते। उपपाद्यानुक्तौ उपपादकोक्तेरनवसरदुस्थत्वात्। तस्मात् 'भगवन्मुखोल्लासमात्रोद्देश्यकप्रवृत्त्यर्होऽहं तथैव स्याम्' इत्येवं सहश्रुतानां सम्भूयकारित्वव्युत्पत्तिबलसिद्धान्वयलाभाय प्रथमतृतीयपदयोर्विवरणविवरणिभाव आवश्यक इति तत्सिद्ध्यर्थं लुप्तचतुर्थ्यन्तत्वमकारस्याभ्युपगन्तव्यम्—इति ॥ ५० ॥

ननु—शेषत्वं न चतुर्थ्यर्थः । मानाभावात् । न च "तादर्थ्ये चतुर्थी वक्तव्या" इत्यनुशासनमस्तीति वाच्यम् । तादर्थ्यस्य तत्साध्यकत्वरूपत्वेन साध्यत्वस्यैव चतुर्थ्यर्थत्वात् । 'यूपाय दारु' 'कुण्डलाय हिरण्यम्' इत्यादौ यूपकुण्डलादिसाध्यकत्वस्य दारुहिरण्यादौ दर्शनात् । प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुसारेण 'घटमानाय' इत्यादौ आनयनादेर्घटनिष्ठकर्मत्वादिनिरूपकतासम्बन्धेनान्वयवत्, 'यूपाय दारु' इत्यादौ यूपाधिनिष्ठसाध्यतानिरूपकत्वसम्बन्धेन दार्वादेरन्वयसम्भवा-

व्या॥ इयं तादर्थ्ये चतुर्थीत्वात्, 'ईश्वरशेषः' इति बोधयतीत्यर्थः ॥ ५१ ॥

---

त्। 'ब्राह्मणाय सूपः' इत्यादौ प्रकृत्यर्थस्य सिद्धत्वस्थले सर्वत्र प्रकृतेः प्रकृत्यर्थगतातिशयलाक्षणिकत्वेन अतिशयगतसाध्यनिरूपकत्वेन अपरपदार्थान्वयोपपत्तेश्च। इदं च प्रकृते अकारवाच्यनिष्ठातिशयगतसाध्यतानिरूपकत्वेन मकारवाच्यस्यान्वय इति न शेषत्वं चतुर्थ्यर्थः। न च "व्रीहीनवहन्ति" "व्रीहीन् प्रोक्षति" इत्यादौ द्वितीयायाः साध्यत्वार्थकत्वेऽपि अवघातादेर्व्रीह्यादिशेषत्वलाभवत्, प्रकृतेऽपि चतुर्थ्या शेषत्वलाभसम्भवति। अत एव "हिषीति वृष्टिकामाय निधनं कुर्यात्" इत्यादिना निधनस्य पुरुषशेषत्वं तान्त्रिकैरुक्तमिति वाच्यम्। तत्र विधिप्रत्ययेन भावनायास्समीहितभाव्यकत्वसिध्या तत्सहकृतद्वितीयादिश्रुत्या परगतातिशयाधानेच्छयोपादेयत्वरूपशेषत्वलाभसम्भवेऽपि, प्रकृते "ब्रह्मणे त्वा महस ओमित्यात्मानं युंजीत" "भगवत एवाहमस्मि" "अच्युताहं तवास्मी" त्यादिप्रमाणानुसारेण "बर्हिर्देवसदनं दामि" इत्यादिवत् वर्तमानापदेशोत्तमपुरुषघटितस्य प्रणवस्य विधिसामानाधिकरणन्यायेन विधिवाक्यत्वाभावेन तत्रत्यलुप्तचतुर्थ्या साध्यत्वमात्रलाभेऽपि तत्साध्यकत्वरूपतादर्थ्यस्य चतुर्थ्यर्थस्य शेषत्वरूपत्वासम्भवेन तल्लाभासम्भवात्। न च तत्साध्यकत्वं कथं तादर्थ्यशब्दार्थ इति वाच्यम्। "अर्थेन नित्यसमासस्सर्वलिङ्गता च वक्तव्या" इत्यनुशासनानुसारेण 'तस्मै इदं-तदर्थम्' इति अस्वपदविग्रहाश्रयणेन तन्निष्ठसाध्यतानिरूपकपदार्थस्यैव तदर्थशब्दार्थत्वात्। न च तत्साध्यकत्वमेव तच्छेषत्वमिति वाच्यम्। शेषत्वस्य विध्येकगम्यत्वसिद्धान्तविरोधेन घटादिसाधनदण्डादिपु वैदिकप्रयाजादिविषये शेषत्वव्यवहाराभावेनातिव्याप्तेः। आरादुपकारकेषु प्रयाजादिषु उदीच्याङ्गेषु च प्रधानोत्पादकत्वाभवेनाव्याप्तेश्च। अवघातादिष्विव विशिष्टवेषेण प्रधानोत्पादकत्वस्य श्रुत्यादिप्रमाणाभावेन कल्पयितुमशक्यत्वात्। तस्मात् शेषत्वं न चतुर्थ्यर्थः—इति शङ्कायामाह—इयं तादर्थ्य इति।

अयमत्र परिहाराभिप्रायः—शेषत्वं चतुर्थ्यर्थ एव। "तादर्थ्ये चतुर्थी वक्तव्या"

इत्यनुशासनात् । न च तादर्थ्यस्य तत्साध्यकत्वरूपतया साध्यत्वमेव चतुर्थ्यर्थ इति वाच्यम् । एवं सति "शेषः परार्थत्वात्" इति जैमिनिसूत्रविरोधात् । "यः परार्थस्तंवयं शेषं ब्रूमः" इति शाबरभाष्यवाक्यविरोधाच्च । 'परस्मा इदं परार्थम्' इति हि परार्थशब्दस्य विग्रहः । तत्र चतुर्थ्या साध्यत्वमात्राभिधाने साधनत्वमेव शेषत्वमित्युक्तं स्यात् । तच्च अव्याप्त्यतिव्याप्तिभ्यामयुक्तमिति पूर्वपक्षिणैवोक्तम् । अयमत्र भाष्याभिप्रायः-'परस्मा इदं परार्थम्' इत्यत्र चतुर्थ्यर्थः प्रार्थना। तस्याश्च प्रकृत्यर्थे विषयत्वेनान्वयः । परशब्दरूपप्रकृत्यर्थस्य सिद्धस्य स्वरूपेण प्रार्थनाविषयत्वासम्भवेनातिशयाधानविशिष्टवेषेण तद्विषयत्वमुपपादनीयम् । परशब्दार्थः-शेषत्वानुयोगित्वेन प्रकृतवस्त्वपेक्षयान्यभूततत्प्रतियोगिपरः । अन्यत्वं च-साक्षाद्धर्मतश्च यथायोग्यं द्रष्टव्यम् । अर्थशब्दः-शेषत्वानुयोगित्वेन तत्र तत्र विवक्षितवस्तुसामान्यपरः । तत्र च प्रार्थनायास्साध्यत्वेनान्वयः । "ब्राह्मणप्रीतये सूपसंपादनम्" इत्यादौ चतुर्थ्यर्थप्रार्थनायां प्रकृत्यर्थस्य स्वरूपेण विषयत्वेनान्वयवत्, अपरपदार्थस्य स्वरूपेण साध्यत्वेनान्वयसम्भवेऽपि 'ब्राह्मणाय सूपः' इत्यादौ तृप्तिलक्षणातिशयविशिष्टवेषेण प्रकृत्यर्थस्य विषयत्वेनान्वयवत्, अपरपदार्थस्य व्यापारविशिष्टवेषेण साध्यत्वेनानुसन्धेयः ।

इत्थं च 'परविषयकेच्छासाध्यार्थः-परार्थः इत्युक्तं भवति । उक्तं च तान्त्रिकैः "तस्मात् पारार्थ्यमेवैकं युज्यते शेषलक्षणम् । परोद्देशप्रवृत्तिश्च पारार्थ्यमभिधीयते" इति । परोद्देशः-परविषयकेच्छा, तत्सम्बन्धिनी प्रवृत्तिः-परोद्देशप्रवृत्तिः । तज्जन्येच्छाजन्यरूपव्यापारसामान्यवाचिनः प्रवृत्तिशब्दस्य इच्छारूपविशेषपरत्वसम्भवाच्च फलेच्छया साधनेच्छासम्भवेन परगतातिशयेच्छाजन्यचिकीर्षाविषयत्वस्य, शेषभूतवस्तुनि स्वरूपेण विशिष्टवेषेण वा सम्भवाच्च । यद्यपि 'ब्राह्मणाय सूपः' इत्यादौ सूपादेः क्रयणपचनादिव्यापारविशिष्टवेषेण शेषत्वं सम्भवति, तथापि प्रथमोपस्थितत्वात्, अनुगतत्वाच्च प्रवृत्तिशब्देन इच्छैव विवक्षणीयेति ध्येयम् ।

इत्थमुद्देश्यत्वघटितं शेषित्वम्, चिकीर्षितत्वघटितं शेषत्वं च "व्रीहीनवहन्ति"

इत्यादौ विधिसमभिव्याहृतद्वितीयाश्रुत्यादिसिद्धमिति शेषत्वस्य विध्येकगम्यत्वसिद्धान्तोपपत्तिः । दण्डघटादिषु साध्यसाधनभावमात्रोपाधिकतया शेषशेषिभावाभावेऽपि उद्देश्यत्वचिकीर्षितत्वोपाधिकस्तोऽस्त्येवेति नातिव्याप्तिः । राजभृत्यादिषु विशिष्टवेषेण उद्देश्यत्वं चिकीर्षितत्वं चादाय शेषशेषिभावाप्रसिद्धिः। उपेक्षणीयवस्तुतत्भागभावयोः शेषशेषिभावाव्यवहाराच्च । आरादुपकारकेषु प्रयाजादिषु उदीच्याङ्गेषु प्रधानस्याङ्गजन्योपकारविशिष्टवेषेणापि साध्यत्वे मानाभावेन उत्पादकत्वलक्षणशेषत्वासम्भवेऽपि साङ्गप्रधानस्यैव फलोत्पादकतया प्राच्योदीच्यांगानां प्रधाने अखण्डोपकाररूपसाहित्यात्मकातिशयोद्देशेन चिकीर्षिततया अव्याप्त्यनवकाशाच्च ।

एवंच 'ब्राह्मणाय सूपः' इत्यादौ प्रकृते लक्षणा न कल्पनीयेत्यपरमप्यनुकूलम् । तृप्तिविशिष्टवेषेण प्रकृत्यर्थस्येच्छविषयत्वसम्भवेनातिशयविशिष्टवेषेण साध्यत्वासम्भवेऽपि क्षत्यभावात् । अत एव सूपाद्यपरपदलक्षणा नेत्यप्यपरमप्यनुकूलम् । सूपादेः क्रयणपचनादिव्यापारविशिष्टवेषेण चिकीर्षितत्वसम्भवात् । चतुर्थ्यर्थेच्छाया अपरपदार्थे तत्साध्येच्छाविषयत्वस्यैवानुगतवाक्यार्थत्वाभ्युपगमात् । साध्यत्वमात्रस्य चतुर्थ्यर्थत्वे सूपपदलक्षणाया दुर्वारत्वाच्च ।

तस्मात् "तादर्थ्ये चतुर्थी वक्तव्या" इति शब्दवार्तिकगततादर्थ्यशब्दस्य "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति चतुर्थीसमासविधायकव्याकरणसूत्रगततदर्थशब्दस्य च तदिच्छाजन्येच्छाविषयत्वार्थकतया तदर्थकतदर्थशब्दपरतया च अनुशासनबलादेव शेषत्वं चतुर्थ्यर्थ इति सिद्धम् । अत एव "व्रीहीनवहन्ति" इत्यादाविव प्रकृतेऽपि शेषत्वलाभ इत्युपपद्यत इति ।

इयांस्तु विशेषः—तत्र शेषिणः साध्यत्वं द्वितीयाया उद्देश्यत्वं समभिव्याहारगम्यम् । अत्र शेषिण उद्देश्यत्वं चतुर्थ्यर्थः । शेषस्य साध्येच्छाविषयत्वं वाक्यार्थ इति । अत एव "हीषीति वृष्टिकामाय निधनं कुर्यात्" इत्यादावपि हीषादिनिधनस्य वृष्टिकामादिपुरुषशेषत्वं तदभिलषितवृष्ट्यादिसाधनस्तोत्रकारणसौरभद्वारकं चतुर्थ्यैव लभ्यत इति युक्तम् । "स्वर्गकामो यजेत" इत्यादौ विधिप्रत्ययेन भावनाया

इष्टभाव्यकत्वोक्तावपि विशिष्य स्वर्गादेः काम्यत्वोक्तिवत् चतुर्थ्या विशिष्य पुरुषस्योद्देश्यत्वोक्तिसम्भवात्। अत एव च प्रणवस्योत्तमपुरुषघटितत्वेऽपि न दोषः। चतुर्थ्यैव लाभसम्भवात्; इत्येषादिक्—इति।

(अन्ये)ति-(अनया)-प्रणवस्थलुप्तचतुर्थ्या इत्यर्थः। (ईश्वरस्य)"ईशेशितव्यसम्बन्धात् अनिदं प्रथमादपि" इत्यादिप्रसिद्धनिर्हेतुककटाक्षेण भगवता स्वयमेव स्वच्छन्दसर्वजीवसाधारण्येन सङ्कल्पितं चिच्छक्तिप्रवृत्तिशक्तिप्रदानान्तःप्रवेशधारणनियमनपूर्वकप्रवृत्तिफलोपधानसङ्कल्परूपं नियमनमपि प्रकृत्यर्थलक्षणान्तर्गतमिति भावः। इदं च शेषत्वप्रतिपादनेन प्रणवस्य पुरुषार्थपर्यवसानायोक्तम्। ईश्वरत्वात् स एव उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ। अत एव जीवस्य भगवदतिशयाधानेच्छयोपादेयत्वलक्षणशेषत्वस्य प्रतिपादनं युक्तमिति च भावः। (शेष इत्युच्यते)-मकारवाच्यं वस्तु शेषमिति कथ्यत इत्यर्थः।

यद्यपि प्रार्थनामात्रं चतुर्थ्यर्थः, तथापि लुप्तविभक्त्यर्थलाक्षणिकाकारार्थप्रार्थनायाः व्यापारद्वारकसाध्यत्वम्, अपरपदार्थे वाक्यार्थविधया लभ्यत इत्यभिप्रायेण "शेष इत्युच्यते" इत्युक्तम्।

यद्यपि च प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुसारेण शेषित्वमेव चतुर्थ्यर्थः, तथा च "ईश्वरत्वनिष्ठशेषित्वनिरूपकमित्युच्यते" इति वाक्यार्थो वर्णनीयः। किंच लाक्षणिकेनाकारेण कारणत्वरक्षकत्वविष्णुत्वरूपप्रवृत्तिनिमित्तसमानाधिकरणं शेषित्वमेव लक्ष्यत इति "शेषित्वनिरूपकमित्युच्यते" इत्येव वक्तव्यम्। तथापि 'ब्राह्मणाय सूपः'इत्यादौ चतुर्थ्यर्थविशेषणकापरपदार्थविशेष्यकशाब्दबोधस्यैव व्युत्पत्तिसिद्धतया, तत्सूचनार्थतया प्रार्थनामात्रस्य चतुर्थ्यर्थतया तस्याश्च स्वरूपेण अतिशयविशिष्टवेषेण वा प्रकृत्यर्थे विषयतासम्बन्धावच्छिन्नाधेयतासम्बन्धेन व्युत्पत्त्यनुरोधेनान्वितायाः शेषित्वरूपत्वेन व्यापारघटितसाध्यतासम्बन्धेनापरपदार्थान्वितायाः शेषत्वरूपत्वेन च प्रकृत्यर्थविषयकेच्छाया विशेष्यत्वेनैवाकारेण लक्ष्यतया च 'अकारवाच्यशेषभूतं मकारवाच्यमि'त्येव वाक्यार्थस्य वक्तव्यत्वात् न दोषः। इच्छा-

(५२). "सर्वं परवशं दुःखम्" "सेवा श्ववृत्तिः" इति लौकिकन्यायमादाय शेषत्वं दुःखरूपमिति निश्चिन्वताम्प्रश्नमनुवदति–शेषत्वमिति ।

मू।। शेषत्वं दुःखरूपमहावन्नो नाट्टिल् काण्गिरदेन्निल्।।५२।।

छा शेषत्वं दुःखरूपं हि लोके दृश्यत इति चेत् ।।५२।।

---

विषयत्वस्यापदार्थतया प्रार्थनाविषयत्वरूपशेषित्वे प्रार्थनासाध्यतासम्बन्धेन निरूपकत्वस्यावाक्यार्थत्वात् । विषयतासम्बन्धेन प्रार्थनाया एव शेषत्वरूपत्वविवक्षया शेषित्वरूपप्रवृत्तिनिमित्तसमानाधिकरणधर्मे लक्षणाया वक्तुं शक्यत्वाच्च । तस्माल्लाघवेन प्रार्थनायाः साध्यत्वमेवापरपदार्थान्वय इत्यभिप्रायेण–"ईश्वरस्य शेष इत्युच्यते" इति सुक्तं वाक्यार्थकथनम् । (ईश्वरस्ये) ति षष्ठयर्थो निरूपकत्वम् । 'चैत्रस्य माता, इतिवत् । शेषिगतातिशयाधानेच्छासाध्यव्यापारविषयत्वात्मकशेषपदप्रवृत्तिनिमित्तद्वारकसम्बन्धेन शेषपदार्थेन सम्बध्यते । लक्षणामूलकनिरुक्तवाक्यार्थस्य प्रार्थनाया लुप्तचतुर्थ्यर्थत्वमहिमलभ्यतया–"अनया ईश्वरस्य शेष इत्युच्यते" इत्यनुगृहीतम्।।५१

(सर्वं परवशं दुःखम) इति-अत्र इमौ पूर्वपक्षसिद्धान्तौ–"सर्वं परवशं दुःखम्" इत्यादिरीत्या शेषवृत्तेः सर्वेषां पुरुषाणां स्वस्वापेक्षया प्रतिकूलरूपत्वस्य पण्डितपामरसाधारण्येनानुभाविकत्वेन, प्रणवस्य भगवच्छेषत्वपरत्वे समन्वयाधिकरणव्युत्पाद्यस्य सिद्धपरवाक्यानां स्वतःपुरुषार्थपरतया प्रामाण्यस्य भङ्गप्रसङ्गः। न च शेषवृत्तेः प्रतिकूलरूपत्वनियमः प्रमाणबलेन प्रकृते व्यभिचरित इति वाच्यम्; 'नह्यागमास्सहस्रम्' इति न्यायेनापुरुषार्थत्वेन सार्वजनीनायां शेषवृत्तौ पुरुषार्थत्वपरवाक्यस्याप्रामाण्यप्रसङ्गेन अन्यपरत्वस्यैव कल्पनीयत्वात् ।

न च अभिमतविषयशेषवृत्तेरनुकूलरूपत्वं दृष्टमिति वाच्यम्; अभिमतविषयशेषवृत्तेः प्रतिकूलत्वेऽपि तज्जनितदुःखस्य बलवद्द्वेषाविषयत्वेन तज्जनिताभिमतविषयसुखोल्लासस्योत्कटेच्छाविषयत्वेन च तत्र बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानरूपा-

ष्टा आनुकूल्यबुद्धेरेव प्रवर्तकत्वोपपत्तेः ।

न च पुत्रमित्रकलत्राद्यभिमतविषये पुत्रत्वादिसम्बन्धतत्तद्‌साधारणोपकारकत्वाद्यात्मगुणसौन्दर्यसौकुमार्यादिदेहगुणज्ञाननिबन्धनभोग्यतानुसन्धानेन तत्तन्मुखोल्लासार्थप्रवृत्तिवत्, अकारोक्तकल्याणगुणानुसन्धानशालिनां भगवन्मुखोल्लासार्थवृत्तिरपि सम्भवतीति वाच्यम्; केवलशास्त्राधीनगुणज्ञाननिबन्धनातीन्द्रियभगवन्मुखोल्लासार्थानन्यप्रयोजनप्रवृत्तेरननुभवपराहतत्वात् ।

न च शेषवृत्तेः भगवत्प्रियत्वेन तत्परस्य प्रणवस्य पुरुषार्थपर्यवसानेन प्रामाण्यं सम्भवतीति वाच्यम्; "सर्वस्स्वार्थं समीहते" इति प्रसिद्धिविरोधात्। "निरस्ताखिलदुःखोऽहमनन्तानन्दभाक्स्वराट् । भवेयामिति मोक्षार्थी श्रवणादौ प्रवर्तते" इति श्रीभाष्यसूक्तिविरोधाच्च । जीवानिष्टस्य भगवदिष्टत्वे गुणानुभवकैंकर्ययोः पुरुषार्थत्वाय भगवतो रक्ष्यापेक्षाप्रतीक्षायाः प्रमाणसिद्धाया भङ्गप्रसङ्गाच्च ।

एतेन 'अभिमतविषयशेषत्ववत् भगवच्छेषत्वस्यापि गुणकृतत्वं सम्भवमात्रेणोक्तम्, वस्तुतस्तु भगवच्छेषत्वं जीवस्य स्वरूपमेव स्वाभाविकसुखमेव । भगवत्प्रियत्वस्यैवेष्टतावच्छेदकत्वादि'ति निरस्तम् । अत एव "शेषत्वमेव स्वरूपम्" इति अन्ययोगव्यवच्छेदोऽपि दूरतोऽपास्तः । "अस्ति ब्रह्मेति चेत् वेद सन्तमेनं ततो विदुः" इति ज्ञातृत्वस्य" मोदते भगवान् भूतैर्बालः क्रीडनकैरिव" "हरे विहरसि क्रीडाकन्तुकैरिव जन्तुभिः" "हरिर्दुःखानि भक्तेभ्यो हितबुध्द्या करोति वै" इति भोक्तृत्वार्थकर्तृत्वस्य "सोऽश्नुते" "आनन्दी भवति" इत्युक्तभोक्तृत्वस्यापि भगवत्प्रियत्वात्। न च "स्वत्वमात्मनि संजातम्" "आत्मदास्यम्" इत्यादिप्रमाणबलेन "अपशवो वा अन्ये गोअश्वेभ्यः" "तदज्ञानमज्ञानमतोऽन्यदुक्तम्" इतिवत् भगवत्प्रियत्वातिशयाभिप्रायेण प्रकृते अन्ययोगव्यवच्छेद इति वाच्यम्; तत्र स्वत्वदास्ययोः स्वाभाविकस्वभावप्रतिपादनात् । एतेन "दासभूताः" इत्यादिश्लोकोऽपि व्याख्यातः । तत्र "नान्यथा लक्षणं तेषाम्" इति शेषत्वाभावस्य स्वाभाविकत्वं निरस्यते । "औपाधिकमपि शेषत्वं बद्धदशायाम्; मुक्तदशायामैक्यापत्तिरेव" इति मतं "मोक्षे तथै-

वच" इत्यनेन व्यावर्त्यते ।

न च परीक्षकस्य शेषवृत्त्यभावः स्वातन्त्र्यबुद्ध्यधीनः, स्वातन्त्र्यबुद्धेश्च "योऽन्यथासन्तमात्मानम्" इत्यादिप्रमाणेन सर्वपापमूलतया शेषत्वाभावे भगवत्प्रियतमत्वलक्षणस्वरूपहानिस्सम्भवतीति वाच्यम् ; "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानाम्" इत्याद्युक्तरीत्या देहात्मभ्रमस्यैव सर्वपापमूलत्वेन तत्र विवक्षितत्वात् ।—इति ।

प्रणवस्य प्रमाणतमत्वेन तद्बलात् शेषवृत्तेर्दुःखरूपत्वानियमस्य भगवच्छेषवृत्तावेव व्यभिचारात्-किंचेत्याद्ययुक्तम्। 'न ह्यागमसहस्रम्' इति न्यायेनापुरुषार्थे पुरुषार्थत्वेनाभिप्रायोक्तिरसदर्थवाद इति वाच्यम्; "रात्रौ मठभोजयितार इव" इत्यनुगृहीतरीत्या द्विष्टविषयेऽपि सम्बन्धमात्रकृतप्रेमातिशयेन शेषवृत्तेर्दर्शनेन "स्वामित्वं ब्रह्मणिस्थितम्" इत्याद्युपबृंहिततया "पतिं विश्वस्य" "पतिं पतीनाम्" इत्यादिश्रुत्या प्रसिद्धासंकुचितनिरुपाधिकसर्वस्वामित्वलक्षणसम्बन्धमादय भगवद्विषयेऽपि शेषवृत्तेरनुकूलतमत्वसम्भवेन प्रमाणशिरोमणेः प्रणवस्यासदर्थवादत्वशङ्कागन्धस्याप्यत्यन्तानुचितत्वात् ।

किंच पुत्रमित्रकलत्राद्यभिमतविषयेषु शेषवृत्तेः सुखरूपत्वस्य दरीदृश्यमानत्वेन व्यभिचारः । न च 'कष्टं कर्मे' ति न्यायेनाभिमतविषये शेषवृत्तेः प्रतिकूलत्वेऽपि तन्मुखोल्लासस्योत्कटेच्छाविषयतया तत्रत्यदुःखस्य बलवद्द्वेषाविषयतया च तत्र प्रवृत्तिस्सम्भवतीति वाच्यम्; तथा सति "पादप्रहारः परमं हि भाग्यम्" कान्तापादतलाहतिस्तव मुदे तद्वन्ममापि"'"कोपेऽपि कान्तं मुखम्" इत्याद्यनुसारेण" मुखोल्लासाभावेऽपि प्रयासाधिक्यसत्त्वेऽपि कुम्भदास्यादिपरीक्षकप्रवृत्तेस्सुप्रसिद्धत्वात्। न च तत्रापि सौन्दर्यसौकुमार्यलावण्ययौवनादिगुणज्ञाननिबन्धनभोग्यताबुद्धिमादाय प्रवृत्तिस्सम्भवतीति वाच्यम्; काकशावन्यायेनाभोग्येऽपि शेषवृत्तेर्दर्शनात् ।

किंचाकारणे रक्षकत्वोक्त्या, तदाक्षिप्तसार्वज्ञादिकल्याणगुणगणप्रदर्शनपूर्वकशेषवृत्तेः प्रणवे प्रतिपादितत्वेन पुरुषार्थपर्यवसाननिदन्धनप्रामाण्यं सम्भवत्येव । न च शास्त्रैकगम्यगुणानुसन्धाननिबन्धनशेषवृत्तिरननुभवपराहतेति वाच्यम्; "वायुमेव

स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्यादिप्रसिद्धदेवताप्रसादार्थप्रवृत्तिमात्रोच्छेदापत्तेः। न चानादिवासनासिद्धत्रिवर्गप्रावण्यानुसारेण शास्त्रविश्वासानुरोधेन च त्रिवर्गार्थदेवताप्रसादोद्देशेन प्रवृत्तिसम्भवेऽपि स्वयंप्रयोजनदेवताप्रसादोद्देशेन प्रवृत्तिरननुभवपराहतेति वाच्यम्; "मद्भक्तजनवात्सल्यम्" इत्यारभ्य" यच्च मां नोपजीवति" इत्यन्तेन श्रीमद्गारुडपुराणे "पुरुषार्थोऽयमेवैको यत्कथाश्रवणं हरेः" "क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्" "वरं हुतवहज्वालापंजरान्तर्व्यवस्थितिः" "यन्मुहूर्तं क्षणं वापि" "पाथेयं पुण्डरीकाक्षनामसङ्कीर्तनामृतम्" इत्यादिप्रमाणेषु च प्रसिद्धाया अनन्यप्रयोजनभगवद्भक्तैः 'आह्लादशीतनेत्राम्बुः" "मच्चित्ता मद्गतप्राणाः" "शृण्वन्ति साधवः" इत्यादिप्रमाणप्रसिद्धेषु शुद्धसत्त्वविरोधिरजस्तमोनिबर्हणपूर्वकं निर्हेतुकभगवत्कटाक्षमूलकसत्त्वविवृद्धिमत्सु भगवद्भक्तेषु आनुभाविकत्वात्।

अपि च स्वभोग्यताबुध्यभावेऽपि भगवद्भोग्यताप्रतिपत्त्या प्रवृत्तेरेव जीवस्य स्वाभाविकत्वात् प्रणवस्य प्रयोजनवत्तरार्थपर्यवसानेन प्रामाण्यमुपपन्नतरम्। न च 'सर्वस्स्वार्थं समीहते' इति न्यायविरोधः। स्वार्थमित्यस्य-स्वेष्टलाभायेत्यर्थकत्वात् स्तनन्धयादिविषये स्वगतसुखगन्धाभावेऽपि परसुखोद्देशेनैव जनन्यादेः प्रवृत्तिदर्शनेन केवलभगवन्मुखोल्लासोद्देशेन प्रवृत्त्यविरोधात्। न च गुणानुभवजनितप्रीतिकारितकैंकर्यस्थले स्वगतसुखमस्तीति वाच्यम्; तत्सत्त्वेऽपि कैंकर्यस्यानुभवजनितप्रीतिकारिततया तदुद्देशेन तत्र प्रवृत्त्यभावात्। अनुभवस्यापि केवलपरार्थतया स्वगतस्य "सो ऽश्नुते सर्वान् कामान्" "रसं ह्येवायं लब्ध्वानन्दी भवति" इत्यादिप्रतिपन्नस्यापि सुखस्यावघातस्वेदवत् आनुषङ्गिकत्वात्। कैंकर्यस्य स्वभोगत्वेऽपि तद्भोगस्यापि तथात्वाच्च। एतेन "निरस्ताखिलदुःखो ऽहम्" इत्यादिसूक्तिरपि व्याख्याता।

न चानुभवकैंकर्ययोर्भोग्यत्वे भोगस्योद्देश्यत्वमनिवार्यम्, इच्छाया विषयवैलक्षण्यज्ञानमात्राधीनत्वादिति वाच्यम्; तथापि केवलस्वभोगेच्छाजन्यप्रवृत्त्यनर्हत्वल-

क्षणनिष्कृष्टनमश्शब्दार्थपारतन्त्र्यज्ञानशालिनां स्वभोगेच्छाजन्यप्रवृत्तेः भगवदनिष्टत्वज्ञानेन केवलपरभोगेच्छया प्रवृत्त्युपपत्तेः । "स्वस्ति सम्बाधेष्वभयं नोअस्तु" इत्यादिप्रमाणानुसारेण परभोगवर्द्धकानुमोदनरूपस्वभोगेच्छया प्रवृत्तिसम्भवेऽपि स्वातन्त्र्येण स्वभोगेच्छाजन्यप्रवृत्त्यभावोपपत्तेश्च । अत एव चेतनस्य केवलपरार्थं स्वानिष्टे प्रवृत्तिः भगवतो रक्ष्यापेक्षाप्रतीक्षाविरुद्धेति परास्तम् । भगवतो रक्ष्यापेक्षाप्रतीक्षणबलादेव भगवता स्वयमेव निर्हेतुककटाक्षाधीनयादृच्छिकसुकृतमूलकाद्वेषादिपरंपरासंपादनमुखेन केवलपरार्थानुभवकैंकर्यरुचिप्रतिबन्धकानादिदुर्वासनाप्रभृतिनिवर्तनपूर्वकं तदुभयरुच्युत्पादनानन्तरमेव तदुभयार्थप्रवृत्तेरभ्युपगमात् ।

तस्मात् भगवच्छेषत्वं वस्तुतो गुणाधिकविषयत्वेन गुणकृतमपि तेषां नित्यत्वात् स्वतोऽनुकूलमेव । भगवत्प्रियत्वस्यैव स्वत इष्टतावच्छेदकत्वादिति सिद्धम् अत एव "शेषत्वमेव स्वरूपम्"इति अन्ययोगव्यवच्छेदोऽपि तस्य स्वतोऽनुकूलत्वमुपोद्बलयति । बद्धदशायां ज्ञातृत्वकर्तृत्वभोक्तृत्वानां मुक्तिदशावच्छिन्नभगवदनुभवजनितप्रीतिकारितकैंकर्यप्रविष्टज्ञातृत्वभोक्तृत्वार्थतया भगवतो लीलारसस्यानुषङ्गिकतया च मुक्तिकालीनज्ञातृत्वादेरेव भगवत्प्रियतमत्वात् । अनुभवप्रीतिलक्षणज्ञातृत्वभोक्तृत्वापेक्षया कैङ्कर्यरूपकर्तृत्वात्मकशेषत्वस्यैव तदुभयदार्ढ्यापादकतया तथात्वाच्च । "अस्ति ब्रह्मेति चेत्" इत्यत्रापि परार्थकैङ्कर्यपर्यन्तपरार्थानुभवस्यैव भगवत्प्रियतमत्वलक्षणसत्तातिशयहेतुत्वेन विवक्षितुं शक्यत्वाच्च । "ईश्वराय निवेदितुम्" इत्यत्रापि परार्थनित्यकैंकर्यविनियोगस्यैव सर्वोत्कृष्टनिवेदनत्वेन विवक्षितत्वाच्च ।

इदंच ज्ञातृत्वाद्यपेक्षया शेषत्वस्य भगवत्प्रियतमत्वलक्षणमाधिक्यं मूलमन्त्रमन्त्ररत्नमूलकमुपबृंहणदृढीकृतम् । तथा हि "स्वत्वमात्मनिसंजातम्" इति वचनं तावत् न स्वत्वस्वामित्वयोः स्वाभाविकत्वमात्रपरम् । अन्यतरोक्त्यान्यतरलाभेन वैफल्यापत्तेः । जीवात्मनः परमात्मापेक्षया स्वत्वस्वरूपशक्तिविशेषः सदातननिरतिशयभोग्ययथेष्टविनियोगरूपफलोपहितः । अतो 'नित्यस्य स्वरूपयोग्यस्य' इत्यादिव्याप्ति-

सिद्धफलोपधानरूपव्यापकस्य यावदात्मभावित्वात् । भगवतो जीवात्मापेक्षया स्वामित्वरूपशक्तिविशेषोऽपि यावदात्मभावीति पदद्वयस्यापि प्रयोजनवत्तरत्वसम्भवाच्च ।

"आत्मदास्यम्" इति वचनमपि यावदात्मभाविकेवलपरार्थकैङ्कर्यरूपपरमपुरुषार्थलाभार्थं सद्यो भगवत्प्रियतमत्वलक्षणसत्तालाभार्थञ्च अदृष्टद्वारकफलोद्देश्यकप्रवृत्तिरूपस्वयत्ननिवर्तकं प्राधान्येन प्रवृत्त्युद्देश्यस्वगतभोगरूपफलित्वनिवर्तकञ्च जीवात्मनो दास्यलक्षणस्वभावस्य भगवतस्स्वामित्वलक्षणस्वभावस्य च सदानुसन्धानं सद्यः केवलपरार्थानुभवकैङ्कर्यप्रवर्तकं कर्तव्यमित्यर्थकं 'शेषत्वमेव स्वरूपम्' इति दृढयति । अत्र "ऐदंतदात्म्यमिदं सर्वम्" तत्सत्यं स आत्मा" इतिवत् "त्वं वाहमस्मि अहं वै त्वमसि" इतिवत् "योऽहं सोऽसौ योऽसौ सोऽहम्" इतिवत् "तत् त्वमेव त्वमेव तत्" इतिवच्चादरातिशयेन "आत्मदास्यं हरेः स्वाम्यञ्च" इति व्यवहारानुसन्धानमुक्तमिति द्रष्टव्यम् ।

"दासभूताः" इत्यादिवचनमपि 'ज्ञानानन्दादीनामपि स्वाभाविकत्वात् दास्यं किमिति विशिष्योपादीयते' इति शङ्कायां 'सर्वे आत्मनो दास्येनैव लब्धसत्ताकाः, अतो दास्यमेव "सन्तमेनं ततो विदुः" इत्यादिप्रतिपन्नभगवत्प्रियतमत्वरूपश्लाघ्यतालक्षणसत्ता ज्ञापकम्, नतु स्वाभाविकमपि ज्ञानानन्दादिकम्' इत्येवंपरम् । अन्यथा दास्यस्य स्वाभाविकत्वोक्तौ तदभावस्य तदुक्तिवैयर्थ्यात् । दास्यस्य बन्धदाशायां स्वाभाविकत्वोक्तौ मुक्तिदशायामैक्यशङ्कानुदयेन "मोक्षे तथैव च" इत्यस्यापि वैयर्थ्यात् । ब्रह्मवित्सामान्ये गुणानुभवमात्रस्य वेदान्तेषु श्रवणेन प्रपन्नेतरविषये गुणानुभवस्यैव परमपुरुषार्थतया 'कैङ्कर्यमेव परमपुरुषार्थः' इत्ययुक्तमिति शङ्कायाम् "अधिकं तत्रानु प्रविष्टं न तद्धानिः" इति न्यायेन कैंकर्यस्यानुभवगर्भत्वेन भगवदनुभवस्य स्वानुभवगर्भस्य कैवल्यापेक्षयेव कैङ्कर्यपर्यन्तानुभवस्य प्रपन्नाधिकारिमात्रनिष्ठस्यापि भोग्याधिक्यनिबन्धनप्रियतमत्वमादाय आनन्दतारतम्य

स्यापि जीवात्मपरमात्मनोः परमपुरुषार्थत्वं केवलानुभवापेक्षया सम्भवतीति वक्तुं "मोक्षे तथैव" च इत्युक्तामिती प्रयोजनसम्भवाच्च।

अपिच 'कष्टंकर्म'इति न्यायेन शेषवृत्तौ परीक्षकस्य प्रवृत्त्यभावः स्वातन्त्र्यभ्रमादेव। तस्यानादिदुर्वासनया दुरपह्नवत्वात्। अन्यथा भगवत्प्रीतिमात्रोद्देश्यकप्रवृत्त्यर्हत्वलक्षणस्वरूपयाथात्म्यज्ञानशालिनः परीक्षकस्य बलवदनिष्टाननुबन्धिभगवत्प्रीतिरूपेष्टसाधनताज्ञानादिघटितसामग्रीबलेन तत्र प्रवृत्तेरावश्यकत्वात्। इत्थंच "योऽन्यथासन्तमात्मानम्" इत्यादिवचनबलेन स्वातन्त्र्यभ्रमस्य तत्पुरुषबहुव्रीहिवृत्त्या सकलपापमूलतया तद्वतो भगवदप्रियतमत्वेन शेषत्वाभावे भगवत्प्रियतमत्वलक्षणस्वरूपहानिर्दुर्वारा। न च तद्वचनं देहात्मभ्रमपरमिति वाच्यम्; स्वातन्त्र्यभ्रमस्यापि अन्यथाप्रतिपत्तिरूपत्वाविशेषेण सङ्कोचे मानाभावात्। "मणत्तैयुम्" "पिरर्कु" इत्यादिवक्ष्यमाणरीत्या शेषत्वविरोधिस्वातन्त्र्यभ्रमस्यातिक्रूरत्वेन तस्यैव द्वेधा सर्वपाप मूलत्वोपपत्तेश्च। स्वातन्त्र्यबुद्धेः कैवल्यरूपमहादुःखमूलत्वेन तस्यैव तत्रावश्यं विवक्षणीयत्वाच्च—इति।

"यत्तु "सर्वं परवशं दुःखम्" इत्युक्तम्,' तत्परमपुरुषव्यतिरिक्तानां परस्परशेषशेषिभावाभावात् तद्व्यतिरिक्तंप्रति शेषता दुःखरूपमेवेत्युक्तम्। "सेवा श्ववृत्तिः" इत्यत्रापि असेव्यसेवा श्ववृत्तिरित्युक्तम्" इत्यादि वेदार्थसङ्ग्रहसूक्तिरत्रानुसन्धेया। व्यवस्थापितश्चायमर्थो भक्तिमीमांसायां शाण्डिल्यमहर्षिभिः—"द्यूतराजसेवयोः प्रतिषेधात्" इति।

**शेषत्वशब्दः**-परगतातिशयाधानेच्छयोपादानफलोपधानपरः। **(दुःखात्मकं-हि)**-दुःखरूपत्वेन खल्वित्यर्थः। दुःखरूपत्वं-द्वेषद्वारा निवृत्तिप्रयत्नहेतुभूतज्ञानविषयप्रतिकूलत्वात्मकशक्तिविशेषः। हिशब्दः-'स्वात्मनो बुध्द्युत्पत्तिं दृष्ट्वा' इतिवत् अनुभवप्रसिद्धिपरः। **(दृश्यत इतिचेत्)** इत्यनेन सर्वेषां स्वस्वमानसानुभवो विवक्षितः। 'कष्टं कर्मे' ति न्यायेन सामान्यतो यत्नसाध्यस्य प्रातिकूल्यत्वेन पक्ष-

(५३.) तस्योत्तरमाह—स नियम इति ।

मू॥ अन्द नियममिल्लै, उहन्दविषयत्तुक्कु शेषमायिरुक्कु-मिरुप्पु सुखमाहक्काण्गैयाले ॥ ५३ ॥

छा॥ स नियमो नास्ति, अभिमतविषये शेषत्वस्य सुखरू-पतया दृश्यमानत्वात् ॥ ५३ ॥

व्या॥ लोके "पणिमिन्तिरुवरुळ्" इत्याद्युक्तप्रकारेणाभिम-तविषये शेषत्वस्य सुखरूपत्वदर्शनात्, 'शेषत्वं चेद्दुःखरूपम्' इति नियमो नास्तीत्यर्थः ॥ ५३ ॥

(५४.)अभिमतविषये शेषत्वस्य सुखरूपत्वं तद्विषये गुणमू-लकत्वात्, तदत्रापि तुल्यमित्याह—अकार इति ।

---

तिशयोद्देशेन विशिष्य प्रयत्नस्य स्वनिकर्षापादकतया तत्साध्यप्रवृत्तेः सुतरां प्रति-कूलत्वेन चानुभवस्य सार्वजनीनत्वात् इति भावः ॥ ५२ ॥

(तस्योत्तरमाह) इति- विशिष्य भगवच्छेषवृत्तेरनुकूलत्वमेव स्वभाव इ-ति साधयिष्यन्, सामान्यतः शेषवृत्तेः प्रतिकूलत्वं न स्वभाव इति तावत्तस्य प्रथम-मुत्तरमाहेत्यर्थः ।

'अभिमतशब्दः-शास्त्रेण विना प्रत्यक्षादिना भोग्यत्वेनावगतस्त्र्यादिपरः इत्य-भिप्रायेणाह-लोक इति । विषयशब्दः-शब्दादिविषयपरः । (सुखत्वेन)-अनुकू-लत्वेन, स्वत इष्टत्वेनेति यावत् । न प्रतिकूलत्वराहित्यमात्रेणानुभूयते, अपित्वनुकू-लत्वेनाप्यनुभूयत इति भावः । कालिदासकुम्भदास्यादिकमुदाहरणं बोध्यम् ॥५३॥

(अभिमतविषये) इति-अभिमतविषयशेषवृत्तिर्गुणज्ञाननिबन्धना युज्येत,

मू॥ अकारत्तिल् कल्याणगुणङ्गळै चोल्लुहैयाले, इन्द्शेषत्व-मुं गुणत्ताले वन्द्दु ॥ ५४ ॥

छा॥ अकारे कल्याणगुणानां कथितत्वात्, इदं शेषत्वं च गुणेनागतम् ॥ ५४ ॥

व्या॥ ईश्वरस्य रक्षकत्वप्रतिपादकेऽकारे तद्रक्षणो पयोगितया कल्याणगुणानामुक्तत्वात्, ईश्वरविषयकमिदं शेषत्वमपि तद्गुण-मूलकत्वेनागतमित्यर्थः । अतोऽस्यापि सुखरूपत्वोक्तिरविरुद्धेति भावः ॥ ५४ ॥

प्रकृते तु गुणज्ञाननिबन्धनत्वे मानाभाव इति शङ्कायां, कटिशिशुमार्गणन्यायापातात्, इदमयुक्तम् । गुणप्रसिद्धेः । श्रुतिस्मृत्यादिप्रमाणान्तरगवेषणं, समभिव्याहृतनारा-यणपदपर्यालोचनं च विना, लुप्तचतुर्थ्यर्थलाक्षणिकाकारेणैव विष्णुत्वरूपरूढिनि-मित्तावच्छिन्ने कारणत्वरूपगुणसमष्ट्यात्मकरूढिनिमित्तमुखेन ज्ञानशक्त्यादिगुणाक्षे-पकरक्षकत्वरूपयोगवृत्तिनिमित्तमुखेन च कल्याणगुणानां सिध्या अकारेणैव शेषवृ-त्तेर्गुणज्ञाननिबन्धनत्वस्य "गुणैर्दास्यमुपागतः" इत्यादिप्रसिद्धस्य लाभात् इत्यभि-प्रेत्याहेत्यर्थः ।

(ईश्वरस्ये) त्यादिना योगवृत्तिमित्तत्वमात्रकथनमन्ययोश्चोपलक्षणम् । (अकारेण) इत्यनेन-निमित्तत्रयवत्त्वं विवक्षितम् । (कल्याणगुणानामि) ति-कल्याणत्वं-निरतिशयभोग्यत्वम् । रक्षणोपयोगिगुणः-सर्वज्ञत्वसर्वशक्तित्वकारुणि-कत्वादिः । (गुणानामि) त्यनेन-गुणासङ्कोचो ऽभिप्रेतः । (ईश्वरविषयकमिदं शेषत्वम्) इति-"गुणैर्दास्यमुपागतः" "हृदयान्याममन्थेन" "अवशाः प्रतिपे-दिरे" इत्यादिप्रसिध्या भगवद्विषयशेषवृत्तिरेवानवधिकगुणानुसन्धाननिबन्धनतया-तिशयितपुरुषार्थ इति भावः । (शेषत्वम्) लुप्तचतुर्थ्यर्थस्वरूपयोग्यतारूपशेष-

(५५.) तर्हि औपधिकमिदं, न स्वरूपमिति चेत्, तत्राह—शेषत्वमेवेति ।

सू॥ शेषत्वमे आत्मावुक्कु स्वरूपम् ॥ ५५॥

छा॥ शेषत्वमेवात्मनस्स्वरूपम् ॥ ५५ ॥

व्या॥ नाभिमतविषये शेषत्वस्य सुखरूपत्वप्रयोजकम्, गुणकृतत्वमत्रापि वर्तत इत्येतावन्मात्रम्, अपित्वर्थस्थितिनिरूपणे "स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितम्" "आत्मदास्यं हरेस्स्वाम्यं स्वभावं च सदा स्मर" "दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः । नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च" इत्यादिष्वात्मनोऽस्य स्वाभाविकत्वकथनाच्छेषत्वमेवात्मनस्स्वरूपमित्यर्थः ॥ ५५ ॥

---

त्वव्यापकफलोपधानरूपशेषवृत्तिरित्यर्थः ॥ ५४ ॥

(तर्हि) इति—यदि भगवच्छेषवृत्तेः गुणानुसन्धाननिबन्धनत्वे "नित्यकिंकरः प्रहर्षयिष्यामि" "नित्यकिंकरो भवानि" इत्यादिकूटस्थसूक्तिसिद्धं नित्यपुरुषार्थत्वं भज्येतेति शंकाभिप्रायः । अत्र 'इदं शेषत्वं औपाधिकम्, शेषतात्वात्, मातापित्रादिशेषत्ववत्' इत्यनुमानेनास्यौपधिकत्वं सिद्धमित्यभिप्रायस्सूचितः । (नेत्याह) इति-कैंकर्यवत् गुणानां नित्यतया क्षणकालमपि गुणानुभवविच्छेदे सति "वरं हुतवहज्वालापंजरान्तर्व्यवस्थितिः" "यन्मुहूर्तं क्षणं वापि" इत्यादिरीत्या निरतिशयार्तिशालिनां तदनुसन्धानस्यापि "सदा पश्यन्ति", इत्यादिरीत्या नित्यतया गुणानुभवजनितप्रीतिकारितकैंकर्यमपि नित्यमेवेति नोक्तदोष इति परिहारमाहेत्यर्थः।

(आत्मदास्यमि)ति-स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि।आत्मदास्यं··· स्मर ॥ (उज्जीवनम्)—परमपुरुषार्थलक्षणपरार्थैकैंकर्यरूपमोक्षलाभः। (स्वसत्ता)—देशकालादिसम्बन्धरूपलौकिकसत्ताविलक्षणा "सन्तमेनं ततो विदुः" इत्यादिशास्त्रैकावसेया विलक्षणसत्ता। उज्जीवने इच्छामात्रम्; "एति जीवन्तमानन्दो नरं वर्षशतादपि" इति न्यायेनेदानीं तदलाभेऽपि कालान्तरे तस्य योग्यतावह-सत्ताया अत्यन्तावश्यकत्वात्, तत्रोत्कटेच्छेति द्योतनार्थं 'स्वसत्तायै स्पृहा' इतीप्सि-तमात्रबोधकचतुर्थ्यप्रयोगेन ईप्सिततमरूपकर्मणः अधिकारणविवक्षाहेतुकसप्तमिप्रयोगः। 'सदातनस्वभावमनुसन्धत्स्वे' ति विवक्षितम्। अनेन 'औपाधिकत्वानुमानं कालात्ययापादिष्टम्' इति हृदयम्। (इत्यादिषु) इत्यादिपदेन "दासभूताः स्वतस्सर्वे ह्यात्मानः परमात्मनः।अतोऽहमपि ते दास इति मत्वा नमाम्यहम्" इत्यादिकं विवक्षितम्।'स्वभावम्' 'दासभूताः स्वतः' इत्यादिलब्धम्-(स्वाभाविकत्वे-)ति।दासत्वस्योपाधिकत्वे अभूततद्भाववाची च्विप्रत्ययः प्रयुज्येत, अतोऽभूततद्भावो नास्तीति अवगमात् स्वाभाविकत्वसिद्धिरिति भावः। अत एवोक्तं निगमान्तदेशिकैश्शतदूषण्यां"आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर" "दासभूताः स्वतस्सर्वे ह्यात्मानः परमात्मनः" इत्यादिभिः स्वाभाविकं भगवद्दास्यमभिधीयते। 'स्वभावं'। 'स्वतः' इति कण्ठोक्तितः। 'दासभूताः' इति च्विप्रत्ययमन्तरेण प्रयोगाच्च। तत्रैवादरातिशयाद्धि 'स्वतः' इत्यप्यनूद्यते। 'दासभूताः' इति निरुपाधिकनिर्देशेनैव स्वतस्त्वसिद्धेः" इति। (शेषत्वमेवे)ति—भगवद्विषयशेषवृत्तिरेवेत्यर्थः। (आत्मनः)—जीवस्येत्यर्थः। एकवचनं जात्यभिप्रायम्, त्रिविधात्मवर्गपरम्। (स्वरूपम्)—स्वम्—आत्मीयम्, रूपम्-आकारः, यावदाश्रयभावीति यावत्।

(शेषत्वमेवे)त्यवधारणेन "दास्यं हि अन्तरङ्गनिरूपकम्" इत्यनुगृहीतरीत्या ज्ञानानन्दादीनां बहिरङ्गत्वेनाप्राधान्यम्, शेषत्वस्यान्तरङ्गनिरूपकत्वेन प्राधान्यंच विवक्षितम्।

अत्र केचिन्मन्यन्ते—न तावच्छेषत्वस्य स्वरूपनिरूपकत्वमुपपद्यते, "ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः" इत्यादिषु तस्य ज्ञानानन्दनिरूपितस्वरूपविशेषणतया पश्चादभिधानात्। युज्यते च ज्ञानत्वादीनामेवात्मस्वरूपान्तरङ्गनिरूपकत्वम्, न शेषत्वस्य। आन्तरतमपर्यन्तव्यावर्तकत्वं ह्यन्तरङ्गनिरूपकत्वम्। चित्तत्त्वं प्रत्यचित्त्वं ह्यान्तरतमम्। उभयोरवरतत्वान्तर्गतत्वात्। न तु ईश्वरतत्त्वम्। तस्माद्बहिरङ्गेश्वरतत्त्वव्यावर्तकादान्तरतमान्तरङ्गभूताचित्तत्त्वव्यावर्तकं ज्ञानत्वानन्दत्वादिकमेव शेषत्वापेक्षयापि स्वस्वरूपान्तरङ्ग निरूपकमिति। शेषत्वस्य निरूपितस्वरूपाविशेषणत्वमात्रमेवे—ति।

तदसत्। "ज्ञानानन्दमयस्त्वात्मा" इत्यादिवचने "शेषो हि" इति प्रमाणान्तरप्रसिद्धतया शेषत्वमनूद्य तद्विशिष्ट एव ज्ञानानन्दमयत्वविधानेन तद्वचनोदाहरणस्य विवक्षितविपारीतत्वात्। शेषत्वस्य सुप्रसिद्धत्वं तु "आत्मा ज्ञानमयोऽमलः" इत्यादिस्मृतेः ज्ञानैकाकारता प्रतिपन्ना, "पतिं विश्वस्य" इत्यादिश्रुतिगणैः परमात्मशेषतैकाकारता च प्रतिपादिता" इति श्रीवेदार्थसंग्रहे प्रदर्शितम्।

यदपि ज्ञानत्वादीनामचित्तत्वव्यावर्तकतयान्तरङ्गनिरूपकत्वोपपादनम्, तदप्यनुपपन्नमेव। ज्ञानत्वानन्दत्वादीनां धर्मभूतज्ञानसाधारणत्वेन तदयोगात्। न चाणुत्वविशिष्टस्य तस्य तथात्वाभ्युपगमान्नदोष इति वाच्यम्; तथासति तस्याहंबुद्ध्यविषयत्वेन निरूपकत्वासम्भवात्। किंचान्तरतमपर्यन्तसर्वव्यावर्तकत्वस्यैवान्तरङ्गनिरूपकशब्दार्थत्वेन यत्किञ्चिद्व्यावर्तकत्वस्य तदयोगाच्च। न हि ज्ञानानन्दत्वादिकमणुत्वविशेषितमपि सर्वव्यावर्तकं भवितुमर्हति। ईश्वरसाधारणत्वात्। श्रूयते हि ईश्वरस्याप्यणुत्वं "अणोरणीयान्" इत्यादिषु। न च विभुत्वश्रुतिबाधात् इयं श्रुतिस्सङ्कोचनीया, उभयोः श्रुतित्वाविशेषात्, "श्रुतेस्तु शब्दमूलत्वात्" इति शब्दैकसमधिगम्ये ब्रह्मणि तयोरविरुद्धत्वाच्च। अविरुद्धत्वमुपरिष्टाद्वक्ष्यते। न चैवमपि विभुत्वाभावादिविशेषितं ज्ञानत्वादिकमेव चेतनस्वरूपनिरूपकमस्त्विति वाच्यम्; तस्याप्यहम्बुद्ध्यविषयत्वेन तदसम्भवात्। तस्मान्न ज्ञानत्वादीनां स्वरूपेण वा किंचिद्विशेषितत्वेन वा स्वस्वरूपान्तरङ्गनिरूपकत्वम्।

अथ यदपि तैरचित्त्वस्य चित्त्वान्तरतमत्वोपपादनम्, तदपि न साधीयः। ज्ञानत्वानन्दत्वज्ञातृत्वानन्दित्वमत्यक्त्वात्मत्वकर्तृत्वभोक्तृत्वनित्यत्वात्मवाचिसर्वशब्द-वाच्यत्वात्मगोचरयथावस्थितसर्वज्ञानविषयत्वादिभिरीश्वरतत्वस्यैव चेतनतत्त्वान्तरतमत्वात् ॥अचित्त्वस्य-अचेतनत्वजडत्वानित्यत्वहेयत्वत्रिगुणत्वादिना बहुधा चित्त्व-विरुद्धाकारतया तस्यावरतत्वत्वमात्रेण तस्य चित्त्वान्तरतमत्वायोगाच्च। तस्मादान्तरतमभूतेश्वरव्यावर्तकमहंप्रत्ययविषयभूतं शेषत्वमेवात्मस्वरूपान्तरङ्गनिरूपकम्, न ज्ञानत्वादिकमिति सिद्धम्।

अत्र केचिदन्ये वदन्ति—न ज्ञानमात्रमात्मस्वरूपनिरूपकम्। ब्रह्मसाधारणत्वात्। नापि शेषत्वमात्रम्। अचेतनसाधारणत्वात्। किन्तु शेषत्वविशिष्टं ज्ञानमेव। एवमपि ज्ञानमेवात्र प्रधानम्। "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति ज्ञानस्य सत्ताहेतुत्वश्रवणादि—ति।

तदप्यसत्। शेषत्वमात्रस्यापि चेतनासाधरण्यस्य पूर्वमेव प्रदर्शितत्वात्। धर्मभूतज्ञानस्य 'जानाम्यहम्' इति ज्ञानत्वेन भासमानतयैव निरूपकत्वेन स्वरूपनिरूपकत्वासम्भवाच्च। "स्वतो भासमानतया निरूपकं हि स्वरूपनिरूपकम्" इत्युक्तम्। न च धर्मिभूतज्ञानमेवात्र विवक्षितमिति वाच्यम्। तस्य "अस्ति ब्रह्मेति चेद्वेद" इति श्रुत्यर्थत्वायोगात्, स्वस्यैव स्वानिरूपकत्वासम्भवाच्च।किंच "अस्ति ब्रह्मेति चेद्वेद" इत्यादिश्रुत्या चित्स्वरूपसत्ताया वेदनरूपशेषवृत्तिप्रयोज्यत्वस्यैव प्रतिपादिततया तेन ज्ञानापेक्षया शेषत्वस्यैव प्राधान्यसिध्या तत्प्रमाणोदाहरणस्य विवक्षितविपरीतत्वाच्च। सिद्धं वेदनध्यानोपासनभजनादिवचसां छागपशुन्यायेनाभिन्नार्थत्वम्। "सेवा भक्तिरुपास्तिः" इति निघण्टुपाटाच्च। भक्तिशब्दस्य च शेषवृत्तिपरत्वं "भज इत्येषाधातुर्वै सेवायां परिकीर्तितः। तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी" इति वचनेन "इयमेव भक्तिरूपा सेवा" "भजते-सेवते" इत्यादि-भाष्यकारसूक्त्या च सुव्यक्तम्। अत एवोच्यते "मां च योऽव्यभिचारेण भक्तियोगेन सेवते" इति। तस्मात् "अस्ति ब्रह्मेति चेद्वेद" इत्यत्रापि ब्रह्मवेदनरूपशेषवृ-

त्तेरेवोक्ततया शेषवृत्त्यैव सत्तालाभइत्युच्यत इति निरवद्यम् ।

ननु आत्मनो नित्यत्वेन कथं सत्तायाश्शेषवृत्तिप्रयुक्तमिति चेन्न । अत्र सत्ताशब्देन कालमानसम्बन्धार्हत्वरूपसत्ताया अविवक्षितत्वात् । किन्तु स्वरूपानुरूपवृत्तिमत्त्वरूपा सत्ता । दृश्यते हि लोके स्वरूपानुरूपाचारशालिषु ब्राह्मणादिषु तद्रहितेषु च सदसच्छब्दप्रयोगः । तथा च ज्ञानादिभिर्भगवदतिशयाधानार्हत्वं चेतनासाधारणं स्वरूपम् । यथा पुष्पस्य स्वगन्धादिभिश्शेष्यतिशयाधानार्हत्वम् । तथाविधस्वरूपानुरूपा वृत्तिश्च प्रीतिरूपापन्नज्ञानेन "तद्विषयप्रीतिचैतन्यफलम्" इत्युक्तेन भगवदतिशयाधानमेव । तस्मात्तथाविधशेषवृत्तिमतां तादृशसत्तावत्त्वमन्येषां तदभावश्च "असन्नेव" इत्यादिनोच्यत इति विरोधाभावात् । सिद्धं ज्ञानापेक्षया शेषत्वस्य प्राधान्यमिति ।

अपि च शेषत्वस्यैव सम्बन्धविधया सकलशब्दवाच्यत्वात्, सकलबुद्धिविषयत्वाच्च सकलप्रमाणगम्यत्वात् सकलसारसंग्रहभूतेनाकारेण ज्ञानाद्यनादरेण प्रकृतया प्रसयेन च द्वेधाभिहिततया तस्यैव सारतमसिद्धेश्च ज्ञानाद्यपेक्षयास्य प्राधान्यासिद्धिः दुर्वारैव । इदंच सर्ववेदबीजतया प्रबलप्रमाणभूते प्रणवे लुप्तचतुर्थ्या प्रथमं शेषत्वेनात्मस्वरूपं निरूप्य पश्चात् मकारेण ज्ञानत्वाद्यभिधानात् ज्ञानत्वादीनां शेषत्वापेक्षया बहिरङ्गत्वसिध्द्या तेनापि तत्प्राधान्यसिद्धिर्दुर्वारैव । अदश्च "योऽहमस्मि ससन्यजे" "वपुरादिषु योऽपि कोऽपिवा गुणतोऽसानि यथातथाविधः । तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः" इत्यादिष्वात्मनो देहादिव्यावर्तकज्ञानत्वाद्यनादरेण शेषत्वसंवादात्मकात्मसमर्पणस्यैवात्यन्तमादृततया तेनापि तस्य तदपेक्षया प्राधान्यसिद्धिर्दुर्वारैव । समर्पणस्य शेषत्वसंवादात्मकता तु "ब्रह्मणे त्वा महस ओमित्यात्मानं युंजीत" इति समर्पणस्य प्रणवकरणकत्वश्रवणादेव सिद्धम् । अनुष्ठीयमानार्थप्रकाशको हि करणमन्त्रः । उच्यते च "अविवादस्तु तस्यैव पादयोरात्मनोऽर्पणम्" इत्यादिषु तस्य तथात्वम् । गम्यते च "सन्धां च यां सन्दधे ब्रह्मणैषः" "तेन चेदविवादस्ते" इत्यादिषु समर्पणस्य शेषत्वसंवादारूपता सामान्यरूपेण । अनुगृहीतं-

च द्राविडसाम्नि प्रथमशतकद्वितीयदशकादिमगाथायां समर्पणस्य संवादात्मकता श्रीपरांकुशसूरिभिः। तत्र कुरुकेशाचार्यैरपि तथाव्याख्यातम्।

एतंच "आत्मना न मे प्रयोजनम्" "तव शेषत्वविभवात् वहिर्भूतं नाथ क्षणमपि सहे" इत्यादिभिः ज्ञानानन्दमयस्यापि आत्मनः शेषत्वबहिर्भावे सति निरतिशयदुःखरूपतया त्याज्यत्वस्यानुगृहीततया तद्बलेनापि तत्सिद्धिर्दुर्वारैव। अन्यच्च शेषत्वाविषयकज्ञानस्य "योऽन्यथासन्तमात्मानम्" इत्याद्युक्तान्यथाज्ञानरूपतया तस्य च समस्तमहापातकसमवायात्मकत्वेनात्यन्ताशुद्धिरूपत्वात्. शेषत्वविषयकज्ञानस्य "क्षेत्रज्ञस्येश्वरज्ञानात् विशुद्धिः परमा मता" "कृष्णानुस्मरणं परम्" इत्याद्युक्तरीत्या परमशुद्धिहेतुत्वाच्च तद्बलेनापि तत्सिद्धिर्दुर्वारैव। अनुगृहीतंच "क्षेत्रज्ञस्येश्वरज्ञानात्" इत्यस्य शेषत्वज्ञानपरत्वं श्रीरहस्यत्रयसारे मूलमन्त्राधिकारे "क्षेत्रज्ञस्येश्वरज्ञानात् विशुद्धिःपरमा मता" एन्गिरविदु शेषित्वज्ञानमात्रपरमानपोदु" इति।

इतरच्च "स्वोज्जीवनेच्छा यदि ते" "आत्मदास्यम्" "त्र्यक्षरं ब्रह्मणःपदम्" "न ममेति च शाश्वतम्" इत्यादिभिश्शेषत्वज्ञानस्य सत्ताहेतुत्वोज्जीवनहेतुत्वादिप्रतिपादनात् शेषत्वाविषयकज्ञानत्वस्य चाहङ्कारममकारनियततया तादृशममकारगर्भज्ञानस्य "द्व्यक्षरस्तु भवेन्मृत्युः····ममेति द्व्यक्षरो मृत्युः" इत्यादिभिरात्मविनाशहेतुत्वावगमाच्च तद्बलेनापि तत्सिद्धिर्दुर्वारैव। परंच आत्मनो ज्ञानत्वादीनां वन्धमोक्षोभयसाधरणत्वात्, शेषत्वस्वरूपस्य च भगवदतिशयाधानरूपपरमपुरुषार्थासाधारणयोग्यतारूपत्वाच्च तद्बलेनापि तत्सिद्धिर्दुर्वारैव। आत्मनां भगवच्छेषत्वं हि राजपुत्रस्य राज्यप्राप्तिवत् परमपुरुषपरिचरणपदाभिषेकयोग्यतारूपम्। अत एवानुगृहीतं वेदान्ताचार्यैः "प्राप्तिर्दायधनक्रमादिह मम प्राप्ता स्वतस्सूरिवत्" इति। अपरंच ज्ञानादीनां कैवल्यभोग्यताज्ञानादिविपरीतज्ञानरुचिवासनादिस्वावस्थाविशेषैः निर्हेतुककृपामूलकभगवत्कर्तृकस्वाश्रयकर्मकरक्षणप्रवृत्तिप्रतिषेधापादकत्वात्, शेषत्वस्य च तथाविधप्रतिबन्धदशायामपि तद्विषये भगवत्कर्तृकरक्षणकृषिपरम्परापादकत्वाच्च तद्बलेनापि तत्सिद्धिः दुर्वारैव।

अथ च सर्ववेदबीजतया प्रबलप्रमाणभूते प्रणवे प्रथममकारेण भगवतो निर्हेतुकरक्षकत्वमभिधाय तद्रक्षणकर्मतया मकारेण सर्वं चेतनजातमभिधाय तादृशरक्षणोपपत्तितया लुप्तचतुर्थ्या शेषत्वाभिधानात् ज्ञातृत्वकर्तृत्वादिबलायातमहापराधभूयिष्ठचेतनविषयेऽपि शेषत्वस्यैव रक्षणहेतुतया प्रबलप्रमाणसिद्धत्वात् तद्बलेनापि तत्सिद्धिर्दुर्वारैव ।

न च शेषत्वस्य रक्षणहेतुत्वं न सम्भवति, "त्राणे स्वामित्वमौचित्यं न्यासाद्याः सहकारिणः । प्रधानहेतुस्वातन्त्र्यं विशिष्टकरुणा विभोः" इति निगमान्तगुरुभिस्तस्यौचित्यमात्रत्वप्रतिपादनादिति शक्यम्; तद्वचनस्य स्वरूपविरुद्धसाधनान्तरसाध्यफलान्तरार्थिमात्रविषयत्वात् । लोके सम्बन्धमात्रेणैव रक्षणदर्शनात् । अनुगृहीतं च सम्बन्धमात्रेण रक्षणं निगमान्तदेशिकैः सिद्धोपायशोधनाधिकारे "अचिद्द्रव्यङ्गलुं पशुमृगपक्ष्यादिहलुं स्तनंधयरुं रक्षापेक्षारहितङ्गलनाल्पोले सम्बन्धज्ञानरहितङ्गलुमायिरुक्किरवचै रक्षिक्ककाणानिन्नोमिरे" इति । स्मर्यते च सम्बन्धस्यैव रक्षणहेतुत्वं "ये नाथवन्तो हि भवन्ति लोके ते नात्मना कर्म समारभन्ते । तेषां तु कार्येषु भवन्ति नाथाः शैब्यादयो राम यथा ययातेः" इति । न च सम्बन्धेसत्यपि प्रतिषेधदशायां रक्षणासम्भवेन तस्य मकारोक्तज्ञानजन्याप्रतिषेधसापेक्षतया तस्य दौर्बल्यं शंक्यम्; "रात्रौ मठभोजयितार इव" इत्युक्तरात्रिसत्रभोजनन्यायेन सम्बन्धमात्रे प्रतिषेधदशायामपि रक्षणोपपत्तेः । अनुगृहीतमिदमपि तैरेव "विलक्कुहिरपश्वादिहलैयुं पुत्रादिहलैयुं रक्षिक्कक्काणैयालि" ति ।

न चैवमपि भगवतो वैषम्यनैर्घृण्यपरिहाराय तत्कर्तृकरक्षणे कर्माद्युपाधिकत्वकल्पनस्यावश्यकतया तस्य च ज्ञानकार्यत्वावश्यंभावेन रक्षणजननांशे सम्बन्धस्य ज्ञानसापेक्षत्वलक्षणं दौर्बल्यं दुरपह्नवमेवेति वाच्यम्; अकारेण निरुपाधिकरक्षणप्रतीत्या लुप्तचतुर्थ्या तदुपपत्तिरूपसम्बन्धप्रतीत्या च भगवतस्सम्बन्धमात्रेण निरुपाधिकसर्वविषयसर्वप्रकाररक्षणस्य सिद्धतया तत्सोपाधिकत्वकल्पकन्यायानां तद्विरुद्धत्वेन कुतर्कत्वात् । भगवतः प्रथमप्रवृत्त्यनिवारणलक्षणस्वातन्त्र्यस्येव रक्षावैषम्यलक्षणस्वा-

तन्त्र्यस्यापि आश्रयासिद्धिधर्मग्राहकमानबाधाभ्यां दोषरूपतायार्दुर्निरूपत्वाच्च । रक्षायां भगवतः कर्मसापेक्षकल्पनेऽपि तस्य सापेक्षत्वस्यापि भगवत्सङ्कल्पकल्पितत्वस्यावश्यकतया वैषम्यनैर्घृण्यतादवस्थ्याच्च । अभ्युपगता च निगमान्तगुरुभिरेवकारेण निरुपाधिकरक्षणप्रतीतिः । यथाहुर्मूलमन्त्राधिकारे अकारार्थयोजनायां" इदु हेतुनिर्देशं पण्णमैयाले निरुपाधिकमायुत्तोम्निनालुम्" इति । अतो ज्ञानादेर्भगवत्कर्तृकरक्षणप्रतिबन्धकमहापराधमूलत्वात् तद्विषयेऽपि शेषत्वस्य भगवत्कर्तृकरक्षणहेतुत्वाच्च शेषत्वप्राधान्यासिद्धिर्दुर्वारैव ।

अथ किंच "निश्चिते परशेषत्वे शिष्टं संपरिपूर्यते । अनिश्चिते पुनस्तस्मिन् सर्वमन्यदसत्समम्" इति शेषत्वस्यैव ज्ञायमानस्य सर्वसत्ताप्रयोजकत्वोक्तेः, शेषत्वज्ञानाभावे ज्ञानानन्दादीनां सतामप्यसत्कल्पतोक्तेश्च ज्ञानानन्दाद्यपेक्षया शेषत्वप्राबल्यस्य वक्तव्यतया तदवेलनापि तत्सिद्धिर्दुर्वारैव । न च ज्ञानाभावे शेषत्वस्याप्यसत्कल्पतैवेति तुल्यत्वं भ्रमितव्यम् । ज्ञानशून्यानामपि स्रक्चन्दनादीनामसंकोचितप्रयोजनपर्यवसानात्। चेतनानां चैतन्यबलादेव हि स्वयत्नस्वभोगवासनादिचक्रपरीवाहपरंपरामुखेन शेषत्वफलोपधानस्य महान् प्रत्यूहो जातः ।

अथापि "येन येन धाता गच्छति तेन तेन सह गच्छति""तद्यथा तरुणवत्सा वत्सं वत्सो वा मातरम् छाया वा सत्त्वमनुगच्छेत्" इत्याद्युक्तभगवच्छेषवृत्तेरेव स्वत इष्टत्वेन परमप्रयोजनत्वात् ज्ञानानन्दादिस्वरूपाविर्भावनां च तदर्थतयैवेष्टत्वेनापरमप्रयोजनत्वाच्च तेनापि तच्छेषत्वप्राबल्यसिद्धिर्दुर्वारैव । भगवच्छेषवृत्तेरेव परमप्रयोजनत्वं च जगद्व्यापारवर्जाधिकरणे "दर्शयतश्चैवम्" इत्यादिसूत्रभाष्यश्रुतप्रकाशिकायामेव प्रदर्शितम्—"सर्वेषां स्वात्माभिमानानुगुणा भोग्यव्यवस्था तद्विपर्ययव्यवस्था च । तथा पुरुषपश्वादिषु दृश्यते । तस्मादात्मन आविर्भूतयथावस्थितस्वरूपस्य शेषत्वमेव स्वाभाविकं रूपमपरोक्षयतः स्वशेषिपरमपुरुषपरिचरणमेव प्रियतमं स्यात्"इति।

अथेदंच-आत्मनो ज्ञानत्वं नाम-प्रकाशात्मकत्वमेव। तच्च प्रकाशत्वादेव कस्यचिदेव भवेदिति । तत्प्रकाश्यवस्तुना केनचिद्भवितव्यम् । तच्च वस्तु ज्ञानमात्रस्य विशिष्टविषयिकत्वनियमानुरोधेन यत्किञ्चिद्धर्मविशिष्टमेवेत्युररीकरणीयम् । स च

धर्मःप्रथमतो वस्तुप्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते"इत्युक्तरीत्या प्रत्यक्ष-मात्रस्यासाधारणाकारविषयकत्वनियमानुरोधेनासाधारणधर्म एवेत्याश्रयणी-यम् । तथा च दासत्वस्यैव जीवासाधारणाकारात्मकत्वात्, जीवात्मनो ज्ञानत्वमपि दासत्वविषयकत्वमेवेति, तस्यापि दास्यनिरूपितत्वात्, तेनापि ज्ञानत्वाद्यपेक्षया शेषत्वप्राबल्यसिद्धिर्दुर्वारैव ।

अथादश्च "इच्छात एव तव विश्वपदार्थसत्ता" इत्याद्यनुगृहीतरीत्या पदार्थसामान्यस्य भगवदिच्छायत्तस्वरूपत्वं तावत्सम्प्रतिपन्नम्। भगवदिच्छा च "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" "सर्वस्स्वार्थं समीहते" इति न्या-यानुसारेण स्वार्थताज्ञानाधीनेत्यवश्यं वक्तव्यम् । तथा च तस्य भगवदर्थताया-श्शेषत्वरूपत्वात्, शेषत्वस्य समस्तपदार्थसत्ताप्रयोजकभगवदिच्छाहेतुज्ञान-विषयत्वेन सकलसत्ताप्रयोजकत्वात्, ज्ञानानन्दादिसत्ताया अपि प्रयोजकत्वेन तेनापि ज्ञानत्वाद्यपेक्षया शेषत्वप्राबल्यसिद्धिर्दुर्वारैव । अत एवानुगृहीतं— "मणत्तैयुम्, ओलियैयुङ्कोण्डु पुष्पत्तैयुं रत्नत्तैयुं विरुम्बुमापोले 'शेषम्' एन्त्रु आत्मावै आदरिक्किरदु" इति ।

अथैतच्च—"न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय" इत्यारभ्य "न वा अरे सर्वस्य कामाय सर्वं प्रियम्भवति, आत्मनस्तु कामाय" इत्यन्तेन सर्वपदार्थानामानन्दरूपतया भगवदातिशयाधानार्थताया बृ-हदारण्यके श्रुतत्वेनात्मात्मीयानन्दत्वस्यापि तदर्थत्वसिद्ध्या तद्बलेनापि शेषत्व-प्राधान्यसिद्धिर्दुर्वारैव । एतदुक्तम्भवति-आत्मात्मीयोपादेयतायास्तत्तत्प्रियत्व-प्रयुक्तत्वात्, तत्तत्प्रियत्वस्यच परमात्मातिशयार्थताप्रयुक्तत्वाच्च, सर्वेषामुपा-देयतायाः परमपुरुषशेषताप्रयोजकशेषत्वस्य प्राबल्यसिद्धि दुर्वारैव—इति । व्याख्याता चेयं श्रुतिर्वाक्यान्वयाधिकरणभाष्ये —"न वा अरे पत्युः कामाय पतिःप्रियो भवति--न हि पतिजायापुत्रवित्तादयो मत्प्रयोजनाय'अहमस्य प्रिय-स्स्यामि'ति स्वसङ्कल्पात् प्रिया भवन्ति; अपितु, आत्मनः कामाय-परमात्म-नस्स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्तय इत्यर्थः।परमात्मा हि कर्मभिराराधित-स्तत्तत्कर्मानुगुणं प्रतिनियतदेशकालस्वरूपपरिमाणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति । "एष ह्येवानन्दयाति" इति श्रुतेः । न तु तत्तद्वस्तुस्वरूपेण प्रियमप्रियं वा । यथोक्तं"तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय

यतः प्रसादाय च जायते। तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्" इति"इत्यादिना। न चैतेषां वाक्यानां कर्मादिजन्यफलमात्रविषयतया सङ्कोच श्शङ्क्यः;"सर्वस्य कामाय सर्वं प्रियं भवति"इति सर्वशब्दस्वारस्यभङ्गात्। नित्यवस्तूनामपि भोगलीलारूपस्वकामनिर्वर्तनायैव भगवता स्वेच्छयैव कल्पितत्वोपपत्तेश्च। अत एवानुगृहीतं श्रीवेदार्थसङ्ग्रहान्ते "भगवद्व्यतिरिक्तस्य कृत्स्नस्य वस्तुनस्स्वरूपेण सुखत्वाभावः"इत्यादिना। जगद्व्यापारवर्जाधिकरणे "दर्शयतश्चैवम्" इत्यादिसूत्रभाष्ये च—"तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्यापि आनन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः। "एष ह्येवानन्दयाति" "माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते॥ ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च। शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" इति। यद्यप्यपहतपाप्मत्वादिस्सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनस्स्वाभाविक एवाविर्भूतः,तथापि तस्य तथाविधत्वमेव परमपुरुषायत्तम्। तस्य नित्यस्थितिश्च तदायत्ता। परमपुरुषस्यैतन्नित्यतया नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः। एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथावस्थानमस्तीति शास्त्रादवगम्यते" इति नित्यानामपि पदार्थानां भगवद्भोगलीलोपकरणान्तर्गततया भोगादिरूपतत्कामनिर्वर्तनाय तदिच्छाक्लृप्तत्वं सुस्पष्टमन्वग्राहि।

अथान्यच्च—"तदनुप्रविश्य सच्च त्यच्चाभवत्" "एष सेतुर्विधरणः, एषां लोकानामसम्भेदाय" इत्यादिभिस्समस्तवस्तुसत्तायाः परमपुरुषसम्बन्धाधीनत्वस्य सिद्धतया तस्य च सम्बन्धस्य शरीरशरीरितया विशेषणविशेष्यभावरूपशेषशेषिभावात्मकत्वेनात्मात्मीयसत्ताया अपि शेषत्वाधीनत्वासिद्ध्या, तद्बलेनापि ज्ञानत्वाद्यपेक्षया शेषत्वप्राधान्यसिद्धिर्दुर्वारैव।

अथोत्तरच्च-"दासभूतास्स्वतस्सर्वे" इत्यादिना जीवात्मनां सर्वेषां शेषत्वव्यतिरिक्तस्वरूपनिरूपकशून्यत्वस्योक्ततया, तद्बलेनापि तत्सिद्धिर्दुर्वारैव। अस्मिन् श्लोके-जीवात्मनां बहुप्रमाणोपपत्तिसिद्धं दासत्वरूपमन्तरङ्गनिरूपकमुत्तरार्धनिषेध्यान्यलक्षणप्रतियोगितयानूद्यते पूर्वार्धेन। उत्तरार्धेन च तादृशदासत्वान्यान्तरङ्गनिरूपकात्मकलक्षणसामान्यं निषिध्यते। तत्र "दासभूताः"

इत्यनेन दास्येन लब्धसत्ताकत्वोक्त्या शेषत्वस्य सत्ताप्रयोजकतया प्राधान्यसिद्धिर्ज्ञापिता । "स्वतः"इत्यनेन स्वाभाविकत्वोक्त्या तस्य केवलपरातिशयाधानात्मकपरमपुरुषार्थासाधारणयोग्यतारूपत्वेन प्राधान्यसिद्धिश्च ज्ञापिता । " सर्वे " इत्यनेन नित्यसूर्यग्रगण्यस्य शेषस्य शेषत्वैकनिरूपणीयत्ववत् , तत्तुल्यस्वरूपाणां सर्वेषामपि तदेकनिरूपणीयमेवेति तत्प्राधान्यसिद्धिस्सूचिता। "हि" इत्यनेन "पतिं विश्वस्य" इत्यादिश्रुतिशतप्रसिद्धतया तत्सिद्धिः प्रदर्शिता । " आत्मनः " इत्यनेन नामरूपव्याकरणार्थभगवदनुप्रवेशद्वारतया सकलशब्दवाच्यत्वेन तत्सिद्धिस्सूचिता । "परमात्मनः"इत्यनेन जीवपरयोश्शरीरशरीरिभावज्ञापनेन शरीराणाञ्च शरीरत्वैकनिरूपणीयत्वेन जीवानाम्परमात्मशेषतैकनिरूपणीयत्वमेवोचितमित्यपि सूचितम् । अथोत्तरार्धे सर्वेषां चेतनानां सर्वास्वपि दशासु शेषत्वैकनिरूपणीयत्वात् ,ज्ञानत्वादीनां निरूपितस्वरूपाविशेषणमात्रत्वेन शेषत्वान्यं निरूपकं निषिध्यते । इत्थं हि तस्य श्लोकस्य व्याख्यानमस्मत्परमाचार्यानुगृहीतम्-"दासाश्च ते भूताश्च दासभूताः। दास्येन लब्धसत्ताका इत्यर्थः। दास्यं नाम-शेषशेष्युभयेच्छाघटितशेषत्वमेव । एतेन शेषत्वस्य सकलात्मसत्ताहेतुत्वोक्त्या आत्मसत्ताधीनसत्ताकज्ञानत्वाद्यपेक्षया शेषत्वस्य सत्ताप्रयोजकतया प्राधान्यसिद्धिस्सूच्यते । अथ"स्वतः"इत्यत्र स्वशब्दः "आत्मानः" इत्युक्तात्मस्वरूपपरः । स्वरूपत इत्यर्थः । तेन दास्यस्यागन्तुकत्वं व्यावर्त्यते । एतेन दासत्वस्य स्वरूपत्वोक्त्या तत्फलोपधानरूपपरमपुरुषकैङ्कर्यस्यैव सकलात्मनां स्वरूपानुरूपपरमपुरुषार्थत्वलाभेन ज्ञानत्वादीनान्तदर्थतयैव पुरुषार्थत्वमिति सिद्ध्या ज्ञानत्वाद्यपेक्षया शेषत्वस्य परमप्रयोजनप्राप्तिरूपतया प्राधान्यसिद्धि स्सूच्यते । अथ "सर्वे" इति सर्वशब्दः त्रिविधात्मवर्गपरः । तेन कस्यचिदात्मनो दास्यानधीनसत्ताकत्वं व्यावर्त्यते । एतेन बद्धानाम्मुक्तानामपि अहृतसहजदास्यनित्यवर्गतुल्यतया भगवद्दास्यलब्धसत्ताकत्वोक्त्या यथा नित्यसूरिपरिबृढस्य सर्वप्रकारभगवद्दास्येन लब्धसत्ताकस्यानन्तस्य "यथोचितं शेष इतीरिते जनैः" इत्यनुगृहीतरीत्या सर्वजनप्रसिद्धतया शेषत्वैकनिरूपणीयत्वम् , तथा सर्वेषामपि शेषत्वैकनिरूपणीयमेव स्वरूपमिति शेषत्वप्राधान्यसिद्धिस्सूच्यते । अथ "ही"त्यनेन प्रणवादिप्रबलप्रमाणप्रसिद्धिरुच्यते । तेन शेषत्वस्य सत्ताहेतुतया बहुप्रमाणप्रसिद्धत्वेन तत्प्राधान्यसिद्धिस्सूच्यते। अथ"आत्मनः" इत्यात्मशब्देन परमात्मशब्दसमभिव्याहृतेनाचेतनवर्गम्प्रति चेतनवर्गस्य द्वारशेषितया व्यापकत्वमुच्यते । तेन द्वारशेषिणां परमशेषिशेषतैकस्वरूपत्वेन

तद्गतातिशयानां सर्वेषां परातिशयाधानार्थत्वलाभेनात्मगतज्ञानत्वाद्यतिशयानां भगवच्छेषत्वार्थत्वसिद्धया शेषत्वप्राधान्यसिद्धिस्सूच्यते। अथ "परमात्मनः" इत्यनेन स्वेतरसकलात्मनामात्मतया परमात्मत्वमुच्यते। तेन सर्वेषामात्मनाम्भगवदनन्यार्हशेषतया शरीरत्वलाभेन शरीराणाञ्च शरीरिसम्बन्धाधीनसत्ताकत्वस्य सर्वसम्प्रतिपन्नतया जीवात्मनां सर्वेषामपि भगवच्छरीरभूतानां शरीरिभूतपरमात्मसम्बन्धरूपदासत्वप्रयुक्तसत्ताकत्वमुपपद्यत एवेति "दासभूताः" इत्यस्योपपत्तिस्सूच्यते। तथा चेत्थं पूर्वार्धेन सर्वेषामात्मनां शेषत्वैकनिरूपणीयत्वस्य बहूपपत्तिसिद्धताज्ञापनेन सर्वेषामात्मनां शेषत्वमेवान्तरङ्गनिरूपकं लक्षणमित्युक्तम्भवति।

अथोत्तरार्धेन ज्ञानत्वादिना जीवात्मस्वरूपनिरूपणसम्भावनाशङ्का निवार्यते—नान्यथेत्यादिना। तत्र प्रथमं सामान्येन जीवात्मनां सर्वेषां दासत्वान्यप्रकारज्ञानत्वादिरूपं लक्षणं न भवतीत्युच्यते - नान्यथा लक्षणं तेषामिति। तेषां - दास्यलब्धसत्ताकतया, दास्यैकस्वरूपतया, नित्यवर्गतुल्यस्वरूपतया, परमपुरुषशेषतैकस्वरूपत्वेन बहुप्रमाणप्रसिद्धतया, अचेतनवर्गम्प्रति द्वारशेषित्वेन परमपुरुषशेषतैकवेषतया, परमात्मशरीरतया च शेषत्वैकनिरूपणीयानां सर्वेषामात्मनामित्यर्थः। अन्यथालक्षणं न-दासत्वान्यप्रकारं ज्ञानत्वानन्दत्वज्ञातृत्वानन्दित्वकर्तृत्वभोक्तृत्वादिरूपं लक्षणं नास्तीत्यर्थः। अथ सर्वेषामात्मनामेवं दास्यैकनिरूपणीयस्वरूपत्वेऽपि - बद्धदशायां, कैवल्यप्रभृतिस्वार्थानुभवकैङ्कर्यपर्यन्तमोक्षदशायाञ्च, केवलपरातिशयाधानरूपदास्याभावेन दास्यरूपलक्षणाभावात्, तत्र ज्ञानत्वादिकमेव लक्षणमित्यगत्या वक्तव्यमिति शङ्कायामाह — बन्धे मोक्षे तथैव चेति। बन्धे तथैव, मोक्षे चेत्यन्वयः। बन्धे-बन्धतुल्ये, मोक्षे चेत्यर्थः। तथा च बन्धदशायां बन्धतुल्यकैवल्यप्रभृतिस्वार्थकैङ्कर्यपर्यन्तमोक्षदशायाञ्च सर्वेषामात्मनां दासत्वान्यज्ञानत्वादिरूपं लक्षणं नास्तीत्युक्तम्भवति। अयम्भावः - बन्धदशायां कैवल्यादिमोक्षदशायाञ्चात्मनां दास्यफलोपधानाभावेऽपि परमात्मापृथक्सिद्धप्रकारतारूपशेषत्वस्य तदानीमपि सत्त्वेन तस्यैव दास्ययोग्यतारूपत्वेन दास्यशब्दार्थतया तेनैव तेषामपि निरूपणसम्भवात् न तद्दशायामपि आत्मनां ज्ञानत्वादिनिरूपणीयत्वम्" इति।

तथा चेत्थमनेन वचनेन पूर्वप्रदर्शितन्यायैश्च शेषत्वस्यैव जीवात्मान्तरङ्गनिरूपकतया प्राधान्यसिध्या, तदपेक्षया ज्ञानत्वादीनामप्रधानत्वेन सिद्धं, कैश्चि-

(५६) ननु कथं "शेषत्वमेव" इत्यवधारणम्, ज्ञानानन्दस्वरूपस्यात्मवस्तुनस्तदभावेऽपि स्वरूपसम्भवादित्यत आह शेषत्वाभावेति ।

मू॥ शेषत्वमिल्लादपोदु स्वरूपमिल्लै ॥ ५६ ॥

छा॥ शेषत्वाभावकाले स्वरूपं नास्ति ॥ ५६ ॥

(५७.) शेषत्वाभावकाले आत्मापहारस्वरूपस्वातन्त्र्यबुध्युत्पत्तेस्स्वरूपं नश्यतीत्यमुमर्थं दर्शयति--आत्मापहारेत्यादिवाक्यद्वयेन ।

---

दुक्तं तत्राश्वान्यमनुपपन्नमेवेति शेषत्वस्य स्वस्वरूपान्तरङ्गनिरूपकत्वं सुप्रतिष्ठितमिति सर्वं निरवद्यम् ॥ ५५ ॥

(५६) (शेषत्वाभावकाले) इति—शेषवृत्त्यत्यन्ताभावकाले इत्यर्थः (स्वरूपमिल्लै) इति भगवत्प्रियतमत्वप्रयुक्तं निरुपाधिकानिरतिशयपुरुषार्थरूपं स्वरूपसुखं नास्तीत्यर्थः । इत्थं शेषत्वस्वरूपयोर्व्यतिरेकव्याप्तेर्विवक्षितत्वादेव पूर्वसूत्रोक्तावधारणस्य "शेषत्वाभाववत् स्वरूपं न भवति"इति विवरणं न कृतम् । अत एवेदं सूत्रं व्यर्थप्रायमिति शङ्काया अपि नावकाशः ।

अस्मिन्सूत्रे 'शेषत्वाभावकाले स्वरूपं नास्ती'ति शेषत्वस्वरूपयोः कालिकीव्यतिरेकव्याप्तिरपि गर्भिता । तत्रायमभिप्रायः—"जन्मान्तरसहस्रेषु या बुद्धिर्भाविता नृणाम्। तामेव लभते जन्तुरुपदेशो निरर्थकः"इत्यादिवचनानुसारेण "पतिं विश्वस्य" इत्यादिस्फुटार्थकन्यायनिरपेक्षप्रमाणोपदेशशालिनामपि भगवच्छेषवृत्त्यभावः, अनादिदुर्वासनानिबन्धनस्वातन्त्र्यभ्रमप्रतिबन्धेन तद्ज्ञानाभावात् । तद्दशायां च निरतिशयनिरुपाधिकपुरुषार्थलक्षणं स्वरूपं भगवत्प्रियतमत्वप्रयुक्तं नास्तीत्यर्थः ॥५६॥

(५७) (शेषत्वाभावकाले) इति,इत्थमुक्तौ स्वातन्त्र्यबुद्धिप्रतिबन्धेन शेषवृत्त्यभावे, निरुक्तस्वरूपाभावः कुतः, यने शेषत्वमेव स्वरूपं

व्या॥ "तदेव भूतन्तदुभव्यमा इदम्" "तदेवाग्नि-स्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" इत्यादिष्वेवकारस्थाने उकारस्य प्रयोगदर्शनात्, स्थानप्रमाणेनोकारोऽवधारणार्थ एवार्थो यस्य तथोक्त इत्यर्थः ॥ ५८ ॥

---

कृत्वः उद्देश्यविधेयसमर्पकपदद्वयमध्ये विधेये उद्देश्यभेदाभावपरस्यैवकारस्य प्रयोगदर्शनात् । "तदु भव्यम्, तदु सत्यम्, तदु चन्द्रमाः,स उ गर्भे अन्तः" इत्येवं तस्मिन्नेव प्रकरणे तस्मिन्नेव धर्मिणि उद्देश्यविधेयसमर्पकपदद्वयमध्ये चतुर्वारं प्रयोगादुपस्थितत्वरूपस्थानाख्यलिङ्गेन, तत्रत्योकारस्य विधेये उद्देश्यभेदाभावतात्पर्यनिश्चयसम्भवेऽपि प्रकृते तादृशलिङ्गाभावेनावधारणार्थत्वसिद्ध्यसम्भवात् । न चान्यत्र स्थानप्रमाणेनावधारणार्थकत्वसिद्धौ, योग्यताबलात् प्रकृतेऽप्युकारस्यावधारणार्थकत्वसिद्धिरिति वाच्यम् । तथा सति "तद्विजिज्ञासस्व"इतिवदवश्यज्ञातव्यार्थत्वेनादरसूचनाय, श्रोतृजनसम्बोधनरूपप्रसिद्धार्थपरिग्रहस्यैवोचितत्वात् । अन्यथा "एष उ एव वामनिः, एष उ एव भामिनिः" इत्यादावगतेः । अतः स्थानप्रमाणेनोकारस्यावधारणार्थकत्वं न सम्भवतीति शङ्कामपनुदन् सूत्रं व्याचष्टे— **तदेवभूतमिति।**

उकारस्यावधारणार्थकत्वदार्ढ्यार्थं स्थलान्तरप्रदर्शनम् । उकारस्यावधारणार्थकत्वमेव नास्तीति शङ्कां परिहर्तुं स्थलान्तरप्रदर्शनमिति भावः। **(स्थान-प्रमाणेन)** इति - स्थानम् - उपस्थानम् । उपस्थितिः । अत्र प्रमाणपदसमभिव्याहृतस्थानपदेन "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानाम्"इति जैमिनिसूत्रपरिगणितं स्थानप्रमाणं व्यज्यते। तथा च प्रकृते अवधारणार्थकत्वेन निश्चितैवकारसमभिव्याहृतपूर्वोत्तरोद्देश्यविधेयसमर्पकपदद्वयमध्ये प्रयोगात्,उपस्थितिरूपलिङ्गप्रमाणेनेत्यर्थः। **(उकारः)** स्थलान्तरे, प्रकृते चोकार इत्यर्थः । **(अवधारणार्थः)** अवधारणम्-निषेधः, स अर्थः, द्योत्यः,यस्य स इत्यर्थः। अत एव - **अवधारणार्थ एवार्थो यस्येत्युक्तम् ।**

**(५९) अवधारणस्यार्थोऽयोगव्यवच्छेदः, अन्ययोगव्यवच्छेदो वा स्यात्, तस्मादनेनावधारणेन को विधीयत इत्यत्राह - अनेनेति ।**

**मू॥ इत्ताल् पिरर्कु 'शेषमन्नु' एन्गिरदु ॥ ५९ ॥**

**छा॥अनेन 'इतरेषां शेषो न भवति' इत्युच्यते॥ ५९॥**

---

अत्राऽयमभिसन्धिः - उकारः-अवधारणार्थक एव । 'तदेवभूतम्' 'तदेवाग्निः' इत्यादौ अवधारणार्थकत्वस्यापि स्थानप्रमाणेन क्लृप्ततया, अव्ययानेकार्थत्वसाधनैकार्थत्वाद्युपन्यासस्यास्थानविजृम्भितत्वात् । न च 'तदेव भूतम्' इत्यादिषूद्देश्यविधेयसमर्पकपदद्वयमध्ये प्रयोगात्, उपस्थिततत्वरूपस्थानाख्यलिङ्गेन, उकारस्यावधारणार्थकत्वनिश्चयसम्भवेऽपि, प्रकृते तदभावात् न तत्संभव इति वाच्यम् । "अहमपि न मम भगवत एवाहमस्मि" इत्यादिषु जीवेश्वरादिपदद्वयमध्ये प्रयोगादुपस्थिततत्वरूपस्थानाख्यलिङ्गेन,प्रकृतेऽपि एवकारस्येवोकारस्याप्यवधारणार्थकत्वसिद्धिसम्भवात्, प्रणवस्थोकारस्यैवकारप्रकरणगतत्वाभावेऽपि, पूर्वोक्तन्यायेन प्रणवस्य"अहमपि मम न"इत्यादेश्च विवरणविवरणिभावापन्नत्वेन, प्रणवस्थोकारस्य स्थानप्रमाणेनैवकारसमानार्थकत्वोपपादनसम्भवाच्च । किञ्चान्यत्र स्थानप्रमाणेनोकारस्यावधारणार्थकत्वसिद्धौ, योग्यताबलादेव प्रकृतेऽपि तत्सिद्धिः । न चावश्यज्ञातव्यार्थत्वेनादरसूचनाय सम्बोधनार्थकत्वमेव युक्तमिति वाच्यम् । श्रुत्युक्तत्वेनावश्यज्ञातव्यत्वसिद्धोकारस्य व्यर्थप्रायत्वापत्त्या, अवधारणपरत्वेनानन्यथासिद्धार्थकत्वस्यैव युक्तत्वात् । किञ्चान्यशेषत्वनिवृत्तेर्बहुप्रमाणसिद्धत्वेन, सर्ववाङ्मूलभूतप्रणवे तत्सङ्ग्रहावश्यम्भावेनावधारणार्थकत्वमेव युक्तम् । "एष उ एव वामनिः" इत्यादौ पौनरुक्त्यापत्त्यान्यपरत्वमेव युक्तम्---इति ॥ ५८ ॥

**(५९) (अयोगव्यवच्छेदः)**इति--अयमत्र शङ्काभिप्रायः---अत्रावधारणं न तावत्, अत्यन्तायोगव्यवच्छेदः । अकारेण शेषत्वोक्तौ, तदत्यन्तायोगस्याप्रसक्तत्वेन निषेधानुपपत्तेः । 'नीलं सरोजं भवत्येव' इत्यादौ सरोजरक्तत्वस्यौत्सर्गिकत्वेन तत्र नीलत्वस्यात्यन्तायोगस्य प्रसक्त्या तन्निषेधोपपत्तेश्च । नाप्ययोगव्यवच्छेदः । 'अस्मी'त्यध्याहृतक्रियापदेन वर्तमानापदेशतया

व्या॥अवधारणवाचकेनानेनोकारेण प्रागीश्वरशेषत्वेनोक्तोऽयमात्मा अन्येषां शेषो न भवतीत्युच्यत इत्यर्थः।

"चतुर्थ्या ईश्वरशेषत्वे प्रतिपादिते कथमन्यशेषत्वस्य प्रसङ्ग इति चेत् उच्यते, लोके एकस्य शेषभूता गृह क्षेत्रपुत्रदासादयः अन्येषामपि शेषभूता दृश्यन्ते, तस्मात्तादृशमन्यशेषत्वमस्मिन्स्थलेऽपि वर्तत इति शङ्कायान्तदत्रनास्तीति प्रतिपादयत्ययमुकारः" इति॥ ५९॥

---

नित्यवच्छेत्रणरूपेण कदाचिच्छेषत्वाभावरूपस्यायोगस्य व्यवच्छेद्यत्वासिध्द्या, लोकरीत्या शेषत्वसाहचर्येण प्रसक्तस्यापि शेषत्वाभावस्य व्यवच्छेदे मध्यमाक्षरवैयर्थ्यापत्तेः। नाप्यन्ययोगव्यवच्छेदः। लोके गृहा[illegible]ः [illegible]तापुत्रादिशेषत्वदर्शनेन, भगवच्छेषत्वसाहित्येनान्यशेषत्वस्यापि प्रसक्तत्वेऽपि, विशेष्यसंगतैवकारस्यैवान्ययोगव्यवच्छेदकत्वस्य 'राम एव धनुर्धरः' इत्यादौ तान्त्रिकव्यवहारसिध्दत्वेन 'म्-आयैव-अस्मि' इति मकारार्थविशेषणीभूतभगवच्छेषत्वसमभिव्याहृतस्य मध्यमाक्षरस्यान्ययोगव्यवच्छेदकत्वानुपपत्तेः—इति।

सूत्रे अध्याहारलभ्यं—**प्रागिति**। 'इतर' शब्दलब्धार्थो वा। **(इतरशेष)** इति-उकारसमभिव्याहृतपूर्वपदप्रकृत्यर्थव्यतिरिक्तस्य, प्रकृत्यर्थभिन्नविषयकेच्छासाध्यो न भवतीत्यर्थः। **(इत्युच्यते)** - इति द्योत्यत इत्यर्थः।

अयमत्र परिहाराभिप्रायः—यदुक्तं 'न तावत्' इत्यादिना, तदयुक्तम्। "भगवत एवाहमस्मि" इत्यादिप्रमाणविरोधेनोकारस्य क्रियासङ्गतत्वाभावेनात्यन्तायोगव्यवच्छेददूषणस्याप्रसक्तप्रतिषेधत्वात्। अत एवायोगव्यवच्छेदपरत्वदूषणमपि तथैव। एवकारसमभिव्याहृतपूर्वपदजन्यप्रतीतिविशेषणस्य, तत्समभिव्याहृतपदान्तरजन्यप्रतीतिविशेष्यककादाचित्कस्यासम्बन्धस्य, व्यवच्छेदो हि-अयोगव्यवच्छेदशब्दार्थः। पूर्वपदशब्दश्च पूर्वसुबन्तपरः। प्रकृते च

शेषत्वस्य पूर्वपदस्थप्रत्ययार्थत्वेऽपि, तत्स्थप्रकृतिजन्यप्रतीतिविशेषणत्वाभावेन, स्वसमभिव्याहृतपदजन्यप्रतीतिविशेष्यान्वितविशेषणनिमित्तकसुबन्तपदोत्तरैवकारस्यैव विशेषणसङ्गतैवकारतया, प्रकृते तादृशविशेषणभूताकारार्थरक्षकत्वस्य, समभिव्याहृतपदान्तरोपात्तविशेष्यान्वितत्वाभावेन, तादृशविशेष्यभूतमकारार्थान्वितस्यैव शेषत्वस्य प्रत्ययार्थतया तादृशविशेषणत्वाभावेन चोकारस्य विशेषणसङ्गतत्वाश्रयणेनायोगव्यवच्छेदपरत्वं ह्यप्रसक्तमेव। एतेन विशेष्यसङ्गतत्वाभावेनान्ययोगव्यवच्छेदपरत्वं न सम्भवतीति प्रत्युक्तम्। स्ववाक्यजन्यशाब्दबोधविशेषणस्य यद्व्यक्त्यन्यत्वावच्छेदेन सम्बन्धो नास्ति, तद्व्यक्तिविशेष्यकप्रतीतिजनकसुबन्तपदोत्तरत्वस्यैव विशेष्यसङ्गतत्वरूपतया, स्ववाक्यजन्यशाब्दबोधे मकारार्थापेक्षया विशेषणस्य लुप्तचतुर्थ्यर्थशेषत्वस्याकारार्थान्यत्वावच्छेदेन सम्बन्धनिषेधस्यान्ययोगव्यवच्छेदरूपतया च प्रकृतोकारस्यान्ययोगव्यवच्छेदपरत्वस्य निष्प्रत्यूहत्वात्। 'याजनाध्यापनादिकं ब्राह्मणस्यैव धर्मः, गवादिकं ब्राह्मणायैव देयम्' इत्यादावन्ययोगव्यवच्छेदस्यैव सर्वसम्मतत्वात्—इति।

**(चतुर्थ्या)** इति - सर्वाधिकशेषि प्रतिसम्बन्धिकतादर्थ्यरूपशेषत्वस्यान्यार्हतायाः को वावकाश इति भावः। उत्तरम्— **लोके** इति। (गृहक्षेत्रपुत्रदासादयः) इति - गृहक्षेत्रदासदासीप्रभृतयः पितृपुत्रज्येष्ठकनिष्ठादीनां साधारणशेषाः। पुत्रो मातापितृपितृव्यादीनां साधारणशेषः। आदिशब्दः- कलत्रादिपरः। कलत्रं च "सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयोऽग्निष्टे पतिः, तुर्यस्ते मनुष्यजाः" इति पाणिग्रहणानन्तरं सोमादीनां शेषतयाभिहितत्वात् अनेकसाधारणं भवति इति हृदयम्। **(तादृशान्यशेषत्वम्)** कर्मोपाधिकमन्यशेषत्वम्। **(तदत्र नास्तीति)**-निरुपाधिकत्वं साधयतीति भावः। उक्तं तत्वदीपे वादिकेसरिभिः "सर्वाधिकशेषिप्रतिसम्बन्धिकतादर्थ्यरूपशेषत्वस्यान्यार्हतायाः को वावकाशः इति चेन्न, शेषिणस्सर्वाधिकत्वप्रतिपादनेन शेषत्वस्यान्यार्हताव्यावृत्त्यासिद्धेः। "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इति चतुर्मुखशेषस्य भूतजातस्य "मातृदेवो भव पितृदेवो भव" इति मातापितृप्रभृत्यवान्तरशेषत्वं दृश्यते। एवं सर्वाधिकशेषस्य शास्त्रसिद्धं मातापितृप्रभृतिब्रह्मादिदेवतान्तर-

(६०) एवंविना 'उकारेण लक्ष्मीशेषत्वमुच्यते' इति वदन्तोऽपि सन्तीत्याह— महालक्ष्म्या इति॥

मू॥ 'पॆरियपिराट्टियार्कु शेषम्' एन्गिरदु एन्नुं शोल्लुवर्हल् ॥ ६० ॥

छा॥ 'महालक्ष्म्याश्शेषः' इत्युच्यते। इत्यपि वदन्ति॥

व्या॥ "अकारश्चित्स्वरूपस्य विष्णोर्वाचक इष्यते। उकारश्चित्स्वरूपायाश्श्रियो वाची तथा विदुः। मकारस्तु

---

पर्यन्तविषयं कर्मोपाधिकमन्यशेषत्वं न स्वरूपानुबन्धीति तद्व्यावर्तकप्रमाणसूचनेन तादर्थ्यं द्रढीक्रियते" इति।

ननु "परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः, परश्शेषी" इति अवधारणघटितत्वस्यैव शेषत्वोक्तेः तच्च लुप्तचतुर्थीसिद्धम्। तस्मादवधारणार्थकत्ववर्णनमुकारस्याप्रयोजनमिति चेन्न; आक्षेपतः प्राप्तादप्याभिधानिकस्यैव ग्राह्यत्वात्—इति। यद्वा अवधारणाघटितशेषत्वं, अवधारणघटितशेषत्वमिति द्विविधं शेषत्वम्। तत्रावधारणाघटितशेषत्वमुपासकानाम्। 'मत्फलसाधनत्वान्मदर्थमिदं कर्मे'ति स्वार्थत्वदर्शनात्। प्रपन्नानां परार्थकैङ्कर्यनिष्ठानान्तु—अवधारणघटितशेषत्वम्। परोद्देश्यप्रवृत्तिमात्रनिष्ठत्वात्। अस्मिन् शास्त्रे तेषामेवाधिकारत्वात्, उपासकव्यावृत्त्यर्थमुकारस्यावधारणार्थकत्वं युक्तमेवेति। शेषत्वद्वैविध्यञ्चोक्तं चरमश्लोकटिप्पण्यां—"शेषत्वं तावद्द्विविधम्—परगतातिशयाधानेच्छयोपादेयत्वम्, तादृशेच्छयैवोपादेयत्वञ्चेति। तत्रावधारणाघटितशेषत्वज्ञानं भक्तिप्रपत्तिसाधारणाधिकारः। तद्घटितशेषत्वज्ञानन्तु प्रपत्तिमात्राधिकारः" इति ॥५९॥

(६०) ननु—उकारस्य स्थानप्रमाणेनावधारणार्थकत्वं वक्तुमशक्यम्' "अकारश्चित्स्वरूपस्य" "अकारेणोच्यते विष्णुः" इत्यादिवचनबलेनोकारस्य लक्ष्मीवाचकत्वावश्यम्भावात्। 'न हि वचनविरोधे न्यायः प्रभवति; इति न्यायात्—इति पक्षान्तरमाद्येत्यभिप्रायेणावतारयति— एवंविनेति।

तयोर्दास इति प्रणवलक्षणम्" (इति,) "अकारेणोच्यते विष्णुस्सर्वलोकेश्वरो हरिः। उध्दृता विष्णुना लक्ष्मीरुकारेणोच्यते सदा । मकारस्तु तयोर्विप्र श्रीनारायणयोस्सदा । आत्मनश्शेषभूतस्य वाचकश्श्रुतिचोदितः" इत्यादिभिर्भगवच्छास्त्रेऽकारस्य भगवद्वाचकत्वेन, उकारस्य लक्ष्मीवाचकत्वेन, मकारस्य तदुभयशेषभूतजीववाचकत्वेन चोक्तत्वात्, उकारमवधारणार्थमनङ्गीकृत्य लक्ष्मीवाचकत्वाङ्गीकारेण अनेनोकारेण 'महालक्ष्म्याश्शेषः' इत्युच्यत इति निर्वहन्तीत्यर्थः ॥ ६० ॥

---

"उकारेणोच्यते लक्ष्मीः" "उकारः श्रियो वाचीतथाविदुः" इति वचनाभिप्रायेण भूनीलाव्यावृत्त्यर्थम्—**महालक्ष्म्या** इत्युक्तम्। पुरुषकारभावेनोपकारिण्या देव्या इत्यर्थः। अनेन गुणकृतं तच्छेषत्वमिति सूचितम् । "याभिस्त्वं स्तनबाहुदृष्टिभिरिव" इत्याद्युक्तमवयवित्वं 'महे'ति विशेषणेन विवक्षितम्। तथा च लक्ष्मीदेव्या इत्यर्थः। **(शेष इत्युच्यते)** इति - 'लुप्तचतुर्थ्यन्तोकारेण लक्ष्मीविषयकेच्छासाध्योऽस्मि' इत्युच्यत इत्यर्थः। **(इत्यपि निर्वहन्ति)** केचिदिति शेषः। अपिशब्देन स्वोक्तिस्समुच्चीयते । अत्रायमभिप्रायः—यत् 'अकारेणोच्यते विष्णुः' इत्यादिवचनबलेनोकारस्य लक्ष्मीवाचकत्वमेवाङ्गीकरणीयमित्युक्तम्, तदयुक्तम्। तादृशवचनस्य भगवच्छब्दनिर्वचनादिवत्, सम्भवमात्रेणोपपत्त्या "भगवत एवाहमस्मि' "अकारा विष्णुरित्युक्तो मकारो जीववाचकः। तयोस्तु नित्यसंबन्ध उकारेण प्रकीर्तितः" "उकारोऽनन्यार्हं नियमयति सम्बन्धमनयोः' "अकारार्थायैव स्वम्" "उकारश्चैवकारार्थः" इति श्रुतिस्मृत्यादिप्रसिद्धाया अन्यशेषत्वनिवृत्तेस्संग्रहस्यैव सर्ववाङ्मूलभूते प्रणवे स्वीकर्तुमुचितत्वात् । अन्यथाकारोकारयोर्विभक्तिलुक्कल्पनागौरवाच्च। 'ओभ्याम्' इति चतुर्थीद्विवचनविभक्तेर्लुक्कल्पने द्वन्द्वाश्रयणादिगौरवात्, "भगवत एव" इत्येकवचनान्तविवरणश्रुतिविरोधात्, "ब्रह्मणे

(६१) तदपेक्षया पूर्वयोजनैव मुख्येत्याह - ततोऽपीति ।

मू॥ अदिलुमन्यशेषत्वङ्कलिहैये प्रधानम् ॥ ६१ ॥

छा॥ ततोऽप्यन्यशेषत्वनिवृत्तिरेव प्रधानम् ॥ ६१ ॥

व्या॥ महालक्ष्मीशेषत्वात्प्रागुक्तभगवच्छेषत्वविरोध्यन्यशेषत्वनिवृत्तिरेव प्रधानापेक्षितेत्यर्थः ॥ ६१ ॥

---

त्वा महस ओमिति" इति प्रणवोपादानपूर्वकं चतुर्थ्येकवचनान्तपदेन विवरणविरोधाच्च । मूलमन्त्र एव व्यक्तचतुर्थ्येकवचनान्तनारायणपदेन विवरणविरोधस्य दुरुद्धरत्वाच्च । "पतिं विश्वस्यात्मेश्वरम्" "पतिं पतीनां परमं परस्तात्" "भगवत एवाहमस्मि" इत्यादिप्रमाणप्रसिद्धस्य निरुपाधिकसर्वशेषित्वस्य नारायणैकनिष्ठस्य 'ओभ्याम्' इत्यनेन स्वरसतस्तुल्यवत्, सर्वशेषित्वस्य दिव्यदम्पत्योः प्रतीत्यापत्त्या भङ्गप्रसङ्गाच्च—इति ॥ ६० ॥

(६१) अथोपक्षिप्तं पक्षं प्रतिक्षिपतीति हृदयेन सङ्गतिमाह—तदपेक्षयेति । (तदपेक्षया) इति—लक्ष्मीशेषत्वापेक्षयान्यशेषत्वनिवृत्तिरवश्यवक्तव्या । सर्ववाङ्मूलस्य प्रणवस्य परमपुरुषार्थपरत्वेनैव प्रमाणतमत्वस्य वक्तव्यतयान्यशेषत्वनिवृत्तिमनुक्त्वा लक्ष्मीशेषत्वोक्त्या, अन्यशेषत्वनिवृत्तिं विना लक्ष्मीशेषवृत्तिमात्रानुष्ठापकत्वापत्त्या, अन्यशेषवृत्तेः परमपुरुषार्थविरोधित्वेन बहुप्रमाणप्रसिध्या चाप्रामाण्यप्रसङ्गात्, उक्तन्यायानुगृहीतपूर्वोक्तश्रुतिबलेन, लक्ष्मीशेषत्वपरतया व्याख्यानवचनस्याभ्युच्चयमात्रत्वेन 'न हि वचनविरोधः' इति न्यायानवताराच्च । पत्नीशेषत्वस्य पतिशेषत्वोपपादकतया श्रियःपतित्ववत् व्यङ्ग्यमर्यादया लाभेन तत्कण्ठोक्तेर्व्यर्थप्रायत्वाच्च । "पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतम्" इत्याद्युक्तरीत्यान्यशेषत्वस्य मिथुनशेषत्वविरोधित्वेन तन्निवृत्तेरिष्टलाभार्थमवश्यवक्तव्यत्वाच्चेति हृदयम् ।

(महालक्ष्मीशेषत्वादपि) इति-अपिः - विरोधे, पदार्थसंभावनायां वा । यद्यपि, अन्यशेषत्वनिवृत्तेर्लक्ष्मीशेषत्वफलितत्वात्, लक्ष्मीशेषत्व-

(६२) ननु 'अन्यशेषत्वं किं तथाक्रूरमि' त्यतस्तस्य क्रौर्यं सदृष्टान्तमाह - देवानामिति।

मू॥ देवर्हलुक्कु शेषमान पुरोडाशत्तै नाय्क्किडुमापोले, ईश्वरशेषमान आत्मवस्तुवै संसारिहलुक्कु शेषमाक्कुहै ॥ ६२ ॥

---

स्यार्थप्राधान्यमस्ति; तथापि फलितार्थत्वसम्भवात् पतिशेषत्वोक्तिव्यङ्ग्यत्वाच्च, अन्यशेषत्वनिवृत्तेरेव वक्तव्येषु प्राधान्यमिति सैव वक्तव्येति भावः। अन्यशेषत्वं स्वातन्त्र्येण भगवदन्यगतातिशयाधानेच्छया उपादेयत्वमित्यर्थः। तेन लक्ष्मीशेषत्वाभ्युपगमेऽपि न दोषः। **(अन्यशेषत्वनिवृत्तेरेवे)**ति-अन्यशेषत्वात्यन्ताभावस्यैवेत्यर्थः। यद्यपि "अनेन-इतरशेषो न भवति" इति सूत्रे शेषभेद-एवोक्तः; तथापि धर्मात्यन्ताभावधर्म्यन्योन्याभावयोरैक्यान्न विरोधः। **(निवृत्तिरेवे)**त्यवधारणेन लक्ष्मीशेषत्वं व्यावर्त्यते। यद्यपि 'तस्मादपि प्रधानम्' इत्युक्त्यैव तत्प्राधान्येन व्यवच्छेदस्सिध्यति; तथापि अत्रान्यशेषत्व शब्देन देवतान्तरादिशेषत्वस्य विवक्षिततया, स्वातन्त्र्येण लक्ष्मीशेषत्वस्यापि निषेध्यतया कथं देवतान्तरादिशेषत्वमेव निषेध्यमिति शंकायां 'लक्ष्मीशेषत्वं देवतान्तरादिशेषत्ववत् रजस्तमोवर्धकतया न भगवच्छेषत्वविरोधि; अतो देवतान्तरशेषत्वमेव निषेध्यम् इत्यभिप्रायेणावधारणप्रयोग इत्यनुसन्धेयम्। **(प्रधानापेक्षिते)**ति प्रधानापेक्षितेति वक्तव्येत्यर्थः। **(प्रधानम्)** इति विशेषणेन लक्ष्मीशेषत्वस्याप्रधानवक्तव्यसिध्द्या "उकारेणोच्यते लक्ष्मीः" इत्यादिवचनम् - अभ्युच्चयार्थपरमिति सूचितम्। अर्थाबाधसत्वे कथञ्चिच्छब्दबोध्यत्वसम्भवे च अवश्यज्ञातव्यत्वाभावात्, शब्दस्वारस्याभावाच्च। अप्रधानभूतानामप्यर्थानां शब्दविवक्षितत्वेन व्याख्यानस्य भगवच्छब्दादिषु दर्शनादित्यभिप्रायः॥ ६१॥

(६२) **(नन्वन्यशेषत्वमि)**ति-पूर्वसूत्रस्थान्यशब्द विवक्षितार्थं स्पष्टयन्, न केवलं लक्ष्मीशेषत्वविरोधितयान्यशेषत्वस्य, तन्निवृत्तेरवश्यवक्तव्यत्वम्; अपितु इष्टहानिकरतया बलवदनिष्टकरतया च तस्य तन्निवृत्ते स्तथात्वमित्यभिप्रायेण, दृष्टान्तमुखेनान्यशेषत्वक्रौर्यं प्रदर्शयतीत्यर्थः।

छा॥ देवानां शेषभूतस्य पुरोडाशस्य शुने दानवत्, ईश्वरशेषस्यात्मवस्तुनस्संसारिणां शेषीकरणम् ॥ ६२ ॥

व्या॥ आराध्यानामिन्द्रादिदेवानाम्भोग्यतया शेषत्वेन कल्पितस्य पुरोडाशस्य दर्शनस्पर्शनादीनामनर्हे निहीने शुनि प्रदानवत् प्राप्तशेषिणः ईश्वरस्य शेषभूतस्यात्मवस्तुनः सर्वप्रकारेण हेयानां संसारिणां शेषीकरणमित्यर्थः ॥ ६२ ॥

---

(भोग्यतया शेषत्वेन कल्पितस्य) इति - अग्नीन्द्रादिदेवताप्रीत्युद्देशेन यागदानहोमरूपव्यापारविषयीकृतस्येत्यर्थः। (पुरोडाशस्ये)ति हविर्मात्रोपलक्षणम्। "यथोक्तदेवतां प्रति हविष्ट्वेन प्रदेयद्रव्यरूपः पक्वः पिण्डः पुरोडाश इत्युच्यते" इति ऐतरेयब्राह्मणभाष्यम्। (ईश्वरशेषभूतस्ये)ति- ईश्वरशब्देन देवानामपीश्वरत्वं विवक्षितम्। अनेन परदेवताद्रव्यापहारादधिकदोषो व्यज्यते। (आत्मवस्तुनः) - आत्मशब्देन पुरोडाशाद्यपेक्षया प्रकृते देयद्रव्योत्कर्षो विवक्षितः। वस्तुपदेन "वस्तुलक्ष्मीधरं विदुः" "वस्तुपैतामहं धनम्" इत्युक्तरीत्या भोग्यतायामप्रमेयत्वं व्यज्यते। (शेषभूतस्यात्मवस्तुनः) इत्यनेन भगवच्छेषत्वविशिष्टस्यान्यशेषत्वकरणमतिक्रूरमिति गम्यते। (संसारिणाम्) "आ ब्रह्मस्तंबपर्यन्ताः जगदन्तर्व्यवस्थिताः। प्राणिनः कर्मजनितसंसारवशवर्तिनः" इत्युक्तरीत्या संसारवशवर्तिनामित्यर्थः। (शेषत्वकरणम्)-तत्प्रीत्युद्देशेन व्यापारवत्तया करणमित्यर्थः।

एतेन—"अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" इति न्यायेनाप्राप्तशेषवृत्तिमुखेनापि प्राप्तशेषवृत्तेः प्रामाणिकत्वात्, भक्तिपारवश्यप्रपन्नेषु प्राप्यत्वरया देवतान्तरभजनादर्शनाच्च। श्रीभाष्यकारचरमश्लोकोपदेशन्यायेनानर्थाभ्युपगमेनापि, इष्टार्थप्रवृत्तिसम्भवाच्चान्यशेषत्वनिवृत्तिरावश्यकी इत्युक्तिर्दुरुक्तिरेवेति परास्तम्।

(६३) एवं क्रूरस्यान्यशेषत्वस्य निवृत्तिरेवात्मनः प्रधानापेक्षितेति प्रागुक्तमर्थं स्थिरीकरोति—भगवच्छेषत्वादिति ।

॥ भगवच्छेषत्वत्तिलुमन्यशेषत्वङ्गलिहैये प्रधानम् ॥ ६३ ॥

छा॥ भगवच्छेषत्वादपि अन्यशेषत्वनिवृत्तिरेव प्रधानम् ॥ ६३ ॥

व्या॥ न केवलं लक्ष्मीशेषत्वात्प्रधानमित्येतावन्मात्रम्, अपितु भगवच्छेषत्वादपि अन्यशेषत्वनिवृत्तिरेवात्मनः प्रधानमित्यर्थः ॥ ६३ ॥

---

"अप्यकार्यशतं कृत्वा" इत्यादौ अगतिकस्यावरवर्णधर्मानुष्ठानेन कुटुम्बपोषणरूपाल्पधर्मलाभस्यैव विवक्षिततया, अत्यन्तनिषिद्धान्यशेषत्वेन परमधर्मभूतमिथुनशेषत्वलाभस्योक्त्यसम्भवात् । भक्तिपारवश्यप्रपन्नेषु देवतान्तरभजनादेर्भक्तिविवृद्धिमूलकत्वेन भगवत्प्रीत्यतिशयसंपादनमुखेन सत्त्वोद्रेकसंपादकतया भगवत्कैङ्कर्यकोटिप्रवेशेन मोक्षहेतुतया च मोक्षविरोध्यन्यशेषवृत्तौ तद्दृष्टान्तीकरणासम्भवाच्च । "अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम् । लब्धक्षेत्रैर्न दुष्प्रापस्स्यादर्थ इति निश्चयात्" इति न्यायेन दयातिशयकार्यश्रीभाष्यकारादिप्रवृत्तेरिष्टहान्यनिष्टप्राप्तिहेतुभूतान्यशेषवृत्तौ दृष्टान्तत्वोक्त्यसम्भवाच्च ॥ ६२ ॥

(६३) (प्रागुक्तमर्थं स्थिरीकरोति)—लक्ष्मीशेषत्वापेक्षयान्यशेषत्वनिवृत्तेः प्रधानत्वक्तव्यत्वं, कैमुतिकन्यायेन स्थिरीकरोतीत्यर्थः ।

भगवच्छब्देन योगरूढाभ्यां षाड्गुण्यदेवताविशेषौ विवक्षितौ । अपिशब्दः-पूर्ववदर्थद्वयपरः । अन्यशेषत्वनिवृत्तिलक्ष्मीशेषत्वयोः फलतया भगवच्छेषत्वस्यार्थप्राधान्ये सत्यपि, अन्यशेषत्वस्य तद्विरोधितया तन्निवृत्त्यु-

(६४) अस्य प्रमाणं दर्शयति - विस्मृत्यापीति ।

मू ॥ "मरन्दुम्पुरन्तोला मान्दर्" एन्गैयाले ॥ ६४ ॥

छा॥ "विस्मृत्यापि अन्यमसेवमानाः" इत्युक्तत्वात् ॥

व्या॥ यमकिङ्करसंवादं वदता श्रीभक्तिसारेण "तिरम्पेल्मिन्कण्डीर्" इति गाथायां भागवतलक्षणकथनावसरे "श्री स्वामिनो नामानि विस्मृत्यापि अन्यविषये शेषवृत्तिमकुर्वन्तः" इत्युक्तत्वादित्यर्थः ॥ ६४ ॥

---

क्तिव्यङ्गतया च भगवच्छेषत्वस्य तन्निवृत्तेः प्रधानवक्तव्यत्वं सम्भवतीति भावः । **(प्रधानापेक्षिते)**ति-पतिशेषत्वव्यङ्ग्यं पत्नीशेषत्वं सुतरां न प्रधानवक्तव्यमिति भावः ॥ ६३ ॥

**(६४) (तस्य प्रमाणं दर्शयति)** उपपत्तिसिद्धेरवश्यवक्तव्यत्वे प्रमाणमपि हेतुत्वेन दर्शयतीत्यर्थः ।

**(यमकिंकरसंवादमि)**ति-श्रीविष्णुपुराणे "स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूधनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्" इत्यादि ॥ **(श्रीस्वामिनो नाम)** श्रीमत्स्वामिनोऽसाधारणं नामेत्यर्थः । **(विस्मृत्ये)** त्यनेन अवश्यज्ञातव्याज्ञानं विवक्षितम् । **(नामविस्मृत्य)** इत्यनेन 'नामापि न श्रूयते' इदि न्यायोऽभिप्रेतः ॥ ६४ ॥

**(६५) (स्वस्मै)** इत्यनेनास्मच्छब्दपर्यायसमभिव्याहृतमकारोक्तप्रयोक्तृचेतनसामान्यं परामृश्यते । **(इतरेभ्यश्चे)** त्यनेन प्रयोक्तृचेतनव्यतिरिक्ता जीवा उच्यन्ते । एवं, अकारार्थापेक्षयान्यव्यक्तित्वावच्छेदेन प्रत्यार्थशेषत्वस्य प्रतिसंबन्धितालक्षणयोगव्यवच्छेदके उकारे द्योत्यस्याकारार्थव्यतिरिक्तस्य सर्वस्य प्रयोक्तृजिवत्वेन तद्भिन्नजीवत्वेन च द्वैराश्यकथनात्,

(६५) ईश्वरशेषभूतस्यात्मवस्तुनस्स्वशेषत्वम्परशेषत्वमुभयमपि अन्यशेषत्वमेव। अत उभयमप्ययमुकारो निवर्तयतीति वदन्निगमयति —अनेनेति।

मू॥ इत्ताल् 'तनक्कुं,पिरर्कुमुरित्तन्त्रु' एन्गिरदु ॥६५॥

छा॥ अनेन 'स्वस्मै, इतरेभ्यश्च नोपयुक्तो भवति' इत्युच्यते ॥६५॥

व्या॥ अन्यशेषत्वनिवर्तकेनानेनोकारेणान्येष्वन्यतमत्वात् 'इदमात्मवस्तु स्वस्मै नोपयुक्तम्भवति, स्वेतरसंसारिभ्यश्च नोपयुज्यते' इत्ययमर्थ उक्त इत्यर्थः ॥६५॥

---

प्रयोक्तृजीवविशेषत्वमात्रव्यवच्छेदकेन नमश्शब्देन गतार्थत्वं नास्तीति सूचितम्। एतेन—गतार्थत्वशंका निरस्ता। **(नोपयुक्तः)** इति, भगवदन्यत्वावच्छिन्नं प्रति शेषवृत्तियोग्यो नास्मीत्यर्थः। 'भगवच्छेषभूतोऽस्मि' इति विधिवाक्ये नित्यवच्छ्रवणस्य प्रत्यक्षविरोधेन बाधपरिहाराय योग्यताया एव विधेयत्वेन 'अन्यशेषभूतो नास्मि' इति निषेधवाक्येऽपि प्रत्यक्षबाधपरिहाराय 'अन्यशेषत्वयोग्यो न भवामि' इत्येवं योग्यतैव निषेध्येति भावः॥६५॥

**(६६) (एवम्)** इति, क्रमप्राप्तोकारस्यार्थ उक्तः, अथ क्रमप्राप्तं मकारं व्याचष्ट इत्यर्थः। किं मकारार्थो देहविशिष्ट आत्मा - उत निष्कृष्टात्मेति। तदर्थं मकारस्य देहविशिष्टात्मपरत्वे मकारात्मनोर्वर्गाक्षरेषु त्याज्योपादेयतया ज्ञातव्येष्वर्थेषु च पञ्चविंशत्वप्रयुक्तो वाच्यवाचकभाव उपपद्यते - नवेति। विशिष्टपरत्वे मकारस्य ज्ञानवाचित्वमुपपद्यते-नवेति च। तदर्थं त्रिविधात्मवर्गपरत्वे एकवचनं विरुध्यते-नेवति। तदर्थं मकारस्य देहविशिष्टात्मपरत्वे ज्ञातृवाचित्वमुपपद्यते - नवेति। तदर्थं ज्ञातृत्वं देहाद्व्यावर्तकं-नवेतिचेति संशयनिरासपूर्वकं क्रमप्राप्तं तृतीयाक्षरम्मकारं व्याचष्टे इति भावः।

(६६) एवमुकारार्थ उक्तः। अनन्तरं तृतीयाक्षरभूतमकारार्थमाह—मकार इत्यारभ्य।

मू॥ मकारम्—इरुपत्तञ्जामक्षरमाय्, ज्ञानवाचियुमायिरुक्कैयाले, आत्मावै च्चोल्लुहिरदु ॥६६॥

छा॥ मकारः पञ्चविंशाक्षरः, ज्ञानवाची च; तस्मादात्मानमाह ॥६६॥

व्या॥ "भूतानि च कवर्गेण चवर्गेणेन्द्रियाणि चाटवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा। मनः पकारेणैवोक्तं फकारेण त्वहङ्कृतिः। बकारेण भकारेण महान्प्रकृतिरुच्यते। आत्मा तु स मकारेण पञ्चविंशः प्रकीर्तितः" इत्युक्तप्रकारेण पृथिव्यादिप्रकृत्यन्तानाञ्चतुर्विंशतितत्त्वानां वाच-

---

तथा ह्यत्रायं पूर्वः पक्षः - मकारार्थो देहविशिष्टात्मैव। "अहमपि न मम भगवत एवाहमस्मि" "अच्युताहं तवास्मीति" "तवास्मीति च याचते" "किङ्करोऽस्मि हृषीकेश" "ममेति द्व्यक्षरो मृत्युर्नममेति च शाश्वतम्" इत्याद्यनुसारेण मकारस्यास्मच्छब्दपर्यायतयास्मच्छब्दे वक्तृत्वस्य प्रयोगोपाधितया वक्तृत्वस्य देहविशिष्टात्मन्येव सम्भवात्।

नच मकारस्य वर्ग्याक्षरेषु पञ्चविंशतया "पञ्चविंशोऽयं पुरुषः" "पञ्चविंश आत्मा भवति" इत्यादिना जीवस्य ज्ञातव्यतत्वेषु पञ्चविंशत्वेन प्रसिद्धतया च "भूतानि च कवर्गेण" इत्यादिवचने वर्णक्रमेण तत्त्वक्रमेण च वाच्यवाचकभावस्योक्ततया च निष्कृष्टात्मन एव मकारवाच्यत्वसिद्धिरिति वाच्यम्; देहविशिष्टात्मनि विशेष्यांशस्य ज्ञानरूपस्य पञ्चविंशत्वेन मकारवाच्यत्वोपपत्तेः।

न च 'मन-ज्ञाने' इति धातोर्निष्पन्नस्य मकारस्य ज्ञानरूपनिष्कृष्टात्मपरत्वमेवेति वाच्यम्; धात्वर्थतया ज्ञानरूपत्वलाभवत्, प्रयोगोपाधितया देहवैशिष्ट्यलाभस्यापि दुर्वारत्वात्।

कानि ककारादिमकारान्तानि चतुर्विंशत्यक्षराणीव न भवति, मकारस्तु पंचविंशाक्षरः, "मन—ज्ञाने" इति धातोः "मनु—अवबोधने" इति धातोर्वा निष्पन्नतया ज्ञानवाची। अतः "पंचविंशोऽयं पुरुषः" पंचविंश आत्मा भवति" इत्युक्तरीत्या पंचविंशकम्, "विज्ञानात्मा पुरुषः" "विज्ञातारमरे केन विजानीयात्" इत्युक्तरीत्या ज्ञानस्वरूपम्, ज्ञानगुणकञ्चात्मानं वदतीत्यर्थः ॥६६॥

---

न च लुप्तचतुर्थ्यन्तोक्तभगवच्छेषत्वस्य त्रिविधात्मवर्गसाधारणतया तद्विशेष्यसमर्पकस्य मकारस्य देहविशिष्टात्मपरत्वं न संभवतीति वाच्यम्; प्रयोगोपाधितया व्युत्पत्तिसिद्धदेहवैशिष्ट्यानुसारेण, विशिष्टात्मन्येव भगवच्छेषत्वस्य प्रणवे प्रतिपादनोपपत्तेः।

किञ्च, त्रिविधात्मवर्गपरत्वं मकारस्यैकवचनान्तत्वेनानुपपन्नम्। व्यक्त्येकस्यैवैकवचनेन स्वरसासिद्धत्वात्। आत्मद्वारकैकत्वपरत्वे तद्वैयर्थ्याच्च। अत एवात्मनां प्रत्येकमेकत्वेऽपि तत्परत्वमयुक्तम्। किंच प्रकृतिप्रयोगोपाधितया सिद्धस्य वक्तृत्वस्यैकदेहावच्छिन्नात्मव्यक्तिव्यक्तितया तदनुसारेणैकवचनं व्यक्त्यैकत्वपरमित्येव युक्तम्।

अपि च "मन-ज्ञाने" इति धातोः कर्तरि व्युत्पत्त्या निष्पन्नस्य मकारस्य ज्ञातृत्वपरतया; ज्ञातृत्वस्य च देहविशिष्टात्मन्येव सम्भवेन विशिष्टपरत्वमेव युक्तम्। न च ज्ञातृत्वस्याचेतनदेहाद्व्यावर्तकत्वेन शुद्धात्मपरत्वमेव युक्तमिति वाच्यम्; ज्ञातृत्वस्य देहव्यावर्तकत्वेऽपि देहवैशिष्ट्यस्य ज्ञातृत्वोपपादकतया विशिष्टात्मनि मकारार्थे ज्ञातृत्वस्य विशेष्यांशान्वयोपपत्तेः।

किंच 'अहं जानामि' इति ज्ञातृत्वेन प्रतीतिसिद्धोऽहमर्थः, 'स्थूलोऽहं, कृशोऽहम्' इत्यबाधितसामानाधिकरण्यानुभवबलाद्देह एवेति वदन्तं प्रति देहस्याचेतनत्वसिद्धवत्कारेण ज्ञातृत्वं देहव्यावर्तकमिति वचनमुपहास्यम्। तस्माद्देहविशिष्टात्मैव मकारार्थ इति - इति।

अत्रायं राद्धान्तः - मकारार्थो निष्कृष्टात्मैव। "भूतानि च कवर्गेण" इत्यादिनाप्ययक्रमेण पृथिव्यादिचतुर्विंशतितत्त्वानां ककारादिचतुर्विंशतिवर्णवाच्यत्वस्य "कं पृथिव्यै नमः" इत्यादिसंहारन्यासबलेन सिद्ध्या "भूतानि च कवर्गेण" इत्यादिना तेषां ककारदिचतुर्विंशतिवर्णवाच्यत्वकण्ठोक्त्या च, तत्त्वेषु पञ्चविंशत्वेन प्रसिद्धस्यात्मनः वर्णेषु पञ्चविंशतिवर्णरूपमकारवाच्यत्वस्यौचित्येनैव सिद्धेः। "आत्मा तु स मकारेण पञ्चविंशः प्रकीर्तितः" इत्यौचित्यसिद्धार्थस्य कण्ठोक्त्या दृढीकृतत्वाच्च।

न चास्मच्छब्दपर्यायमकारवाच्यस्य प्रयोगोपाधितया देहवैशिष्ट्यसिद्धौ विशेष्यांशस्यात्मनः पञ्चविंशत्वविवक्षया "पञ्चविंशः प्रकीर्तितः" इत्युक्तिरुपपन्नेति वाच्यम्; अप्ययक्रमेण तत्त्वानां ककारादिवर्णवाच्यत्वोक्तिमहिम्ना भोक्तृत्वावस्थारहितजीवस्यैव मकारवाच्यत्वसिद्धेः। कारणावस्थाद्योतनार्थमेव श्रुतौ पञ्चविंशत्वोक्त्या स्थूलसूक्ष्मदेहपरित्यागेन भोक्तृत्वावस्थारहितस्य कारणावस्थजीवस्य वाच्यत्वाभिप्रायेण "पञ्चविंशः प्रकीर्तितः" इति विशेषितत्वाच्च।

किञ्च 'मन ज्ञाने' इतिधातोर्निष्पन्नस्य मकारस्य ज्ञानरूपनिष्कृष्टात्मपरत्वमेव युक्तम्। न च प्रयोगोपाधितया देहवैशिष्ट्यलाभोऽपि दुर्वार इति वाच्यम्; प्रयोगोपाधेः पदजन्यप्रतीतिप्रकारत्वाभावेन; 'ब्राह्मणोऽहम्' 'मनुष्योऽहम्' इत्यादौ तत्तच्छब्दवक्तृत्वोपलक्षितात्मव्यक्तेर्वक्तृत्वाभावदशायामपि मनुष्यादिदेहवैशिष्ट्यवत् मकारवाच्यस्य मकारघटितवाक्यप्रयोगदशायां देहविशिष्टस्यापि देहावच्छिन्नदशायां धातुसिद्धज्ञानरूपत्ववैशिष्ट्यसम्भवेन; सर्वकालावच्छिन्ननिष्कृष्टात्मन एव मकारवाच्यत्वावश्यंभावात्।

अपि च लुप्तचतुर्थ्यन्ताकारोक्तभगवच्छेषत्वस्य सर्वकालावच्छेदेन सर्वात्मसाधारणतया श्रुतिस्मृत्यादिषु प्रपञ्चितत्वेन तदाश्रयसमर्पकस्य मकारस्य सर्वकालावच्छेदेन धातूपात्तज्ञानत्वविशिष्टात्मसामान्यपरत्वमेव युक्तम्। प्रयोगोपाधितया व्युत्पत्तिसिद्धस्यापि देहवैशिष्ट्योपलक्षणत्वसंभवात्; प्रथमोपात्तभगवच्छेषत्वस्यानन्तरोपात्तशब्दस्वभावेनार्थसिद्धं प्रयोगोपाधिमादायाश्रयसङ्कोचानुपपत्तेः। धातूपात्तज्ञानरूपान्वयितावच्छेदकेन सह शेषत्वस्य सर्वदेशकालावच्छेदेनैकस्मिन् धर्मिण्यन्वयरूपविशिष्टवैशिष्ट्यसम्भवे तत्त्यागायोगाच्च।

न च भगवत्स्वरूपस्यापि ज्ञानरूपत्वेन भगवच्छेषत्वस्याश्रयसङ्कोच आवश्यक इति वाच्यम्; 'मन-ज्ञाने' इति वा 'मनु-अवबोधने' इति वा धातोः

'मदि हर्षे' इति धातोश्च भावे कर्तरि च निष्पन्नस्य मकारस्यासङ्कोचेन ज्ञानानन्दरूपत्वज्ञानानन्दाश्रयत्वबोधकत्ववत्, 'मसि-परिमाणे' इति वा 'माङ्-माने' इति वा धातोर्निष्पन्नस्य तस्यासङ्कोचेन परमाणुत्वबोधकतया भगवत्यनतिप्रसङ्गेन भगवच्छेषत्वस्याश्रयसङ्कोचानवकाशात्। अत एव "अस्येशाना जगतो विष्णुपत्नी" इत्यादिषु लक्ष्म्या अपि भगवच्छेषत्वस्य प्रसिद्धतया तदाश्रयासङ्कोचाय तस्या अपि मकारार्थानुप्रवेशावश्यम्भावेन परमाणुभूतायास्तस्या जीवकोटित्वमेवेति सिद्धान्तोऽप्युपपद्यते। तस्या अणुत्वं जीवकोटित्वञ्च द्वयप्रकरणे व्यक्तीभविष्यति। श्रीतत्वप्रकाशिकायामस्माभिः प्रपंचितश्च।

किञ्चेत्याद्यप्ययुक्तम्। "बर्हिर्देवसदनं दामि" इत्यादिमन्त्राणां सर्वदा सर्वत्र सर्वैः प्रयुज्यमानानामेकप्रयोगान्वितैकपुरुषपरत्वे त्वनित्यार्थसंयोगादप्रामाण्यप्रसङ्गेन, अनाद्यनन्ततत्तत्प्रयोगान्विततत्तत्पुरुषैकत्वपरत्ववत्, त्रिविधात्मवर्गपरस्यापि मकारस्य अनाद्यनन्ताभिन्नभिन्नशेषत्वानुसन्धानान्विततत्तत्पुरुषैकत्वपरतया एकवचनान्तत्वोपपत्तेः।

वस्तुतस्तु—"बर्हिर्देवसदनं दामि" इत्यादावनित्यार्थसंयोगपरिहारायानाद्यनन्ततत्तत्प्रयोगावच्छिन्न तत्तत्पुरुषैकत्वपरत्वेऽपि, तादृशैकत्वोपस्थितेतरव्यावर्तकत्वेनैकवचनस्य प्रकृतिप्रयोगसाधुत्वमात्रार्थकत्वमगत्याश्रयणीयम्। न च प्रकृते तदाश्रयणं युक्तम्। जात्येकवचनतया साफल्योपपत्तेः। तथा हि न तावज्जात्येकवचनं जातिगतैकत्वबोधकम्; 'पदार्थः पदार्थेनान्वेति' इति व्युत्पत्तिविरोधापत्तेः। नापि 'सविशेषणेहीति' न्यायेन जातिद्वारा एकत्वबोधकम्; 'स्वर्गी ध्वस्तः' इत्यादौ विशेष्यबहिर्भूतविशेषणस्थल एव तन्न्यायापातात्। अन्यथा 'गौर्नित्या' इत्यादिप्रयोगप्रसंगस्य दुरुद्धरत्वात्। तस्माज्जात्येकवचनं समुदायैकत्वबोधकम्। समुदायतावच्छेदकश्च-प्रकृत्युपात्ता जातिरेव। तथा च "आत्मा नित्यः" इत्यादावात्मव्यक्तिबहुत्वेऽपि एकवचनमात्मत्वावच्छिन्नसमुदायैकत्वपरतयात्मत्वावच्छेदेन नित्यत्वबोधकमिति सप्रयोजनम्। यद्यपि विशिष्टवैशिष्ट्यस्य औत्सर्गिकत्वेन "आत्मानो नित्याः" इत्युक्तावपि तत्सिद्धिः। तथापि उत्सर्गे बाधकाभावं द्रढयितुं, एकवचनम्। वस्तुतस्समुदायद्वारैकत्वबोधनमाश्रयितुं युक्तम्। समुदायत्वपर्याप्त्यधिकरणवृत्तित्वसिध्यैव प्रकृत्यर्थतावच्छेदकावच्छेदेनापरपदार्थान्वयसिद्धेः।

न चैवं; अनेकघटवति 'घटोऽस्ति' इत्याद्यनुपपत्तिः। तत्रागत्या जातिद्वारैकत्वान्वयस्याव्यावर्तकस्यापि प्रत्येकमेकत्ववत्, प्रकृतिप्रयोगसाधु-

स्वार्थे प्रयुक्तेनैकवचनेन बोधनाङ्गीकारात् । न चानुपात्तसमुदायद्वारकान्वयोऽनुपपन्नः; 'गौर्नित्या' इत्याद्यप्रयोगात् । 'लोहितस्स्फटिकः, पीतः शङ्खः' इत्यादौ गुणिलक्षणया विशेष्यभूतविशेषणस्यैव परंपरासम्बन्धबोधनेन प्रामाण्याभ्युपगमादिति वाच्यम्; विशेषणस्य द्वारत्वे विशेष्यत्वापेक्षायामपि 'लोहितस्स्फटिकः' इत्यादिवदुपात्तविशेषणस्यानुपात्तद्वारकान्वयसम्भवात् । विशेष्यविशेषणस्यैव सद्वारकान्वय इत्युक्तौ 'एको व्रीहिः, इत्याद्यसम्भवात् । तत्रैकवचनस्य साधुत्वार्थत्वेऽपि एकशब्दस्य जातिभेदशंकाव्या - वृत्त्यर्थं जातिद्वारकैकत्वपरतयैव सार्थक्यस्य वक्तव्यत्वात् । इत्थं च प्रकृते विशिष्टवैशिष्ट्यव्युत्पत्त्यनवतारेऽपि प्रकृत्यर्थतावच्छेदकज्ञानानन्दरूपत्वाव-च्छिन्नसमुदायैकत्वबोधने तत्सामानाधिकरण्यमात्रेणापरपदार्थस्य भगवच्छेष-त्वस्य ज्ञानानन्दरूपत्वाद्यवच्छेदेन निष्कृष्टात्मान्वयसिद्धिः प्रयोजनमिति सिद्धम् ।

अपि चेत्याद्यप्ययुक्तम् । "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" "अविनाशीवारे अयमात्मानुच्छित्तिधर्मा" इत्यादिप्रमाणानुसारेणासङ्कोचन्या-येन च कर्तरि व्युत्पत्त्या मकारसिद्धज्ञातृत्वस्य स्वाभाविकत्वेन; तत्र देहवैशिष्ट्य-स्याप्रयोजकत्वात् । संसारिणामेव धर्मभूतज्ञानस्य विषयावगाहनदशायां देह-वैशिष्ट्यापेक्षाभ्युपगमात् । अन्येषां "तन्वभावे सन्ध्यवदुपपत्तेः" इत्येव सिद्धान्तितत्वात् ।

वस्तुतस्तु धातुशक्यप्रथमोपस्थितज्ञातृत्वस्य "सिद्धे शब्दार्थसंबन्धे' इति न्यायेन श्रुतिस्मृत्यादिप्रमाणजातेन च निरुपाधिकत्वसिध्या, तस्यान्व-येन शेषत्वस्यापि देहविशिष्टान्वये सङ्कोचापत्तिरुपक्रमबाधापत्तिश्च । अत एव मकारोपात्तज्ञातृत्वेनात्मनो देहाद्व्यावृत्तिसिद्धिरप्युपपद्यते । देहस्या-नित्यस्य सर्वकालावच्छिन्नज्ञातृत्वासम्भवात् । एवं ज्ञानत्वानन्दत्वाणुत्वा-शेष्वपि सङ्कोचोपक्रमविरोधौ, तन्मुखेन देहाद्व्यावृत्तिसिद्धिश्चानुसन्धेया । एतेन किंचेत्याद्यपि दूरोत्सारितम् । देहस्यानात्मत्वं वक्ष्यते । इत्थञ्च बहु-प्रमाणन्यायानुगृहीतमकारासङ्कोचस्वारस्यात्, मकारो देहव्यावृत्तनिष्कृ-ष्टात्मपर इति सिद्धम्—इति ।

**(मकारः पञ्चविंशाक्षरः)** इति - "भूतानिच कवर्गेण" इत्यादौ "आत्मातु स मकारेण पंचविंशः प्रकीर्तितः' इति वचने जीवस्य मकार-

(६७) पूर्वोक्तशेषत्वस्य सर्वसाधारणत्वात् त्रिविधात्मवर्गस्य वक्तव्यत्वात्, आह—अयञ्चेति।

---

वाच्यत्वकण्ठोक्ति स्फुटत्वादुपेक्ष्य "आत्मा तु स मकारेण" इत्यत्र श्रुतिप्रसिद्धपंचविंशत्वोक्तेर्भोक्तृत्वरहितजीवस्वरूपपरत्वं, पंचविंशतत्वस्य पंचविंशवर्णवाच्यत्वं, चतुर्विंशतितत्त्वानां चतुर्विंशतिवर्णवाच्यत्वोक्त्यैव सिद्धमित्यौचित्यपरत्वञ्चाभिप्रेत्य वचनानुक्तं लोकसिद्धं मकारस्य पञ्चविंशत्वं कण्ठतो निर्दिशन्, भावव्युत्पत्त्या धातुसिद्धज्ञानत्वासङ्कोचन्यायेन निष्कृष्टात्मपरत्वञ्चाहेति ध्येयम्।

अत्र 'मकारः—निष्कृष्टजीववाचकः; वर्ग्येषु पञ्चविंशाक्षरत्वात्, जीवे ज्ञानत्वबोधकत्वाच्च, इत्यनुमानद्वयमभिप्रेतम्। 'तस्याः खुरन्यासः' इत्यादौ पंचविंशाक्षरे व्यभिचारवारणाय—'वर्ग्येषु' इत्युक्तम्। अत्र वर्ग्येषु यत्संख्यायुक्तम्, यदक्षरम्, तत्—तत्त्वेषु तत्संख्यायुक्तद्रव्यवाचि इति सामान्यव्याप्तिः; आद्यानुमानेऽभिप्रेता। द्वितीयानुमाने प्रणवस्थमकारस्यास्मच्छब्दपर्यायतया धर्मभूतज्ञानबोधकत्वाभावात्, न तद्वाचकज्ञानपदादौ व्यभिचार इत्यभिप्रायेण 'जीवे' इत्युक्तम्।

**(मकारः)** इति—प्रकरणात्प्रणवस्थमकार इत्यर्थः। **(ज्ञानवाची)** ति—स्वयंप्रकाशत्वं ज्ञानशब्दार्थः। भावव्युत्पत्त्या तद्वाचकत्वं विवक्षितम्। **(आत्मानं वदती)** ति—अपरपदार्थान्वयप्रतियोगितया निष्कृष्टजीवरूपबोधक इत्यर्थः। **(मन-ज्ञाने)** इति—"मन-ज्ञाने" इत्यस्माद्धातोः "उणादयो बहुलम्" इति वा "अन्येभ्योऽपि दृश्यते" इति वा ड्विप्रत्यये टिलोपे च कृते "बहुलं छन्दसि" इति प्रत्ययस्य लोपे कृते 'म्' इति स्थिते कृदन्तत्वात् प्रातिपदिकसंज्ञायां प्रथमैकवचने कृते "हल् ङ्याप्" इत्यादिलोपे च 'म्' इत्येवावतिष्ठते" इति बृहत्कठिनपददीपिकायाम्।

'विज्ञानात्मे' ति ज्ञानस्वरूपम्, 'विज्ञातारम्' इति ज्ञानगुणकञ्चात्मानं वदतीति विवेको द्रष्टव्यः॥ ६६॥

**(६७) (पूर्वोक्तशेषत्वस्य)** — लुप्तचतुर्थ्युक्तशेषत्वस्य। **(सर्वसाधारणतया)** इति—बद्धानां मुक्तानां नित्यानाञ्च साधारण-

मू॥ इदुतान् समष्टिवाचकम् ॥ ६७ ॥

छा॥ अयञ्च समष्टिवाचकः ॥ ६७ ॥

व्या॥ एवमात्मवाचकोऽयम्मकार आत्मसमष्टि-वाचक इत्यर्थः ॥ ६७ ॥

(६८) एकवचनान्तस्य कथं समष्टिवाचकत्वमिति शङ्कायामाह— जात्येकवचनमिति।

---

त्वम्। "एषोऽणुरात्मा" इत्यत्र "यस्मिन्प्राणाः पञ्चधा सं विवेश" इति बद्धत्वग्राहकवाक्यशेषवत्, "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः" इत्यत्र "स चानन्त्याय कल्पते" इति मुक्तत्वग्राहकवाक्यशेषवच्च प्रणवस्थमकारस्य बद्धात्मान्यतमपरत्वव्यवस्थापकवाक्यशेषाभावात्, नमश्शब्दोक्तविरोधिनिवृत्तेस्साधरणत्वाच्च "दासभूतास्स्वतस्सर्वे" इति भगवच्छेषत्वं सर्वसाधारणमिति कण्ठोक्तेश्च पूर्वोक्तशेषत्वं सर्वात्मसाधारणमिति भावः।

**(अयम्मकारः)** इति-असाधारणस्वरूपवाचिना मकारान्तरवैषम्यमभिप्रेतम्। इदंशब्दः शेषत्वाश्रयबोधकत्वरूपहेतुपरः। **(आत्मसमष्टिवाचकः)** इति - समष्टिशब्दः - त्रिविधात्मवर्गपरः। वस्तुतः - त्रिविधात्मवर्गरूपापरपदार्थान्वयप्रतियोगिनो ज्ञानत्वेन रूपेण वाचक इत्यर्थः। अनेन मकारस्य देहविशिष्टात्मस्वरुपपरत्वाभावसमर्थनस्य, देहानवच्छिन्नसूक्ष्मचिद्रूपबद्धात्मवर्गमुक्तात्मवर्गनित्यसूरिवर्गाणां लाभः प्रयोजनमित्यपि सूचितम् ॥ ६७ ॥

**(६८) (इदमाप)** इति - प्रणवस्थतृतीयाक्षरन्त्वित्यर्थः। अनेकघटवति 'घटोऽस्ती' त्याद्येकवचनान्तवैषम्यं अपि शब्देन द्योत्यते। जातिशब्दः - सर्वेषामात्मनां स्वयंप्रकाशत्वरूपभिन्नभिन्नपरस्परसौसादृश्यलक्षणाकृतिपरः। सिद्धान्ते आकृत्यतिरेकेण जातेरनभ्युपगमात्। जातिसम्बन्धि एकवचनं - जात्येकवचनम्। जातिसम्बन्धश्च - जात्यवच्छिन्नसमुदायैकत्वबोधकत्वम्। तथा च 'एको व्रीहिः' इत्यादौ एकशब्देन व्रीहिषु जातिद्वारकैक

मू॥ जात्येकवचनम् ॥६८॥

छा॥ जात्येकवचनम् ॥६८॥

व्या॥ व्रीहिसमूहविषयके "एको व्रीहिः" इति प्रयोगे एकवचनस्य जातिपरत्ववत्, इदमपि आत्मजातिपरमेकवचनमित्यर्थः ॥६८॥

(६९) अनेन मकारेणात्मनः क आकार उच्यत इत्यत्राह—अनेनेति।

मू॥ इत्ताल्--'आत्मा ज्ञाता' एन्रु देहत्तिल् व्यावृत्ति शोल्लित्तायित्तु ॥ ६९ ॥

छा॥ अनेन 'आत्मा ज्ञाता' इति देहाद्व्यावृत्तिरुक्ता भवति ॥६९॥

व्या॥ पंचविंशाक्षरेण ज्ञानवाचिनानेन मकारेण 'शेषत्वाश्रय आत्मा ज्ञानाश्रयः' इत्यचेतनाद्देहादात्मनो व्यावृत्तिरुक्तेत्यर्थः ॥६९॥

---

ज्ञानविषयीभावस्यैव समुदायतारूपत्वात्। सिद्धान्ते अपेक्षाबुद्धिविशेषातिरेकेण सङ्ख्याया अनभ्युपगमाच्च। तादृशैकवचनान्तोऽयम्मकार इति भावः ॥ ६८ ॥

**(६९) (अनेन मकारेण)** इति - कर्तरिव्युत्पन्नेन मकारेणेत्यर्थः। "आत्मनि तिष्ठन्" इत्यादावात्मशब्दस्य जीवे प्रसिद्धिमभिप्रेत्य-**शेषत्वाश्रय आत्मे**त्युक्तम्। **(ज्ञानाश्रयः)** इत्यनेन निरुपाधिकज्ञातृत्वं विवक्षितम्। 'स्थूलोऽहमि' त्यादिप्रतीत्या देहाभेदस्य शङ्कितत्वात्— **अचेतनाद्देहादि**त्युक्तम्। देहशब्दस्याचिद्व्यावृत्तौ तात्पर्यम्। **(व्यावृत्तिः)** भेदः ॥ ६९ ॥

(७०) 'देवोऽहम्, मनुष्योऽहम्, स्थूलोऽहम्, कृशोऽहम्' इति देहेऽहम्बुद्धिव्यवहाराणां दृश्यमानत्वात्, अहमर्थभूतस्यात्मनः कथं देहादविलक्षणत्वमित्यत्राह-देहादिति।

मू॥ देहत्तिल्व्यावृत्ति तत्त्वशेखरत्तिले शान्नोम् ॥७०॥

छा॥ देहाद्व्यावृत्तिं तत्त्वशेखरे अवोचाम ॥ ७० ॥

व्या॥ अनेकहेतुभिर्देहस्यानात्मत्वं साधयद्भिरात्मनस्तद्व्यावृत्तिस्तत्वशेखराख्ये प्रबन्धे व्यक्तमुक्ता, तत्रैव द्रष्टव्येत्यर्थः ॥ ७० ॥

---

(७०) अस्मिन्सूत्रे आदौ पूर्वसूत्रस्थमात्मेतिपदं षष्ठ्यन्ततयानुषञ्जनीयम्। आत्मनः देहाद्व्यावृत्तिमित्यर्थः। अत एव **आत्मनस्तद्व्यावृत्तिरि** त्युक्तम्। **(तत्त्वशेखरे)** इति तत्त्वशब्दः - चिदचिदीश्वररूपप्रामाणिकवस्तुपरः। शेखरशब्देन-स्वोक्ततत्त्वत्रयस्य मोक्षार्थमवश्यज्ञातव्यत्वं दृढतमानेकप्रमाणोपपत्तिसिद्धत्वञ्चाभिप्रेतम्। अत्र प्रतिपाद्यप्रतिपादकयोरभेदोपचारेण तत्त्वशेखर इति प्रयोग इत्यभिप्रेत्याह- **तत्त्वशेखराख्ये प्रबन्ध** इति। प्रमाणोपपत्तिसिद्धार्थवक्तृत्वरूपं पूज्यत्वं स्वस्मिन्दृढमित्यभिप्रायेण-**अवोचामेति** बहुवचनप्रयोगः। तथा च तत्प्रबन्धोक्तन्यायबलादपि देहव्यावृत्तिवत्, ज्ञातृत्वाद्यसङ्कोचस्यापि सिध्या मकारस्य निष्कृष्टात्मपरत्वसिद्धिरिति भावः।

अत्रायं तत्त्वशेखरप्रबन्धग्रन्थः—

"ननु 'स्थूलोऽहं कृशोऽहम्' इति देहे अहंबुद्धिव्यवहारदर्शनात्, अहमर्थभूत आत्मा देह एव। अनयोरहम्बुद्धिव्यवहारयोर्देहातिरिक्तो विषय इति न वक्तुं शक्यते। तस्य स्थौल्यादीनामघटनात्। घटपटादीनामिव पार्थिवस्य शरीरस्य चैतन्यं न घटत इति चेत्; मदशक्तिवत् परिणामविशेषेण घटते। ननु बाल्युवृद्धशरीराणि अन्योन्यं भिन्नानीति वक्तव्यम्, एकत्वे

परिणामभेदो न घटते । भेदे तु बाल्येऽनुभूतस्य यौवने स्मरणं न स्यात्। यदि स्यात् एकेनानुभूतमन्यः स्मरेत् । तन्न पश्यामः । अत्र तु स्मृतिं जानीमः । तस्मादात्मा देहातिरिक्तः विलक्षणस्स्यादिति चेत्; तदप्यनुपपन्नम्। शरीरभेदाभावात् । एकस्यैव कालभेदेन परिणामभेदो घटते । 'बाल्ये दुःखितोऽहं यौवने सुखी भवामि, बालोऽहमेव युवा भवामि' इतिप्रत्यभिज्ञाभिः युवशरीरं पुरातनशरीरमिति सिद्धम् । नो चेत् बाल्येऽनुभूतस्य यौवने स्मरणं न घटते । स्मृतिप्रत्यभिज्ञयोरहमर्थस्यैव हि न हि देहस्येति वक्तुं न शक्यते; देहव्यतिरिक्ताहमर्थस्यादर्शनात् । किञ्च देहेऽतिकालापगमेऽपि 'स एवायम्' इति परस्य जायमाना प्रत्यभिज्ञापि न घटते । प्रत्यभिज्ञायाः देहातिरिक्तो विषय इति वक्तुं न शक्यते । तस्याचाक्षुषत्वात् । प्रत्यभिज्ञा भ्रान्तिरिति वक्तुं न शक्यते । बाधकाभावात्, विपक्षे स्मरणानुपपत्तिरूपबाधकसत्वाच्च । एवं देहेऽहम्बुध्यनङ्गीकारे विधिनिषेधौ, देहात्मभ्रमश्च, तन्निवृत्त्यर्थं शास्त्रश्रवणादिकञ्च न घटते । तस्माद्देह एवात्मा भवितुमर्हतीति चेत्—तदनुपपन्नम् । देहोऽनेकावयवसङ्घातात्मक इत्ययमर्थः सिद्धः । तत्र सर्वेषामवयवानां चैतन्ये सति अनेकचेतनोपलब्धिप्रसङ्गः, अवयवानामन्योन्याविवादनियमः, तत्र ममताबुद्धिः, ममताव्यवहारश्च न घटेत । एकस्यैवावयवस्य चैतन्यस्वीकारे तस्य विच्छेदे अवयवान्तरानुभूतस्यावयवान्तरेण स्मरणं न घटेत । पश्चादहम्बुद्धिव्यवहारौ, ममताबुद्धिव्यवहारौ च न स्याताम् । सर्वशरीरव्यापि सुखदुःखानुभवश्च न घटेत । नावयवसङ्घातात्मकं शरीरम्, किन्त्ववयवि, तत्र चैतन्यमिति वक्तुं न शक्यते; उपलम्भानुपपत्त्यभावेनावयविस्वीकारस्यानुपपन्नत्वात् । किञ्च 'बालदेहोऽहं मन्दज्ञानः; युवदेहोऽहं बहुज्ञानः, मम शरीरम्' इति शरीराहमर्थयोर्जायमाना भेदप्रतिपत्तिः, भेदव्यवहारश्च न घटेताम् । 'ममायमात्मा' इत्यत्रेवामुख्यत्वं वक्तुं न शक्यते; मुख्यत्वे बाधकाभावात् । अथवाऽहंबुद्धेः शरीरमेव विषय इति स्वीकारेऽपि श्रुत्या श्रुत्यर्थापत्तिभिश्च देहातिरिक्तो देहान्तरपरिग्रहयोग्यश्चात्मा सिद्धः । बाह्येन्द्रियाणि च नात्मा भवितुमर्हन्ति । एकस्यैव सर्वेन्द्रियविषयज्ञानात् । एवमनङ्गीकारे 'योऽहमिममर्थं पश्यामि, स एवाहं स्पृशामि' इति प्रतिसन्धानं न घटते । यदि चक्षुरेवात्मा अन्धो रूपं न स्मरेत् । यदि श्रोत्रमेवात्मा, बधिरः शब्दं न स्मरेत् । एवमिन्द्रियान्तरेष्वपि द्रष्टव्यम् । अन्तःकरणमपि नात्मा भवितुमर्हति । स्मर्तुः स्मरणादिकार्याणां करणतया कल्पितत्वात् । इदमेव स्मर-

तीति वक्तुं न शक्यते । स्मरणस्य करणाभावात् । करणमपि स्वयमेवेति न वक्तव्यम् । विरुद्धत्वात् । अन्यत्किञ्चित्करणमित्युक्तौ, तद्बाह्यकरणञ्चेत् - तच्छून्यस्य स्मृतिर्न घटेत । अन्तःकरणञ्चेत्- आत्मनो मन इति नाम कृतं भवेत् । आन्तरकरणमनपेक्षितञ्चेत् - इन्द्रियार्थसम्बन्धवेलायां सर्वदा ज्ञानमुत्पद्येत । तस्मान्मनोऽपि नात्मा भवितुमर्हति । प्राणा अपि नात्मा । सङ्घातरूपत्वात् । देहात्मपक्षोक्तदूषणानि अत्रापि तुल्यानि । ज्ञानमपि नात्मा । 'मम ज्ञानं, जातम्, नष्टम्' इति क्षणिकत्वेनात्मधर्मत्वेन च भानात् । स्थिरभूतः कश्चनात्मास्तीति "परेद्युर्दृष्टवानहमेवाद्य पश्यामि' इति प्रत्यभिज्ञया सिद्धः"-इति।

अस्यायमर्थः—आत्मनः देहादिवैलक्षण्यं वक्तुं 'यावत्परमतं न निराक्रियते तावत्स्वमतमप्रतिष्ठितम्' इति न्यायेन परमतनिरासार्थं तन्मतमुपन्यस्यति—**नन्वि** त्यारभ्य—**तस्माद्देह एवात्मा भवितुमर्हतीतिचे** दित्यन्तम्। **(स्थूलोहमि)**ति 'अहं जानामी'ति ज्ञातृत्वेन प्रकाशरूपवस्तुन एवात्मत्वावश्यं भावात् 'स्थूलोऽहं कृशोऽहं' इति देहेऽहंबुद्धेः, तथा व्यवहारस्य च दर्शनात्, अहमर्थविषयभूतात्मा स्थौल्यादिविशिष्टप्रत्यक्षसिद्धदेह एव भवितुमर्हतीत्यर्थः । 'स्थूलोऽहम्' इत्याद्यहंबुद्धिव्यवहारयोर्देहातिरिक्तनित्यत्वादियुक्तजीव एव विषय इति सिद्धान्तत्वात्, तदनुवादपूर्वकं तत्पक्षानुगुणं परिहरति—**अनयोरिति ।** चक्षुरिन्द्रियग्राह्यघटपटादीनामिव पार्थिवादिमयाचेतनरूपशरीरस्य 'अहं जानामी' त्यादिरूपज्ञातृत्वं न सम्भवतीति शङ्काभिप्रायः। उत्तरमाह-- **मदशक्तिवदि**ति। पृथिव्यादिव्यतिरिक्ततत्त्वान्तराभावात्, तस्य यादृच्छिकसंसर्गविशेषदशायां किण्वादिद्रव्यविशेषसंसर्गावस्थायां मदशक्तिवत्, विचित्रद्रव्यसंयोगविशेषे विषरसायनादिशक्तिवत्, चूर्णहरिद्रादिद्रव्यसंयोगविशेषे रागकारककाठिन्यादिवच्च स्वभावविशेषवैभवाच्चैतन्यपरिणामः, सुखादिपरिणामश्च भवतीति भावः । "अथ लोकायतं पृथिव्यापस्तेजोवायुरिति तत्त्वानि, तेभ्यश्चैतन्यं, किण्वादिभ्यो मदशक्तिवत्" इति हि सूत्रम्। परिणामविशेषाच्चैतन्याङ्गीकारे सिद्धान्तिचोद्यमनुवदन् परिहरति—**ननु बाल्युवे**ति । देहे मदशक्तिवत्परिणामविशेषेण चैतन्याङ्गीकारे मद्वस्तुसंयोगकालभेदाद्बाल्ययुवादिशरीरमन्योन्यं भिन्नमिति वक्तव्यम् । तस्यैकत्वे बाल्यादिपरिणामभेदो

न घटते। भेदाङ्गीकारे बाल्यावस्थानुभवं यौवने न स्मरेत्। सम्भवति चेत्-स्वभिन्नस्य कस्यचिदनुभवं तद्भिन्नः कश्चित्स्मरेत्। लोके तथा न दृश्यते। बाल्यानुभवस्य यौवनादिदशायां स्मरणस्य दर्शनात्। तस्मात्सर्वकालीन-विषयस्मर्तात्मा तदनर्हदेहाद्भिन्न इत्यवश्यमङ्गीकरणीयमिति शङ्कावाक्यार्थः। (**बाधकाभावादि**)ति-बाधकस्थले हि ज्वालानुमानेन प्रत्यक्षदृष्टदीपज्वा-लैक्यस्य भिन्नत्वमङ्गीकृतमिति भावः। (**विधिनिषेधौ**) इति-शास्त्रे हि 'ब्राह्मणो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्यादिरूपेण विधिनिषेधौ दृश्येते। ब्राह्मणत्वादिकन्तु देहस्यैवेति सर्वसम्मतमिति भावः।

अथ सिद्धान्तमारभते—**तदनुपपन्नमिति**। (**अनेकावयव-सङ्घातात्मकः**) इति शिरःपाण्यादिरूपानेकावयवसमुदायात्मको देह इत्ययमर्थः प्रत्यक्षप्रमाणसिद्ध इत्यर्थः। (**सङ्घातात्मक**) इत्यनेन देहस्य-पारार्थ्यं सिद्धम्। यत्परार्थं तत्संघातात्मकं दृष्टम्। यथा रथादिः। देहो नात्मा-सङ्घातात्मकत्वात्। यस्य यस्य सङ्घातात्मकत्वं तस्य तस्य परार्थत्वम्। यथा रथादयः। देहो नात्मा, परार्थत्वात्। घटवत्। तदुक्तमात्मसिद्धौ यामु-नदेशिकैः—"न च शरीरमनन्यार्थम्। सङ्घातत्वात्। सङ्घाता हि सर्वे परार्थाः दृष्टाः, शयनासनरथादयः। अपरार्थं स्वमात्मानमात्मार्थेऽन्यच्च जानतः। सङ्घातत्वात्परार्थेऽस्मिन्देहे कथमिवात्मधीः" इति। देहात्मवादं प्रत्येकसमुदाय-चैतन्यादिविकल्पमुखेन दूषयति—**तत्रेति**। तत्र शिरःपाण्यादिरूपाणाम-वयवानां रूपादिमत्त्वमिव प्रत्येकमेव चैतन्यमिति प्रथमः पक्षः। द्वित्वा-दिकमिव समुदायपर्याप्तमेकमेव चैतन्यमिति द्वितीयः पक्षः। अवयवारब्धा-तिरिक्तावयविनिष्ठश्चैतन्यमिति तृतीयः। तत्र प्रथमं प्रत्येकपक्षं दूषयति—**तत्रे**ति। दूषणान्तरम्—**अवयवानामि**ति। शिरःपाण्यादिरूपाणामव-यवानां बहुत्वात्, अन्योन्याविवादनियमो न सम्भवति; प्रतिनियतविषय-त्वात्, परस्य अनुभूतार्थप्रतिसन्धानानुपपत्तिः, 'मम वस्त्रं मम गेहम्' इत्यादि-वत् 'मम शिरो, मम पाणिर्मम शरीरम्' इत्यादि स्पष्टतरभेदप्रतीतिः, तथा भेदव्यवहारश्च न सङ्गच्छत इति भावः। प्रतिसन्धानञ्च दृश्यते हि 'योऽहं घटमद्राक्षं, सोऽहमिदानीं स्पृशामी'ति। समुदायपक्षदूषणमाह—**एकत्वे**

ति । शिरः पाण्यादिसमुदायात्मके शरीरे एकदेशस्य चैतन्यांगीकारे तन्नाशे चैतन्यविलोपप्रसङ्गः, अवयवान्तरेण तत्स्मरणानुपपत्तिश्च स्यादिति हृदयम् । शिरः पाण्यादिरूपसमुदायिनामेव सङ्घातशब्दवाच्यत्वे प्रत्येकपक्षदोषानतिवृत्तिश्च स्यादिति भावः । नच "प्रत्यक्षमेकं चार्वाकाः" इति प्रत्यक्षमात्रप्रामाण्यवादिनं चार्वाकं प्रति नानुमानमुपन्यासार्हमिति वाच्यम् ; चार्वाकैकदेशिभिः "लोकायतम्" इत्यत्रायतशब्दविवक्षितमनुमानमपि प्रत्यक्षान्तर्भावेण गृह्यते । अतस्तान्प्रति अनुमानोपन्यासो युज्यत इति ध्येयम् । तदुक्तमाचार्यैस्सर्वार्थसिद्धौ "ये तु लोकायतमित्यत्रायतशब्दविवक्षितमनुमानमपि प्रत्यक्षान्तर्भावेण तत्फलतया वा गृह्णन्ति, तान्प्रत्यनुमानान्याह—सङ्घातत्वादिभिरिति" इति । दूषणान्तरमाह—**पश्चादिति, सर्वशरीरे**ति च । तृतीयपक्षं दूषयितुमाशङ्कते—**नावयवे**ति । चार्वाकमतेऽपि हि अवयवी नास्त्येव । त्रसरेणुपुञ्जस्यैव घटादिरूपत्वाभ्युपगमात् । तथापि गत्यभावात् तदभ्युपगम्यते । दूषणमाह—**उपलम्भे**ति । प्रत्यक्षविरोधे कल्पनायुक्ता, तदत्राभावात् न कल्पना युक्तेति भावः ।

**(अवयविस्वीकारस्यानुपपन्नत्वात्)** इति—अवयवी नामअवयवसमुदायारब्धो द्रव्यविशेषः । यथा तन्त्वारब्धः पटः । स चावयवसमुदायातिरिक्त इति तार्किकाः । भाष्यकारास्तु-यद्यवयवावयविनोर्भेदः, तर्हि तन्त्वादिसमुदायनिष्ठगुरुत्वापेक्षयातिरिक्तपटादिषु गुरुत्वमङ्गीकार्यम् । तत्कार्यन्तु नोपलभ्यते । अपि च नामसङ्ख्याव्यवहारबुध्याकारकालादिभेदो न भेदनिर्वाहकः। द्रव्याभेदेऽपि अवस्थाभेदेन तत्सम्भवात् । दृष्टश्च पुत्रताटङ्काद्यवस्थाभेदेनैकस्यैव द्रव्यस्य नामव्यवहारादिभेदः । किञ्चावयवावयविनोर्भेदे सत्युभयोरपि स्पर्शवत्त्वाविशेषादन्योन्यप्रतिघातस्स्यात् । किञ्च दीर्घैकतन्तुभ्रमणजनितस्य पटस्य तन्त्वभिन्नत्वमवश्यं वक्तव्यम् । एवमेव बहुतन्तुपरिभ्रमणजनितस्यापि तदभिन्नत्वे किं बाधकम् । अपि च तार्किकाणाम्मते पदार्थान्तरकल्पना गौरवं महत् । अस्माकन्तु क्लृप्तेष्वेव पदार्थेषु नामव्यवहारादिभेदस्योपपत्तिः, कल्प्यते । अवयविपरिषत्सेनाराशिवनादिव्यवहाराणान्तु तत्तत्संयोगवैलक्षण्यमेव नियामकमिति न किञ्चिद्बाधकमिति-प्राहुः । अत एवाचार्यैः परमतभंगरहस्ये "सम्प्रतिपन्नोपादानावस्थाविशेषा-

हते अपूर्वः कश्चिद्द्रव्यविशेष इति प्रत्यक्षादिभिरसिद्धेः" इत्यनुगृहीतम् अतोऽवयवसङ्घातात्मकव्यतिरिक्तावयविस्वीकारोऽनुपपन्न इत्यभिप्रायेण— **अवयविस्वीकारस्यानुपपन्नत्वादि** त्युक्तमिति ध्येयम् ।

एवं प्रत्येकसमुदायादिविकल्पदोषोक्त्या "पृथिव्यापस्तेजोवायुरिति तत्त्वानि, तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्" इति प्रलापोऽपि निरस्तः। संहन्यमानावयवगतरसविशेषादिवत्, सङ्घातदशायां प्रत्यवयवं मदशक्तेरवश्यम्भावात्।किञ्च नानावर्णैस्तन्तुभिरारब्धेऽपि पटे तन्तुगतरूपातिरेकेण रूपान्तरस्य वा,अवयवभेदव्यवस्थितमधुराम्लरसव्यतिरेकेण आम्रादिफले रसान्तरस्य वा अतिपक्वाल्पपक्वभागभेदव्यवस्थितपूतिगन्धसुरभिगन्धातिरेकेण नागवल्लीपर्णे गन्धान्तरस्य वा, भागभेदव्यवस्थितकठिनसुकुमारस्पर्शव्यतिरेकेण कदलीदले स्पर्शान्तरस्य वा, वृक्षादौ मूलमध्यादिभागव्यवस्थितमहदल्पान्तरपरिमाणव्यतिरेकेण परिणामान्तरस्य वानुपलब्धिपराहतत्वेनावयवगतचैतन्यस्यैव वक्तव्यत्वात् । ननु नानावर्णतन्त्वारब्धपटे चित्राख्यं रूपान्तरमभ्युपगन्तव्यम्; इतरथावयविनो निरूपत्वेनाचाक्षुषत्वप्रसङ्ग इति चेन्न; "चित्रश्चेदेकता न स्यादेकश्चेच्चित्रता कथम्? । एकश्च तच्च चित्रञ्च तन्तुचित्रान्तरम्भवेत्" इत्यादिभिर्दूषितत्वात् । रूपैकार्थसमवायेन चाक्षुषत्वोपपत्तेः। एतेनाम्लकर्पूरादिषु विषशक्तिवत् चूर्णहारिद्रासंसर्गजरूपादिवदित्यादि प्रलापोऽपि परास्तः । तत्रापि परस्परसंयोगेन संहन्यमानावयवेष्वेतदंगीकरादिति बोध्यम्।

सर्वपक्षसाधारणं दूषणमाह—**किञ्चेति** । ननु 'मम शरीरम्' इत्यादिप्रतीतभेदनिमित्तः प्रतीयमानः शिलापुत्रकशरीरव्यपदेशवदौपचारिको युक्त अश्रयितुं; 'ममात्मे'ति वदतीति चेत् तत्राह — **ममायमात्मेति** । तत्रास्मच्छब्दस्यात्मनि वृत्तेरैकार्थ्यात्, अविवादाच्च युक्तं तथाश्रयणम्; नचैवमत्र । अतो देहव्यतिरेकिणश्चेतनस्य प्रत्यक्षसिद्धत्वात्, तत्सम्बन्धिनि लाक्षणिको देहेऽहंशब्दप्रयोगः । बाह्यविषयेषु परस्परविरुद्धरूपपरिमाणसङ्ख्यासन्निवेशग्रहणेन व्यतिरेकस्य स्फुटत्वात् ।आत्मनि तादृशरूपान्तराग्रहणेन देहाभेदप्रतिभासभ्रमोऽविवेकिनामित्याद्यर्थोऽनुसन्धेयः। **(मुख्ये बाधकाभावात्)** इति-अयम्भावः-'मम हस्तः,मम शरीरम्' इत्यादिप्रत्ययाः'मम गृहम्' इत्यादिवत् व्यक्तव्यतिरेकाः।'ममात्मे'ति धीस्तु 'घटस्य स्वरूपम्' इतिवदभेदेऽपि निर्दिष्टविशिष्टांशानिष्कर्षगोचरतया तन्मात्रभेदस्थापिकागत्या स्वीकृता। नान्यत्रापि । अतिप्रसङ्गादि-

ति। उक्तञ्च तत्त्वमुक्ताकलापे-"ममात्मेत्यगत्या" इति। "मम शरीरम्" इतिप्रत्ययस्य बाधितान्यार्थशिलापुत्रशरीरादिदृष्टान्तोऽनुपपन्नः; 'ममात्मा' इत्यत्रात्मशब्दः—स्वरूपपर्यायः। अतः 'मम गृहम्' इतिवत् अर्थान्तरप्रदर्शकशरीरशब्दस्य दृष्टान्तो न भवति" इति च परमतभङ्गरहस्ये।

ननु 'नहि दृष्टेऽनुपपन्नं नाम' स्थूलोऽहम्' इत्यबाधितप्रतीतिसिद्धदेहात्मैक्ये न विमतिः कार्या 'मम देहः' इत्यादिप्रतीतीनाञ्च 'ममात्मा' इत्यादिवदुपपत्तेः।कदापि 'नाहंस्थूलो, नाहं ब्राह्मणो, मम स्थूलो, मम ब्राह्मणः' इति व्यतिरेकप्रतीत्यभावात्, देहात्मैक्यं न शास्त्रमन्तरेण सुनिरसमिति ये मन्यन्ते तेषां मतमुपन्यस्यति—**अथवेति**। उक्तं न्यायसिद्धाञ्जने "आगमेनैवास्य देहव्यतिरेकसिद्धिरित्येके। यथोक्तमात्मसिद्धौ "आनुमानिकीमप्यात्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियास्संगिरन्ते इति" इति। तत्त्वमुक्ताकलापे च—"स्याद्वासौ चर्मदृष्टेरयमहमितिधीर्देह एवात्मजुष्टे निष्टप्ते लोहपिण्डे हुतवहमतिवद्भेदकाख्यातिमूला। श्रुत्यर्थापत्तिभिश्च श्रुतिभिरपि च नस्सर्वदोषोज्झिताभिर्देही देहान्तराप्तिक्षम इह विदितस्संविदानन्दरूपः" इति। **(श्रुत्या)**-"पञ्चविंशोऽयं पुरुषः" इत्यादिश्रुत्या। **(श्रुत्यर्थापत्तिभिः)**-श्रुत्या भाविता, अर्थापत्तयः, श्रुत्यर्थापत्तयः, ताभिः। श्रुतार्थापत्तिभिरिति यावत्। **(देहातिरिक्तः)** इति-सन्ति हि देहान्तरानुभाव्यस्वर्गस्वाराज्यादिसाधनविधायिन्यो यमनरकादिप्रापकश्रुतयश्च। न च तत्रानाश्वासः। श्रुतिप्रामाण्यस्थापनात्। अतोऽर्थादापद्यते'देहान्तरानुयायी भोक्तास्ती'ति। पश्वादिदृष्टफलसाधनविधयश्च, तत्फलोपायदशानुवृत्तभोक्तृसापेक्षाः। न चात्र सङ्घातस्य भोक्तृत्वम्। उपायसाधकसङ्घातस्योपचयादिना भिदुरस्यानुवृत्त्यसम्भवात्। 'अहमुपायानुष्ठाता तत्फलं भुञ्जे' इति च स्वरूपतः कालतश्च भिन्न एकः प्रतिसन्धीयते। मुक्त्युपायविधयश्च सर्वबन्धनिवृत्तिमदात्मस्थित्याक्षेपकाः। अत्रेदं बोध्यम्—देहातिरिक्तात्मस्वीकारे एकजातीयमातापितृव्यापारजनितदेहवैलक्षण्यं कथमुपपद्यते?। नहि तत्र दृष्टं कश्चिन्नियामकमुपलभ्यते। अतोऽदृष्टस्यैव देहोत्पत्तिहेतुभूतस्य तन्नियामकता वाच्येति तादृशादृष्टजनकव्यापाराश्रयो देहातिरिक्तः कश्चिद्देहोत्पत्तेः प्रागेवास्तीत्यवश्यमभ्युपगन्तव्यम्। एवं बालस्योत्पत्तिदशायामेव स्तन्यपाने प्रवृत्तिरिष्टसाधनताज्ञानमन्तरा न संभवति। इष्टसाधनताज्ञानञ्च जन्मान्तरानुभवाहितसंस्कारजन्यस्मृत्यतिरिक्तं तदानीं दुरुपपादमित्यात्मनो देहातिरिक्तत्वमावश्यकमिति।

ये पुनस्सत्यपि देहेषु सुषुप्तिदशायामिन्द्रियेषूपरतेषु चैतन्यानुपलम्भात् न देहस्य चैतन्यम् । अपितिन्द्रियाणामेव । अपि च चक्षुराद्यन्वयव्यतिरेकानुविधायिरूपादिज्ञानं तन्निष्ठमेवोचितम् । व्यपदिशन्ति च 'चक्षुः पश्यती'त्यादि । तथा 'स्पर्शनसुखो वायुः, श्रवणकटुः शब्दः' इति । किञ्चेन्द्रियेषु सकलेषु विकलेषु वा 'अहं सकलो विकलः' इति प्रतीयन्ति । अत इन्द्रियाणामेवात्मत्वमिति मन्यन्ते;तन्मतं प्रतिक्षिपति-**बाह्येन्द्रियाणी**ति । अत्र विकल्पेन दूषणमभिप्रेतम् । तथा हि किं प्रत्येकमिन्द्रियाणि चेतनानि ? सम्भूय वा ? । यदि प्रत्येकं, इन्द्रियान्तरदृष्टस्येन्द्रियान्तरप्रतिसन्धानं न स्यात् । अस्ति च तत् 'यमहमद्राक्षं, तमहं स्पृशामि' इति । अत एव न सम्भूयापि चेतनत्वम् । न हि पञ्चभिरिन्द्रियैस्सम्भूय एकंवस्त्वनुभूयते। अनुसन्धीयते वा । एकेन्द्रियविगमे च प्रायणप्रसङ्गश्च। इन्द्रियचैतन्ये च तत्तदिन्द्रियापाये तदिन्द्रियार्थस्मरणमपि न भवेदिति । अत्रायम्भावः— बाह्येन्द्रियाणां न स्वप्नद्रष्टृत्वसम्भवः । तेषां तदानीमुपरतत्वात् । नापि जाग्रच्छरीरस्य । तदानीं तत्प्रविभासविरहेणाहंप्रत्ययगोचरत्वासम्भवात् , चेतयितृत्वासम्भवाच्च । स्वाप्नव्याघ्रादिशरीरस्य चासत्त्वेन न तस्य चेतयितृत्वसम्भवः । अतो देहबाह्येन्द्रियविलक्षणो जीवो अङ्गीकर्तव्यः— इति ।

अस्तु देहाच्चक्षुरादिभ्यश्चान्यः आत्मा । स तु मन एव स्यात्, देहादेरन्यत्वात्, एकत्वेन प्रतिसन्धानोपपत्तेः, असङ्घातरूपत्वेन प्रबोधादिविकल्पानवकाशाच्च । तदतिरिक्तात्मक्लृप्तौ तु गौरवम् । अतो 'मम मनः' इति भेदोक्तिः क्लृप्तगत्येति । तत्राह – **अन्तःकरण**मिति । **(करणत्वेन)** इति - करणत्वन्तु - पराधिष्ठानाधीनव्यापारतारूपपारतन्त्र्यनियतं साधकतमत्वम् । तस्मिन्स्वातन्त्र्यकल्पना न युक्तेति भावः । मनसः करणत्वम्— "मनसा ह्येव पश्यति" इत्यादि श्रुत्या 'सुखादिसाक्षात्कारस्सकरणकः, साक्षात्कारत्वात् ; चाक्षुषादिवत्' इत्यनुमानेन वा सिद्धम् । वास्यादेः करणस्य कर्तृभेददर्शनात् । तथा मनसः करणतयैव सिध्या तत्र कर्तृभेदावश्यंभावादिति भावः । **(स्मरणस्य करणाभावात्)** इति— स्वस्य स्वयमेव स्मृत्यादिकरणमित्यत्र मानाभावादिति भावः**(विरुद्धत्वात्)**

इति - ज्ञानकरणतयावगतस्य मनसः कथमिव ज्ञाने कर्तृत्वम् ? । स्वातन्त्र्यलक्षणं हि तत् । "स्वतन्त्रःकर्ता" इति स्मृतेः । तच्च स्वच्छन्दानुरोधेन साध्यसिद्ध्यनुगुणोपकरणसंपादनसामर्थ्यम् । स्वसमवेतमेव वा गुणान्तरं तन्त्रीकृत्य प्रवृत्तिः । करणत्वन्तु - पराधिष्ठानाधीनव्यापारतारूपपारतन्त्र्यनियतं साधकतमत्वम् । "साधकतमं करणम्" इति स्मृतेः । अतः कथमिवैकत्र मनसि परस्परविरुद्धतदुभयधर्मसम्बन्धमित्यर्थः । यदि मनः करणान्तरेण स्मरणादिषु कर्तृभावमनुभवतीति मतम्, तन्न ; विकल्पासहत्वात्, इत्याह—**अन्यदि**ति । **(तच्छून्यस्य)** इति—चक्षुरादिविकलकरणानामित्यर्थः । **(स्मृतिर्न घटते)** इति - चक्षुरादिविकलकरणानामपि पूर्वानुभूतपदार्थप्रतिसन्धानदर्शनात् इति भावः ।**(आत्मनो मन इति)** इति - य एव हि चक्षुरादिभिः रूपादीन् आन्तरकरणेन च सुखादींश्चेतयते, स एवात्मा । तस्मिन्नेव चेन्मनस्संज्ञा निवेश्यते, कामं निवेश्यताम्, न नः किञ्चिद्धीनम्, किन्तु तथा सार्वलौकिकव्यवहारो बाध्येतेति भावः । दूषणान्तरम्— **अन्तःकरणमनपेक्षितञ्चेदि**ति । **(तस्मादि)**ति—अत्रायमर्थोऽप्यनुसन्धेयः-"एकादशं मनश्चात्र देवा वैकारिकास्स्मृताः" "एका कन्या दशेन्द्रियाणि मन एकादशम्" इत्यादिशास्त्रेषु सात्त्विकाहङ्कारजन्यत्वश्रवणात्, मनसो नित्यत्वासम्भवान्नात्मस्वरूपत्वमिति ।

ये तु देहेन्द्रियादिमनःप्रवृत्तेः प्राणाधीनत्वदर्शनात्, "प्राणोऽस्मि प्रज्ञात्मा" इत्यादौ प्राणात्मशब्दयोस्सामानाधिकरण्यदर्शनात्, प्राणस्थित्यपगमाभ्याञ्च 'जीवस्तिष्ठति, नष्टः' इति व्यवहारयोर्दर्शनाच्च प्राणानामात्मत्वं मन्यन्ते । तन्मतं प्रतिक्षिपति-- **प्राणा अपीति** । देहात्मवादे निर्दिशितान्दोषान् अतिदिशति-- **देहात्मपक्षोक्ते**ति। प्राणानामपि वाय्ववयवसङ्घातरूपत्वेन प्रत्येकचैतन्यावश्यम्भावेन बहुत्वात्, परस्पराविवादनियमानुपपत्तेः, 'मम प्राणाः' इति व्यतिरेकप्रतीतेश्च नात्मत्वमिति भावः । "निरस्ते देहचैतन्यप्रतिषेधप्रकारतः । प्राणात्मवादे न पृथक्प्रयोजयति दूषणम्" इति यामुनदेशिकसूक्तिः ।

ननु अस्तु संविदेवात्मा ; जडत्वस्यानात्मत्वव्यापकतया व्यापकजडत्वव्यतिरेकेण व्याप्यस्यानात्मत्वस्य व्यतिरेकावश्यम्भावात् । किञ्च योऽपि संविदोऽन्यं संवेदितारमभ्युपगच्छति, सोऽपि संविदभ्युपगच्छत्येव; न ह्यसत्यां संविदि संवेत्तीत्युपपद्यते । अत उभयवादिसंप्रतिपन्नस्वप्रकाशसंविदेवात्मेति प्रकटसौगताः। तान्प्रति वक्ति—**ज्ञानमपीति। (क्षणिकत्वम्)** अनित्यत्वम्। **(आत्मधर्मत्वेने)**ति—'मम ज्ञानं जातम्' इत्यात्मनः कर्तुर्धर्मतया करणत्वेन दर्शनात् न धियः आत्मत्वमिति भावः । ज्ञानस्यात्मत्वाङ्गीकारे प्रतिसन्धानानुपपत्तिरूपदोषमाह— **स्थिर** इति । इदञ्च सर्वमतसाधारणं दूषणमप्यन्तव्यम् । उक्तप्रत्यभिज्ञया ज्ञातृत्वास्थिरत्वयोर्विषयीकरणात्, अनात्मत्वं क्षणिकत्वधर्मत्वेन प्रतीयमानस्य ज्ञानस्य सिद्धमिति हृदयम्—इति ।

देहादिवैलक्षण्यञ्चात्मनः ऋषिभिराग्नेयपुराणे कण्ठत उक्तम्—"देह आत्मा न भवति दृश्यत्वाच्च घटादिवत् । प्रसुप्ते मरणे देहादात्मान्यो ज्ञायते ध्रुवम् ॥ देहस्सचेद्व्यवहरेदविकारादिसन्निभः । चक्षुरादीनीन्द्रियाणि नात्मा वै करणत्वतः ॥ मनो धीरपि आत्मा न दीपवत् करणत्वतः । प्राणोऽप्यात्मा न भवति सुषुप्ते चित्प्रभावतः ॥ जाग्रत्स्वप्ने च चैतन्यं सङ्कीर्णत्वान्न बुध्यते । विज्ञानरहितः प्राण स्सुषुप्तौ ज्ञायते यतः ॥ अतो नात्मेन्द्रियं तस्मादिन्द्रियादिकमात्मनः। अहङ्कारोऽपि नैवात्मा देहवद्व्यभिचारतः ॥ उक्तेभ्यो व्यतिरिक्तोऽयमात्मा सर्वहृदि स्थितः । सर्वद्रष्टा च भोक्ता च नक्तमुज्ज्वलदीपवत् ॥" इति ॥७०॥

(७१) इत्थं प्रणवस्याक्षरत्रयं व्याख्यातम् । अथ तत्क्रमस्समर्थ्यत इति सङ्गतिः। **(तत्र हेतु माहे)**ति - आत्मानो ज्ञातृत्वभोक्तृत्वापेक्षया शेषत्वस्यैवोत्कर्षत्वादिति भावः । यद्यपि पूर्वमेव शेषत्वस्य ज्ञातृत्वाद्यपेक्षयोत्कर्षस्साधितः ; तथापि ज्ञातृत्वाद्यभावापेक्षया शेषत्वाभावस्य भगवतोऽत्यन्तानिष्टावहत्वेन शेषत्वस्योत्कर्षः पूर्वसाधितः । अत्र तु शेषत्वस्य ज्ञातृत्वाद्यपेक्षया भगवदत्यन्तेष्टावहत्वेनोत्कर्षस्साध्यत इति न गतार्थता

(७१) धर्मिस्वरूपकथनपूर्वकं तद्धर्मभूतशेषत्वकथनस्य प्राप्तत्वेऽपि प्रथमं शेषत्वमुक्त्वानन्तरमात्मनः कथनं कथमिति शङ्कायां तत्र हेतुमाह—परिमलेनेत्यादि वाक्यत्रयेण ।

मू॥ मणत्तैयुमोलियैयुडैत्तोण्डु पूवैयुं रत्नत्तैयुं विरुम्बुमापोले, 'शेषम्'एन्नुआत्मावै आदरिक्किरदु। अल्लादपोदु "उयिरिनाल्कुरैविलम्" एन्गिरपडिये त्याज्यन्। अदुतोन्र शेषत्वत्तै च्चोल्लि प्पिन्नै आत्मावै च्चोल्लुहिरदु ॥

छा॥ परिमलेन तेजसा च पुष्पं रत्नञ्चाद्रियते, एवं 'शेषः' इति आत्माद्रियते। अन्यथा "आत्मना न प्रयोजनम्" इत्युक्तप्रकारेण त्याज्यः । एतद्ज्ञापनाय शेषत्वमुक्त्वा पश्चादात्मानमाह ।

व्या॥ परिमलाश्रयत्वात्पुष्पं यथाद्रियते, प्रभाश्रयत्वाच्च यथा रत्नम्; एवं शेषत्वाश्रयत्वादात्माद्रियते। शेषत्वाश्रयत्वाभावे तु "भगवच्छेषत्वरहितेनात्मना न मे प्रयोजनम्" इत्युक्तप्रकारेण त्याज्यो भवति । इत्येवं शेषत्वस्यातिशयज्ञापनाय शेषत्वोक्तिपूर्वकमात्मोच्यत इत्यर्थः ॥ ७१ ॥

---

(परिमलेने)ति - सजातीयपुष्पोत्कर्षरूपपरिमलेनेत्यर्थः ।
(तेजसा चे)ति - सजातीयरत्नोत्कर्षरूपतेजसा चेत्यर्थः। एकगन्धव्यक्ति-

विशेषनिष्ठपुरुषानुकूलत्वलक्षणभोग्यतायां, सर्वगन्धान्तरनिष्ठतादृशभोग्यतानामन्तर्भावात्, एकरत्नप्रभाव्यक्तिनिष्ठभोग्यतायां सर्वरत्नप्रभान्तरनिष्ठभोग्यतानामन्तर्भावाच्च, गन्धप्रभयोः पुष्परत्नोत्कर्षरूपत्वमित्यभिप्रेतम्। (पुष्पं रत्नञ्च) इति - सर्वोत्कृष्टपुष्पव्यक्तिविशेषम्, सर्वोत्कृष्टरत्नव्यक्तिविशेषञ्चेत्यर्थः। अत्र च दृष्टान्तद्वयोक्त्या - पुष्परत्नयोः परिमलप्रभारूपभोग्याकारयोर्व्यवस्थायां सत्यामपि, तदुभयानुभवितॄणां भोगतारतम्यं नास्तीति व्यज्यते। (शेषमेत्तु) - शेष इति ज्ञात्वेत्यर्थः। अत्र 'आत्मे' ति वक्ष्यमाणात्मा विभक्तिपरिणामेन विशेष्यत्वेनाकृष्यते। तथाच प्रणवेन नमसा चानन्यार्हशेषत्वरूपोत्कर्षवत्तयात्मानमनुसन्धायेत्यर्थः। (आत्माद्रियते) इति - "यमाहास्मै कालम्" इत्याद्युक्तरीत्या 'सर्वविधकैंकर्यविशिष्टवेषेणात्मविषयकप्रार्थनावानहं नारायणाय स्याम्' इत्येवं तृतीयपदेन क्रियत इत्यर्थः। तथाच शेषवृत्तेर्ज्ञानभक्तिपूर्वकतया शेषवृत्तिमत आत्मनो भोग्याधिक्येन भगवत्प्रियत्वाधिक्यात्, तदुभयानुभवितुस्स्वस्य परमात्मनश्चानन्दतारतम्यप्रसङ्गाभावाच्च दार्ष्टान्तिके शेषत्वमुत्कर्ष इति वक्तुं युक्तमिति भावः।

इत्थं, एकस्मिन्भोग्ये सजातीयसर्वभोग्यान्तर्भावलक्षणसाधनानुगृहीतेन भोग्यतानामाश्रयभेदेन न्यूनाधिकभावतारतम्य व्यवस्थासत्त्वेऽपि, तादृशसर्वभोग्यभोक्तॄणां भोगतारतम्याभावलक्षणबाधकाभावानुगृहीतेनासङ्कोचसहकृतेन च मूलमन्त्रेण 'सर्वप्रकारानन्यार्हशेषवृत्त्यर्होऽहं तथैव स्याम्' इत्येवं मकारोक्तज्ञानभोगप्रार्थनमन्तरेण सर्वप्रकारानन्यार्हशेषशेषवृत्तिप्रार्थनाप्रतिपादनेन प्रणवगतोद्देश्यविधेयव्यत्यासमूलभूते शेषत्वोत्कर्षे मूलमन्त्र एवान्वयमुखेन प्रमाणमिति सूचितम्।

अथ शेषत्वाभावे आत्मानादरणीयत्वरूपव्यतिरेकप्रतिपादनमुखेन तत्र प्रमाणभूतां "न हि मे जीवितेनार्थो न वस्त्रैर्न च भूषणैः" इत्यादि श्रीरामायणतश्श्रीसीतादेवीसूक्त्युपबृंहणभूतां मूलमन्त्रोक्तप्रार्थनस्य शेषत्वाभावे सर्वप्रकारावच्छिन्नात्मानादरणीयत्वप्रतिपादनरूपव्यतिरेकमुखेन दशधा विवरणभूतासु गाथासु शिरोरत्नभूतां "न देहम्" इत्यादि दशगाथाविवरणभूतयामुनाचार्यानुगृहीतैकश्लोकेन शपथोक्तिमुखेन दृढीकृतां श्रीशठकोपमुनिसूक्ति

कण्ठत उपपादनेन मुख्यप्रमाणतया शृङ्गग्राहिकन्यायेन दर्शयन्, शेषत्वोक्तिं, स्वयमपि व्यतिरेकमुखेन विवृणोति द्वितीयवाक्येन--**शेषत्वाश्रयत्वाभाव** इति। अनेन कालिकीव्यतिरेकव्याप्तिस्सूचिता। **(आत्मने)**त्यनेन — "स्वात्मा स्वस्यानुकूलो हीत्यात्मसाक्षिक एव सः" इत्युक्तं निरतिशयभोग्य-भूतं निष्कृष्टात्मस्वरूपमुच्यते। अनेन—पूर्वतननवगाथास्वनादरणीयेत्वेनोक्ताः भोग्यभूता देहधर्माः आत्मधर्मा देहश्च व्यावर्त्यन्ते।अत्र यत्सम्बन्धाद्देहादेर्भोग्य-त्वम्,सोऽप्यनादरणीय इत्युच्यते। (त्याज्यः) इति—तादृशात्मनो नोपेक्षणी-यत्वमात्रम्, किन्तु द्वेष्यत्वमेवास्तीत्यर्थः। **(त्याज्यः)** इति पुल्लिङ्गनिर्दे-शेन शेषत्वरहितस्य पुरुषाधमत्वं ध्वन्यते।

इत्थं शेषत्वोत्कर्षे प्रमाणोपपत्तिसम्प्रदायान्प्रदर्श्य, अनन्तरं सर्ववाङ्मूल-भूताकार एव तत्र प्रमाणमिति व्यञ्जयन्, 'प्रणवे उद्देश्यविधेयव्यत्यासास्वार-स्यमर्थविशेषसूचकतया न दोषः' इति दर्शयन्, प्रणवाक्षरत्रयक्रमोप-पत्तिरूपपरमसाध्यं निर्दिशति तृतीयवाक्येन — **एतद्ज्ञापना-येति। (शेषत्वमुक्त्वे)**ति — भगवच्छेषवृत्तिफलोपधानव्याप्यान-न्यार्हशेषवृत्तियोग्यतां प्रथमद्वितीयाक्षराध्याहृतक्रियापदैरुक्त्वेत्यर्थः। **(उक्त्वे)**त्यनेनोक्तस्यानन्तर्यस्य दार्ढ्यार्थं पुनरुक्तिः। ज्ञातव्यार्थविशेष-सूचनाय 'म् आयैवास्मि' इत्यन्वयमङ्गीकृत्यापि यथान्यास एव युक्त इति-भावः। **(आत्मानम्)** — निरुपाधिकासङ्कुचितज्ञानत्वज्ञातृत्वानन्दत्वा-नन्दित्वाणुत्वविशिष्टं वस्त्वित्यर्थः। **(उच्यते)**--मकारेणेति शेषः।

अत्र भाष्यम्—"अस्ति ब्रह्मेति चेद्वेद" "सोऽश्नुते सर्वान्कामान्" इत्यादिषु भगवत्स्वरूपरूपगुणादिज्ञानतद्भोगयोरपि पुरुषार्थत्वेनोक्ततया, तादृशज्ञातृत्वभोक्तृत्वापेक्षया भगवच्छेषत्वस्योत्कर्षे मानाभावः। न च भगवच्छे-षत्वाभावे स्वातन्त्र्यबुध्द्यापत्त्या भगवदत्यन्ताप्रियत्वापत्तिरित्युक्ततया, भगवत्प्रियतमत्वापादकं शेषत्वमेवोत्कृष्टमिति वाच्यम्; केवलानुभवपराणां मुक्तानां शिथिलकरणानां भक्तिपारवश्यप्रपन्नानाञ्च स्वातन्त्र्यबुद्ध्यभावेऽपि शेषत्वाभावदर्शनेन व्यभिचारात्। न च तेषां शेषत्वाभावेन निकर्षः प्रमाण-

पथमारोहति, येन शेषत्वमुत्कर्षस्स्यात् । न च "उडम्बुडैयानं कवराद उयिरिनाल् कुरैविलमे" इति दिव्यसूक्तौ दिव्यज्ञानिनां गुणानुभवपरिपूर्णानामपि श्रीशठकोपमुनीनां, सर्वशरीरकस्य भगवतश्शरीरत्वेन सिद्धस्य स्वात्मनश्शरीरलक्षणभूतशेषत्वाभावे अनादरणीयत्वानुसन्धानेन भगवत्स्वरूपज्ञानतद्गुणानुभवापेक्षया तच्छेषवृत्तिरेवोत्कृष्टेति वाच्यम्; "परमं साम्यमुपैति" "मम साधर्म्यमागताः" इत्यादिश्रुतिस्मृतिविरोधेन मुक्तेषु, "ज्ञानी त्वात्मैव मे मतम्" "स महात्मा सुदुर्लभः" इत्यादिस्मृतिविरोधेन मुमुक्षुषु च वैषम्यस्याप्रामाणिकतया तत्सूक्तेश्शेषवृत्तिप्रशंसामात्रपरत्वात् । एतेन "न हि मे जीवितेनार्थः" "न देहम्" इत्यादिसूक्तिरपि व्याख्याता । न च पुष्पस्य गन्धेनोत्कर्षवत्, रत्नस्य तेजसैवोत्कर्षवच्च शेषवृत्त्यैवात्मन उत्कर्ष इति युक्तम्? पुष्पे गन्धाद्यपेक्षया रूपादेः, रत्ने रूपापेक्षया गन्धादेश्चाभोग्यत्वस्य प्रामाणिकतया, तत्र गन्धरूपोत्कर्षेणादरसम्भवेऽपि, मुक्तेषु ज्ञानिषु च ज्ञानानन्दयोश्शेषवृत्त्यपेक्षयाभोग्यत्वाभ्युपगमे आनन्दतारतम्यस्य वज्रलेपत्वात् । तस्मात् शेषवृत्त्युत्कर्षसूचकतया प्रथमोपादानमिति वक्तुमशक्यत्वात्, धर्मिस्वरूपकथनस्योचितत्वाच्च प्रणवस्याकारादिवर्णत्रयक्रमोऽनुपपन्नः । न च "जायागतिग्राहितगन्धमाल्याम् - प्रीतमतिवद्धवत्साम्-धेनुं मुमोच" इत्यादौ सर्वत्र धर्मकथनपूर्वकं धर्मिस्वरूपकथनं, तत्क्रमेण बोधनञ्च दृष्टमिति वाच्यम्; धर्मिशब्दस्योद्देश्यपरतया, धर्मशब्दस्य विधेयपरतया च दोषाभावात् । उद्देश्यविधेययोः प्राथम्यं चारभ्यलक्षणत्वात् । अत एव हि निगमनावयवे उद्देश्यविधेयपरत्वाभावेऽपि दार्ढ्यार्थमनुवादरूपे पुरोवादानुरूप्यायोद्देश्यविधेययोः क्रमेण निर्देशः । इत्थञ्च प्रकृते मकारार्थानुवादे न शेषत्वस्य विधेयत्वात् क्रमो नोपपद्यते—इति ।

सिद्धान्तस्तु-"अस्ति ब्रह्मेति चेद्वेद" "सोऽश्नुते सर्वान्कामान्" इत्याद्युक्तस्वरूपज्ञानगुणानुभवरूपयोर्ज्ञातृत्वभोक्तृत्वयोर्भगवत्प्रीतिमात्रेच्छासाध्यव्यापाररूपत्वे भगवत्प्रियतमशेषत्वरूपतया, स्वप्रीतीच्छयापि साध्यत्वे शेषत्वरूपत्वाभावेन च शेषत्वस्य निरुक्तस्य केवलज्ञातृत्वभोक्तृत्वापेक्षयोत्कर्षरूपत्वस्य प्रणवनमश्शब्दादिसिद्धत्वेन तत्र मानाभाव इत्ययुक्तम् ॥

यद्यपि, केवलानुभवपरेषु मुक्तेषु भक्तिपारवश्यप्रपन्नेषु च स्वातन्त्र्यबुद्ध्यभावेऽपि कायिकशेषवृत्त्यभावेन शेषत्वाभावस्य स्वातन्त्र्यबुद्धिरूपात्मापहारापादकतया भगवदत्यन्तानिष्टत्वेन ज्ञातृत्वभोक्तृत्वाभावापेक्षया वैष-

म्यात्, ज्ञातृत्वभोक्तृत्वापेक्षया शेषत्वस्योत्कर्षासम्भवः, तथापि तेषु स्वरूपज्ञानगुणानुभवयोरेव शेषत्वरूपतया शेषत्वसामान्याभावस्य स्वातन्त्र्यबुध्यापादकत्वं युक्तमिति न दोषः ।

किञ्च केवलानुभवपरेषु भक्तिपरवशेषु परिपूर्णभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैङ्कर्याभावेनासंकुचितशेषत्वस्य तदीयज्ञातृत्वभोक्तृत्वापेक्षयाऽप्युत्कर्षो युक्त एव। अत एव हि "मयर्वर मतिनलमरुलिनन्" इत्युक्त्वाऽपि "वऴुविलावडिमै शेय्यवेण्डुं नाम्" इति प्रार्थनमुपपद्यते । अत एव च "उयिरिनाल् कुरैविलमे" इत्यशेषशेषवृत्त्यलाभेनात्मन्यनादरणीयत्वानुसन्धानमप्युपपद्यते ॥

न च केवलानुभवपरेषु निकर्षाभ्युपगमे श्रुतिस्मृतिविरोधः । अशेषशेषतारूपभगवद्भोग्याधिक्यशालिनां तद्रहितानां च वैषम्यस्य न्यायप्राप्तत्वात् । तथापि भोगमात्रसाम्यपरतया श्रुतिस्मृतिविरोधाभावाच्च । भोग्यानामाश्रयभेदेन व्यवस्थितत्वेऽपि द्विविधमुक्तानां नित्यसूरीणां दिव्यमहिषीणां भगवतश्च स्वपराश्रितस्वाभाविकाकारज्ञानेच्छाकृतिप्रवृत्तिरूपसर्वभोग्यानुभवाविशेषेण तादृशानुभवरूपनिरतिशयानन्दतारतम्याप्रसङ्गात् । "नार्हन्ति शरणस्थस्य कलां कोटतमीमपि" इत्याद्यनुसारेण मुमुक्षुवैषम्यस्य स्फुटत्वाच्च ॥

अत एव ज्ञानभक्तिपरिपूर्णाया अपि श्रीसीतादेव्याः "न हि मे जीवितेनार्थः" इत्यादिनाऽलाभक्लेशानुसन्धानमुपपद्यते । अत एव च "न देहं न प्राणान्" इति परमाचार्यसूक्तौ "शेषत्वविभवात्" इत्यसङ्कुचितशेषवृत्तिसाम्राज्यं निर्दिश्य "नान्यत्किमपि" इति मोक्षसुखेऽप्यनादरोऽनुगृहीतः ।

अत एव च पुष्पेषु रत्नेषु च गन्धस्य तेजसश्च तारतम्येनादरतारतम्यवत्, अनुभवपरेषु भक्तपरेषु च तथात्वं युक्तमिति शेषवृत्त्युत्कर्षप्रमाणानुग्राहकन्यायोऽप्युपपद्यते । गन्धतेजोभ्यां सजातीयसर्वोत्कृष्टेषु पुष्परत्नेषु सजातीयसर्वभोग्यान्तर्भाववत्, स्वरूपज्ञानगुणानुभवपूर्वकाशेषशेषवृत्तिशालिषु सर्वेषामात्मनां परमात्मनश्च सर्वभोग्यलाभस्सम्भवतीति दृष्टान्तदार्ष्टान्तिकयोस्साम्यस्य विवक्षिततया पुष्पेषु रूपानुत्कर्षस्य रत्नेषु गन्धानुत्कर्षस्य च प्रामाणिकत्ववत्, स्वरूपज्ञानगुणानुभवयोश्शेषवृत्त्यपेक्षयानुत्कर्षस्य प्रामाणिकत्वं नास्तीत्युक्तेरनवकाशपराहतत्वात् ।

(७२) पदत्रयात्मकेनानेन प्रणवेन स्थिरीकृतमर्थमाह—एवमिति।

मू॥ आह प्रणवत्ताल् "कण्णपुरमोन्नुडैयानुक्कु अडियेनोरुवर्क्कुरियोनो" एन्गिरपडिये जीवपरसम्बन्धं शोल्लित्तु ॥ ७२ ॥

छा॥ एवम्प्रणवेन "कृष्णपुरैकशरणस्य दासोऽहम्, नान्येषाम्" इत्युक्तप्रकारेण जीवपरसम्बन्ध उक्तः ॥७२॥

---

अत एवानादरोक्तिश्शेषवृत्तिप्रशंसामात्रमित्युक्तेर्न्यायद्वयानुगृहीतप्रमाणाविश्वासमात्रनिबन्धनत्वाच्च मुक्तेषु नित्येषु च भोग्यानां न्यूनाधिकभावव्यवस्थयोस्सत्त्वेऽपि सर्वेषां सर्वभोग्यानुभवितृत्वेनानन्दतारतम्यस्य दूरीकृतत्वाच्च।

तस्माद्धर्मिस्वरूपकथनपूर्वकमेव धर्मस्वरूपस्य वक्तव्यत्वेऽपि पूर्वोक्तरीत्या शेषवृत्त्युत्कर्षसूचकतया शेषत्वस्य प्रथमोपादानमिति वक्तुं शक्यमेव।

इत्थं च न्यायद्वयानुगृहीतश्रीशठकोपमुनिश्रीसीतादेवीपरमाचार्यसूक्तिसिद्धं ज्ञानभक्त्यपेक्षया शेषवृत्तेराधिक्यं सर्ववाङ्मूलभूतप्रणवरूपमुख्यप्रमाणमेव सूचयतीति, प्रणवस्थाकारादिवर्णक्रमो युक्त एवेति सिद्धमिति—इति ॥ ७१ ॥

(७२) इत्थं प्रणवस्थपदार्था व्याख्याताः, अथ प्रणवस्य द्वेधा वाक्यार्थो निरूप्यत इति सङ्गतिः। तत्र पदार्थवाक्यार्थकथनयोर्हेतुहेतुमद्भावसङ्गतिं दर्शयन्, शेषशेषिभावस्य शब्दप्राधान्ये प्रमाणमपि दर्शयन्, प्रणवस्य शेषशेषिभावः प्रधानवाक्यार्थः, इति दर्शयति—**एवं प्रणवेने**ति सूत्रेण। अथ शेषशेषिभावश्शाब्दप्राधान्येन वाक्यार्थ इत्यत्र श्रीमत्सरोयोगिसूक्तेस्स्ववाक्यत्वेन निर्देशमहिम्ना तत्सूक्तिरपि प्रमाणमिति सूचयन्, तत्सूक्तिस्मारणेन श्रियःपतित्वरूपव्यङ्ग्यार्थसंवादमपि सूचयन्, प्रमाणोपपत्तिसम्प्रदायैर्यथोक्तप्रणवार्थो दृढ इति वक्तुं, शेषशेषिभावस्य प्रणववाक्यार्थत्वं निगमयति—**अनेने**ति सूत्रेण। अथार्थप्राधान्येन प्रणववाक्यार्थं सूत्रद्वयेन वक्ष्यन् प्रथमं

व्या॥ प्रागुक्तसर्वप्रकारेण प्रणवेन "कृष्णपुरैकशरणस्य" इति चतुर्थ्यन्ताकारार्थम्, "दासः" इति शेषत्वाश्रयवाचिमकारार्थम्, "नान्येषाम्" इत्यन्यशेषत्वनिवर्तकोकारार्थं वदताम्परकालसूरिणाम्प्रणवार्थानुसन्धानश्रीसूक्तिप्रकारेण जीवपरयोश्शेषशेषिभावसम्बन्ध उक्त इत्यर्थः ॥७२॥

---

प्रधानार्थं दर्शयति—**अकारेणे**ति सूत्रेण। एवं "अकारो वै सर्वा वाक्" इत्यादिविवक्षितो रक्षकत्वरूपः प्रणवस्यार्थतः प्रधानभूतो वाक्यार्थ उक्तः। तस्य प्रधानभूतवाक्यार्थत्वं समभिव्याहृतपदत्रयार्थानां तच्छेषत्वं विना न सम्भवतीति तत्पदत्रयमध्ये मकारस्य योग्यतानुगृहीतसमभिव्याहारबलेन रक्षणप्रतियोगिव्यञ्जकतयाऽन्तरङ्गत्वान्मकारस्य शेषत्वमप्युक्तम्। अथ विभक्त्युकारयोः रक्षणहेतुपरत्वेन वहिरङ्गत्वात् तदर्थयोश्शेषत्वं प्रदर्शयति—**चतर्थ्येति** वाक्येनेति विवेकोऽनुसन्धेयः॥

ननु प्रणवस्य द्वेधा वाक्यार्थो न सम्भवत्येव। द्विविधवाक्यार्थस्यैव दुर्निरूपत्वात्। तथा हि जीवेश्वरयोश्शेषशेषिभावस्तावन्न प्रणवस्य प्रधानभूतो वाक्यार्थः; जीवेश्वरयोः रक्ष्यरक्षकभावस्यापि प्रणवप्रतिपाद्यत्वाभ्युपगमेन विनिगमनाविरहात्। "पिता च रक्षकश्शेषी भर्ता ज्ञेयो रमापतिः" इति कूटस्थसम्प्रदायसूक्त्यनुसारेण पञ्चविधसम्बन्धानां प्रणवप्रतिपाद्यत्वाभ्युपगमेन विनिगमनाविरहाच्च। एषु कस्यचित्प्राधान्ये प्रमाणाभावाच्च। वाक्यार्थभेदे तेषां सर्ववाङ्मूलभूतप्रणवैकगम्यतया प्रणवस्य विधेयभेदनिबन्धनवाक्यभेदप्रसङ्गाच्चेति शङ्कां परिहरन् सूत्रं व्याचष्टे—प्रागुक्तेति। **(प्रागुक्तसर्वप्रकारेण)**त्यनेन प्रणवस्थपदत्रयेण योगार्थनिरुपाधिकासंकुचितरक्षकत्वस्य, रूढ्यर्थकारणत्वविष्णुत्वयोः, श्रियःपतित्वरूपव्यङ्ग्यार्थस्य, लुप्तविभक्त्यर्थशेषत्वप्रतिसम्बन्धिशेषित्वरूपलक्षणार्थस्य, अवधारणरूपद्योत्यार्थस्य, ज्ञानत्वादिपञ्चकरूपयोगार्थलुप्तप्रथमैकवचनार्थसमुदायैकत्वरूपलक्ष्यार्थस्य च ज्ञाने वक्ष्यमाणद्विविधवाक्यार्थज्ञाने हेतुरिति सूचितम्॥

न चास्य वाक्यस्य वाक्यार्थकथनरूपत्वात् मूलमन्त्रवाक्यार्थकथनानन्तर्यापत्तिः, तस्य वाक्यार्थतात्पर्यविषयसंसर्गरूपमहावाक्यार्थकथनरूपत्वात्, अस्य वाक्यबोध्यसंसर्गरूपावान्तरवाक्यार्थकथनपरत्वाच्चास्य पदत्रयार्थकथनानन्तर्यमेव युक्तमिति भावः। एतेन-अक्षरत्रयक्रमसमर्थनरूपस्य पदत्रयक्रमकथनानन्तर्यमपि न प्रसज्यत इति सूचितम्। पदार्थोत्कर्षसूचकतया क्रमसमर्थनस्य पदार्थज्ञानाधीनत्वात्, सकलवेदसारत्वेन क्रमसमर्थनस्य 'परमपुरुषार्थतत्साधनविचारो वेदः, तत्संग्रहः प्रणवः' इति ज्ञानमात्रसम्भवेन मूलमन्त्रस्थवाक्यत्रयार्थज्ञानानपेक्षत्वाच्च ॥

**(प्रणवेने)**त्यनेन समुदायार्थो वक्ष्यत इति गम्यते। अत्र "प्रणवो धनुश्शरो ह्यात्मा" इत्यादिश्रुतिरपि शेषशेषिभावरूपप्रणवार्थपरा सूचिता। **(कृष्णपुरैकशरणस्य)**इति अष्टाक्षरसिद्धिस्थलत्वेन सर्वोत्तमस्थानशालिन इत्यर्थः। अनेन आश्रितलाभहेतुत्वेन स्थानलाभहेतुत्वेन उभयविभूतिसम्पन्नस्यापूर्वसम्पदिति सूच्यते। **(शरणस्ये)**ति निरूपकत्वं षष्ठ्यर्थः। अनया सूक्त्या 'आय अस्मि' इति विधावपि शेषत्वार्हत्वं वाक्यार्थः; अन्यथा नित्यवच्छ्रवणबाधप्रसङ्गादिति सूचितम्। **(शेषत्वाश्रये)**ति—लुप्तविभक्त्यर्थकथनपूर्वकं शेषत्वैकनिरूपणीयश्शेषत्वाश्रयो मकारार्थ उक्त इति भावः ॥

अस्यां गाथायां—रक्षकत्वरूपाकारार्थस्य ज्ञातृत्वरूपमकारार्थस्य च कण्ठतोऽनुक्त्या, मकारसमभिव्याहारलभ्यो रक्ष्यरक्षकभावः अकारसमभिव्याहारलभ्यो ज्ञातृज्ञेयभावश्च न शाब्दप्राधान्येन वाक्यार्थ इति सूचितम्। **(दासः)**इति विध्यर्थमुद्दिश्य, **(नान्येषां)** इति निषेधस्य विधानेन भगवच्छेषत्वापेक्षयाऽन्यशेषत्वनिवृत्तेः पूर्वोक्तं प्राधान्यं सूचितम्। तच्चैवकारोपहतविधिशक्तिकत्वात्, प्रणवेनैव सिद्धम्। **(जीवपरयोरि)**ति—ज्ञानत्वानन्दत्वाभ्यां लीलाविभूतिव्यावृत्तेः, ज्ञानवत्वानन्दवत्वाभ्यां नित्यविभूतेः जीवेश्वरधर्मभूतज्ञानयोश्च व्यावृत्तेः, अणुत्वेनैवेश्वरव्यावृत्तेश्च जीवो मकारार्थः। सर्वकारणत्वेन सर्वरक्षकत्वेन श्रियःपतित्वेन च सर्वस्मात्परो विष्णुः अकारार्थः। एवं जीवेश्वररूपप्रतियोगिद्वयविशिष्टः विभक्त्यर्थशेषत्वसम्बन्धितया सिद्धलक्ष्यार्थभूतशेषित्वयोग्यतारूपः स्वामित्वलक्षणसम्बन्धः,

(७३) किञ्च, श्रीसरोयोगिदिव्यसूक्त्यनुसारेण 'शेषित्वप्रतिसम्बन्धि मिथुनम्' इति ज्ञापयितुं एतज् जीवपरसम्बन्धमाह—अनेनेति ॥

मू॥ इत्ताल्--"तामरैयाल्केल्वनोरुवनैये नोक्कुमु-णर्वु" एन्नदायित्तु ॥ ७३ ॥

---

निरुक्तप्रतियोगिद्वयविशिष्टशेषत्वयोग्यतारूपस्वत्वलक्षणसम्बन्धश्च वाक्यार्थविधया बोध्यत इत्यर्थः। 'प्रणवेन जीवपरसम्बन्ध उक्तः' इत्यन्वयः। अन्यशेषत्वानर्हत्वस्योकारद्योत्यार्थतया शेषशेषिभावयोग्यतारूपस्वस्वामिभावसम्बन्ध एव समानसंवित्संवेद्यतया बोध्यरूपो वाक्यार्थ इति भावः। **(जीवपरसम्बन्धः)** इत्यत्र सम्बन्धशब्दः शेषशेषिभावसम्बन्धपरः। "स्वाभाविको हि सम्बन्धः" "उभयोरेष सम्बन्धः" "तत्सम्बन्धानुसन्धानम्" "नियमयति सम्बन्धमनयोः" "सम्बन्धेन सह षडर्थाः" इत्यादिषु तथा दर्शनात्। अत एव— **शेषशेषिभावसम्बन्ध** इत्युक्तम् ॥ ७२ ॥

**(७३) (अनेन प्रणवेने)**ति—अस्मच्छब्दपर्यायमकारघटितेन प्रणवेनेत्यर्थः। **(कमलालयानायकम्)** इत्यनेन-कमलसंश्लेषादपि नायकसंश्लेषः अत्यन्तभोग्य इति व्यज्यते। अत्र "करुङ्कडलै नोकुमारु" इति पूर्ववाक्ये "यथा नद्यस्स्यन्दमानाः" इति श्रौतदृष्टान्तस्योक्ततया परमप्राप्यत्वेन प्रतीक्षणं व्यज्यते। अनेन परमप्राप्यत्वरूपशेषित्वात्मकाकारलक्ष्यार्थस्सूचितः। पूर्वं 'नान्येषाम्' इत्यत्रार्थमुखेनोकारस्य लक्ष्मीपरत्वं निराकृतम्; अत्र तु 'एकमेव' इत्यवधारणप्रयोगेण तन्निराकृतमिति भेदः। **(ज्ञानम्)** इत्यनेन-'अनेने'ति पूर्वपदसूचितप्रयोगोपाधिभूतमकारवक्तृत्वस्य पदजन्यप्रतीतिप्रकारत्वाभावेन तादृशसङ्कुचितज्ञानत्वावच्छेदेन शेषत्वान्वयस्वारस्यं न त्याज्यमिति सूचितम्। अत्र 'श्रियःपतिमेकमेव प्रतीक्षते ज्ञानरूप आत्मे'ति रक्षकत्वज्ञातृत्वोक्तिं विना प्रणवार्थोक्त्या 'एकमेव प्रतीक्षते' इति परमप्राप्यत्वेन प्रतीक्षणस्य विधेयत्वोक्त्या च शेषशेषिभाव एव शाब्द-

छा॥ अनेन ... "कमलालयानायकमेकमेव प्राप्नोति ज्ञानम्" इत्युक्तम्भवति ॥ ७३ ॥

व्या॥ अनेन प्रणवेन "कमलालयानायकम्" इत्यकारवाच्यं शेषत्वप्रतिसम्बन्धिनं श्रियःपतिम्, "एकमेव प्राप्नोति" इति चतुर्थ्युकारोक्तानन्यार्हशेषत्वप्रयुक्तमात्मनस्तदेकपरत्वम्, "ज्ञानम्" इति तादृशशेषत्वाश्रयतया मकारेण प्रतिपादितं ज्ञानैकनिरूपणीयमात्मानञ्च प्रतिपादयच्छ्रीसूक्तिप्रकारेण जीवपरसम्बन्ध उक्त इत्यर्थः ॥ ७३ ॥

---

प्राधान्येन वाक्यार्थ इति गम्यत इति भावः । पूर्वोक्तवाक्यार्थदार्ढ्यपरमिदं वाक्यमित्यभिप्रायेण—**जीवपरसम्बन्ध उक्त** इत्युक्तम् ॥

अयमत्र पूर्वोक्तशङ्कापरिहारक्रमः—प्रणवस्य द्वेधा वाक्यार्थस्सम्भवत्येव । द्विविधवाक्यार्थस्यापि सुनिरूपत्वात् । तथा हि जीवेश्वरयोश्शेषशेषिभावस्तावत्प्रणवस्य प्रधानभूतो वाक्यार्थ एव । 'अहं रक्षकायैवास्मि' इति क्रियान्वितस्यानन्यार्हशेषत्वस्य विधेयत्वेन, रक्षकत्वस्य चेतनैकप्रतियोगिकतयाऽर्थस्वभावेन मकारसमभिव्याहारेण च जीवेश्वरयो रक्ष्यरक्षकभावस्यार्थिकतया रक्षकत्वस्य पदार्थत्वेन क्रियान्वितशेषत्वरूपविधेयोपसर्जनतया च "राजपुरुषः" इत्यत्र राज्ञः स्वामित्वलक्षणवाक्यार्थस्य राजोत्कर्षप्रतिपादनतात्पर्यवशेनार्थस्वभावात्प्राधान्यवत् 'जगत्कारणभूतो विष्णुस्त्रिविधात्मवर्गरक्षकः' इति वाक्यार्थस्यार्थप्राधान्येऽपि 'आत्मा भगवदनन्यार्हशेषभूतः' इति वाक्यार्थस्य शब्दप्राधान्ये बाधकाभावात् । एतेन रूढिनिमित्तकारणत्वलब्धपितापुत्रभावसम्बन्धस्य, उकारोक्तानन्यार्हत्वबलेन सिद्धस्य भर्तृभार्यासम्बन्धस्य, अकारमकारसमभिव्याहारलब्धज्ञातृज्ञेयभावसम्बन्धस्य च वाक्यार्थत्वेऽपि, तैर्विनिगमनाविरहो दूरोत्सारितः । रक्षकत्ववत्, पितृत्वभर्तृत्वज्ञेयत्वानां शब्दबोध्यस्यैव भानात् । एतेनैव एषु कस्यचित्प्राधान्ये

प्रमाणाभाव इति निरस्तम् । उक्तरीत्योपपत्तेरेव प्रमाणत्वात् । तस्य च प्रणवप्रामाण्य एव पर्यवसानात् ॥

किञ्च, अष्टाक्षरसिद्धस्थलभूतश्रीकृष्णपुरनाथविषयतया श्रीपरकालदिव्यसूरिभिः "मत्तुमोर्" इत्यादिगाथायामष्टाक्षरस्य महावाक्यतात्पर्यविषयार्थमनुगृहीतवद्भिः, गाथान्तरे "कण्णपुरम्" इति सूक्त्या प्रणवस्यैवकारोपहतविधिशक्तिकत्वेन "ओच्चिलेन्" इति "ओरुवर्कुरियेनो" इति चोकारार्थनिषेधस्यैव शाब्दप्राधान्येन महावाक्यार्थतया विधेयत्वं सूचितम् । अतो द्योत्यतया विधेयस्यैव बोध्यतया, विधेयस्य क्रियान्वितस्य शेषत्वस्य शाब्दप्राधान्येन विधेयत्वं दुरुपह्नवम् ।

अपि च श्रीमत्सरोयोगिदिव्यसूक्तौ 'ज्ञानैकनिरूपणीय आत्मा श्रियः पतिमेव पश्यति' इत्येवं मकारार्थस्य व्यङ्ग्यार्थस्य श्रियः पतित्वस्योकारार्थावधारणस्य मिथुनस्य "सदा पश्यन्ती" त्युक्तदर्शनकर्मत्वोक्त्या कर्तुः क्रियाया आप्तमिष्टतमत्वरूपशेषत्वात्मकलुप्तविभक्तिलभ्यार्थस्य च प्रतिपादनावसरे "कण्णपुरम्" इत्यत्रैवकारार्थरक्षकत्वस्य कण्ठतो निर्देशाभावेन शेषशेषिभावस्यैव शब्दबोध्यभूतविधेयस्य क्रियान्वितस्य शाब्दप्राधान्येन वाक्यार्थत्वं सिद्धम् ।

एतेन विधेयभेदाद्वाक्यभेदप्रसङ्ग इत्यपि दूरोत्सारितम् । अप्रवर्तप्रवर्तनात्मकविधिवाक्य एव विधेयभेदे सति क्रियाद्वयबोधनाय तदनुबन्धिभिन्नभिन्नकारकाणामेकैकसमभिव्याहृतपदैर्बोधनाय च वाक्यावृत्तिलक्षणवाक्यभेदप्रसक्तावपि, अज्ञातज्ञापनरूपविधौ अज्ञातनानापदार्थविशिष्टैकविधेयबोधकतया वाक्यभेदाप्रसङ्गात् । यदा हि अज्ञातनानापदार्थानां वैशिष्ट्यं न भवेत्; तदा प्रवर्तप्रवर्तनस्थल इव भावनाभेदापूर्वभेदकल्पनरूपप्रमेयगौरवस्य, नानाकारकविशिष्टनानाक्रियाबोधकतया वाक्यावृत्तिरूपप्रमाणगौरवस्य च भावेऽपि, 'घटो दण्डजन्यो भवति, पटस्तन्तुजन्यः' इत्यादाविवाज्ञातज्ञापनरूपविधिस्थले परस्परनिरपेक्षविधेयभेदनिबन्धनतिङ्सुबन्तचयद्वयरूपवाक्यभेदशङ्क्येतापि । न चेह विधेयानां परस्परानपेक्षत्वमस्ति; रक्ष्यरक्षकभावस्य शेषशेषिभावस्यान्यशेषनिवृत्तेश्च परस्पराकाङ्क्षाहेतुभूतपरस्परवैशिष्ट्यस्य जागरूकत्वात् । अकारादिवर्णत्रयस्य पदैकवाक्यतया बोधजनकत्वेनाख्यातभेदमात्रनिबन्धनवाक्यभेदस्याप्यप्रसङ्गाच्चेति ॥ ७२ ॥

(७४) अकारे प्रत्ययार्थप्रधानानुगुणेन प्रणवार्थो योजितः प्राक्। तत्र धात्वर्थप्रधानाम्प्रणवस्येतः काञ्चन योजनामाह—अकारेणेत्यादिना।

मू॥ अकारत्तालुम्, मकारत्तालुम्—रक्षकनैयुं, रक्ष्य त्तैयुं, शोल्लित्तु। चतुर्थियालुम्, उकारत्तालुम्—रक्षणहे-तुवानप्राप्तियैयुं फलत्तैयुं, शोल्लित्तु॥ ७४॥

---

(७४) अथ वाक्यद्वयेनापरवाक्यार्थमाहेत्यभिप्रायेणावतारयति—अकारङ्इति। अर्थप्राधान्येन प्रणववाक्यार्थं वाक्यद्वयेन वक्ष्यन्, प्रथमं प्रधानार्थं दर्शयतीत्ययमर्थोऽनुसन्धेयः।

अत्रेयं शङ्का—जीवेश्वरयोः रक्ष्यरक्षकभावो वाक्यार्थ इत्यप्ययुक्तम्। वाक्यभेदप्रसङ्गात्। न च विधेयानां शेषशेषिभावाद्वाक्यभेदाप्रसङ्गः। विकल्पासहत्वात्। किं रक्ष्यरक्षकभावश्शेषशेषिभावार्थः, उत शेषशेषिभावो रक्ष्यरक्षकभावार्थः। नाद्यः-इष्टप्रापणानिष्टनिवारणयोः रक्षकपदार्थत्वेन, किञ्चिद्व्यापाराधीनेष्टप्राप्तिमतश्शेषिपदार्थत्वेन च रक्षकत्वशेषित्वयोर्हेतुहेतुमद्भावासम्भवात्। अत एव न द्वितीयः-अन्यगतेष्टप्रापणरूपव्यापारं प्रति स्वगतेष्टप्राप्तेः कारणत्वाभावात्, फलत्वाभावाच्च।

एतेनोकारार्थस्याकारार्थं प्रति हेतुहेतुमद्भावेनान्वयो दूरापास्तः। कस्यचित्पुरुषस्य किञ्चित्पुरुषगतेष्टप्राप्तिहेतुभूतव्यापारनिवृत्तेरन्यपुरुषीयान्यपुरुषेष्टप्रापणरूपव्यापारं प्रति हेतुत्वस्य फलत्वस्य वा शङ्कितुमशक्यत्वात्। एवं पितापुत्रभावादिसम्बन्धत्रयस्योक्तसम्बन्धद्वयस्य च हेतुहेतुमद्भावे मानाभावादसम्भवाच्च परस्परनिरपेक्षविधेयभेदनिबन्धनवाक्यभेदो दुर्वारः—इति।

अयमत्र परिहाराभिप्रायः—रक्ष्यरक्षकभावश्शेषशेषिभावार्थक इत्यत्र दूषणमुक्तम् - किञ्चित्पुरुषीयेष्टप्रापणतदनिष्टनिवारणयोरन्यपुरुषीययोस्तत्पुरुषीयव्यापाराधीनेष्टप्राप्तिमत्त्वे हेतुत्वासम्भवादिति; तदयुक्तम्। पुत्रगतेष्टप्रापणानिष्टनिवारणयोः पितृगतयोः पितृगतपुत्रशिश्रूषाधीनेष्टप्राप्तौ हेतुत्वदर्शनात्, "स्वरक्षणेऽप्यशक्तस्य" इतिन्यायस्य स्वातन्त्र्येण पररक्षकविषयत्वात्, अन्यगतकिञ्चिदिष्टप्रापणस्यान्यव्यापराधीनेष्टान्तरप्राप्तौ हेतुत्वसम्भवाच्च।

छा॥ अकारेण, मकारेण च-रक्षकः, रक्ष्यश्चोक्तः । चतुर्थ्या, उकारेण च-रक्षणहेतुभूता प्राप्तिः, फलञ्चोक्तम् ॥ ७४ ॥

व्या॥ अकारेण रक्षक ईश्वर उक्तः । मकारेण तद्रक्ष्यमात्मवस्तूक्तम् । चतुर्थ्या रक्षणहेतुश्शेषत्वरूपा प्राप्तिरुक्ता । एवं रक्षणस्य फलमात्मवस्तुनोऽनन्यार्हतया विनियोगकरणात्, तादृशानन्यार्हशेषत्ववाचिनोकारेण रक्षणफलमुक्तमित्यर्थः ॥

एवमस्मिन्मन्त्रे प्रथमपदस्य प्रणवस्यार्थ उक्तः॥७४॥

---

अत एव शेषशेषिभावो रक्ष्यरक्षकभावार्थ इति पक्षे अन्यगतेष्टप्रापणरूपव्यापारं प्रति स्वगतेष्टप्राप्तेःकारणत्वाभावात्, फलत्वाभावाच्चेति दूषणमप्ययुक्तम् । पितृगतपुत्रशरीरोत्पादनतत्पोषणादौ पुत्रगतशिश्रूषाधीनेष्टप्राप्तेरुद्देश्यत्वेन हेतुत्वदर्शनात्, स्वरूपेण हेतुत्वदर्शनाच्च । "तदैक्षत बहु स्यां प्रजायेयेति" "तदात्मानं स्वयमकुरुत" इत्यादि प्रसिद्धचेतनव्यापारसामान्यानधीनज्ञानचिकीर्षाप्रयत्नवत्त्वरूपरक्षकत्वसद्भावात्, 'अनन्यार्थसर्वचेतनव्यापाराधीनेष्टप्राप्तिमत्वरूपशेषित्वयोग्यतारूपस्वामित्ववान्, तादृशस्वामित्वसद्भावात्, तादृश रक्षकत्ववान्' इत्येवं रक्षकत्वशेषित्वयोर्ज्ञाप्यज्ञापकभावरूपहेतुहेतुमद्भावसम्भवाच्च । स्वामित्वसम्बन्धस्य निरुक्तरक्षणव्यापारं प्रति स्वरूपेण कारणत्वसम्भवात्, निरुक्तरक्षणस्य स्वाधीनस्वरूपस्थितिप्रवृत्तिभेदत्रिविधचेतनाचेतनगतानन्यार्थव्यापाराधीनस्वगतेष्टप्राप्तिंप्रति स्वरूपेण कारणत्वसम्भवाच्च ।

एतेनाकारोकारार्थयोर्हेतुहेतुमद्भावासम्भवो दूरापास्तइत्यपिदूरोत्सारितम् । स्वेष्टप्राप्तिप्रतिबन्धकान्यशेषवृत्त्यनर्हत्वस्य स्वविषये निरुपाधिकरक्षकत्वेन ज्ञाप्यत्वसम्भवात्, अन्यशेषत्वनिवृत्तेस्स्वविषये निरुपाधिकरक्षणेन जन्यत्वसम्भवाच्च। अन्यशेषत्वनिवृत्तेरुद्देश्यत्वेन तादृशरक्षणे कारणत्वसम्भवाच्च। निरुपाधिकरक्षकत्वास्यापि अन्यशेषत्वनिवृत्तौ अन्यशेषत्वानर्हत्वे च ज्ञापकत्वेन हेतुत्व-

सम्भवाच्च। भृत्यादिरक्षणे प्रवृत्तत्वेऽपि राजादेः देहादीष्टप्राप्त्यर्थं भृत्यादिप्रवृत्तिदर्शनेऽपि, तत्र भार्याया अन्यभोगार्थं प्रवृत्ताविव निषेधाभावेन, प्रकृते उकारनमश्शब्दाभ्यामेव "योऽन्यथा सन्तमात्मानम्" इत्याद्युपबृंहिताभ्यां निषेधेन च वैषम्यात्। राजादेर्निरुपाधिकरक्षकत्वाभावेन देवाद्यपेक्षयोत्कृष्टत्वाभावेन देहादीष्टप्राप्त्यर्थं भृत्यादिप्रवृत्तेः राजादिकृतरक्षणफलप्रतिबन्धकत्वाभावेन च प्रकृते तद्वैपरीत्येन च वैषम्याच्च।

इत्थं पितापुत्रभावसम्बन्धस्य भर्तृभार्यासम्बन्धस्य चात्यन्तार्थिकत्वात्, रक्ष्यरक्षकभावज्ञातृज्ञेयभावयोस्समभिव्याहारगम्यत्वाच्च 'निरुपाधिकपितृत्वात् निरुपाधिकरक्षकः, निरुपाधिकरक्षकत्वात् निरुपाधिकश्शेषी, निरुपाधिकशेषित्वात् अन्यशेषत्वविरोधिनिरुपाधिकभर्ता, एवं चतुर्थासम्बन्धात् स एव ज्ञेयः' इत्येवमादिरूपेण हेतुहेतुमद्भावसम्भवात्। "माता पिता भ्राता" "येन जातानि जीवन्ति" "पतिं विश्वस्य" "सहस्रशीर्षा पुरुषः" "तमेवैकं जानथात्मानम्" इत्यादिप्रमाणशतोपबृंहितमन्त्रशेषनिवृत्तप्रणवरूपप्रमाणशिरोमणिनैव तस्य सिद्धत्वाच्च। परस्परनिरपेक्षशब्दबोध्यविधेयभेदगन्धस्याप्यभावान्न वाक्यभेदशङ्काया अप्यवकाशः। तस्मात् प्रणवे शाब्दप्राधान्येन शेषशेषिभावरूपवाक्यार्थस्यैवार्थप्राधान्ये रक्ष्यरक्षकभावरूपवाक्यार्थस्य च सुनिरूपत्वं सिद्धम्।

समन्वयाधिकरणन्यायेन पूर्वोत्तरभागस्थविधिवाक्यानां सिद्धब्रह्मपरवाक्यशेषत्वात्, तस्य "वेदैश्च सर्वैरहमेव वेद्यः" "विष्णुनामा स वेदेषु" "ये च वेदविदो विप्राः" इत्यादिवचनसिद्धत्वाच्च, रक्षकत्वविशिष्टपरमात्मरूपप्रणवप्रधानार्थपरः—अकारः। रक्षणस्येष्टप्रापणानिष्टनिवारणरूपतया योग्यतया रक्षणकर्मत्वेन सिद्धश्चेतन एव मकारेण समभिव्याहारबलादपि कर्मेति लभ्यत इत्यभिप्रायेण—**अकारेण रक्षक ईश्वर उक्तः।**

**मकारेण रक्ष्यमात्मवस्तूक्तम्** इत्युक्तम्। यथाश्रुते मकारस्य चतुर्थ्यर्थान्वयप्रतियोगिसमर्पकत्वेन, रक्षकत्वस्य चतुर्थ्यर्थान्वितत्वेन च मकारस्य रक्षणान्वयप्रतियोगिसमर्पकत्वानुपपत्तेः; त्रिवर्गापवर्गरूपफलप्रदत्वरूपोत्कर्ष एव प्रधानप्रतिपाद्यः; तद्रक्षकत्वं निर्हेतुकमिति वक्तुं कारणत्वोक्तिः; तादृशोत्कर्षाश्रयव्यक्तिविशेषं वक्तुं विष्णुत्वोक्तिरित्यपि भावः।

'अप्रयुक्तापि स्मृता विभक्तिर्बोधिका' इतिपक्षमभिप्रेत्य—**चतुर्थ्ये**-त्युक्तम्। "विद्यमानश्शब्दो लुप्यमानार्थाभिधायी" इतिपक्षे "लुप्तविभक्त्यर्थस्य प्रातिपदिकेन लक्षणा हि समासः" इत्याचार्यसूक्त्यनुसारेण "प्रत्ययसिद्धं चेतनशेषत्वप्रतिसम्बन्धि शेषित्वञ्चाकारार्थ उक्तः" इति अकारार्थनिगमन-सूक्त्यनुसारेण च "चतुर्थ्या" इति स्थाने लाक्षणिकाकारेण' इत्यनुसन्धेयम्। **(रक्षणहेतुरि)**ति—निरुपाधिकासङ्कुचितरक्षणकारणमित्यर्थः। **(प्राप्ति-रि)**ति—शेषत्वस्वरूपयोग्यतालक्षणम्, ईश्वरप्रतियोगिकं जीवानुयोगिकं, स्व-त्वरूपशक्तिविशेषात्मकनिरुपाधिकसम्बन्धमित्यर्थः। अत एव—**शेषत्वरूपा** इत्युक्तम्। लोके गृहारामक्षेत्रादिषु स्वत्वकृताभिमानविशेषमात्रेण तद्विनियोग-कृताल्पत्वेऽपि यावच्छक्तिरक्षणप्रवृत्तिदर्शनात्, अन्यदीयगृहादौ तादृशाभिमा-नाभावेन भोगाधिक्येऽपि तादृशप्रवृत्त्यदर्शनाच्च स्वत्वं रक्षणहेतुरिति भावः। यद्यपि "तदेव प्रीतये भूत्वा" इत्यादिन्यायेन स्वत्वाश्रयेऽप्युपेक्षादिकं दृश्यते; तथापि सोपाधिकरक्षणेऽन्यापेक्षायामपि निरुपाधिकासङ्कुचितरक्षणे स्वत्वमेव हेतुरिति न दोषः।

'लाक्षणिकाकारेण' इत्युक्तौ तु शेषित्वस्वरूपयोग्यतालक्षणजीव-प्रतियोगिकेश्वरानुयोगिकस्वामित्वलक्षणशक्तिविशेषात्मकसम्बन्धमित्यर्थः। यद्वा, स्वामित्वस्य स्वगतेष्टोद्देशनियमं विनानन्यार्थपरगतेष्टोद्देशेनापि प्रवृत्तौ हेतुत्वात्, शेषित्वस्वरूपयोग्यतायास्स्वगतेष्टोद्देशनियमेन पररक्षणप्रवृत्तौ हेतु-त्वाच्च; स्वस्वामिभावशक्त्यपेक्षया शेषशेषिभावशक्तिर्भिन्नैव। सैवात्र प्राप्ति-शब्देन विवक्षिता। अत एव सौकर्यापादकगुणचतुष्कान्तर्भूतस्वामित्वापे-क्षया कार्यापादकगुणचतुष्कान्तर्भूता प्राप्तिः पृथङ्निर्दिष्टा। किञ्च प्राप्ति-शब्देनात्राप्राप्तिविशिष्टप्राप्तिर्विवक्षिता। शेषत्वस्यानन्यार्हत्वरूपप्राप्तेरुकारद्यो-त्यार्थत्वात्, भर्तुर्भार्याया रक्षणादौ अनन्यार्हत्वस्य हेतुत्वाच्च। 'फलञ्चे'ति—उपस्थितत्वात्—**रक्षणफलमि**त्युक्तम्। फलशब्देन—अन्यशेषवृत्तिफलोप-धानाभावः, भगवच्छेषवृत्तिफलोपधानञ्च विवक्षितमित्यभिप्रायेणाह—**अन-न्यार्हतयेति**।

चतुर्थ्या प्राप्तिर्वाक्यार्थविधया बोध्यते। अकारेण लक्षणापूर्वकं तथा। अप्राप्तिस्तु उकारेण द्योत्यते। शेषवृत्तिफलोपधानन्तु चतुर्थ्या, लाक्षणिकाकारेण

(७५) अथोपरितनपदयोरर्थं वक्तुं मन्त्रशेषस्य अस्य विवरणत्वमाह—अथेति ।

मू॥ इनिमेल् प्रणवत्तै विवरिक्किरदु ॥ ७५ ॥

छा॥ इतःपरं प्रणवं विवृणोति ॥ ७५ ॥

व्या॥ "अत्र विवरणं नाम-प्रस्तुतार्थोपयुक्तार्थोपन्याससहितपूर्वोक्तार्थविशदीकरणम्" इति दीपप्रकाशे, "उक्तार्थविशदीकारयुक्तार्थान्तरबोधनम् । मतं विवरणन्तत्र महितानाम्मनीषिणाम्" इति रहस्यत्रयार्थविवरण-

---

वा, वाक्यार्थविषया बोध्यमानशेषशेषिभावस्वरूपयोग्यतापेक्षया व्यापकत्वादर्थाद्बोध्यते । अन्यशेषत्वफलोपधानाभावेऽप्युकारद्योत्यान्यशेषत्वानर्हत्वरूपशक्तिविशेषलक्षणस्वरूपयोग्यतापेक्षया व्यापकत्वात्तथेत्यनुसन्धेयम् ।

अत्रायं सङ्ग्रहः—

"मन्त्रतात्पर्यविषयवाक्यार्थोऽत्रादितो मतः ।
तस्य सप्रणवस्यैवाष्टाक्षरत्वमथेरितम् ॥
पदत्रयक्रमःपश्चादकारार्थोऽथ वर्णितः ।
रक्षकत्वमसङ्कोचात्ततश्श्रीमत्त्वमप्यथा ॥
अथो लुप्तचतुर्थ्युक्ता तदर्थोऽथाष्टमोदितः ।
उकारार्थस्तु नवमं मकारार्थोऽथ वर्णितः ॥
वर्णत्रयक्रमः पश्चात्तद्वाक्यार्थोऽथ वर्णितः ।
नवाधिकरणी चात्र प्रणवार्थप्रकाशिका ॥"

इति ॥ ७४ ॥

(७५) (मन्त्रशेषस्ये)ति— "इत्येवं प्रणवस्यार्थो ज्ञातव्योऽस्मयानघे । विवृतः प्रणवस्यार्थो मन्त्रशेषेण वै शुभे "इति पाद्मवचनमनुसन्धेयम् ।

क्रमोक्तप्रबन्धे च विवरणलक्षणं वादिकेसरिमुनिभिरनुगृहीतम् ॥७५॥

(७६) 'विवरणप्रकारः कथम्' इत्यत आह—उकारमित्यादिना।

मू॥ उकारत्तै विवरिक्किरदु नमस्सु। अकारत्तै विवरिक्किरदु नारायणपदम्। मकारत्तै विवरिक्किरदु चतुर्थि; 'नारपदम्' एन्नुं शोल्लुवर्हल् ॥७६॥

छा॥ उकारं विवृणोति नमः। अकारं विवृणोति नारायणपदम्। मकारं विवृणोति चतुर्थी; 'नारपदम्' इत्यपि वदन्ति ॥७६॥

---

(इतःपरमि)ति-प्रणवार्थज्ञानमूलकाकाङ्क्षानिवर्तकज्ञानजनकतया मन्त्रशेषस्य प्रणवानन्तर्यं युक्तमिति भावः। (प्रणवमि)ति - अनेन "प्रणवाद्यास्तथा वेदाः" ओङ्कारप्रभवा वेदाः" "आद्यन्तु त्र्यक्षरं ब्रह्म" इत्याद्युक्तसर्ववेदसङ्ग्रहतया प्रणवप्राथम्यं युक्तमिति सूच्यते। विवरणक्रमं वक्तुं ग्रन्थान्तरसंवादमाह--अत्रेति। उक्तार्थविशदीकारयुक्ततदुपयुक्तार्थान्तरबोधनं विवरणं नामेत्यर्थः। तत्र नमश्शब्देन-उकारार्थविशदीकारः। नारायणपदचतुर्थीनारपदैः-युक्तार्थान्तरबोधनमिति विवेकः॥ ७५॥

(७६) (विवरणप्रकारमाहे)ति - अथ प्रतिज्ञातं विवरणत्वमुपपादयितुं मूलक्रमेण प्रथमं नमश्शब्दस्य विवरणत्वं दर्शयति प्रथमवाक्येन। एवं मन्त्रशेषप्रथमद्वितीयपदयोर्विवरणत्वमुक्त्वा, क्रमप्राप्ते तृतीयपदे प्रकृत्यंशस्य विवरणत्वमाह द्वितीयवाक्येन। अथ क्रमप्राप्तायास्तृतीयपदस्थाया विभक्तेर्विवरणत्वं प्रदर्शयति तृतीयवाक्येन। अथ रक्षकत्वशेषित्वधारकत्वव्यापकत्वप्रापकत्वप्रतियोगिसमर्पकतया मकारसमानार्थकस्य नारपदस्यापि मकारविवरणत्वं सम्भवतीत्यभिप्रायेणाह चतुर्थवाक्येनेति भावः।

व्या॥ अन्यशेषत्वनिवर्तनसमये अन्येषु अन्यतमत्वेनोक्तमात्मानं व्यक्तमुक्त्वा निवर्तयतीत्यत उकारं विवृणोति नमः। रक्षकस्येश्वरस्य स्वरूपम्, रक्ष्यभूतचेतनाचेतनात्मकं जगत्, रक्षणोपयोगिगुणादिकम्, रक्षणप्रकारञ्च विशदं वदन्नकारं विवृणोति नारायणपदम्। "नाकिञ्चित्कुर्वतश्शेषत्वम्" "अकिञ्चित्करस्य शेषत्वानुपपत्तिः" इत्युक्तप्रकारेण किंचित्काराभावे शेषत्वसिध्यभावात्, तत्सिद्धिहेतुभूतकिंचित्कारप्रतिपादिका चतुर्थी शेषत्वाश्रयात्मवस्तुप्रतिपादकमकारं विवृणोति। मकारवाच्यस्यात्मनो नित्यत्वैकरूपत्वबहुत्वप्रभृतिप्रतिपादकत्वात्, मकारं विवृणोति नारपदमित्यपि वदन्तीत्यर्थः ॥७८॥

---

ननु प्रणवमन्त्रशेषयोर्मूलमूलिभावो नसम्भवत्येव। मूलमूलिलक्षणाभावात्। मूलं हि नाम - पदार्थज्ञानाजानकं, संशयविपर्ययाविरोधिज्ञानजनकञ्च वाक्यम्। व्याख्यानञ्च-मूलार्थज्ञानसंशयविपर्ययनिवर्तकज्ञानजनकं वाक्यम्। इत्थञ्चोकारस्य पूर्वोक्तन्यायेनान्ययोगव्यवच्छेदरूपावधारणार्थकत्वस्य निर्णीतत्वात्, न तत्राज्ञानादिसम्भवः। न चोकारेणान्यत्स्वरूपेण सामान्यतोऽन्यशेषत्वनिवृत्तिद्योतनात्, नमश्शब्देनात्मत्वेन विशेषरूपेणोपस्थितान्यशेषत्वनिवृत्तेश्शब्देन बोधनाच्चोकारार्थविशदीकाररूपविवरणत्वं सम्भवत्येवेति वाच्यम्। उकारद्योत्यस्यान्यसामान्यस्य मकारेण विशेषाकारलाभेऽपि, नमश्शब्देन स्वशेषत्वनिषेधे द्योत्यार्थसङ्कोचापत्त्या विवरणत्वस्यैव भङ्गप्रसङ्गात्। विशेषनिषेधस्य प्रदर्शनार्थत्वाश्रयणेन उकारस्य सामान्यलम्भकतया वैपरीत्यप्रसङ्गाच्च। "भगवत एवाहमस्मि" इत्यादिप्रसिद्धसामान्यनिषेधस्य उकारेणापि द्योतनसम्भवे, विशेषनिषेधस्य शाब्दबोधाश्रयणे प्रयोजनविशेषालाभाच्च। नञोनिपातत्वेनात्रापि निषेधस्य द्योतनावश्यम्भावाच्च। तस्मान्न नमश्शब्दस्योकारविवरणत्वसम्भवः।

नापि नारायणशब्दस्याकारविवरणत्वसम्भवः। 'सामर्थ्यंकारणत्वमिति यावत् "प्रमाकरणं-प्रमाणपदवाच्यम्" पचति-पाकंकरोति "गौः-सास्नादिमती' इत्यादाविव वाच्यवाचकभावबोधकत्वस्य वा उक्तार्थस्य विशेषाकारेण बोधकत्वस्य वा व्यञ्जकमुखेन वाच्यवाचकभावतात्पर्यकत्वस्य वा आकारापेक्षया नारायणशब्दे 'अहं नारायणाय स्याम्' इत्येव प्रार्थनीयत्वेन व्यञ्जनया बोध्यस्य कैङ्कर्यरूपविधेयार्थस्य प्रतिसम्बन्धिनिर्देशकतया वाक्यान्तरेणोपात्ते वक्तुमशक्यत्वात्।

एतेन रक्षकस्वरूपस्य रक्ष्यभूतचेतनाचेतनवर्गस्य रक्षकगुणसमूहस्य रक्षणप्रकारस्य च कथनात्, नारायणशब्दः - अकारविवरणमित्यपास्तम्। विधेयान्तरपरस्य विवरणतात्पर्ये मानाभावात्। किञ्चाकारस्यापि रक्षकस्वरूपपरतया वैपरीत्यापत्तिः। रक्षकव्यक्तिविशेषविवक्षायां "अकारो विष्णुवाचकः" इत्याद्यनुसारेणाकारस्यापि तत्सम्भवात्। रक्ष्यवर्गस्य मकारेणापि निर्देशेन तस्यैव विवरणत्वापत्तिः। रक्ष्यत्वेन रक्ष्यवर्गबोधकत्वाभावात्, शेषत्वान्वयप्रतियोगिसमर्पकत्वाच्च। 'मकारो नाकारविवरणम्' इत्युक्तौ नारशब्दोऽपि तथा स्यात्। सकलगुणसमष्टिरूपकारणत्वपराकारेण रक्षकगुणजातसिध्द्या, नारशब्दस्य रक्षकगुणपरत्वेन विवरणत्वमयुक्तम्। विशिष्य गुणजातस्यानिर्देशः नित्यसमूहवाचिनारशब्देऽपि तुल्यः।

नारायणशब्दो रक्षणप्रकारपरतयाकारविवरणमित्यप्ययुक्तम्। रक्षणहेतुभूतव्यापारस्य बहुव्रीहिसिद्धव्याप्तिरूपधर्मस्य रक्षणप्रकारपदेन विवक्षायां व्याप्तिफलीभूतरक्षणपरतयाकारस्य विवरणत्वं किं न स्यादिति वैपरीत्यापत्तेः। अत एव तत्पुरुषसिद्धधारकत्वरूपरक्षणप्रकारपरतया विवरणत्वानुपपत्तेश्च। रक्षकशब्दस्येष्टप्राप्त्यनिष्टनिवृत्तिहेतुरित्यनेनोक्तार्थविशदीकाररूपेण विवरणसम्भवेऽपि रक्षकगुणजातादिपरस्य विवरणत्वासम्भवाच्च। न चार्थान्तरबोधनमपि विवरणमिति वाच्यम्। विवरणशब्दार्थाननुगमापत्तेः। उक्तार्थविशदीकारस्थले उक्तार्थव्यतिरिक्तार्थबोधनाभावात्। अर्थान्तरबोधनस्यापि विवरणरूपत्वे 'पटोऽस्ति' इति वाक्यस्य 'घटोऽस्ति' इतिवाक्यविवरणत्वापत्तेः। विशिष्टस्य विवरणशब्दार्थत्वे एकैकस्थले अव्याप्तेश्च।

एतेन व्यक्तचतुर्थ्याः मकारविवरणत्वमपि दूरोत्सारितम्। आत्मवाचिनो मकारस्य परातिशयेच्छावाचिन्याश्चतुर्थ्याश्चान्योन्यवार्तानभिज्ञत्वात्।

नारपदं मकारविवरणमित्यप्ययुक्तम्। उक्तार्थविशदीकाराभावात्। अन्यविशेषणस्य विवरणतात्पर्ये मानाभावाच्च।

अपि च मन्त्रशेषस्य प्रणवविवरणरूपत्वे 'अहं नारायणायास्मि, मो नास्मि, नारायणाय स्याम्' इति वाक्यत्रयरूपेण मन्त्रविन्यासापत्तिः। 'आयास्मि' इति प्रकृत्यर्थविशेषितविभक्त्यर्थविवरणस्य त्यागायोगात्, उकारविवरणानन्तरमकारविवरणायोगाच्च। अकारविवरणानन्तरं मकारविवरणायोगाच्च। अकारविवरणात्पूर्वं नारपदेन मकारविवरणायोगाच्चेति शङ्कापनोदनायाहेति हृदि निधाय क्रमेणोत्तरं वदन् सूत्रार्थमाह—**अन्यशेषत्वानिवर्तकेने**ति। पूर्वोक्तरीत्या उकारार्थाज्ञानादिनिवृत्त्यर्थं निष्कृष्टात्मसामान्यस्य, निष्कृष्टात्मसामान्यं प्रति निरुपाधिकशेषत्वानर्हत्वप्रतिपादनमुखेन नमश्शब्देन उक्तार्थविशेषाकारकथनरूपविवरणं क्रियत इति भावः। **(नमश्शब्दः)** - 'न' इति 'मः' इति च पदद्वयमित्यर्थः।

**(रक्षकस्य)** इति—अकारेण रक्षकस्योक्तौ तस्य नानार्थतया रक्षकव्यक्तिविशेषाकाङ्क्षायां, शेषवृत्तियोग्यताप्रतिसम्बन्धिनश्शेषवृत्तिफलोपधानप्रतिसम्बन्धिनश्चैकव्यक्तित्वावश्यम्भावेन फलोपधानप्रतिसम्बन्धिनिर्देशकेन नारायणपदेन, रूढिवृत्त्या लक्ष्मीवक्षस्कशङ्खचक्रादिविहितविग्रहविशेषावच्छिन्नदेवताविशेषसमर्पणात्; 'कुतो रक्षकः' इत्याकाङ्क्षायां 'स्वाभाविककल्याणगुणादेव' इति सूचयितुं, नित्यवस्तुसमूहाश्रयत्वस्य 'कथं रक्षकः' इत्यपेक्षायां 'नियमनार्थान्तर्व्याप्तिपूर्वकधारणेन निरुपाधिकेन प्राप्यत्वप्रापकत्वाभ्याञ्च' इत्येवं तत्पुरुषबहुव्रीहिवृत्तिभ्यां बोधनात्, 'केषां रक्षकः' इत्याकाङ्क्षायां 'त्रिविधचेतनाचेतनगतस्वेष्टानिष्टप्राप्तिपरिहारमुखेन चेतनाचेतनवर्गाणाम्' इत्येवं व्याप्त्यादिप्रकारचतुष्टयप्रतियोगिसमर्पकनारपदेन बोधनाच्च। शेषवृत्तिस्वरूपयोग्यताप्रतिसम्बन्धिनिर्देशकाकारस्य शेषवृत्तिफलोपधानप्रतिसम्बन्धिनिर्देशकं नारायणपदं विवरणमिति भावः। **(नारायणपदम्)** इत्यत्र पदशब्दः-शक्तपरः। शक्तिश्च - योगरूढरूपा विवक्षिता। अत एव पूर्ववाक्ये 'नमस्तु' इत्येव सकारान्तेन पदद्वयानुकरणं कृतम्। न तु 'नमःपदम्' इति। तस्य पदद्वयत्वादित्यनुसन्धेयम्।

**(मकारं विवृणोति)** इति - अत्र-अकारोक्तकल्याणगुणगणानुभवस्य, निरुपाधिकरक्ष्यरक्षकभावानन्यार्हशेषशेषिभावसम्बन्धानुसन्धानस्य, व्यङ्ग्यार्थभूतदिव्यदम्पतिरूपकैङ्कर्यप्रतिसम्बन्धिप्रतिसन्धानस्य, निरतिशय-

भोग्यभूतगुणादिचतुष्टयानुभवजनितहर्षप्रकर्षरूपप्रीतेश्च सामग्रीबलेनावघातस्वेदवदनुनिष्पन्नाया मकारेण बोधनात्, 'स्याम्' इत्यध्याहृतक्रियापदसमभिव्याहृतया व्यक्तचतुर्थ्यानुभवजनितप्रीतिकारितकैङ्कर्यस्य वाक्यार्थविधया व्यञ्जनात्, ज्ञानफलीभूतचिकीर्षाया अपरपदार्थतयाबोधनात्, चिकीर्षाहेतुभूतपरगतातिशयेच्छाया ज्ञानद्वारभूतायास्स्वशक्त्यैव बोधनात्, कैङ्कर्यप्रवृत्त्युद्देश्यपरमफलीभूतभगवन्मुखोल्लासात्मकप्रीतेर्ज्ञानानन्दफलेच्छाचिकीर्षाप्रवृत्तिसाध्याया व्यक्तचतुर्थीप्रकृत्योर्वाक्यार्थतया बोधनाच्चार्थान्तरबोधनेन मकारविवरणत्वं व्यक्तचतुर्थ्या युज्यत इति भावः। अत्र लुप्तचतुर्थीप्रतिपादितशेषवृत्तिस्वरूपयोग्यताहेतुभूतज्ञातृत्वरूपमकारार्थस्य तृतीयवाक्येन इच्छाद्वयरूपफलद्वयकण्ठोक्त्या विवरणात्, फलोपधानपरव्यक्तचतुर्थ्या स्वरूपयोग्यतापरलुप्तचतुर्थीविवरणत्वमविगर्हितम्। अतो न न्यूनतादोष इत्यनुसन्धेयम्॥

**(नारपदं)** - अत्र प्रथमान्ततया षष्ठ्यन्ततया वा नारशब्दस्य पदत्वमभिप्रेतम्। व्यक्तचतुर्थीवन्न वाक्यानुप्रवेशेन मकारविवरणत्वं नारपदस्य, किन्तु पदविधयैवेति पदशब्दस्य भावः। **(इत्यप्याहुः)** इति - नारपदस्य विवरणत्वं साम्प्रदायिकमिति सूच्यते। अपिशब्देन पूर्वोक्तं पदत्रयविवरणत्वमपि साम्प्रदायिकमिति व्यज्यते॥

**(नित्यत्वे)**ति - अत्र नारशब्दस्य 'रिङ् क्षये' इति धातोः कर्तरि डप्रत्ययस्यानुबन्धलोपं कृत्वा, प्रकृतेः "टेः" इति टिलोपे कृते 'र' इति क्षयिष्णुवाचिपदस्य तत्प्रतिषेधकनकारसम्बन्धित्वेन 'नर' इति रूपसिद्धेः अक्षयार्थवाचित्वं सम्पद्यते। एतेनापरिणामित्वान्नित्यत्वमुक्तं भवति। क्षयाभाववचनात् एकरूपत्वं च। "अमृताक्षरं हरः" इति श्रुतेः। समूहार्थकाण्प्रत्ययेन बहुत्वम्। "नित्यो नित्यानामि"ति श्रुतेः। आदिपदं अणुत्वादिपरम्। नरशब्दस्य 'नॄ गतौ' इति गत्यर्थधातुसम्भावनया अस्य कर्तरि अच्प्रत्यये गुणे च कृते गन्तृवाचित्वसम्भवात्, आत्मन उत्क्रान्तिगत्यागतयोऽपि सूच्यन्ते। एतेनात्मनोऽणुत्वं सिद्धम्। "एषोऽणुरात्मा चेतसा वेदितव्यः" "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्य विज्ञेयः" "उत्क्रान्तिगत्यागतीनाम्" "गुणाद्वालोकवत्" "प्रदीपवदावेशस्तथा हि दर्शयति" इत्यादिश्रुतिसूत्रगणोक्तेः। आत्मनो नित्यत्वादिकं च तत्त्वत्रयादिषु समर्थितं, तत्र द्रष्टव्यम्॥

अत्रायं शङ्कापरिहाराभिप्रायः—प्रणवमन्त्रशेषयोर्विवरणाविवरणिभावः सम्भवत्येव। पूर्वोक्तरीत्या मूलव्याख्यानयोर्लक्षणाभ्युपगमेऽपि प्रकृते मूलत्वेनाभिमते अज्ञानसंशयविपर्ययसम्भवेन, व्याख्यानत्वेनाभिमते तन्निवृत्तिसम्भवेन च मूलमूलिभावे बाधकाभावात् ॥

तथा हि नमश्शब्दस्तावदुकारविवरणम्। सामान्यतो भगवदन्यस्मिन् शेषत्वस्य निरूपकतासम्बन्धलक्षणयोगव्यवच्छेदपरे उकारे, अचेतनेऽपि शेषत्वयोगव्यवच्छेदप्रतीत्यापत्तौ, अचेतने चेतनप्रवृत्तिजन्यप्रीतिमत्त्वलक्षणशेषित्वासिद्ध्या चाप्रसक्तस्य शेषित्वस्य निषेधाप्रतिपत्तिसम्भवात्। उकारबलादेव चेतनप्रवृत्तिजन्येच्छाविषययत्किञ्चिदतिशयवत्त्वरूपशेषित्वस्य प्रसक्तौ, तन्निषेधसंशयस्य तद्विपर्ययस्य च सम्भवाच्च। तथाऽपि अचितः सर्वलोकप्रतीत्या चेतनस्येव स्वातन्त्र्येण शेषित्वस्याप्रसक्त्या, नञिवयुक्तन्यायेन शेषित्वनिषेधाधिकरणस्य भगवदन्यस्य चेतनरूपत्वसिद्ध्या च नमश्शब्देन चेतनशेषित्वनिषेधपरतयोकारविवरणसम्भवाच्च ॥

न च नमश्शब्देन स्वशेषत्वनिषेधे सति उकारद्योत्यनिषेधसङ्कोचप्रसङ्गः, अस्मच्छब्दपर्यायमकारप्रयोगोपाधिभूतवक्तृत्वस्योपलक्षणतया निष्कृष्टचेतनस्वरूपसामान्ये स्वतः शेषित्वनिषेधस्यैव नमश्शब्दार्थत्वात्, एवं नमश्शब्देन विशेषनिषेधाभावात्, उकारस्य सामान्यनिषेधपरत्वाभावेन वैपरीत्यप्रसङ्गाच्च॥

न चैवं "अनेन स्वस्मै इतरेभ्यश्च नोपयुक्तो भवति" इति सूत्रविरोधः, तत्र सामान्यपरतयोकारप्रयोजनस्योक्तत्वादिति वाच्यम्; मकारप्रयोगोपधेरुपलक्षणत्वतात्पर्यग्राहकतया तत्साफल्यस्य तत्र विवक्षितत्वोपपत्तेः। एतेन 'विशेषनिषेधस्य शाब्दबोधाश्रयणं विफलम्, नमश्शब्दे नञो द्योतकत्वं चावश्यकमि'त्यपि निरस्तम्। तस्मान्नमश्शब्दस्य तावदुकारविवरणत्वं युक्तम् ॥

एवं नारायणपदस्याकारविवरणत्वमपि युक्तमेव। 'यद्विषये शेषवृत्तियोग्योऽहं, तद्विषये शेषवृत्तिर्भूयात्' इत्येवं फलोपधानप्रार्थनार्थं पूर्वोपात्तशेषवृत्तिप्रतिसम्बन्धिनिर्देशपरे नारायणपदेऽपि शेषवृत्तौ गुणकृतत्वसूचके कल्याणगुणगणस्याकारे रक्षकत्वोक्त्याक्षिप्तस्य कण्ठोक्तिमुखेन तद्विवरणत्वस्यावश्याभ्युपगन्तव्यतया भिन्नवाक्योपात्तेऽपि नारायणपदे अकारेणैकविषयकत्वमात्रेण विवरणविवरणिभावतात्पर्यस्य दुरपह्नवत्वात्। 'नारायणाय स्याम्' इति वाक्यस्यार्थान्तरविधानपरत्वेऽपि 'गौः सास्नादिमती' इत्यादौ इव प्रकृत्यंशे व्यञ्जकमुखेनोक्तार्थविशदीकारसम्भवात् ॥

इत्थं नारायणपदस्य स्वरूपादिपरत्वेन विवरणत्वमपि युक्तम् । "अकारो ब्रह्मविष्ण्वीशकमठेष्वङ्कणे रणे" इत्यादिनिघण्टुबलेनाकारस्यान्यत्रापि प्रयोगार्हतया, नारायणशब्दस्य "न तु नारायणादीनाम्" इत्यादिवचनानुसारेण स्वातन्त्र्येण नारायणशब्दस्यान्यत्र प्रयोगादर्शनेन चाकारोक्तदेवताविशेषरूपरक्षकस्वरूपपरत्वस्य महावाक्यविधया, तदेकवाक्यतापन्नेन कैङ्कर्यप्रतिसम्बन्धिनिर्देशकतया समानविषयेण च नारायणशब्देन णत्वानुपपत्त्यादिसुप्रसिद्धन्यायानुगृहीतेन निश्शङ्कमेव देवताविशेषसमर्पणमुखेनैव वक्तव्यत्वात् । मकारस्य समभिव्याहारबलाद्योग्यतया रक्ष्यपरत्वेऽपि रक्षणप्रकारभूतव्यापकत्वधारकत्वप्राप्यत्वप्रापकत्वप्रतियोगितया जीवसमष्टिनिर्देशमुखेनाकारविवरणत्वस्य वक्तव्यत्वाच्च । समभिव्याहारबलेन वस्तुतो रक्ष्यनिर्देशकस्य मकारस्याकारविवरणत्वावश्यम्भावेन तस्यास्मदनिष्टत्वाभावाच्च । अकारेण कारणत्वघटकतया गुणानां लाभेऽपि नित्यसमूहवाचिनारपदेनेव पदार्थविधया लाभाभावेन, कैङ्कर्यप्रवर्तकगुणानां कल्पितत्वशङ्कापरिहारलाभेन च नारपदेनैव रक्षणोपयोगिगुणजातप्रतिपादनमुखेन नारायणपदे अकारविवरणत्वस्य वक्तव्यत्वाच्च । नारायणपदस्यानन्तरोपात्तत्वेनाकारार्थोपस्थितिमूलकाकांक्षानिवर्तकज्ञानजनकत्वेन कल्याणगुणवत्त्वव्यापकत्वधारकत्वप्रापकत्वप्राप्यत्वानां रक्षणप्रकाराणां प्रतिपादनेन च नारायणशब्दस्यैव विवरणत्वाच्च । हेतुवाक्यस्य प्रतिज्ञावाक्योपपादकत्वस्य सुप्रसिद्धतया, रक्षकगुणजातादिप्रतिपादकस्य विवरणत्वसम्भवाच्च । व्याप्तिविशिष्टपक्षधर्मताप्रदर्शकयोरुदाहरणोपनययोर्हेत्ववयवोक्तज्ञापकत्वप्रकारपरतया विवरणत्वस्य तान्त्रिकैरभ्युपगतत्वेन, अर्थान्तरबोधनस्यापि विवरणपदार्थत्वाच्च । आकांक्षितार्थप्रतिपादनस्यैवानुगतविवरणपदार्थत्वाच्च । 'घटोऽस्ति, पटोऽस्ति' इत्यादेः परस्परवार्तानभिज्ञतया तदप्रसङ्गाच्च । उक्तार्थे नियताकारबोधनभेदेनोक्तार्थविशदीकारार्थान्तरबोधनयोर्भेदसम्भवाच्च । "मतं विवरणं तत्र" इत्युक्ततया प्रकृताभिप्रायेणैव विशिष्टस्य विवरणपदार्थत्वेनाव्याप्त्यनवकाशाच्च ॥

व्यक्तचतुर्थ्याः मकारविवरणत्वमपि युक्तम् । ज्ञातृत्वादेः परातिशयेच्छायाश्च मकारचतुर्थीवाच्यत्वेऽपि, मकारस्य शेषत्वाश्रयबोधकतया, चतुर्थ्याः शेषत्वोपपादककिञ्चित्कारसूचकतया च तयोरन्योन्यवार्ताभिज्ञत्वेन मूलमूलिभावसम्भवात् । किञ्चित्कारस्य शेषत्वोपापादकत्वं च "नाकिञ्चित्कुर्वतः शेषत्वम्" "अकिञ्चित्करस्य शेषत्वानुपपत्तिः" इत्याद्यभियुक्तव्यवहारासिद्धम् ॥

(७७) अक्षरक्रमेण विवरणे कर्तव्ये व्युत्क्रमः कथमित्यत आह— अक्रमेणेति ।

---

न च तथाऽपि लुप्तचतुर्थीविवरणत्वमेव व्यक्तचतुर्थ्याः सिध्यति, न तु मकारविवरणत्वम् । व्यक्तचतुर्थ्याः ज्ञातृत्वादिविशेषसमर्पणस्य तदुपयुक्तार्थान्तरसमर्पणस्य चाभावात् । व्यक्तचतुर्थ्याः लुप्तचतुर्थीविवरणत्वमप्युक्तम् । एकमकारकैकविशेष्यकबोधजनकयोश्चतुर्थ्योर्लुप्तत्वव्यक्तत्ववैषम्यमात्रेण मूलमूलिभावासम्भवात् । किञ्चित्कारस्यैव शेषत्वशब्दार्थतया "नाकिञ्चित्कुर्वतः शेषत्वम्" इत्यादिव्यतिरेकव्याप्तिप्रदर्शकाभियुक्तव्यवहारानुपपत्तिश्च । इत्थं च मकारचतुर्थ्योरन्योन्यवार्ताऽनभिज्ञत्वं मूलमूलिभावांशे दृढमेवेति वाच्यम् ।

भावानवबोधात् । शेषवृत्तिहेतुतया मकारेण ज्ञातृत्वोक्तौ ज्ञाने प्रवृत्तिहेतुत्वस्य फलेच्छाचिकीर्षाद्वारकतया परातिशयेच्छावाचिन्याः व्यक्तचतुर्थ्याः 'स्याम्' इत्यध्याहृतचिकीर्षाबोधकक्रियापदसमभिव्याहृततया उपयुक्तार्थान्तरबोधनेन मकारविवरणत्वोपपत्तेः । 'आयास्मि' इति नित्यवच्छ्रवणरूपं प्रणवे शेषवृत्त्यर्हत्वस्योक्ततया 'नारायणाय स्याम्' इत्यत्र प्रार्थनीयत्वेन शेषवृत्तिफलोपधानस्यैव व्यङ्ग्यतया च प्रणवनारायणपदयोः समानार्थकत्वाभावाच्च । फलोपधानस्य स्वरूपयोग्यताव्यापकतया शेषवृत्त्यभावे शेषवृत्त्यर्हत्वं न सम्भवतीत्यभियुक्तव्यवहारोपपत्तेश्च ॥

नारपदं मकारविवरणमित्यपि युक्तम् । मकारार्थे ज्ञातृत्वादिपञ्चकविशिष्टे, नित्यत्वैकरूपत्वबहुत्वरूपमतान्तरव्यावृत्तज्ञातव्यार्थान्तरबोधकत्वात् । "नारास्त्विति सर्वपुंसाम्" इत्याद्युक्तरीत्या नारायणपदेन सर्वचेतनप्राप्यत्वलाभेन, प्राप्यत्वस्य शेषित्वोपपादकत्वेन च शेषत्वानुयोगिसमर्पकस्य मकारस्य प्राप्यत्वप्रतियोगिसमर्पकनारपदस्य चैकविषयतया विवरणविवरणीभावतात्पर्योपपत्तेश्च ।

अपिचेत्याद्यप्ययुक्तम् । 'अहं नारायणायास्मि' इत्यत्र नारयणपदमात्रस्याकारविवरणत्वेन पदत्रयवैफल्यापत्त्या, कैङ्कर्यप्रतिसम्बन्धिनिर्देशकवाक्य एव प्रकृत्यंशेनाकारविवरणस्य युक्तत्वात्, अत एवोकारमकारविवरणानन्तर्यस्य युक्तत्वाच्च—इति । ॥७६॥

(७७) (अक्षरक्रमेण) इति — 'अहं नारायणायास्मि' इति अकारं विवृत्य 'मौ नास्मि' इति उकारं विवृत्य 'अस्मै स्याम्' इत्युक्तावपि

मू॥ अडैवे विवरियादोलिहिरदु विरोधिपोय् अनुभविक्कवेण्डुहैयाले ॥ ७७ ॥

छा॥ अक्रमेण विवरणं विरोधिनिवर्तनेनानुभवस्य कर्तव्यत्वात् ॥ ७७ ॥

व्या॥ अक्षरक्रमेणाविवरणमकारविवरणभूतनारायणपदोक्तभगवदनुभवस्य विरोधिभूताहङ्कारममकारादीन्नमसा निवर्त्य पश्चादनुभाव्यत्वात् इत्यर्थः ॥ ७७ ॥

---

अनुभवजनितप्रीतिकारितकैंकर्यफलोपधानप्रार्थनाव्यङ्ग्यस्यानुभवस्य विरोधिनिवृत्तिपूर्वकत्वरूपार्थक्रमोपपत्तेः, अनुभवस्य विरोधिनिवृत्तिपूर्वकतया नमश्शब्दनारायणशब्दयोः क्रम इति वक्तुं न युक्तमिति शङ्काभिप्रायः।

प्रार्थनीयत्वेन तृतीयपदव्यङ्ग्यकैङ्कर्यप्रवर्तकानुभवस्य 'अहमपि मम न इदमपि मम न' 'भोक्ताहं मम भोगोऽयम्' इत्येवं रूपाहङ्कारममकारनिवृत्तिसाध्यतयार्थक्रमादपि द्वितीयतृतीयपदयोः क्रम उपपद्यत इति सिद्धम्। पूर्वोक्तरीत्या प्रार्थनीयत्वेन तृतीयपदव्यङ्ग्यकैङ्कर्यप्रतिसम्बन्धिनिर्देशकपदावश्यम्भावेन 'अहं नारायणायास्मि' इतिव्यर्थपदत्रयघटितवाक्यस्य 'तस्मै स्याम्' इति पदान्तरप्रक्षेपेण वाक्यान्तरस्य च वैफल्येन क्रमेण विवरणार्थं वाक्यत्रयाश्रयणेऽपि अर्थक्रमस्सिध्यतीति वक्तुमशक्यत्वादिति परिहाराभियः।

**(अकारविवरणे)**ति—व्यक्तचतुर्थी व्यङ्ग्याकारनारायणपदोक्तगुणानुभवजनितप्रीतिकारितकैङ्कर्यस्य, तन्मूलभूतानुभवस्य च विरोधिनिवृत्तिपूर्वकत्वमभिप्रेतम्। **(विरोधिभूते)**ति—"भोक्ताहं मम भोगोऽयम्" इत्यनन्यार्थप्रवृत्त्युद्देश्यभोगाश्रयताबुद्धिरूपाहङ्कारस्य, अनन्यार्थप्रवृत्त्युद्देश्यभोगे निरुपाधिकमदीयेच्छाविषयत्वबुद्धिरूपममकारस्य चानन्यार्थपरेच्छाविषयत्वज्ञानाधीनस्वकीयेच्छाविषयस्वकीयगुणानुभवरूपकेवलपरार्थानुभवप्रतिबन्धकतया तन्निवृत्तौ सत्यामेव केवलपरार्थानुभवस्य कर्तव्यत्वादिति भावः ॥ ७७ ॥

(७८) अथ मध्यमपदस्य नमसोऽर्थं विवक्षुस्तत्रावान्तरपदभेदमाह— नम इति ।

मू॥ नमस्सु 'न' एन्नुम्, 'मः' एन्नुमिरण्डुपदम्॥ ७८॥

छा॥ नमः 'न' इति 'मः' इति च पदद्वयम् ॥७८॥

---

(७८) (अथ) - प्रणवार्थकथनानन्तरम् । (अर्थम्) - पदार्थम् । (तत्र) - नमश्शब्दे ।

(नमस्सु) इति—'नमःएन्गिर' इत्यनुक्त्वा 'नमस्सु' इत्युक्तिः "प्रेक्षावतः प्रवृत्तिर्या प्रह्वीभावात्मिका स्वतः । उत्कृष्टं परमुद्दिश्य तन्नमः परिगीयते ॥ १ ॥ लोके चेतनवर्गस्तु द्विधैव परिकीर्त्यते । ज्यायांश्चैव तथाज्यायाश्चैवाभ्यां विद्यते परः ॥ २ ॥ कालतो गुणतश्चैव प्रकर्षो यत्र तिष्ठति । शब्दस्तं मुख्यया वृत्त्या ज्यायानित्यवलम्बते ॥ ३ ॥ अतश्चेतनवर्गोऽन्यस्स्मृतः प्रत्यवरो बुधैः । अज्यायांश्चानयोर्योगश्शेषशेषितयेष्यते ॥ ४ ॥ अज्यायांसोऽपरे सर्वे ज्यायानेको मतःपरः । नन्तृनन्तव्यभावेन तेषां तेन समन्वयः ॥ ५ ॥ नन्तव्यः परमश्शेषी शेषा नन्तार ईरिताः । नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः ॥ ६ ॥ नीचोच्चयोस्स्वभावोऽयं नन्तृनन्तव्यतात्मकः । उपाधिरहितेनायं येन भावेनचेतनः ॥ ७ ॥ नमति ज्यायसे तस्मै तद्वा नमनमुच्यते । भगवान्मे परो नित्यमहं प्रत्यवरस्सदा ॥ ८ ॥ इतिभावो नमःप्रोक्तो नमसःकारणं हि सः । नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम् ॥ ९ ॥ प्रह्वीभवतिनीचे हि परो नैच्यं विलोकयन् । अतो वा नम उद्दिष्टं यत्तन्नामयति स्वयम् ॥ १० ॥ वाचा नम इति प्रोच्य मनसा वपुषा च यत् । तन्नमःपूर्णमुद्दिष्टमतोऽन्यन्न्यूनमुच्यते ॥ ११ ॥ इयं करणपूर्तिस्स्यादङ्गपूर्तिमिमां शृणु । शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् ॥ १२ ॥ पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यथा । इत्यङ्गमुदितं श्रेष्ठं फलेप्सा तद्विरोधिनी ॥ १३ ॥ अनादिवासनारोहादनैश्वर्यात्स्वभावजात् । मलावकुण्ठितत्वाच्च दृक्क्रियाविहतिर्हि या ॥ १४ ॥ तत्कार्पण्यं तदुद्बोधो द्वितीयं ह्यङ्गमिष्यते । स्वस्वातन्त्र्यावबोधस्तु तद्विरोध उदीर्यते ॥ १५ ॥ परत्वे सति देवोऽयं भूतानामनुकम्पनः । अनुग्रहैकधीर्नित्यमित्येतच्च तृतीयकम् ॥ १६ ॥ उपेक्षको यथाकर्मफलदायीति या मतिः ।

विश्वासात्मकमेतत्तु तृतीयं हन्ति वै सदा ॥ १७ ॥ एवम्भूतोऽप्यशक्तः सन्न-त्राणं भवितुं क्षमः । इति बुद्ध्याऽस्य देवस्य गोप्तृशक्तिनिरूपणम् ॥ १८ ॥ चतुर्थमङ्गमुद्दिष्टममुष्य व्याहतिः पुनः । उदासीनो गुणाभावादित्युत्प्रेक्षा-निमित्तजा ॥ १९ ॥ स्वस्य स्वामिनिवृत्तिर्या प्रातिकूल्यस्य वर्जनम् । तदङ्गं पञ्चमं प्रोक्तमाज्ञाव्याघातवर्जनम् ॥ २० ॥ अशास्त्रीयोपसेवा तु तद्व्याघात उदीर्यते । चराचराणि भूतानि सर्वाणि भगवद्वपुः ॥ २१ ॥ अतस्तदानुकूल्यं मे कार्यमित्येव निश्चयः । षष्ठमङ्गं समुद्दिष्टं तद्व्याघातो निराकृतिः ॥ २२ ॥ पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् । स्थूलोऽयं नमसः" इति अहि-र्बुध्न्यसंहितो (५२ - अध्या) क्तस्थूलयोजनाप्रत्यभिज्ञापनमुखेनाखण्डैकपदत्व-स्थापकपूर्वपक्षयुक्तिस्स्फोरणार्था ।

तथा चाहिर्बुध्न्येन स्थूलयोजनायां नमसोऽखण्डत्वेन व्याख्यातत्वेऽपि, तदुक्तार्थस्य "शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् । पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यथा" इत्युक्तस्वयंप्रयोजनप्रह्वीभावस्य "नम इत्येव वादिनः" इति यावदात्मभाविनो विरोधिनिवृत्तिमन्तरेणासम्भवात्, "सूक्ष्ममन्यन्निशामय ॥ २३ ॥ चेतनस्य यदा मम्यं स्वस्मिन्स्वीये च वस्तुनि । मम इत्यक्षरद्वन्द्वं तदा मम्यस्य वाचकम् ॥ २४ ॥ अनादिवासनारूढमिथ्या-ज्ञाननिबन्धना । आत्मात्मीयपदार्थस्था या स्वातन्त्र्यस्वता मतिः ॥ २५ ॥ मे नेत्येवं समीचीनबुद्ध्या साऽत्र निवार्यते । नाहं मम स्वतन्त्रोऽहं नास्मी-त्यस्यार्थ उच्यते ॥ २६ ॥ न मे देहादिकं वस्तु सशेषः परमात्मनः । इति बुद्ध्या निवर्तन्ते तास्ताः स्वीयमनीषिकाः ॥ २७ ॥ अनादिवासनाजातैर्बोधै-स्तैस्तैर्विकल्पितैः । रूषितं यद्दृढं तत्तत्स्वातन्त्र्यस्वत्वधीमयम् ॥ २८ ॥ तच्च-द्वैष्णवसार्वात्म्यप्रतिबोधसमुत्थया । नम इत्येतया वाचा नन्त्वा स्वस्मादपो-ह्यते ॥ २९ ॥ इति ते सूक्ष्म उद्दिष्टः" इति तत्रोक्तसूक्ष्मयोजनाप्रदर्शितदिशा सखण्डनमसा स्वस्वातन्त्र्यादिविरोधिनिवृत्तौ सत्यां तादृशप्रह्वीभावस्य स्वतः प्राप्तिसम्भवाच्च, "अपेक्षितविधेरनपेक्षितविधानं दुर्बलम्" "अनन्यलभ्यः शब्दार्थः" इत्यादिन्यायैः सखण्डत्वाश्रयणमेव न्याय्यमिति भावः ॥

अथ प्रतिषेधवाचिनो नञः प्रतियोगिवाचकेन विना प्रतिपादनापूर्त्या 'पद्यते - अनेनेति - पदं' इति विशिष्टार्थप्रतिपादकत्वलक्षणं पदत्वमनुपपन्न-मित्याशङ्कानिराकरणायाह—**नेती**ति । अन्योन्याभावस्थले नञः प्रतियो-गिवाचकपदवाच्यापेक्षया विशिष्टान्तरबोधकतया व्युत्पन्नत्वेन नञः प्रत्येक-

(७९) 'पदद्वयस्याप्यर्थः कः' इत्यत आह—म इतीत्यादिना ॥

मू ॥ 'मः' एन्गिरविंत्ताल् - 'तनक्कुरियन्' एन्गिरदु । 'न' एन्नु अत्तै तविर्किरदु ॥ ७९ ॥

छा ॥ 'मः' इत्यनेन 'स्वस्मा उपयुक्तः' इत्युच्यते । 'न' इति तन्निषिध्यते ॥ ७९ ॥

---

पदत्वमुपपद्यत इति भावः । 'घटो नास्ति' इत्यत्यन्ताभावस्थले घट एव नास्तित्वरूपावस्थान्तरविशिष्टः प्रतीयते । 'घटो न' इत्यन्योन्याभावस्थले तु 'घटः' इत्यनेन घटत्वविशिष्टं, तत्समभिव्याहृतेन नञा पटत्वादिविशिष्टार्थान्तरञ्चेति अर्थद्वयं प्रतीयते । तद्वदत्रापीति भावः । अत एवोच्यते—"द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्मणः पदम् । ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम्" इति ॥

अथ "परमन्यन्निशामय । पन्था नकार उद्दिष्टो मः प्रधान उदीर्यते ॥ ३० ॥ विसर्गः परमेशस्तु तत्रार्थोऽयं निरुच्यते । अनादिः परमेशोऽयं शक्तिमान्पुरुषोत्तमः ॥ ३१ ॥ तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान् । इति ते त्रिविधः प्रोक्तो नमश्शब्दार्थ ईदृशः ॥ ३२ ॥" इत्यहिर्बुध्न्येन परयोजनाप्रदर्शितरीत्या 'मः' इत्यस्य द्विपदत्वव्यावर्तनार्थमाह—**म इती**ति । स्थूलपरयोजनोक्तन्यूनाधिकसङ्ख्याव्युदासायाह—**पदद्वय**मिति ॥ ७८ ॥

(७९) निषेध्यनिषेधपरयोर्मकारनकारयोराकाङ्क्षाविशेषमूलकान्वयमुखेन वाक्यार्थं वक्ष्यन्, तदुपोद्घाततया पदद्वयार्थस्वभावात्, व्युत्क्रमान्वय आवश्यक इति सूचयितुं प्रथमं षष्ठ्यन्तपदार्थमाह—**म इती**ति । (षष्ठ्यन्ते)-ति—सम्बन्धसामान्यवाचिषष्ठ्यन्तपदेन मकारेणेत्यर्थः । 'अनेन' इतीदंशब्देन सम्बन्धसामान्यवाचित्वोक्तेः फलितं दर्शयति—**स्वस्मा इ**ति । 'उपयुक्तः' इत्यत्र 'मकारार्थ आत्मा' इति विशेष्यमभिमतम् । अत एव—

व्या ॥ 'मः' इति षष्ठ्यन्तमकारेण मकारवाच्यस्यात्मनः प्रागुक्ततादर्थ्यप्रतिकोटिस्वार्थत्वस्य ज्ञापनात् 'स्वस्मा उपयुक्तः' इत्युच्यते। 'न' इति निषेधवाचिना नञा तन्निषिध्यत इत्यर्थः ॥ ७९ ॥

(८०) उभयपदेनोक्तमर्थं क्रोडीकृत्याह—तथा चेति ॥

---

मकारवाच्यस्येत्युक्तम्। तथा च 'स्वस्मै' इति पदं - अध्याहारेण समभिव्याहृतविशेष्यपरम् ॥

(स्वस्माउपयुक्तः) इति–मन्त्रानुकरणरूपवाक्येन विवरणं विना 'मकारेणात्मा स्वशेष इत्युच्यते' इति व्याख्यातृवाक्यरूपेण विवरणं प्रयोगोपाधिभूतं वक्तृत्वमुपलक्षणम्; 'आत्मा आत्मसामान्यशेषभूतो न भवति' इत्येव विवक्षितमिति सूचयितुम्। अत एव "अनेन स्वस्य परेषां चोपयुक्तो न भवतीत्युक्तम्" इति पूर्वमपि स्वशब्दप्रयोगः कृतः। अत एव च "स्वस्योपयुक्तो न भवति" "स्वस्येति दशायां तु" इति सूत्रद्वये स्वशब्द एव प्रयोक्ष्यते। "उपयुक्तः" इत्यनेन षष्ठ्याः सम्बन्धसामान्यवाचित्वात्सम्बन्धसामान्यरूपेण योग्यत्वमेवात्र निषेध्यम्, अतो न बाध इति सूच्यते ॥

यद्यपि "नेति म इति च" इति पूर्वसूत्रोक्तरीत्या मूलक्रमानुसारेणात्रापि क्रम एव युक्तः; तथाऽपि "नेति तन्निषिध्यते" इति प्रतियोगिविशिष्टनिषेधस्य नञर्थत्वोक्तिः प्रतियोग्युक्तिं विना न सम्भवतीति इदं सूत्रं व्युत्क्रमेण प्रवृत्तम्। मूलक्रमेण व्याख्याने 'नेति निषेध्यते' इत्येव स्यात्। तथा च नञो निषेधवाचित्वस्य लोकसिद्धतया इदं सूत्रं व्यर्थं स्यादित्यवधेयम् ॥

(नेति निषेधवाचिने) ति - नेत्यव्ययरूपं पदं - अस्मीत्यध्याहृतक्रियापदसहितं सत् स्वशेषत्वयोग्यतां निषेधतीत्यर्थः ॥ ७९ ॥

(८०) (पदद्वयार्थमि) ति - इत्थं षष्ठ्यन्तस्य प्रतियोगिबोधकतयां, नञो निषेधबोधकतया, प्रतियोगिविशिष्टवेषेणाभावस्य बोधनीयतया

मू ॥ आह 'नमः' एन्गिरवित्ताल् 'तनक्कुरियनन्रु' एन्गिरदु ॥ ८० ॥

छा ॥ तथा च 'नमः' इत्यनेन 'स्वस्मा उपयुक्तो न भवति' इत्युच्यते ॥ ८० ॥

व्या ॥ पदक्रमेणार्थमनुक्त्वा व्युत्क्रमेणोक्तिः - निषेधस्य निषिध्योक्तिपूर्वकत्वात् । क्रमेण कथनावसरे तु "त्यजत सर्वम्" इतिवन्निषेधपूर्वकं निषिध्यमुच्यत इति योजनीयम् । अमुमर्थं परन्दपडिप्रबन्धे स्वयमेवाह ॥ ८० ॥

---

च व्युत्क्रमान्वय आवश्यक इति सूचितम्; अथ व्युत्क्रमान्वयप्रदर्शनपूर्वकं वाक्यार्थमाहेत्यर्थः ॥

'नमसः सखण्डत्वे प्रतियोगिबोधनानन्तरमेव निषेधस्य बोधनीयतया 'मः न' इति मन्त्रविन्यासापत्तिः' इति शङ्कावारणायाह—**पदक्रमेणे**-त्यादि । **(क्रमेणे)**ति- अयमाशयः—प्रदीप्तशरणस्थले 'बहिर्गच्छ बहिर्गच्छ' इत्युक्त्वा 'प्रदीप्तं शरणम्' इति निद्राणं प्रत्युक्तिवत्, सर्पं हस्ते गृहीत्वा क्रीडमानं प्रति 'त्यज त्यज' इत्युक्त्वा 'सर्पोऽयं मारकः' इति बालकं प्रत्युक्तिवच्च, अत्यन्तपरदुःखासहिष्णुना झटिति निषेधः कार्य इत्यभिप्रायेणानन्तरं बोधनीयस्यापि निषेधस्य प्रथमं बोधनोपपत्तेः । अत एव सर्वज्ञेन परोपदेशप्रवृत्तेन श्रीशठकोपसूरिणापि "त्यजत सर्वम्" इत्यनुगृहीतम् । अत एव च श्रीरामायणे "त्यक्त्वा पुत्रांश्च दारांश्च" "परित्यक्ता मया लङ्का" इत्येवं कर्मोक्तेः पूर्वमेव त्याग उक्तः—इति । **(अमुमर्थम्)** - 'क्रमेण' इत्यारभ्योक्तमर्थमित्यर्थः ॥

**(नमः इत्यनेने)**ति - एतादृशक्रमविशिष्टपदद्वयेनेत्यर्थः । **(स्वस्मा उपयुक्तः)** इति - 'आत्मे' त्यादौ अध्याहारः । 'स्वस्मै' इति स्वपद-

(८१) ननु 'स्वस्येतरेषाञ्चोपयुक्तो न भवति' इत्यन्यशेषत्वनिषेधकस्योकारस्य विवरणेन नमसा 'इतरेषां नोपयुक्तः' इति विवरणे कर्तव्ये 'स्वस्मै नोपयुक्तो भवति' इति कथं तदेव विवरणमिति शंकायामाह— इतरेत्यादिना ॥

---

अध्याहृतात्मपरम् । षष्ठ्यर्थो निरूपकत्वम् । (उपयुक्तः) - शेषवृत्तियोग्य इत्यर्थः ॥ ८० ॥

(८१) (नन्वि)त्यादि - 'नमसस्सखण्डत्वे मकारेण स्वसम्बन्धप्रसक्तिपूर्वकं निषेधोऽपि विफलः; उकारविवरणार्थं प्रवृत्तेन नमश्शब्देन जीवसामान्यशेषत्वस्यैव निषेध्यतया, मकारेण स्वसम्बन्धस्य प्रसक्तिपूर्वकं निषेधे मकारप्रयोगोपाधिभूतस्य वक्तृत्वस्योपलक्षणत्वाश्रयणे गौरवात्, निष्कृष्टात्मसामान्ये निष्कृष्टात्मसामान्यशेषत्वाभावस्य स्वाभाविकतया अनित्यार्थसंयोगपरिहाराय तस्यैव बोधनीयतया च प्रयोगोपाधिभूतदेहविशिष्टवेषोपलक्षणत्वस्यावश्याश्रयणीयत्वाच्च । न च सर्वात्मनामन्यशेषत्वापेक्षया स्वस्वशेषत्वस्यातिशयितानर्थावहतया तत्क्रौर्यद्योतनायोपलक्षणमुखेन तत्तदात्मशेषत्वनिषेधः कृत इति वाच्यम्; तत्तदात्मनां निष्कृष्टस्वस्वरूपशेषत्वरूपस्वातन्त्र्यभ्रमस्यान्यथाज्ञानरूपस्य रजोगुणकार्यतया तदपेक्षया देहात्मभ्रमस्य विपरीतज्ञानरूपस्य तमोगुणकार्यतया चातिक्रूरत्वात्, अन्यशेषत्वस्वातन्त्र्यभ्रमयोरनर्थहेतुत्वे विशेषाभावाच्च । न च तयोर्भगवच्छेषत्वज्ञानयोग्यतासम्पादकत्वतदभावाभावाभ्यां वैषम्यमस्तीति वाच्यम्; तथाऽपि देवतान्तरशेषत्वनिवृत्तेर्भगवद्वैलक्षण्यज्ञानेनैव साध्यतया, तद्वैलक्षण्यज्ञानेनैव देवतान्तरापेक्षयाऽपि अज्ञानाशक्त्यादिपरिपूर्णस्वशेषत्वाभावस्य व्याप्याव्याप्यन्यायेन सुलभत्वेन, निरुक्तवैषम्यस्य स्वशेषत्वनिषेधावश्यवक्तव्यत्वाप्रयोजकत्वात् । तस्मान्नमश्शब्दः अखण्ड एव'—इति शङ्काऽभिप्रायः ॥

(इतरे)ति - स्वापेक्षयान्यसामान्यस्येत्यर्थः । 'इतरोपयुक्ते' त्यनेन - शेषत्ववृत्तिसम्मतिरेव योग्यतारूपत्वेन विवक्षिता । अन्यशेषवृत्त्यर्हत्वस्य

मू॥ पिरक्कुरियनान वन्त्रु तन्वैलक्षण्यत्तैक्काट्टि-
मीट्कलाम्; तनक्केन्नुमन्र योग्यतैयुं कूडवल्लियुम्॥८१॥

छा॥ इतरोपयुक्तदशायां स्ववैलक्षण्यं प्रदर्श्य निवर्त-
यितुं योग्यः; स्वश्येतिदशायां तु योग्यतापि नश्यति॥८१॥

---

बाधितत्वेन कदाऽप्यभावात्। **(दशायाम्)** - कार्यार्थिन्यायेनान्यशे-षत्वसम्मतिदशायामित्यर्थः। **(स्ववैलक्षण्यम्)** इति - अत्र "निव-र्तयितुं योग्यः" इति वक्ष्यमाणनिवर्तनक्रियायां कर्तृसमर्पकतया 'ईश्वरेण' इत्यध्याहार्यम्। तथा च स्वपदं - अध्याहृतेश्वरपरम्। तथा च "जायमानं हि पुरुषम्" इत्याद्युक्तस्वकटाक्षविशेषसहकृतेन सर्वकारणत्वादिरूपात्यन्तो-त्कर्षं प्रदर्श्येत्यर्थः। **(तादृशदशातः)** इति · जीवो देवतान्तरशेष-त्वान्निवर्तयितुं योग्य इत्यर्थः। **(स्वशेषत्वदशायामि)**ति - 'आत्मा स्वोपयुक्तः' इत्येवंरूपायाम्, "उपदेशो निरर्थकः" इति दशायामित्यर्थः। **(योग्यतापी)**ति—अन्यशेषत्वफलोपधानेन सहान्यशेषत्वसम्मतिरूपयो-ग्यताऽपीत्यर्थः। **(नश्यती)**ति - अतस्तादृशयोग्यताविरोधिस्वशेषत्व-निवृत्तिरवश्यवक्तव्येति भावः। **(त्वंमे)** इति - श्रीपराशरभट्टार्यवच-नम्। — "त्वं मेऽहं मे कुतस्तत्तदपि कुत इदं वेदमूलप्रमाणादेतच्चानादि-सिद्धादनुभवविभवात्तर्हि साक्रोश एव। क्वाक्रोशः कस्य गीतादिषु मम विदितः कोऽत्र साक्षी सुधीः स्याद्धन्त त्वत्पक्षपाती स नृकलहे मृग्यमध्यस्थ-वत्त्वम्" इति॥

अत्र राद्धान्ताभिप्रायः—उकारविवरणार्थमनित्यार्थसंयोगपरिहारार्थं च निष्कृष्टजीवसामान्ये निष्कृष्टजीवसामान्यशेषत्वनिषेधस्य वक्तव्यत्वेऽपि, तत्तदात्मनां स्वस्वशेषत्वाभावमात्रानुसन्धानमूलकप्रयोगवत्, नमश्शब्दप्रयोगः; प्रयोगोपाधेरुपलक्षणत्वं बोधे अपरपदार्थान्वये चास्तीत्यजानतां वक्तृत्वपरि-चायितस्यापरपदार्थान्वय इति बोधनमुखेन सर्वात्मनां स्वस्वशेषत्वमन्यशेषत्वा-पेक्षयातिक्रूरम्। अतस्तन्निषेध एवावश्यं वाच्य इति सूचनायास्मच्छब्दपर्याय-

व्या॥ अन्यशेषत्वदशायामात्मनश्शेषत्वस्येष्टत्वादितरेभ्यस्स्वस्य सर्वकारणत्वसर्वरक्षकत्वसर्वशेषित्वादिवैलक्षण्यं प्रदर्श्य, तादृशदशातो निवर्तयितुं योग्यः; स्वशेषत्वदशायां तु "त्वं मे" इत्युक्ते "अहं मे" इति प्रत्युक्तिं विना शेषत्वस्यानिष्टत्वान्निवर्तनयोग्यतापि नश्यतीत्यर्थः ॥ ८१ ॥

---

मकारप्रयोगोपपत्तेः। न च-स्वातन्त्र्यबुध्यपेक्षया देहात्माभिमान एवातिक्रूरः; स्वातन्त्र्यभ्रमस्य 'मदतिरिक्त आत्मा नास्ति' इत्येवं धर्म्यभ्युपगमेन प्रवृत्तत्वाभावेन धर्मविपर्यासरूपान्यथाज्ञानरूपत्वात्, देहात्माभिमानस्य 'देहातिरिक्त आत्मा नास्ति' इत्येव धर्म्यनभ्युपगमेन प्रवृत्तत्वेन धर्मिविपर्यासात्मकविपरीतज्ञानरूपत्वाच्चेति वाच्यम्;—तथाप्यन्यशेषत्वापेक्षया स्वशेषत्वस्य क्रौर्यातिशयसम्भवेन तावतैव प्रकृतार्थसिद्धेर्निष्प्रत्यूहत्वात्, "वपुरादिषु योऽपि कोऽपिवा" इति देहात्माभिमानानादरेण "अहमद्यैव मया समर्पितः" "नियतस्वमिति प्रबुद्धधीरथवा किंनु समर्पयामि ते" इति स्वशेषत्वभ्रान्तेरेवावश्यपरिहरणीयतयानुगृहीतत्वेन तद्बलेन देहात्मभ्रमापेक्षया स्वशेषत्वभ्रमस्यैव क्रौर्यातिशयसिद्धेश्च। नचैवमपि अन्यशेषत्वस्वस्वातन्त्र्यभ्रमयोरनर्थहेतुत्वे न कोऽपि विशेष इति वाच्यम्;—अन्यशेषत्वभ्रमस्य तन्निवर्तकप्रमाणान्तराप्रामाण्यग्राहकदोषमूलत्वविरहात्, स्वशेषत्वभ्रमस्य तन्निवर्तकस्वापकर्षप्रत्यक्षोपदेशाद्यप्रामाण्यग्राहकस्वविषयकपक्षपाताभिनिवेशादिलक्षणदोषमूलत्वसद्भावाच्च, अनयोर्भगवद्वैलक्षण्यज्ञापनेन सुनिरसत्वदुर्निरसत्वलक्षणक्रौर्यतारतम्यस्य लोकसिद्धत्वात्। अत एवान्यशेषत्वभ्रमस्यान्यशब्दार्थरूपनिरूपकांशे भ्रान्तिरूपत्वेऽपि शेषत्वज्ञानांशे प्रमारूपत्वेन तदंशसम्प्रतिपत्तेर्भगवच्छेषत्वयोग्यतासम्पत्तिरूपत्वात्, स्वशेषत्वभ्रमस्य स्वातन्त्र्यभ्रमरूपत्वेन परशेषत्वज्ञानसामान्यविरोधितया भगवच्छेषत्वप्रतिबन्धकसमवधानरूपत्वाच्चानयोः क्रौर्यतारतम्यस्यापह्नोतुमशक्यत्वाच्च। एतेन—'तथापी' त्यादिकं निरस्तम्। अन्यशेषत्वस्वस्वातन्त्र्यभ्रमयोर्द्वैधावैषम्यस्य प्रतिपादितत्वेन, तन्निवृत्त्योर्द्वयोरपि भगवद्वैलक्षण्यज्ञानमात्रेण साधयितुमशक्यत्वात्। प्रसिद्धं हि-अन्यशेषभूते

(८२) अनेन नमसा क्रियमाणोंशः क इत्यत्राह— अनेनेति ॥

मू ॥ इत्ताल विरोधियै क्कालिक्किरदु ॥ ८२ ॥

छा॥ अनेन विरोधी निवर्त्यते ॥ ८२ ॥

---

घण्टाकर्णे मोक्षदानार्हत्वादिभगवद्वैलक्षण्यज्ञानस्यान्यशेषत्वनिवर्तकत्वम्; "न नमेयं तु कस्यचित्" इति स्वशेषभूते रावणे "विदितस्स हि धर्मज्ञः" इत्युक्तभगवद्वैलक्षण्यज्ञानस्य स्वस्वातन्त्र्यानिवर्तकत्वञ्च। तस्मात्स्वशेषत्वस्यैवात्यन्तक्रूरत्वेनावश्यपरिहरणीयत्वात्, तत्प्रसङ्गप्रतिषेधपरोऽयं नमश्शब्दस्सखण्ड एवेति सिद्धम् इति ॥ ८१ ॥

(८२) (अनन विरोधी निवर्त्यते) इत्यादि · अत्र भाष्यम्—"तत्र पूर्वः पक्षः - उकारनमश्शब्दयोः प्रयोजनपर्यवसानं न सम्भवति; उकारनमश्शब्दफलीभूतान्यशेषत्वनिवृत्तेः स्वयं प्रयोजनरूपत्वाभावात्। प्रत्युत अन्यशेषत्वस्य त्रिवर्गार्थिषु प्रधानपुरुषार्थहेतुतायाः, अपवर्गार्थिषु विद्यानिष्पादनाद्यर्थारोग्यकरणपाटवदीर्घायुष्ट्वादिप्रयोजनहेतुतायाः, निष्पन्नविद्येष्वपि यावन्मोक्षभाव्याज्ञानुज्ञाकैङ्कर्याद्यर्थतादृशपुरुषार्थहेतुतायाश्च "आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्। शङ्कराद्ज्ञानमन्विच्छेत्" "पश्येम शरदश्शतं जीवेम शरदश्शतम्" "आयुराशास्ते। सुप्रजास्त्वमाशास्ते" "अन्नवानन्नादो भवति" इत्यादिबहुप्रमाणसिद्धत्वेन तन्निवृत्तेरिष्टसाधननिवृत्तिरूपतया द्विष्टत्वादनर्थपर्यवसानस्य दुरपह्नवत्वात्। न च प्रयोजनान्तररहितानां परमैकान्तिनां प्रयोजनान्तरार्थान्यशेषत्वस्य प्रतिकूलत्वात्तन्निवृत्तेरिष्टतया तादृशाधिकारिविषये प्रयोजनपर्यवसानं शङ्क्यम्;— "मत्पादभक्तिज्ञानाभ्यां फलमन्यत्कदाचन" "सर्वान्देवान्नमस्यन्ति रामस्यार्थे यशस्विनः" इत्यादिप्रमाणानुसारेण परमैकान्त्यन्तर्गतप्रयोजनान्तरनिवृत्तेर्मोक्षानुकूलज्ञानभक्तिभगवद्भागवतसमृद्ध्यादिप्रयोजनविशेषव्यतिरिक्तप्रयोजनान्तरविषयत्वसिद्ध्या भगवद्ज्ञानाद्यर्थदेवतान्तरशेषताया इष्टसाधनरूपत्वानपायात्। न चान्यशेषत्वस्य भगवच्छेषत्वविरोधित्वात्तन्निवृत्तेः पुरुषार्थरूपत्वं शङ्क्यम्;—"इतरोपयुक्तदशायां स्ववैलक्षण्यं प्रदर्श्य निवर्तयितुं योग्यः" इति स्ववचनविरोधात्, चैत्रमैत्रादेः स्वस्वमातृपितृगुरुप्रभृति-

नानाव्यक्तिशेषत्वानां युगपद्दर्शनेन तन्न्यायेनैव देवतान्तरशेषत्वभगवच्छेषत्वयोर्यौगपद्यसम्भवेन विरोधाभावाच्च ।

अपि च कर्तृत्वेन यागशेषभूतस्यैव पुरुषस्याधिकारित्वेनाकारेण यागशेषितायास्तद्द्वारा कर्तृभूतस्वशेषितायाश्च तान्त्रिकसम्प्रतिपन्नत्वेन तन्न्यायेन भगवदाराधनन्यासोपासनकर्तृतया भगवच्छेषभूतस्यैव चेतनस्य तदाराधनजन्यफलभोक्तृत्वेनाकारेण स्वशेषिताया अपि दुरपह्नवत्वेन भगवच्छेषत्वान्यशेषत्वयोर्विरोधाभावाच्च । एतेन - स्वशेषत्वरूपान्यशेषत्वस्य भगवच्छेषत्वविरोधित्वमित्यपि निरस्तम् ॥

किञ्चोकारनमश्शब्दयोः स्वशेषत्वपर्यन्तान्यशेषत्वनिवर्तकत्वे रहस्यशास्त्राप्रामाण्यप्रसङ्गो दुरुद्धरः । "निरस्ताखिलदुःखोऽहमनन्तानन्दभाक्स्वराट् । भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते" इत्यनुगृहीतरीत्या मोक्षकामस्यैव रहस्यशास्त्रश्रवणाद्यधिकारितया तस्य स्वशेषत्वसामान्यनिषेधे स्वशेषित्वकार्यमोक्षरूपफलस्वाम्यानुसन्धानलक्षणाधिकारस्यैवासम्भवेनाधिकारि-रहितस्य तस्य प्रामण्यायोगात् ॥

अपि चामात्यादीनां राजदत्तस्वातन्त्र्यवत्, जीवस्य तत्तत्साधनानुष्ठानतत्तत्फलभोगविषयेषु भगवदधीनस्वातन्त्र्यसद्भावस्य "स्वतन्त्रः कर्ता" "कर्ता शास्त्रार्थवत्त्वात्" "शास्त्रफलं प्रयोक्तरि" "स स्वराड्भवति" "स तत्र पर्येति जक्षत्क्रीडन्नममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इत्यादिबहुप्रमाणसिद्धत्वेन नमश्शब्देन जीवस्वातन्त्र्यनिषेधे तद्बाधस्य वज्रलेपत्वाच्च ॥

अथ षष्ठ्यन्तमकारघटितस्य नमश्शब्दस्य स्वशेषत्वनिवृत्तिपरत्वमप्यनुपपन्नम् । सम्बन्धसामान्यवाचिन्याः षष्ठ्याः शेषत्वरूपविशेषपरत्वे मानाभावात् । "इन्द्रायेदं न मम" इत्यादिष्विवात्रापि षष्ठ्यन्तमकारस्य स्वस्वत्वपरताया एव प्रथमतः प्रतीयमानतया तत्परित्यागे नियामकाभावाच्च । "समित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसा योऽकरोद्देवे स स्वध्वर इतीरितः" इति नमश्शब्दस्यात्मयागे विनियुक्तत्वेन तदनुसारेण परदेवतामुद्दिश्यात्महविस्त्यागात्मकात्मयागान्तर्गतस्वस्वत्वनिवृत्तिपरतया नमश्शब्दस्यावश्यवक्तव्यत्वेनार्थान्तराश्रयणस्य तद्विरुद्धत्वात्, अहिर्बुध्न्यसंहितायां नमश्शब्दस्थूलयोजनायां न्यासपरत्वमुक्त्वा, सूक्ष्मयोजनायां मोक्षोपायाधिकारिणोऽवश्यापेक्षितं निरपेक्षस्वातन्त्र्यादिनिवृत्तिपूर्वकस्वरूपशोधनं विधाय, अनन्तरं परयोजनायां साध्योपायविशेषवशीकार्यस्य प्राप्यभूतसिद्धोपायस्य

वोपायान्तरापेक्षया समर्पणस्यैव वा प्राधान्याभिधानेन नमश्शब्दस्य साध्योपायैकपरतया तादृशस्य तस्य स्वस्वातन्त्र्यसामान्यनिवृत्तिपरताया असम्भवदुक्तिकत्वात्, "स्वतन्त्रः कर्ता" इत्युक्तकर्तृसापेक्षस्य साध्योपायस्य स्वातन्त्र्यमन्तरानुपपन्नत्वात्। एवं "यस्स देवो मया दृष्टः पुरा पद्मायतेक्षणः। स एव पुरुषव्याघ्रस्सम्बन्धी ते जनार्दनः॥ सर्वेषामेव लोकानां पिता माता च माधवः। गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः" इत्युपदेशं श्रुत्वा, "एवमुक्तास्त्रयः पार्था यमौ च भरतर्षभाः। द्रौपद्याः सहिताः सर्वे नमश्चक्रुर्जनार्दनम्" इति तदनुष्ठानदशायां नमस्कारप्रयोगोक्तेः; दमयन्तीवृत्तान्ते "शरणं प्रति देवानां प्राप्तकालममन्यत" इत्युपक्रम्य "वाचा च मनसा चैव नमस्कारं प्रयुज्य सा" इत्युक्तेश्च शरणागतिस्थानपाठरूपाल्लिङ्गात्, "नमस्कारात्मकं यस्तु विधायात्मनिवेदनम्" इति वचनान्तराच्च नमश्शब्दस्य शरणागतिरूपसाध्योपायवाचकतया दुरपह्नवत्वेन तस्य स्वस्वातन्त्र्यसामान्यनिवृत्तिपरतया अनुपपन्नत्वाच्च।

अपि च प्रणवप्रतिपन्नस्य रक्ष्यरक्षकभावसम्बन्धविषये किञ्चिदुपायसापेक्षत्वात्, चरमपदप्रतिपन्नकैङ्कर्यप्रार्थनायाश्च साधनफलप्रार्थनारूपत्वेन तस्याश्च साधनानुष्ठानमन्तरानुपपन्नत्वाच्च * पूर्वोत्तरपदसमभिव्याहारबलेनापि नमश्शब्दस्योपायानुष्ठानपरतया दृढीकृतत्वेन तत्र स्वस्वातन्त्र्यसामान्यनिषेधोऽनुपपन्नः।

परं च - प्रणवघटकमकारे नमःपदघटकमकारे च ज्ञातृत्वोक्त्या ज्ञातृत्वेनैव "कर्ता शास्त्रार्थवत्त्वात्" इत्यधिकरणोक्तन्यायेन कर्तृत्वलक्षणस्वातन्त्र्यसिद्धेः; चरमपदे फलप्रार्थनोक्त्या "शास्त्रफलं प्रयोक्तरि" इति न्यायेन प्रयोक्तृत्वसिद्ध्या च पूर्वोत्तरपदानां सर्वेषां स्वस्वातन्त्र्याक्षेपकतया तन्मध्यघटकेन नमश्शब्देन स्वस्वातन्त्र्यनिषेधो बाधित एव।

अपरं च - नमश्शब्दस्य स्वशेषत्वनिवृत्तिपरत्वे वैयर्थ्यं दुर्वारम्। अन्यशेषत्वनिवृत्तिपरेण प्रणवघटकोकारेणैवान्यतमस्वशेषत्वस्यापि स्वस्मिन्निवर्तिततया पुनर्नमश्शब्दे तन्निवर्तनायोगात्। न च गोबलीवर्दन्यायादुकारस्य नमश्शब्दनिवारितान्यशेषत्वव्यतिरिक्तविषयत्वान्न दोष इति वाच्यम्; - नमश्शब्दस्य स्वशेषत्वात्मकान्यशेषत्वविशेषनिषेधपरत्वासिद्धौ गोबलीवर्दन्यायादुकारस्य तद्व्यतिरिक्तविषयत्वासिद्धिः, उकारस्य स्वशेषत्वव्यतिरिक्तान्यशेषत्वमात्रनिवर्तकत्वसिद्धौ नमःपदस्य स्वशेषत्वनिवृत्तिपरत्वासिद्धिरित्यन्योऽन्या-

श्रयात् । न चोकारस्यान्यशेषत्वसामान्यनिवृत्तिपरत्वेऽपि तत्र स्वदेहादिनिरूपितस्वामित्वस्याव्यावर्तितत्वेन तद्व्यावर्तकतया नमश्शब्दसार्थक्यमिति वाच्यम्; स्वस्य स्वंगति शेषत्वाभावग्राहकेणोकारेणैव "यस्यैते तस्य तद्धनम्" इति न्यायेन स्वापेक्षया देहादेः स्वत्वाभावस्यापि सिद्धत्वेन तदयोगात् । नापि स्वशेषित्वस्वदेहादिस्वामित्वापेक्षयातिरिक्तस्य स्वनिर्वाहकत्वात्मकस्वस्वातन्त्र्यस्य नमश्शब्देन निषेधात्तत्सार्थक्यम्; स्वस्य भगवत्सापेक्षस्वनिर्वाहकतायाः "कर्ता शास्त्रार्थवत्त्वात्" "शास्त्रफलं प्रयोक्तरि" इत्यादिसिद्धत्वेन तन्निषेधे बाधात् । ईश्वरनिरपेक्षनिर्वाहकतायाः "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "य आत्मानमन्तरो यमयति" इत्यादिभिर्भगवतः सर्वनियामकत्वप्रतिपादकवाक्यान्तरैः सर्वरक्षकत्वसर्वकारणत्वादिप्रतिपादकाकारेण च निषेधसिद्धेश्च तदयोगात् । न हि भगवत्परत्वं श्रुतवतः स्वस्य भगवन्निरपेक्षनिर्वाहकत्वशङ्का स्यात्, येन तन्निवारकतया नमश्शब्दसार्थक्यम् । तस्मान्नमश्शब्दस्योकारविवरणत्वपक्षे शब्दस्वारस्यभङ्गप्रकरणविरोधार्थबाधवैयर्थ्यादिदोषा दुष्परिहरा एव ।

ननु श्रीमदष्टश्लोक्याम् "अकारार्थायैव स्वमहमथ मह्यं न निवहा नराणां नित्यानामयनमिति नारायणपदम् । यमाहास्मै कालं सकलमपि सर्वत्र सकलास्ववस्थास्वाविस्युर्मम सहजकैङ्कर्यविधयः" इति श्लोके क्रमेण मूलमन्त्रपदत्रयार्थविवरणरूपे नमश्शब्दस्य स्वशेषत्वनिवृत्तिपरत्वप्रदर्शनात्, सम्बन्धसामान्यविषयिण्या मकारोत्तरषष्ठ्याः शेषत्वरूपविशेषत्वाश्रयणेनावश्यं नमश्शब्दस्य स्वशेषत्वनिषेधपरत्वं वक्तव्यम्; तथा च सम्प्रदायबलात्पूर्वोक्तदोषाणां दोषाभासत्वादिति चेन्न - "मन्त्रब्रह्मणि मध्यमेन नमसा पुंसः स्वरूपं गतिर्गम्यं शिक्षितमीक्षितेन पुरतः पश्चादपि स्थानतः" इति श्लोके नमश्शब्दस्य भरन्यासाद्युपायपरताया अनुगृहीतत्वेनास्मदुक्तस्वारसिकयोजनायामेव श्रीपराशरभट्टपादानां मुख्यतात्पर्यसिद्धेः, उपायस्यैव स्वस्थानस्थितनमश्शब्दार्थत्वात्; "अकारार्थायैव स्वमहमथ मह्यं न" इत्युक्तिस्तु प्रणवार्थानुसन्धानपरैव । स्वरूपानुरूपकैङ्कर्यप्रार्थनायाः स्वरूपानुसन्धानपूर्वकत्वावश्यम्भावेन कैङ्कर्यप्रार्थनापरे चरमपदे स्वरूपपरप्रणवार्थमात्रस्यैवानुसन्धेयत्वात् । तस्मात् "अथ मह्यं न" इत्युक्तेरुकारस्य नमश्शब्दसमभिव्याहारबललभ्यार्थासङ्कोचतात्पर्यकत्वप्रदर्शनमात्रार्थकत्वेन नमश्शब्दार्थशिक्षणपरत्वाभावान्नोक्तरीत्या सम्प्रदायबलात्पूर्वोक्तदोषाणां दोषाभासत्वसिद्धिः ।

अथ स्यात् - नमश्शब्दस्य विरोधिनिवृत्तिपरत्व एव शब्दस्वारस्यम्; विरोधिभूतसम्बन्धसामान्यपरतया तदानीमेव षष्ठीस्वारस्यसिद्धेः । न तावत्स्वात्मात्मीयापेक्षया स्वस्य शेषशेषिभावमात्रमेव विरोधि, येन तावन्मात्रे षष्ठ्यास्तात्पर्यसङ्कोचः स्यात् । किन्तु स्वात्मात्मीयापेक्षया शेषशेषिभाववत् रक्ष्यरक्षकभावभोक्तृभोग्यभावावपि विरोधिभूतावेव । तयोः क्रमेणोपायोपेयविरोधित्वात् । तदेवं विरोधिसामान्यनिवृत्तिपरत्वे सत्येव नमश्शब्दस्वारस्यम् । आत्मत्यागपरत्वे तु सम्बन्धसामान्यपरायाः षष्ठ्याः स्वत्वरूपविशेषमात्रपरत्वेनास्वारस्यम् । परिग्रहरूपार्थासङ्कोचाभावात् । एवं शरणागतिस्थाने नमश्शब्दप्रयोगोऽपि नमश्शब्दस्य विरोधिसामान्यनिवृत्तिपरत्व एवोपपद्यते । "भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिः" इति श्रीराममिश्रादिव्यसूक्त्या शरणागतेर्विरोधिनिवृत्तिरूपतायाः सिद्धत्वेन क्लृप्तस्यैव वृत्त्या नमश्शब्दस्य तत्परत्वोपपत्तेः । साध्योपायरूपविद्याविशेषपरत्वे तु शक्त्यन्तरं कल्पनीयमित्यस्वारस्यमिति चेत्, न;—

मूलमन्त्रे प्रथमचरमपदयोः स्वरूपप्राप्ययोः प्रस्तुत्वेन तन्मध्यगते नमःपदे तादृशपूर्वोत्तरपदसमभिव्याहारबलेन स्वरूपप्राप्यविरोधिनोर्निषेधसम्भवेऽपि नमश्शब्दस्योपायपरत्वाभावे उपायस्यैवाप्रस्तुतत्वेन तत्र तद्विरोधिनिषेधायोगात्, शरणागतेर्भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिमात्ररूपत्वे सुषुप्तिप्रलययोः सर्वेषां शरणागतत्वापत्त्या सर्वमुक्तिप्रसङ्गाच्च ।

किञ्च स्वरक्षणस्वभोगान्वययोर्भगवत्प्रवृत्तिविरोधित्वमपि दुरुपपादम् । भगवत्कर्तृकरक्षणोपायानुष्ठानरूपस्य चेतनकर्तृकस्वरक्षणान्वयस्य भगवत्कर्तृकरक्षणापेक्षितप्रसादहेतुत्वात्, तद्वैषम्यनैर्घृण्यपरिहारकत्वाच्च, भगवत्प्रवृत्त्यनुकूलताया दुरपह्नवत्वात् । एवं चेतनकर्तृकस्वभोगान्वयस्यापि "उदाराः सर्व एवैते" इत्युक्तरीत्या रक्षकगतौदार्यगुणप्रकाशकत्वात्, सार्वभौमलीलाशुकक्षीरास्वादनन्यायेन भगवदानन्दहेतुत्वाच्च तदनुकूलताया दुरपह्नवत्वाच्च ।

अपि च यदि स्वरक्षणस्वभोगान्वययोर्नमश्शब्देन निषेधः स्यात्, तदा चेतनानामचेतनवैलक्षण्यं, तद्रक्षणे तद्रक्षणवैलक्षण्यं च लोकवेदसिद्धं भज्येत । चेतनानां चैतन्यकार्योपायोपेयान्वयाभावे चैतन्यस्यैवासिद्धिप्रसङ्गात्, इष्टप्रापकत्वानिष्टनिवर्तकत्वरूपं चेतनरक्षावैलक्षण्यं च चेतनस्य फलान्वयमन्तरा दुरुपपादम् ।

अथ 'भावान्तरमभावः' इति रीत्यान्यशेषत्वस्वरक्षणस्वभोगान्वयनिवृत्तीनां ज्ञानविशेषरूपत्वाश्रयणेन चेतनानामचेतनवैलक्षण्यादिकमुपपादयितुं शक्यत इति चेन्न; तथा सति तादृशज्ञानविशेषाणामेव चेतनरक्षहेतुत्वसिद्ध्या स्वरक्षणे स्वान्वयप्रसङ्गात्। न च सिद्धान्ते "सत्यां सामग्र्यां प्रतिबन्धकवलात् कार्यानुत्पादः" इति प्रामाणिकव्यवहारानुसारेण प्रतिबन्धकाभावस्य कार्यसामग्रीकोट्युत्तीर्णत्वाङ्गीकारात्, सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वं प्रतिबन्धकत्वमिति प्रतिबन्धलक्षणाङ्गीकाराच्च प्रतिबन्धकाभावमात्रात्मकानां निरुक्तज्ञानविशेषाणां हेतुत्वासम्भवात् न तदन्वयस्य स्वरक्षणान्वयरूपत्वमिति वाच्यम्;—प्रतिबन्धकाभावस्य हेतुत्वाङ्गीकारपक्षे स्वरक्षणे स्वान्वयप्रसङ्गस्यापरिहरणीयत्वात्।

न च स्वस्वरूपप्राप्यस्वरूपैतदुभयानन्तर्गतादृष्टद्वारकफलसाधनगोचरव्यापारान्वयस्यैव स्वरक्षणान्वयशब्दार्थत्वात्, विरोधिलयनिवृत्तिरूपाणां ज्ञानविशेषाणां यथावस्थितस्वस्वरूपाविर्भावान्तर्गततया यावदात्मभाविप्राप्यरूपत्वाच्च न दोष इति वाच्यम्—मुक्तिदशायां "स यदि पितृलोककामो भवति, सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिषु चेतनस्य पितृलोकसृष्ट्यादिरूपस्वभोगोद्देश्यकप्रवृत्तेः, "सोऽश्नुते सर्वान्कामान्" "जक्षत्क्रीडन्रममाणः" इत्यादिषु स्वप्रवृत्त्युद्देश्यभोगाश्रयतायाः, "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इत्यदृष्टद्वारकफलसाधनगोचरकृत्यनुवृत्तेश्च प्रतिपन्नतया स्वशेषत्वादिसामान्यनिवृत्तेर्यावदात्मभाविप्राप्यान्तर्गतत्वोक्तेरप्रामाणिकत्वात्।

न च "द्व्यक्षरस्तु भवेन्मृत्युः" इत्यादिवचनस्यात्र प्रमाणत्वं शङ्क्यम्;—"सर्वं मृत्युपदं जिह्ममार्जवं ब्रह्मणःपदम्। एतावान्ज्ञानविषयः किं प्रलापः करिष्यति" इति वचनान्तरानुगुण्येन नमश्शब्दस्य ज्ञातव्यसर्वसाध्योपायसारभूतन्यासविद्याप्रतिपादकतया सारतमत्वमात्रतात्पर्यकत्वसिध्या तदयोगात्। तत्र ह्यात्मापहारप्रायश्चित्तात्मकभरसमर्पणाननुष्ठानरूपजिह्मशब्दार्थस्य संसारानुवृत्तिप्रयोजकत्वोक्तिपूर्वकं तदनुष्ठानरूपार्जवस्य ब्रह्मप्राप्तिहेतुत्वमुक्त्वा "एतावान् ज्ञानविषयः" इति भरन्यासस्यैव ज्ञातव्यसर्वार्थसारत्वमुक्त्वा, "किं प्रलापःकरिष्यति" इति तद्व्यतिरिक्तपरवचनानामसारत्वमुच्यते। तस्मात्तदैकार्थ्याय "द्व्यक्षरस्तु भवेन्मृत्युः" इति वचनस्यापि ज्ञातव्यसारार्थप्रतिपादकतया नमश्शब्दप्रशंसामात्रपरत्वावश्यंभावेन तस्य मोक्षदशायां ममकारसामान्यनिवृत्तिपरत्वासिध्या प्रकृतार्थप्रामाण्यमसम्भावितमेव।

तदेवं ममकारसामान्यनिवृत्तेस्स्वरूपान्तर्गततया पुरुषार्थत्वे मानाभावात्, "द्व्यक्षरस्तु भवेन्मृत्युः" इत्यादीनां भरन्यासरूपसाध्योपायप्रशंसापर्यवसानात्, साध्योपायविशेषाननुष्ठानरूपजिह्मशब्दितकौटिल्यात्मकमम्यानिवृत्तेस्साध्योपायानुष्ठानरूपत्वावश्यंभावेन तस्यैव नमश्शब्दार्थत्वौचित्यात्साध्योपायानुष्ठानं विना केवलस्वशेषत्वादिनिवृत्तिमात्रस्य प्रपत्तिशब्दार्थतया दृष्टविधया फलहेतुत्वोक्तौ सुषुप्तिप्रलययोरतिप्रसङ्गात्, चेतनगतप्रधानभोक्तृत्वादीनां भगवत्कर्तृकरक्षणव्यापारानुकूलत्वेन स्वशेषत्वादिसामान्यनिवृत्तेः प्रतिबन्धकाभावविधया भगवत्प्रवृत्तिहेतुत्वस्याप्रामाणिकतया नमःपदघटकमकारोत्तरषष्ठ्या सम्बन्धसामान्यपरिग्रहासम्भवेन स्वस्वामिभावरूपसम्बन्धविशेषपरत्व एव स्वारस्यात्तदनुसारेण नमश्शब्दस्यात्मयागपरत्वसिद्धेः, तादृशसाध्योपायानुष्ठानानुपयुक्तकेवलस्वशेषत्वादिनिवृत्तेस्सुषुप्त्यादिसाधारणतया पुरुषार्थत्वायोगात्, प्रत्युत ब्रह्मविद्यानिष्पादनाद्यर्थदेहयात्राद्युपयुक्तफलान्तरार्थतया स्वानुकूलान्यशेषत्वादिनिवृत्तेरभिमतार्थविनाशरूपत्वाच्च नमश्शब्दस्य साध्योपयपरत्वं विना केवलान्यशेषत्वादिसामान्यनिवर्तकतयोकारविवरणत्वे पुरुषार्थपर्यवसानं दुर्लभमेव—इति ।

सिद्धान्तस्तु—उकारनमश्शब्दयोःप्रयोजनपर्यवसानं सम्भवत्येव । तत्फलीभूतान्यशेषत्वनिवृत्तेर्विरोधिनिवृत्तिरूपतया स्वयम्प्रयोजनत्वोपपत्तेः । रत्नादीनां मलादिनिवृत्तेः कान्त्याद्याविर्भावरूपतया स्वयंप्रयोजनत्वदर्शनात्, स्वरूपाविर्भावलक्षणमोक्षस्य तिरोधाननिवृत्तिरूपस्य स्वयम्प्रयोजनतायास्सम्प्रतिपन्नत्वाच्च ।

न च "आरोग्यं भास्करादिच्छेत्" इत्याद्युक्तभास्करादिशेषतायास्सर्वाधिकार्यपेक्षितफलसाधनतया तन्निवृत्तेरनर्थरूपतावचनं युज्यते;—भास्कराद्याराधकानामपि "तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्" "लभते च ततः कामान्मयैव विहितान्हितान्" इत्यादिभिः फललाभस्य वस्तुतो भगवदाराधनाधीनत्वोक्त्या देवतान्तरशेषत्वस्यान्यथासिद्धत्वेन फलहेतुत्वायोगात्; प्रत्युत "ब्रह्माणं शितिकण्ठंच याश्चान्या देवतास्स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्" "न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" "पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतम्" इत्यादिभिर्देवतान्तरशेषतायास्तदन्तर्यामिदीयमानफलगताल्पत्वास्थिरत्वहेयत्वादिदोषमात्रप्रयोजकतया त्रिवर्गार्थ्यपेक्ष्याप्यनर्थावहत्वा

नपायेन तन्निवृत्तेःपुरुषार्थरूपतायाः दुरपह्नवत्वाच्च। एतेन देवतान्तरशेषताया मोक्षानुकूलज्ञानादिहेतुतया मुमुक्षुजनाभिमतत्वमपि प्रत्युक्तम्। "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः" "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इत्यादिना तस्य भगवदसाधारणत्वोक्तेः।

किञ्च—भावनात्रयान्वयादिना रजोगुणादिप्रयुक्ताहङ्कारादिना चाशुद्धानां देवतान्तराणां प्रसक्तानुप्रसक्तनामग्रहणस्याप्यशुद्धिरूपतायाः श्रीहरिवंशे भगवता बादरायणेन "असत्कीर्तनकान्तारपरिवर्तनपांसुलाम्। वाचं हरिकथालापगङ्गयैव पुनीमहे" इति दर्शितत्वेन तादृशदेवतान्तरशेषताया मुमुक्षुजनाभिमतत्वायोगाच्च।

न चैवं "सर्वान्देवान्नमस्यन्ति" इत्यादिविरोधः; तादृशान्यदेवाभजनस्य "अत्यन्तभक्तियुक्तानां नैव शास्त्रं न च क्रमः" इत्युक्तपुरुषतन्त्रभक्तिभूमायत्ताज्ञानकार्यतया केवलभगवत्सौन्दर्यादिरूपविषयदोषप्रयुक्तत्वेनादोषत्वेऽपि, स्वप्रयोजनार्थदेवतान्तरशेषताया आश्रयदोषजन्यायाः दोषरूपतया तन्निवृत्तेः पुरुषार्थत्वोक्तौ विरोधाभावात्।

न चान्यशेषत्वस्य भगवच्छेषत्वानुकूलतायाः "इतरोपयुक्तदशायाम्" इत्यादिनोक्ततया तद्विरोधः; अन्यशेषत्वस्य स्वस्वातन्त्र्यनिवृत्तिरूपत्वेनाकारेण भगवच्छेषत्वानुकूलत्वे सत्यपि भगवदन्यशेषत्वत्वेन रूपेण तस्य भगवच्छेषत्वविरोधित्वोपपत्तेः। न च लोकवेदयोरेकं प्रति शेषभूतस्यैव तदितरशेषत्वस्यापि दर्शनात्, तन्न्यायेन भगवच्छेषत्वान्यशेषत्वयोराविरोधसम्भवः; प्रणवे लुप्तचतुर्थ्युक्तभगवच्छेषत्वस्य सङ्कोचकाभावेन सर्वात्मना चेतनानां भगवच्छेषत्वसिद्ध्या केनचिदाकारेण तदन्यशेषतायास्तद्विरुद्धत्वात्। न चैवं प्रत्यक्षादिविरोधः; शास्त्रबलेन प्रत्यक्षादिसिद्धान्यशेषत्वादीनां कर्मोपाधिकत्वसिद्धेः, सर्वात्मना भगवच्छेषत्वार्हत्वस्यैव लुप्तचतुर्थ्यर्थत्वेन तस्य शास्त्रैकसमधिगम्यतया तस्य प्रत्यक्षादिभिर्बाधायोगाच्च। एतेन - यागादिकर्तृयजमानदृष्टान्तेन ब्रह्मविद्यानिष्ठानां स्वशेषत्वानुमानं परास्तम्। चेतनानां सर्वात्मना भगवच्छेषत्वग्राहकलुप्तचतुर्थीस्वारस्येन तस्य बाधितत्वात्। भगवच्छेषत्वान्ययोगव्यवच्छेदकप्रणवघटकोकारतद्विवरणनमश्शब्दाभ्यां लुप्तचतुर्थ्यर्थासङ्कोचस्य दृढीकृतत्वेन तादृशप्रबलप्रमाणविरुद्धानां स्वशेषत्वसाधकतर्काणां तर्काभासमात्रत्वात्।

न च चेतनानां स्वशेषत्वनिषेधे रहस्यशास्त्रस्याधिकारिदौर्लभ्यादप्रामाण्यप्रसङ्गः; लोके विषयान्तरे गुणकृतदास्यवतां प्राणप्रहाणेनाप्यतिशयाधानस्य सुप्रसिद्धतया तन्न्यायेन केवलपरातिशयाधानरूपकैङ्कर्येच्छयैव स्वस्वरूपयाथात्म्यज्ञानिनां प्रवृत्त्युपपत्तेः। न च "स्वतन्त्रः कर्ता" "कर्ता शास्त्रार्थवत्त्वात्" शास्त्रफलं प्रयोक्तरि" "स स्वाराड्भवति" "स तत्र पर्येति जक्षत्क्रीडन्रममाणः" इत्यादिभिश्चेतनस्य साधनानुष्ठानाद्यर्थस्वातन्त्र्यावगमात्, अत्र तन्निषेधविरोधः; "स्वतन्त्रः कर्ता" इत्यनुशासनस्य कर्मसंज्ञारहितकर्तृमात्रविषयत्वेन तस्य भगवदेकनियाम्यस्वरूपविषयत्वायोगात् । न हि प्रयोज्यकर्तुः स्वातन्त्र्यापेक्षा; तस्य प्रयोज्यताविरुद्धत्वात् । "कर्ता शास्त्रार्थत्वात्" इत्यस्य प्रयोज्यप्रधानसाधारण्येन कर्तृतामात्रसाधनपरत्वेन तस्य स्वातन्त्र्यसाधकत्वायोगात् । "शास्त्रफलं प्रयोक्तरि" इत्यस्य स्वामिविषयत्वेन कर्मकर्तृविषयकत्वाभावात्, तस्य प्रयोक्तृसामान्यविषयकत्वे यजमानपरिक्रीतानामृत्विजामपि फलप्रसङ्गात्, उपचरितसत्रस्वामिप्रतिनिहितस्यापि फलप्रसङ्गाच्च । तस्मात् "शास्त्रफलं प्रयोक्तरि" इत्यत्र प्रयोक्तृशब्दस्य त्यज्यमानद्रव्यस्वामिभूतपरिक्रयणप्रयोगकर्तृवाचकत्वावश्यम्भावेन तस्य दास्यरूपपरार्थकर्मकर्तृविषयकत्वायोगात्, तस्य भक्तिप्रपत्तिरूपकेवलभगवदाराधनानुष्ठातॄणां स्वफलभोगान्वयलक्षणस्वातन्त्र्यसाधकत्वमसिद्धमेव । "स स्वराड्भवति" इत्यस्याकर्मवश्यतामात्रपरतया भाषितत्वात्, "जक्षत्क्रीडन्रममाणः" इत्यादीनां "रममाणा वने त्रयः" इत्यादिष्विव योग्यतानुसारेण परातिशयाधानात्मकनित्यकैङ्कर्यरतिमात्रविषयकत्वात्, तत्र पितृलोकादिसृष्टेरपि भगवत्प्रयोज्यव्यापाररूपत्वेन भगवल्लीलाद्यन्तर्गतत्वस्य "भावे जाग्रद्वत्" इति सूत्रभाष्यान्ते "कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात्परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्ति" इत्यनुगृहीतत्वात्, "तन्वभावे सन्ध्यवदुपपत्तेः" इति सूत्रभाष्ये "सत्यसङ्कल्पोऽपि स्वयं न सृजति" इत्यनुगृहीतत्वात्, "उच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षा तदर्थारम्भाद्यसम्भवात्" इति जगद्व्यापारवर्जाधिकरणे भाषितत्वात्, ब्रह्मानुभवस्यापि भगवत्कर्तृकचेतनानुभावे चेतनकर्तृकप्रतिवीक्षणदानानुनिष्पाद्यानुषङ्गिकभोगमात्ररूपत्वाच्च चेतनस्य स्वप्रवृत्त्युद्देश्यभोगाश्रयत्वलक्षणस्वातन्त्र्यासिद्धेर्नमश्शब्देन जीवस्वातन्त्र्यनिषेधे बाधकाभावात् ।

न च नमश्शब्दस्य स्वशेषत्वनिवर्तकत्वे मकारोत्तरषष्ठ्यस्वारस्यम्; स्वसम्बन्धत्वेन रूपेणैव स्वशेषत्वस्यापि निषेध्यत्वसम्भवेन तदस्वारस्याप्रसक्तेः। न चैवं बाधः; अबाधितप्रमाणान्तरसिद्धसम्बन्धविशेषव्यतिरिक्तविषयतया षष्ठ्यास्सङ्कोचसम्भवात्। न चैवं स्वशेषत्वादीनामपि अनिषेध्यसम्बन्धान्तर्भावशङ्का; चेतनस्य तादात्म्यादिरूपस्वसम्बन्धवत् स्वशेषत्वादीनामबाधितप्रबलप्रमाणसिद्धत्वाभावात्, स्वशेषत्वादीनां सकललोकसाक्षिकत्वेऽपि देहात्मैक्यवत् शास्त्रबाध्यत्वोपपत्तेः। न चैवमपि विशेषरूपेण निषेध्यालाभप्रसङ्गः; नमश्शब्दस्य स्थानत्रयसम्बन्धबलेनैव तल्लाभोपपत्तेः।

तथा हि—मूलमन्त्रमन्त्ररत्नव्यापकान्तरादिगतनमश्शब्देषु मकारस्य षष्ठ्यन्तत्वात् "अहमपि न मम भगवत एवाहमस्मि याःकाश्चन कृतयो मम भगवति मम ममता नास्ति तास्तु भगवत एव ताः" "ममेतिद्व्यक्षरो मृत्युर्न ममेति च शाश्वतम्" "चेतनस्ययदा मम्यम्" इत्यादिनमश्शब्दविवरणश्रुतिनिरुक्तस्मृतिवचनेषु च नियमेन मकारस्य षष्ठ्यन्तशब्दैरेव विवृततया च तस्य स्वशेषत्वमात्रपरत्वं स्वस्वत्वमात्रपरत्वं वा न वक्तुं युक्तम्। तथा साते सर्वषष्ठ्या सम्बन्धसामान्योपस्थापनवैफल्यात्। अतस्स्वभोगार्थप्रवृत्तिमत्त्वस्वभोगार्थप्रवृत्तियोग्यत्वस्वरक्षणयोग्यत्वरूपसम्बन्धत्रयबोधनाय सम्बन्धसामान्यषष्ठी परिग्रहीता; तत्रापि स्वरक्षणयोग्यत्वरूपसम्बन्ध एव षष्ठीमुख्यतात्पर्यविषयः। अन्ययोःपूर्वोत्तरवाक्यसमभिव्याहारबलेनाप्यवगन्तुं शक्यत्वात्। यद्यपि 'नारायणाय स्याम्' इत्यनेन भगवच्छेषत्वरूपवृत्तितादर्थ्यवत्, 'आयास्मि' इत्यनेन भगवच्छेषत्वयोग्यतारूपस्वरूपतादर्थ्यवच्च, जीवस्य भगवत्प्रवृत्तिहेतुकरक्षाकर्मत्वं, तद्योग्यत्वं वा न समभिव्याहारसिद्धम्। येन स्वरक्षणसाधनप्रवृत्त्यर्हत्वलक्षणसम्बन्धस्य प्रसक्तस्य निषेधस्स्यात्। तथापि निरुपाधिकरक्षकत्वस्याकारेणोक्तौ जीवस्य मकारेण शेषत्वान्वयप्रतियोगितया बुद्धिस्थत्वात्, अयनशब्दे भगवत एव रक्षणकरणत्वोक्तेश्च जीवे प्राप्तशेषभूतभगवत्कर्तृकसिद्धोपायभूततत्प्रवृत्तिमात्रहेतुकरक्षणकर्मत्वं व्यञ्जनया प्रत्येतुं शक्यमिति नमश्शब्दे षष्ठ्या तत्प्रतिकोटिभूतस्वरक्षकत्वसम्बन्धस्य प्रसक्तिस्स्यादिति तत्र प्रत्यक्षबाधपरिहाराय स्वरक्षणयोग्यत्वमेव निषेध्यमिति गम्यते।

एतत्सर्वमभिसन्धायानुगृहीतं श्रीपराशरभट्टार्यैः "मन्त्रब्रह्मणि मध्यमेन नमसा पुंसः स्वरूपं गतिर्गम्यं शिक्षितमीक्षितेन पुरतः पश्चादपि स्थानतः" इत्यादि। अत्र 'न मम' इत्यस्य सर्वचेतनानुसन्धानरूपत्वात्, "पुंसः"

इति सामान्यनिर्देशः। स्वरूपशब्देन - 'स्वम् - आत्मीयम्, रूपम् - आकारः इति व्युत्पत्त्या प्रणवोक्तो भगवद्भोगार्थप्रवृत्तियोग्यत्वरूपो यावदात्मभाव्याकारो विवक्षितः। गतिशब्देन - नारायणशब्दे करणव्युत्पत्तिसिद्ध उपायः विवक्षितः। गम्यशब्देन - व्यक्तचतुर्थीव्यङ्ग्यं भगवत्प्रीतिरूपं फलं विवक्षितम्। "शिक्षितम्" इति नपुंसकेनैकशेषो विवक्षितः। एतत्त्रयं स्वभोगार्थप्रवृत्तियोग्यत्वतत्फलोपधानस्वरक्षणसाधनप्रवृत्तियोग्यत्वलक्षणविरोधित्रयराहित्येन सह समभिव्याहारबलेन बोधितमित्यर्थः। ईक्षितेनेत्यादि—पूर्वोत्तरवाक्ययोः स्ववाक्ये च पर्यालोचितेनेत्यर्थः। पूर्वोत्तरवाक्ययोर्नमसः पर्यालोचनम्, ताभ्यां वाक्यैकवाक्यतया पर्यालोचनम्, स्ववाक्ये पर्यालोचनम्, स्ववाक्यस्थपदविशेषसमभिव्याहारविशिष्टतया पर्यालोचनमित्यनुसन्धेयम्। विरोधित्रयराहित्येन शिक्षितत्वं विशदयति—स्वातन्त्र्यमित्यादिना। स्वातन्त्र्यशब्देन - 'स्वतः स्वयमेव स्वस्य, तन्त्रम् - नियामकम्, यस्य सः' इति व्युत्पत्त्या स्वाधीनत्वं लभ्यते। तच्च प्रकृते पूर्वोक्तस्वरूपशिक्षाफलितार्थस्य विवक्षणीयतया फले स्वाधीनत्वविवक्षणे स्वभोगार्थप्रवृत्त्यर्हत्वं विवक्षितम्। समुचितेति—स्वार्था वृत्तिरनुचिता; परार्था वृत्तिरुचिता; केवलपरार्था वृत्तिः समुचिता। तथा च चेतनस्य स्वभोगार्थप्रवृत्त्यपेक्षया देवतान्तरभोगप्रवृत्तिर्भगवद्भोगार्थप्रवृत्तियोग्यतासम्पादकत्वादुचिता; देवतान्तरभोगार्थप्रवृत्तिपरित्यागेन भगवद्भोगार्थप्रवृत्तिः समुचितेत्यभिप्रायः। नान्योचिता—अत्र 'नान्योचितम्' इति यथायोग्यं विपरिणामः। तस्येति - "पतिं विश्वस्य" इत्यादिप्रसिद्धस्येत्यर्थः। "वसुरण्यो विभूरसि" इत्यादिश्रुतौ "अच्युताहं तवास्मि" इत्याद्युपबृंहणे च प्रणवस्य भगवन्तं प्रत्युक्तिरूपतया विवरणमभिप्रेत्य—हरेः - कथितमित्युक्तम्। हरिम्प्रति कथितमित्यर्थः। 'सर्वं स्वार्थतया आहरति' 'आदत्ते इति हरिः; "हरिर्हरति पापानि" इति च विवक्षितम्। "नान्योचिता" इति सामान्यविवक्षायां 'न मम' इत्युक्तिविरोधमाशङ्क्याह—विविच्येति। 'देवतान्तरशेषत्वापेक्षया स्वशेषत्वं क्रूरम्' इति विवेक्तुं विशेषनिषेधः। उकारविवरणरूपत्वादुपलक्षणमिति भावः। ननु भृत्यस्य स्वभोगार्थप्रवृत्तिमत्त्वेऽपि राजभोगार्थप्रवृत्तिमत्त्वदर्शनात्, "नान्योचिता" इति निषेधः किमर्थ इत्यत्राह—स्वस्यापि नार्ह तत इति। अपिशब्देन हरिः समुच्चीयते। ततः अन्यशेषत्वनिषेधस्य वाचनिकत्वात् स्वस्य परस्यापि शेषत्वं भगवत्प्रीत्यतिशयभङ्गकमेवेत्यवगम्यते। अत एव लोकेऽपि "स्वार्थानपरि-

त्यज्य ये" इत्युक्तरीत्यात्यन्तसुहृद्विषये मातृपुत्रविषये गुरुशिष्यविषये भर्तृभार्याविषये कामिनीकामुकविषये च प्रेमातिशयेन स्वप्रयोजनपरित्यागेन स्वानिष्टस्वीकारेण च केवलपरोद्देश्यकप्रवृत्तिमत्त्वं परप्रीत्यतिशयकरतया दरीदृश्यते । जननीस्तनन्धयादिस्थले तादृशप्रीत्यतिशयमनपेक्ष्यापि तादृशप्रवृत्तिमत्त्वं दरीदृश्यत इति भावः ।

तदेवं नमश्शब्दस्य स्थानत्रयसम्बन्धबलेन विशिष्यसम्बन्धत्रयनिषेधकतायाः सम्प्रदायसिद्धत्वेन विशेषरूपेण निषेध्यसम्बन्धालाभशङ्का दूरापास्तैव ।

एतेन "इन्द्रायेदं न मम" इत्यादिष्विव प्रकृतमकारोत्तरषष्ठ्याः स्वस्वामिभावरूपसम्बन्धविशेषपरत्वौचित्यवर्णनं प्रत्युक्तम् । षष्ठ्याः स्वस्वत्वरूपसम्बन्धविशेषमात्रपरत्वे सम्बन्धसामान्योपस्थापनवैफल्यस्य वज्रलेपत्वात्, नमश्शब्दस्थानत्रयसम्बन्धलब्धशेषत्वाद्याकारत्रयाविरोधिसम्बन्धसामान्यपरत्वसिद्धान्ते प्रणवान्वितनमश्शब्दघटकमकारोत्तरषष्ठ्यर्थेषु "याने येन्तनदे येन्रिरुन्देन्" इत्युक्तस्वस्वामिभावसम्बन्धस्याप्यन्तर्गतत्वेनात्रैव षष्ठ्यर्थपौष्कल्यसिद्धेः ।

नमश्शब्दस्यात्मयागपरत्वमप्यनुपपन्नम् । आत्मनः परस्वत्वेन स्वस्वत्वशून्यतया चेतनकर्तृकतत्त्यागलक्षणयागासम्भवात् । निस्वस्य यागासामर्थ्यात् । तथा चोक्तं जैमिनिना "द्रव्यवत्त्वात्तु पुंसां स्याद्द्रव्यसंयुक्तम्" इति । यस्मात् "व्रीहिभिर्यजेत, यवैर्यजेत" इत्यादिकं कर्मद्रव्यसंयुक्तम्, तस्मात्पुंसां तु स्यादधिकारः; तेषामेव द्रव्यवत्त्वादित्यर्थः । एवं "त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात्" इति च सूत्रान्तरम् । ब्राह्मणादीनां त्रयाणां मध्ये द्रव्यसम्पन्न एवाग्निहोत्रादिष्वधिक्रियेत; नाद्रव्यः; कर्मणां द्रव्याधीनसिद्धकत्वादिति तदर्थः । चेतनस्य स्वात्मकहविस्त्यागलक्षणयागकर्तृत्वे तस्य कर्मकर्तृविरोधोऽपि दुष्परिहरः । "कर्मकर्तृव्यपदेशाच्च" इति सूत्रेण तयोर्विरोधस्य सिद्धत्वात् । न च ब्रह्मण एकस्यैव "आत्मकृतेः" इत्युक्तकर्मकर्तृत्वाश्रयत्ववदत्राप्युपपद्यत इति वाच्यम्; सर्वशक्तस्य तदुपपत्तावपि चेतनस्य तदयोगात् । तस्मादात्मयागतद्दानहोमादिप्रतिपादकवचनानां यथावस्थितस्वरूपज्ञानमात्रे तात्पर्यं वक्तव्यम् । तथा चानुगृहीतं स्तोत्ररक्षायां "अथ वा किन्नु समर्पयामि ते" इत्यत्र "पूर्वश्लोककृतं समर्पणं त्वच्छेषत्वप्रतिपत्तिमात्रस्वरूपम्; न तु मदीयस्य त्वच्छेषतापादनरूपमिति

भावः " इति। साङ्गप्रपदनाधिकारे च " एवं श्लोकद्वयेन यथावस्थितस्वरूप-विवेकाभावेऽपि 'नमः' इति स्वसम्बन्धनिवृत्तिरेव "अहमपि तवैवास्मि हि भरः" इत्युक्तभरसमर्पणप्रधानभूतशास्त्रार्थसारभूतेत्युक्तं भवति " इति। एवं स्वसम्बन्धसामान्यनिवृत्तिपूर्वकपरसम्बन्धप्रतिपत्तेरेवात्मयागादिशब्दार्थ-त्वान्नमश्शब्दघटकमकारोत्तरषष्ठ्या भगवत्सम्बन्धप्रतिकोटिस्वसम्बन्धसामा-न्यपरत्वमेवोचितम्।

एतेन "समित्साधनकादीनां" इत्यादिवचनोदाहरणपूर्वकमुक्तं प्रत्युक्तम्। तत्र नमश्शब्दकरणतयोक्तस्यात्मन्यासस्यापि नमश्शब्दश्रवणजन्य-निरुक्तस्वसम्बन्धसामान्यनिवृत्तिमात्रात्मकत्वात्।

अथ यच्चोक्तं नमश्शब्दस्य योजनात्रयेऽपि अहिर्बुध्न्येन साध्योपाय-रूपसाधनानुष्ठानपरतया व्याख्यातत्वात्, तत्र स्वस्वातन्त्र्यसामान्यनिषेधोऽ-नुपपन्न इति; तन्न; तत्र प्रथमयोजनायां "तुलविल्लिमङ्गलं तोल्लुम्" इत्युक्त-स्वरूपान्तर्गतस्वयम्प्रयोजनप्रह्वीभावादिपरतायाः, मध्यमयोजनायां भगवत्स-म्बन्धविरोधिस्वसम्बन्धसामान्यनिषेधपरतायाः, चरमयोजनायां मोक्षैककार-णभूतचेतनप्रवृत्तिसामान्यानिरपेक्षसिद्धोपायपरतायाश्च पृथक्पृथग्दर्शितत्वेन तदयोगात्।

तथा हि— "प्रेक्षावतः प्रवृत्तिर्या प्रह्वीभावात्मिका स्वतः। उत्कृष्टं परमुद्दिश्य तन्नमः परिगीयते॥ लोके चेतनवर्गस्तु द्विधैव परिगीयते। ज्यायांश्चैव तथाऽज्यायान्नैवाभ्यां विद्यते परः॥ कालतो गुणतश्चैव प्रकर्षो यत्र तिष्ठति। शब्दस्तं मुख्यया वृत्त्या ज्यायानित्यवलम्बते॥ अतश्चेतन-वर्गोऽन्यः स्मृतः प्रत्यवरो बुधैः। अज्यायांश्चानयोर्योगः शेषशेषितयेष्यते॥ अज्यायांसोऽपरे सर्वे ज्यायानेको मतः परः। नन्तृनन्तव्यभावेन तेषां तेन समन्वयः॥ नन्तव्यः परमः शेषी शेषा नन्तार ईरिताः। नन्तृनन्तव्य-भावोऽयं न प्रयोजनपूर्वकः॥ नीचोच्चयोः स्वभावोऽयं नन्तृनन्तव्यता-त्मकः।" इति "णमुल् - प्रह्वीभावे" इति धातोर्निष्पन्नस्य नमश्शब्दस्य स्वरूपान्तर्गतस्वयम्प्रयोजनशेषवृत्त्यात्मकानुपायभूतप्रणामपरत्वमभिधाय, अथ "उपाधिरहितेनायं येन भावेन चेतनः। नमति ज्यायसे तस्मै तद्वा नम-नमुच्यते॥ भगवान्मे परो नित्यमहं प्रत्यवरः सदा। इति भावो नमः प्रोक्तो नमसः कारणं हि सः॥" इति 'नमति - प्रह्वीभवति, चेतनोऽ-नेन इति नमः' इति करणे व्युत्पत्त्या नमश्शब्दस्य पूर्वयोजनोक्तानन्यप्रयो-

जनशेषवृत्तिमात्रात्मकप्रह्वीभावहेतुभूतनिरुपाधिकभगवत्पारतन्त्र्यज्ञानपरत्वमु - क्त्वा, "नमयत्यपि वा देवं प्रह्वीभावयति ध्रुवम् । प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् ॥ अतो वा नम उद्दिष्टं यत्तं नामयति स्वयम्" इति 'नामयाति इति नमः' इति व्युत्पत्त्या "संबाहुभ्यां नमति संपतत्रैर्द्यावा-पृथिवी जनयन्देव एकः' इत्याद्युक्तभगवद्गतप्रह्वीभावहेतुभूततज्ज्ञानविषय-"नीचोच्चयोः स्वभावोऽयम्' इत्युक्तस्वरूपान्तर्गतात्यन्तपारतन्त्र्यलक्षणनै-च्यमात्रपरत्वं च प्रतिपाद्य "वाचा नम इति प्रोच्य मनसा वपुषा च यत् । तन्नमः पूर्णमुद्दिष्टमतोऽन्यं न्यूनमुच्यते" इति स्वरूपान्तर्गतप्रह्वीभावस्य करणत्रयायत्तत्वाभावे "विचित्रा देहसम्पत्तिरीश्वराय निवेदितुम्" इत्युक्त-तादृशकरणत्रयप्रदभगवद्विवक्षितप्रयोजनपूर्त्यभावेन वैकल्यात्, करणत्रयेणापि प्रह्वीभावस्यैव "इवन्पाशुरं केट्टवारे तिरुवुल्लमुहक्कुम्" इत्याद्यनुगृहीतरीत्या परिपूर्णशेषवृत्तिरूपत्वाच्च तस्यैव पूर्तिमाभधाय "इयं करणपूर्तिः स्यादङ्गपूर्ति-मिमां शृणु" इति तादृशप्रह्वीभावशालिनः सम्भावितस्वभावविशेषान् मानस-प्रह्वीभावावस्थाविशेषरूपतया तदङ्गशब्दानिर्दिष्टान्वक्तुमुपक्रम्य "शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् । पुरुषं परमुद्दिश्य न मे सिद्धिरतोऽन्यथा ॥ इत्यङ्गमुदितं श्रेष्ठं फलेप्सा तद्विरोधिनी" इति यावदात्मभाविप्रह्वीभाव-स्यैव "नम इत्येव वादिनः" "नमो नारायणाय वेन्रु पल्लाण्डु परमात्मनै-चूल्न्दिरुन्देत्तुवर्" "मेलैतोण्डुकलित्तान्दितोल्लं शोलुप्पेत्तेन्" इत्याद्युक्तरीत्या परमप्रयोजनत्वात्, तद्व्यतिरिक्तप्रयोजनान्तरसामान्यनिवृत्तेरेव "स्वप्रयोजन-निवृत्ति शेषत्वफलम्" इत्यनुगृहीतरीत्या शेषत्वज्ञानात्मकमानसप्रह्वीभावस्य मुख्यफलत्वाच्च प्रयोजनान्तरनिवृत्तिपूर्वकप्रह्वीभावैकप्रयोजनकत्वाध्यवसायस्य प्रधानाङ्गत्वमुक्त्वा "फलेप्सा तद्विरोधिनी" इति तादृशप्रह्वीभावे साधनत्व-भ्रान्त्या तस्य फलान्तरेच्छायाः स्वयम्प्रयोजनत्वाध्यवसायात्मकप्रधानाङ्ग-विरोधितया तस्मिन्मोक्षपर्यन्तस्वफलसाधनत्वबुद्धेरवश्यपरिहरणीयतां प्रदर्श्य, "अनादिवासनायोगादन्यतोऽस्वभावजात् । मलावकुण्ठितत्वाच्च दृक्क्रिया विहतिर्हि या ॥ तत्कार्पण्यं तदुद्बोधो द्वितीयं ह्यङ्गमीदृशम्" इति पूर्वोक्त-स्वयम्प्रयोजनप्रह्वीभाववतां "पोय् निन्नज्ञानमुम्पोल्लावोलिक्कुम्" इत्युक्ता-नादिविपरीतवासनायोगात् "मायुं वहैयरियेन् वलिवनैयेन्पेण् पिरन्दे" इत्यु-क्तात्स्वाभाविकपारतन्त्र्यरूपादनैश्वर्यात्, "अलुक्कुडम्बुम्" इत्युक्तान्मला-वकुण्ठितत्वाच्च "एन्नान्शैय्हेन्" इत्याद्यनुगृहीतरीत्या जायमाना दृक्क्रिया-

विहतिः, श्लोकत्रयोदितसम्यग्ज्ञानसमीचीनक्रिययोर्हानिः, सैव कार्पण्यं नाम; तादृशकार्पण्यस्य "नोत्त नोन्बिलेन् नुण्णरिविलेन्" इत्याद्युक्तप्रकारेण यदनुसन्धानं सम्भावितस्वभावरूपं जायेत, तदेव द्वितीयमङ्गमित्युक्त्वा, स्वाभाविकानैश्वर्यरूपात्यन्तपारतन्त्र्यानुसन्धानगर्भस्यास्य द्वितीयाङ्गस्य "असन्देशात्तु रामस्य तपसश्चानुपालनात्" "ममैव दुष्कृतं किञ्चिन्महदस्ति न संशयः" "एषा विपद्याम्यहमल्पभाग्या" इत्याद्युक्तराघवान्तःपुरपुरन्ध्र्याचारशिक्षितात्यन्तपारतन्त्र्यनिष्ठारूपत्वेन स्वरक्षणप्रवृत्त्यर्हत्वादिरूपस्वस्वातन्त्र्यभ्रमस्य तद्विरोधित्वेनावश्यपरिहरणीयतां "स्वस्वातन्त्र्यावबोधस्तु तद्व्याघात उदीयते" इति प्रदर्श्य "परत्वे सति देवोऽयं भूतानामनुकम्पनः। अनुग्रहैकधीर्नित्यमित्येतत्तु तृतीयकम्" इति पूर्वोक्तकार्पण्यानुसन्धानेन भीतानां तादृशभयानिवर्तकतया यत् भगवद्गुणानुसन्धानं स्यात्, तदेव विश्वासशब्दितं तृतीयमङ्गमित्युक्त्वा, "उपेक्षको यथा कर्मफलदायीति या मतिः। विश्वासात्मकमेतत्तु तृतीयं हन्ति वै सदा" इति न्यासोपासनादिरूपचेतनानुष्ठितत्तत्साधनानुगुणफलप्रदतया भगवानुदासीन एव, न तु निर्हेतुकोपायभूत इति बुद्धेः "तहवुडैय्यवने येत्रुम्" इत्याद्युक्तलक्षणपूर्वोक्तविश्वासविरोधितयावश्यपरिहरणीयतां प्रदर्श्य, "एवम्भूतोऽप्यशक्तः सन्न त्राणं भवितुं क्षमः। इति बुद्ध्यास्य देवस्य गोप्तृशक्तिनिरूपणम्॥ चतुर्थमङ्गमुद्दिष्टममुष्य व्याहतिः पुनः। उदासीनो गुणाभावादित्युत्प्रेक्षा निमित्तजा" इति पूर्वोक्तभगवद्दयानुसन्धानेनाभयङ्गतानां यत् स्वकार्यापादकभगवच्छक्त्यनुसन्धानम् "शरैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः। मां नयेत्" इत्याद्युक्तं, "कलैवाय् तुन्बं कलैया तोलिवाय् कलैहण् मत्तिलेन्" इत्युक्तस्वाभिप्रायनिवेदनात्मकगोप्तृत्ववरणकारणम्, तदेव तुरीयाङ्गम्, तादृशमङ्गम्प्रति "शङ्के मद्भाग्यसङ्क्षयात्" इति स्वभाग्यहान्या भगवति ब्रह्मास्त्रवत् सहायान्तरासहे सर्वशक्ते निरपेक्षकार्यकारिणि निरपेक्षकारित्वात्मकगुणाभावप्रयुक्तोदासीनतारोपस्य विरोधित्वादवश्यपरिहरणीयतां प्रदर्श्य, "स्वस्य स्वामिनिवृत्तिर्या प्रातिकूल्यविवर्जनम्। तदङ्गं पञ्चमं प्रोक्तमाज्ञाव्याघातवर्जनम्" इति पूर्वोक्तभगवच्छक्त्यनुसन्धानपर्यन्तप्रह्वीभाववतां जायमानं यत् सम्भावितस्वभावात्मकं "किपन् किल्लेन् एन्निलन्" "यादानुं पत्तिनीङ्गुं विरदम्" इत्याद्युक्तरूपाणां प्रातिकूल्यानां "नोक्वेणुमेत्रलियातोलिहै" इत्यात्यान्तिकं वर्जनं, तदेव पञ्चममङ्गम्, तादृशाङ्गं प्रति नमःपदा-

दिरूपशास्त्रविरुद्धसाधनान्तरप्रयोजनान्तरप्रवृत्तिरूपव्यापाराणां विरोधित्वात् अवश्यपरिहरणीयतां प्रदर्श्य, "चराचराणि भूतानि सर्वाणि भगवद्वपुः। अतस्तदानुकूल्यं मे कार्यमित्येव निश्चयः॥ षष्ठमङ्गं समुद्दिष्टं तद्व्याघातो निराकृतिः" इति पूर्वोक्तप्रातिकूल्यवर्जनपर्यन्तप्रह्वीभाववतां सम्भावितस्वभावतयैव जायमानं यत् सर्वभूतानुकूल्यव्यवसायात्मकमानृशंस्यं, तदेव षष्ठमङ्गम्, तादृशाङ्गम्प्रति लौकिकमर्यादादिनिराकरणस्य तद्विरुद्धत्वेन परिहरणीयतां च प्रदर्श्य, "पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम्" इति प्रह्वीभावविषयकस्वयम्प्रयोजनताबुद्धिप्रभृतिसर्वभूतानुकूल्यव्यवसायलक्षणानृशंस्यपर्यन्तानां षण्णां सम्भावितस्वभावविशेषाणामङ्गत्वम्, तत्तद्विरोधिवर्जनानां षण्णामप्युपाङ्गत्वं च प्रदर्श्य, तादृशसर्वाङ्गोपाङ्गसम्पन्नस्य करणत्रयवतः प्रह्वीभावस्यैव परिपूर्णत्वमुक्त्वा "स्थूलोऽयं नमसश्चार्थः" इति स्थूलयोजना निगमिता।

न ह्यत्र साधनानुष्ठानगन्धगन्धोऽपि दृश्यते; प्रत्युत प्रह्वीभावस्य स्वरूपप्रयुक्ततयानन्यप्रयोजनत्वोक्तेः, तत्र साधनत्वबुद्धेस्त्याज्यत्वोक्तेः, भगवतो यथाकर्मफलदायितया साधनान्तरसापेक्षताबुद्धेर्निरपेक्षरक्षणसामर्थ्यादिगुणाभावबुद्धेश्चावश्यपरिहरणीयत्वोक्तेः, "सर्वधर्मान्परित्यज्य" इति शास्त्रविरुद्धसाधनान्तरानुष्ठानस्याशास्त्रीयतया "अशास्त्रीयोपसेवा तु तद्व्याघात उदीर्यते" इति तत्परित्यागोक्तेश्च, साधनान्तरप्रसङ्गासहाङ्गोपाङ्गविशिष्टं स्वयम्प्रयोजनप्रह्वीभावरूपं सिद्धोपायकर्तृकसृष्ट्यवतारादिरूपानादिकृषिपरम्पराफलीभूतशेषत्वज्ञानमेवात्रोच्यत इति साधनप्रपत्तेर्नमश्शब्दस्थूलयोजनासिद्धत्वोक्तिरनुपपन्नैव।

अथ "सूक्ष्ममन्यं निशामय" इति सूक्ष्मयोजनां प्रक्रम्य, "चेतनस्य यदा मम्यं स्वस्मिन्स्वीये च वस्तुनि। मम इत्यक्षरद्वन्द्वं तदा मम्यस्य वाचकम्" इत्यज्ञावस्थचेतनप्रयुज्यमानषष्ठ्येकवचनान्तास्मच्छब्दपर्यायस्य नमःपदघटकषष्ठ्यन्तमकारस्य तादृशास्मच्छब्दव्याख्यानमुखेन स्वात्मात्मीयविषयकममतासामान्यवाचकत्वं प्रदर्श्य, "अनादिवासनारूढमिथ्याज्ञाननिबन्धना। आत्मात्मीयपदार्थस्था या स्वातन्त्र्यस्वतामतिः॥ मे नेत्येवं समीचीनबुद्ध्या सात्र निवार्यते" इति तादृशमम्यनिवर्तकस्य नमश्शब्दस्याहङ्कारममकारसामान्यनिवर्तकत्वमुक्तम्। अयमर्थः—अनादिवासनाभिः, रूढम् - प्ररूढम्, यत् - मिथ्याभूतदेहादिविषयकं "देवोऽहम्, मनुष्योऽहम्" इत्याकारकम्, स्वतन्त्रतया प्रतीयमानदेहात्माभिमानरूपं ज्ञानम्; तन्निबन्धना - तद्धेतुकाः

या - स्वस्वातन्त्र्यस्वतामतिः, सा, अत्र - नमश्शब्दे, 'मे न' इत्यन्वयपरामर्शजन्यया समीचीनबुद्ध्या, यथावस्थितवाक्यार्थज्ञानरूपया, निवार्यते—इति।

अत्र देहेन्द्रियादीनां मिथ्याशब्देन ग्रहणमनृतशब्दिताचित्सङ्घातरूपताप्रयुक्तम्। अत एव हि भगवता पराङ्कुशमुनिना "पोय्निनिन्नज्ञानम्" इत्यनुगृहीतम्। स्वस्वातन्त्र्यस्वतामत्योर्मिथ्याज्ञानशब्दितदेहात्माभिमाननिबन्धनत्वं कथमिति चेत्,—इत्थं; अचित्परिणामरूपस्य देहस्य ग्राहकेण चक्षुरादिना परमात्मनो दुर्ग्रहत्वात्, प्रत्यक्षतो देहादिकं स्वतन्त्रमेव प्रतीयते। एवं स्वतन्त्रतया प्रतीयमानाद्देहादात्मनो भेदाग्रहात्, देहाविविक्तात्मज्ञानरूपो देहात्मभ्रमो भवति। भेदाग्रहणविशिष्टदेहात्मज्ञानद्वयस्यैव देहात्मभ्रमशब्दार्थत्वात्। तथा च स्वतन्त्रतया प्रतीयमानाद्देहादविविक्ततया ग्राह्यमाणस्यात्मनः स्वातन्त्र्यभानमवर्जनीयं भवति। एवमात्मनः स्वातन्त्र्याभिमाने सति स्वसम्बन्धिवस्तुजातं प्रति शेषित्वाभिमानस्याप्यवर्जनीयत्वात् स्वीयेषु स्वस्वत्वाभिमानोऽपि भवतीति स्वस्वातन्त्र्यस्वतामत्योर्मिथ्याज्ञाननिबन्धनत्वमुपपद्यत एव। अत एवोक्तं "अधिकारबोधयुक्तेषु विद्यते भावभावना। अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु" इति। अत्र हि कर्मसु फलस्वाम्यबोधलक्षणाधिकारबोधान्तर्गतस्वस्वातन्त्र्यस्वतामत्योः कर्माधीनदेवमनुष्याद्यात्माभिमानलक्षणविशेषज्ञानप्रयोज्यतायाः प्रतीयमानतया स्वस्वातन्त्र्यादेर्देहात्माभिमाननिबन्धनत्वं सिद्धम्।

तदेवं नमश्शब्दस्य मकारव्याख्यानपूर्वकमन्वयप्रकारविरोधिभूताज्ञानसामान्यनिवृत्तिरूपं प्रयोजनं चाभिधाय, तद्वाक्यार्थांशभेदौ विविच्य दर्शयति—"नाहं मम स्वतन्त्रोऽहं नास्मीत्यस्यार्थ उच्यते। न मे देहादिकं वस्तु स शेषः परमात्मनः॥ इति बुद्ध्या निवर्तन्ते तास्ताः स्वीया मनीषिकाः" इति। अत्र नमश्शब्दे विशेषवाचकपदापेक्षायामध्याहारापेक्षयापि अनुषङ्गस्यैव न्यायतया अनुषङ्गाधिकरणसिद्धतया प्रणवघटकमकारस्यैवात्रानुषङ्गे सति, तस्य "मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम्" इति करणकलेबरादिदास्योपकरणविशिष्टजीवस्वरूपपरतया जीवस्वरूपे तदुपकरणेषु च मम्यनिषेधः फलतीत्यभिप्रेत्य मकारार्थैकदेशजीवस्वरूपांशे मम्यनिषेधं दर्शयति—नाहं ममेति। अस्यार्थमाह—स्वतन्त्रोऽहं नास्मीत्यस्यार्थ उच्यत इति। "नाहं मम" इत्यत्र 'ममे'त्यत्र निषेध्यसम्बन्धसामान्यपरां षष्ठीमभिप्रेत्य,

तदर्थे स्वतन्त्रशब्दः प्रयुङ्क्ते। स्वतन्त्रशब्दो हि स्वरूपोपायफलेषु त्रिष्वपि स्वातन्त्र्यं वक्तुमीष्टे। 'स्वयमेव, तन्त्रः - प्रधानो, यस्य सः' इति व्युत्पन्नस्य स्वतन्त्रशब्दस्य स्वप्रधानतासामान्यप्रतिपादकत्वात्। तत्र स्वरूपांशे प्राधान्यं नाम - परशेषवृत्त्यापि स्वातिशयाधानार्हत्वमेव। स्वभोगोद्देश्यकपरशेषवृत्त्यादिव्यापारार्हत्वमिति यावत्। यथा विषयप्रवणस्य कामुकस्य विषयान्तरविषयकशेषवृत्तेस्तत्प्रतिसम्बधिविषयान्तरार्थत्वे सत्यपि कामुकोद्देश्यभोगार्थत्वं न मुञ्चति; तद्वच्चेतनकर्तृकभगवद्विषयशेषवृत्तेर्भगवदर्थत्वे सत्यपि कर्तुश्चेतनस्य भोगरूपतया तदनुभवानन्दस्योद्देश्यत्वे सति भगवच्छेषवृत्तेरपि स्वभोगार्थत्वं न मुञ्चत्येवेति, तादृशस्वभोगार्थव्यापारार्हत्वरूपं स्वार्हत्वमेव स्वरूपांशे स्वातन्त्र्यम्। एवमुपायांशे स्वातन्त्र्यं नाम - भगवदनुमतिमात्रेण स्वेच्छया फलसाधनप्रवृत्त्यर्हत्वम्। अत्रानुमन्तुर्भगवतोऽप्रधानत्वात्, चेतनस्य स्वप्रधानत्वरूपं स्वातन्त्र्यं सुव्यक्तमेव। ननु साधनविधायकानां शास्त्राणां "श्रुतिः स्मृतिर्ममैवाज्ञा" इत्युक्तरीत्या भगवत्प्रेरणारूपत्वात्, कथं भगवतोऽनुमन्तृमात्रत्वेनाप्राधान्यमिति चेत्; भ्रान्तोऽसि; तत्तत्फलसाधनविषये भगवतः प्रेरकत्वे तत्तत्साधनप्रयोक्तृणामृत्विगादिवत् कर्मकरमात्रत्वेन तेषां तत्तत्फलभोगाभावप्रसङ्गात्, ऋत्विक्प्रेरकस्य यजमानस्येव भगवत एव तत्तत्फलान्वयप्रसङ्गाच्च। तस्मात् "श्रुतिः स्मृतिर्ममवाज्ञा" इति वचनं नित्यनैमित्तिकनिषेधशास्त्रादिविषयम्, न तु सर्वविषयम्। "मुमुक्षुः ब्रह्मोपासीत" "बुभुक्षुर्यजेत इत्यादिकाम्यशास्त्राणां, यदि मोक्षेच्छया कश्चित् प्रवर्तेत, तर्हि स ब्रह्मोपासीत, यदि च भोगेच्छया प्रवर्तेत, स यजेतेति तत्तच्चेतनरुचिविशेषानुगुणमार्गविशेषप्रदर्शनमात्ररूपत्वेन न तेषां भगवदाज्ञारूपत्वम्। अत एव हि न्यासोपासनादिधर्माननुष्ठाने फलालाभव्यतिरिक्तः प्रत्यवायो न श्रूयते। शास्त्रोक्तसाधनान्तरानुष्ठानविषये "विमृश्यैतदशेषेण यथेच्छसि तथा कुरु" इति चेतनस्य स्वेच्छया प्रवृत्त्यर्हतया भगवतस्तत्रानुमन्तृमात्रत्वेन तत्र चेतनस्य स्वातन्त्र्यमुपपद्यत एव। तथा च स्वफलोद्देश्यकादृष्टद्वारकसाधनप्रवृत्त्यर्हत्वमेव साधनांशे स्वातन्त्र्यमित्युक्तं भवति।

अथ फलांशे स्वातन्त्र्यं नाम—"शास्त्रफलं प्रयोक्तरि" इत्युक्तं स्वप्रवृत्त्युद्देश्यभोगाश्रयत्वमेव। साधनभक्तिप्रपत्त्यादिफलविषये भगवतः सर्वशेषितात्प्रयुक्तफलित्वसत्त्वेऽपि तादृशफलित्वस्य सृष्टिस्थितिसंहारादिसर्वकार्यसाधारणत्वेनाप्रधानत्वात्, भक्तिप्रपत्त्यादिरूपफलसाधनानां चेतनानुष्ठितत्वेन

चेतनस्यैव तत्र प्रधानफलित्वाच्च चेतनानां साधनानुष्ठानोद्देश्यफलभोगार्हतायाः स्वातन्त्र्यरूपत्वमुपपन्नमेव । तथा चैतादृशत्रिविधस्वातन्त्र्यस्यापि "स्वतन्त्रोऽहं नास्मीत्यस्यार्थ उच्यते" इत्यत्र स्वतन्त्रशब्देनोच्यमानत्वान्नमश्शब्दघटकमकारोत्तरषष्ठ्याः सम्बन्धसामान्यविषयिण्याः स्वशेषत्वस्वरक्षकत्वस्वभोक्तृत्वरूपस्वातन्त्र्यत्रयात्मकसम्बन्धत्रयपरत्वं व्याख्यातं भवति । एवं नमःपदविशेष्यत्वेनानुपक्तमकारार्थे "मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम्" इत्युक्ते सोपकरणजीवस्वरूपे स्वरूपांशे मम्यनिषेधो व्याख्यातः । अथोपकरणांशे मम्यनिषेधं दर्शयति—"न मे देहादिकं वस्तु सशेषः परमात्मनः" इति । अत्र "न मे देहादिकं वस्तु" इति जीवोपकरणेषु करणकलेबरादिषु मम्यसामान्यनिषेधः । "सशेषः परमात्मनः" इति सोपकरणजीवविषयकमम्यनिषेधफलितार्थकथनात् । तथा च शेषैः सह वर्तत इति सशेषः - सोपकरण इत्यर्थः । 'अहं' इत्यनुषज्यते । सशेषोऽहं परमात्मनः - परमात्मनिरूपितसम्बन्धसामान्यवानित्यर्थः । अत एव 'न मे देहादिकं वस्तु तच्छेषं परमात्मनः' इति नोक्तम् । तथा च सोपकरणस्वस्वरूपे प्रणवघटकमकारार्थे स्वसम्बन्धरूपमम्यसामान्यनिवृत्तेः 'भावान्तरमभावः" इति न्यायेन भगवत्सम्बन्धसामान्यरूपत्वात्, नमश्शब्दस्य भगवदेकस्वत्वभगवदेकरक्ष्यत्वभगवदेकभोग्यत्वरूपभगवत्सम्बन्धत्रयपर्यवसायित्वमुक्तं भवति । एतेन मम्यरूपविरोधिसामान्यनिवृत्तेर्भगवत्सम्बन्धसामान्यज्ञानात्मकत्वसिद्ध्या सुषुप्तिप्रलययोः सर्वमुक्तिप्रसङ्गपरिहारः सूचितः ।

तदेवं नमश्शब्दजनितेन भगवदेकस्वत्वादिज्ञानपर्यवसितेन स्वस्वातन्त्र्यादिनिषेधज्ञानेन विरोधिभूताज्ञानसामान्यनिवृत्तिं दर्शयति—"इति बुध्या निवर्तन्ते स्वीयास्तास्ता मनीषिकाः । अनादिवासनाजातैर्बोधैस्तैस्तैर्विकल्पितैः ॥ रूषितं यद्दृढं चित्तं स्वस्वातन्त्र्यस्वतामयम् । तत्तद्वैष्णवसार्वात्म्यप्रतिबोधसमुत्थया ॥ नम इत्यनया वाचा नन्त्वा स्वस्मादपोह्यते" इति । इति बुद्ध्या - भगवत्सम्बन्धसामान्यज्ञानपर्यवसितया सोपकरणस्वविशेष्यकमम्यसामान्याभावप्रकारकनमश्शब्दजन्यबुद्ध्येत्यर्थः । स्वीयाः - स्वयत्नजनिता इत्यर्थः । "यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" इत्यत्र "कश्चिन्मां वेत्ति - को वा मां वेत्ति, न कोऽपि वेत्ति" इत्यर्थस्य भाषिततया स्वयत्नजन्यज्ञानसामान्यस्य "तन्नाल् वरुं नन्मै विलैप्पालपोले" इत्यनुगृहीतरीत्या दोषदुष्टतया त्याज्यत्वनियमात् । "इति बुद्ध्या निवर्तन्ते

स्वीयास्तास्ता मनीषिकाः" इत्युक्तं विशदयति—"अनादिवासने"त्यादिना "अपोह्यते" इत्यन्तेन। तत्र स्वीयमनीषिकासामान्यस्य दोषदुष्टत्वे नियामकमाह—अनादिवासनाजातैरिति। अत्र वासनाशब्देन - स्वशेषत्ववासनास्वयत्नवासनास्वभोगवासनादयो विवक्षिताः। तासामनादित्वोक्त्या स्वयत्नानिवर्त्यत्वं दर्शितम्। अनादिकालाभ्यस्तानामनन्तकालयत्नैर्विना दुस्तरत्वात्, स्वयत्नानामप्यनादिवासनाकार्यत्वेन तैस्तन्निस्तारायोगाच्च। विकल्पितैः - विरुद्धतया कल्पितैः। स्वरूपोपायप्राप्यस्वरूपतिरोधानकरत्वेनागन्तुकैरित्यर्थः। तैस्तैर्बोधैः - 'ज्ञाता, कर्ता, भोक्ताहम्, ब्राह्मणः, ममायं भोगः, मद्भोगसाधनत्वान्मदर्था इमे कृतयः' इत्यादिरूपैरज्ञानभेदैः, दृढं यथा तथा रूषितम्। अत एव स्वस्वातन्त्र्यस्वतामयम् - अहङ्कारममकारप्रचुरम्, चित्तम् - मानसज्ञानम्, तत्तत् - तत् - सर्वम्, वैष्णवसार्वात्म्यप्रतिबोधसमुत्थया - विष्णुसम्बन्धि यत्सार्वात्म्यं - सर्वशरीरत्वम्, तज्ज्ञानमूलयेत्यर्थः। शरीरशरीरिभावस्याधेयत्वविधेयत्वशेषत्वादिरूपतया स्वात्मात्मीयगतभगवच्छेषत्वपारतन्त्र्यज्ञानहेतुकयेत्युक्तं भवति। तथा प्रतीतियुक्ताचार्यकर्तृकशिष्यप्रतिबोधार्थोपदेशरूपमूलमन्त्रघटकस्य नमश्शब्दस्याचार्यकर्तृकभगवत्सार्वात्म्यप्रतिबोधमूलकत्वमुक्तं भवति। इदञ्च नमश्शब्दस्य भगवत्सार्वात्म्य एव तात्पर्यमिति ज्ञापनार्थमाचार्यकर्तृकभगवत्सार्वात्म्यबोधपूर्वकोपदेशरूपस्य नमश्शब्दस्य भगवत्सार्वात्म्यसुबोधयिषाप्रयुक्तत्वसिद्धेः, आचार्यकर्तृकयथाप्रतीतिपूर्वकमन्त्रोपदेशस्य शिष्यसमवेततादृशप्रतीत्यर्थत्वात्। तथा च "वैष्णव सार्वात्म्यप्रतिबोधसमुत्थया" इत्यनेन वैष्णवसार्वात्म्यप्रतिबोधनार्थयेत्युक्तम्भवति। इदञ्च वाग्विशेषणम्। तथाभूतया, नम इत्यनया वाचा - नमश्शब्दात्मकेन वाक्येनेत्यर्थः। अत्र वाक्छब्दप्रयोग आचर्योपदेशरूपत्वाभिप्रायः। तथा च यथाप्रतिपत्तियुक्तसदाचार्यमुखाच्छ्रुतेन 'म्, मः नः' इत्याकारकवाक्येन, शिष्यस्स्वात्मात्मीयसर्ववस्त्वपेक्षया भगवत आधारत्वनियन्तृत्वादिरूपमात्मत्वमसङ्कुचितं ज्ञात्वा तादृशप्रबोधविशेषेण "येनदावियाऱ् यानाऱ्" "नियतस्वामिति प्रबुद्धधीः" इत्याद्यनुगृहीतरीत्या स्वस्वान्त्र्यादिगर्भमयथावस्थितन्यासोपासनादिरूपं मानसज्ञानं सर्वं सवासनं परित्यजतीति नमश्शब्दस्य सर्वविरोधिनिर्वर्तकत्वमुपपद्यत इति भावः। अत्र सार्वात्म्यशब्दः "सर्वात्मना यश्शरणं शरण्यं नारायणम्" "वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः" "उण्णुं शोरुं परुहु नीर तिण्णुं वेत्तिलैयुमेल्लाङ्कण्णन्" इत्याद्युक्त-

मुपायोपेयाद्यात्मकत्वं वक्तीति केचिदाचार्याः । तदापि पूर्वोक्तयैव दिशा योजना द्रष्टव्या ।

ननु पूर्वयोजनायां नमश्शब्दस्य भगवतस्सर्वाधारत्वाद्यसङ्कोचशिक्षकत्वं कथमिति चेत्; इत्थम्; यावता स्वात्मात्मीयानां पृथक्स्थितिपृथगुपलम्भार्हत्वरूपं स्वातन्त्र्यं न निवार्येत, न तावत्पर्यन्तं भगवतस्सर्वाधारतायास्सर्ववस्तुसामानाधिकरण्यार्हतापादकत्वरूपासङ्कोचसिद्धिः । यावता च स्वस्य भगवदनुमतिमात्रेण प्रवृत्त्यर्हत्वलक्षणं स्वातन्त्र्यं न निवार्येत, न तावत्पर्यन्तं भगवतस्सर्वप्रेरकतालक्षणनियन्तृत्वस्यासङ्कोचसिद्धिः । एवं स्वात्मात्मीयगतातिशयान्प्रति स्वस्य भोक्तृत्वलक्षणं स्वातन्त्र्यं यावता न निवार्येत, न तावत्पर्यन्तं शेषशेषिभावस्यानन्यार्हत्वरूपासङ्कोचसिद्धिरिति, तादृशसर्वस्वातन्त्र्य निवर्तकस्य नमश्शब्दस्य वैष्णवसार्वात्म्यान्तर्गतसर्वाधारत्वाद्यसङ्कोचाशिक्षकत्वोपपत्तिरिति "याने नी एन्नुडमैयुं नीये" इत्यादिषु स्वात्मात्मीयानां यथावस्थिताधाराधेयभावः, "त्वमेव रुचिरे देशे क्रियतामिति मां वद" इत्यादिषु यथावस्थितनियन्तृनियाम्यभावः, "एम्मावीट्टुत्तिरमुं शेप्पम्" "तनक्केयाह वेनैक्कोल्लुमीदे" "स एकाकी न रमेत" "बहु स्यां प्रजायेय" "करणं कारणं कर्ता विकर्ता" "एन्नुडम्बिलल्लुक्कै नाने पोक्किक्कोल्लेनो" इत्यादिषु यथावस्थितशेषशेषिभावासङ्कोचश्च स्थानत्रयसम्बन्धिनमश्शब्दविरचितस्वातन्त्र्यनिवारणफलीभूत एवेत्यनुसन्धेयमिति दिक् ।

अथात्र "नम इत्यनया वाचा नन्त्रा स्वस्मादपोह्यते" इत्यत्र 'नन्त्रा प्रयुज्यमानेन नमश्शब्देन विरोधिजातमपोह्यते' इत्यर्थाश्रयणं न सम्भवति, स्वमिथ्याज्ञाननिवृत्तेस्स्वकर्तृकशब्दप्रयोगजन्यत्वायोगात् । मिथ्याज्ञानं हि आचार्यमुखान्नमश्शब्दश्रवणदशायामेव निवृत्तमिति न पुनस्तच्छब्दप्रयोगोऽप्यपेक्षितः । साधनानुष्ठानदशायां मन्त्रात्मकेन नमश्शब्देन कर्तृस्वरूपस्मरणमत्राभिधीयत इति तु न साधीयः । "नन्त्रा स्वस्मादपोह्यते" इति भ्रान्तिनिवृत्त्यर्थताया एव कण्ठोक्तत्वात् । श्रवणदशायां यथावच्छिक्षितस्यात्मस्वरूपस्य पुनर्मन्त्रेण स्मरणदशायां निवर्तनीयस्वस्वातन्त्र्याद्यभिमानाभावेन तादृशाभिमाननिवृत्तिफलकत्वं नस्य नमश्शब्दस्य न सम्भवत्येव । तस्मात्पूर्वोक्त एवार्थः ।

अथ नमश्शब्दस्य सूक्ष्मयोजनां निगमय्य परयोजनां प्रक्रमते—"इति ते सूक्ष्म उद्दिष्टः परमन्यं निशामय" इति । परयोजनायां नमश्शब्दस्य नकार-

मकारविसर्गात्मकपदत्रयरूपत्वात्तस्य वाक्यार्थं वक्ष्यन् प्रथमं पदार्थानाह—"पन्था नकार उद्दिष्टो मः प्रधान उदीरितः। विसर्गः परमेशस्तु तत्रार्थोऽयं निरुच्यते" इति। अत्र 'परमेशः' इत्यन्तं पदार्थकथनम्। अनन्तरं वाक्यार्थप्रतिज्ञा। "नरो नारयणः पन्था नकारस्समुदाहृतः। मकारो मर्दनः कालः प्रधानः परिपठ्यते। विसर्गस्सृष्टिकृत्ख्यातो ह्यःकारः परमेश्वरः। अःकारश्चानिरुद्धाख्यः कलान्तस्सर्गसंज्ञितः" इति भगवच्छास्त्राक्षराभिधानकोशवचनैर्नकारस्य सिद्धोपायपरतायाः मकारस्य सर्वपापविमोचनात्मकात्यन्तिकसंहारकर्तृत्वरूपप्राधान्यपरतायाः विसर्गस्यानिरुद्धावस्थपरमेश्वरपरतायाश्च सिद्धतया तदभिप्रायेण "पन्था नकार उद्दिष्टः" इत्यादिकमुक्तम्। अत्र नकारमकारौ विधेयवाचकौ विसर्ग उद्देश्यवाचीत्यभिप्रेत्य विसर्गार्थप्रधानं वाक्यार्थमाह—"अनादिः परमेशो यश्शक्तिमान्पुरुषोत्तमः। तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान्" इति। अत्र विसर्गवाच्यस्यानिरुद्धस्य "शक्तितेजस्समुत्कर्षादनिरुद्धतनुः" इति शक्तितेजःप्रधानत्वात् तत्र शक्त्या जगदिदं सर्वमनन्ताण्डं निरन्तरम्। बिभर्ति पाति च हरिर्मणिसानुरिवाणुकम्" इति शक्तिकार्यसर्वजगद्भरणादिना "यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इत्युक्तपुरुषोत्तमशब्दप्रवृत्तिनिमित्तपुष्कलत्वात्, "तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने" इति तेजोगुणेन "तस्यैष आत्मा विवृणुते तनूं स्वाम्" "तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" "ततो नाम्नानिरुद्धोऽयं स्वयमेवाभवन्मुने। तदेकान्तवपुर्युक्तस्तात्त्विकघनः प्रभः" "कादल् कडलपुरैय विलैवित्त कारमर्मेनि" इत्याद्युक्तरीत्या समुज्जीवनहेतुभूतद्वन्तग्रहणपर्यन्तभगवत्कामवर्धकतया पुरुषोत्तमत्वपौष्कल्यख्याच्चानिरुद्धावस्थपरमेश्वरवाचकस्य विसर्गस्यानादित्वादिविशिष्टपुरुषोत्तमपरत्वमुक्तमिति ध्येयम्। तत्र "अनादिः" इत्युक्तमनादित्वं-"अनन्ताण्डं निरन्तरम्। बिभर्ति पाति च" इति स्थूलरूपेण सूक्ष्मरुपेण वा सदातनसर्ववस्तुभरणाद्युक्तिबलादर्थसिद्धम्। "परमेशः" इति शक्तिकार्यासङ्कोचोक्तिः "शक्तिमान्" इत्येतत्तेजसोऽप्युपलक्षणम्। "पुरुषोत्तमः" इति त्रिविधचेतनवैलक्षण्यमभिप्रेतम्। "परमेशो यः" इति यच्छब्दः असङ्कुचितपरमेशत्वस्य शक्तिविशिष्टपुरुषोत्तमत्वव्याप्तिप्रसिद्धिपरः। "यो लोकत्रयमाविश्य" इत्यादिषु तत्प्रसिद्धेः। तथा च परमेश्वरवाचको विसर्ग एव परमेश्वरत्वनियतैर्धर्मैः प्रकृतविधीयमानपथित्वप्राधान्ययोराश्रयं स्वेतरसर्वव्यावर्तनपूर्वकं

विशेषतो व्यावर्तयतीत्यभिप्रायेण "अनादिः" इत्यारभ्य "पुरुषोत्तमः" इत्यन्तेन विसर्गबोध्यविशेष्यस्वरूपनिष्कर्षः कृत इत्यनुसन्धेयम् । तत्र "अनादिः" इत्यनेन स्वरूपसिद्धौ चेतनसापेक्षाण्युपायान्तराणि व्यावर्त्यन्ते "परमेशः" इत्यनेन विसर्गवाच्यस्यानिरुद्धस्य "विपरीतेऽपि नैवास्य प्रतिषेधाय पातकम्" इत्युक्तचेतनपातकानिरुद्धरक्षणप्रवृत्तिमत्त्वलक्षणनिरङ्कुशस्वातन्त्र्यबोधनफलसिद्धौ प्रतिबन्धकाभावादिसापेक्षाण्युपायान्तराणि व्यावर्त्यन्ते। "शक्तिमान्" इत्यनेन भगवत एकस्यैव प्राप्यत्वफलित्वफलोपायत्वाद्युपपादकविचित्रशक्तियोगोक्त्या स्वव्यतिरिक्तफलप्रदेवतास्वसाध्यफलादिसापेक्षाणि व्यावर्त्यन्ते । "पुरुषोत्तमः" इत्यनेन "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" "सहस्रशीर्षा पुरुषः" "महापुरुष पूर्वज" "पूस्संज्ञे शरीरेऽस्मिच्छयनात्पुरुषो हरिः" "निन्नदेन्दै ऊरहत्तु" इत्याद्युक्तरीत्या सौलभ्याभिधानात्, "त्वयासौ पुरुषर्षभः" "सतामेतदगर्हितम्" इत्याद्युक्तरीत्या वात्सल्याद्यभिधानात्, "यदि वा बहुदानाद्वै विष्णुः पुरुष उच्यते" इत्याद्युक्तरीत्या "एन्नैयाक्किक्कोण्डेनक्के तन्नैत्तन्दकर्पकम्" इत्युक्तार्थिकल्पकत्वादिरूपमहौदार्याभिधानात्, "यत्पूर्वस्मात्सर्वस्मात्पाप्मन औषत् तस्मात्पुरुषः" इत्याद्युक्तरीत्या सापेक्षरक्षकत्वरक्ष्यतारतम्यरूपविशेषालोचनसंश्रितविश्लेषसहिष्णुत्वादिलक्षणावद्यराहित्याभिधानात्, पुरुषोत्तमशब्दरूढ्या श्रियःपतित्वरूपपुरुषकारसम्बन्धाभिधानाच्च तादृशसौलभ्यादिविशिष्टस्य चेतनप्रवृत्त्यसहत्वलाभाच्चेतननिवर्त्यसहसाधनान्तरव्यावृत्तिरिति ध्येयम्-तदेवं सकलेतरव्यावृत्तं परमपुरुषमुद्देश्यत्वेन निष्कृष्य विधेययोर्नकारमकारार्थयोरुपायत्वफलप्रदत्वरूपपाथत्वप्राधान्ययोः फलैकनिरूपणीयत्वात् फलाकाङ्क्षायां पराधिकरणोक्तरीत्या "अमृतस्यैष सेतुः" इति सम्बन्धव्यपदेशेन "तेनेदं पूर्णं पुरुषेण सर्वम्" इत्युक्तस्य विसर्गार्थस्य परमपुरुषस्यैव फलत्वेनान्वयार्हत्वसिद्ध्या विसर्गस्यैवावृत्त्याऽत्र फलबोधकत्वमित्यभिप्रेत्याह—तत्प्राप्तय इति । विसर्गवाच्यतयोक्तपरमपुरुषप्राप्तय इत्यर्थः । अत्र प्राप्तिशब्दः-आत्मतया नित्यप्राप्तस्यैव भगवतः परार्थानुभवकैङ्कर्यप्रतिसम्बन्धितया प्राप्यत्वलक्षणफलत्वोपपादनार्थः । अन्यथा वृत्तस्य विसर्गस्य लक्षणापत्तेः । अथ विधेये दर्शयति—प्रधानोऽयं पन्था इति । 'अयं प्रधानः पन्थाश्च' इति योजना । अयंशब्दः - विसर्गप्रतिपादितोद्देश्यानुवादपरः । तथा च 'अनादिपरमेशः शक्तिमान् पुरुषोत्तमो यः, तत्प्राप्तये स एव पन्थाः - उपायः प्रधानः फलप्रदश्च' इति समुदितार्थः ।

अथ ननु "तेन तेनाप्यते तत्तन्न्यासेनैव महामुने" "इदं शरणमज्ञानाम्" "भक्त्या प्रपत्त्या वा" इत्यादिषु न्यासादीनामेवोपायत्वाभिधानात् कथं भगवतस्तथात्वमित्यपेक्षायामुपायविषयकन्यासादिशब्दानां 'न्यास इत्याहुर्मनीषिणो ब्रह्माणम्...न्यास इतिब्रह्मपरो हि ब्रह्म" इति श्रुत्युक्तरीत्या "ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा" "यो ब्रह्माणं विदधाति पूर्वम्" "तुरीयोऽयं जगन्नाथो ब्रह्माणमसृजत्प्रभुः" इत्याद्युक्तव्यष्टिसृष्टिकृच्चतुर्मुखनियामकतया पुंलिङ्गब्रह्मशब्दवाच्यसिद्धोपायभूतानिरुद्धपरत्वादविरोधं दर्शयति— नमननामवानिति। नमनम् - भक्तिप्रपत्त्यादिब्रह्मविद्या। "विनतविविधभूत" इत्यादिषु तथा दर्शनात्। तस्या यानि नामानि नमश्शरणन्यासभक्तिप्रपत्त्यादिशब्दरूपाणि, तान्यस्य नामितासम्बन्धेन सन्तीति, नमननामवान् - नमश्शब्दन्यासशब्दादिनामक इत्यर्थः। यद्वा "नमननामवान्." इत्येतन्नमश्शब्दस्यैव रूढिवृत्त्या प्रकृतवाक्योद्देश्यभगवत्स्वरूपसमर्पकत्वप्रदर्शनपरम्। तदा च विसर्गस्यावृत्तिरनपेक्षिता। यथाश्रुतौ विसर्गः प्राप्यमात्रपरः। तथा च "नमननामवान् - अयम् - नमश्शब्दरूढिप्रतिपाद्यो भगवान् विसर्गवाच्यपरमपुरुषप्राप्यनिरूपितनकारमकारवाच्योपायत्वप्राधान्यैतदुभयवानित्यर्थः। यथा पङ्कजादिपदजन्यबोधेषु तत्पदरूढिशक्यतावच्छेदकपद्मत्वावच्छेदेन योगप्रवृत्तिनिमित्तं पङ्कजनिकर्तृत्वादिकं भासते तद्वदेवात्रापि नमश्शब्दरूढिशक्यतावच्छेदकजगदुज्जीवनकृषिकर्तृत्वावच्छेदेन परमपुरुषप्राप्तिरूपफलदाननिरूपितकर्तृकरणैक्यरूपो नमश्शब्दावयवार्थो भासत इति नमश्शब्द एव स्वावयवार्थरूपविधेयस्य रूढिवृत्त्योद्देश्यसमर्पक इति भावः। नमश्शब्दस्य जगदुज्जीवनार्थकृषिविशिष्टे भगवति रूढिस्तु श्रीमत्परकालसूरिप्रथमप्रबन्धे षष्ठशतकान्ते "किडन्दनाम्बि" इत्यादिदशके प्रतिगाथावन्तं "नामं शोल्लिल् नमो नारायणमे" इति "सर्वभूतस्थमेकं नारायणम्" इति श्रुत्युक्तनपुंसकान्तनारायणशब्दवत्, नमश्शब्दस्यापि भगवन्नामत्वाभ्यासादिभिः प्रसिद्धः। "नमननामवान्" इत्यस्य नमस्काररूपविशेष्यसमर्पणपरत्वं तु नोपपद्यते। "नामवान्" इत्यस्य वैयर्थ्यात्। तथा सति - "तत्प्राप्तये प्रधानं वै पन्था नमनमिष्यते" इत्येतावत एव वक्तव्यत्वात्। नमस्कारस्य प्राधान्यमपि बाधितम्। तस्य फलप्रदत्वाभावात्। मकारार्थस्य नकारार्थविशेषणत्वाश्रयणेन प्रधानोपायत्वस्य विधेयत्वोक्तौ नकारमकारयोः समासाश्रयणगौरवं मकारस्योत्तरनिपातास्वारस्यं च प्रसज्यते। त्वन्मते प्रपत्तेरशक्ताधिकारत्वेनानुक-

त्यपत्वोक्त्या प्रधानोपायत्वमपि बाधितमेव। कर्माद्यपेक्षया प्राधान्याविवक्षणे तु तदुक्तवैयर्थ्यं प्राधान्यावधिवाचकपञ्चम्यन्तशब्दान्तराध्याहारप्रसङ्गश्च। सिद्धान्ते तु फलदगतप्राधान्यस्योपायनिष्ठावधिताकत्वेन नकारस्यैव मकारोक्तप्राधान्यावध्याकाङ्क्षापूरकत्वान्नाध्याहारापेक्षा। 'नमस्कारः पन्थाः, ईश्वरः प्रधानः पन्थाः' इत्यर्थवर्णनमप्यनुचितम्। उपायान्तरजन्यफलविषये भगवतः फलप्रदमात्रत्वेन प्रधानत्वायोगात्। "निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि। प्रधानकारणीभूता यतो वै सृज्यशक्तयः" इति फलप्रदमात्रस्य 'निमित्तमात्रं भव सव्यसाचिन्" इतिवत् केवलाप्रधानत्वोक्त्या सृज्यशक्तिस्थानीयस्य नमस्कारस्यैव प्रधानकारणताया वक्तव्यत्वात्। नारायणशब्दपरयोजनायां "सदानन्दमयः पन्थाः" इति भगवत एव पथित्वोक्तेः। तत्सूक्ष्मयोजनायां "गतिरालम्बनं तेषां तेन नारायणः स्मृतः" इति करणे ल्युडन्तायनशब्दस्य भगवदुपायत्वपरत्वोक्तेः। तद्विवरणद्वयचरमश्लोकशरणशब्दाभ्यां करणे ल्युडन्ताभ्यां भगवत उपायत्वस्य स्थिरीकरणात्। श्रीलक्ष्मीतन्त्रे "प्रापयाम्यात्मनात्मानं निर्धूताखिलकल्मषम्" इति भगवतस्यैव प्राप्त्युपायत्वप्राप्यत्वप्रापकत्वानां कण्ठोक्तत्वात्। श्रुतौ च माण्डूक्यतृतीयखण्डे "संविशत्यात्मनात्मानं य एवं वेद" इति तद्वचनात्। श्वेताश्वतरे "तमेव विदित्वातिमृत्युमेति नान्यः पन्था अयनाय विद्यते" इति "अयनाय" इति भगवद्व्यतिरिक्तमोक्षोपायनिषेधपूर्वकं "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः" इति भगवत एव सोपपत्तिकं मोक्षोपायत्वमुक्त्वा "नान्यो हेतुर्विद्यते ईशानाय" इति "उतामृतत्वस्येशानः" इत्युक्तमोक्षप्रवर्तनपर्यन्तभगवत्कर्तृकसकलजगदीशनस्य हेत्वन्तरं पुनरपि प्रतिषिध्य "यो ब्रह्माणम्" इत्यादिना मुमुक्षूणां भगवदेकोपायत्वाध्यवसायं सिद्धोपायाधिकारिविशेषणमुक्त्वा "अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्" इति भगवत एवामृतप्रापयितृत्वरूपप्राधान्यलक्षणपरत्वस्योपायत्वलक्षणसेतुत्वस्य चोक्तत्वात्। कठवल्लीमुण्डकयोः "नायमात्मा" इत्यादिना श्रवणमननादीनामनुपायत्वमुक्त्वा "नासौ पुरुषकारेण न चाप्यन्येन हेतुना। केवलं स्वेच्छयैवाहं प्रेक्ष्ये कञ्चित्कदाचन" इत्युक्तनिर्हेतुकविषयीकारलक्षणवरणकर्तुर्भगवत एवोपायत्वोक्तेः। "विष्णुपोतं विना नान्यत्किञ्चिदस्ति परायणम्" "त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि। निमित्तं कुशलस्यास्ति" इत्यादिभिर्भगवद्व्यतिरिक्तोपायसामान्यनिषेधात्। अत्रापि नमश्शब्दस्थूलयोजनायाम्-

"फलेप्सा तद्विरोधिनी" इत्युपायताबुद्धेर्विरोधित्वाभिधानात् । तत्सूक्ष्मयोजनायां "न मे देहादिकं वस्तु सशेषः परमात्मनः" इति चेतनगतसर्ववस्तूनां चेतनार्थत्वनिषेधपूर्वकं केवलभगवदर्थत्वोक्त्या तदन्तर्गतस्य नमनस्यापि चेतनफलार्थतया चेतनार्थत्वरूपोपायस्यापि निषिद्धत्वात् । नमःपदे स्वसम्बन्धसामान्यनिषेधेन स्वरक्षणोपायप्रवृत्त्यर्हत्वरूपपारतन्त्र्यस्यापि निषिद्धतायाः "आत्मत्राणोन्मुखश्चेन्नम इति च पदं बान्धवाभासलोलः शब्दं नारायणाख्यम् ··स्वातन्त्र्यं निजरक्षणं समुचिता वृत्तिश्च नान्योचिता तस्यैवेति हरेर्विविच्य कथितम्" इत्यादिसाम्प्रदायिकपूर्वाचार्यश्रीसूक्तिसिद्धत्वाच्च, नमनस्योपायत्वायोगात् । तस्मात् "नमननामवान् - विसर्गवाच्योऽयं भगवान् स्वप्राप्तये स्वयमेव पन्थाः - उपायः प्रधानः - फलप्रदानकर्तृतया प्रधानश्च" इत्येव योजना स्वारसकी । भगवत एवोपायत्वे फलप्रदत्वे च सति फलप्रदस्य प्राधान्यं च निरङ्कुशम् । फलप्रदोपाययोर्भेदे हि फलप्रदस्य फलगतविशेषधर्मावच्छिन्नकार्यतानिरूपितकारणतारूपासाधारणकारणत्वाभावात् । फलोपायस्य कारणान्तराव्यवहितकारणताकत्वाभावाच्चोभयोरप्राधान्यं भवति । फलप्रदोपाययोरैक्ये निरुक्तोभयविधाप्राधान्यस्यापि प्रसङ्गाभावेन प्रधानोपायत्वं पुष्कलम् । तस्माद्यथोक्त एवार्थः ।

तदेवमहिर्बुध्न्योक्तनमश्शब्दयोजनात्रयेऽपि चेतनकर्तृकस्वरक्षणार्थप्रवृत्तेः समूलोन्मूलितत्वेन तद्बलेन नमश्शब्दस्योपायान्तरैदम्पर्यसिद्धिवचनमनुपपन्नमेव ।

एतेन द्वितीययोजनायाः साधनान्तराधिकार्यपेक्षितकर्तृत्वत्यागपरत्ववचनं, तृतीययोजनाया विकल्पेन साधनप्रपत्तितत्फलप्रदयोः प्राधान्यपरत्ववचनं च परास्तम् । द्वितीययोजनायां स्वातन्त्र्यसामान्यस्य निषिद्धत्वेन तत्र निरीश्वरवाद्यसाधारणस्वातन्त्र्यमात्रनिषेधोक्तेरनुपपन्नत्वात् । न हीश्वरमभ्युपगच्छतां नमःपदनिषेध्यतया त्वदुक्तस्य प्रधानकर्तृत्वलक्षणस्वातन्त्र्यस्य प्रसङ्गस्स्यात् । येन तन्निषेधेन नमःपदसार्थक्यम् । तस्मात्त्वन्मते द्वितीययोजना व्यर्थैव । स्वातन्त्र्यसामान्यनिषेधपरत्वे तु भगवत्परत्वमभ्युपगच्छतामपि भगवत्यनुमत्यनिवारणमात्रेण "कृतप्रयत्नापेक्षस्तु" इत्युक्तरीत्या सांसारिकप्रयत्नवत्कर्माधीनसुखसङ्गजनकबन्धकसत्त्वगुणोन्मेषबलेन निरतिशयसुखरूपस्वार्थमोक्षसाधनेष्वपि प्रवृत्तिसम्भवेन तादृशप्रवृत्त्यर्हताद्यापादकस्वातन्त्र्यनिषेधान्नमश्शब्दाद्द्वितीययोजना प्रयोजनवत्तरा ।

न चैवं "कर्ता शास्त्रार्थवत्त्वात्" "शास्त्रफलं प्रयोक्तरि" इत्यादि-विरोधः; "कर्ता शास्त्रार्थवत्त्वात्" इत्यस्य प्रयोज्यकर्तृप्रधानकर्तृसाधारण्येन शरीराधिष्ठानप्रयत्नहेतुत्वलक्षणकर्तृत्वसामान्यविषयत्वेन तद्बलेन निष्कृष्टात्मनः स्वातन्त्र्यासिद्धेः। तदधिकरणभाष्यदर्शितेन प्राप्ताप्राप्तविवेचनेनैव सांसारिक-प्रवृत्तिष्विव साधनान्तरप्रवृत्तावपि जीवस्य कर्तृताया भगवदत्यन्तपारतन्त्र्य-विरुद्धाया गुणसंसर्गकृतत्वसिद्ध्या तदनुकूलस्वातन्त्र्यस्यापि विशिष्टवेषनिष्ठ-त्वेन निष्कृष्टस्वरूपगतत्वायोगात्। "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते" इत्यत्र श्रीगीताभाष्ये "कार्यम् - शरीरम्, कारणानि - ज्ञानकर्मात्मकानि समनस्कानीन्द्रियाणि, तेषां क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिरेव हेतुः" इति स्वभोगतत्साधनप्रवृत्तिसामान्यस्य बन्धकाचित्सम्बन्धरूपविरोधिस्वरूप-प्रयुक्ततायाअनुगृहीतत्वात्। "प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः। यः पश्यति तथात्मानमकर्तारं स पश्यति" इति वचनभाष्ये "सर्वाणि क-र्माणि "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते" इति पूर्वोक्तनीत्या क्रियमा-णानि यः पश्यति, तथात्मानं ज्ञानाकारमकर्तारं च यः पश्यति, तस्य प्रकृति-संयोगः, तदधिष्ठानं तज्जन्यसुखदुःखानुभवश्च कर्मरूपज्ञानकृत इति यः पश्यति, स आत्मानं यथावस्थितं पश्यति" इति साधनान्तरानुष्ठातृत्वफलभोक्तृत्व-योर्निष्कृष्टवेषास्पर्शित्वस्यानुगृहीतत्वात्। "सत्त्वं रजस्तम इति गुणाः प्रकृति-सम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम्" "तत्र सत्त्वं निर्मल-त्वात्प्रकाशकमनामयम्। सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ" "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः" इति श्रीगीतावचनैः सुकृतपरं-परापरिणतप्रकृतिसम्भवसत्त्वस्य न्यासोपासनादिलक्षणसाधनान्तरात्मकज्ञान-विशेषतत्फलमोक्षपर्यन्तसुखविशेषयोः सङ्गजननद्वारा स्वरूपयाथात्म्यविनाश-कतया बन्धकत्वमुक्त्वा "सर्वारम्भपरित्यागी गुणातीतः स उच्यते" इति भावनात्रयरहितस्यैव गुणत्रयातीतत्वं प्रतिपाद्य "यो मामव्यभिचारेण भक्ति-योगेन सेवते। स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते" इति साधनान्तर-सङ्गरूपव्यभिचाररहितेन "साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः। साध्यभक्तिः स्मृता सैव प्रपत्तिरिति गीयते" इत्युक्तभगवदेकोपायत्वाध्यव-सायात्मकप्रपत्त्यात्मकभक्तियोगेन विना तादृशगुणात्ययस्य दुस्साधनत्वमुक्त्वा, तादृशभक्तियोगस्यापि तद्विषयसत्यसङ्कल्पपरमकारुणिकाश्रितवात्सल्यैकजल-धिभगवत्कर्तृकनिर्हेतुकविषयीकारजायमानकालकटाक्षशुद्धसत्त्वसदृशविलक्षण-

सत्त्वप्रवर्तनसदाचार्यसङ्घटनादिभगवत्कृषिफलत्वेनानुपायत्वात्, भगवत एव चरमकारणतया तस्मिन्नेवोपायत्वपर्यवसानं "द्युभ्वाद्यायतनं स्वशब्दात्" इति सूत्रदर्शितम्, "ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" इति दर्शयित्वा सत्त्वादिमूलकस्वप्रवृत्तेर्बन्धकतायाः सप्रपञ्चमभिहितत्वेन तादृशप्रवृत्तिकर्तृतालक्षणस्वातन्त्र्यसामान्यस्य विरोधिनिवृत्तिपरे नमश्शब्दे निषेधोपपत्तेश्च ।

"शास्त्रफलं प्रयोक्तरि" इत्यस्यापि ऋत्विगादिषु अतिप्रसङ्गवारणाय प्रयोज्यकर्तृव्यतिरिक्तविषयत्वावश्यम्भावस्य पूर्वमेवोक्तत्वात्, केवलकैङ्कर्यभूतप्रह्वीभावाद्यव्यभिचारभक्तियोगपर्यन्तसेवाकर्तुरत्यन्तपरतन्त्रस्य दासकर्मकरत्वेन तादृशस्वतन्त्रप्रयोक्तृतायास्तस्मिन्नसम्भवाच्च विरोधाभावात् । तस्मान्नमःपदसूक्ष्मयोजनायाश्चेतनगतसाधनान्तराविषयकप्रधानकर्तृत्वमात्रनिषेधपरत्वोक्तिरनुपपन्नैव । अत एव परयोजनाया विकल्पेन प्रागुक्तार्थद्वयपरत्वमप्यनुपपन्नम् । स्थूलयोजनायां चेतनकर्तृकप्रह्वीभावस्य "फलेप्सा तद्विरोधिनी"ति साधनत्वनिषेधात्, सूक्ष्मयोजनायां चेतनस्य साधनान्तरयोग्यत्वनिषेधाच्च प्रपत्तेः साधनस्यैवासिद्ध्या तत्प्राधान्यरूपप्रथमार्थस्योक्त्यसम्भवग्रस्तत्वात्, "निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि" इत्युक्तरीत्या फलप्रदमात्रस्याप्रधानोपायतया प्रधानोपायत्वासम्भवेन द्वितीयार्थस्यापि तथात्वाच्च । तस्मान्नमश्शब्दस्य स्वातन्त्र्यसामान्यनिषेधपरत्वसिद्धान्त एवाहिर्बुध्न्यदर्शिततद्योजनात्रयस्वारस्यसिद्धिः ।

अथ यच्चोक्तं "गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः" इत्युपदिष्टस्यार्थस्य "नमश्चक्रुर्जनार्दनम्" इति नमस्काररूपत्वावगमान्नमश्शब्दस्य साधनपरत्वमिति, तदप्यनुपपन्नम् । तत्र शरणशब्दस्थाने नमश्शब्दस्य प्रयोगमहिम्ना नमश्शब्दस्य सिद्धोपायपरत्वावगमात् । "जनार्दनं - नमश्चक्रुः - शरणं चक्रुः, उपायत्वेनाध्यवसितवन्तः' इत्येव तदर्थत्वात् । ततश्च "नमश्चक्रुः" इत्यत्र नमश्शब्दः - परयोजनोक्तप्रकारेण सिद्धोपायपर एवेति, तत्र साध्योपायान्तरसिद्धिवर्णनमयुक्तम् ।

किञ्च "शरणं गन्तुमर्हथ" "नमश्चक्रुः" इत्याभ्यां नमस्कारशरणागत्योरभेदप्रतीतावपि नमश्शब्दस्य साधनान्तरपरत्वमासिद्धमेव । शरणागतेः साधनतायाः "नारायणं सलक्ष्मीकं प्राप्तुं तच्चरणद्वयम् । उपाय इति विश्वासो द्वयार्थः शरणागतिः" "इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किं पुनः सहकारिणाम्" "त्वय्येव त्वदुपायधीरपिहितस्वोपाय-

भावास्तु मे" इत्याद्यभियुक्तवचनैः "मामेकं शरणं व्रज" "तमेव शरणं गच्छ" "त्वामेव शरणं प्राप्य" "त्वमेवोपायभूतो मे" "तदेकोपायता-याच्ञा" इत्यादितन्मूलप्रमाणैश्च शरणागतेर्भगवदेकोपायत्वाध्यवसायात्मक-त्वसिद्ध्या साधनतायास्तत्स्वरूपविरुद्धत्वात्, "फलेप्सा तद्विरोधिनी" "न मे सिद्धिरतोऽन्यथा" "याः काश्चन कृतयो मम भगवति मम ममता नास्ति तासु भगवत एव ताः" "सत्कृतानि च कर्माणि मदीयमहमप्युत । तवैव न ममेतीष्टं नमो भगवतैरिह" इत्यहिर्बुध्न्यनिरुक्तशाण्डिल्यादिवचनैर्नम-श्शब्दस्यानुपायभूतस्वयम्प्रयोजनप्रह्वीभावपर्यन्तस्य सम्बन्धसामान्यनिवृत्तिपर-त्वावगमेन साधनतायास्तत्स्वरूपविरुद्धत्वाच्च ।

अथ यच्च दमयन्तीवृत्तान्तोदाहरणम्, तदप्यसाधकम् । "शरणं प्रति-देवानां प्राप्तकालममन्यत" इत्यत्र शरणशब्दस्य स्वानुष्ठितसत्यभूतपातिव्रत्य-धर्मफलप्रदत्वलक्षणरक्षकत्ववरणमात्रपरतायाः "हंसानां वचनंश्रुत्वा यथा मे नैषधो व्रतः । पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ मनसा वचसाचैव यथा नाभिचराम्यहम् । तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥ यथा देवैः स मे भर्ता विहितो निषधाधिपः । तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ यथेदं व्रतमारब्धं नलस्याराधने मया । तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ स्वं चैव रूपं कुर्वन्तु लोकपाला महेश्वराः । यथाऽहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥ निशम्य दमयन्त्यास्तत्करुणं प्रतिदेवितम् । निश्चयं परमं तथ्य-मनुरागं च नैषधे ॥ मनोविशुद्धिं बुद्धिं च भक्तिं रागं च नैषधे । यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे" इत्यनन्तरवचनैः सिद्धत्वेन तस्य प्रपत्ति-परत्वायोगात् । अत एव "वाचा च मनसा चैव नमस्कारं प्रयुज्य सा" इत्यस्य प्रपत्तिपरत्वासम्भवाच्च । सत्यधर्मरूपसाधनान्तरविशिष्टाया दमयन्त्या आकिञ्चन्याभावेन प्रपत्त्यनर्हत्वात्, प्रपत्तिं कृत्वा सत्यधर्मफलप्रार्थनाया अस-ङ्गतत्वाच्च । तस्मात् "वाचा च मनसा चैव नमस्कारं प्रयुज्य सा । देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत्" इत्यत्र दमयन्तीनमस्कारः सत्यधर्मफल-प्रार्थनाङ्गभूतः केवलनमस्कारात्मक एवेति तत्परवचनस्याष्टाक्षरघटकनमश्शब्द-साधनप्रपत्तिपरत्वसाधकत्वमसम्भावितमेव ।

अथ "नमस्कारात्मकं यस्तु विधायात्मनिवेदनम्" इति वचनान्तरो-दाहरणमपि व्यर्थम् । निवेदनशब्दस्य विज्ञापनमात्रपरतायाः "ततस्तु ब्राह्मणं ताभ्यां धर्मव्याधो न्यवेदयत्" इत्यादिसिद्धत्वात् "स्वातन्त्र्यं

निजरक्षणं समुचिता वृत्तिश्च नान्योचिता तस्यैवेति हरेर्विविच्य कथितम्" इति नमश्शब्दस्य भगवदुद्देश्यकचेतनकर्तृकस्वस्वरूपविज्ञापनपरतायाः पूर्वाचार्यप्रदर्शितत्वाच्च, तद्वचनस्य तावन्मात्रपरत्वेनान्यथासिद्ध्या नमस्कारस्य साधनप्रपत्तिरूपतायां तस्य प्रामाण्यायोगात् ।

अथ यदुक्तं 'मूलमन्त्रनमश्शब्दस्य पूर्वोत्तरसमभिव्याहारबलात् साधनप्रपत्तिपरत्वसिद्ध्या तत्र स्वातन्त्र्यसामान्यनिषेधोऽनुपपन्न' इति, तदप्यनुपपन्नम् । प्रणवघटकाकारप्रतिपन्नभगवत्कर्तृकसर्वरक्षणस्योपाध्यश्रवणेन निरुपाधिकत्वसिद्धेः, लुप्तचतुर्थ्या शेषशेषिभावप्रतिपादनेनोपाधिसापेक्षतायास्तद्विरुद्धत्वात्, उकारे भगवदनन्यार्हत्वोक्त्या भगवत्कर्तृकरक्षणस्य तदनन्यार्हविनियोगविशेषमात्रफलकत्वसिद्ध्या चेतनगतफलित्वापादकसाधनान्तरानुष्ठानस्य तद्विरुद्धत्वात्, नमःपदान्तद्वयोत्तरखण्डोपबृंहिते मूलमन्त्रचरमपदे फलस्य केवलपारार्थ्याभिधानेन स्वफलार्थसाधनानुष्ठानस्य तद्विरुद्धत्वात्, करणे ल्युडन्तायनशब्देन शरणशब्दोपबृंहितेन भगवत एवोपायत्वोक्तेः, करणस्य करणान्तरासहत्वाच्च पूर्वोत्तरसमभिव्याहाराभ्यां नमश्शब्दस्य साधनान्तरसमूलोन्मूलनपरताया एव सुस्पष्टमवगमात्, बद्धविषये भगवत उपायसापेक्षत्वे कारुण्यवात्सल्यादिकल्याणगुणानामनवकाशत्वप्रसङ्गात्, भगवत्प्रवृत्तिविरोधिसाधनान्तरप्रवृत्तिनिवृत्तिमात्रेणैव सर्वमुक्तिप्रसङ्गपरिहाराच्च ।

'परं चे'त्यादिकमप्यनुपपन्नम् । मकारोक्तज्ञानस्य लुप्तचतुर्थ्यकाराभिहितभगवदनन्यार्हशेषत्वविषयकत्वेन "स्वप्रयोजननिवृत्ति शेषत्वफलम्" इत्यनुगृहीतरीत्या तस्य स्वार्थप्रवृत्तिनिवर्तकत्वेन स्वार्थकर्तृत्वाधायकत्वायोगात्, शेषत्वज्ञानाधीनप्रयोज्यकर्तृतायाः "परप्रयोजनप्रवृत्ति प्रयत्नफलम्" इत्यनुगृहीतरीत्या केवलपरार्थत्वेन स्वातन्त्र्याक्षेपकत्वायोगात्, मूलमन्त्रचरमपदोक्तप्रार्थनायाः सिद्धोपायफलकेवलपरार्थकैङ्कर्यादिविषयकत्वेन स्वार्थविषयकत्वाभावात्, तत्प्रार्थनायाः "तद्विषयप्रीति चैतन्यफलम्" इत्यनुगृहीतरीत्या शेषत्वज्ञानफलत्वात्, तत्प्रसक्तफलित्वशङ्काया अपि मन्त्ररत्नोत्तरखण्डनमश्शब्देन "याः काश्चन कृतयो मम भवति" इत्यादिनिरुक्तविशदीकृतेन निवारितत्वाच्च तादृशमूलमन्त्रपदद्वयमध्यघटकस्य नमश्शब्दस्य स्वातन्त्र्यगन्धासहत्वात् ।

'अपरं चे'त्यादिकमप्यनुपपन्नम् । उकारेण शेषत्वस्यान्ययोगव्यवच्छेदेऽपि तदनन्तरमकारेण ज्ञातृत्ववाचिना कर्तृत्वभोक्तृत्वानुगुणस्वातन्त्र्या-

क्षेपशङ्कया प्रसक्तस्य स्वशेषत्वादेर्नमःपदेन निवृत्त्या साफल्योपपत्तेः, मकारात्मकज्ञातृत्वश्रुतिमूलकस्वातन्त्र्यानुमानापेक्षयाऽन्यशेषत्वसामान्यव्यावर्तकोकारस्य प्राबल्ये सत्यपि साधनान्तरविधायकशास्त्रान्तरोद्धलिताचिरन्तनस्वभोगार्थसाधनप्रवृत्त्यर्थस्वस्वातन्त्र्यवासनासहकृतश्रुतिमूलकानुमानस्य प्रत्यक्षश्रुतिसङ्कोचकत्वोपपत्तेः। तस्माद्यावता स्वशेषत्वं विशेषरूपेण न निषिध्येत, न तावत्पर्यन्तं स्वशेषत्वनिवृत्तिसिद्धिरिति नमःपदसाफल्यमुपपद्यत एव।

एतदुक्तं भवति—काम्यशास्त्राद्युपोद्धलितानादिस्वातन्त्र्यवासनाविशिष्टानां स्वस्वातन्त्र्यं न निषेध्यमिति बाधनिश्चयसत्त्वादुकारस्य भागवतव्यतिरिक्तविषयतया सङ्कोचसहस्य योग्यतानुसारात्स्वव्यतिरिक्तविषयतयाऽपि सङ्कोचो भवेदिति तद्व्यावर्तनान्नमःपदसार्थक्यम्। नमःपदस्य स्वशेषत्वादिनिवर्तनैदम्पर्येणैव प्रवृत्तत्वात्, तस्योकारवत्सङ्कोचाभावात्, "एतावान् ज्ञानविषयः किं प्रलापः करिष्यति" इति तस्यैव सर्वशास्त्रसारत्वेन प्रबलप्रमाणत्वाच्च। तेनानादिस्वातन्त्र्यभ्रमबाधो देहात्मभ्रमबाधवदुपपद्यत एवेति नमःपदसार्थक्योपपत्तिः—इति।

अथ "न च गोबलीवर्दन्यायात्" इत्यारभ्य "वैयर्थ्यादिदोषा दुष्परिहारा एव" इत्यन्तेनोक्तमप्यनुपपन्नम्। अनभ्युपगमात्, उक्तोत्तरत्वाच्च।

अथ यच्च "मन्त्रब्रह्मणि" इत्यादिदिव्यसूक्तौ स्वस्थानस्थितनमश्शब्दस्य साधनान्तरपरतया व्याख्यानारोपपूर्वकं "अकारार्थायैव स्वमहमथ मह्यं न" इत्यस्य नमःपदार्थविषयकतयाऽन्यथा करणेन नमःपदस्य स्वशेषत्वनिवर्तकत्वासिद्धिकथनम्, तदप्यनुपपन्नम्। "स्वान्त्यं निजरक्षणं समुदिता वृत्तिश्च नान्योचिता तस्यैवेति हरेर्विविच्य कथितम्" इत्यनेन "गतिर्गम्यं शिक्षितम्" इत्यत्र सिद्धोपायरूपगतिशिक्षणस्यैवाभिप्रेततायाः सुस्पष्टमवगमात्, "स्वस्यापि नाहम्" इत्यनेन सिद्धोपायरूपगत्युपरञ्जकतया साधनान्तरप्रवृत्तिसामान्यनिवृत्तेरपि मध्यमनमःपदेन शिक्षितत्वावगमाच्च तस्य साधनान्तरप्रवृत्तिपरत्वोक्तेर्विपरीतज्ञानकार्यत्वात्। "अथ मह्यं न" इत्यस्योत्तरान्वितनमःपदार्थफलोपधानप्रार्थनापरत्वेन तस्य प्रणवार्थानुसन्धानपरत्वोक्तेरप्यन्यथाज्ञानकार्यत्वाच्च मूलमन्त्रगतप्रणवे "भगवत एवाहमस्मि" इति सिद्धवन्निर्देशबलेन "म् आयैवास्मि" इति भगवच्छेषत्वयोग्यतायामुक्तायां "नारायणाय" इत्यनेन नमश्शब्दव्यवहितेनाकारोत्तररक्षकत्वविशेष्यसमर्पणानुपपत्त्या, "म् नारायणायास्मि" इति वाक्यान्तराश्रयणे

पौनरुक्त्यापत्त्या च "म् नारायणाय स्याम्" इत्येवमनुषङ्गाध्याहाराभ्यां वाक्यभेदमाश्रित्य 'भगवच्छेषत्वयोग्योऽहं भगवच्छेषभूतो भवानि' इति "कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि" इत्यनुगृहीतफलोपधानप्रार्थनावन्नमश्शब्देऽपि "अहमपि न मम भगवत एवाहमस्मि" इति पूर्वपदान्वयग्राहकश्रुत्यनुसारे "म् मः नास्मि" इत्येवं स्वशेषत्वयोग्यतायां निषिद्धायां "याः काश्चन कृतयो मम भगवति मम ममता नास्ति तासु भगवत एव ताः" इति चरमपदार्थवृत्तिविषयकत्वग्राहकनिरुक्तबलात् "म् मः न स्याम्" इत्येवमावृत्त्या वाक्यान्तरमाश्रित्य स्वशेषत्वनिषेधस्यापि प्रार्थनीयतया तदभिप्रायेणैव "अकारार्थायैव स्वमहमथ मह्यं न" इति नारायणपदव्याख्यानावसरे पुनर्नमश्शब्दव्याख्यानोपपत्तेः। अत्र "अकारार्थायैव स्वं स्याम्, अथ मह्यं न स्याम्" इत्यर्थः। "अकारार्थायैव" इति लुप्तचतुर्थ्यन्तार्थफलोपधानभूतव्यक्तचतुर्थ्यन्तार्थकथनम्। "स्वम्" इति मध्यमनमःपदोक्तभगवदेकरक्ष्यत्वादिपारतन्त्र्यफलोपधानकथनम्। शेषत्वफलोपधानवत् पारतन्त्र्यफलोपधानस्यापि फलकोटिप्रविष्टत्वात्। "मह्यं न" इति प्रणवान्वितनमःपदार्थफलोपधानभूतचरमपदार्थकथनमिति विवेकः। "अथ मह्यं न" इत्यथशब्दः कल्पान्तरद्योतकः। तेन यथा भृत्यस्य स्वार्थत्वं राजशेषत्वाविरोधि, यथा च यजमानस्य फलस्वामितया स्वार्थत्वं यागशेषत्वाविरोधि; नैवं जीवात्मनः स्वार्थत्वं भगवच्छेषत्वाविरोधि। किं तु सर्वात्मनाऽपि भगवच्छेषत्वात् स्वभोगार्थप्रवृत्त्यनर्हस्य तादृशप्रवृत्तिमत्त्वं भगवत्प्रीतिन्यूनतापादकतया भगवच्छेषत्वविरोध्येवेति सूच्यते। तदेवं "अकारार्थायैव" इत्यादिसूक्त्यवहंशब्देन स्वभोगोद्देश्यकप्रवृत्त्यनर्हत्वस्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वादृष्टद्वारकफलसाधनगोचरकृत्यनर्हत्वलक्षणस्थानत्रयान्वितनमश्शब्दप्रतिपाद्यत्रिविधपारतन्त्र्यात्मकस्वत्वसहकृतप्रणवप्रतिपाद्यभगवदनन्यार्हशेषतैकवेषं स्वस्वरूपमुक्त्वा, तस्य "अकारार्थायैव स्याम्, स्वं स्याम्, मह्यं न स्याम्" इति तादृशशेषत्वात्रिविधपारतन्त्र्यफलोपधानसामान्यप्रार्थनाया मूलमन्त्रचरमपदविवक्षितत्वप्रदर्शनात्तदनुसारेण नमश्शब्दस्य विरोधित्रयनिवृत्तिपरत्वमेवावश्यकमिति तस्य साधनान्तरपरत्वोक्तिरनुपपन्नैव।

किञ्च नमश्शब्दस्य "इन्द्रायेदं न मम" इतिवदात्मयागपरत्वे सम्बन्धसामान्यबोधकमकारोत्तरषष्ठीस्वारस्यभङ्गः। यागस्थले देवतामुद्दिश्य त्यज्यमानस्य पदार्थस्य त्यागविषयत्वेन रूपेणादृष्टद्वारा फलजननमुखेन त्यागाधि-

कारिशेषत्वसत्त्वेन सम्बन्धसामान्यत्यागाभावात्, सम्बन्धसामान्यत्यागे यागस्य फलसाधनताया असिद्धिप्रसङ्गाच्च । न च "तेन तेनाप्यते तत्तन्न्यासेनैव महामुने" इति फलसाधनतया प्रतिपन्नं न्यासं प्रति "नमसा योऽकरोद्देवे स स्वध्वरः" इत्यादिषु नमश्शब्दस्य करणमन्त्रत्वाभिधानबलान्निरुक्तसम्बन्धसामान्यषष्ठ्यस्वारस्यं बोढव्यमिति वाच्यम्; "तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः" इति प्रपत्तिस्वरूपस्य "अर्थेनैव विशेषो हि" इति न्यायेन प्रपत्तव्यगतफलकरणत्वेनैव निरूपणीयतया तदनुसारेण प्रपत्तेः करणताश्रुतेरन्यथानेयत्वात्, "भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिः" इति पूर्वाचार्यसम्प्रदायानुसारेण प्रपत्तेः प्रतिबन्धकाभावविधया फलोपभोगस्य क्लृप्तत्वेन तेनैव प्रपत्तेः फलसाधनताश्रुतिसामञ्जस्ये तत्परित्यागेनादृष्टद्वारकसाधनताकल्पनस्य दृष्टसम्भवन्यायपराहतत्वात्, स्वरसतः सवन्धसामान्यत्यागपरस्य नमश्शब्दस्य प्रपत्तिकरणमन्त्रत्वप्रमाणबलादपि विरोधिनिवृत्तित्वेनैव प्रपत्तेः साधनताया अवश्याङ्गीकरणीयत्वाच्च सम्बन्धसामान्यपरषष्ठीस्वारस्यानुसारेणैव प्रपत्तेर्दृष्टविधया फलसाधनत्वोपपादने सम्भवति तत्परित्यागायोगात् ।

इत्थं च शरणागतिवाचकस्थाने क्वचिन्नमश्शब्दप्रयोगेऽपि शरणागतेर्भगवत्प्रवृत्तिविरोधिनिवृत्त्यात्मकत्वेनैवोपपद्यत इत्यपरमप्यनुकूलम् । अन्यथा हि नमस्कारवाचिनो नमश्शब्दस्य शरणागतौ रूढिवृत्तिः कल्पनीयैवेति कल्पनागौरवम् । तस्मान्नमश्शब्दस्य विरोधिसामान्यनिवृत्तिपरत्वमेव युक्तम् । न च नमश्शब्दस्योपायपरत्वाभावे तस्योपायविरोधिनिषेधपरत्वांशे अप्रसक्तप्रतिषेधप्रसङ्गः; उपायविरोधित्वेन रूपेणोपायविरोधिनो निषेधे उपायप्रसङ्गस्यापेक्षितत्वेऽपि स्वरक्षणार्थप्रवृत्तित्वेन रूपेण तन्निषेधस्य तत्प्रसङ्गानपेक्षणात्, अकारे भगवतो निरुपाधिकरक्षकत्वोक्त्या नारायणपदे करणे व्युत्पन्नायनशब्देन भगवत एवोपायत्वोक्त्या च पूर्वोत्तरपदयोरुपायस्य प्रसक्तत्वेन तन्मध्यघटके नमश्शब्दे तद्विरोधिनिषेधोपपत्तेश्च । अस्मिन्नेव नमश्शब्दे पूर्वोत्तरस्थानद्वयान्वयबलेन स्वरूपांशे फलांशे चात्यन्तपारतन्त्र्याभिधानात्तद्बलेन भगवत एवोपायत्वसिद्ध्या स्वस्थानान्वितनमश्शब्देन तद्विरोधिनिषेधोपपत्तेर्वृत्तिकारप्रदर्शितत्वाच्च ।

न चैवं सुषुप्तिप्रलययोः सर्वमुक्तिप्रसङ्गः; तदानीमपि संस्काररूपेण विरोधित्रयसत्त्वेन तदयोगात् । न चैवं तादृशसंस्कारस्य दुस्त्यजत्वेन कदाऽपि

मोक्षासिद्धिप्रसङ्गः; यथाऽवस्थितनमःपदार्थश्रवणजन्यसंस्कारविशेषेणैव तन्नि-वृत्त्यभ्युपगमात्। चिरकालाभ्यस्तानामपि देहात्मभ्रमादीनां शास्त्राभ्यास-बलेन सवासनानिवृत्तिदर्शनात्। यथाऽवस्थितनमःपदार्थनिष्ठाया उत्तेजकत्वा-भ्युपगमाद्वा विरोधाभावात्, "परशेषत्वधीमात्रमधिकारिविशेषणम्। पश्चा-दात्मापहारस्य निरोधाय च कल्पते" इति वेदान्ताचार्यसूक्त्या शास्त्रजन्यशे-षत्वज्ञानस्य सवासनस्वतन्त्रात्मभ्रमादिनिवर्तकत्वसिद्ध्या शास्त्रज्ञानस्यैवाना-दिवासनानिवर्तकताया भवताऽपि स्वीकरणीयत्वाच्च।

अथ यदुक्तं चेतनकर्तृकस्वरक्षणार्थव्यापारस्य भगवत्कर्तृकरक्षणव्या-पारौपयिकप्रसादहेतुत्वात्तद्वैषम्यनैर्घृण्यपरिहारकत्वाच्च भगवत्प्रवृत्त्यनुकूलतया तद्विरोधित्वं दुरुपपादमिति, तदप्यनुपपन्नम्। चेतनकर्तृकसाधनानुष्ठानस्य भगवत्कर्तृकस्वार्थकैङ्कर्यपर्यन्तफलान्तरप्रदानानुकूलत्वसम्भवेऽपि केवलपरार्था-नुभवकैङ्कर्यरूपपरमपुरुषार्थप्रदानानुकूलत्वायोगात्, "शास्त्रफलं प्रयोक्तरि" इति न्यायेन साधनानुष्ठानस्य फलगतपारार्थ्यभञ्जकत्वात्, ब्रह्मास्त्रशरणव-त्कन्यायेन भगवन्निष्ठफलकरणताविरोधित्वाच्च; अनाद्यज्ञाननिबन्धनस्वप्रवृत्ते-र्भगवत्प्रवृत्तिविरोधित्वेनैव वैषम्यनैर्घृण्ययोः परिहृततया तदर्थादृष्टसाधनान्तर-कल्पनायोगाच्च। एतेन स्वभोगान्वयस्य भगवत्प्रवृत्त्यनुकूलत्वोपपादनमप्य-पास्तम्। यावच्छक्तिनिषिद्धकाम्यसर्वफलान्तरान्वेषणप्रसङ्गात्। तथा सत्येव भगवदौदार्यप्रकाशातिशयसम्भवात्, सार्वभौमलीलाशुकन्यायस्य तदैवासङ्को-चसम्भवाच्च।

'अपि चे'त्यादिकमप्ययुक्तम्। भगवद्दीयमानकेवलपरार्थानुभवकैङ्कर्य-विषयकचैतन्यकार्यानुषङ्गिकप्रीतेः स्वरूपानुरूपायाः सत्त्वेन तयैव चेतनाना-मचेतनवैलक्षण्यादिसिद्धेः। स्वभोगोद्देश्यकप्रवृत्तिस्वप्रवृत्त्युद्देश्यभोगाश्रयत्वयो-रेव नमश्शब्देन निषेधात्। एवं चेतनस्य स्वातिशयत्वावच्छिन्नविषयकेच्छायाः स्वस्वरूपविरुद्धत्वेऽपि परातिशयत्वमात्रावच्छिन्नविषयकेच्छायाः स्वस्वरूपत्वा-नपायेन तादृशेच्छाविषयकेवलपरातिशयप्रापणतद्विरोधिस्वातिशयनिवर्तना-भ्यामेव भगवत्कर्तृकाचेतनरक्षापेक्षया चेतनरक्षावैलक्षण्योपपादनसम्भवाच्च।

न चैवं "सर्वे स्वार्थं समीहते" इति न्यायविरोधः; तस्य स्वातन्त्र्याभिमानि-मात्रविषयत्वात्, भगवदत्यन्तपारतन्त्र्यज्ञानवतां "तनक्केयाह वेनैक्कोल्लु-मीदे" "जहि मां निर्विशङ्कस्त्वम्" इत्याद्युक्तरीत्या केवलपरातिशयस्यैवे-ष्यमाणत्वोपपत्तेः, नमःपदरूपप्रबलप्रमाणेन निषेधादेव स्वातिशये बलवदनिष्टा-

नुबन्धिताया ज्ञाततया स्वरूपज्ञानिनां तद्विषयकेच्छाया असम्भावितत्वाच्च । यदि स्वार्थानुभवादेश्शास्त्रनिषेधे सत्यपि सुखरूपतामात्रेण स्वरूपज्ञानामपि तदिच्छासम्भवो न विरुध्येत, तदा स्वर्गादीनां कैवल्यस्य च सुखरूपत्वाविशेषात् भगवद्विषये तत्प्रार्थनमप्यविरुद्धं स्यात् । फलान्तरस्य पारमैकान्त्यविरुद्धत्वात्तत्प्रार्थनं विरुद्धमेवेति चेत्; स्वातिशयोद्देशस्याप्यनन्यार्हताविराधित्वात्, स्वार्थानुभवादिप्रार्थनमपि स्वरूपविरुद्धमेवेति पश्यतु भवान् ।

किञ्च नमः पदोक्तविरोधिनिवृत्तित्रयस्य "भावान्तरमभावः" इति न्यायेन ज्ञानत्रयात्मकत्वात्, तत्र चरमविरोधिनिवृत्तेस्स्वभोगान्वयनिवृत्तिप्रार्थनात्मकत्वेनेच्छारूपतया तद्विषयप्रापणतद्विरोधिस्वभोगान्वयनिवर्तनाभ्यामेव चेतनविषये भगवतो रक्ष्यरक्षकभावादिवैलक्षण्यसिद्धेश्च । न चैवं स्वरक्षणे स्वान्वयप्रसङ्गः, विरोधिनिवृत्त्यात्मकज्ञानत्रयस्यान्वयव्यतिरेकाभ्यां मोक्षसाधनतासिद्धेरिति वाच्यम्; तादृशज्ञानत्रयस्य केवलश्रवणजन्यज्ञानरूपत्वेन विधेयतया तस्य साधनत्वायोगात् । निर्हेतुककटाक्षसत्त्वप्रवर्तनशास्त्रप्रदानव्याप्तिसृष्टयवतारादिभिश्चेतनोज्जीवने भगवतःप्रथमप्रवृत्तत्वेन तद्विषये चेतनेच्छाया अनुमतिमात्ररूपत्वेन प्रार्थनाया अपि साधनत्वायोगात्, "परशेषत्वधीमात्रमधिकारिविशेषणम्" इति स्वरूपज्ञानमात्रस्याधिकारिविशेषणताया वेदान्ताचार्यैरप्यनुगृहीतत्वात्, फलप्रार्थनाया अर्थित्वात्मकत्वाच्च । तादृशज्ञानत्रयस्यापि केवलाधिकारिविशेषणमात्रत्वेन तस्य साधनत्वायोगाच्च ।

न चैवमपि निरुक्तज्ञानत्रयस्य विरोधिनिवृत्तिरूपतया प्रतिबन्धकाभावस्य कारणत्वमते तस्य साधनताया दुरपह्नवत्त्वात्, साधनान्तरान्वयदोषो दुष्परिहर एवेति वाच्यम्; अस्य चोद्यस्य भवन्मतेऽपि तुल्यत्वात् । प्रपत्त्यनन्तरकालीनब्रह्मविदपचारादिप्रतिबन्धकवर्जनरूपयत्नस्य प्रतिबन्धकाभावविधया मोक्षसाधनयत्नरूपत्वात् । यदि तादृशब्रह्मविदपचारपरिहारादीनां भगवदनिष्टवर्जनात्मककैङ्कर्यरूपतया स्वयम्प्रयोजनतयैवानुष्ठानान्मोक्षोद्देश्यकसाधनप्रवृत्तिरूपत्वाभावान्न दोष इत्युच्येत, तदा प्रकृतेऽपि दीयतां दृष्टिः ।

किञ्च सिद्धान्ते अदृष्टद्वारकफलसाधनगोचरप्रवृत्तेरेवानन्यशरणत्वसर्वलोकशरण्यत्वरूपस्वस्वरूपपरस्वरूपयोर्विरुद्धत्वात् "शास्त्रफलं प्रयोक्तरि" इतिन्यायेन भोक्तृत्वापादकतया केवलपारार्थ्यरूपपुरुषार्थस्वरूपविरोधि-

( इति लिखित पाठः)



(८३) स चैको वा बहवो वा इत्यपेक्षायामाह-विरोधीति ।

मू॥ विरोधितान् मून्नु ॥ ८३ ॥

छा॥ विरोधी तु त्रिविधः ॥ ८३ ॥

(८४) त्रैविध्यमेव स्फुटयति - सत्विति ।

मू॥ अदावदु - स्वरूपविरोधियुम्, उपायविरोधियुम्, प्राप्यविरोधियुम् ॥ ८४ ॥

---

त्वाच्चावश्यपरिहरणीयतयादृष्टसाधनप्रवृत्तेरनुपपत्त्यभावाच्च । अपि च "सर्वधर्मान्परित्यज्य" इत्यादिषु चोदनालक्षणार्थानामेव मोक्षसाधनानां निषेधादविधेयज्ञानानामनिषिद्धतया निरुक्तविरोधित्रयनिवृत्त्यात्मकज्ञानत्रयस्याविधेयतायाःपूर्वमेवोक्तत्वाच्च विरोधाभावात् "—इति ।

सूत्रार्थः - (अनेन) - "तथा च नम इत्यनेन" इति सूत्रद्वयव्यवहितपूर्वाधिकरणसूत्रनिर्दिष्टनमश्शब्देनेत्यर्थः । (विरोधी) - प्रतिबन्धकमित्यर्थः । (निवर्त्यते) - महावाक्यरूपो मूलमन्त्रः, नमश्शब्दरूपस्वैकदेशरूपद्वितीयवाक्येनायनपदोक्तभगवदुपायत्वोपपादकं विरोधिनिवृत्तिरूपं स्ववाक्यार्थैकदेशं प्रतिपादयतीति भावः ॥ ८२ ॥

(८३) अथ विरोधित्रयनिवृत्तिपरत्वं वक्ष्यन् तदुपोद्घातत्वेन प्रणवोक्तशेषत्वविरोधिनिवृत्तिमात्रपरत्वभ्रमो निवर्त्यते - विरोधी त्वित्यनेन । तुशब्देन - अत्रत्यविरोधिस्वरूपवाचिना शङ्कितैकविरोधिव्यावृत्तिरुच्यते । (त्रिविधः) - इति, अन्यथा सम्बन्धसामान्यवाचिषष्ठीश्रुतिविरोध इति भावः ॥ ८३ ॥

(८४) अथेष्टविरोधिनिवृत्तिपरत्व एव पुरुषार्थपर्यवसायितया प्रामाण्यसिध्या विरोधिप्रतियोगिभूतमिष्टत्रयं निर्दिश्यते—स त्वित्यनेन ।

स्वरूपशब्देन - 'स्वं रूपम्' इति व्युत्पत्या प्रणवोक्तभगवत्प्रीतीच्छाजन्यप्रवृत्त्यर्हत्वरूपशेषत्वलक्षणस्वभाव उच्यते । तद्व्यापकीभूतभगवत्प्रीत्यर्थ-

छा ॥ स तु - स्वरूपविरोधी च, उपायविरोधी च, प्राप्यविरोधी च ॥ ८४ ॥

व्या ॥ प्रथमपदोक्तस्वरूपविरोधी, मध्यमपदे अर्थसिद्धस्योपायस्य विरोधी, उत्तरपदोक्तप्राप्यविरोधी चेत्यर्थः । इदञ्च नमःपदं काकाक्षिन्यायेन पूर्वोत्तरपदोक्तस्वरूपप्राप्यविरोधिनावपि निवर्तयितुं क्षमते ॥ ८४ ॥

---

प्रवृत्तिफलोपधानप्रतिबन्धकं स्वप्रीत्यर्थप्रवृत्तिफलोपधानं विरोधिपदेन विवक्षितम् । तन्निवृत्तिः, स्वप्रीत्यर्थप्रवृत्त्यनर्हत्वपरेण नमश्शब्देन व्यापकतया व्यज्यत इत्यभिप्रायेणाह—**प्रथमपदोक्तेति** । उपायशब्देन जीवरक्षणार्थप्रवृत्तिविशिष्टकरणव्युत्पन्नायनशब्दोपात्तं व्यक्तचतुर्थीव्यंग्यप्रीतिविशेषरूपपरमपुरुषार्थकारणभूतं भगवत्स्वरूपं विवक्षितम् । तद्विशेषणीभूतचेतनरक्षणार्थप्रवृत्तिप्रतिबन्धकमदृष्टद्वारकभगवत्प्रीतिसाधनगोचरप्रवृत्तिमत्त्वं विरोधिपदेन विवक्षितम् । तन्निवृत्तिः, अदृष्टाद्वारकभगवत्प्रीत्यर्थप्रवृत्त्यनर्हत्वपरेण नमसा व्यापकतया व्यज्यत इत्यभिप्रायेणाह—**मध्यमपद** इति । प्राप्यशब्देन 'नारायणाय स्याम्' इत्युक्तस्य प्राप्यतया जीवात्मसाध्यत्वस्योपपादकं भगवत्प्रियतमत्वेन परमपुरुषार्थभूतं कैङ्कर्यमुच्यते । तत्प्रतिबन्धकं 'मः न स्याम्' इति तुरीयवाक्येन प्रार्थनीयत्वेनोक्तं स्वत इष्टस्वपरभोगवत्त्वं विरोधिपदेन विवक्षितम् । तन्निवृत्तिः, काकाक्षिन्यायेनान्वितनमश्शब्देन स्वार्थानुभवस्वार्थकैङ्कर्यनिवृत्तिफलोपधानस्य प्रार्थनीयत्वपरेण कण्ठतो लभ्यत इत्यभिप्रायेणाह—**उत्तरपदोक्तेति** । चशब्दत्रयं - समभिव्याहृतविरोधिनां मिथस्समुच्चयपरः । एतत्पदोक्तार्थसिद्धोपायविरोधिनिवृत्तिमात्रपरत्वा(द)स्य नमश्शब्दस्य कथं पूर्वोत्तरपदोक्तस्वरूपप्राप्यविरोधिनिवृत्तिपरत्वमित्यत आह—**इदं चेति** ॥ ८४ ॥

(८५) अथोक्तविरोधित्रयनिवृत्तेस्स्वापमदमूर्च्छाप्रलयेष्वतिप्रसंगान्न सिद्धोपायफलोपधायकत्वोपपादकतया तदुपरंजकत्वमुपपद्यत इति शङ्कायां 'म् - मः नास्मि, म् - मः न स्याम्' इत्यत्र समर्पकमकारेणात्मनो ज्ञातृत्वेन निर्देशमहिम्ना भावान्तराभावन्यायेनात्मस्वरूपयाथात्म्यज्ञानप्रयुक्तविरोधि-

(८५) विरोधित्रयनिवृत्तिप्रकारं क्रमेणाह—स्वरूप विरोधी इत्यादिवाक्यत्रयेण ।

मू ॥ स्वरूपविरोधि कलिहैयावदु "याने नी ये-न्नुडमैयुं नीये" एन्निरुक्कै। उपायविरोधि कलिहैयावदु - "कलैवाय् तुन्बं कलैयादोलिवाय् कलैहण् मत्तिलेन्" एन्निरुक्कै । प्राप्यविरोधिकलिहैयावदु - "मत्त नङ्गाप-ङ्गल् मात्तु" एन्निरुक्कै॥ ८५ ॥

छा ॥ स्वरूपविरोधिनिवृत्तिर्नाम - "अहमेव त्वं मदीयं च त्वमेव" इति स्थितिः । उपायविरोधिनिवृत्ति-र्नाम - "दुःखं निवर्तय मा वा रक्षकान्तररहितोऽहम्" इति स्थितिः। प्राप्यविरोधिनिवृत्तिर्नाम - "व्यतिरिक्ता-स्मत्कामान्निवर्तय" इति स्थितिः ॥ ८५ ॥

---

त्रयनिवृत्तिर्विवक्षितेति नातिप्रसंग इत्यभिप्रेत्य विरोधित्रयनिवृत्तेरात्मयाथात्म्य-ज्ञानत्रयरूपत्वं वाक्यत्रयेणाहेत्यभिप्रायेणावतारयति - **विरोधित्रयेति** ।

**(स्वरूपस्य विरोधी)**ति - 'अहमपि त्वमेव, आत्मीयमपि त्वमेव' इत्येवं श्रीशठकोपसूरिसूक्त्यनुगृहीता, शेषशेषिभावशरीरशरीरिभावनिबन्धनात्मात्मीयतादात्म्याध्यवसायरूपनिष्ठा; प्रणवोक्तशेषत्वस्वरूपव्यापकीभूतभगवत्प्रीतीच्छाजन्यप्रवृत्तिविरोध्यात्मात्मीयस्वातन्त्र्यबुद्धिनिवृत्तिर्भवितुमर्हतीति हृदयम् । 'अहमेव मदीयः' इति श्रीपराङ्कुशमुनीन्द्रसूक्त्यनुगृहीतात्मात्मीयस्वातन्त्र्याध्यवसायरूपानिष्ठायाः स्वभोगार्थप्रवृत्तिहेतुतया स्वभोगार्थप्रवृत्तिवत् स्वरूपविरोधित्वात्, भावान्तराभावादेतज्ज्ञानप्रतिबन्धकज्ञानस्यैव तज्ज्ञाननिवृत्तिरूपत्वाच्चेति भावः । **(उपायविरोधी)**ति - "दुःखं निवर्तय मा वा" इति श्रीशठकोपसूक्त्यनुगृहीता 'भवदभिमतनित्यकैङ्कर्यविरोधि-

न्या॥ स्वरूपस्य विरोधी - "अहमेव मदीयः" इत्यध्यवसायः ; तन्निवृत्तिस्तु "अहमेव त्वं मदीयं च त्वमेव" इत्युक्तप्रकारेणात्मात्मीयमुभयमपि तस्य प्रकारतया शेषभूतमित्यध्यवसायः। उपायविरोधी - स्वरक्षणे स्वान्वयः, तन्निवृत्तिस्तु "दुःखं निवर्तय मा वा रक्षकान्तररहितोऽहम्" इत्यध्यवसायः। प्राप्यविरोधी - स्वप्रयोजनत्वावगमः; तन्निवृत्तिस्तु "त्वत्सन्तोषातिरिक्तमदाशां निवर्तय" इत्यध्यवसाय इत्यर्थः॥ ८५॥

(८६) एवं स्वरूपोपायपुरुषार्थानां त्रयाणामपि अहङ्कारममकारौ विरोधिनाविति तत्क्रौर्यं, तन्निवृत्तौ सामीचीन्यं चाह—म इतीति।

---

रूपदुःखनिवर्तकस्त्वं भूयाः मा वा, भवद्व्यतिरिक्तविरोधिनिवृत्त्युपायरहितोऽहम्' इति दृढाध्यवसायरूपा निष्ठा - चेतनरक्षणप्रवृत्तसिद्धोपायविरोधिस्वरक्षणान्वयनिवृत्तिर्भवितुमर्हतीत्यर्थः। **(प्राप्यविरोधा)**ति - "त्वत्सन्तोषातिरिक्तमदाशां निवर्तय" इति श्रीगोदासूक्त्यनुगृहीता 'भवदिष्टज्ञानानधीनास्मदिच्छाविषया निवर्तय' इत्यध्यवसायरूपा निष्ठा, भवदभिमतनित्यकैङ्कर्यरूपप्राप्यविरोधिनिवृत्तिर्भवितुमर्हतीत्यर्थः। "उपायविरोधी, प्राप्यविरोधी" इति वाक्ययोरुपायान्तरानर्हत्वरूपाकिञ्चन्याध्यवसायस्योपायान्तरप्रवृत्तिप्रतिबन्धकत्वम्, प्रवृत्त्युद्देश्यतया प्रधानभूतभगवद्भोगे आनुषङ्गिकस्वभोगे भगवदिच्छानधीनेच्छाविषयत्वस्य तादृशेच्छाधीनप्रयत्नस्य तदधीनप्रवृत्तेस्तत्कृतभोग्यस्य चानर्हत्वज्ञानपञ्चकनिवृत्तिप्रार्थनयोस्तत्पञ्चकप्रतिबन्धकत्वं चाभिप्रेतम्॥ ८५॥

**(स्वरूपनाशः)** इत्यत्र नाशः - मरणम्। यथा शरीरस्य पञ्चवृत्तिप्राणवियोगो मरणम्, एवमात्मस्वरूपस्यासङ्कुचितसर्वप्राणिप्राणनहेतु-

मू ॥ 'मः' एन्गै स्वरूपनाशम् । 'नमः' एन्गै स्वरूपोज्जीवनम् ॥ ८६ ॥

छा ॥ 'मः' इति स्वरूपनाशः । 'नमः' इति स्वरूपोज्जीवनम् ॥ ८६ ॥

व्या ॥ "चेतनस्य यदा मम्यं स्वस्मिन्स्वीये च वस्तुनि । मम इत्यक्षरद्वन्द्वं तदा मम्यस्य वाचकम्" इत्युक्तप्रकारेण 'मः' इत्यस्मिन् अहङ्कारममकारयोर्जायमानत्वात्, तस्मिन्नन्वितस्यात्मनः स्वरूपं नश्यति । 'नमः' इति तत्रान्वयः स्वरूपस्योज्जीवनमित्यर्थः ।

---

भूतपरमात्मवियोगो मरणम् । तद्वियोगं च - अद्वेषप्रभृतिनित्यकैङ्कर्यपर्यन्ततत्सम्बन्धाभावः । स्वरूपशब्दः - जीवात्मस्वरूपपर इत्यभिप्रायेणाह—**तस्मिन्नन्वितस्यात्मनः स्वरूपमिति** । नाशशब्दः - तद्धेतुभूतार्थप्रतिपादकपरः । तथा च 'मः' इत्युक्तिः - अद्वेषप्रभृतिनित्यकैङ्कर्यपर्यन्तभगवत्सम्बन्धप्रतिबन्धकषड्विधस्वसम्बन्धप्रतिपादिकेत्यर्थः । "द्व्यक्षरस्तु भवेन्मृत्युः, ममेति द्व्यक्षरो मृत्युः" इति विवरणविवरणीभूतप्रथमतृतीयपदयोः 'मम" इति निर्देशो जीवात्मनः परमात्मवियोगरूपमरणहेत्वर्थप्रतिपादकत्वपरतया, सामान्यविशेषरूपेण विरोधिपरत्वस्य दृढीकृतत्वात्, तयोः पादयोः 'मः' इति षष्ठ्यन्तविवरणरूपत्वाच्चेति भावः । **(उज्जीवनम्)** - उद्धृत्यजीवनम् - उज्जीवनम् । संसारादुद्धृत्यप्राणप्रापणमिति यावत् । यथा शरीरस्य पञ्चवृत्तिप्रापणसम्बन्धो जीवनम्, तथा मुख्यप्राणभूतपरमात्मसम्बन्धो जीवात्मन उज्जीवनम् । तच्च - नित्यकैङ्कर्यपर्यन्तपरमात्मसम्बन्धः । स्वरूपशब्दः - जीवात्मस्वरूपपरः । उज्जीवनशब्दः - तद्धेतुभूतार्थप्रतिपादकपरः । तथा च 'नमः' इत्युक्तिः - नित्यकैङ्कर्यान्तविरोधिषड्विधस्वसम्बन्धनिवृत्तिप्रतिपादिकेत्यर्थः । "त्र्यक्षरं ब्रह्मणः पदम्, न ममेति च शाश्वतम्" इति विवरणविवरणीभूतद्वितीयचतुर्थपादयोः "न ममे"ति निर्देशो जीवात्मनः परमात्मसम्बन्धरूपोज्जीवनहेत्वर्थप्रतिपादकत्व-

"द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्मणः पदम् । ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम्" इति ह्युक्तम् ॥८६॥

(८७) न केवलस्वरूपोपायपुरुषार्थविरोधिनिवृत्तिमात्रं वदति, किन्तु स्वरूपादित्रयञ्च प्रकाशयतीत्याह—इदमिति ।

मू॥ इदुतान् - स्वरूपत्तैयुम्, उपायत्तैयुम्, फलत्तैयुङ्काट्टुम् ॥ ८७ ॥

छा॥ इदंच - स्वरूपम्, उपायम्, फलञ्च दर्शयति ॥ ८७ ॥

(८८) तदुपपादयति—देवेशेत्यादिना वाक्यत्रयेण।

---

परतया सामान्यविशेषरूपेण विरोधिनिवृत्तिपरत्वस्य दृढीकृतत्वात्, तयोः पादयोस्सखण्डनमश्शब्दोपबृंहणरूपत्वाच्चेति भावः ॥ ८६ ॥

प्रथमद्वितीयपदार्थपर्यालोचनया स्वरूपपदार्थपर्यालोचनया च नमश्शब्दार्थविरोधिनिवृत्तौ विरोधिप्रतियोगिभूतेष्टलाभ उक्तः, अथ स्वपदश्रवणमात्रेण स्वस्यैव स्वरूपोपायपुरुषार्थरूपेण विरोधिप्रतियोगीष्टरूपतया तल्लाभ इत्युच्यत इत्यभिप्रायेणावतारयति—**न केवलेति** ।

**(इदम्)**—नमःपदमित्यर्थः । चस्त्ववधारणः । नमःपदमेवेत्यर्थः । स्वरूपशब्देन—प्रणवोक्तशेषत्वव्यापकीभूतशेषवृत्त्यात्मकनमश्शब्दरूपं विरोधिप्रतियोगिभूतमिष्टं विवक्षितम् । उपायफलशब्दाभ्यामुपायफलभूतनमश्शब्दात्मकं तद्विवक्षितम् । **(दर्शयति)** नमश्शब्द एवोच्चारणमात्रेण स्वात्मकस्वरूपादिगोचरश्रावणप्रत्यक्षजनकमिति भावः ॥ ८७ ॥

**(तदुपपादयति)**— नमश्शब्दस्य स्वरूपादिपरत्वे प्रमाणं दर्शयतीत्यर्थः । **( तोलैविल्लिमंगलम् )** - दिव्यदेशनामधेयम् । तं दिव्य-

मू॥ "तोलैविल्लिमङ्गलं तोलुम्" एन्गैयाले स्वरूपं शोल्लित्तु। "वेङ्कटत्तुरैवार्कु नम" एन्गैयाले उपायं शोल्लित्तु। "अन्दितोलुं शोल" एन्गैयाले फलं शोल्लित्तु॥ ८८॥

छा॥ "देवेशस्थलाय नमस्करोति" इत्युक्त्वात्स्वरूपमुक्तम्। "वेङ्कटाचलवासिने नमः" इत्युक्त्वादुपाय उक्तः। "अन्त्यदशायां नम उक्तिः" इत्युक्त्वात्फलमुक्तम्॥ ८८॥

व्या॥ "देवेशस्थलाय नमस्करोति" इति भगवदभिमतदेशपर्यन्तशेषत्वोक्तिसमये नमश्शब्दस्योक्तत्वात् स्वरूपमुक्तमित्यर्थः। (वेङ्कटेत्या)दि - "वेङ्कटाचलवासिने नमः" इति 'श्रीवेङ्कटाचलनाथस्य शेषभूतोऽहं, न मम' इति स्वरक्षणाप्राप्तस्वरूपपारतन्त्र्यस्योक्तत्वात्, अर्थात्स एवोपाय इति सिद्धेरुपाय उक्त इत्यर्थः। (अन्त्यदशायाम्) इत्यादि---"अन्त्यदशायां नम उक्तिः" इति दास्यरसातिशयात्तस्य चरमदशायां वक्तव्या 'नम

---

देशं सेवमानां नायकीमित्यर्थः। "तोलुमिवलै" इति सूक्तिशेषश्रवणात्। तथा च श्रीशठकोपसूरिसूक्त्यनुसारेणानन्यार्हशेषत्वज्ञानदार्ढ्यफलीभूततदीयसेवायाः नमनाक्रियारूपत्वोक्त्याल नमश्शब्दप्रयोगाच्चन्त्तेण नमनक्रियावाचितया शेषवृत्तिरूपाखण्डनमश्शब्द उच्चरित इत्यर्थः। एवमन्यत्रापि तत्तदर्थतात्पर्येण प्रामाणिकप्रयोगदर्शनात्, संस्कृतवेदे उद्भिदादिपदानां

उक्तिः' इति तत्र नमश्शब्दस्योक्तत्वात् फलमुक्तमित्यर्थः ॥ ८८ ॥

(८९) अस्मिन्पदे तदीयशेषत्वस्यार्थादनुसन्धेयत्वमाह—प्राप्तमित्यादिना ।

मू ॥ "उत्तदुमुन्नाडियार्कडुमै" एन्गिरपडिये इट्टुले भागवतशेषत्वमनुसन्धेयम् ॥ ८९ ॥

छा ॥ "प्राप्तं च त्वद्दासदास्यम्" इत्युक्तप्रकारेणात्र भागवतशेषत्वमनुसन्धेयम् ॥ ८९ ॥

---

तात्पर्यशक्तिमात्रेण बोधनत्ववत्, नमश्शब्दस्यापि मीमांसकाभिमततात्पर्यशक्त्या स्वरूपादिप्रतिपादकत्वं युज्यत एवेति भावः ॥ ८८ ॥

(अर्थात्)—तदीयशेषत्वस्य नमश्शब्दव्यंग्यत्वं प्रमाणोक्तिपूर्वकं प्रदर्श्यत इति भावः ।

(प्राप्तम्)—अभिनिवेशेन गृहीतमित्यर्थः । (त्वद्दासदास्यम्) अर्चावतारविषयप्रावण्यातिशयशालिविषये तादृशप्रावण्यातिशयरूपगुणानुभवजनितशेषवृत्तिरित्यर्थः । अकारेण कल्याणगुणपूर्तेरुक्ततया गुणानुभवजनितप्रीतिकारितशेषवृत्तेरेव लुप्तचतुर्थीव्यङ्ग्यतया गुणपूर्तेरर्चावतार एव विद्यमानतया च, "कण्णपुरत्तुरै यम्माने" इति सम्बोधनेनार्चावतारावच्छिन्नभगवद्गुणानुभवजनितप्रीतिकारितशेषवृत्तिमद्भागवतविषये तादृशप्रावण्यातिशयरूपगुणानुभवजनितफलभूतशेषवृत्तिरादरातिशयेन गृहीतार्थ इत्यर्थः । (प्राप्तञ्च) इति चशब्देन - "मत्तुमोर्देय्वमुलदेन्निरुप्पारोडच्चिलेन्" इत्युक्तानुष्ठेयार्थः समुच्चीयते । मूलमन्त्रार्थेषु भगवच्छेषवृत्त्यपेक्षयाऽन्यशेषत्वनिवृत्तेरेव "मरन्दुं पुरन्तोलामान्दरै" इत्यनुगृहीतरीत्यावश्यानुष्ठेयत्वात्, मन्त्रार्थेषु भगवच्छेषत्वान्यशेषत्वनिवृत्तिदार्ढ्यापादकतया भागवतशेषत्वस्यावश्यं ज्ञातव्यत्वाच्च । (इत्युक्तप्रकारेण) - प्रकारश्च अर्थान्तरदार्ढ्यापादकतयादरणीयत्वम् ।

व्या ॥ "त्वदष्टाक्षराभ्यासेन मया प्राप्तं त्वद्दासदास्यम्" इत्युक्तप्रकारेणाहङ्कारममकारनिवृत्तिपूर्वकं भगवच्छेषत्वं यथाऽवस्थितं प्रकाशयत्यस्मिन्नमसि तत्काष्ठाभूतं भागवतशेषत्वमनुसन्धेयमित्यर्थः ॥ ८९ ॥

(९०) एवमर्थादनुसन्धेयं भागवतशेषत्वं पदान्तरेऽपि केचिदनुसन्दधत इत्याह - इदमित्यादिना ।

---

**(अत्र)** - नमश्शब्दे । विरोध्युदयासहस्थलत्वादिति भावेनाह—अहङ्कारममकारेति । **(भागवतशेषत्वम्)** - भगवद्गुणानुभवजनितप्रीतिमद्विषये फलभूतशेषवृत्तिरित्यर्थः । **(अनुसन्धेयम्)** - सदा ज्ञातव्यमिति भावः ॥ ८९ ॥

**(इदम्)** - भागवतशेषत्वम् । 'अकारे' इत्यनन्तरं 'अनुसन्धेयम्' इत्यनुषङ्गः । अस्मिन्पक्षे अस्वरसबीजन्तु—अन्यशेषत्वविरोध्यर्थस्य पूर्वमेव प्रतिपत्तौ, उकारस्याप्रसक्तप्रतिषेधत्वापत्तिरिति । पक्षान्तरास्वरसबीजन्तु - उकार एवान्यशेषत्वनिवृत्तिदार्ढ्यापादकभागवतशेषत्वप्रतीतौ नमश्शब्दे पुनरन्यशेषत्वप्रसक्त्यभावादप्रसक्तप्रतिषेधापत्तिरिति ।

न च नमश्शब्दस्योकारविवरणमात्रत्वात्, न पूर्वोपमर्देनान्यशेषत्वप्रसक्तिरपेक्षितेति वाच्यम्; अन्यशेषत्वनिवृत्तावपि स्वशेषत्वं न निवर्त्यते । शेषत्वसम्मतौ सत्यां भगवद्वैलक्षण्यज्ञानेनान्यशेषत्वनिवृत्तिसम्भवात् । शेषत्वस्यैवासम्मतया स्वातन्त्र्यबुद्धिमतो भगवद्वैलक्षण्यमपि अनादृत्य हिरण्यकशुपुपौण्ड्रकवासुदेवादिन्यायेन स्वशेषत्वस्यैव स्वारसिकत्वाच्चेति विशिष्य स्वशेषत्वस्य प्रसज्यप्रतिषेध इति च वक्तव्यत्वात् । अन्यथा विवरणवैयर्थ्यात् ।

एवम्, उकारेणान्यशेषत्वनिवृत्तावपि स्वशेषत्वं न निवर्तते । अन्यथा मकारोपात्तभोक्तृत्वानुपपत्तेरिति । स्वशेषत्वस्य प्रसक्तौ सत्यां "अहमन्नम्, अहमन्नादः" इतिश्रुत्या भोक्तृत्वस्य भोग्यतातिशयसम्पादकतया भोग्यताशेषत्वात् स्वशेषत्वनिवृत्तिस्सम्भवतीत्यभिप्रायेण नमश्शब्दप्रवृत्तिरिति वक्त

मू॥ इदु - 'अकारत्तिले' एन्रु शोल्लुवर्हल्; 'उकार-त्तिले' एन्रुं शोल्लुवर्हल् ॥ ९० ॥

छा॥ इदं - 'अकारे' इत्याहुः; 'उकारे' इति चाहुः ॥९०॥

व्या ॥ चतुर्थ्यात्मनो भगवच्छेषत्वस्योक्तत्वात्, भगवच्छेषत्वकाष्ठाभूतस्य भागवतशेषत्वस्यानुसन्धानं - 'अकारे' इति केचिदाहुः। अनन्यार्हशेषत्वकाष्ठायास्तदीय-शेषत्वपर्यन्तत्वात्, अनन्यार्हत्वप्रतिपादकोकारे' इति केचिदाहुरित्यर्थः । त्रिष्वप्यर्थात्प्रतिपादकत्वाविशेषेऽपि मालिन्यनिवृत्तिस्थले तदनुसन्धानमुचितमिति भावः ॥ (१) नमश्शब्दे

---

व्यत्वाच्च। अथ स्वशेषत्वविरोध्यर्थस्य फलभूतभागवतशेषत्वस्योकारेण प्रथम-मुपस्थितौ शेषत्वप्रसक्तिरेव न स्यादिति फलभूतस्वशेषत्वनिवृत्तिपरेण नम-श्शब्देनैव फलभूतभागवतशेषत्वसिद्धिरिति युक्तम्। न चैवं साधनभूतभाग-वतशेषत्वस्य साधनभूतान्यशेषत्वनिवृत्तेश्चासिद्धिस्स्यादिति वाच्यम्; रक्षक-वाचिनाकारेण भगवद्रक्षणान्तर्गतसात्त्विकसम्भाषणादिरूपभागवतशेषत्व-स्यापि सिद्धेः स्वरक्षणे स्वान्वयनिषेधपरेण नमश्शब्देन साधनभूतान्यशेषत्व-निवृत्तिसिद्धेश्च । तस्माद्विरोध्युदयासहनमश्शब्द एवाप्रतिहतभागवतशेषत्व-सिद्धिर्युक्तेति दिक् ।

ननु एवमात्मयाथात्म्यरूपशेषत्वं सविभूतिकभगवद्विषयमिति नारा-यणपदेन प्रतिपादनात्, शेषत्वस्य तद्विभूतिविषयत्वं च सिद्धम्। तथा सति तद्विभूतिभूतब्रह्मरुद्रादिसमस्तविषयत्वमपि स्यादिति कथमस्योकारेण तन्निवृ-त्तिरिति चेत्; अत्रोच्यते—विशिष्टविषयशेषत्वप्रयुक्तविशेषणविषयशेषत्वे सिद्धे-ऽपि "ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा । विष्णोर्माया महावर्ते मोहान्धतमसावृताः" "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः" "आब्रह्मस्तम्बपर्यन्तजगदन्तर्व्यव-स्थिताः। प्राणिनः कर्मजनितसंसारवशवर्तिनः" इत्यादिभिः ब्रह्मादिस्तम्ब-

पर्यन्तसमस्तचेतनानां भगवन्मायातिरोहितस्वरूपत्वेन गुणत्रयाभिभूततया कर्मजनितसंसारवशवर्तित्वप्रतिपादनादननुवर्तनीयत्वमुक्तम् । यथा मातापितृप्रभृतिषु गौरव्यविषयेषु शरीराशुचित्वावस्थायां सम्बन्धे वर्तमानेऽपि नमस्काराद्यनर्हत्वम्, तथाऽत्रापि। "अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः" इति कर्मजनितस्वातन्त्र्यादिमयसांसारिकाशुद्धिदशायामनुपास्यत्वमेवोक्तम् । "ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्" इत्युक्तेश्च ।

अथ स्यात् "स आत्मा । अङ्गान्यन्या देवताः" इति देवतान्तराणां भगवच्छरीरत्वेन भार्यायाः भर्तृशरीरवत् तेषामनुवर्तनीयत्वं युक्तम् । अनन्यार्हत्वं चाबाधितमिति, - मैवं । तत्र शरीरप्रधानं शरीरिशेषत्वम् । अत्र सर्वशरीरी अयमात्मा प्रधानतया शेषी । तच्छेषत्वानिबन्धनं तत्सम्बन्धिशेषत्वम् । भर्तृशेषत्वस्य शरीरशेषत्वनिबन्धनत्वेन तदभिमानिजीवपर्यन्तत्वात्, विपरीतो दृष्टान्तः । एतच्छरीराभिमानिविरहितदशायामस्य यथा न शेषभूता, तथा प्रधानभूतेश्वरशेषभूतोऽयमपि तच्छेषत्वप्रतिपत्तिरहितानां देवतान्तराणां न शेषभूतः । अतस्तत्सम्बन्धो येषां ज्ञायमानतयाऽनुवर्तते, तेषां "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति भगवज्ज्ञाननिरस्तसमस्तसांसारिकाशुभत्वेन निरतिशयशुद्धियुक्ततया तदीयत्वोद्देश्यत्वम् । इतरेषां तत्सम्बन्धज्ञानविरहादशुद्धतयाऽनुद्देश्यत्वमेव । "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः" इति भगवत्सदसद्भावज्ञाननिबन्धनात्मसदसद्भावश्रवणाच्च, भगवन्निसृष्टपदकारणपूरुषत्वानिबन्धनेश्वरत्वमदान्धस्वातन्त्र्याभिमानाद्युद्धतदेवतान्तराद्यनुवर्तनमात्माननुरूपमन्यशेषत्वमेव ।

भगवत्पारतन्त्र्यज्ञानजनितभक्तिप्रवृद्धतद्दास्यैकरसलब्धसत्तास्थितिप्रवृत्तिकपरमभागवतविषयशेषत्वं तच्छेषत्वप्रीत्यभिवृद्धिकारितत्वात्, नानन्यार्हत्वेन विरुध्यते । तदिदं प्रमाणशतैः प्रतिपाद्यते—

"तस्य यज्ञवराहस्य विष्णोरमिततेजसः । प्रणामं येऽपि कुर्वन्ति तेषामपि नमो नमः" "विष्णोर्देवादिदेवस्य जगद्धातुः प्रजापतेः । ये प्रणामकृतस्तेभ्यो नमस्तेभ्यः पुनः पुनः" "आराधनानां सर्वेषां विष्णोराराधनं परम् । तस्मात्परतरं प्रोक्तं तदीयाराधनं नृप" "नारदोऽहमनुप्राप्तस्त्वद्दर्शनकुतूहलात् । प्रभवो भगवद्भक्ता मादृशां सततं द्विज" "स्मृतैः सम्भाषितो

वाऽपि पूजितो वा द्विजोत्तम। पुनाति भगवद्भक्तश्चण्डालोऽपि यदृच्छया" "जन्मान्तरसहस्रेषु यस्य स्याद्बुद्धिरीदृशी। दासोहं विष्णुभक्तानामिति सर्वार्थसाधिका॥ स याति विष्णुसायुज्यं पुरुषो नात्र संशयः" "ये तु भागवतानङ्गैः स्पृशन्त्युपविशन्ति च। पश्यन्त्यपि च शृण्वन्ति दासस्तेषां महामुने" "प्रपन्नार्तिहरे विष्णौ भक्तिर्येषां प्रयुज्यते। तेषां दासस्य दासोहमिति मे निश्चिता मतिः" इत्यादिभिः।

ननु च तदीयानां परस्परशेषत्वानुसन्धाने सत्येकं प्रति एकस्यैव युगपच्छेषत्वं शेषित्वं च विरुद्धत्वादनुपपन्नमिति, नैवम्; भगवच्छेषत्वप्रीत्यपर्यवसानवृत्त्या शेषत्वमेव स्वसाधारणरूपतयानुसन्धेयम्, शेषित्वं तु स्वव्यतिरिक्तभागवतगतम्। एवं सर्वात्मनां प्रत्येकानुसन्धानेऽपि व्यवस्थितविषयत्वान्न विरोधः। अत एव नमसा स्वव्यतिरिक्तसर्वभागवतशेषत्वमुक्तम्। अत इदं तदीयशेषत्वमुपपन्नतरम्।

अपि च "मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम्। स्वयमभ्यर्चनं चैव मदर्थे दम्भवर्जनम्॥ मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया। ममानुस्मरणं नित्यं यच्च मां नोपजीवति॥ भक्तिरष्टविधा ह्येषा यस्मिन्म्लेच्छेऽपि वर्तते। स विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पण्डितः॥ न मे पूज्यश्चतुर्वेदी पूजयन्भक्तिवर्जितः। स मे पूज्यः सदा चासौ मद्भक्तः श्वपचोऽपि यः॥ तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम्" "मद्भक्तं श्वपचं वाऽपि निन्दां कुर्वन्ति ये नराः। पद्मकोटिशतेनापि न क्षमामि वसुन्धरे (कदा चन)" "वालाग्रमपि मद्भक्ते कृत्वाऽप्यवमतिं मनाक्। कल्पकोटिशतं प्राप्य नैष मामपि तोषयेत्" मद्भक्तस्य कृतज्ञस्य मोहान्निन्दां करोति यः। स मत्क्रियापरो वाऽपि सर्वज्ञोऽपि नराधमः" "चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान्। अवमत्य पतत्येव रौरवे नरके नरः" "नम इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयान्वितः। तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद" "मद्भक्तजनसम्मर्दपादपांसुविमर्दनात्। चतुस्सागरपर्यन्ता पावना स्याद्वसुन्धरा" "नारायणैकनिष्ठस्य या या चेष्टा तदर्चनम्। यो यो जल्पः स स जपस्तद्ध्यानं यन्निरीक्षणम्॥ तत्पादाम्बवतुलं तीर्थं तदुच्छिष्टं सुपावनम्। तदुक्तिमात्रं मन्त्राग्र्यं तत्स्पृष्टमखिलं शुचि" इत्यादिभिर्भगवद्भक्तैर्भागवतभक्तिपूर्वकत्वम्, भागवतानां जात्यादिनिकर्षेऽपि भक्तिप्रभावाज्जन्मविद्याद्युत्कृष्टपुरुषातिशायितत्वेन सुबहुमन्तव्यत्वम्, स्वसदृशपूज्यत्वम्, एवं रूपभक्तिहीनानां

जन्माद्युत्कर्षेऽपि प्रयोजनान्तरार्थस्वसमाश्रयणमात्रसद्भावेऽपि चाबहुमन्तव्यत्वम्, भागवतनिन्दकानां निग्रहविषयत्वं चेत्यादि भगवतैव प्रतिपादितम् ।

तथा—"न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने" "सुदूरमपि गन्तव्यं यत्र भागवतः स्थितः । प्रयत्नेनापि द्रष्टव्यस्तत्र सन्निहितो हरिः" "वैष्णवो वैष्णवं दृष्ट्वा दण्डवत्प्रणमेद्भुवि । तयोर्मध्यगतो विष्णुः शङ्खचक्रगदाधरः" "शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा । वीक्षते जातिसामान्यात्स याति नरकं नरः" "वैष्णवानां परीवादं यो मोहात्कुरुते नरः । शङ्कुभिस्तत्र नाराचैः कुर्यात्कर्णस्य पूरणम्" "महापातककोटिश्च भ्रूणहत्यायुतं तथा । अम्बुपानात्प्रणश्यन्ति वैष्णवस्य तु मन्दिरे" "अतिपापप्रसक्तोऽपि वैष्णवस्य तु मन्दिरे । भुञ्जीयाद्वैष्णवस्यान्नं तदभावे जलं पिबेत्" "इत्यादिकमपि भागवतानां सर्वप्रकारवैभवं प्रतिपादयति । यामुनाचार्यैश्च "तव दास्यसुखैकसङ्गिनाम्" इत्यादिना तदीयशेषत्वमितरशेषत्वनिवृत्तिसहितं प्रार्थितम् । श्रीमन्निगमान्तदेशिकैश्च "कर्मावलम्बकाः केचित्केचिज्ज्ञानावलम्बकाः । वयं तु हरिदासानां पादरक्षावलम्बकाः" इत्यनुगृहीतम् । भागवतजन्मोत्कर्षापकर्षत्वविचारः श्रीवचनभूषणमीमांसादिषु सुव्यक्त इति नात्र ग्रन्थगौरवभीत्या लिख्यते ।

अस्य मन्त्रस्य पदत्रयप्रतिपादितमनन्यार्हशेषत्वानन्यशरणत्वानन्यभोग्यत्वरूपात्मस्वभावप्रतिसम्बन्धिशेषित्वशरण्यत्वप्राप्यत्वरूप स्वभावत्रयं भगवत इव भागवतानामपि तदीयत्वाकारमाहात्म्यप्रयुक्तं विद्यते । तथा हि "प्रभवो भगवद्भक्ताः" इत्यादिना शेषित्वमवगम्यते । "पुनाति भगवद्भक्तश्चण्डालोऽपि यदृच्छया" "यं यं स्पृशति पाणिभ्यां यं यं पश्यति चक्षुषा । स्थावराण्यपि मुच्यन्ते किं पुनर्बान्धवा जनाः" "पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्" इत्यादिभिर्मोक्षहेतुत्वेन शरण्यत्वमुच्यते । "यत्र पूर्वे साध्याः सन्ति देवाः" "यत्रर्षयः प्रथमजा ये पुराणाः" "तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम्" "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्यादिभिः परमपदवत् तद्वासिनामपि प्राप्यत्वं श्रूयते । तदुक्तं श्रीवत्साङ्कमिश्रैः श्रीवैकुण्ठस्तवे "कैङ्कर्यनित्यनिरतैर्भवदेकभोगैर्नित्यैरनुक्षणनवीनरसार्द्रभावैः । नित्याभिवाञ्छितपरस्परनीचभावैर्मद्दैवतैः परिजनैस्तव सङ्गसीय" इति । अनेन - मोक्षदशायामपि तदीयशेषत्वं विद्यत इत्यवगम्यते । तस्माद्भगव-

(९१) एवं नमसः पूर्वमुत्पन्नायाः प्रतिपत्तेरेतन्नमस्युत्पन्नप्रत्ययस्य वैलक्षण्यमाह—ईश्वर इत्यादिना ।

मू ॥ ईश्वरन् - तनक्केयायिरुक्कुम्; अचित्तु - पिरर्के यायिरुक्कुम्; आत्मा - तनक्कुं पिरर्कुं पोदुवायिरुक्कुमेन्रु मुर्पट्ट निनैवु; अङ्ङन्रिक्के, अचित्तुप्पोले "तनक्कयाह वेनैक्कोल्ल वेणुम्" एन्गिरदु नमस्साल् ॥ ९१ ॥

छा ॥ ईश्वरः - स्वस्मा एव भवति; अचित्परस्मा एव भवति; आत्मा - स्वस्मै परस्मै च समानो भवतीति पूर्वप्रातिपत्तिः; तथाविनाचिद्वत् "स्वस्यैव भवितुं मां स्वीकुरु" इति प्रतिपाद्यते नमसा ॥ ९१ ॥

---

च्छेषत्ववत् तत्प्रयुक्तभागवतशेषत्वमपि सर्वप्रकारविशिष्टमेवेति आत्मस्वरूपयाथात्म्यप्रतिपादकमन्त्रार्थतात्पर्यतया तत्त्वविद्भिरनुसन्धीयत इति सर्वमुपपन्नमिति दिक् ॥ ९० ॥

**(ईश्वरः)** - निरुपाधिकचिदचिन्नियन्ता भगवान् । **(स्वार्थपर एवे)**ति - स्वार्थत्वं नाम - स्वप्रीतीच्छाजन्यप्रवृत्तिविषयत्वम् । अवधारणेन - स्वप्रीतीच्छानधीनस्वातिरिक्तातिशयेच्छाधीनप्रवृत्त्यर्हत्वं व्यावर्त्यते । 'भवती'त्यनेन - स्वातिरिक्ततत्प्रीतिविषयकस्वकीयेच्छाधीनस्वगतिप्रीतिविषयकस्वकीयेच्छाधीनप्रवृत्त्यर्हत्वस्य सर्वकालावच्छेदेन तादृशप्रवृत्तिफलोपहिततया तदर्हत्वलक्षणस्वभावस्याप्रच्युतिर्लभ्यते । तत्र हेतुः—ईश्वर इति । स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिक इत्यर्थः । इदं च केवलस्वार्थत्वं कारणत्वरक्षकत्ववाचिना लुप्तचतुर्थ्यन्तेनाकारेण लभ्यत इति भावः । इदं च जीवस्य परार्थत्वे भगवतोऽपि परार्थत्वं स्यादिति शङ्कापरिहारार्थमुक्तम् । **(परार्थ एवे)**ति - अनेन - स्वातिशयेच्छाधीनपरगतातिशयविषयकपरकीयेच्छा-

व्या ॥ 'स्वरूपं स्वातन्त्र्यं भगवतः" इत्युक्तरीत्या स्वातन्त्र्यैकरूप ईश्वरः - स्वार्थपर एव भवति । चैतन्यराहित्यात् स्वार्थत्वयोग्यतारहितः परतन्त्रस्वरूपोऽचित् - परार्थ एव भवति। चतुर्थीमकारोक्तशेषत्वज्ञातृत्वविशिष्ट आत्मा - ज्ञातृत्वबलायातस्वार्थतायाः, शेषत्व-

---

जन्यप्रवृत्त्यर्हत्वं विवक्षितम् । अवधारणेन - स्वपरगतातिशयविषयकस्वकीयेच्छाधीनप्रवृत्तिविषयार्हत्वं व्यावर्त्यते । 'भवती'ति पूर्ववत् । अत्र हेतुः—अचिदिति । चैतन्याश्रयत्वाभावात्, अचिद्वस्तु, जीवस्येव स्वपरगतातिशयविषयकेच्छावत्त्वस्य स्वपरविषयकप्रयत्नाख्यप्रवृत्तिमत्त्वस्य चानर्हम् । इदं चाकारसमभिव्याहृतमकारेण व्याप्यव्याप्यन्यायेनार्थसिद्धमिति भावः । "मायाशक्तिरुकारेण प्रोच्यते त्रिगुणात्मिका । मकारेण च जीवात्मा ज्ञानानन्दैकलक्षणः" इति वचनरीत्योकारेणायमर्थः सिद्ध इति केचित् । इदं च 'जीवस्य स्वार्थत्वे अचितोऽपि स्वार्थत्वं स्यात्' इति शङ्कापरिहारार्थमुक्तम् । आत्मशब्दः - "परमात्मात्मनोर्योगः" इत्यादौ परमात्मशब्दसमभिव्याहृतात्मशब्दार्थजीवपर इत्यभिप्रायेणाह—(चतुर्थीमकारोक्ते)ति। (स्वस्मै) इत्यनेन - परमात्मवत् स्वगतप्रीतिविषयकस्वकीयेच्छाजन्यस्वकीयप्रवृत्तिविषयत्वं विवक्षितम् । (परस्मै) इत्यनेन - अचिद्वस्तुवत् स्वगतातिशयविषयकपरकीयेच्छानधीनपरगतातिशयविषयकपरकीयेच्छाजन्यपरकीयप्रवृत्तिविषयत्वं विवक्षितम्। (समानः) इत्यनेन - निरुक्तप्रवृत्तिद्वयाविषयत्वरूपसम्बन्धद्वयंसाधारण्यं विवक्षितम् । 'भवती'ति - पूर्ववत् । तत्र हेतुः—आत्मेति । आत्मशब्देन - समभिव्याहृतपरमात्मनः स्फुरणात्, अनिच्छेषत्वं परमात्मशेषत्वं च गम्यते। (पूर्वपदेन) - प्रणवेन । इतिशब्दः - केवलस्वार्थकत्वकेवलपरार्थकत्वस्वपरोभयार्थत्वपरः । अकारसमभिव्याहृतलुप्तचतुर्थ्या कारणत्वरक्षकत्वरूपभगवद्गुणज्ञानजनितभगवदतिशयविषयकस्वकीये - च्छाजन्यभगवद्विषयकप्रवृत्त्यर्हत्वमुखेन तादृशप्रवृत्तिमत्त्वव्यञ्जनात्, मकारेण

व फलस्य ह्टुत्व विवक्षया, तृतीया । तादृशविनियोगापेक्षाफलिक प्रतिपत्ति नमसा जायते इति भाव:)



बलायातपरार्थतायाश्च समानो भवतीति नमसः पूर्वपदेनोत्पन्ना प्रतिपत्तिः । नमसा तु परार्थैकस्वरूपाचिद्वत् "स्वस्यैव भवितुं मां स्वीकुरु" इत्युक्तरीत्या तद्रसैकप्रयोजनस्वविनियोगापेक्षया जायत इत्यर्थः ॥ ९१ ॥

---

ज्ञातृत्वभोक्तृत्वयोः कण्ठतः प्रतिपादनात्, नारायणशब्दसमभिव्याहृतव्यक्तचतुर्थ्या सर्वकल्याणगुणविशिष्टभगवद्विषयकप्रीतिप्रेरितस्वगतातिशयविषयकस्वकीयेच्छाजन्यप्रवृत्तिप्रार्थनाप्रतिपादनात्, तादृशप्रवृत्तिफलोपधानव्यञ्जनाच्च जीवात्मनः - उकारेण स्वार्थत्वनिषेधस्य विभक्तिद्वयमकारपञ्चकाविरोधेनासम्भवात्, प्रणवेन जीवस्य स्वपरोभयार्थत्वं प्रतीतमिति भावः । इत्थं जीवस्य स्वशेषत्वाप्रसक्तिः परिहृता, अथ प्रसक्तस्यापि तस्य प्रतिषेधसम्भवं परिहरति—(नमसा त्वि)ति । (तथाविना) - तत्प्रकारमात्रं विनेत्यर्थः । पूर्वोक्तोभयाकारमात्रं विनेति यावत् । मात्रशब्देन - स्वार्थत्वपरार्थत्वोभयातिरिक्ताकारोऽप्यस्तीति सूच्यते । तृतीयाकारोऽपि पूर्वोक्तपरार्थत्ववदीश्वरव्यावृत्त इति दर्शयति—(परार्थैकस्वरूपाचिद्वदि)ति । तृतीयाकारमाह प्रमाणपूर्वकम्—(स्वस्यैवे)ति । स्वशब्देन - "एनक्के याळ्चेय्येकालत्तुम्" इति श्रीसूक्तौ शेषवृत्तिप्रतिसम्बन्धित्वेनास्मच्छब्देन निर्दिष्टः, चित्तप्रवेशनिरन्तरावस्थानकर्तृत्वेनोपास्थितः, "एनक्के कण्णनै" इति वक्ष्यमाणो भगवान्परामृश्यते । 'स्वस्ये'ति षष्ठ्या भगवद्गतप्रीतिविषयकभगवदीयेच्छासाध्यत्वं विवक्षितम् । अवधारणेन जीवगतातिशयविषयकभगवदीयप्रीतीच्छानधीनत्वं भगवदीयेच्छायां लभ्यते। 'स्वस्यैवे' त्यनेन वाक्येन 'मः न स्याम्, नारायणाय स्याम्' इति तुरीयवाक्यसहिततृतीयवाक्यार्थोऽनूदितः । ततश्च भगवद्गतप्रीतिविषयकभगवदीच्छानधीनस्वगतातिशयेच्छाधीनप्रवृत्त्यर्हत्वतत्फलोपधानयोरभावरूपस्वार्थत्वाभावः, द्वितीयतुरीयवाक्यार्थः । स्वातिशयेच्छानधीनभगवत्प्रीतीच्छाधीनप्रवृत्तिफलोपधानरूपाचिद्वत्पारतन्त्र्यप्रार्थनं तदुभयवाक्यसहिततृतीयवाक्यार्थ इति निष्कर्षः । इयांस्तु विशेषः—निरुक्ते अचिद्वत्पारतन्त्र्ये घटकीभूता स्वातिशयेच्छा भगवत्प्रीतीच्छा चाचिदंशे भगवन्मात्रगता, चिदंशे जीवेश्वरोभयगतेति ॥ ९१ ॥

(९२) 'स्वस्यैव' इत्युक्तमुपपादयति—स चेत्यादिना।

मू॥ अदावदु - भोगदशैयिल् ईश्वरनलिक्कुम्बोदु 'नोक्कवेणुम्' एन्नालियादोलिहै॥ ९२॥

छा॥ स च - भोगदशायामीश्वरो यदा नाशयति तदा 'रक्षणीयम्' इत्यविनाश्य निवृत्तिः॥ ९२॥

व्या॥ तथा च तद्रसैकप्रयोजनविनियोगो नाम—स्वेन सह भोगावसरे भोक्तेश्वरः "दास्यं स्वीकर्तैव प्रविश्य मदात्मानमादरदाश्चर्यरूपः" इत्युक्तरीत्या दास्यस्वीकर्तैव प्रविश्य स्वव्यामोहेन नैच्यविनियोगं कृत्वा

---

(स्वस्यैवे)ति - न केवलं स्वातिशयेच्छाधीनपरगतातिशयेच्छयोपादेयत्वमचिद्वत्पारतन्त्र्यम्, अपि तु परातिशयेच्छां विनाऽपि परप्रीतीच्छयोपादेयत्वं तत्। अन्यथा परनिकर्षावहस्य स्वातिशयावहस्य परकीयव्यापारविषयत्वस्य प्रमाणसिद्धस्य भङ्गप्रसङ्गादित्याशयेन परानिष्टः परनिकर्षावहव्यापारनिषेधोऽप्यत्र विवक्षित इत्यभिप्रायेणोक्तार्थं विशदयतीत्यर्थः।

स्वेष्टानुसारेण स्वप्रीतिसम्पादनलक्षणयथेष्टविनियोगदशा - भोगदशेत्यभिप्रयन्नाह—(स्वेन)ति। उदाहृतपाशुरार्थं सङ्ग्रहेणाह—(दास्यस्वीकर्तैवे)ति। (स्वव्यामोहेन)-शेषरूपधर्मिग्राहकासिद्धशेषवस्तुविषयकभोग्यताबुद्ध्यधीनविशृङ्खलविनियोगाविषयकोत्कटेच्छयेत्यर्थः। 'नाशयती'ति सामर्थ्यात् 'शेषत्वं' इति पूरणीयम्। अत एव 'शेषत्वं नाशयती'त्युक्तम्। परातिशयावहस्वनिकर्षावहव्यापारनाशनवेलायामिति यावत्। (मया रक्षणीयम्) - दासेन मया शेषत्वं रक्षणीयमित्यर्थः। 'ईश्वर-

(क) तद्रसैकप्रयोजनविनियोगश्च।

शेषत्वं नाशयति चेत् मया रक्षणीयमिति नैच्यभावनया तद्भोगमविनाश्य तन्निवृत्तिरिति ॥ ९२ ॥

(९३) एवमनेन नाशने को वा हेतुरित्यत्राह—नाशयितुं हेतुरिति ।

मू ॥ अलिकैक्कु हेतु - कीले शोल्लित्तु; मेलुं शोल्लुम् ॥ ९३ ॥

छा ॥ नाशयितुं हेतुः - प्रागुक्तः; उपरिष्टादपि वक्ष्यते ॥ ९३ ॥

व्या ॥ ईश्वरो व्यामोहेन विनियोजयति, तदाऽयं नैच्यभावनया तद्भोगं नाशयितुं हेतुः - "शेषत्वमेवात्मनः स्वरूपम्" इत्युक्तत्वात् पूर्वं प्रणवे उक्तः । चतुर्थ्यां

---

भोगप्रतिषेधाभावः. नमसा तद्रसैकप्रयोजनविनियोगो नामे 'त्यन्वयः । भावान्तराभावन्यायेन तादृशप्रतिषेधाभावः - नमश्शब्दकरणकाचिद्रत्पारतन्त्र्यप्रार्थनाप्रतिपादनरूपो भवितुमर्हतीत्यर्थः । भगवदिष्टत्वेन ज्ञातभगवन्निकर्षावहस्वातिशयावहप्रवृत्तिमत्त्वाभावरूपस्य भगवदनिष्टत्वेन ज्ञातभगवदतिशयावहस्वनिकर्षावहप्रवृत्तिमत्त्वस्य विरोधितया, भगवत्प्रीतिमात्रोद्देश्यकभगवदुत्कर्षापकर्षावहसाधारणस्वकीयप्रवृत्तिप्रार्थनायास्तन्मूलकाभिलाषस्य च तदलाभत्वोपपत्तेरिति भावः । इत्थं नमश्शब्दस्य भगवन्निकर्षावहव्यापारे भगवदिष्टत्वग्राहिप्रमाणविरोधः परिहृतः ॥ ९२ ॥

**(एवमि)**ति - अथ भगवदिष्टत्वेन ज्ञातस्यापि भगवन्निकर्षावहव्यापारस्य प्रतिषेधे को हेतुः, येन प्रसक्तस्य प्रतिषेधस्योपपादको नमश्शब्दः स्यादिति शङ्कायां तादृशप्रतिषेधप्रसञ्जकं दर्शयतीत्यर्थः ।

किंकरस्वभावेन वक्ष्यमाणत्वात् उपरितनपदेऽपि वक्ष्यत इत्यर्थः ॥ ९३ ॥

(९४) अथैतत्पारतन्त्र्यप्रतिपत्तेर्वैभवं बहुमुखेन वदन्नेतत्पदं निगमयत्युपरिष्टात्—एतज्ज्ञानेत्यादिना ।

मू ॥ इन्निनैवु पिरन्तपोदे कृतकृत्यन् । इन्निनैविल्लादपोदु एल्लादुष्कृतङ्गलुं कृतम् । इन्निनैविले एल्ला सुकृतङ्गलुमुण्डु । इदन्निक्के यिरुक्कप्पण्णुं यज्ञादिहलुं प्रायश्चित्तादिहलुं निष्प्रयोजनङ्गल् । इदु तन्नाले एल्लापापङ्गलुं पोम् । एल्ला फलङ्गलुमुण्डाम् ॥ ९४ ॥

छा ॥ एतज्ज्ञानोत्पत्तिकाले कृतकृत्यः । एतज्ज्ञानाभावे सर्वाणि दुष्कृतानि कृतानि । एतज्ज्ञाने सकलानि सुकृतानि जातानि । एतेन विना क्रियमाणानि यज्ञादीनि प्रायश्चित्तादीनि च निष्प्रयोजनानि । एतेन सर्वाणि पापानि नश्यन्ति, सर्वाणि फलानि च जायन्ते ॥ ९४ ॥

---

पूर्वोक्तभगवद्भोगप्रतिषेधहेतुर्भगवदतिशयेच्छयोपादेयत्वरूपो लुप्तचतुर्थ्या प्रदर्शित इति भावः । अथ व्यक्तचतुर्थ्यपि तत्प्रसञ्जिकेत्याह—(चतुर्थ्यामि)ति । तादृशभगवद्भोगप्रतिषेधहेतुः - भगवदतिशयाधानेच्छया प्रवृत्तिफलोपधानप्रार्थनाप्रतिपादिकया व्यक्तचतुर्थ्याऽपि प्रदर्शित इति भावः ॥ ९३ ॥

इत्थं भागवतशेषत्वपर्यन्तं भगवच्छेषत्वमचिद्वत्पारतन्त्र्यप्रतिपादकनमश्शब्दस्य व्यङ्ग्यार्थ इति स्थितम् । अथ भागवतपर्यन्ताचिद्वत्पारतन्त्र्यरूपमध्यमपदार्थनिष्ठायाः प्रथमतृतीयपदार्थापेक्षया षोढा वैलक्षण्यं वदन् नमश्शब्दार्थं निगमयतीत्यर्थः ।

न्या ॥ (एतज्ज्ञानोत्पत्तिकाले कृतकृत्यः) इति— "स्वस्मा एव मां स्वीकुरु" इत्युक्तैतदत्यन्तपारतन्त्र्य-प्रतिपत्त्युत्पत्तिसमये स्वस्य हितस्य कर्तव्यानि सर्वाणि कृत्वा समापयितवानित्यर्थः ।

(एतज्ज्ञानाभावे सर्वाणि दुष्कृतानि कृतानि) इति - एतत्पारतन्त्र्यप्रतिपत्त्यभावकाले "किं तेन न कृतं पापं चोरणात्मापहारिणा" इत्युक्तप्रकारेण सर्वाणि दुष्कृतानि अनेन कृतानीत्यर्थः ।

(एतज्ज्ञाने सकलानि सुकृतानि जातानि) इति - एतज्ज्ञानोत्पत्तौ सकलसुकृतैरीश्वरस्य जायमानायाः प्रीतेर्वर्धमानत्वात्, एतत्पारतन्त्र्यप्रतिपत्तौ सकलसुकृतानि जातानीत्यर्थः ।

---

(अत्यन्तपारतन्त्र्ये)ति - पारतन्त्र्यं ह्यनेकविधम् । पराधीनफलत्वं, पराधीनकर्तृत्वं, स्वरक्षणोपायप्रवृत्त्यनर्हत्वरूपं च । राजादेः परतन्त्रो भृत्यादिः, स्वकृतकर्मानुगुणफलमात्रे पराधीनः । सोऽपि परतन्त्र इति व्यपदिश्यते । भक्तादेरीश्वरपारतन्त्र्यं तु - पराधीनस्वीयकृतिसाध्यसाधनप्रीतपराधीनफलत्वरूपम् । ततो विलक्षणम् । प्रपन्नस्य च - पराधीनस्वव्यापाराधीनसाधनताकपराधीनफलत्वम् । तदिदमत्यन्तपारतन्त्र्यमुभयविधपारतन्त्र्याद्विलक्षणम् । तथाचात्यन्तपारतन्त्र्यं नाम - स्वरक्षणोपायप्रवृत्त्यनर्हत्वम् । स्वापेक्षितप्रदात्यन्ताभिमतान्यस्वीयोपायप्रवृत्तिकजातीयत्वमेव । प्रयोजनान्तरपरापेक्षयोपासकस्याभिमतत्वात्, तदीयोपायप्रवृत्तेरीश्वरस्याभिमततरत्वात्, बाधवारणाय 'अत्यन्ताभिमतान्ये'ति । सर्वजीवसाधारण्याय 'जातीय'-पदम् । तच्च - भगवद्भिन्नचेतनत्वम् । उपायान्तरप्रवृत्तिप्रपत्त्योर्विद्यमानाभि-

(एतेन विना क्रियमाणानि यज्ञादीनि प्रायश्चित्तादीनि च निष्प्रयोजनानि) इति - एतत्पारतन्त्र्यप्रत्तिपत्त्या विना ईश्वरप्रीणनार्थमनेन क्रियमाणानि यज्ञादीनि, स्वपापविमोचनार्थं क्रियमाणानि कृच्छ्रचान्द्रायणादीनि प्रायश्चित्तानि चेश्वरप्रीतेः, स्वपापविमोचनस्य च हेत्वभावान्निष्प्रयोजनानीत्यर्थः।

(एतेन सर्वाणि पापानि नश्यन्ति, सर्वाणि फलानि च जायन्ते) इति - एतत्पारतन्त्र्यप्रतिपत्त्या ईश्वरेणैतस्मिन्ननुग्रहातिशयस्य क्रियमाणत्वात्तन्निग्रहरूपाणि सकलपापानि नश्यन्ति, "त्वद्दासानां किं कुर्म इत्येव स्थितस्त्वम्" इत्युक्तप्रकारेण 'अस्य किं कुर्म' इत्युपर्युपर्युपकारस्य क्रियमाणत्वात्संसारनिवृत्तिमारभ्य कैङ्कर्यप्राप्तिपर्यन्तसकलफलानि जायन्त इत्यर्थः ॥ ९४ ॥

---

मतितारतम्यविशेषः - चरमश्लोकप्रकरणे स्पष्टः। (हितस्य) - उपायस्येत्यर्थः।

(एतत्पारतन्त्र्यप्रतिपत्ती)ति - यद्यपि भक्तानामीदृशात्यन्तपारतन्त्र्यानुसन्धानवैधुर्येऽपि न "किं तेन न कृतं पापम्" इत्यादि विषयत्वम्, तथाऽपि पारतन्त्र्यप्रतिपत्तिसामान्याभावस्य सकलदुष्कृन्मूलता विवक्षिता। अत्यन्तपारतन्त्र्याप्रतिपत्तौ तु - विशिष्टभगवदभिमत्यजनकत्वरूपानिष्कर्षमात्रमिति बोध्यम्।

(निष्प्रयोजनानि) - "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके तपस्तप्यते, बहूनि वर्षसहस्राणि अन्तवदेवास्य भवति" इति बृहदारण्यकश्रुतिरिह विवक्षिता ॥ ९४ ॥

(९५) इत्थं मध्यमपदार्थ उक्तः; अनन्तरं नारायणपदार्थमाह—नारायण इत्यादिना ।

मू ॥ नारायणनेन्रदु - नारङ्गलुक्कयनमेन्रपडि ॥ ९५

छा ॥ नारायण इति - नाराणामयनमित्यर्थः ॥ ९५

व्या ॥ नारायणपदं - 'नाराणामयनं यः सः - नारायणः' इति, 'नारा अयनं यस्य सः - नारायणः' इति

---

(नारायणपदार्थमाह) - नारायणशब्दार्थं वदन् प्रथमतो विग्रहमाहेत्यर्थः ।

(नाराणामयनं य सः) इत्यर्थानुवादः । ननु अस्य पदस्य षष्ठीसमासत्वे, तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् परायणादिपदवत् नपुंसकत्वसम्भवेन पुंलिङ्गत्वं न सिध्येत्, कथं पुंलिङ्गत्वद्योतनाय समासार्थानुवाद इति चेत्, नैवम् । अस्य संज्ञारूपस्य पदस्य "करणाधिकरणयोश्च" इति संज्ञाविषयल्युड्विधानाद् 'इध्मप्रव्रश्चनः' 'पलाशशातनः' इत्यादिवत्पुंल्लिङ्गत्वसिद्धेः । अयनशब्दार्थस्येश्वरस्योपायत्वात्करणत्वम्, आधारत्वादधिकरणत्वं च विद्यत एव । "अत्र "पूर्वपदात्संज्ञायामगः" इति णत्वम् । ल्युटष्टित्करणसामर्थ्येनायनशब्दोऽधिकरणे त्रिलिङ्ग इति पुंल्लिङ्गत्वं च द्रष्टव्यम्" इति चन्द्रिकायां व्यासयतीश्वरैरुक्तम् । तत्र व्याख्याने चन्द्रिकाप्रकाशे "ननु "नपुंसके भावे क्तः" इति 'नपुंसके' इत्यनुवर्तमाने "ल्युट् च" "करणाधिकरणयोश्च" इति ल्युटो विधानेन 'नारायणम्' इति नपुंसकलिङ्गेन भाव्यमित्यत आह—ल्युट इति । ल्युटष्टित्करणं हि "टिड्ढाणञ्" इत्यादिना ङीबर्थम् । यदि ल्युडन्तस्य क्लीबत्वमेव, तर्हि स्त्रीत्वाभावात्, तन्निमित्तकङीबर्थं टित्करणमनर्थकम् । तेन ज्ञायते लिङ्गान्तरमस्तीति सामान्यतो ज्ञापनात्पुंलिङ्गतोपपत्तिरित्यर्थः । अधिकरण इति प्रकृताभिप्रायेण । अत एव महाभाष्ये "भूवादयो धातवः" इत्यत्र "कोऽसावनुमानो नाम" इति करणे पुंल्लिङ्गप्रयोगः" इत्युक्तम् । तस्मात्पुंल्लिङ्गत्वं सिद्धम् । श्रीमन्निगमान्तदेशिकास्तु "नाराणामयनत्वाच्च नारायण इति स्मृतः"

च तत्पुरुषबहुव्रीहिरूपसमासद्वयसिद्धम्, तत्र तत्पुरुषसमासार्थं प्रथममाह—नाराणामयनमित्यर्थ इति ॥ ९५ ॥

(९६) नाराः क इत्यत्राह—नाराणीति ।

मू ॥ नारङ्गलावन - नित्यवस्तुक्कळिनुडैय तिरळ् ॥ ९६ ॥

छा ॥ नाराणि - नित्यवस्तूनां समूहाः ॥ ९६ ॥

व्या ॥ नारपदं 'नरः' इति, 'नारः' इति, 'नाराः' इत्याकारकत्वेन "रिङ् - क्षये" इति धातोः 'रः' इति उत्पन्नं पदं क्षयिष्णुवस्तुवाचि 'न' इति तन्निषिध्यते, 'नरः' इति क्षयाभाववान्नित्यवस्तूच्यते, समूहार्थे अण्प्रत्ययः, आदिवृद्धिश्च, तेन 'नारः' इति

---

"नारास्त्वति सर्वपुंसां समूहः परिकीर्तितः । गतिरालम्बनं तस्य तेन नारायणः स्मृतः" "नारो नराणां सङ्घातस्तस्याहमयनं गतिः । तेनास्मि मुनिभिर्नित्यं नारायण इतीरितः" "नारशब्देन जीवानां समूहः प्रोच्यते बुधैः । तेषामयनभूतत्वान्नारायण इहोच्यते ॥ तस्मान्नारायणं बन्धुं मातरं पितरं गुरुम् । निवासं शरणं चाहुर्वेदवेदाङ्गपारगाः" इत्यादिषूक्तरीत्या तत्पुरुषसमासत्वेऽपि निरुक्तिबलात् अयनशब्दस्य पुल्लिङ्गत्वम्" इत्याहुः ॥ ९५ ॥

'रिङ् - क्षये' इति धातोः कर्तरि डप्रत्ययस्यानुबन्धलोपं कृत्वा प्रकृतेः "टेः" इति टिलोप कृते 'रीयत इति रः' इति क्षयिष्णुवस्तुवाचिपदस्य, 'न रीयत इति नरः' इति तत्प्रतिषेधकनकारसम्बन्धित्वेन 'नरः' इति रूपसिद्धिरित्यभिप्रायेणाह—(नारपदमि)ति । अनेन प्रकृतेः परत्वमुक्तम् । एतेन "आत्मा शुद्धोऽक्षरः" "अमृताक्षरं हरः" "न जायते म्रियते वा कदाचित्" "कूटस्थोऽक्षर उच्यते" इत्यादिसिद्धमात्मनो ज्ञानस्वरूपस्यापरिणामित्वनित्यत्वादिकं प्रतिपादितं भवति । अपि चास्य नरशब्दस्य "नृ - गतौ" इति गत्यर्थधातुसम्भावनयाऽस्य कर्तरि अच्प्रत्यये गुणे

रूपं भवति, 'नारः' इति 'नित्यवस्तुसमूहः' इत्युच्यते, 'नाराः' इति बहुवचनेन समूहबाहुल्यमुच्यते; अत एव- 'नित्यवस्तूनां समूहाः' इत्युक्तम्। अत्र 'नित्ये'त्युक्तत्वात्, नरशब्दार्थः, '[समूह]नाम्', इत्युक्तत्वात्, नारशब्दार्थः, तेषां 'समूहाः' इत्युक्तत्वात्, बहुवचनार्थश्चोक्तः॥ ९६ ॥

(९७) ते क इत्याह--ते चेति।

मू ॥ अवैयावन——ज्ञानानन्दामलत्वादिहळुम्, ज्ञानशक्त्यादिहळुम्, वात्सल्यसौशील्यादिहळम्, तिरुमेनियुम्, कान्तिसौकुमार्यादिहळुम्, दिव्यभषणङ्गळम्, दिव्यायुधङ्गळुम्, पेरियपिराट्टियार्तुडक्कमान नाय्चिमार्हळुम्, नित्यसूरिहळम्, छत्रचामरादिहळम्, तिरुवाशल्काकुम्मुदलिहळुम्, गणाधिपरुम्, मुक्तरुम्, परमाकाशमुम, प्रकृतियुम्, बद्धात्माक्कळुम्, कालमुम्, महदादिविकारङ्गळुम्, अण्डङ्गळुम्, अण्डत्तुक्कुळ्पट्ट देवादिपदार्थङ्गळुम्॥ ९७ ॥

---

च कृते गन्तृवाचिसम्भवात्, आत्मनः उत्क्रान्तिगत्यागतयोऽपि सूच्यन्ते । एतेनाणुत्वं सूच्यते । "तस्य समूहः" इत्यण्प्रत्ययान्तस्य तस्यादिवृद्धौ 'नारः' इति रूपसम्भवात्, अस्यात्मसमूहवाचित्वं सिद्धमित्याशयेनाह— **(समूहार्थो अणि)**ति ॥ ९६ ॥

यद्यपि "ज्ञानादयो गुणा रूपं लक्ष्मीर्नित्यानपायिनि । भूमिनीलादयो देव्यः शेषाद्या नित्यसूरयः ॥ तद्धाम परमं कालः पुरुषः प्रकृतिस्तथा । महदादिधरान्तानि सप्तचावरणान्यपि ॥ ब्राह्मण्डं तदन्तस्था लोकाश्च स-

छा ॥ ते च - ज्ञानानन्दामलत्वादयः, ज्ञानशक्त्यादयः, वात्सल्यसौशील्यादयः, श्रीविग्रहः, कान्तिसौकुमार्यादयः, दिव्यभूषणानि, दिव्यायुधानि, महामहिषीप्रभृतिदेव्यः, नित्यसूरयः, छत्रचामरादयः, श्रीद्वारपालकाः, गणाधिपाः, मुक्ताः, परमाकाशः, प्रकृतिः, बद्धात्मानः, कालः, महदादिविकाराः, अण्डानि, अण्डान्तर्गतदेवादिपदार्थाश्च ॥ ९७ ॥

व्या ॥ (ज्ञानानन्दामलत्वादयः)—स्वरूपनिरूपकधर्माः। आदिशब्देन - अनन्तत्वमुच्यते। (ज्ञानशक्त्यादयः)- निरूपितस्वरूपविशेषणीभूतसमस्तकल्याणगुणानां प्रधानभूता ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपाष्षड्गुणाः। (वात्सल्यसौशील्यादयः) - तादृशषाड्गुण्यायत्ता

---

चराचराः। एवमण्डान्यनन्तानि तत्सर्वं नार उच्यते" इति भगवच्छास्त्रे ज्ञानादिगुणा एव प्रथमत उक्ताः, तथाऽपि सकलेतरव्यावृत्तब्रह्मस्वरूपे लक्षिते पश्चात् तद्गततया गुणा ज्ञातव्या इति स्वरूपनिरूपकान्धर्मान्प्रथमतो दर्शयतीत्याशयेनाह—(स्वरूपनिरूपकधर्माः) इति। (अनन्तत्वमुच्यते) - "ते च गुणाः सत्यज्ञानानन्दामलत्वानन्तत्वानि" इति भाष्योक्तगुणान्तरस्योपलक्षणम्। अनन्तत्वम् - देशतः कालतो वस्तुतः परिच्छेदराहित्यम्। 'इहेदं नान्यत्रे'ति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः। 'इदमिदानीं नान्यदे'ति परिच्छेदायोग्यत्वं कालापरिच्छेदः। न तु देशकालाभावौ। एवं वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः। किं तु 'इदमिदं न भवती'ति परिच्छेदानर्हत्वमेव। सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेद इति यावत्। अत्र मानम् "सत्यं ज्ञानमनन्तं ब्रह्म" इति। अमलत्वश्रुतिः "निष्कलं निष्क्रियम्" "अपहतपाप्मा" इत्यादिद्रष्टव्या। अत्रादिशब्देन - श्रियः

वात्सल्यसौशील्यस्वामित्वसौलभ्याद्यसङ्ख्येयकल्याण - गुणविशेषाः । (श्रीविग्रहः) - असाधारणदिव्यमंगलविग्रहः । एकवचनान्तो जात्यभिप्रायोऽयम् - नित्यं दिव्यमङ्गलविग्रहम्, इच्छागृहीतदिव्यविग्रहान्तराणि च वदति । अन्यथा समूहोक्तिप्रकरणविरोधात् । इदं मध्यवीधिभट्टार्याभयप्रदराजपुत्रप्रसादितप्रबन्धयोस्सुस्पष्टम् । (कान्तिसौकुमार्यदयः) - तद्विग्रहगुणसौन्दर्यसौगन्ध्यलावण्ययौवनादयः । (दिव्यभूषणानि) आभरणचूर्णिकायां भाष्यकारोक्तरीत्या किरीटादिनूपुरान्तानि तादृश-

---

सङ्ग्रहो बोध्यः । तस्या अपि हि देवतान्तरव्यावर्तनेन स्वरूपनिरूपकत्वम् । "अहन्तया विनाऽहं च निरुपाख्यो न सिध्यति । अहमर्थं विना ह्यन्ता निराधारा न सिध्यति ॥ अहन्तया समायुक्तो ह्यहमर्थः प्रसिध्यति । अहमर्थसमुत्था च सा ह्यन्ता परिकीर्तिता ॥ अन्योन्यस्या विना भावान्योन्येन समन्वयात् । तादात्म्यं विद्धि सम्बन्धं मम नाथस्य चोभयोः" इति । श्रियः भगवत्स्वरूपनिरूपकत्वं द्वयप्रकरणे व्यक्तीभविष्यति । दिव्यमहिषीवर्गोऽग्रे सङ्ग्रहः, नात्र सङ्ग्रहं विरुणद्धि । आकारभेदात् ।

"तवानन्तगुणस्यापि षडेव प्रथमे गुणाः" "प्रकृष्टं विज्ञानं बलमतुलमैश्वर्यमखिलं विमर्यादं वीर्यं वरद परमा शक्तिरपि च । परं तेजश्चेति प्रवरगुणषट्कं - प्रथमजम्" इत्यादिकमभिमेत्य—(प्रधानभूता) इत्युक्तम् । ज्ञानादीनां स्वरूपं चाहिर्बुध्न्यसंहितायामुक्तम्—"अप्राकृतगुणस्पर्शान्निर्गुणः परिगीयते । शृणु नारद षाड्गुण्यं कथ्यमानं मयाऽनघ ॥ अजडं स्वात्मसम्बोधि नित्यं सर्वावगाहनम् । ज्ञानं नाम गुणं प्राहुः प्रथमं गुणाचिन्तकाः ॥ जगत्प्रकृतिभावो यः सा शक्तिः परिकीर्तिता । श्रमहानिस्तु यस्तस्य सततं कुर्वतो जगत् ॥ बलं नाम गुणः सोऽयं कथितो गुणचिन्तकैः । कर्तृत्वं नाम यत्तस्य स्वातन्त्र्यपरिबृंहितम् ॥ ऐश्वर्यं नाम तत्प्रोक्तमृषिभिर्ब्रह्मवादिभिः । तस्योपा-

दिव्यमंगलविग्रहे समर्पणीयानि असंख्येयादिव्याभरणानि। (दिव्यायुधानि)-सौन्दर्यस्य, आश्रितविरोधिनिरसनस्य च हेतुभूताः शङ्खचक्रगदासिशार्ङ्गाद्यसंख्येयायुधविशेषाः। (महामहिषीप्रभृतिदेव्यः)-"श्रीवल्लभ, एवम्भूतभूमीनीलानायक" "देवि त्वामनु नीलया सह महीदेव्यस्सहस्रं तथा" इत्युक्तप्रकारेण प्रधानमहिषी महालक्ष्मीः, तत्समाने भूमिनीले, इतराश्चानेकाः। "लक्ष्मीप्रभृतिमहिषीवर्गाश्च" इति ह्युक्तमभयप्रदराज-

---

दानभावेऽपि विकाररहितो हि सः॥ वीर्यं नाम गुणः सोऽयमच्युतत्वात्पराह्वयः। सहकार्यनपेक्षा या तत्तेजः समुदाहृतम्॥" इति।

वात्सल्यादिगुणस्वरूपं द्वयप्रकरणे व्याख्यातम्। "ज्ञानादयः" इत्यत्रैवैते गुणाः सङ्गृहीता इत्याशयः। "यथा रत्नानि जलधेरसङ्ख्येयानि पुत्रक। तथा गुणा ह्यनल्पस्य त्वसङ्ख्येया महात्मनः" इत्यादिवचनस्मारकः - (असंख्येय)शब्दः। (कल्याणत्वम्) - अनुकूलत्वम्। मार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यादिगुणसङ्ग्रहाय—(गुणविशेष)शब्दः। मार्दवम्-आश्रितविरहासहत्वम्। आर्जवम् - मनोवाक्कायव्यापाराणां मिथः संवादित्वम्। तेन संश्रितेषु विप्रलिप्सानुदयः। स्वसक्तानपेक्षतद्रक्षापरत्वं - सौहार्दम्। जन्माद्यनपेक्षया सर्वैराश्रयणीयत्वं - साम्यम्। स्वार्थनिरपेक्षा परदुःखासहिष्णुता - कारुण्यम्। क्षीरवदुपायभावेऽपि स्वादुत्वं - माधुर्यम्। भक्तानुग्रहवदान्यत्वादेरामूलतो दुरवगाहत्वं - गाम्भीर्यम्। सम्प्रदानलाघवदीयमानगौरवानपेक्षत्वं वा। औदार्यम् - दातृप्रतिग्रहीतृविभागबुद्धिविरहेण 'मास्म कृतमि'ति प्रतिपत्तिमत्त्वम्। आत्मात्मीयं दत्वाऽपि "ऋणं प्रवृद्धमिव मे" इति स्थितिर्वा। आश्रितदोषगोपनं - चातुर्यम्। अकम्पनीयत्वं - स्थैर्यम्। अभग्नप्रतिज्ञत्वं - धैर्यम्। शत्रुमध्ये स्वगृह इव प्रवेशसामर्थ्यं वा।

पुत्रैः। (नित्यसूरयः)-अनन्तगरुडविष्वक्सेनादयोऽसङ्ख्येयास्सूरिजनाः। (छत्रचामरादयः)-कैङ्कर्योपकरणभूतछत्रचामरतालवृन्तभृङ्गारपतद्ग्रहादयः।(श्रीद्वारपालाः)चण्डप्रचण्डभद्रसुभद्रजयविजयादयः। (गणाधिपाः) -कुमुदकुमुदाक्षपुण्डरीकवामनशंकुकर्णसर्पनेत्रसुमुखसुप्रतिष्ठितादयः। (मुक्ताः) - "पारदर्शिनः" इत्युक्तप्रकारेण संसारसागरं तीर्त्वा नित्यसूरिसमानाकारतां प्राप्य निखिलकैङ्कर्यनिरता असंख्येयाश्चेतनाः । (परमाकाशः)— पञ्चोपनिषण्मयं परमपदम् । इदमपि पंचोपनिषण्मयत्वात्समूहात्मकमेवेति न समूहपरिगणनाविरोधः। "पञ्चोपनिषण्मयत्वात्परमपदमपि समूहात्मकमेव" इति हि अभयप्रदराजपुत्रैरनुगृहीतम्।

---

"ज्ञानादयो गुणा रूपम्" इति रूपशब्देन स्वरूपस्याभिधाने तस्य नारशब्दवाच्यत्वासम्भवात्, 'स्वरूपरूपे'ति पृथङ्गिर्देशाच्च विग्रहपरोरूपशब्द-इत्यभिप्रेत्य यथावचनमेकवचनं निर्दिशति—(श्रीविग्रह) इति । "देवं षाड्गुण्यविग्रहम्" इत्यादौ विग्रहस्य पंचशक्तिमयत्वमेव षाड्गुण्यविग्रहत्वोक्तिरिति गुणानन्तरं तत्प्रकाशकविग्रहोपादानम् । (इच्छागृहीते) ति-ऐच्छकरामकृष्णादिशरीराणां कथं नित्यत्वमितिचेत्, उच्यते—कालकृतपरिणामवतामेवानित्यत्वम्, न त्विच्छाकृतपरिणामपाकवताम् । अन्यथा "पतितैः पतमानैः" इत्यादिना नित्यविभूतिस्थपदार्थानामप्यनित्यत्वापत्तेः । अतः "अजायमानः" इत्यादिश्रुतिसमधिगतकर्मवश्यजन्माभाववतः धर्मसंस्थापनेच्छयावतीर्णस्य भगवतः असाधारणदिव्यविग्रहाणां नानित्यत्वशंकागन्धः। अतस्स्वरूपनित्यपदार्थान्तर्भावो रमणीय एव ।

एवं "ज्ञानानन्दामलत्वादयः" इत्यारभ्य, स्वरूपनिरूपकधर्मान् , निरूपितस्वरूपविशेषणकल्याणगुणान्, तादृशगुणानां प्रकाशकं दिव्यमंगलविग्रहम्, विग्रहगुणान्सौन्दर्यादीन्, तादृशसौन्दर्यानुरूपाणि कल्पवृक्ष इव पुष्पाणि दिव्याभरणानि, तादृशाभरणैस्सह विकल्प्यानि दिव्यायुधानि, सर्वमेतत्काननचन्द्रिका यथा न भवेत्, तथा समीपेऽनुभवन्तीर्दिव्यमहिषीः, तन्मिथुनस्य कैंकर्यमाचरतो नित्यसूरीन्, तत्कैंकर्योपकरणभूतछत्रचामारादीन्, तन्मिथुनस्य 'किं वा भविष्यती' ति भयं शंकमानान्द्वारपालान्, मंगलाशासनपरतया परितो नगररक्षकान्गणाधिपान्, निवृत्तसंसारान् तैस्सहैकयोगक्षेमेण कैंकर्यं कुर्वतो मुक्तान्, तत्कैंकर्यवर्धकं परमपदञ्चोक्त्वा, लीलाविभूतिस्थानाहोपरिष्टात् ।

---

(लावण्यम्) - समुदायशोभा । (सौन्दर्यम्)-अवयवशोभा । अतो न पौनरुक्त्यम् । (सौकुमार्यम्) - महाबलत्वेऽपि 'पुष्पहासः' इति नाम दुहानं मार्दवम् । (यौवनम्) - कौमारानन्तर्योपलक्षणीयःस्वभावविशेषः । न तु कौमारानन्तरभाविन्येव दशा तद्यौवनस्यानादित्वात् । देवादिषु च केषांचित् युवत्वेनैवोत्पत्तिदर्शनात् । आदिशब्देन - शुभाश्रयप्रकरणेषूक्तास्सर्वे विग्रहगुणास्संग्रहीताः ।

एवं रूपविग्रहगुणौ च प्रतिपाद्य, विग्रहाश्रितमाभरणवर्गम्, आयुधवर्गं च दर्शयति— (दिव्यभूषणानि, दिव्यायुधानी) ति । (आभरणचूर्णिकायाम्) - शरणागतिगद्ये "स्वोचितविविधविचित्रानन्ताश्चर्य-

(प्रकृतिः)—गुणत्रयात्मकतया समूहात्मिका मूलप्रकृतिः। "गुणत्रयात्मकत्वान्मूलप्रकृतिश्च समूहात्मिके" ति ह्यस्यापि अभयप्रदाराजपुत्रैरुक्तम्। (बद्धात्मानः)—मधूच्छिष्टनिलीनहेमकणवत्प्रकृतौ वर्तमानाः प्रच्युतस्वरूपा आत्मानः। (कालः) - अहोरात्रादिविभागयुक्ततया समूहात्मकोऽचिद्विशेषः। "अहोरात्रादिविभागबहुत्वात्कालश्च समूहात्मकः" इति ह्यस्यापि तैरुक्तम्।

एवं स्वरूपतो नित्यवस्तून्युक्तानि, अथ प्रवाहतो नित्यानाह। स्वरूपेण नित्यत्वं नाम - सतःपदार्थस्योत्पत्तिविनाशात्यन्ताभावः। प्रवाहरूपेण नित्यत्वं नाम-उत्पत्तिविनाशवतः पूर्वकालीननामरूपलिङ्गाद्यनन्यथाभावः।

---

महाविभवानन्तपरिमाणनित्यनिरवद्यनिरतिशयसुगन्धनिरतिशयसुखस्पर्शनिरतिशयौज्वल्यकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकांचीगुणनूपुराद्यपरिमितदिव्यभूषण ' इति। (असंख्येयायुधे)ति - पंचायुधत्वप्रसिद्धिः प्राधान्यादिति भावः।

" अनन्तविहगेशानविष्वक्सेनादयोऽमराः " इति वचनमभिप्रेत्य—(अनन्तगरुडे)त्युक्तम्।

(पतद्ग्रहादयः) - आदिशब्देन - आसनशयनादयस्संग्रहीताः।

(विजयादयः)आदिशब्देन - धातृविधातृप्रभृतयो विवक्षिताः।

(सुप्रातिष्ठितादयः) - शिवरात्रे (४-अध्याये) गणाधिपवर्गो विस्तरेण द्रष्टव्यः।

(महदादिविकाराः) - महत्तत्त्वादि पृथिवीपर्यन्त-त्रयोविंशतितत्त्वानि । (अण्डानि) - एतैर्महदादिभिरारब्धानि "अण्डानां तु सहस्राणां सहस्राण्ययुतानि च" इत्युक्तप्रकारेणासंख्येयानि (अण्डविशेषाः) । (अण्डान्तर्गतदेवादिपदार्थाः) - अण्डान्तर्वर्तीनि देवमनुष्यतिर्यक्स्थावराणि चेत्यर्थः । एवं नार[redacted]पदार्थ उक्तः ॥९७॥

---

(पञ्चोपनिषण्मयम्) - "शक्तयःपंच विख्याताःपचोपनिषदाख्यया । पंचशक्तिमयो देवःपरमात्मा जगत्प्रभुः । परमेष्ठी पुमान्विश्वो निवृत्तिस्सर्व एव हि । पंचैताश्शक्तयः प्रोक्ताः परस्य परमात्मनः" ॥

(सतःपदार्थस्ये) ति - उत्पत्तिविनाशात्यन्ताभावयोगेनास्तित्वस्य सर्वकालवर्तित्वं - स्वरूपेण नित्यत्वमित्यर्थः । यथोक्तं "यद्वृध्यपक्षयविनाशमुखैर्विकारैरेतैरसंस्कृतमनस्तमितास्तिशब्दम्" इति । (उत्पत्तिविनाशवतः) इति - उत्पत्तिविनाशादियुक्तस्यापि वस्तुनः पूर्वपूर्वकल्पसिद्धनामरूपादेः कल्पान्तरेऽप्यनन्यथाभावरूपमैकरूप्यम् - प्रवाहरूपेण नित्यत्वमित्यर्थः । तथा चोक्तम् "यथर्तष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यते तानि तान्येव तथा भावयुगादिषु" "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत्" इति । श्रुतिश्च "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति ।

'अण्डान्तर्गतदेवादिपदार्थाः' इत्यग्रेऽभिधानादिह बद्धशब्दः अनारब्धशरीरप्रकृतिसंसृष्टचेतनपरः - इत्याशयेनाह—मधूच्छिष्टेति ।

(अण्डान्तर्वर्तीनि) - लोकग्रहणमपि घटपदादिसकलोपलक्षणार्थमिति ज्ञापनाय - पदार्थशब्दः । केचित्तु - "बद्धात्मानः" इत्येतद्यथाश्रुतं व्याचक्षाणा देवादिशब्दस्य शरीरविशिष्टपरतां वारयितुं - पदार्थपदमित्याहुः ।

(९८) अथायनपदार्थमाह- अयनमिति ।

मू ॥ अयनमेन्रदु - इवत्तुक्काश्रयमेन्नपडि ॥ ९८ ॥

छा ॥ अयनमिति - एतेषामाश्रय इत्यर्थः ॥ ९८ ॥

व्या॥ अयनपदस्याश्रयवाचित्वात्, 'एतेषामयनम्---इति, एतेषामाश्रय इत्यर्थः' इत्युक्तम् ॥ ९८ ॥

(९९) अथ बहुव्रीहिसमासार्थमाह - किंचेति ।

मू॥ अङ्कनन्रिक्के इवैतन्नै आश्रयमाह उडैयनेन्नुमाम् ॥ ९९ ॥

छा ॥ किंच (एवंविना) 'एते आश्रया यस्ये'ति च भवति ॥ ९९ ॥

व्या॥ न केवलं 'एतेषामाश्रयः' इति तत्पुरुषमात्रम्, किन्तु 'एते आश्रया यस्ये'ति बहुव्रीहिरपीत्यर्थः। 'एतेषामाश्रयः' इत्यत्र गुणानामुक्तत्वेऽपि 'एते आश्रया यस्ये'त्यत्र गुणान्विहायैव नयशब्दार्थो वक्तव्यः । गुणानां व्या

यद्यपि "तत्सर्वं नारमुच्यते" इति नपुंसकनिर्देशात्, 'नरसम्बन्धी'त्यादिव्युत्पत्तिरभिमतेत्येव प्रतीयते, तथाऽपि 'नारपदम्' इत्यस्य 'नारपदबोध्यम्' इत्यर्थ इति नानुपपत्तिः ॥ ९७ ॥

(आत्माश्रयदोषः) - व्याप्यस्य व्यापकतावच्छेदकत्वम्। अत्र निर्गुणस्य प्रमाणाप्रतिपाद्यत्वेनाप्रसिद्ध्या गुणविशिष्टस्यैव व्याप्तिरित्यङ्गीकरणीयतया गुणेषु गुणविशिष्टव्याप्त्यङ्गीकारे व्याप्यानामेव गुणानां व्यापकतावच्छेदकत्वसम्भवात्, आत्माश्रय इति भावः ॥ ९८ ॥

प्यत्वोक्तावात्माश्रयानवस्थादोषप्रसक्तेः। "स्वगुणेषु ईश्व-रव्याप्तौ गुणविशिष्टस्यैव हि व्यापकत्वं वक्तव्यम्, निर्गु-णस्य वस्तुनोऽभावात्। तदा व्याप्यगुणा एव व्यापक-गुणाः, व्यापकगुणा एव व्याप्यगुणास्स्युः। अत आ-त्माश्रयदोषः स्यात्। तदुपरि स्वगुणेषु गुणिनो व्याप-कत्वे तदाश्रयगुणेष्वपि गुणिनो व्यापकत्वं वाच्यम्, तस्य व्यापकस्य गुणेष्वपि गुणिनो व्यापकत्वं वाच्यम्, अतोऽनवस्थाप्रसक्तिः" इत्येतत्सुस्पष्टमभयप्रदराजपुत्रे-णोक्तम्॥ ९९॥

(१००) उक्तसमासद्वयफलितांशमाह—एताभ्या-मिति।

मू॥ इवै यिरण्डालुं फलित्तदु - परत्वसौलभ्यङ्गळ्॥

छा॥ एताभ्यां द्वाभ्यां फलिते - परत्वसौलभ्ये॥

व्या॥ 'नाराणामयनम्, नारा अयनं यस्य' त्यु-भाभ्यां फलितार्थः - स्वव्यतिरिक्तसमस्तवस्त्वाधारत्वरूपं परत्वम्, एवम्महतोऽपि चेतनाचेतनेषु आत्मानं सङ्को-च्य प्रविश्य स्थितिरूपं सौलभ्यञ्चेत्यर्थः॥ १००॥

---

तत्पुरुषपक्षे स्वव्यतिरिक्तसमस्तवस्त्वाधारत्वलाभात् - परत्वम्, बहु-व्रीहिपक्षे सर्वाधिकस्यापि स्वस्य चेतनाचेतनेषु प्रविश्य वर्तनलाभात् - सौल-भ्यमित्यर्थः॥ १००॥

(१०१) प्रकारान्तरेणापि समासद्वयफलितमाह अन्तर्यामित्वमित्यादिना ।

मू। अन्तर्यामित्वमुम्, उपायत्वमुम्, उपेयत्वमुमाह्वुमाम् ॥ १०१ ॥

छा ॥ अन्तर्यामित्वम्, उपायत्वम्, उपेयत्वं च वा ॥

---

बहुव्रीहिबलात् - अन्तर्यामिब्राह्मणादिषूक्तस्य सर्वचेतनाचेतनान्तर्यामित्वस्य लाभः, तत्पुरुषेऽयनशब्दस्य कर्मकरणयोर्व्युत्पत्तिबलात्, उपायोपेयत्वलाभ इति विवेकः ।

अत्रायमर्थोऽनुसन्धेयः—'नाराणामयनमि'ति षष्ठीतत्पुरुषेण सर्वावासत्वप्रतिपादनात् "उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ ॥ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" "तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" "यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता" इत्यादिभिः प्रतिपादितं भगवतोऽपरिच्छिन्नस्वरूपस्य स्वसङ्कल्पाल्पांशेन स्वतः प्रवाहतो नित्यविभूतिद्वयान्तर्भूतस्वव्यतिरिक्तसमस्तवस्तुसमूहानामाधारत्वमत्रगम्यते । अनेन बहिर्व्याप्तिरुक्ता । "स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम्" "एतावानस्य महिमा । अतो ज्यायांश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुषः" "विश्वतः परमं नित्यम्" इति व्याप्याद्विभूतिद्वयाद्व्यापकस्य परमपुरुषस्य नारायणस्य निरतिशयमहत्त्वमुच्यते । 'नारा अयनं यस्ये'ति बहुव्रीहिसमासेन नाराः भगवतो वासस्थानमिति प्रतिपादनात् "यः पृथिव्यां तिष्ठन्...य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" "एष सर्वभूतान्तरात्माऽपहतपाप्मा" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "प्रशासितारं सर्वेषामणीयांसमणीयसाम्" "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" "यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित् । सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः" इत्या-

## व्या॥ बहुव्रीहितत्पुरुषसमासद्वयेन फलितम् - अन्तर्यामिब्राह्मणादिभूक्तरीत्याखिलचेतनाचेतनेषु अन्त-

---

दिभिः प्रतिपादितं सर्वशरीरत्वनिबन्धनं सर्वान्तरात्मत्वमवगम्यते । अनेनान्तर्व्याप्तिरुक्ता । एवं समासद्वयव्युत्पत्तिदर्शितं व्याप्तिद्वयं "अणोरणीयान्महतो महीयान्" "यस्मात्परं नापरमस्ति किं चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" "नारायणमशेषाणामणीयांसमणीयसाम् । समस्तानां गरिष्ठं च भूरादीनां गरीयसाम्" इत्यादिभिरुक्तम् । अत्र ज्यायस्त्वं गरिष्ठत्वं चाणीयस्त्वप्रतिसम्बन्धिमहत्त्वपर्यायतयोच्यते । "महतो महीयान्" इत्यनेनैकार्थ्यात् । इति ।

**(अखिलचेतनाचेतनेषु अन्तरात्मतये)**ति - अन्तर्यामिब्राह्मणादिषु "य आत्मानमन्तरो यमयति" इत्यादिभिर्भगवतः श्रूयमाणान्तरात्मत्वौपयिकान्तर्व्याप्तिश्च - अणुषु च महत्सु च चेतनाचेतनेषु जातेर्व्यक्तिष्विव परिसमाप्यवर्तनरूपा स्थितिरेवेत्युक्तं भवति । अत्र केचित् - भगवतः श्रूयमाणान्तर्बहिर्व्याप्तिः—अणुभूतजीवविभुभूतकालादिव्यतिरिक्तविषया । अणोर्निरवयवत्वेनान्तःप्रदेशस्य, विभोश्च बहिःप्रदेशस्याभावात् । "बहिरन्तश्च तद्व्याप्तिस्तत्र यत्रोभयं भवेत् । विभोरणोश्च न बहिर्नान्तस्तस्मान्न सा तयोः । विभोर्न छिद्रमणुना नाणूनां विभुना च तत् । यथा प्रमाणं संबन्धमात्रमेव तयोर्भवेत्" इति सर्वार्थसिद्धौ अणुविभुव्यतिरिक्तेष्वेवान्तर्बहिर्व्याप्तेस्स्पष्टतया प्रतिपादितत्वेन तयोरन्तर्व्याप्तिस्संबन्धविशेष एव । न च "अणोरणीयान्" इत्यादिनाणुषु विभुषु च व्याप्तेः प्रतिपादनात् तत्राप्यन्तर्व्याप्तिरंगीकरणीयेति वाच्यम् । "अणोरणीयान्" इत्यादिश्रुतेर्भगवत्यणुत्वविभुत्वरूपविरुद्धधर्मसमावेशप्रतिपादने तात्पर्याभावात् । किन्तु तादृशश्रुत्या भगवतस्सर्वव्याप्तत्वस्यैव प्रतिपादितत्वात् । उक्तं च सर्वार्थसिद्धौ "अणोरणीयान्महतो महीयानित्यनुश्रवः । विश्वव्याप्तत्वतात्पर्यान्न मिथोबाधमृच्छति । यदल्पपरिमाणेन पृथूनां ग्रसनं श्रुतम् । अचिन्त्यमिदमित्येके चिन्तनश्रमभीरवः" इति । तथाचाणुषु अणुत्वेन भगवतो नान्तर्व्याप्तिसिद्धिः । नन्वेवं "य आत्मनि तिष्ठन्" इत्यादिश्रुतिसिद्धा जीवेष्वन्तर्व्याप्तिः कथं संगच्छत इति चेत्; इत्थं जीवेष्यन्तर्व्याप्तित्वं नाम - जीवव्यापकत्वम् । तच्च जीवसमानाधिकरणात्यन्ताभावप्रति-

रात्मतयावस्थितस्य नियन्तृत्वेन स्थितिरूपमन्तर्यामित्वं, "इण-गतौ" इति धातोः, "अय-गतौ" इति धातोर्वा सिद्धे अयनपदे करणे व्युत्पत्त्या कर्मणि व्युत्पत्त्या च प्रकाशितमुपायत्वमुपेयत्वं च वेत्यर्थः ।

---

योगित्वरूपम् । विभुपदार्थेष्वपि तथैव व्यापकत्वमेवान्तर्यामित्वम् । अतो नानुपपत्तिः । एवमेवानुगृहीतं श्रीमति रहस्यत्रयसारे मूलमन्त्राधिकारे निगमान्तदेशिकैः । तत्र चाणुषु अणुतरत्वेन व्याप्तेः प्रतिवस्तुस्वरूपसमाप्तिरूपपूर्णत्वस्य चानौचित्यप्रतिपादनात् अणुष्वन्तर्व्याप्तिश्च विलक्षणसंयोग एवेत्याहुः ।

अत्रास्मदाचार्याः—अणुत्वेनाभिमतेषु महत्सु च निरवयवेषु सावयवेषु च परमात्मनोऽन्तर्व्याप्तिर्नाम—नैयायिकाभिमतद्रव्यत्वादिजातेस्स्वाश्रयीभूतेषु परस्परविलक्षणेषु वस्तुषु यथा परिसमाप्यवृत्तित्वं, तथा व्याप्यवृत्तिसंयोगविशेषेण परिसमाप्यवृत्तित्वरूपमेव । तथाचोक्तं न्यायसिद्धांजने तैरेव—"यद्वा, यन्निरवयवं, तन्नैयायिकाभिमतजातिवत्सर्वत्र संयोगिनि संपूर्णं वर्तताम् । तदेतत्सूत्रकारैरेवाशंक्य परिहृतम् "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इत्यादिना । तत्र च दीपः "सकलेतरविसजातीयं श्रुत्यैकसमधिगम्यं सर्वशक्तियुक्तं ब्रह्म निरवयवमपि कार्यं च भवति, अनन्तं च भवतीति परिमितशक्तिवस्तुचोद्यं न तत्र प्रसज्यते । यथा जातिवादिनो जातिरेवामूर्ता, खण्डमुण्डादिष्वत्यन्तविलक्षणेष्वनन्तेष्वपि परिसमाप्यैव वर्तते, न तत्रेतरवस्तुचोद्यमिति जगत्कारणत्वं संभवति" इति । बृहदारण्यकभाष्ये च श्रीरंगरामानुजमुनिभिश्चैवमेवोक्तम् । द्रमिडोपनिषत्सु च । तथा चोदाहृतसांप्रदायिकवचनेषु परमात्मनः प्रतिवस्तुव्याप्यवृत्तिसंयोगविशेषेण परिपूर्णतयावस्थितेःप्रतिपादितत्वेनाणुषु महत्सु चान्तरात्मत्वमव्याहतमेव सिध्यति ।

ननु निरवयवेषु वस्तुष्वन्तःप्रदेशाभावात् कथमन्तःप्रविश्य नियन्तृत्वमिति चेत्, उच्यते । निरवयवत्वेनाभिमतेषु वस्तुषु पृथग्व्यपदेशानर्हातिसूक्ष्मांशभेदसत्त्वस्य चाचार्यैरंगीकृतत्वात्, तत्रापि सत्यशक्तेरीश्वरस्य सुखेनैवान्तःप्रवेशपूर्वकं नियन्तृतया परिसमाप्य स्थितिस्संभवत्येव । तथोक्तं न्यायसिद्धां-

बहुव्रीहियोजनायां योग्यतानुगुणं नारशब्दस्य गुणव्यतिरिक्तवस्तुवाचकत्वमिव, तत्पुरुषयोजनायामयनशब्दस्योपायोपेयवाचित्वे योग्यतानुगुणं नारशब्दस्याचेतनव्यतिरिक्तचेतनवस्तुवाचकत्वमङ्गीकार्यम् ॥

---

जने "यद्वा निरवयवेष्वभिदुरतया पृथ निर्देशायोग्यत्वात्स्वाभाविकांऽशभेदो भवतु। न चैवं सत्येकत्वानेकत्वमवयवित्वं संघातत्वं वा प्रसज्यत इति वाच्यम्। तादृशस्वांशस्य भेदव्यपदेशहेतुत्वाभावात्। एतावदेकानेकत्वं प्रमाणबलाद्दुरपह्नवमभ्युपगतं भवतु" इति। ननु अणुषु परमात्मनोऽन्तर्व्याप्तिर्नाम—तदधिकरणदेशे तेन साकमविनाभावेनावस्थितिरिति वचनं कथं संगच्छत इति चेत्। इत्थं—"एषोऽणुरात्मा चेतसा वेदितव्यः" "वालाग्रशतभागस्य" इत्यादिना जीवात्मनामणुत्वस्य प्रतिपादिततया, अणोरपि सावयवत्वेऽनवस्थाभिया निरवयवत्वांगीकारस्यावश्यकत्वेन तत्रान्तःप्रदेशासम्भवादिति वदतामभिमतावलंबनेनान्तर्व्याप्तिः प्रकारान्तरेण प्रतिपादिता। सिद्धान्ते तु "अणोरणीयान्" "अन्तर्बहिश्च तत्सर्वम्" "अन्तः प्रविष्टश्शास्ता" इत्यादिबहुप्रमाणेषु भगवतस्तत्राप्यन्तःप्रवेशनियमनादेःप्रतिपादितत्वेनाणुष्वपि निरवयवत्वेनाभिमतेषु सूक्ष्माणामंशानां सद्भावस्य चाचार्यैरेवांगीकृतत्वात्, यथाश्रुतान्तर्व्याप्तेस्तत्राङ्गीकारेऽपि न काचिदनुपपत्तिः। न च "अणोरणीयान्" इत्यादिष्वेकस्यैव भगवतोऽणुत्वमहत्वरूपविरुद्धधर्मद्वयस्याङ्गीकारः कथमुपपद्यत इति शङ्कनीयम्; सिद्धान्ते परिमाणस्य संयोगरूपत्वाङ्गीकारेणाणुपदार्थसंयोगस्यैवाणुत्वरूपतया, तस्यैव कालादिविभुपदार्थसंयोगिनि भगवति विद्यमानतया न तयोर्विरोधसम्भवः। जीवात्मन्यणुभूते परमात्मनस्संयोगविशेषणवृत्तित्वमेव "अणोरणीयान्" इति श्रुत्या प्रतिपाद्यते। न तु नैयायिकाभिमतमतिरिक्तं गुणरूपं परिमाणम्। न च विभोःपरमात्मनस्सर्वाधारत्वसम्भवेऽपि तस्य सर्वत्र वृत्तित्वं कथं सम्भवति, तान्त्रिकैर्विभुपदार्थस्य कुत्रापि वृत्तित्वानङ्गीकारादिति वाच्यम्; "आपो नारा इति प्रोक्ताः" "अन्तर्बहिश्चतत्सर्वम्" "वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि। स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः" "सर्वत्रासौ समस्तं च" "यः पृथिव्यां तिष्ठन्…य आत्मनि तिष्ठन्" इत्यादिप्रमाणैर्भगवतस्सर्वत्र वृत्तित्वस्य प्रतिपादिततया विभुरूपस्यापि सर्वशके-

"नारास्त्विति सर्वपुंसां समूहः परिकथ्यते। गतिरालम्बनं तेषां तेन नारायणस्स्मृतः" "नारशब्देन जीवानां समूहः प्रोच्यते बुधैः । तेषामयनभूतत्वान्नारायण इहोच्यते" इत्यादिष्वयमर्थ उक्तः ॥ १०१ ॥

---

भगवतस्तत्तत्पदार्थेषु वृत्तित्वांगीकारे बाधकाभावात् । विभुद्रव्यसंयोगस्य क्रियाजन्यत्वाभावात् कथं तस्य वृत्तिनियामकत्वमिति न वाच्यम्; जन्यसंयोगस्य क्रियाजन्यत्वनियमेऽपि नित्यसंयोगे क्रियाजन्यत्वासम्भवात्तेन सम्बन्धेन विभोस्सर्वत्र वृत्तित्वविरोधाभावात् । संयोगद्वैविध्यं च न्यायसिद्धांजने "स चायं संयोगो द्विविधः—कार्योऽकार्यश्च" इत्युक्तम् । तथा च परमात्मनो जगतश्च संयोगस्यापृथक्सिद्धिसंबन्धरूपतया जातेस्समवायेन यथाव्यक्तिवृत्तित्वम्, तथा परमात्मनोऽपि चेतनाचेतनयोर्वृत्तित्वं निराबाधमेव । अत एव न्यायसिद्धांजने "तिसृषु मूर्तिषु परिपूर्ण एवेश्वरः, प्रजापतिपशुपतिमूर्त्योस्तु प्रमाणबलाज्जीवव्यवहित इति विशेषः । एवमेव सर्वत्रापीश्वरः परिपूर्ण एव"-ति । "परिपूर्ण एवेश्वर इति—पर्याप्त्या वर्तते, न द्वित्वादिवद्व्यासज्येत्यर्थः" इति तस्य च व्याख्या । इत्थं च विचित्रशक्तियुक्तस्य भगवतः "अणोरणीयान्" इत्यादिश्रुतिप्रतिपादितमणुत्वम्—अणुभूतजीवान्तःप्रवेशौपयिकशक्तिमत्त्वं विलक्षणसंयोग एवेति शास्त्रबलादङ्गीकरणीयम् । अनुगृहीतम् "मुग्धशिशुः" इत्यादिना । अतोऽणुत्वविभुत्वयोरेकत्रांगीकारप्रयुक्तबोधस्य नावकाश इति । विस्तरस्त्वस्माभिः पुरुषतत्त्वप्रकाशिकादिषु प्रपंचित इति दिक् ।

उपायोपेयत्वे निरुक्तिं प्रदर्शयति—नारस्त्वितीति । अनेन नारशब्दस्य चेतनवाचकत्वं सिद्धम् । अत्रगतिशब्दः "नयामि परमां गतिम्" इत्यादिवदुपेयवाची । आलंबनशब्दश्च - तदर्थालंबनतयोपायवाची । **(अयनभूतत्वात्)** प्राप्यप्रापकत्वादिति भावः ॥ १०१ ॥

(१०२) कर्मणि व्युत्पत्तिसिद्धप्राप्यत्वस्य सङ्कोचाभावेन सर्वप्रकारविशिष्टत्वात्, बन्धुलाभस्य च प्राप्यत्वाच्चेश्वरस्य सर्वविधबन्धुत्वमप्येतत्पदे कथनप्रकारमाह—मदुपकारक इत्यादिना ।

मू॥ "एम्पिरानेन्दै" एन्गैयाले ईश्वरने एल्लावरवुमुरैयुमेन्रु शोल्लुम् ॥ १०२ ॥

छा॥ "मदुपकारको मत्पिता" इत्युक्तत्वात् 'ईश्वर एव सकलविधबन्धुः' इत्युच्यते ॥ १०२ ॥

व्या॥ नारायणशब्दार्थमनुसन्दधता श्रीपरकालसूरिणा "मदुपकारको मत्पिता मद्बन्धुः मद्राजा मम प्राणाः" इत्युक्तत्वात्, ईश्वर एवैतेषां सर्वविधबन्धुरित्यस्मिन्पदे ह्युच्यत इत्यर्थः ॥ १०२ ॥

(१०३) एवं बन्धुभूतेनैतद्विषये क्रियमाणमुपकारमाह—अस्मदिति ।

मू॥ नाम्पिरर्क्कानवन्रुम्, अवन्नमक्कायिरुक्कुम् ॥

छा॥ अस्मदितरार्थस्थितिसमयेऽपि, सोऽस्मदर्थमेव तिष्ठति ॥ १०३ ॥

---

(सर्वविधबन्धुत्वमि)ति - "माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः" "नारशब्देन जीवानां ... इहोच्यते । तस्मान्नारायणं बन्धुं मातरं पितरं गुरुम् । निवासं शरणं चाहुर्वेदवेदान्तपारगाः" इत्यादिकमिह भाव्यम् ॥ १०२ ॥

व्या ॥ अस्माकं तेन सह सम्बन्धं विहायेतरेषामर्थसाधकतया स्थितिसमयेऽपि, सोऽस्माकमर्थं साधयतीत्यर्थः ॥ १०३ ॥

(१०४) एवमस्माकमन्यपरत्वेन स्थितिसमये सोऽस्मदर्थतया स्थित्वा किं करोतीत्याह—रात्रीत्यादिना ।

मू ॥ इरा मठमूट्टुवारैप्पोले, उळ्ळे पादिकिडन्दु सत्तैये पिडित्तु नोक्किक्कोण्डुपोरुम् ॥ १०४ ॥

छा ॥ रात्रिमठभोजयितार इव, अन्तरलक्ष्यत्वेन स्थितस्सत्तां रक्षति ॥ १०४ ॥

व्या ॥ साक्षात्समीप आगत्यापेक्षितं गृहीत्वा जीवनमलभमानान् दुर्मानिनः क्षुधितान् त्यक्तुमशक्यत्वात्, इतरे यथा न जानन्ति, तथा रात्रौ मठे भोजयितार इव, स्वविषये 'शिरो न नमाम' इति स्वातन्त्र्यमवलम्ब्य चरतां चेतनानामन्तरविदितोऽन्तरात्मतया स्थित्वा सत्तामारभ्य रक्षतीत्यर्थः ।

एवमेतन्नारायणपदेन कैंकर्यप्रतिसम्बन्धीश्वरस्य प्रकारमुक्तवान् ॥ १०४ ॥

(१०५) अथैतद्विभक्त्यंशेन कैंकर्यप्रार्थनाप्राकारमाह—आयेत्यादिना ।

---

"षष्ठपंचदशाद्वर्णात्केवलव्यंजनीकृतात् । उत्तरो मन्त्रशेषस्तु शक्तिरित्यभिधीयते" इति मन्त्रोद्धारणप्रक्रियया 'आये'ति निर्देशः । अनेनासाधुत्वशंका दूरोत्सारिता । प्रणवं विना मूलमन्त्रस्थवर्णमध्ये षष्ठात् कादिमातृकासु

मू ॥ 'आय' एन्गिरवित्ताल्—"शेन्राल्कुडैयाम्" एन्गिरपडिये एल्ला वडिमैहळुं शेय्यवेणुमेन्रपेक्षिक्किरदु ॥ १०५ ॥

छा ॥ 'आय' इत्यनेन "गमने छत्रं भवति" इत्युक्तरीत्या सकलविधकैंकर्यं कर्तव्यमित्यपेक्षते ॥ १०५ ॥

व्या ॥ 'आये'त्यनया चतुर्थ्या "गमने छत्रं भवति" इति गाथोक्तप्रकारेणानन्तसूरिवत्, सर्वविधकैंकर्यं च कर्तव्यमित्यपेक्षत इत्यर्थः ॥ १०५ ॥

(१०६) नमसा क्वचिदपि स्वार्थतयादरणयोग्यताभावरूपात्यन्तपारतन्त्र्योक्तेः, कैंकर्ये स्वस्यादरापेक्षणं न सम्भवतीति वदतां प्रश्नमनुवदति—नमसेति ।

मू ॥ नमस्साले तन्नोडुरविल्लैयेन्रुवैत्त कैंकर्यत्तैं प्रार्थिक्कक्कूडुमो एन्निल् ॥ १०६ ॥

छा ॥ नमसा स्वेन सह संबन्धो नास्तीत्युक्त्वात्कथं कैंकर्यप्रार्थना संभवतीति चेत् ॥ १०६ ॥

---

पंचदशात् स्वरंविनाकृतात् वर्णात्, उत्तरो मन्त्रशेषः - 'अये'त्यंशः, शक्तिरित्यभिधीयत इत्यर्थः । द्वये, षष्ठवर्णात् णकारादित्यर्थः । कादिक्रमगणनायां पञ्चदशोऽपि णकारः । द्वये षष्ठवर्णस्सन् कादिषु पंचदशस्सन् यो वर्णोऽस्मिन् मन्त्रे विद्यते, केवलव्यंजनीकृतात् - अज्विनाकृतात् केवलहल्रूपात् तस्माद्वर्णात्, उत्तरः - 'आय' इत्ययं मन्त्रशेषः शक्तिः इति केचित् ॥ १०५ ॥

(१०७) तस्योत्तरमाह—सोपानीभूयेत्यादिना ।

मू॥ "पडियाय् किडन्दुन्पवळवाय् काण्पेने" एन्गिरपडिये कैंकर्यप्रार्थनै वन्देरियन्नु, स्वरूपप्रयुक्तम् ॥ नि

छा ॥ "सोपानीभूय त्वत्प्रवालाधरं पश्यामि" इत्युक्तप्रकारेण कैंकर्यप्रार्थनागन्तुकी न भवति, अपि तु स्वरूपप्रयुक्ता ॥ १०७ ॥

नि व्या ॥ "सोपानं भूत्वा स्थित्वा त्वत्प्रवालाधरं पश्यामि," इत्यत्यन्तपारतन्त्र्येण सह कैंकर्यप्रार्थनाया उक्तत्वात्, कैंकर्यप्रार्थना स्वभोक्तृत्वरूपाहङ्काररूपा सती आगन्तुकी न भवति, शेष्यतिशयवर्धनातिरिक्ताकारान्तररहितस्वरूपमवलम्ब्यागतेत्यर्थः ॥ १०७ ॥

(१०८) उक्त हेतूकृत्य चतुर्थ्याः कैंकर्यप्रार्थनाप्रकाशकत्वमुच्यते—तस्मादित्यादिना ।

मू॥ आहैयाल् "वडुविला अडिमै शेय्यवेण्डुनाम्" एन्गिरप्रार्थनैयै क्काट्टुहिरदु ॥ १०८ ॥

छा ॥ तस्मात् "विच्छेदरहितं कैंकर्यं कर्तुं प्रार्थयामहे वयम्" इत्युक्तप्रार्थनां दर्शयति ॥ १०८ ॥

व्या॥ कैंकर्यप्रार्थनाया आगन्तुकत्वाभावेन स्वरूपप्रयुक्तत्वात्, "विच्छेदरहितं कैंकर्यं कर्तुं प्रार्थयामाहे वयम्" इति प्रार्थनामियं चतुर्थी प्रकाशयतीत्यर्थः ॥१०८

(१०९) इतः परमेतत्कैङ्कर्यप्रार्थनां क्षणमप्यविच्छिन्नां कर्तुं निद्रानं प्राप्य रुचिमतां प्रकारमाह—नेत्राभ्यामित्यादिना ।

मू ॥ "कण्णारक्कण्डु कलिवदोर्क्तलुत्ताक्कुं मुण्डोकण्गळ् तुञ्जुदल्" एन्नुमाप्पोले काण्पदर्कु मुन्बुउरक्कमिल्लै, कण्डाल् 'सदा पश्यन्ति' याहैयाले उरक्कमिल्लै ॥ १०९ ॥

छा ॥ "नेत्राभ्यां सम्यक् दृष्ट्वा गतं शोचतां नेत्रयोर्निद्रास्ति किम्" इतिवत्, दर्शनात्पूर्वं निद्रा नास्ति, दर्शने "सदा पश्यन्ति" इत्युक्तत्वात्, निद्रा नास्ति ॥ १०९ ॥

व्या ॥ "नित्यसूरिसमूहैर्निरन्तरमनुभूयमानं सर्वेश्वरं नेत्राभ्यां परिपूर्णतया दृष्ट्वा दर्शनं विना स्थातुमशक्यरूपभक्तौ स्थितानां नेत्रयोर्निद्रा वर्तते किम्" इत्युक्तिवत्, विषयदर्शनात्पूर्वं ज्ञानसंकोचरूपनिद्रा नास्ति, दर्शनकाले "सदा पश्यन्ति" इत्युक्तप्रकारेण सदानुभवस्य क्रियमाणत्वात्, निद्रा नास्तीत्यर्थः ॥ १०९ ॥

(११०) अन्येनापि हेतुना एतन्निद्राभावमाह—व्यर्थेत्यादिना ॥

मू॥ "पळुदे पलपहलुं पोयिन" एन्नु इळन्दनाळैक्कु क्कूप्पिड्डहिरवनुक्कुरङ्गविराहिल्लै ॥ ११० ॥

छा ॥ "व्यर्था बहुदिवसा गताः" इति गतदिवसानुद्घोषितवतां निद्रावकाशो नास्ति ॥ ११० ॥

व्या ॥ "रक्तनयनस्य जलधिवर्णस्य चरणौ नागशयनोपरि दृष्ट्वा प्रणतोऽस्मि बहुदिनानि व्यर्थगतानीति रुदितवानस्मि" इति विषयं दृष्ट्वानुभवानन्तरं 'एवमनुभवोपयुक्तः सर्वोऽपि कालो व्यर्थ एव गतः' इति गतदिनानि स्मृत्वा क्लेशेनाक्रोशं कुर्वतामुपरितनकाले निद्राहेतुर्नास्तीत्यर्थः ॥ ११० ॥

(१११) इतश्चैतद्विषये ज्ञानवतां विस्मरणहेतुर्नास्तीत्यमुमर्थं घटयति—तदानीमित्यादिना ।

मू ॥ "अन्रु नान्पिरन्दिलेन् पिरन्दपिन्मरन्दिलेन्" एन्नानिन्नार्हळिरे ॥ १११ ॥

छा ॥ "तदानीमहं न जातो जन्मानन्तरं न विस्मृतवान्" इत्युक्तवन्तः खलु ॥ १११ ॥

व्या ॥ "तस्य मत्प्राप्त्यर्थं श्रीदिव्यदेशे स्थितिरूपं वसनं शयनञ्चैवं सति तस्मिन्काले ज्ञानलाभरूपजन्मवानहं न जातः, तादृशजन्मानन्तरं कदाचिदपि न विस्मृतवान्" इत्युक्तवन्तः खल्वित्यर्थः ।

एवं प्राप्यवैलक्षण्यज्ञानोत्पत्तिमतां प्रकारस्यैवम्भूतत्वात्, इयं कैङ्कर्यप्रार्थना विच्छेदमन्तरा गच्छतीति तात्पर्यम् ॥ १११ ॥

(११२) इतः परमस्य कैंकर्यस्य देशकालादिनियमाभावमाह—इदं कैंकर्यमित्यादिना ॥

मू ॥ इव्वडिमैदान् "ओऴिविल्कालमेल्लामुडनाय्मन्नि" एन्गिऱपडिये सर्वदेशसर्वकालसर्वावस्थैहळिलुमनुवर्तिक्कुम् ॥ ११२ ॥

छा ॥ इदं कैंकर्यं "नाशरहितकालेषु सर्वेषु सहैव स्थित्वा" इत्युक्तप्रकारेण सर्वदेशसर्वकालसर्वावस्थास्वनुवर्तते ॥ ११२ ॥

---

(सर्वदेशेष्वि)ति - "सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत । किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किङ्करः" इत्यादिकमपीहानुसन्धेयम् । यद्यपि वचनबलासर्वकालादिविशिष्टत्वमनुसन्धेयम्, तथाऽपि तत्सूचकमत्र किमिति चेत्, उच्यते । अस्य नारायणपदस्य नारशब्देन नित्यपदार्थसमूहोक्त्या भोक्तृभोग्यस्वरूपाणां नित्यत्वसूचनेन भोगस्य सार्वकालिकत्वं सिद्धम् । आविर्भूतस्वरूपस्य चेतनस्य "सर्वतः पाणिपादं तत्" इत्यादिवदपरिच्छिन्नत्वात्, भोग्यस्यापरिच्छिन्नस्वरूपरूपगुणविभूतिप्रतिपादनाच्च सार्वत्रिकत्वम् । शरीरात्मभावसम्बन्धेन पृथक्सिद्ध्यनर्हत्वात् सर्वावस्थत्वम् । तत्सम्बन्धप्रयुक्तसर्वप्रकारशेषत्वेन सर्वविधत्वम् । अतस्सर्वकालशब्देन "न च पुनरावर्तते" "किंकरा ममते नित्यं भवन्ति निरुपद्रवाः" "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इत्यादिप्रमाणप्रतिपन्नं भोगस्य यावदात्मभावित्वमुच्यते । एतेन पुनरावृत्तिलक्षणादैश्वर्यभोगाद्व्यावृत्तिरुक्ता । सर्वदेशशब्देन—"सर्वेषु लोकेषु कामचारो भवति" "कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिप्रकारेण दिव्यवेश्मदिव्यमण्टपदिव्योद्यानादिभोगस्थानदिव्यनगरदिव्यजनपददिव्यलोकामोदप्रमोदसम्मोदादिव्यूहस्थानलीलाविभूत्यन्तर्गतविभवार्चावतारस्थानेष्वशेषेषु देशेष्वपरिच्छिन्नस्वरूपरूपगुणविभवाद्यनुभवादिरूपस्य भोगस्यैकदैव सिद्धत्वेन देशतःपरिच्छेदराहित्यमुच्यते ।

व्या ॥ अस्यात्मनः स्वरूपानुरूपपुरुषार्थरूपमिदं कैंकर्यं "नाशरहितेषु सर्वेषु कालेषु सहैव सर्वावस्थासु वियोगमन्तरा स्थित्वा" इत्युक्तप्रकारेण सर्वदेशेषु सर्वकालेषु सर्वावस्थासु चानुवर्तत इत्यर्थः ॥ ११२ ॥

(११३) भार्याया मंगलसूत्रधारणं यथा भर्तुरनन्यार्हत्वं दर्शयति, एवं श्रीमन्त्रधारणं चेतनानां भगवदनन्यार्हत्वप्रकाशकमित्यर्थज्ञापनायामुं मन्त्रं मंगलसूत्रत्वेन निरूपयति—अष्टसूत्रमिति ।

---

एतेन - आविर्भूतस्वरूपत्वेनापरिच्छिन्नमाहात्म्ये सत्यपि "एषोऽणुरात्मा" इति स्वरूपस्याणुत्वेन केवलात्मानुभवाद्व्यावृत्तिरुक्ता । अस्य कैवल्यस्य नित्यत्वेनाल्पास्थिरत्वादिदोषदूषितैश्वर्यादत्यन्तवैलक्षण्येऽपि अनन्तगुणविभूतिविशिष्टपरमात्मानुभवानन्दापेक्षयाऽत्यल्पतरत्वं द्रमिडोपनिषदाचार्यैरुक्तञ्च । सर्वावस्थशब्देन - नित्याग्निहोत्रादिवत्कालान्तरव्यवधानहीनम्, जगद्व्यापारवर्जिततया "नोपजनं स्मरन्निदं शरीरम्" इति संसारस्मृत्यनवकाशरहितम्, भोगमात्रसाम्यमुक्तं भोगनैरन्तर्यमुच्यते । एतेन-अपरिच्छिन्नस्वरूपरूपगुणविभवानुभवजनितनिरतिशयानन्दयोगेऽपि लीलाविभूतिनिर्वहणाय "स एकाकी न रमेत" इति संहृतिसमयसिद्धलीलारसवैधुर्यम्, सृष्टस्य जगतस्तापत्रयाभिभवदर्शनप्रयुक्तदुःखम्, "क्षिपामि" "न क्षमामि" इति स्वस्वकीयापराधनिमित्तमनःकालुष्यं चाहार्यरूपमनुवर्तत इति तदानन्दस्यावस्थान्तरभाक्त्वप्रतीतिसम्भवात्, तद्भोगव्यावृत्तिरुक्ता । सर्वविधशब्देन-अनेकविग्रहपरिग्रहेणानन्तवैनतेयादिसूरिजनवत्, "अहं सर्वं करिष्यामि" इति सकलकैङ्कर्यकरणप्रयुक्तभोगवैविध्यमुच्यते । एतेन - सन्तोषैकसमासादितसारस्ययुक्तलक्ष्मीभोगाद्व्यावृत्तिरुक्ता । किं च मिथुनशेषभूतस्य चेतनस्य मिथुनैकभोगतया भगवदेकशेषत्वप्रयुक्ततदेकभोगलक्ष्मीभोगादत्यन्तव्यावृत्तो भोगः ॥११२॥

(भार्यायाः) इति—"स एव वासुदेवो हि साक्षात्पुरुष उच्यते । स्त्रीप्रायमितरत्सर्वं जगत्स्थावरजंगमम्" "स्वामित्वात्मत्वशेषित्वपुंस्त्वाद्याः

मू ॥ एट्टिलैयाय्, मून्नुशरडायिरुप्पदोरु मंगल-सूत्रंपोले तिरुमन्त्रम् ॥ ११३ ॥

छा ॥ अष्टसूत्रं त्रिभागं मंगलसूत्रमिव श्रीमन्त्रः ॥

व्या ॥ षोडशसूत्रं विभागद्वयं लौकिकं मङ्गलसूत्र-मिव न भवति, अष्टसूत्रं विभागत्रयं मंगलसूत्रमिव, अ-ष्टाक्षरः, त्रिपदश्चायं श्रीमन्त्र इत्यर्थः ॥ ११३ ॥

(११४) एवं निरूप्योक्तेनानेन को वाऽर्थ उच्यत इत्यत आह—अनेनेति ।

मू ॥ इत्ताल 'ईश्वरनात्माक्कळुक्कु पतियाय् निन्नु रक्षिक्कुम्' एन्गिरदु ॥ ११४ ॥

छा ॥ अनेन - 'ईश्वर आत्मनां पतिः सन् रक्षकः' इत्युच्यते ॥ ११४ ॥

व्या॥एवं मंगलसूत्रत्वेनोक्तेनानेन 'ईश्वरोऽनेनान्वि-तानामात्मनां पतिः सन् रक्षकः' इत्युच्यत इत्यर्थः ॥११४

(११५) इतः परमनेन मन्त्रेण प्रतिपादितमर्थं संग्रहेणोक्त्वाऽमुं निगमयति—एवं श्रीमन्त्रेणेति ।

---

स्वामिनो गुणाः । स्वत्वकायत्वशेषत्वस्त्रीत्वाद्या ह्यात्मनो गुणाः" इत्यादिषु भगवतः पुंस्त्वस्य, स्त्रीत्वस्यचात्मनः प्रतिपादितत्वेन "आच्छाद्य नूतनं वासो वरो मांगल्यसूत्रकम् । सुवर्णमणिसंयुक्तं बध्नीयात्कन्यकागले" इति रीत्या लौकिकमंगलधारणवदस्य चेतनस्यानन्यार्हत्वसूचनायात्रोक्तार्थनिष्ठालाभ एव तद्धारणमिति भावः ॥ मंगलधारणानन्तरम्भूषणधारणं श्रीवचनभूषण उच्यते इति भावः ॥ ११३ ॥

मू ॥ आह, तिरुमन्त्रत्ताल् - 'एम्पेरुमानुक्के उरियेनान नान्, एनक्कुरियनन्निक्के योळियवेणुम्, सर्वशेषियान नारायणनुक्के यॆल्लावडिमैहळुं शेय्यप्पेरुवेनाहवेणुम्' एन्नदायित्तु ॥ ११५ ॥

छा ॥ एवं, श्रीमन्त्रेण - 'अस्मत्स्वामिन एव दासभूतोऽहम्, यथा मम दासो न भूयासम्, तथा भवितव्यम्, सर्वशेषिणो नारायणस्यैव सकलविधकैंकर्यं कर्तुं भाग्यवान्भूयासम्' इत्युक्तमासीत् ॥ ११५ ॥

इति
श्रीमल्लोकाचार्यानुगृहीतमुमुक्षुप्पडिप्रबन्धे
श्रीमन्त्रार्थप्रकरणं समाप्तम् ॥
॥ श्रीमते रामानुजाय नमः ॥

---

व्या ॥ (एवमि)ति - पूर्वं विस्तरेणोक्तान्सर्वानर्थान् क्रोडीकृत्याहेति ज्ञापनाय। (अस्मत्स्वामिन एव दासभूतोऽहम्) - अत्र 'अस्मत्स्वामिनः' इति चतुर्थ्यन्तप्रथमाक्षरार्थस्योक्तत्वात्, अवधारणेन - मध्यमाक्षरार्थस्योक्तत्वात्, 'दासभूतोऽहम्' इति तृतीयाक्षरार्थस्योक्तत्वाच्च प्रथमपदार्थः संगृहीतः। (यथा मम दासो न भूयासम्) - अत्र 'मम दासः' इति षष्ठ्यन्तमकारार्थस्य 'न भूयासम्' इति अत्र नेति नकारार्थस्य, 'भूयासम्' इत्ययमर्थश्चेतनस्य प्रार्थनीय इत्यर्थस्य प्रतिपादितत्वात्, मध्यमपदार्थः

संगृहीतः । (सर्वशेषिणो नारायणस्यैव सकलविधकैंकर्यं कर्तुं भाग्यवान्भूयासम्) - अत्र 'सर्वशेषिणो नारायणस्यैव' इति कैंकर्यप्रतिसम्बन्धिनः, कैंकर्यप्रार्थनाप्रकाशकचतुर्थ्याः, 'सकलविधकैंकर्यं कर्तुं भाग्यवान्भूयासम्' इति कैंकर्यप्रार्थनाप्रकारस्य चोक्तत्वात्; तृतीयपदार्थः संगृहीतः। विस्तरेणोक्तस्य पुनः संग्रहेण कथनं - अस्य श्रीमन्त्रार्थस्य सर्वानुसन्धानार्थम् ।

अतः सर्वेषामयमर्थः सदाऽनुसन्धेयः ॥ ११५ ॥

इति

श्रीसौम्यजामातृयोगीन्द्रप्रसादितमुमुक्षुप्पडिप्रबन्धव्याख्याने श्रीमन्त्रार्थप्रकरणं समाप्तम् ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमल्लोकगुरवे नमः ॥

---

इति

श्रीवाधूलकुलतिलकमहाचार्यकटाक्षपात्रभूतश्रीशैललक्ष्मणमुनीन्द्रचरणसमाश्रितबालधन्विरामानुजगुरुवरानिर्हेतुकप्रसादलब्धसर्वार्थेन साकेतरामानुजदासवर्येण विलिखितायां मन्त्रार्थदीपिकायां श्रीमन्त्रार्थप्रकरणं समाप्तम् ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमल्लोकगुरवे नमः ॥

॥ श्रीमद्वरवरमुनये नमः ॥

॥ श्रीशैललक्ष्मणमुनये नमः ॥

श्रीमल्लोकाचार्यप्रणीत.

# मुमुक्षुप्पडिरहस्यग्रन्थे द्वयप्रकरणम्।

मन्त्रार्थदीपिकासहितश्रीमद्वरवरमुनीन्द्रप्रसा-

दितव्याख्यासहितम्

मूल्यम् २-०-०.

श्री शारदा प्रेस अफजल गंज चमन हैद्राबाद दक्षिण.

|| ❀ || प्रथमतश्शुद्धाशुद्धपत्रिका दर्शनीयेत्यभ्यर्थये. || ❀ ||

## ❀ द्वयार्थप्रकरणशुद्धिपत्रिका. ❀

| पृष्ठे | पंक्तौ. | अशुद्धानि. | शुद्धानि. | पृष्ठ. | पंक्तौ. | अशुध्दानि. | शुद्धानि. |
|---|---|---|---|---|---|---|---|
| ३ | ७ | व्रेण | व्रण | ,, | १० | तुल्य | त्तुल्य |
| ४ | २० | शक्याणि | शक्यानि | २५ | ५ | दीशन | दीशान |
| ,, | २३ | चारितन | चारितेन | ,, | ७ | गुरुणां | गुरूणां |
| ,, | २५ | सर्वकर्म्म | सर्वकर्म | ,, | २३ | व । | वा । |
| ५ | १२ | महात्म्य | माहात्म्य | २६ | ३ | प्रशक्तिः | प्रसक्तिः |
| ,, | १३ | रहस्येति | रहस्यस्येति | ,, | १० | प्रश | प्रस |
| ,, | २१ | प्रकाशार्थम । | प्रकाशार्थं | ,, | १७ | शरणगति | शरणागति |
| ६ | ३ | प्रभृतीभि | प्रभृतिभि | २७ | ८ | श्रीयते च | श्रियते चा |
| ,, | ६ | विध्यानु | विध्यनु | ,, | १८ | प्रशक्त | प्रसक्त |
| ७ | २५ | स्यानकां | स्यानाकां | २८ | २ | पुरुर्ष | पुरुषर्ष |
| ८ | ८ | इप्पडे | इप्पाडि | ,, | ४ | सन्तो | सतो |
| २२ | ५ | बधन्क | वन्धक | ,, | ६ | प्रातज्ञा | प्रतिज्ञा |
| ,, | २१ | पुरस्फू | पुरस्स्फू | ,, | १२ | त्रिजटोपा | त्रिजटोप |
| २३ | ७ | विवारिणः | विवारिणिनः | ,, | १७ | त्माजत् | त्मजात् |
| ,, | ८ | परात | पारत | २९ | १ | क्तानिः | क्तानिः |
| २४ | ३ | कारिणं | कारिणां | ,, | ९ | भाष्कार | भाष्यकार |
| ,, | ८ | पकारस्य | पकारत्वस्य | ,, | १० | पूर्त्यर्थं | पूर्त्यर्थं |

| पृष्ठे. | पंक्तौ. | अशुद्धानि. | शुद्धानि. | पृष्ठे. | पंक्तौ | अशुद्धानि. | शुद्धानि. |
|---|---|---|---|---|---|---|---|
| ,, | १३ | प्रपत्य | प्रपत्त्य | ४८ | ० | क्विप्पत्यय: | क्विप्प्रत्यय: |
| ,, | २० | भूम्नायेन | भूम्नथायेन | ,, | ११ | त्रयादिषु | क्यादिषु |
| ३० | १ | आकिश्चन्युम् | आकिश्चन्यमुम् | ४७ | १४ | णेव | णैव |
| ,, | ३ | कारि | कारी | ४८ | १ | शेषित्वं | शेषित्वम्" |
| ,, | ,, | अकिञ्च | आकिञ्च | ,, | ७ | भूतेष्ठु | भूतेष्ठ |
| ,, | ८ | प्रपत्यधि | प्रपत्त्याधि | ४९ | २४ | वह्न्यादे | वह्न्यादे |
| ३१ | १ | पुह्लोन्बिल्ला | पुह्लोम्बिल्ला | ५० | १ | व्यापिनी | द्व्यापिनी |
| ,, | ४ | साधीयतुं | साधायितुं | ,, | ३ | ब्रह्मणससे | ब्रह्मणस्मि |
| ,, | ९ | शूद्राधि | शूद्राधि | ,, | १६ | यद्येतानि | यद्येतान्नि |
| ,, | १२ | न्याय | न्याय: | ५० | २३ | तैथत्र | तथैत्र |
| ,, | १७ | वहन्या | वह्न्या | ५१ | ३ | चेज़जी | चेज्जी |
| ३२ | ८ | प्रपत्यादि | प्रपत्त्यादि | ,, | ७ | भावदेत्र | भावादेत्र |
| ,, | २० | सम्बन्धेऽपि | सम्बन्धोऽपि | ,, | २२ | ससंकल्पा | संकल्पा |
| ३४ | ४ | । शरव्यत्वे | शरण्यत्वे | ५२ | ९ | अत्राच्य | अत्रोच्य |
| ३६ | ४ | मामनुजा | मनुजा | ,, | १३ | रपेक्ष्यारूप | रपेक्ष्यानुरू |
| ,, | ८ | स्यादित्यशङ्का | स्यादित्याशङ्का | ५४ | ३ | नन्न | तन्न |
| ३७ | १९ | विद्यामान | विद्यमान | ,, | २३ | लब्ध्वा | लब्ध्वा |
| ४२ | ६ | श्री इति | श्री:' इति | ५८ | ३ | मात्वृत्ति: | व्यावृत्ति: |
| ,, | १४ | प्रियणेशे | प्रियेणेशे | ,, | १३ | तदिरा | तदितरा |
| ४३ | १४ | इनि | इति | ६१ | २ | तदीवा | तदीया |
| ,, | २२ | स्सिद्यति | स्सिद्ध्यति | ,, | १६ | उपयै: | उपायै: |

| | | | |
|---|---|---|---|
| ,, | ,, | लापनी | लापना |
| ६३ | ६ | सामरस्प | सामरस्य |
| ६४ | ५ | सिद्धेय | सिद्धये |
| ६५ | १० | महनिमा | महीनमा |
| ,, | ८ | मथ | मत |
| ६६ | ५ | पोरुष्प | पोरुष्पि |
| ,, | १७ | हैते: | हैतैः |
| ६७ | १९ | वस्स्य | स्वस्य |
| ,, | ५ | धनुर्गु | धनुर्गृ |
| ६८ | ५ | पुरुषाकार | पुरुर्षकार |
| ६९ | ६ | पृथाक्स | पृथक्सि |
| ७० | १५ | तिर्यङ्क्नु | तिर्यङ्क्नु म |
| ७१ | ० | दर्शायितु | दर्शयितु |
| ,, | १३ | ‘धर्मिसत्ताव्यापकस्त्रसत्ताकः’ इत्यनन्तरं “यथा-घटघटत्वयोरसंसर्गः । धर्मधर्म्युभयसत्ताव्यापक स्त्र-सत्ताकः ।’ इति पंक्तिरनुसन्धेया । | |
| ७२ | १० | इन्धा | इन्ध |
| ७४ | १७ | पूर्वात्वोप | पूर्वत्वोप |
| ,, | १८ | शब्यो | शब्दयो |
| ७५ | १४ | उपदान | [illegible]ादान |
| ,, | १९ | ऽपहतृणां | [illegible]र्तृणां |
| ७६ | १२ | वांमयं | वाङ्मयं |
| ,, | १३ | शरीरं | शारीरं |

| | | | |
|---|---|---|---|
| ,, | २१ | समत्रु | मत्रु |
| ७७ | १ | त्रिपरीता | त्रिपरीतो |
| ,, | ,, | शराध | राराध |
| ,, | ७ | शेषभत | शेषभूत |
| ,, | ११ | पहतृणां | पहर्तृणां |
| ७८ | १९ | प्राय | प्रायकः |
| ८० | १३ | इत्रि | इति |
| ८१ | १४ | पायस्यं | पायस्य |
| ८२ | १४ | स्त्रत्रं | तस्त्र |
| ८२ | १६ | चार्चैश्चे | चार्यैश्च |
| ८३ | १४ | निम्मं | निमग्नं |
| ८४ | १० | आपि चे | “ आपि चे |
| ८६ | १५ | वत्यते | वर्त्यते |
| ८७ | १ | तत्रैव ” | ततैव |
| ,, | २ | मात | मातु |
| ,, | ,, | इत्य | इत्यु |
| ,, | ६ | व्यवहियते | व्यवह्रियते |
| ,, | ९ | इात | इति |
| ८८ | १ | इत्या भि | इत्यादिभि |
| ८९ | २ | मीश्वश्च | मीश्वरश्च |
| ,, | १८ | स्त्रकीनात्वभयानः | स्त्रकीयत्वेनाभिमानः |
| ९१ | १० | विलंघ्या | त्रिलंध्य । |
| ९३ | ५ | लार्भो | लाभौ |

| पृष्ठे. | पंक्तौ. | अशुद्धानि. | शुद्धानि. | पृष्ठे. | पंक्तौ. | अशुद्धानि. | शुद्धानि. |
|---|---|---|---|---|---|---|---|
| ,, | १२ | यानि मू | यानि मूर्त्ति- | ११४ | १ | वाचकत्वा | वाचकत्वात् |
| ९४ | ११ | गुणगणमनुसन्धेयम् | गुणगणोऽनुसन्धेयः | ११६ | २ | चैत्रकर्तु | चैत्रकर्तृ |
| ९५ | ८ | सन्दधतो | सन्दधते । | ११७ | ७ | प्रपञ्च्य | प्रपञ्च्य |
| ९६ | ३ | मेन्तु | मन्तु | ११८ | १ | याञ्चा | याञ्चा |
| ,, | ८ | दर्याय | दूर्याय | १२३ | २० | घञो | घञो |
| ९७ | २० | कुर्वभ्द्यो | कुर्वद्भ्यो | ,, | ,, | घञ्प्र | घञ्प्र |
| ९८ | १४ | धीर्मतेत् | धीर्भवेत् | १२८ | १५ | प्रकृत्थीनुग्रहेण | प्रकृत्यर्थानुग्रहेण |
| ,, | २० | पूर्वस्माज्ज्यायोन | पूर्वस्माज्ज्याया | १३० | ७ | सम्भवत् | सम्भवात् |
| ९९ | १ | पादयित | पादयति | १३२ | ९ | तद्विशिष्ठ | तद्विशिष्ट |
| ,, | २ | परयू | परव्यू | ,, | २१ | फलक्षि | पलक्षि |
| ,, | १२ | परब्यू | परव्यू | १३६ | ८ | निराकाक्षा | निराकाङ्क्षा |
| १०० | ५ | सिद्धाः | सिद्धम् | १३८ | ५ | सङ्गेहे | संग्रहे |
| ,, | ८ | चित्र | चात्र | १३९ | १ | प्रप्यत्र | प्राप्यत्र |
| ,, | १५ | प्राणयादि | प्राणादि | ,, | ८ | तान्वितयं | तन्त्रितयं |
| १०१ | ११ | प्रद्युम्नामा | प्रद्युम्ननामा | १४० | १२ | उत्युच्यते | इत्युच्यते |
| १०३ | २१ | तांस्त्यक्तु | तांस्त्यक्तु | १४३ | २४ | गतः | गतः |
| १०६ | १४ | स्तारितावी | स्मरितोर्वी | १४४ | १८ | पातव्रता | पतिव्रता |
| १११ | ९ | कर्मपेक्ष | कर्मापेक्ष | १४९ | १६ | जनप्य | जनय्य |
| ११२ | ४ | षिराद्दि | पिराद्दि | १५० | १० | मकार्षि हि | मकारिषि |
| ,, | १४ | घयात | घयाति | १५२ | १४ | अधिकारानुवादप्रयोजन। | अधिकारानुवादप्रयोजनम् |
| ,, | १६ | तदाकार | तदाकारे | १७७ | ११ | अयभमिसन्धिः | अयमभिसन्धिः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १८५ | ६ | पासनस्येक्यऽपि | पासनस्यैक्यऽपि | २३० | २३ | कवल्यीथिनैः | कैवल्यार्थिनः |
| १८८ | २४ | बूमः | ब्रूमः | २३१ | १३ | त्तन्मलक | त्तन्मूलक |
| १९६ | १४ | इत्यदेः | इत्यादेः | २३२ | १० | अनुभूयमान | अनुभूयमाने |
| १९७ | ३ | न्नेग्गै | नूनं गै | २३४ | ८ | फ ठेतार्थः | फा ठितार्थः |
| " | ६ | पर्वं | पूर्वं | " | १६ | माकटयात् | माकट्यात् |
| १९९ | १ | तद्रूप | तद्रूप | २३५ | १८ | (व्युत्पाद्विद्वयम् | (व्युत्पत्तिद्वयम् |
| २०० | १९ | पूर्वानु | पूर्वार्धानु | " | " | कर्तारि | कृत रे |
| २०१ | १४ | उपाया ध्यसायो | उपायाध्यवसायो | २३८ | १२ | कैंकर्यम् | कैंकर्यं |
| २०२ | ११ | संयुतं | संयुतः | " | १५ | कैंकर्यम् | कैंकर्यं |
| " | १४ | निरहङ्करः | निरहङ्कारः | " | १८ | मिथन | मिथुन |
| २०४ | १ | दोपदुष्टत्वात् | दोषदुष्टत्वात् | २४० | ८ | ज्ञानशक्याादि | ज्ञानशक्त्यादि |
| २०७ | ११ | न्यायादन्तो | न्यायादन्ततो | २४१ | १ | एतत्सर्वम् | एतत्सर्वं |
| २१२ | २३ | आदिलिपाशान् | आदितिःपाशान् | " | ७ | मत्यन्तरङ्गं | मत्यन्तमन्तरङ्गं |
| २१४ | ९ | झितास्ते | उज्झितास्ते | २४२ | ७ | विभक्त्यश | विभक्त्यंश |
| " | १६ | भक्तिरूपास्ति | भक्तिरूपास्ति | " | २१ | विशेयज्ञानस्या | विशेषज्ञानस्या |
| २१५ | १५ | नित्युक्त | नित्ययुक्त | २४३ | १ | कैंकर्यम् | कैंकर्यं |
| २२० | ७ | घर्मस्थे | धर्मस्थे | " | २ | प्रकायती | प्रकाशयती |
| " | ११ | त्रिविधमपि | त्रिविधमपि | " | ३ | कैंकर्यम् | कैंकर्यं |
| " | १८ | श्रुत्यान्त | श्रुत्यन्त | " | ६ | गछति | गच्छति |
| २२४ | ९ | इति " । | " इति । | " | ८ | चेक्कादाचित्कं | चेत्कादाचित्कं |
| २२५ | १० | पूर्वहेत्नाभा | पूर्वहेत्वभा | " | १८ | गाथाय | गाथाया |
| २२७ | ८ | फलसाधवत्व | फलसाधनत्व | २४४ | १ | अकिंचित्करस्य | आकाचत्करस्य |
| २२८ | २ | सिद्धापायोपेयंच | सिद्धोपायः, उपेयंच | २४५ | ५ | नाकिंचिकुर्वत | नाकिंचित्कुर्वत |

| पृष्ठे. | पंक्तौ | अशुद्धानि. | शुद्धानि. | पृष्ठे. | पंक्तौ | अशुद्धानि. | शुद्धानि. |
|---|---|---|---|---|---|---|---|
| ,, | २० | मश्शब्दस्य | नमश्शब्दस्य | २४८ | ३ | प्रीत्यर्थम् | प्रीत्यर्थं |
| २४६ | ४ | भोगेऽयम | भोगोऽयम् | ,, | ,, | कैंकर्यम् | कैंकर्यं |
| ,, | ९ | ऽपिति | ऽप्पीति | ,, | ,, | प्रीत्यर्थम् | प्रीत्यर्थं |
| ,, | १५ | अपुरुषर्थो | अपुरुषार्थो | ,, | १६ | चन्द्रकान्तननं | चन्द्राकान्ताननं |
| ,, | १७ | मवेति | मेवेति | २४९ | ७ | स्वभोत्कृत्वा | स्वभोक्तृत्वा |
| २४९ | १९ | वक्तारं | वक्तारं | २५० | १२ | मित्यमर्थः | मित्ययमर्थः |

श्रीमते रामानुजाय नम

श्रीसुदर्शनषट्कम्.

ॐ सहस्रादित्यसंकाशं सहस्रवदनं परम् ।
सहस्रदं सहस्रारं प्रपद्येऽहं सुदर्शनम् ॥ १ ॥
उल्लसद्धारकेयूरम्मुकुटाङ्गदभूषणम् ।
भूषणैर्भूषिततनुं प्रपद्येऽहं सुदर्शम् ॥ २ ॥
स्राकारसहितं मंत्रं पठन्तं शत्रुनिग्रहम् ।
सर्वदोषप्रशमनं प्रपद्येऽहं सुदर्शनम् ॥ ३ ॥
रणत्किंकिणिजालेन राक्षसघ्नं तमद्भुतम् ।
व्याप्तकेशं विरूपाक्षं प्रपद्येऽहं सुदर्शनम् ॥ ४ ॥

हुंकारं भैरवं भीमं प्रणतार्त्तिहरं प्रभुम् ।
सर्वदुष्टप्रशमनं प्रपद्येऽहं सुदर्शनम् ॥ ५ ॥
फट्कारान्तमनिर्देश्यं महामंत्रेण संयुतम् ।
शुभप्रसन्नवदनं प्रपद्येऽहं सुदर्शनम् ॥ ६ ॥
एतैष्षड्भिः स्तुतोदेवः प्रसन्नोभगवान्हरिः ।
रक्षांकरोति सर्वत्र सर्वत्र विजयी भवेत् ॥ ७ ॥

॥इति श्रीसुदर्शनषट्कम् ॥

श्रीमते रामानुजायनमः



    

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीलोकगुरवे नमः ॥

॥ श्रीमद्वरवरमुनये नमः ॥

श्रीशैललक्ष्मणमुनये नमः

अव्यादव्याजकारुण्यनिधिरम्बुजलोचनः ।
श्रीरङ्गधामरसिकः श्रीमान्नारायणस्सदा ॥
रम्यजामातरं नत्वा स्मृत्वा श्रीलोकदेशिकम् ।
करोमि बालबोधाय द्वयव्याख्यानदीपिकाम् ॥

"ओं सहनाववतु....शान्तिः । अथातश्श्रीमद्द्वयोत्पत्तिः । वाक्यो द्वितीयः। षट्पदानि । अर्थाः दशापंचविंशसक्षराणि । पंचदशाक्षरं पूर्वम् । दशाक्षरं परम् । नवाक्षरं प्रथमपदे । द्वितीयतृतीयचतुर्थंस्त्र्यक्षराणि । पंचाक्षरं पंचमम् । द्व्यक्षरष्षष्ठः । एकाक्षरः प्रथमः । एकाक्षरो द्वितीयः । चतुर्थाक्षरस्तृतीयः । चतुर्थपंचम षष्ठसप्तम एतेत्र्यक्षराणि । अष्टमोऽक्षरश्चतुर्थः । द्व्यक्षरो नवमे । दशमे द्व्यक्षराणि। एतन्मन्त्रस्य प्रपात्तिः । पूर्वे नारायणप्रोक्तोऽनादिसिद्धो मन्त्ररत्नः सदाचार्यमूलः। आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयश्शुचिः । गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः । एवंलक्षणसम्पन्नो गुरुरित्यभिधीयते । यत्सकृदुच्चारणे संसारविमोचनं भवति । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति । सर्वपुरुषार्थसिद्धिर्भवति । सर्ववेदपारायणपुण्यं लभते । श्रीमन्नारायणस्य प्रियो भवति । य एवंवेद । इत्युपनिषत् ॥१॥ ओं सहनाववतु........शान्तिः । स एष महानज आत्मान्नादो वसुदानो विन्दते वसु । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रसादम्मुमुक्षुर्वै शरणमहं प्रपद्ये । इत्यथहोवाच । विष्णुशयनं प्रपद्ये । सद्गुरून् प्रपद्ये । सात्विकान्प्रपद्ये। ऋचो वाचं

प्रपद्ये । मनो यजुः प्रपद्ये । साम प्रपद्ये । चक्षुश्श्रोत्रं प्रपद्ये । वागोजस्सह ओजोमां प्रपद्ये । प्राणायामं प्रपद्ये । प्रणवं प्रपद्ये । सत्यं प्रपद्ये । श्रद्धां प्रपद्ये । परमात्मने प्रपद्ये । वासुदेवं प्रपद्ये । भागवताय प्रपद्ये । भक्तानां प्रपद्ये । ओं प्रपद्ये । श्रीं प्रपद्ये । श्रियं प्रपद्ये । तद्देवा दिव्यगायत्र्यां च प्रपद्ये । इति । तदेव भूतं तदुपासितव्यम् । सत्यं द्वयम् । श्रीमन्नारायणचरणौ शरणं प्रपद्ये । इदं पूर्णमदःपूर्णं पूर्णात्पूर्णमुत्पद्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । सर्वं पूर्णं सहोम् । श्रीमते नारायणाय नमः । खं ब्रह्म । खं वायुः । खं पुराणं । खमितीहस्माह कौरव्यायणीपुत्रः । वेदोऽयं ब्राह्मणा विदुः । वेदेनानेन वेदितव्यम् । य एवं वेद इत्युपनिषत् ॥ २॥" (इति कठवल्लीखण्डे द्वयोपनिषदि), "तेषु दलेषु शरणागतनारायणमन्त्रः, । नारायणहयग्रिवगायत्रीमन्त्रौ च । श्रीमन्नारायणचरणौ शरणं प्रपद्ये । श्रीमते नारायणाय नमः" (इति महानारायणोपनिषदि), "मंत्राणां परमो मंत्रो गुह्यानां गुह्यमुत्तमं । रहस्यानां रहस्यं च सद्यस्संसारतारणं ॥ सर्वसंशयभेत्ता च सर्वकल्मषनाशनः । शरणागतिमंत्रस्तु सर्वसम्पच्छुभावहः ॥ पुरा हिमवतःपार्श्वे घोरमत्यन्तदुष्करम् । तपस्तप्त्वा महात्मानं दृष्ट्वा कमलसम्भवम् ॥ आराध्य विधिवत्पूर्वं सर्वलोकेश्वरं गुरुम् । प्रणम्य शिरसा भूमौ हरेर्नाभिसमुद्भवम् ॥ देवदेव जगन्नाथ चतुर्मुख पितामह । सर्वेषामेव मन्त्राणां सारं संसारनाशनम् ॥ येन मन्त्रेण संसारान्मुक्तिं यान्ति हि सूरयः । मन्त्रं तं श्रोतुमिच्छामि प्रसादं कुरु नायक ॥ ब्रह्मोवाच—स्मार्तं शौचश्च योगं च ज्ञानं चेति चतुर्विधम् । वैदिकाः क्रमशस्तेन प्राप्नुयुर्मानवाश्शुभम् ॥ यद्योगज्ञानयोस्सारं वेदान्ते च प्रतिष्ठितम् । अक्लेशेन सुमार्गेण वेदसारेण भक्तिमान् । द्वयेन प्राप्नुयात्पुत्र तद्विष्णोःपरमं पदम् ॥ तस्मिन्द्वये भज श्रद्धां यत्नतो मुनिपुङ्गव । सर्वकामाश्रयां वाणीं त्यक्त्वा प्राप्तुं त्वमर्हसि" इति, "मामेकं च श्रिया युक्तं भक्तियुक्तो नरोत्तमः । द्वयेन मन्त्ररत्नेन मत्प्रियेण भजेत्सदा ॥ अचिरान्मत्प्रसादेन मल्लोकं च स गच्छति । दुर्वृत्तो वा सुवृत्तो वा मूर्खः पण्डित एव वा ॥ लक्ष्मीं च मां सुरेशेशं द्वयेन शरणङ्गतः । मल्लोकमचिराल्लब्ध्वा मत्सायुज्यं स गच्छति ॥ पुरा मन्त्रद्वयं ब्रह्मन् विष्णुलोके महापुरे । तस्मिन्नन्तः पुरे लक्ष्म्यै मया दत्तं सनातनम् ॥ लक्ष्म्या लब्धं तथा चैव मन्त्ररत्नं द्वयं विभो । साङ्गोपाङ्गं सुरश्रेष्ठ गच्छ त्वं चतुरानन ॥ इति तस्य

वचश्श्रुत्वा तपस्तेपे चतुर्मुखः ॥ तस्य माता महालक्ष्मीः प्रत्यक्षमकरोत्तदा ॥ तां देवीं च महालक्ष्मीं सर्वलोकेश्वरेश्वरीम् । दृष्ट्वा विधिवदाराध्य स्तोत्रं कृत्वाभिवाद्य च॥ त्वमेव माता सर्वस्य त्वदाज्ञैव चराचरम् । वैतानाग्निस्वरूपा त्वं वराणि वरये शुभे॥ देवि संसारभीतानां पुरुषाणां पुरातनम् । त्वत्तोऽहं श्रोतुमिच्छामि द्वयं संसारनाशनम्॥ ॥ श्रीरुवाच—वेदामृतमहाम्भोधेर्हरिणाद्वयमुध्दृतम् । तद्द्वयं शृणु वक्ष्यामि सद्यो मुक्तिप्रदं शुभम् ॥" इति, "अतिपापप्रसक्तोऽपि श्रीवैकुण्ठं पुरातनम् । द्वयानुष्ठानमात्रेण नरश्शीघ्रेण गच्छति ॥ अहो द्वयस्य माहात्म्यमहो वीर्यमहो बलम् । मन्त्ररत्नं शुभतरं वेदसारं सनातनम् ॥ सर्वपापक्षयकरं सर्वपुण्यविवर्धनम् । श्रीकरं लोकवश्यंच सद्यस्संसारतारणम्॥ अतीतानागतज्ञानमात्मतत्वप्रकाशकम् । सर्ववेदार्थविज्ञानं सर्वशास्त्रविवर्धनम् ॥ मानसं वाचिकं पापं कायिकं च त्रिधाकृतम् । द्वयस्मरणमात्रेण नाशं याति सुनिश्चितम् । अपवित्रः पवित्रोवा सर्वावस्थांगतोऽपि वा । द्वयस्मरणमात्रेण सबाह्याभ्यन्तरश्शुचिः ॥ जन्मान्तरसहस्रेषु कृतस्तत्पापसंचयः। द्वयोच्चारणमात्रेण दह्यते नात्र संशयः ॥ मूर्खो वा धर्मशीलो वा निन्दितो वाप्यनिन्दितः । द्वयोच्चारणमात्रेण नरः पूज्यो विशेषतः ॥ मूर्खो वा पण्डितोवापि शुद्धो वाप्यशुचिस्सदा । तस्मिन् द्वये यदि श्रद्धा स पूज्यो भवति ध्रुवम् ॥ श्रुतवान्वा कुलीनो वा तपस्वी वा परात्पर । द्वयाधिकारी नोचेत्तं दूरतःपरिवर्जयेत् ॥ संसारार्णवमग्नानां सद्यस्संसारतारणम् । द्वयमेकन्तु विप्रेन्द्र नास्त्यस्य सदृशं भुवि ॥ तस्माद्द्वयेन देवेशं लक्ष्मीनारायणं प्रभुम् । आराधय ऋषिश्रेष्ठ तद्द्वयं शृणु सुव्रत" (इति) "यथार्थन्तु द्वयं चैव सर्वज्ञो मन्त्रवित्तमः । आत्मप्रकाशं चिद्रूपं श्रीमन्नारायणस्य च ॥ निक्षिप्य, सर्वकर्माणि कुर्यादात्मविदां वरः । अष्टोत्तरसहस्रं च ध्यानयुक्तो जपेद्बुधः ॥ अष्टोत्तरशतं वापि द्वयं नित्यमतान्द्रितः । सायं प्रातर्जपेन्नित्यं निष्कामो विजितेन्द्रियः ॥ द्वयेन मन्त्ररत्नेन पूजां कृत्वा द्विजोत्तमः । प्रसादभूतं नैवेद्यं पावनन्तु यथोचितम् ॥ पत्न्या सह गृहस्थोऽपि भुंजीत सततं प्रियम् । स्नापयेद्भोजयेच्चैव तदीयांश्च द्विजोत्तमान्॥ प्रसादादीनि सर्वाणि वैष्णवैर्मनसा सदा। ध्यानेन तु द्वयस्यैव भोक्तव्यानि महामुने॥ द्वयं द्वादशवारं च स्नाने पाने च तर्पणे । योगे नित्यं जपं कुर्याद्वैष्णवो मन्त्रवित्तमः॥ नैमित्तिकानि कर्माणि वर्जयेन्मुनिसत्तम । आत्मनो रक्षणं कुर्याद्द्वयेन ब्रह्मवित्तमः"॥

(इति च पाद्मे पुराणे,) "सर्वेषामेव मन्त्राणां प्रथमं गुह्यमुत्तमम् । मन्त्ररत्नं नृपश्रेष्ठ सद्यो मुक्तिफलप्रदं ॥३॥ सर्वैश्वर्यप्रदं पथ्यं सर्वेषां सर्वकामदम् । यस्योच्चारणमात्रेण परितुष्टो भवेद्धरिः ॥ ४ ॥ देशकालादिनियममरिमित्रादिशोधनम् । स्वरवर्णादिदोषश्च पौरश्चरणकं न तु ॥ ५॥ ब्राह्मणाः क्षत्रिया वैश्यास्स्त्रियश्शूद्रास्तथेतराः। तस्याधिकारिणस्सर्वे सत्वशीलगुणा यदि ॥६॥ पंचसंस्कारसम्पन्नाश्शुद्धवन्तोऽनसूयकाः। भक्त्या परमया विष्टा युक्तास्तस्याधिकारिणः ॥ ७ ॥ पंचविंशाक्षरो मन्त्रः पदैष्षड्भिस्समान्वितः । वाक्यद्वयं परं ज्ञेयं मन्त्ररत्नमनुत्तमम् ॥ ८ ॥ यदाश्रयति विद्यादिः संस्थिता जगतां पतिम् । तदा विद्यानपायिन्या संयुतः परमःपुमान् ॥९॥ नारायणोऽच्युतश्श्रीमान्वात्सल्यगुणसागरः । नाथस्सुशीलस्सुलभस्सर्वज्ञश्शक्तिमान्परः ॥ १० ॥ आपद्बन्धुस्सदामित्रं परिपूर्णमनोरथः । दयासुधाब्धिस्सविता वीर्यवान्द्युतिमान्विभुः ॥ ११ ॥ प्रपद्ये चरणौ तस्य शरणं श्रेयसे मम । श्रीमते विष्णवे नित्यं सर्वावस्थासु सर्वदा ॥ १२ ॥ निर्ममो निरहंकारः कैंकर्यं करवाण्यहम् । एवमर्थं विदित्वैव पश्चान्मन्त्रं प्रयोजयेत् ॥१३॥" (इति वृद्धहारीतस्मृतौ-६-अ)"भगवन्हितमाख्यातमात्मनां पततामधः । त्वत्प्रापकम्महत्कर्म कारुण्यविवशात्मना ॥ अधीता बहवो मन्त्राः श्रीमदष्टाक्षरादिकाः । एभिःकर्मभिरीहानस्तान्मन्त्रान्सततं जपन् ॥ त्वामाप्नोत्येव पुरुषः पुरुषं पुरुषोत्तम । एतानि चोच्यमानानि कर्माणि करुणाकर ॥ दुर्विज्ञेयस्वरूपाणि दुष्कराणि विभागशः ॥ मन्त्रांश्चैकैकशस्तावज्जपमानस्य माधव । उक्तेनैव च मार्गेण गच्छत्यायुरपक्षयम् ॥ तस्मात्सकृत्कृतेनैव कर्मणा येन मानवः । सकृज्जप्तेन मन्त्रेण कृतकृत्यस्सुखी भवेत् ॥ तद्ब्रूहि कर्म तं मन्त्रं दयार्द्रहृदयो ह्यसि" इति भगवन्तं प्रति ब्रह्मा, भगवानुवाच-" सत्यमुक्तान्यशक्याणि कर्माणि कमलासन। मन्त्राणां च यथा शास्त्रमनुष्ठानं न शक्यते ॥ तत्कर्म विद्यते येन कृतमात्रेण कर्मणा । मांप्राप्नोति नरो ब्रह्मन् ममात्मा च भविष्यति ॥ मन्त्रो हि विद्यते येन सकृदुच्चारितेन वै । पुरुषो जीवलोकेऽस्मिन् कृतकृत्यो भविष्यति ॥किन्तु तस्य च मन्त्रस्य कर्मणः कमलासन । न लभ्यतेऽधिकारी वा श्रोतुकामोऽथवा नरः॥ त्वन्तु मद्भाग्यसंयोगादेतत्कर्माभिवांछसि । ब्रवीमि सर्वकर्मभ्यो गरीयो मन्त्रमेव च ॥ प्रथमं श्रृणु मन्त्राणां राजराजमनुत्तमम् । सर्वमन्त्रफलान्यस्य विज्ञानेन भवन्ति वै ॥ एतन्मन्त्रमविज्ञाय यो नरो मामभीप्सति । बाहुभ्यां सागरं तर्तुमलब्ध्वा प्लवमिच्छति ॥ तस्माद्यो

॥ श्रीमते रामानुजाय नमः ॥
॥ श्रीलोकगुरवे नमः ॥
॥ श्रीमद्वरवरमुनये नमः ॥
श्रीमद्वरवरमुनीन्द्रप्रसादित

# मुमुक्षुप्पडिरहस्य

## द्वयप्रकरणव्याख्यानावतारिकारम्भः

प्रथमरहस्यस्य श्रीमन्त्रस्यार्थकथनानन्तरं, तत्र मध्यमपदतृतीयपदाभ्यां प्रतिपादितावुपायोपेयौ विशदं प्रतिपादयतो द्वयस्यार्थमाह ।

मामभीप्सेत यो वा सुखितुमिच्छति । मन्त्रराजमिमं विद्या द्गुरोर्वचनपूर्वकम् ॥ नानुकूल्यं न नक्षत्रं न तीर्थादिनिषेवणम् । न पुरश्चरणं नित्यं जपं वापेक्षते ह्ययम्" (इति सात्वततन्त्रे) इत्यादिश्रुतिस्मृत्यादिसकलप्रमाणप्रतिपादितनिरतिशय महात्म्य युक्तं मन्त्ररत्नाख्यं द्वयमन्त्रं व्याख्यातु मुपोद्घातमाह—**प्रथमरहस्येति** ।

**(विशदं प्रतिपादयतः)** इत्यनेन उक्तार्थविशदीकारयुक्ततदुपयुक्तार्थान्तरबोधनं विवक्षितम् । **(द्वयस्य)** इति-उपायोपेययाथात्म्यप्रतिपादकत्वात्, वाक्यद्वयात्मकत्वाच्चास्य मन्त्ररत्नस्य 'द्वयम्' इति व्यपदेशः । अत्र तत्वदीपे-"ननु अत्रमन्त्ररत्नमात्रस्य द्वयशब्दाभिधेयत्वं न युज्यते, १" ओमित्येकाक्षरं मन्त्रमेकं गूढार्थमुच्यते । प्रकाशार्थं तयोरेकमक्षरैः पंचविंशकैः । तस्मान्मन्त्रद्वयं ब्रह्मन् षड्विंशाक्षरं विदुः । तस्य विष्णोःप्रसादेन मया लब्धमिदं द्वयम् । मन्त्रद्वयस्य माहात्म्यं कल्पकोटिशतैरपि । नाहं वक्ष्यामि देवेश किं पुनस्त्वमरैरिति" २ "प्रणवं मन्त्ररत्नंच मन्त्रद्वयमुदाहृतम् । ओमित्येकाक्षरं मन्त्रं गूढार्थं प्रणवं तथा । प्रणवस्य प्रकाशार्थम् । म-

१. पांचरात्रे ॥ | २. पांचरात्रे.

पूर्वमुक्तेषु त्रिष्वपि प्रबन्धेषु श्रीमन्त्रानन्तरं, चरमश्लोकमुक्त्वा द्वयमुक्तवानयमिदानीं प्रथमं द्वयं किमिति वर्णयतीति चेत्, प्रकारद्वयस्यापि वक्तुमुचितत्वात्। श्रीकृष्णपादयतिप्रभृतीभिरयं प्रकार एवोक्तः॥

अनयोरुभयोः प्रकारयोस्तात्पर्यम् किमिति चेत्; चरमश्लोकपूर्वकं द्वयस्य कथनम्—विध्यनुष्ठानरूपत्वात्, विधिपूर्वकमनुष्ठान-

न्त्ररत्नमुदाहृतम्। प्रणवं प्रणवादूर्ध्वं मन्त्रद्वयमुदाहृतम्" इत्यादिभिःप्रणवस्यैकमन्त्रत्वमभिधाय तेन सहितस्य मन्त्ररत्नस्य द्वयाभिधानामिति। सत्यम्। अस्य त्रैवर्णिकविषयत्वे प्रणवसाहित्यम्, तथात्वेन द्वयं च। सर्वाधिकारत्वे प्रणवविधुरस्यापि द्वयत्वमत्रैवोच्यते। ३"स्त्रीशूद्राविनताश्चैव मन्त्रं प्रणववर्जितम्। नमोन्तं मन्त्ररत्नंच जपेयुर्वैष्णवास्सदा॥ ऋष्यादींश्च करन्यासमङ्गन्यासंच वर्जयेत्। नारी वा वृषलो वापि गुरुवन्दनपूर्वकम्। स्त्रीणांच सर्ववर्णानां पुरुषाणां तथा विदुः॥ एवं ज्ञात्वा द्विजश्रेष्ठो द्वयं नित्यमतन्द्रितः। श्रीमन्नारायणं ध्यात्वा तं जपेत्पुरुषोत्तमम्" इति स्त्रीशूद्रादिसर्ववर्णविषयस्यास्य मन्त्रस्य नमश्शब्दान्तं ऋष्याद्यङ्गन्यासकरन्यासराहित्यंच प्रतिपाद्य तस्यैव द्वयाभिधेयत्ववचनात्, ४ "द्वयेन मन्त्ररत्नेन" इति मन्त्ररत्नमात्रे बहुशो द्वयशब्दप्रयोगाच्च। सात्यकीतन्त्रेऽपि "बुध्यस्वैतद्द्वयं ब्रह्मन्" इति एतावन्मात्रस्य द्वयत्ववचनात्। अस्य मन्त्ररत्नस्य वाक्यद्वयात्मकस्य द्वयशब्दाभिधेयत्वं युक्तमेते" ति॥

(श्रीकृष्णपादे)ति-श्रीकृष्णपादः—अभयप्रदराजपुत्रः। परन्दरहस्ये इति शेषः। यतिः-वादिकेसरिमुनिः। तत्वदीपे इति शेषः। श्रीमन्निगमान्तगुरुप्रभृतिभिश्च श्रीमद्रहस्यत्रयसारादिषुचरमश्लोकव्याख्यानात्पूर्वं मूलमन्त्रव्याख्यानात्परं द्वयमन्त्रव्याख्यानं कृतमित्यर्थः।

(विध्यनुष्ठानरूपत्वात्)इति-चरमश्लोकस्य 'व्रज' इति विधिरूपत्वात्, द्वयस्य 'प्रपद्ये' इत्यनुष्ठानरूपत्वाच्चेत्यर्थः। प्राप्यत्रैलक्षण्यज्ञानपूर्वकप्राप्यरुचिमतःकस्याचित् प्रापकविधायकशास्त्रस्यापेक्षितत्वात्, प्राप्यपरस्य श्रीमन्त्रस्य प्रापकपरचरमश्लो-

३. पांचरात्रे ४.

कथनस्य प्राप्तत्वात्, श्रीमन्त्रस्य प्राप्यपरत्वाच्चरमश्लोकस्य प्रापकपरत्वात्, द्वयस्योभयानुष्ठानप्रतिपादकत्वाच्च । द्वयपूर्वकं चरमश्लोककथनम्—श्रीमन्त्रे मध्यमतृतीयपदयोर्वाक्यद्वयं विवरणम्, तस्यचरमश्लोकार्धद्वयं विवरणमिति । तस्मात्प्रकारद्वयानुसन्धाने विरोधो नास्तीति । तत्रैकं प्रकारं त्रिषु प्रबन्धेषूक्तवान् अतोऽन्यः प्रकारोऽपि वक्तव्य इति विचार्य श्रीमन्त्रार्थकथनानन्तरं द्वयार्थमाह ।

(१). तत्र प्रथमं वैष्णवस्य स्वाधिकारार्थमवश्यापेक्षितानि सुग्रहमाह—बाह्येषु विद्यमानानामित्यादिचूर्णिकया ।

---

कात्पूर्वनिपातत्वमाह—**श्रीमन्त्रस्ये** ति । श्रीमन्त्रस्य प्राप्यपरत्ववाक्यार्थानुगुण्येनोक्तमिति ध्येयम् । स्वरूपयाथात्म्यज्ञानपूर्वकप्राप्यरुचिमतोऽधिकारिणः । ईश्वरशेषित्वशरण्यत्वप्राप्यत्वानां नित्यप्रार्थनीयत्वात् 'श्रीमन्त्रः प्राप्यपरः' इत्यत्र न कोऽपि दोष इत्याहुः ।

**उभयानुष्ठानप्रतिपादकत्वादि)** ति-मन्त्रोक्तप्राप्यचरमश्लोकोक्तप्रापकरूपोभयानुष्ठानप्रतिपादकत्वादित्यर्थः । 'अस्य' द्वयस्यकथनम्' इत्यनेनान्वयः ।

**(अन्यःप्रकारोऽपि वक्तव्यः)** इति–विवरणविवरणीभावरूपव्याख्यानस्यैवाचार्योपदेशपरम्पराप्राप्तत्वात् सर्वप्रबन्धानन्तरप्रवृत्तमुमुक्षुप्पाडिप्रबन्धे सर्वाचार्यादरणीयरूपेऽस्मिन् रहस्यग्रन्थे लोकदेशिकस्तथा प्राहेति हृदयम् । अत एवोपोद्घाते"अत एवेतरप्रबन्धेषु सत्स्वपि सर्वेऽपीममधिकुर्वन्ति; किंच पूर्वप्रबन्धेष्वनुक्तार्थविशेषाणामत्र सत्त्वादयमेव सर्वेषामादरणीयः" इत्यनुगृहीतम् ।

(१). प्रसङ्गाद्वैष्णवलक्षणान्याहेति प्रथमसूत्रसङ्गतिं सूचयति-**तत्रे**ति ।

ननु–वैष्णवाधिकारिशब्दवाच्यस्योपायाधिकारिणः अधिकारस्वरूपनिरूपणमनुचितम् । अप्रसक्तत्वात् । मूलनिरूपणात्प्रागेव तस्य निरूपणस्यावश्यंभावाच्च । तस्मादिदं वाक्यजातमसंगतमिति चेत् । उच्यते–ज्ञातव्यसकलार्थप्रतिपादकत्वेन मन्त्रशब्दमुख्यार्थस्य मूलमन्त्रश्रवणेनैव स्वरूपोपायपुरुषार्थविषयकनिरवशेषनिष्कलङ्क ज्ञानस्य सिद्धत्वात्, द्वयचरमश्लोकयोश्श्रवणस्यानकांक्षितत्वेन रहस्यत्रयस्यैक-

॥श्रीमते रामानुजाय नमः॥

॥ श्रीलोकगुरवे नमः ॥

## ॥ श्रीलोकार्यप्रसादितमुमुक्षुप्पडिरहस्ये ॥

### द्वयप्रकरणारम्भः.

मू॥ पुरम्बुण्डान पत्तुक्कलै अडैय वासनैयोडे विडुहैयुम्, एम्बेरुमानैये तञ्जमेन्नु पत्तुहैयुम्, पेरुतप्पादेन्नु तुणिन्दिरुक्कैयुम्, पेत्तुक्कु त्वरिक्कैयुम्, इरुक्कुं नालुहन्दरुलिन निलङ्गलिले प्रवण नाय् गुणानुभवकैङ्कर्यङ्गले पोदुपोक्काहैयुम्, इप्पडियिरुक्कुं श्रीवैष्णवर्हलेत्तमरिन्दुहन्दिरुक्कैयुम्, तिरुमन्त्रत्तिलुं द्वयत्तिलुं नियत नाहैयुम्, आचार्यप्रेमङ्कनात्तिरुक्कैयुम्, आचार्यन्पक्कलिलुं एम्बेरुमान्पक्कलिलुं कृतज्ञनाय् पोरुहैयुम्, ज्ञानमुं विरक्तियुं शान्तियुमुडैय नायिरुक्कुं परमसात्त्विकनोडे सहवासं पण्णुहैयुम्, वैष्णवाधिकारिक्कु अवश्यापेक्षितम् ॥१॥

छा॥ बाह्येषु विद्यमानानां सङ्गानां वासनया सह त्यागः,

---

वाक्यत्वं न सम्भवतीति कस्यचिदाशङ्कां निराकर्तुमेतद्ग्रन्थावतारः । मूलमन्त्रस्य स्वरूपोपायपुरुषार्थविषयकनिष्कलङ्कज्ञानजनकत्वेऽपि उपायस्य तद्विरोधिसाधनान्तरपरित्यागस्य स्वदोषानुसन्धानजनितभयनिवर्तकपुरुषकारस्यान्यस्याप्यवश्यज्ञातव्यार्थस्याप्याभिधानिकवृत्त्या प्रतिपादनेनाकांक्षाया उदयात्, रहस्यद्वयस्यापि साकांक्षता भवति । न च मूलमन्त्रस्य निष्कलङ्कज्ञानजनकत्वानुपपत्तिः, १ "धर्मे प्रतीयमाने हि वेदेन करणात्मना । इतिकर्तव्यताभागंमीमांसा पूरयिष्यति" २ "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति रीत्या व्याख्यानरूपरहस्यद्वयसहितस्य विवक्षितज्ञानजनकत्वाङ्गीकारेऽप्यनुपपत्तेरभावात् । अत्र भागवतप्रभावादिकथनं द्वयस्थचरणशब्दतात्पर्यालोचनया इत्यवधेयम् ।

---

१. श्लोकवार्तिके. | भारते आदिपर्व १-२-९३.

अस्मत्स्वाम्येवोपाय इति स्वीकारः, फलसिद्धिरवश्यंभवतीति दार्ढ्येन स्थितिः, प्राप्तित्वरा, स्थितिकालेऽभिमतदिव्यदेशेषु प्रावण्येन गुणानुभवकैङ्कर्यैः कालक्षेपः, एवं स्थितानां श्रीवैष्णवानामाधिक्यं ज्ञात्वा प्रीतिः, श्रीमन्त्रे द्वये च नियतत्वम्, आचार्यप्रेमाधिक्यम्, आचार्यविषये ईश्वरविषये च कृतज्ञत्वम्, ज्ञानविरक्तिशान्तिमता परमसात्त्विकेन सहवासकरणञ्च वैष्णवाधिकारिणोऽवश्यापेक्षितम् ॥१॥

व्या॥ (बाह्येषु विद्यमानानां सङ्गानां वासनया सह त्यागो) नाम "१ पितरं मातरं दारान्" इत्यादिप्रकारेण बाह्यविषयसङ्गा

(पितरमि) ति—शरणागतिगद्योपात्तमिदं वचनम् । २ "पितरं मातरं दारान् पुत्रान् बन्धून्सखीन्गुरून् । रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥ सर्वधर्मांश्च सन्त्यज्य सर्वकामांश्च साक्षरान् । लोकविक्रान्त चरणौ शरणं तेऽव्रजं विभो" इति। अनेन 'पितरमि' त्यादिश्लोकेन-उपायान्तरसहकारीणि स्वयं प्रयोजनतयोपेयभूतान्यत एवोभयसाधारणान्युच्यन्ते। 'सर्वधर्मांश्च' इति उपायान्तराणि कर्मयोगादीन्युच्यन्ते। 'सर्वकामांश्च साक्षरान्' इति उपेयान्तरैश्वर्यकैवल्ये उच्येते। 'सन्त्यज्य' इति सवासनत्याग उच्यते। यथोपेयान्तराणि तथोपायान्तराण्यपि स्वरूपनाशकानीत्याकूतम्। अनन्तरमाश्रयणीयविषयस्वभाव उच्यते—लोकविक्रान्तेत्यादिना। अनेन शीलादिगुणयुक्तस्य प्राप्तस्वामिनो ज्ञानादिगुणपूर्णस्य तव चरणावेवोपायत्वेनाध्यवस्यामीत्युच्यते । (पितरं मातरम्)—'२ 'मातृदेवो भव, पितृदेवो भव" इत्यादिशास्त्रेणेश्वरवन्मातापित्रोरनुवर्तनस्योपासनाङ्गत्वेन विधानादुपायान्तरसहकारिणौ, तथैतद्वियोगस्यासह्य-

१. भविष्यत्पुराणे, विहगेन्द्रसंहितायां च २२-पटले ॥
२. तै-उप. शिक्षा-११-२.

नां पुनरंकुरं विना सवासनत्यागः ।

(अस्मत्स्वाम्येवोपाय इति स्वीकारो) नाम-अन्यत्किञ्चिच्छरणमिति ज्ञानेन मिश्रीकरणं विना निरुपाधिकरक्षकस्सर्वेश्वर एव शरणमिति स्वीकारः ।

---

तया स्वयं प्रयोजनभूतौ च मातापितरौ । (दारान्)—[१] "सहधर्मचारिणी" इत्युक्ततयोपायान्तरसहकारिणी, अभिमततयोपेयान्तर्भूता च भार्या । (पुत्रान्)-पुत्राभावे पुन्नामनरकदर्शनम् भवेत्, पुत्रोत्पादनं [२] "पुन्नाम्नो नरकात्त्रायत इति पुत्रः" इतिव्युत्पत्तेस्तादृशनरकदर्शनहेतुपापविमोचनहेतुर्भवति । अतःपुत्र उपायान्तरसहकारी, तद्वियोगस्यासह्यत्वादुपेयश्च भवति । (बन्धून्)-बन्धुर्हि तस्य निन्द्यप्रवृत्तिं निवार्य सन्मार्गप्रवृत्त्यनुकूलं नियमयति । तस्मादुपायान्तरसहकारी, 'महाकुलप्रसूतः' इति अभिमानविशेषहेतुतयोपेयश्च भवति । (सखीन्)—सखाप्यस्य हितैषितयाभिमतप्रापकतया चोपायान्तरसहकारी, असह्यवियोगत्वादुपेयान्तर्गतश्च ।(गुरून्)—गुरवो हि उपायान्तराण्युद्दिश्योपकुर्वन्ति उद्देश्यभूताश्चेति उपायान्तरसहकारीणः, उपेयभूताश्च । रत्नानि धनधान्यानि क्षेत्राणि च)— साक्षादुपायान्तरसहकारीणि, अभिमततयोपेयानि च । (सर्वधर्मांश्च)—अत्र धर्मशब्देनोपायस्वरूपाः कर्मयोगादय उच्यन्ते । स्वपन्तीं प्रजां पृष्ठे समुपगुह्य शयाना मातेव, विमुखानामपि मस्तके श्रीचरणन्यसनात्-वात्सल्यमुक्तम् । अवतीर्य पुरस्थित्वा कार्यकरणात्-सौलभ्यमुक्तम् । 'ते' इति प्राप्तशेषिणोऽभिधानात्-स्वामित्वमुक्तम । 'विभो' इत्यनेन ज्ञानशक्त्यादिगुणपूर्तिरुक्ता । 'ते' इत्यत्र स्वरूपानुबन्धिलक्ष्मीसम्बन्धोऽनुसन्धेयः । तेन पुरुषकारभाव उक्तः । 'चरणौ' इत्यनेन विग्रहयोग उक्तः । 'शरणमव्रजम्' इति उपायत्वेनाध्यवस्यामीत्यर्थः । 'सर्वधर्मांश्च सन्त्यज्य' इति त्यक्तोपायान्तराणां प्रतिद्वन्द्वितया 'ते-चरणौ-शरणं-अव्रजम्' इति उपायस्वीकारःकृतः" इति गद्यत्रयव्याख्यानम् ।

(निरुपाधिकरक्षकः) इति-रक्षकतायां निरुपाधिकत्वं-उपायानपेक्षत्वम् ।

---

१ | २

एतद्वाक्यद्वयेन चरमश्लोकपूर्वार्धस्यार्थोऽप्युक्तः । कथमिति चेत्, 'बाह्यविषयसङ्गानाम्' इति, 'सर्वधर्मान्' इति पदार्थस्य, 'वासनया सह त्यागः' इति 'परित्यज्य' इति पदार्थस्य, 'अस्मत्स्वामी' ति 'मां' इति पदार्थस्य, 'एव' इत्येवकारेण एकपदार्थस्य, "उपायः' इति शरणपदार्थस्य, 'स्वीकारः' इति 'व्रज' पदार्थस्य च क्रमेणोक्तत्वात् ।

(फलसिद्धिरवश्यं भवतीति दार्ढ्येन स्थितिः) नाम-'उपाय

---

स्वतन्त्रचरमश्लोकव्याख्यानुरोधेनाह—उपायफल्यत्वामिति । अत्र वेदान्ताचार्याः न्यासतिलके १ "कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो नश्यति ब्रह्मेशादिसुदुर्लभं पदमपि प्राप्यं मया द्रागिति । विश्वासप्रतिबन्धचिन्तनमिदं पर्यस्यति न्यस्यतां रङ्गाधीश रमापतित्वसुभगं नारायणत्वं तव" इति । (महाविश्वासवत्तये) ति २ "महाविश्वासपूर्वकम्" इति लक्षणवाक्योक्तेरितिभावः । कार्यसिद्धेर्विश्वासस्यावश्यकत्वं ३ "राक्षसानामविस्रम्भादांजनेयस्य बन्धने । यथा विगलिता सद्यस्त्वमोघाप्यस्त्रबन्धना । तथा पुंसामविस्रम्भात्प्रपत्तिःप्रच्युता भवेत् । तस्माद्विस्रम्भयुक्तानां मुक्तिं दास्यति सा चिरादि" ति वचनसिद्धम् । दृढाध्यवसायस्य महात्म्यन्तु ४ "व्यवसायादृते ब्रह्मन् नासादयति तत्परम् । निस्संशयेषु सर्वेषु नित्यं वसति वै हरिः । ससंशयान् हेतुबलान्नाध्यावसति माधवः" इत्यादिप्रमाणप्रसिद्धम् । केचित्-महाविश्वासस्य प्रपत्तेरंगत्वं वदन्ति । तन्नेति वक्ष्यते ।

(फलसिद्धिरवश्यं भवतीति दार्ढ्येन स्थितिः) इत्यत्र पंचधा विश्वासप्रतिबन्धिका शङ्का सम्भाव्यत इति वदन्ति । तथा हि कथं नाम सर्वज्ञेन सर्वशक्तिना भगवतानादिकालसंचितानन्तान्मदपराधान् जानता तत्तत्फलप्रदानशक्तेनाभि-

---

१. न्यासतिलके-१९-श्लो ॥ | ३.
२. | ४.

फल्गुत्वमुद्देश्यदुर्लभत्वं स्वकृतदोषभूयस्त्वम्' इति हेतुत्रयेणागतशंकात्रयं विना 'फलमवश्यं सिध्यति' इति महाविश्वासवत्तया स्थितिः।

(प्राप्तित्वरा) नाम-एवं विश्वस्य 'फलसिद्धिसमये द्रक्ष्यामः' इति स्थितिं विना ÷ "महावैकुण्ठं द्रष्टुं मम मनो दिनगणनां करोति" × "क्रान्त्वा भूमिं गृहीत्वा स्थितयोर्विस्तृतकमलसदृशचरणयोराह्वानसमयः अद्यापि न प्राप्तः" इत्युक्तप्रकारेण क्रमप्राप्तिमगृ

---

गन्तव्यः । कथं च कर्मानुकूलफलप्रदः-तादृशापराधवतां निरतिशयपुरुषार्थं दास्यति । कथं च यथावस्थितस्वरूपज्ञानमात्रपर्यवसितया प्रपत्त्या सर्वोपकारापेक्षाविषये सकलापराधनिवृत्तिः । कथं वा जनार्दनजनकादिषु विलम्बितफलप्रदत्वेन प्रसिद्धस्यास्याभिलषितसमये एव फलप्रदत्वम् । कथं च समाधिकदरिद्रस्याश्रयितृपुरुषगततारतम्यानादरेण फलप्रदत्वमिति । अत्रापराधबहुलचेतनकृतस्याश्रयणस्य लोकदृष्ट्या प्रसक्तापराधता, तादृशेनाभिगन्तुमशक्यता वा, पुरुषकारभूतया श्रिया तान्निवर्त्यते । १"किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि" इति हि तत्कृत्यम् । स्वभरनिर्वोढृत्वाभिमानिनि कर्मानुगुणफलप्रदोऽपि न्यस्तभरे सम्बन्धवशाद्दायप्राप्तं फलं स्वत एव स्वामी दासस्य दास्यतीति अवर्जनीयसम्बन्धेन द्वितीयशङ्कावारणम् । अवाप्तसमस्तकामत्वादेवैतत्कृतमुपकारमनपेक्ष्याभिमुख्यसूचकाल्पव्यापारेणैव स्वीयनिरुपाधिककारुण्यादिवशात्सर्वापराधान् क्षाम्यतीति तृतीयशङ्का निवृत्तिः। भगवतः कर्माधीनेष्टप्रापकत्वस्य विलम्बितत्वेऽपि निरपेक्षफलप्रदत्वं निरपेक्षत्वादेवेति चतुर्थशङ्कावारणम् । समाधिकदरिद्रत्वादेव तदपेक्षया सर्वेषां तौल्यात् स्वप्रयोजनार्थमनालोचितविशेषं सर्वेषां फलप्रदः इति चरमशङ्कानिवृत्तिः । निरपायपुरुषकारादवर्ज्जनीयाच्च संबन्धात्, निरुपाधिकगुणयोगात्, व्यापाराच्चान्यहेतुनिरपेक्षात्, स्वस्यैव लाभयोगाच्छङ्का एता निवर्तन्ते । एतेषां च ज्ञानं श्रीमन्नारायणपदाभ्यां जायत इति विश्वासहेतुतया श्रीमन्नारायणपदज्ञानमावश्यकम् ।

---

÷ तिरुवाय्मोलि ९-३-७ ॥ | × तिरुवाय्मोलि-६-९-९ ॥

१. श्रीगुणरत्नकोशे-५२

हित्वा स्थितिः ।

एवमेतद्द्वाभ्यां-उपायोपेयाधिकारापेक्षितमहाविश्वासप्राप्यत्वरे अभिधीयेते ।

(स्थितिकालेऽभिमतदिव्यदेशेषु प्रावण्येन गुणानुभवकैंकर्यैः कालक्षेपो) नाम-परमपदं गत्वा भगवदनुभवकैंकर्यकरणरूपपुरुषार्थविषये त्वरायां विद्यमानायामपि एतच्छरीरेण वर्तमानकाले ❀"स्वाभिमतग्रामः" इत्युक्तप्रकारेण सर्वेश्वरेण प्रीत्यास्वीकृतेषु दिव्यदेशेषु + "कण्डियूररङ्गमेय्यं कच्चि पेर्मल्लै" इत्युक्तप्रकारेण प्रावण्येनतेषु दिव्यदेशेषु स्थितस्यभगवतः कल्याणगुणानुभवः, तन्निमित्ततयागतं करणत्रयेण तद्विषये क्रियमाणं कैंकर्यमेव कालक्षेपकरणम् ।

(एवं स्थितानां श्रीवैष्णवानामाधिक्यं ज्ञात्वा प्रीति) र्नाम–पूर्वोक्तास्सर्वे आकारविशेषाः येषां सन्ति, तादृशान् श्रीवैष्णवान्दृष्ट्वा हसन्तिकायां कमलविकासवत् अस्यां विभूतौ एतादृशाः केचन तिष्ठन्तीति तेषां वैभवं ज्ञात्वा तद्विषये प्रीतिः । पूर्वोक्तानां सर्वेषां विद्यमानत्वेऽपि तदेकमतिदुर्लभं खलु ।

---

(सर्वेश्वरेण प्रीत्ये) ति–अत्र लघुसिद्धान्तश्रुतप्रकाशिकासूक्तिरनुसन्धेया– "पुण्यक्षेत्रादिषु भगवतः प्रीतिस्स्वस्मिन्प्रीतिमत्पुरुषवरणार्था" इति। (गुणानुभवः) इति अविशेषेण गुणशब्दप्रयोगात् सौन्दर्यादिविग्रहगुणानां, सौशील्याद्यात्मगुणानां च लाभः ।

---

❀ तिरुनेडुन्ताण्डके-६ ॥ | + तिरुक्कुरुन्ताण्डके-१९ ॥

(श्रीमन्त्रे द्वये च नियतत्वं) नाम-मन्त्रान्तराणां समीपे वि-स्मृत्यापि अगमनार्थं त्याज्योपादेयानि स्पष्टं ज्ञापयति श्रीमन्त्रे, तदर्थविवरणभूते द्वये च निष्ठा ।

(आचार्यप्रेमाधिक्यम्) नाम-पूर्वोक्तान्सर्वान्स्वभावानुपदेशे-

---

(श्रीमन्त्रे द्वये चे) ति, अत्र "समन्त्ररत्नद्वयमाह" इत्यत्रेव द्वयपदस्य र-हस्यद्वयपरत्वं बोध्यम् । अत एवाविशेषेण "तदर्थविवरणभूते द्वये च" इति व्याख्या-तम् । अथवा मध्यमरहस्यस्य खण्डद्वयात्मकत्वेन द्वयपदवाच्यत्ववत्, चरमश्लोकस्या-र्धद्वयात्मकत्वेन द्वयपदवाच्यत्वम् । तथा च द्वयशब्देन द्वयचरमश्लोकयोरुभयोःकीर्तनं बोध्यम् । ननु अग्रे "अस्याधिकारिणो रहस्यत्रयं चानुसन्धेयम्" इत्यनुगृहीष्यमाण-त्वात् पौनरुक्त्यमिति चेन्न, अत्रान्याबाध्यत्वज्ञानाय ज्ञातव्यमित्युक्तत्वात्, अग्रे ए-तादृशज्ञानवर्धकत्वेनानुसन्धानस्य विहितत्वेन पौनरुक्त्यभावात् ।

द्वयप्रकरणे गुरूपसत्त्यादेरनुक्त्या नास्य रहस्यत्वमिति शंकां वारयितुमाह—**आचार्यप्रेमेति** । १ " मन्त्रराजमिमं विद्याद्गुरुवन्दनपूर्वकम् । " २ "गुरुरेव परब्रह्म गुरुरेव परागतिः । गुरुरेव परा विद्या गुरुरेव परायणम् । गुरुरेव परःकामो गुरुरेव परं धनम् । यस्मात्तदुपदेष्टासौ तस्माद्गुरुतरो गुरुः;' ३ "नानुकूल्यं न नक्षत्रं न तीर्थादिनिषेवणम् । न पुरश्चरणं नित्यं जपं वापेक्षते ह्ययम्" ४ "नमस्कृत्य गुरुं दीर्घप्रणामैस्त्रिभिरादितः । तत्पादौ गृह्य मूर्ध्नि स्वे निधाय विनयान्वितः । गृह्णीया-न्मन्त्रराजानं निधिकांक्षीव निर्धनः । लब्ध्वैनं मन्त्रराजनं मां गच्छेच्छरणं नरः" ५ " अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति " इति प्रपत्तिमन्त्रान्तरेषूक्तगुरूपसत्त्यादिकं प्रपत्तिमन्त्रत्वसामान्यात् ६"यदृच्छया श्रुतो मन्त्रश्छन्नेनाथ छलेन वा । पत्रेक्षितो वा व्यर्थस्स्यात् प्रत्युतानर्थदो

---

| | |
|---|---|
| १. पांचरात्रे ॥ | ४. |
| २. अद्वयतारकोपनिं ॥ | ५. शेषसंहितायाम् ॥ |
| ३. | ६. |

न स्वस्य संपादितवत्याचार्ये ×"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इत्युक्तप्रकारेण प्रेमातिशयः।

(आचार्यविषये ईश्वरविषये च कृतज्ञत्वं) नाम-नित्यसंसारिणं

भवेत्" इति गुरूपदेशराहित्ये मन्त्रस्य निष्फलत्वोक्त्यापोक्षितमतिदिश्यते" इति रहस्यत्रयसारे। "विशेषतोऽस्य मन्त्रस्य वैभवप्रकरणे च "गुरुरेव परं ब्रह्म" इत्यादिश्रूयते" इति तत्वदीपे। पाद्मोत्तरे १ "यस्तु मन्त्रद्वयं सम्यगध्यापयति वैष्णवः। आचार्यस्स तु विज्ञेयो भवबन्धविमोचकः" इति द्वयोपदेष्टुरेवाचार्यत्वाभिधानात्, तत्रैव विशिष्यमन्त्रान्तरोपदेष्ट्रपेक्षया प्रेमावश्यकमिति बोध्यम्।

अथवाचार्ये मनुष्यत्वादिप्रतिपत्तेरपचारतया तस्यातिशयितक्रौर्यज्ञापनाय पृथक्तन्निवृत्तिं प्रदर्शयितुमाह—आचार्येति। तदुपदिष्टे मन्त्रे मन्त्रान्तरतौल्यबुद्धिरपि तदपचार एवेति पूर्ववाक्यमप्येतद्वाक्यतुल्ययोगक्षेमम्। तदनुगुणं प्रमाणं दर्शयति—यस्येति। श्वेताश्वतरोपनिषदि "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति। अस्यार्थः श्रुतप्रकाशिकाविवरणे अस्मत्प्राचार्यैर्वर्णितः—"अयमर्थः देवे-निरुपाधिकदेवभूते नारायणे, परा भक्तिः-प्रथमपर्वनिष्ठानां यथा स्यात्, तथा देवे गुरौ—साक्षाद्देवभूते आचार्ये, यस्य स्यात्, २"विधयश्च वैदिकास्त्वदीयगम्भीरमनोऽनुसारिणः" इति वेदापेक्षयापि अतिगम्भीरमनस्कस्य तस्य महात्मनः एते कथिता ह्यर्थाः प्रकाशन्त इत्यन्यत्र विस्तरः" इति, "अत्र श्रुतिवाक्ये यस्य-पुरुषस्य, देवे—आचार्योपकारकतया परदेवतारूपे, भक्तिर्वास्यात्, आचार्योपकारत्वलक्षणगौरवातिशयानुगुण्येन प्रथममुत्कटा स्यात्, तदनन्तरं देवे यथा भक्तिः—उपकार्यवस्तुगौरवानुगुण्येनाभूत्, तथा गुरावपि ईश्वरोपकारकत्वलक्षणगौरवानुगुण्येन गुरावपि परा भक्तिःस्यात्, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः इति योजनाविशेषः" इति च। अत्र—

× श्वेताश्वतरे-६-२३॥

१. पाद्मोत्तरे.

२. स्तोत्ररत्ने-२०॥

*"मन्त्रनाथं गुरुं मन्त्रं समत्वेनानुभावयेत् ।" १. "न वैराग्यात्परो लाभो न बोधादपरं सुखम् । न गुरोरपरस्त्राता न संसारात्परो रिपुः "२" साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्नानुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना" ३ "आचार्यस्स हरिस्साक्षाच्चररूपी न संशयः" ४ "आचार्यं मां विजानीयात्" ५ "आचार्यस्य प्रसादेन मम सर्वमभीप्सितम् । प्राप्नुयामिति विश्वासो यस्यासीत्स सुखी भवेत्" "६ येनैव गुरुणा यस्य न्यासविद्या प्रदीयते । तस्य वैकुण्ठदुग्धाब्धिद्वारकास्सर्व एव सः" इत्यादीनि प्रमाणान्यनुसन्धेयानि । आचार्यप्रेमरहितानां त्याज्यत्वं स्मर्यते ७" ऐहिकामुष्मिकं सर्वं ममाष्टाक्षरदो गुरुः। इत्येवं ये न मन्यन्ते त्यक्तव्यास्ते मनीषिभिः" इति ।

अत्राचार्यशब्दः—स्वाचार्यमारभ्य प्रथमाचार्यपर्यन्तगुरुवंशपर इत्याहुः । तत्रापि प्रेमाधिक्यस्यावश्यकत्वात् । तथोक्तं तत्वदीपे "स चाचार्यवंशो ज्ञेयः आचार्याणामसावसावित्याभगवत्तः" इति श्रुत्या च स्वाचार्यादिपरमगुरुभूतभगवत्पर्यन्तं गुरुपरंपरायाः प्रत्येकानुसन्धेयत्वं विधीयते । भाष्यकारेणापि "गुरुपरंपरया परमगुरुं भगवन्तं प्रणम्य" इति नित्योऽभिधीयते" इति ।

अनेन—गुरुपरंपरायाः स्वाचार्यादिभगवत्पर्यन्तारोहक्रमानुसन्धानत्वेनानुगृहीतत्वात्, तथैव शिष्टाचाराच्च तत्प्रकारानुसन्धानस्यैवादरणीयत्वमन्यप्रकारस्यानादरणीयत्वंचोक्तं भवति । तथा हि गुरुपरंपरानुसन्धानस्यारोहावरोहक्रमरूपेण "लक्ष्मीनाथसमारम्भाम्" "अस्मद्गुरुभ्यो नमः" इत्यादिवचनासिद्धत्वात्, द्वयाद्यनुसन्धानदशायां आरोहक्रमस्य, प्रबन्धरहस्यव्याख्यानाद्यारम्भवेलायां अवरोहक्रमस्य च सदाचार्यसज्जनसम्मतत्वात्, तस्य "नाथं पङ्कजे" त्यादिश्लोकसिद्धत्वात्, एकरूपत्वाङ्गीकारे वचनविरोधस्य दुष्परिहरत्वापातात्, "आचार्याणामसावसावित्याभगवत्तः "गुरुपरम्परया परमगुरुं भगवन्तं प्रणम्य" इति श्रुत्याचार्यवचनशतसिद्धत्वाच्च अयमेव-

| | |
|---|---|
| * पांचरात्रे ॥ | ४. भागवते-११-१७-२७ ॥ |
| १. | ५. रामायण माहात्म्ये-३-४० ॥ |
| २. जयाख्यसं० -६४ ॥ | ६. रामा-मा-३-४१ ॥ |
| ३. | ७. |

स्वं नित्यसूरिप्राप्यफलयोग्यो यथा भवति तथाऽयस्सुवर्णकर्तृवत् शिक्षितवत्याचार्ये, अद्वेषादीन्वर्धयित्वाचार्यविषयेण घटयति भगवति चोपकारस्मृतिः ।

क्रमस्सत्संप्रदायसिद्ध इत्याहुः । विस्तरेण गुरुपरम्परानुसन्धानक्रमावल्याख्यग्रन्थे द्रष्टव्यः ।

आचार्यलक्षणं वेदान्ताचार्यैर्न्यासविंशतावुक्तं-१ "सिद्धं सत्संप्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठं सत्वस्थं सत्यवाचं समनियमतया साधुवृत्त्या समेतम् । डम्भासूयादिमुक्तं जितविषयगणं दीर्घबन्धुं दयालुं स्खालित्ये शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत्" इति । तथा द्वयोपदेष्टुर्लक्षणं-पाद्मे पुराणे चोक्तम्—२ "आचार्यं संश्रयेत्पूर्वं मदाश्रयणसिद्धये ॥ आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयः शुचिः ॥ सत्संप्रदायसंयुक्तो ब्रह्मविद्याविशारदः । अनन्यसाधनश्चैव तथानन्यप्रयोजनः ॥ ब्राह्मणो वीतरागश्च क्रोधलोभविवर्जितः । सद्वृत्तौ शासिता चैव मुमुक्षुःपरमार्थवित् ॥ एवमादिगुणोपेत आचार्यस्समुदाहृतः" इति ।

अत्र विप्रस्यैवाचार्यत्वकथनात् अन्येषां तदभावात्, द्वयोपदेष्टृत्वादिकं तस्यैवेति सिद्धम् । तदुक्तं भरद्वाजसंहितायां-३ "प्रपत्स्नुर्मन्त्रनिरतं प्राज्ञं हितपरं शुचिम् । प्रशान्तं नियतं वृत्तौ भजेद्द्विजवरं गुरुम् ॥ सप्तपूरुषविज्ञेये सन्ततैकान्तनिर्मले । कुले जातो गुणैर्युक्तो विप्रः श्रेष्ठतमो गुरुः ॥ स्वयं वा भक्तिसम्पन्नो ज्ञानवैराग्यभूषितः । स्वकर्मनिरतो नित्यमर्हत्याचार्यतां द्विजः" इति । आर्तप्रपन्नानां जात्यपगमत्वस्य सिद्धान्तेऽङ्गीकारात् तेषामाचार्यत्वं सिद्धम् । दृप्तानान्तु नेति बोध्यम् । अयमर्थः श्रीवचनभूषणादिषु ज्ञेयः।

(नित्यसंसारिणामि) त्यादि- ४ "आत्मनो ह्यतिनीचस्य योगिध्येयपदार्हताम् । कृपयैवोपकर्तारमाचार्यं संस्मरेत्सदा" ५ "स्वयंदेहानुकूलानि धर्मार्थोपचि-

१. न्यास. १ ॥
२. पाद्मोत्तरे-२२-३-५०,५१,५२॥
३. भारद्वाजसं-१-३८,३९ ॥
४. भारद्वाज सं. ३-९१ ॥
५.

# (ज्ञानविरक्तिशान्तिमता परमसात्विकेन सहवासकरणम् )नाम-

तानि च । कुर्यादप्रतिषिद्धानि गुरोः कर्माण्यशेषतः" १ "दण्डवत्प्रणमेद्भूमौ उपेत्य गुरुमन्वहम् । दिशे वापि नमस्कुर्याद्यत्रासौ वसति स्वयम् ॥ आचार्यायहरेदर्थानात्मानं च निवेदयेत् । तदधीनश्च वर्तेत साक्षान्नारायणो हि सः ॥ कुर्वीत परमां भक्तिं गुरोस्तात्प्रियवत्सलः । तदनिष्टापवादी च तन्नामगुणहर्षितः ॥ नित्यं गुरुमुपासीत तद्वचश्श्रवणोत्सुकः । विग्रहालोकनपरस्तस्यैवाज्ञाप्रतीक्षकः ॥ प्रक्षाल्य चरणौ पात्रे प्रणिपत्योपयुज्य च । नित्यं विधिवदर्घ्याद्यैराद्दतोऽभ्यर्चयेद्गुरुम् ॥ इच्छाप्रकृत्यनुगुणैरुपचारैस्सदोचितैः । भजन्नवहितश्चात्र हितमावेदयेद्रहः" ॥ २ "शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत्" ३ "शरीरं वसु विज्ञानं वासः कर्म गुणानसून् । गुर्वर्थं धारयेद्यस्तु स शिष्यो नेतरस्स्मृतः" इत्यादिप्रमाणानि भाव्यानि ।

"गुरुरेव परं ब्रह्म" इत्यादिप्रमाणगतं गुरुपदमपहायाचार्यपदोक्तिः-गुरु लक्षणं सूचयन्नुपकारातिशयं दर्शयति । गुरुशब्दो हि ज्ञानमात्रं बोधयति । आचार्यशब्दस्तु अनुष्ठापकम् । ४"विश्वात्मन्यात्मनो व्यासं धिया वृत्तिं च शाश्वतीम् । मन्त्रेणोच्चारयेद्यस्तु स आचार्यः परो मतः" ५ "आचिनोति हि शास्त्रार्थानाचारे स्थापयित्यपि । स्वयमाचरते यस्मादाचार्यस्समुदाहृतः" ६ "सामान्यतो विशेषाच्च यस्तु धर्मानशेषतः । आचिनोति स आचार्यस्तस्मै द्रुह्येन्न किंचन" ७ "यस्माद्धर्मानाचिनोति स आचार्यः" इत्यादिनिरुक्तेः ।

"ईश्वरस्य च सौहार्दं यदृच्छासुकृतं ततः । विष्णोःकटाक्षमद्वेषमाभिमुख्यं च सात्विकैः । संभाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः" इत्यादिवचनार्थमभिप्रेत्याह—

**अद्वेषादीनिति ।**

**(ज्ञाने)** ति ८ "वृद्धानाचारसंपन्नान्विष्णुभक्तान्दृढव्रतान् । सततस्सत्सेवनपरा-

१. भारद्वाज सं.३-८२,८३,८४,८५,८६,८७॥
२. विहगेन्द्र सं-२२ ॥
३. रामायण माहात्म्ये-३-३९ ॥
४. भारद्वाज सं.-१-४५
५. लैंगे-उत्त-१०-१६ ॥
६.
७.
८. भारद्वाज सं.३-९९ ॥

स्वस्य कालुष्येऽपि कालुष्याभावेन रक्षणार्थं पूर्वोक्ताकाराणां स्वस्य वर्धनार्थं च तत्त्वयाथात्म्यज्ञानम्, अप्राप्तविषये विरक्तिः, 'एतदुभयमपि ममास्ति' इति गर्वराहित्यरूपशान्तिश्च यस्य तेन परमसत्त्वनिष्ठेन केनचिद्भागवतेन सह मिलित्वा वर्तनम् ।

(वैष्णवाधिकारिणोऽवश्यापेक्षितम्) नाम-एतानि सर्वाण्य-

---

न्नित्यं सेवेत सन्नतः" १ विशिष्टः परमैकान्ती ज्ञानवैराग्यभक्तिभिः । तादृशैरेव कुर्वीत सह संकथनादिकम्" २ "सङ्गस्सर्वात्मना त्याज्यः स चेत्यक्तुं न शक्यते। सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गमम् । सद्भिर्विवादं मैत्रं च नासद्भिः किंचिदाचरेत्" इत्यादीन्यत्रानुसन्धेयानि । अत्र शान्तिस्तु अहङ्कारममकारनिवृत्तिः, न तु इन्द्रियनिग्रहः, विरक्तेः पृथगुक्तेरित्याशयेनाह-एतदुभयमि ति। (गर्वे) ति "गर्वोऽभिमानोऽहङ्कारः" ॥ (परमसत्त्वनिष्ठेन)-निष्कृष्टसत्वनिष्ठेन, न तु मिश्रसत्वनिष्ठेनेत्यर्थः । मिश्रसत्वनिष्ठस्यं सत्वस्य सुकृततारतम्येनागतत्वात्, 'कारणनाशे कार्यनाशः' इति न्यायेन पूर्ववत् संसरणे प्रवृत्तिस्स्यात् । ३ "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः" इति भगवत्कटाक्षविशेषकारणजन्यसत्त्वनिष्ठस्य तु तदभावात् ।

४" स महात्मा सुदुर्लभः" ५ "सारज्ञो यदि कश्चिदस्ति भुवने नाथः" इतिवदेकवचननिर्देशः ॥

(वैष्णवः) इति-अत्र ६ "मुनयस्सत्त्वनिष्ठानां लक्षणानि निबोधत । विष्णोर्दास्यैकफलता तदेकोपायता स्थितिः ॥ तदाज्ञाकरणे प्रीतिस्तत्कर्मगुणकीर्तनम् । तच्चिह्नाङ्कितदेहत्वं तदीयाराधने रतिः ॥ तदन्यस्पर्शवैराग्यमिन्द्रियार्थेष्वलोलता ।

---

१. भारद्वाज सं.-४-७७ ॥
२. मार्कण्डेये ॥
३. भारते-शा-मो-३५८-७२॥
४. गीता-७-१९ ॥
५. रहस्यत्रयसारे-२-९॥
६. भारद्वाज सं.५-२९,३०,३१,३२,३३ ॥

पि 'वैष्णवः' इति स्थितस्याधिकारिणोऽवश्यापेक्षितानीत्यर्थः॥१॥

(२). एवं स्थितस्यानुसन्धानुविषयं विभज्याहोपरिष्टात्—अस्येत्यारभ्य।

मू॥ इन्दवधिकारिक्कु रहस्यत्रयमुमनुसन्धेयम् ॥२॥

छा॥ अस्याधिकारिणः रहस्यत्रयञ्चानुसन्धेयम् ॥२॥

व्या॥ पूर्वोक्ताकारविशिष्टस्यास्याधिकारिणः—तादृशज्ञानानुष्ठानवर्धकरहस्यत्रयं चानुसन्धानविषयो भवतीत्यर्थः ॥२॥

(३). इतःपरं द्वयोक्तार्थाधिक्यं ज्ञापयितुं, शास्त्रेण श्रीमन्त्रेण चरमश्लोकेन चोक्तप्रकारान्वदन्, अनन्तरं तमाह-सर्वप्रमाणैरिति।

मू॥ एल्लाप्रमाणङ्गलिलुं देहत्ताले पेरेन्गिरदु। तिरुमन्त्रात्तिलात्मावाले पेरेन्गिरदु। चरमश्लोकत्तिल् ईश्वरनाले पेरेन्गिरदु। द्वयत्तिल् पेरियपिराट्टियाराले पेरेन्गिरदु ॥ ३ ॥

छा॥ सर्वप्रमाणेषु देहेन पुरुषार्थ इत्युच्यते। श्रीमन्त्रे आत्म-

---

आचार्याधीनवृत्तित्वमाचार्यार्थात्मवृत्तिता ॥ क्रोधलोभमदालस्यमानमोहविहीनता। सत्यशौचदयाधैर्यक्षमासन्तोषयुक्तता ॥ इत्येतैर्लक्षणैर्युक्ता वैष्णवा वीतकल्मषाः। सभाज्या दर्शनेनैव नावज्ञेयाः कदाचन ॥" इत्यनुसन्धेयम्। "बाह्येषु" इति-तदन्यस्पर्शवैराग्योक्तिः। अन्यशब्दस्साधनान्तरपरोऽक्षरपरो वा। 'इन्द्रियार्थेषु' इति पृथगुक्तेः। 'तदेके' ति उपायवरणस्य, वृतोपायपरिपालनस्योक्त्या वाक्यद्वयतदर्थकथनम्। 'विष्णोर्दास्यैके' त्येकशब्देन प्रयोजनान्तरव्यवधानव्यवच्छेदात् प्राप्यत्वरोक्ता। 'तदाज्ञाकरणे' इत्यादिनोक्तोऽर्थः-'स्थितिकाले' त्यत्रोक्तः। 'तदीयाराधने' इति 'एवं स्थितानाम्' इत्यनेन विवृतम्। 'आचार्यधीने' त्याचार्यप्रेमतदुपदिष्टमन्त्रे अत्यन्ताभिरतिश्चेति बोध्यम् ॥१॥

ना पुरुषार्थ इत्युच्यते । चरमश्लोके ईश्वरेण पुरुषार्थ इत्युच्यते । द्वये महालक्ष्म्या पुरुषार्थ इत्युच्यते ॥ ३ ॥

व्या॥ चेतनविशिष्टवेषविषयेषु सकलशास्त्रेषु साधनानुष्ठान-

(चेतनविशिष्टवेषे) ति—कर्मज्ञानभक्तिप्रतिपादकानां शास्त्राणां विशिष्ट-देहसाध्यसाधनविशेषबोधकतया पुरुषार्थस्य देहाधीनत्वं तत्र बोध्यत इति भावः। अत्र सर्वशब्दो मन्त्रानुविधायिप्रमाणपरः। १ "कर्म ज्ञानं च भक्तिश्च इति शास्त्रव्यपाश्रयाः। उपायश्चाप्यपायश्च शास्त्रीया निर्मिता मया" इत्यादौ भगवदातिरिक्तसाधनबोधकशास्त्राणामेव शास्त्रपदेन व्यवहारदर्शनात्, इहापि तथा व्यवहारः। न च तेषु कर्मादीनामेव साधनत्वोक्तेरनुक्तोपालम्भः। २ यज्ञःकर्म समुद्भवः। कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्" इत्युक्तेः। इत्थं हि तत्र भाषितम्—"अन्नपानादिना तृप्ताक्षराधिष्ठितं शरीरं कर्मणे प्रभवतीति कर्मसाधनभूतं शरीरमक्षरसमुद्भवम्" इति। ३"शरीरयात्रापि च ते" इत्यत्र भाष्यम्-"ज्ञाननिष्ठस्य, ज्ञाननिष्ठोपकारिणी शरीरयात्रापि न सेत्स्यति" इति। ४ "उषस्तिःकिल चाक्रायणो ब्रह्मविदग्रेसरो मटचीहतेषु कुरुषु दुर्भिक्षदूषितेषु इभ्यग्रामे वसन्ननशनेन प्राणसंशयमापन्नः ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकांक्षमाणः" इति च सर्वान्नानुमत्याधिकरणभाष्यम्। अतोऽन्यत्रोपक्रान्तसाधनस्यापि यावत्साधनसमाप्ति तदुपकारकं शरीरं रक्षणीयमिति तत्रतत्राभिहितमिति शरीराधीनता फलस्य बोध्यत इति सुवचम्। इह पुनरुपक्रान्ते साधनेन किंचित् कर्तव्यमवशिष्यत इति न फलाय शरीरधारणापेक्षेति विशेषः। एतेनाचार्योपसत्यादेः शरीरसाध्यत्वादिहापि शरीरापेक्षावशिष्टेति निरस्तम्। प्रपत्तेःकायिकव्यापारत्वाभावान्न शरीरापेक्षा। भक्तेरपि तथात्वेऽपि तदङ्गभूतानां केषांचित् कर्मणां शरीरसाध्यत्वात्तदपेक्षेति विशेषः। कायिक्या अपि प्रपत्तेस्साधनत्वेऽपि तदभावेऽपि फलसम्भवान्नियमतो न शरीरापेक्षेत्याशय इत्यन्ये। शरीरगतब्राह्मण्यादिवि-

१. लक्ष्मीतन्त्रे-१७-४९ ॥
२ गीता-३-१४ ॥
३. गीता-३-८ ॥
४. श्रीभाष्ये-२-४-२८ ॥

योग्येन देहेनास्य पुरुषार्थलाभ इत्युच्यते । निष्कृष्टवेषविषये श्रीमन्त्रे अस्य स्वरक्षणाद्धस्तसंकोचं विना ईश्वरस्य रक्षकत्वं न जीवति, तस्मात्तत्प्रवृत्तिविरोधिस्वप्रवृत्तिं त्यजतात्मना पुरुषार्थलाभ इत्युच्यते । ईश्वरस्वातन्त्र्यविषयचरमश्लोके एतस्य स्वीकारो यथाधिकस्स्यात्, तथा स्वयमेव हस्तेन गृहीत्वा प्राप्तिप्रतिबन्धकसकलपापान्दूरीकृत्य स्वचरणारविन्दे प्रापयतेश्वरेण पुरुषार्थलाभ इत्युच्यते । ईश्वरलक्ष्मीविशिष्टवेषविषये द्वये विशेषणभूतया लक्ष्म्या पुरुषार्थलाभ इत्युच्यत इत्यर्थः ॥ ३ ॥

---

शेषस्याप्यधिकारतया तत्र साधनतोक्ता, न त्विहेति विशेष इत्यपरे । शरीरगतब्राह्मण्यादिप्रयुक्तानां कर्मणां मोक्षौपयिकतायास्तत्राभिधानात्, इह तेषां कैङ्कर्यत्वोक्त्या फलार्थत्वानुक्तेर्विशेष इति इतरे ।

(आत्मना पुरुषार्थलाभः) इति-श्रीमन्त्रे मध्यमपदेन नमनबोधनपूर्वकं तृतीयपदेन पुरुषार्थबोधनात्, स्वीकारपुरुषार्थयोस्साध्यसाधनभावावगमात्, स्वीकर्तृत्वस्यात्माधीनत्वं सिद्धम्, तस्मात्तेन पुरुषार्थलाभ इत्यनुगृहीतम् । (स्वप्रवृत्तिं त्यजते) ति-स्वीकार उच्यते । तथा वक्ष्यते ।

(लक्ष्म्या पुरुषार्थलाभः)-पुरुषकारभूतया लक्ष्म्या पुरुषार्थलाभ इत्यर्थः ॥

ननु-सकलशास्त्रस्यापि देहविशेषविशिष्टवेषेणैव पुरुषार्थसाधकत्वप्रतिपादने सर्वशास्त्रप्रतिपाद्यार्थविरुद्धकेवलपरार्थरूपापूर्वार्थस्य मूलमन्त्रेण प्रतिपादनासम्भवात्, सर्वशास्त्रविरोधप्रसङ्गः । किंच पूर्वं मूलमन्त्रस्योत्कर्षसाधनाय सर्वशास्त्रसंग्रहत्वप्रतिपादनात् परस्परविरुद्धार्थकत्वे संग्रहविवरणभावानुपपत्त्योत्कर्षस्यैवासिद्धिप्रसङ्गः, इति चेत् ।-उच्यते, मूलमन्त्रव्यतिरिक्तसर्वशास्त्राणां पुरस्फूर्तिकतया वा चेतनदोषेण वा ब्राह्मण्यादिविशिष्टस्य साधनानुष्ठानयोग्यता, तस्यैव पुरुषार्थसार्थक्यमिति प्रतीयते । मूलमन्त्रेतु प्रथमत एव प्रणवनमश्शब्दाभ्यां शेषत्वपरतन्त्रत्वयोः प्रतीत्या उभयोर्भिन्नार्थप्रतिपादकत्वमङ्गीकार्यम् । अथापि मूलमन्त्रस्य प्रमाणबलादुत्कर्षससम्भव-

(४.) ईश्वरस्योपायत्वात्, अनया पुरुषार्थलाभः कथमिति शंकायामाह-महालक्ष्म्येति ॥

त्येव । न च संग्रहविवरणभावानुपपत्तिः, १. "ऋचो यजूंषि सामानि" इत्यादिप्रबल-प्रमाणबलेन सर्वशास्त्राणां मूलमन्त्रैकवाक्यतया योजनायां २"वदन्ति सकला वेदाः" इति न्यायेन मूलमन्त्रप्रतिपाद्यार्थविशदीकरणत्वरूपाविवरणत्वस्यापि सम्भवात् । ननु मूलमन्त्रापेक्षया चरमश्लोकस्याधिक्यमयुक्तम् । चरमश्लोकस्य मूलमन्त्रविवरणत्वेन वि-वरणापेक्षया विवरिणः मुख्यत्वादिति चेत्, सत्यम् । मूलमन्त्रे प्रणवेन शेषत्वं प्रतिपाद्य, पुनरपि मकारेण प्रसक्तस्य ज्ञातृत्वादेर्नमश्शब्देन परातन्त्र्यं प्रतिपाद्य तन्निषेधात्, तस्यैव भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिरूपस्योपायोपरंजकविशेषणस्य मुख्यतया प्रतिपादनात्, तस्य च विशेषणस्य चेतनप्रवृत्तिबोध्यत्वावगमाच्च । चरमश्लोके च एकशब्देन चेत-नप्रवृत्तिनैरपेक्ष्यस्य कण्ठतः प्रतिपादनेनोपायोपरंजकविशेषणभूतचेतनस्वरूपनैरपेक्ष्ये-णापि केवलेश्वरस्वातन्त्र्यस्य कार्यकरत्वप्रतिपादनेन तस्याधिक्यमस्त्येव । तावता मूलमन्त्रस्य नापकर्षत्वसम्भवः । तदुपबृंहणरूपचरमश्लोकवैभवस्य मूलमन्त्र एव पर्य-वसानसम्भवात् । तस्मान्न काप्यत्र ग्रन्थानुपपत्तिरिति ॥ ३ ॥

(ईश्वरस्योपायत्वादि) ति ।-श्रिय उपायविशेषणत्वेऽपि पुरुषकार-त्वमेवेति सम्प्रदायः । न चैषोऽपि युक्तः । पुरुषकारस्य भगवत्प्रसादसाधनत्वे शरणा-गतिवैयर्थ्यात् । "प्रायो गुणवशादेष कृतस्सर्वत्र देहिनाम् । सर्वेषां साधयत्येव तां-स्तानर्थानभीप्सितान्" इतिन्यायेन समस्तकल्याणगुणोदधौ भगवति अनुष्ठितायाश्श-रणागतेः फलाव्यभिचारावश्यंभावात्, शास्त्रविहितसाधनवत्यपि घटकापेक्षायामति-प्रसङ्गाच्च । न च गुरुसाधनसाध्यस्य लघुना साधनेन तथा, द्वादशवार्षिकाद्यशक्तस्य सेतुस्नानादिना तत्फलसाधने तद्दर्शनात् । घटकवरणस्य चाङ्गत्वे १"न्यासःपंचाङ्ग-संयुतः" इति वचनविरोधात् । २ प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते" इति पं-

१. वृद्धहारीतस्मृतौ-६-४८ ॥ | २. श्रीवाञ्छिपुरनाम्बिकारिका ॥

चकातिरिक्तानपेक्षाप्रतीतेः । न च तत्सर्वफलार्थप्रपत्तिसाधारणम्, पुरुषकारवरण मोक्षार्थप्रपत्यसाधारणमिति युक्तम् । ३ "तिरुमालैक्कै तोलुवरि" त्यादिसूक्तौ सर्वाधिकारिणं पुरुषकारपुरस्करणप्रतीतेः । असाधारण्ये उत्तरार्द्धवैयर्थ्यापत्तेः । ४ "पूर्णमङ्गैरुपाङ्गैश्च" इत्यत्रापि तदनुक्त्यनुपपत्तेश्च । पुरुषकारसापेक्षत्वे च निरपेक्षरक्षकत्वहानिः । तदुद्भूतवात्सल्यादिगुणविशिष्टस्योपायत्वे उपायत्वस्य सिद्धत्वहानिः । अस्तु वा पुरुषकारापेक्षा, तथापि विभीषणस्य ५ "निवेदयत मां क्षिप्रम्" इति सुग्रीवादीनां घटकतया वरणदर्शनात्, अत्राप्यन्यासां देवीनां सूरीणामाचार्यस्य चात्यन्तोपकारस्य घटकत्वसम्भवान्न नियमेन श्रियो वरणं पुरुषकारत्वेनेति । अतोद्वयोक्तं श्रियस्साधनत्वमनुपपन्नमिति शङ्काभिप्रायः ।

अयमाशयः–सत्यं; न भगवतुल्यवत् समुच्चित्य वा विकल्पेन वा लक्ष्म्यास्साधनत्वं सम्भवति । तथाप्यस्त्येव पुरुषकारतारूपं साधनत्वम् । चेतनापराधदर्शनसहकृतस्वातन्त्र्यतिरोहितवात्सल्याद्युद्भावकत्वेन च पुरुषकारस्य सार्थक्यम् । वात्सल्याद्युद्भावाभावे 'मदीयोऽयम्' इति स्वीकारस्यासिद्धेः फलासिद्धिप्रसङ्गः । जाते स्वीकारे न पश्चादन्यदपेक्ष्यत इति नोपायनैरपेक्ष्यव्याघातः । उपायस्य सिद्धत्वं प्रथमप्रकरणे प्रपंचितम् । तृतीयप्रकरणे च प्रपंचयिष्यते । अन्यत्र घटकानपेक्षायामपि अत्र वचनात् घटकापेक्षणमिति नातिप्रसङ्गः । एतदेवास्य भक्त्यादिवन्न साधनत्वमिति वा लक्ष्मीभरन्यासयोरुभयोरेव भगवदुपायभावहेतुत्वमिति वचनादभ्युपगम्यते । "प्रपत्तेः क्वचिदप्येवम्" इति विहितव्यतिरिक्तविषयत्वात् कर्माद्यपेक्षाभावमात्रप्रतिपादनपरमिति न तद्विरोधः । घटकत्वेन यत्किंचिद्वरणे कर्तव्ये यत्सङ्कल्पो नियमतः फलायापेक्षितः, तस्या भगवदत्यन्ताभिमताया वरणमेवोचितम् । वाचनिकंचेति न साधारण्यम् । स्वाधीनश्रीसापेक्षत्वं न भगवतस्स्वातन्त्र्यविरोधीति ६ "स्वतःश्रीः" इतिश्लोके व्यक्तम् । तदिदं सर्वमुक्तं दीपसंग्रहे–"भवेत्पुरुषकारस्तु शरण्यावर्जनाय चेत् । न भवेच्छरणागत्या तद्वशीकरणक्रिया । शरणागतिसामर्थ्याच्छरण्यगुणवैभवात् । फलस्याव्यभिचारस्तु लोके वेदे च दृश्यते । एवं विज्ञाततत्वानां शेषिसंश्रयणे नृणाम् । कथं स्याद्घटकापेक्षा पृथक्सिद्धेरभावतः । इत्याशङ्का न कर्तव्या स्वातन्त्र्यादेव शेषिणः । अस्त्येव घटकापेक्षा स्वापराधभयान्नृणाम् । अपि तत्त्वविदां

पुंसामस्त्येव घटकेऽर्थिता। अनादावेव सम्बन्धेऽप्यपराधे क्षणाद्विभोः॥पितेव भगवान्पुंसां नित्यं हितकरत्वतः। अकृत्यकरणादौ हि कलुषो दण्डमावहेत्। उन्मादिष्णुं सुहृत्त्वेन निगलाद्यैर्यथा पिता। दण्डयेदेनमवशो निरयाद्यैरमार्गगम्। एषा मातेव वात्सल्यं जनयन्ती प्रियाशये। विस्मार्य दोषानखिलान् लक्ष्मीस्स्वजनयत्यमुम्। गुणरूपविलासैस्स्वैर्जगदीशमनीश्वरी। स्वसंश्रितापराधानामनभिज्ञं करोत्यसौ। तस्मात्तत्त्वविदां पुंसां शरण्याश्रयणार्थिनाम्। लक्ष्मीः पुरुषकारेण निर्दिष्टा परमार्षिभिः॥ एतत्सापेक्षसम्बन्धादन्येपाममलात्मनाम्। देवीसूरिगुरूणां च घटकत्वं न तु स्वतः। स सम्बन्धस्तु शेषत्वमेषां श्रीमति शेषिणि। यतस्सर्वस्य सर्वेशे श्रीमद्द्वारा समन्वयः। अनयोर्मिलितं देवे गुणजातं निबोधयत्। व्यनक्त्याश्रयणीयत्वं नारायणपदं त्वतः" इति। "एते पुरुषकारेण समुद्भाव्या गुणा यदि। तद्युक्तोपायसाध्यत्वं सापेक्षत्वं तथा भवेत्। सत्कार्यवादानुमतेस्तथा श्रुत्यादिदर्शनात्। स्वाविर्भावात्मको मोक्षो हेतुसाध्यतया मतः। अतोऽत्र हेत्वपेक्षस्य सिद्धत्वादि न सिध्यति। न केवलं हि वात्सल्यप्रमुखस्यैव दृश्यते। ज्ञानादेरप्यभीष्टार्थकारित्वे हेत्वपेक्षता। दयासाहित्यमात्रेण नैरपेक्ष्यं च मास्मभूत्। तस्याः पुरुषकारेण समुद्भाव्यत्वसिद्धितः। स्त्रीत्वमार्दवसंसिद्धादयादिगुणसंश्रयात्। देवी देवेन संश्लिष्टा तद्दयोन्मेषकारिणी। अन्यथा वत्सलत्वादेरुदयोऽपि न सम्भवेत्। अतःपुरुषकारोऽत्र दयोद्भावक इष्यते। तदपेक्षदयासाध्यगुणसाम्मुख्यजृम्भिते। उपाये तु न सिद्धत्वनिरपेक्षत्वसम्भवः। इत्येतदसमीचीनचोद्यमित्यवगम्यताम्। अज्ञातोपायतत्त्वानां स्वबुद्ध्याकल्पितत्वतः। उपायोपेयभावश्च वस्तुसत्तासमन्वितः। हेयप्रतिभटत्वाच्च कल्याणात्मत्वतोऽपि च। तदेतदुभयं लिङ्गं परस्यैवावगम्यते। सर्वपाप्मोदयात्सर्वलोककामेशताश्रुतेः। एवं परस्योपायत्वे स्वनिरूपकया श्रिया। सम्भावितगुणोन्मेषात् सापेक्षत्वं न सम्भवेत्। श्रिया स्वस्यैकशेषत्वात्स देवो रत्नदीप्तिवत्। तदायत्तर्द्धितायामप्यनन्याधीनवैभवः। इत्याचार्योपदिष्टत्वाच्छास्त्रतात्पर्यतोऽपि च। परस्य श्रीनिवासत्वमपराधीनतावहम्" इति च।

यद्यपि "अस्त्येवे" त्यादि "विभोः" इत्यन्तो ग्रन्थः, अत्र वत्सलभगवदभिप्रायेण पुरुषकारापेक्षाविरहेऽपि चेतनस्यापराधभीतस्य तदपेक्षास्त्येवेति एवमर्थकतया

तत्त्वदीपे योजितः । कृष्णपादैश्च 'आश्रयणौपयिकवात्सल्यादिगुणानां लक्ष्म्युद्भाव्यत्वेऽपिज्ञानशक्तिविशिष्टस्यैवोपायत्वात्तयोश्च कदाचित्तिरोधाने सृष्ट्यादिविच्छेदप्रसङ्गात्, नित्योद्भूतत्वेनानुद्भाव्यत्वात् न सापेक्षत्वसाध्यत्वादिप्रसक्तिः' इति परिहृतम्। तथाप्येवं सति पुरुषकारवरणस्य पाक्षिकत्वापत्तेः । वास्तवप्रयोजनविरहप्रसङ्गात्। "ममापि च मतम्" "मत्क्षमां प्राप्य" इत्यादिभगवदुक्तिदर्शनाच्चातिशयार्थतयाप्रथममुक्तं पक्षं परित्यज्य "पितेव त्वत्प्रेयान्" इत्याचार्योक्त्यनुसारेण "पितेव भगवान्" इत्यादिनोपन्यस्तं पक्षान्तरमपि "एतदुक्तम्" इत्यादिना तत्त्वदीपे कथितमिति वात्सल्याद्यनुसन्धानस्य वक्ष्यमाणरीत्याश्रयणोपयोगित्वेऽपि वस्तुतः तेषां स्वीकारोपयोगितया स्वीकारविशिष्टस्यैवोपायतया श्रियो घटकत्वाभावोक्तिर्न विरुध्यते। "दोषा भवेयुः" इति न्यायेन सापराधे ज्ञानादीनां विपरीतकार्यहेतुताया एव प्रशक्त्या लक्ष्म्या तदुद्भावितकरुणया वा तत्साम्मुख्यापादनस्यावश्यकतया प्रसज्यमानयोस्साध्यत्वसापेक्षत्वयोः "स्वतः श्रीः" इत्यादिरीत्यैव परिहारस्य वक्तव्यता अधिकारिसापेक्षत्ववत् पुरुषकारसापेक्षत्वस्यापि श्रीवचनभूषणादिष्वभिधानाच्च कार्यांशे नैरपेक्ष्ये कार्यानुकूलशक्तेस्सिद्धत्वे च कृष्णपादोक्तेस्तात्पर्यं वक्तव्यमिति न तद्विरोधः।

वेदान्ताचार्यास्तु—सर्वथापि नैतद्व्यापारेण विना फलसिद्धिरिति, श्रियाफलसिद्धिरित्यर्थे प्रमाणान्तराधिगते द्वयस्य तात्पर्यमिति—प्राहुः । पुरुषकारावश्यापेक्षितत्वं च विरोधिपरिहाराख्यप्रबन्धे "अत्र मूलमन्त्रान्तर्गतपुरुषकारविशेषस्य शरणगतिमन्त्रेण क्रमे मुव्यक्तमनुसन्धाने स्वीक्रियमाणे नारायणशब्दोक्तगुणसम्बन्धयोरप्रयोजनत्वप्रसङ्गात् स्वाभाविकसर्वरक्षकस्य परमकारुणिकस्य भगवतः कथमिव पुरुषकारापेक्षा इतिचेत्-सत्यम् । गुणसम्बन्धजुष्टस्य विष्णोःपुरुषकारता । रक्षणं निजसङ्कल्पादिति निर्णीयते बुधैः । ईश्वरस्य दण्डधरत्वं लक्ष्म्याश्च पुरुषकारत्वमित्येवमुभयमपि "युवत्वादौ तुल्येऽपि" "वाचःपरं प्रार्थयिता प्रपद्येऽभियतः श्रियम्" इत्युक्तप्रकारेणानादिभगवत्सङ्कल्पव्यवस्थया व्यवस्थितमेतत् । अतो विलक्षणगुणसम्बन्धयुक्तःस्वतन्त्र एव स्वामी स्वसङ्कल्पाधीनपुरुषकारमुखेनैव रक्षतीति प्रमाणसम्प्रदायाभ्यामवगम्यत इति" इति ।

श्रियःपुरुषकारत्वं निर्हेतुकं, उत सहेतुकमिति विचार्यते—ननु मन्त्ररत्ने 'श्रिञ्-

मू॥ पेरियपिराट्टियाराले पेराहैयावदु-इवल् पुरुषकारमानालल्लदु ईश्वरन् कार्यं शेय्यानेन्गै ॥ ४ ॥

छा॥ महालक्ष्म्या पुरुषार्थलाभो नाम-अस्याःपुरुषकारभावंविना ईश्वरःकार्यं न करोतीति ॥ ४ ॥

व्या॥ इष्टानिष्टप्राप्तिपरिहारयोरपि कर्तरि ईश्वर एव सति श्रीमहालक्ष्म्यास्य पुरुषार्थलाभो नाम-अस्यापराधानदृष्ट्वा रक्षेतास्याः पुरुषकारभाव एव, अन्यथेश्वरोऽस्य कार्यं न करोतीत्यर्थः ॥४॥

---

सेवायाम्' इति धातोः 'श्रीयते' इति काचिद्व्युत्पत्तिरवगता, सा च "श्रीयते चाखिलैर्नित्यम्" इत्यादिभिरुपबृंहिता, तत्र प्रतिपन्नमखिलाश्रयणीयत्वं वक्तव्यमेव । एवं च स्मर्यते "एवं प्रपद्य लक्ष्मीं तां श्रियं सद्गुरुभावतः"इति। "अखिलजगन्मातरमास्मन्मातरमशरण्यशरण्यामनन्यशरणश्शरणमहं प्रपद्ये"इति भाष्यकारैरनुष्ठितं च । अत एव-भगवत्समाश्रयणस्य गुरुपरंपरानुसन्धानपूर्वकत्वात्, तत्र "श्रियै नमः" इति लक्ष्म्यां भरसमर्पणं सर्वैरनुष्ठीयते । इयं च लक्ष्मीविषया प्रपत्तिः पुरुषकारभावार्था । तत्र"आश्रयस्वैनमच्युतम्" इति फलश्रुतेः । "भगवच्चरणारविन्दशरणागतिर्यथावस्थिताविरतास्तु मे" इति श्रीशरणागतिफलत्वेनोक्तं च । एवं प्रपत्तेः पुरुषकारभावसाधनत्वावगमात्स न निर्हेतुकः । किंच यदि तस्य निर्हेतुकत्वं, तदा तस्य सर्वत्र प्रवृत्तिसम्भवेन सर्वमुक्त्यापत्तिः, तन्निर्हेतुककृपायाश्चेतनसामान्यविषयत्वात् तत्कृतेश्वरवशीकरणस्य चातिप्रशक्तत्वात् । एवं सोपबृंहणसंप्रदायोपपत्तिकस्य श्रीशब्दस्य सहेतुकत्वे प्रमाणत्वात्, तद्विरोधेन रावणभवनवासवृत्तान्तस्य न पुरुषकारभावनिर्हेतुकत्वावगमकत्वम् । यदि देवस्त्रीबन्धविमोचनार्थस्तद्गृहवासः केवलकृपाकार्यं इतिं तन्निर्हेतुकत्वमुच्यते, तन्न सिद्ध्यति, देवैः पूर्वमेव शरणागतत्वात् । यदि राक्षसीनां विषये तथात्वम्, तदपि न । त्रिजटावाक्येन तासामपि शरणागतत्वात् । तस्मात्पुरुषकारभावनिर्हेतुकत्वे प्रमाणाभावात् सहेतुकत्वमिति चेत्.

उच्यते—लक्ष्मीपुरुषकारभावो द्विविधः—चेतनविषयो, भगवद्विषयश्चेति । द्वि-

घोऽपि निर्व्याज एव । अवतारवृत्तान्तेन तथात्वावगमात् । तत्र प्रथमे १" मित्रमौपयिकं कर्तुं रामस्स्थानं परीप्सता । वधंचानिच्छताघोरं त्वयासौ पुरुषर्षभः । विदितस्स हि धर्मज्ञश्शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि" २" इह सन्तो न वा सन्ति सन्तो वा नानुवर्तसे । तथापि विपरीता ते बुद्धिराचारवर्जिता" इत्यादिप्रमाणम् । एवं चेतनं श्रावयतीति व्युत्पत्तिसिद्धचेतनविषयघटकत्वे हेत्वभावो दृष्टः । द्वितीयेऽपि राक्षसीविषये ३ "भवेयं शरणं हि वः" इति निर्व्याजं मातृज्ञाय, मारुतेर्भयप्राप्तौ ४ "पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति। राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया" इत्याद्युक्तेरीश्वरवशीकरणं किंपुनर्न्यायसिद्धमिति तदेव प्रमाणम् । एवमीश्वरं श्रावयतीतिव्युत्पत्तिसिद्धेश्वरघटकत्वे हेत्वभावो दृष्टः । न च ५ "तदलं क्रूरवाक्यैर्वस्सान्त्वमेवाभिधीयताम् । अलमेषा परित्रातुं राक्षस्यो महतो भयात्.... अभियाचाम वैदेहीम्.... प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा" इत्यानुकूल्यसङ्कल्पाद्यङ्गकात्मनिक्षेपस्य त्रिजटोपादिष्टत्वात्तासामप्युपायानुष्ठानमस्तीति वाच्यम् । उपदेशसम्भवेऽपि ताभिस्तथानुष्ठितमित्यत्र मानाभावात् । न च तासां त्रिजटाभिमानाद्रक्षणोपपत्तिः, विभीषणानीतराक्षसानामिव तासां त्रिजटाभिमाननिष्ठत्वेऽपि मानाभावात् । देहसम्बन्धमात्रस्य रावणेऽपि तुल्यत्वात्। अत एव श्रीपराशरभट्टार्यैः ६"मातर्मैथिलि राक्षसी स्त्वयि तथैवार्द्रापराधास्त्वया रक्षन्त्या पवनात्मजात् " इत्यनुगृहीतम् । अतस्तद्विषये पुरुषकारभावो निर्हेतुकः । एवं काकविषयेऽपि ७ "पुरतः पतितं देवी धरण्यां वायसं तथा । तच्छिरः पादयोस्तस्य योजयामास जानकी" इति निर्हेतुकत्वमवगम्यते । अकारोदितरक्षकत्वस्येव श्रीशब्दोक्तपुरुषकारभावस्योपाध्यश्रवणेन निरुपाधिकत्वसिद्धेः, तदुपबृंहणश्रीरामायणे तदनुष्ठानप्रकाशकेऽपि उपाध्यदृष्टेश्च पुरुषकारभावो निर्व्याजः । न च गुरुपरंपरायां तत्तत्समाश्रयणं भरसमर्पणरूपम्, किन्तु तच्छेषत्वानुसन्धानरूपम् । अन्यथा

१. रामायणे-सुं-२१-१९॥
२. रामायणे-सुं-२०-९ ॥
३. रामायणे-सुं-५८-९३ ॥
४. रामायणे-यु-११६-४४ ॥
५. रामायणे-सुं-३७-५४ ॥
६. श्रीगुणरत्नकोशे ५० ॥
७. पाद्मोत्तरे २४२-२०८ ॥

(५). पूर्वं सामान्येन वैष्णवाधिकारिणः खल्वपेक्षितान्युक्तानि। इदानीं विशिष्य द्वयाधिकारिणोऽवश्यापेक्षितमाह-द्वयस्येत्यादिना।

"श्रीधराय नमः" इत्यस्यापि तथात्वे मन्त्रे तदनुष्ठानासिद्धिप्रसङ्गात् । तस्मादुपाया-नुष्ठानस्य स्वशेषत्वानुसन्धानाधिकारत्वात् शेषत्वस्य तत्तदीयानां सर्वेषामपि शिष्टत्वात् पूर्णानुसन्धानसिद्धये नमश्शब्दस्य भक्तिवाचकत्वेन गुरुभक्तिपूर्वकत्वनियमात्तद्विद्या-धिगमस्य तद्भक्तिसिद्धये च गुरुपरम्परानुसन्धानम्, न तूपायानुष्ठानरूपत्वेन । न च पुरुषकारत्वस्य निर्हेतुकत्वे सर्वविषयत्वप्रसङ्गः, तस्याकिंचनविषयत्वेनातिप्रसङ्गा-भावात् । न च[1] "श्रीयते चाखिलैर्नित्यम्" इति तस्या आश्रयणीयत्वेन सहेतुकत्व-मुच्यते, [1] "श्रयते च परम्पदम्" इत्यत्रापि तत्प्रसंगात् । भाष्काराद्यनुष्ठानं च न-साधनत्वेन । काकादिषु व्यभिचारात् । किन्तु अधिकारपूरणार्थमेव । तस्माल्लक्ष्मीपुरु-षकारभावो निर्हेतुक इति ॥ ४ ॥

(पूर्वं सामान्येने) ति-प्रथमसूत्रे रहस्यत्रयाधिकारिणां साधारण्येनेत्यर्थः ।

(द्वयस्याधिकारी) इति- द्वयमन्त्रबोध्यभगवच्छरणवरणरूपप्रपत्त्यधिकार ए-वेत्यभिप्रायेणाह—सिद्धोपायवरणेति । भगवदेकोपायप्रार्थनाप्रतिपादकद्वयस्ये-त्यर्थः । वरणम्-प्रार्थनम् । "वृङ्-सम्भक्तौ" । "सम्भक्तिः-प्रार्थनम्" इत्युक्तेः । अनेनोपायत्वप्रार्थनारूपायाः प्रपत्तेरुपायत्वाभावात्, उपायभूतकर्माद्यपेक्षितविशिष्टदे-शकालाद्यनपेक्षितत्वं सिद्धम् । (अधिकारि) इति-अर्थित्वविशिष्टं हि सामर्थ्यं (सर्वत्राधिकारः। तदुक्तम् "अर्थित्वेन समर्थता विकतनुरसंपिण्डिताधिक्रिया") इति । उपायानुष्ठानानुगुणज्ञानशक्तिगुणजात्यादि रूपयोग्यतात्मकं सामर्थ्यमर्थित्वेन विशिष्ट-माधिकार इत्यर्थः। प्राणभृन्न्यायेन त्रितयसमुदाये सामर्थ्यशब्दप्रयोग इति बोध्यम् । यद्ग-तामुपायो विधीयते सोऽधिकारः। उपाये च विधेयत्वं क्वचिदज्ञातज्ञापनविषयत्वं क्वचिद-प्रवृत्तप्रवर्तनविषयत्वम्।सिद्धता चाधिकारस्य प्रमाणान्तराधीनानुष्ठानेन वा स्वत एव वा।

१. अहि-सं ॥

मू॥ द्वयत्तुक्कधिकारि-आकिञ्चन्युम्, अनन्यगतित्वमुमुडैय-वन् ॥ ५ ॥

छा॥ द्वयस्याधिकारि-अकिञ्चन्यानन्यगतित्ववान् ॥५॥

व्या॥ सिद्धोपायवरणप्रतिपादकद्वयस्याधिकारी * अकिंचनोऽगतिः। त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः" इति

फलकामनाया अग्न्यादेश्चाधिकारत्वदर्शनात्। अधिकारिणस्साध्यत्वेनानूद्यमानं फलं। तदर्थत्वेन विधेय उपायः। मुमुक्षुत्वसंबन्धज्ञानादीनां भक्तसाधारण्येऽपि आकिंचन्यानन्यगतित्वे विशेषाधिकारः। एतत्समानाधिकरणार्थित्वसामर्थ्ये प्रपत्त्यधिकार इति यावत्।

(आकिञ्चन्ये) ति—आकिंचन्यम्-उपायान्तराभावः। न तु तत्सामर्थ्याभावः। नाथादीनामनधिकारत्वप्रसङ्गात्। "आकिंचन्यं-उपायान्तरसामर्थ्याभावः" इति रहस्यत्रयसारवाक्येऽपि उपायान्तरानुगुणज्ञानाद्यभावः। "आकिंचन्यनिबन्धनम्" इत्यग्रिमवाक्यानुरोधात्, उपायान्तराभाव एव विवक्षितः। सामर्थ्याभावप्रयुक्त एवाभावोऽधिकारः, न तु लघूपायकृतज्ञापनार्थः' इति कैश्चिद्व्याख्यातम्। तदोपायान्तरशून्यस्यापि उपायान्तरेणापि साधयितुं शक्यत इति ज्ञानतोऽधिकारवारणाय प्रपन्नपरित्राणे अज्ञानाशक्तिशास्त्रानुमतयोग्यताविरहफलविलम्बाक्षमत्वात्यन्तपारतन्त्र्यज्ञानाधीनोपायान्तरानर्हत्वबुद्धिराकिंचन्यमित्युक्तम्। 'यागाभावात् फलाभावः' इति तत्साधारण्येऽपि अधिकारस्य न क्षतिरित्यभिप्रायेण "उपायान्तरराहित्यरूपाकिंचन्यस्वरूपम्" इति वक्ष्यते। आकिंचन्यशब्दो हि-नास्ति किंचन यस्येति व्युत्पत्त्या साधनरहिततामेव साक्षाद्बोधयति। "अकिंचनोऽनन्यगतिः" इत्यत्र तु "न धर्मनिष्ठोऽस्मि" इत्यादिनैव निरुपायता प्रतीतेः। "अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः" इत्यत्रापि अपराधानामालयत्वोक्त्या तदेवार्थप्रतीतेः। "विशेषाभावकूटहेतुकसामान्याभावपरतया तत्राप्यकिंचनशब्दः निरुपायत्वपर एवे" ति रहस्यरक्षा।

* अहि सं-३६-३९ ॥

"अनन्यशरणः" "पुह्लोन्निल्लावडियेन्" इत्याद्यनुरोधात् ,योग्यतापर्यन्तोपायविरहो विवक्षित इति ज्ञापनार्थमेव प्रपन्नपरित्राणग्रन्थस्य । अत एव रहस्यत्रयसारे "उपायान्तरोपेयान्तरास्पृष्टो मन्त्रस्य पूर्णाधिकारी" इत्युक्तम् । 'उपायान्तरेणापि मया साधीयतुं शक्यते' इति बुद्धिविरह एव हि तदस्पर्शः । अत एव हि "अनागतानन्तसमीक्षयाप्यदृष्टसन्तारोपायः" इत्युक्तं गद्ये ।

(अनन्यगतित्वे) ति—अनन्यगतित्वं—रक्षकान्तरराहित्यम् । अनेन सूत्रेण द्वयबोध्यप्रपत्तेस्सर्वाधिकारत्वमुक्तम् । श्रुतिविहितायाः प्रपत्तेस्सर्वाधिकारत्वं कथमिति नाशंकनीयम्; सत्यवचनं हिंसादौ व्यभिचारेण तस्याप्रयोजकत्वात् । नचैवमप्यपशूद्राधिकरणविरोधः । अग्न्यादिसाध्ययज्ञवेदानुवचनाद्यङ्गकतया तत्र भक्तावनधिकारप्रतिपादनात् । न च "ब्रह्मस्वरूपतदुपासनप्रकारमजानतस्तदुपसंहारसामर्थ्याभावादुपासनविधीनामेवातिरिक्तज्ञानापेक्षकत्वकल्पने गौरवात्, अध्ययनविधिसिद्धस्वाध्यायसम्पाद्यज्ञानमेवोपजीवन्ति" इति भाषितो न्याय प्रपत्तावपि सम इति वाच्यम्, १ "सर्वस्यशरणं सुहृत्" इति श्रुत्या उपायस्य सर्वाधिकारत्वावगमात् । श्रुत्यैव सर्वाधिकारत्वोक्त्या तद्विरोधेन न्यायाप्रवृत्तेः । वेदतुल्यपांचरात्रे सात्वततन्त्रे "त्रयाणांक्षत्रियादीनां प्रपन्नानां च तत्त्वतः । अमन्त्रमधिकारस्तु चातुर्व्यूहाक्रिया क्रमम्" इति । "सर्व एव प्रपद्येरन्सर्वधातारमच्युतम्" इति च । अत आकिंचन्यादिसमवहितानां सर्वेषामधिकार इति । तदिदमुक्तं२ "वह्न्यादेरनपेक्षणात्तनुभृतां सत्यादिवद्व्यापिनी" ३ "श्रौती सर्वशरण्यता भगवतस्स्मृत्यापि सत्यापिता सत्यादिष्विव नैगमेष्वधिकृतिस्सर्वास्पदे सत्पथे" इति ।

सर्वाधिकारत्वरूपसिध्दोपायवरणात्मकप्रपत्तेः-देशकालाद्यनपेक्षत्वमपि वचनसिद्धम् । तथा हि सात्यकीतन्त्रे "सर्वोपायविहीनानां मदालम्बितचेतसाम् । निर्मितं सर्वजातीनां रोगिणामौषधं यथा । देशकालविभागश्च न नक्षत्रपरीक्षणम् । केवलं जपमात्रेण मामेवाप्नोत्यसंशयः" इति । ४ "न जातिभेदं न कुलं न लिङ्गं न गुणक्रियाः । न देशकालौ नावस्थां योगोऽह्ययमपेक्षते" ५ "प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते । सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा" इति च देशकालादिनियमपरवच-

१. श्वे-३-१७ ॥
२. रहस्यत्रयसारे ॥
३. रहस्यत्रयसारे ॥
४. भारद्वाज सं—१—१४ ॥
५. सनत्कुमार सं ॥

“+अकिंचनोऽनन्यगतिश्शरण्य”इति❋“उपायान्तरशून्यो दासः” इति चोक्तप्रकारेणाकिंचन्यानन्यगतित्वरूपगुणद्वयवानित्यर्थः॥५
(६). एतयोरुभयोस्स्वरूपं किमित्यत आह-इदं द्वयमित्यादिना।

नान्तां फलप्रपत्तिव्यतिरिक्तसाधनप्रपत्त्यादिपरत्वान्नात्र विरोधः। प्रपत्त्यादिभेदो व्यक्तीभविष्यतीति ॥५॥

**(एतयोरुभयोस्स्वरूपं किमित्यत आह)** इति—ननु आकिंचन्यमुपायान्तराभावः, तद्योग्येऽतिप्रसक्तम्, अनन्यगतित्वं-न प्रापकान्तरराहित्यं, पौनरुक्त्यप्रसङ्गादिति शङ्कापनोदनाय तयोस्स्वरूपमाहेति भावः।

प्रपन्नपरित्राणे उपपादनीयाधिक्यात्प्रथममनन्यगतित्वोक्तिः। तत्र यद्यपि प्रपन्नस्य प्रयोजनान्तरार्थित्वाभावात्, मन्त्रादीनाम्मोक्षप्रदत्वाप्रसक्तेः, तद्रक्षकता निराकरणं नात्यन्तोपयोगि, तथापि निरुपायविषये सम्बन्धवतश्शक्तस्योपायनिरपेक्षरक्षकत्वस्यौचित्यात्, तत्प्रहाणेनानिष्टोत्पादकतया शक्यरक्षणकर्तृत्वमपि तेषां यदा नास्ति, तदा दूरापेतं तेषां मोक्षप्रदत्वमित्यभिप्रायकमतिशयार्थ-भ्रातर इत्यारभ्य ‘नलविषये चद्रष्टव्यमि’त्यन्तम्। मातृत्वादीनां रक्षणप्रयोजकत्वे व्यभिचारात् क्वचिद्दृश्यमानमपि मात्रादौ रक्षकत्वं परायत्तमेवेति हृदयम्।१“य एषोऽन्तरादित्ये हिरण्मयः-पुरुषो दृश्यते”इत्यादिसमण्डलेऽवस्थितस्य पुरुषस्य पुरुषसूक्तोक्तविशेषयोगप्रतीतेः, तस्यैव मोक्षप्रदत्वम्। अस्तु वा पुरुषसूक्तोदितो नारायणः, तथापि२“उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद” इति तद्वेदनस्यापि मोक्षसाधनता श्रूयत एव।१“प्रशासितारं सर्वेषामणीयांसमणीयसाम्। रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्” इति “मोक्षद्वारमनुत्तमम्”, इति च ३ “सूर्य आत्मा ”इति चोक्त्या तस्य सम्बन्धेऽपि प्रतीयते। ४ “असावादित्यो ब्रह्म” इति चारण्यके श्रुतम्। तच्चादित्यपरेण पुराणेनोपबृंतम्। तस्य शक्तियोगं साधयति। निरुपाधिकजगद्रक्षकत्वस्य च सर्वसिध्दत्वात्।

+ तिरुवाय्-६-१०-१० ॥
* स्तोत्ररत्ने २२ ॥
१. छा–१–६–६ ॥
२. मनु–१२–१२२ ॥
३. तै–आर–७–२३ ॥
४. तै–आरण्यके ॥

मू॥ इवै यिरण्डुं प्रपन्नपरित्राणत्तिले शोन्नोम् ॥६॥

छा॥ इदं द्वयं च प्रपन्नपरित्राणेऽवोचाम ॥६॥

व्या॥ उपायान्तरराहित्यरूपाकिंचन्यस्वरूपम्, रक्षकान्तरराहित्यरूपानन्यगतित्वस्वरूपं च प्रपन्नपरित्राणाख्यप्रबन्धे सुस्पष्टमवोचाम,. तत्र पश्यन्तु इत्यर्थः ॥६॥

(७).इतःपरं द्वयस्य वाक्यार्थमाह-अत्र पूर्वखण्डेनेत्यादिना।

मू॥१॥ इदिल् मुर्कूत्ताल्-पेरियपिराट्टियारै मुन्निट्टु ईश्वरन्तिरु-

---

गुणयोगोऽप्यस्त्येव । अतस्तस्य शरण्यत्वमुपपन्नम् । एवमथर्वशिखायां प्रणवमात्राणां तिसृणां पृथिव्यन्तरिक्षादिसम्बन्धमभिधाय १ "यावसानेस्य चतुर्थ्यर्धमात्रासा सोमलोकः" इत्यभिधानेन प्रस्तुतस्य सोमाख्यस्य चन्द्रस्य "विद्युमती सर्ववर्णा पुरुषदैवत्या" इति पुरुषशब्देन परामर्शात् तस्यैव २ "न कारणम्" इत्यग्रे कारणशब्देनाभिधानमुचितम् । तस्य च ३ "कारणन्तु ध्येयः" इति मोक्षार्थोपासनत्वं प्रतीयते । श्रीवाराहे च ४ "सोमःपरः पुरुषः" इत्युक्तम् । ५ "योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन्पुरुषःपरः । स एव सोमो मन्तव्यो देहिनां जीवसंज्ञकः" इति, ६ "क्षेत्रज्ञं चापि मां विद्धि" ७ "सङ्कर्षणो नाम जीवो जायते" इत्यादौ जीवशब्दक्षेत्रज्ञशब्दयोर्भगवति सोमेऽपि प्रयोगमात्रेण न तस्य परत्वहानिः । सप्तदशेऽध्याये अग्न्यादितीर्थाभिमानिदेवतानां वैश्वानरादिभावेन शरीरमाश्रितानां परस्परं ज्यायस्त्वविवादेन तत्परिचिक्षिषीया एकैकशो निर्गमेऽपि तत्स्रष्टृ सोमेन पालितस्य शरीरस्य यथापूर्वमवस्थाने लज्जितैस्तैस्तैस्सोमाख्यस्य परमेश्वरस्य स्तुतस्य तद्विषये प्रसाद्यं प्रतिपाद्य एतैर्मुक्तं क्षेत्रं मुक्तावस्थन्तु तत्सहसा सोमेन पाल्यमानं पुरुषेणानन्दरूपेण, ८" एवं व्यवस्थिते सोमे षोडशात्मन्यथाक्षरे। प्रागवस्थं शरीरं तद्दृष्ट्वा सर्वज्ञपालितम् । ताः-

---

१. अथर्वशिखा ॥
२. अथर्वशिखा ॥
३. अथर्वशिखा ॥
४. वराहपु.
५. वराहपु-३५-१० ॥
६. गीता-१३-२ ॥
७. परमसंहिता ॥
८. वाराहे-१७-५६, ५७॥

क्षेत्रदेवातास्सर्वाः वैलक्षं भावमाश्रिताः । तमेव-तुष्टुवुस्सर्वाः सोमाख्यं परमेश्वरम्" इत्यादिना १ "सोमोऽस्माकं ब्राह्मणानां राजा" इत्यादौ च सम्बन्धः प्रतीयते । २ ',तिग्मांशुजनितं तापं निन्ये तारापति श्शमम्" इति चोपकारकतया गुणयोगसिद्धिः । अतश्चन्द्रादित्ययोः। शरण्यत्वे बाधकाभाव इति-एतेषां रक्षकत्वाभावेऽपि इत्यादिनात्र शङ्कितम् । ३ "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" ४ "भीषोदेति सूर्यः" ५ "भयात्तपात्ति सूर्यः" ६ "यस्यादित्यो भामुपयुज्य भाति" ७ "येन सूर्यस्तपति तेजसेद्धः" ८ "यदादित्यगतंतेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" ९ "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" १० "चन्द्रमा मनसो जातः । चक्षोस्सूर्योऽजायत" "नारायणाद्द्वादशादित्यास्समुत्पद्यन्ते । नारायणे प्रलीयन्ते" इत्यादिभिर्भगवत्सृष्टानां तेषां तदाज्ञावशवर्तिनां तद्भयादेव संचाराद्यभिधानात्, नियतोदयास्तमनादिभिस्स्वच्छन्दाभावस्य वचनपरामर्शमन्तरेणापि निर्णेतुं शक्यत्वात्, "विष्णुशक्तिरवस्थानं सदादित्ये करोति सा । नोदेता नास्तमेता चे" ति तदन्तर्वर्तिनो विग्रहविशिष्टस्योदयास्तमयाभावप्रतीतेः, सूर्यादीनां दैत्यराक्षसपीडितत्वादेश्च पुराणप्रसिद्धत्वात्, ११ "सोमस्य वै राज्ञः" १२ "असावादित्यो न व्यरोचते" त्यादिना कर्मवश्यत्वप्रतीतेः, न तेषां शक्तिगुणयोगौ इत्युक्तम्- तौचेत्यादिना । "य एषोऽन्तरादित्ये" इति श्रुतिर्योगार्णवे उपबृंहिता-"आदित्यमण्डले तत्र पश्येद्विष्णुं परात्परम् । सर्वाधारं वासुदेवमीशानं शिवमच्युतम् । ईश्वरं सर्वभूतानां सर्वलोकाभयप्रदम् । विजानन्तं सदा सर्वं भासयन्तं रविं सदा" इत्यादिना । १३ "ध्ये-

१. तै-सं.१-८-१० ॥
२. रामायणे ॥
३. बृह-५-८-९ ॥
४. तै-आनन्द-८-१ ॥
५. कठ-२-६-३ ॥
६.
७. तै-बा-३-१२-९-७ ॥
८. गीता-१५-१२ ॥
९. तै-अंभस्य-१ ॥
१०. पुरुषसू ॥
११. बै-सं-२-५-३ ॥
१२. तै-सं-२-१-४ ॥
१३. नारसिंहपुर—७*६१॥

यस्सदा सवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः । केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः" इति च स्मर्यते।१"किंस्विक्तदन्तराभूतं येनेमे विधृते उभे" इति द्यावापृथिवीधारकसूर्यमण्डलान्तर्वर्तित्वविषयकप्रश्ने "विष्णुना विधृते भूमी" इत्युत्तरेण स्वान्तर्वर्तिना गुह्येन विष्णुरूपेण तेजसा सूर्यमण्डलस्य द्यावापृथिवीधारकत्वमित्युक्तेर्भगवत आदित्यमण्डलान्तवर्तित्वमवगम्यते। "प्रशासितारं सर्वेषाम्" इत्यत्रापि विशेषानुक्तेः, पुरुषश्रुतेः,२"आसीदिदम्"इत्यारभ्य "तेन नारायणस्स्मृतः" इत्यन्तेन नारायणस्यैवादावुपक्षिप्तत्वाच्च तत्परत्वमेवोचितम् । सूर्यादित्यशब्दौ" आदित्यो ह्यादिदेवत्वात् प्रसूत्या सूर्य उच्यते" इति वचनेनैव निर्व्यूढौ । ('असौ' इति निर्दोशोमण्डल निवन्धनः । आदित्य इव भगवत्यपि सम्भवत्येव, ब्रह्मदृष्टिपरो वा । ३ "तमस्तंयान्तमादित्यमभिध्यायन्" इति श्रवणात् । शरीरपर्यन्तो वादित्यशब्दः । मोक्षद्वारत्वतन्मण्डलभेदनेनैव मोक्षाय गमनात् । वाराहे ४"सर्वे देवास्सपितरो ब्रह्माद्याश्चाण्डमध्यगाः । विष्णोस्सकाशादुद्भूता इतीयं वैदिकीश्रुतिः" इत्युपक्रमात्, ५ "एवं वेदान्तपुरुषः प्रोक्तो नारायणात्मकः " इत्युपसंहाराच्च सोमाख्यः परमेश्वरो नारायण एव । भगवद्बुध्यभिमानिन्यां लक्ष्म्यां ६"उमेति संज्ञया सा तु तदादित्ये व्यवस्थिते" त्युमासंज्ञकत्वाभिधानात् । न च "सोमोऽस्माकम्" इत्युक्तिमात्रेण मोक्षार्थशरणवरणार्हत्वसिद्धिरित्याशयः। ७ "ईशानमस्य जगतःस्वर्दृशमीशानमिन्द्रतस्थुषः" ८"इन्द्रो राजा जगतश्चर्षणीनाम्"९"इन्द्रो मायाभिःपुरुरूप ईयते"१०"न किरिन्द्रत्वदुत्तरः"इत्यादिभिरिन्द्रस्य लोकोत्तरवैभवप्रतीतेः, तस्य रक्षकत्वमाशंक्य—त्रैलोक्यस्येत्यादिना निराकृतम् ।११"इन्द्रो वै शिथिल इवाप्रतिष्ठीत आसीत् सोऽसुरेभ्यो बिभेत्" इति—स्वपदच्युतिरित्यत्राभिप्रेता । दुर्वासःशापादि वृत्तान्तः——शापोपहत इत्यत्र विवक्षितः ।

१. तै-आरण्ये-१-९
२. मनु-१-६ ॥
३. तै-आरण-२-२ ॥
४. वाराहे-१७-२३ ॥
५. वाराहे-१७-७४ ॥
६. वारहे-९-४ ॥
७. तै-सं-२-४-१४ ॥
८. तै-ब्रा-२-८-३ ॥
९. बृह-४-५-१९ ॥
१०. सामवेदे-१-३-१-१-१०
११. तै-सं-७-३-८ ॥

**ब्रम्हहत्येति**—१"तंभूतान्यभ्यक्रोशन् ब्रह्महान्नि" त्यादिका श्रुतिरिहाभिप्रेता।'ईशानमस्ये' त्याद्यपेक्षिकविषयम्। 'इन्द्रो मायाभिः' इत्यत्र न कारणत्वमोक्षप्रदत्वे उक्ते। प्रकारणा तु भगवत्परमेव तत्। "ऐश्वर्यादिन्द्र उच्यते" इति पौराणिकं वचः। "भीषास्मादग्निश्चेन्द्रश्च" "नारायणादिन्द्रो जायते" "इन्द्रो वै देवानामामनुजा वर आसीत्। स प्रजापतिमुपाधावत्" इत्यादिकाश्श्रुतयोऽत्रोदाहार्याः।

२"हिरण्यगर्भस्समवर्तताग्रे"३"धाता यथा पूर्वमकल्पयत्"४"प्रजापतिश्चरति गर्भे अन्तः"५"प्रजापतिः प्रजा असृजत"६"प्रजापतेस्सभांवेश्म प्रपद्ये" इत्यादिभिश्चतुर्मुखस्य जगत्कारणत्वाद्यवगतेस्तस्य शरण्यत्वं स्यादित्यशङ्का निवारिता—**ब्रह्माचे**त्यादिना।"नारायणाद्ब्रह्मा जायते"७ब्रह्म वै ब्रह्माणं पुष्करे ससर्ज"८"न ब्रह्मा"९"हिरण्यगर्भं जनयामास पूर्वम्"१०"स प्रजापतिरेकः पुष्करपर्णे समभवत्"११"यो ब्रह्माणं विदधाति पूर्वम्"१२"यन्नाभिपद्मादभवन्महात्मा प्रजापतिः"१३"विराजोऽधिपुरुषः" इत्यादिश्रुतिभिः ब्रह्मणस्सृज्यत्वादिप्रतीतेः कारणत्वादिकं न सम्भवति। "हिरण्यगर्भः"इत्यादेः भगवत्परत्वात् शङ्कावकाशो नास्तीत्यन्यत्र विस्तरः। १४"वेदापहरे"ति यामुनाचार्यसूक्त्यभिप्रायेणाह—**मधुकैटभे** ति। १५"वेदा मे परमं चक्षुः वेदा मे परमन्धनम्" इत्येतदभिप्रेत्याह—**नेत्रे** ति। १६ततःक्रोधपरीतेन संरक्तनयनेन च। वामांगुष्ठनखाग्रेण च्छिन्नं तस्य शिरो मया" इत्यादिवचनान्याभिप्रेत्य—**रुद्रहस्तेन छिन्नशिर** इति। अत्र१७"स्वरक्षणेऽप्यशक्तोऽपि को हेतुःपररक्षणे" इति न्यायो विवक्षितः।

---

१. तै-सं-२-६-१ ॥
२. तै-सं-४-२-८ ॥
३. ते—अंभ-१ ॥
४. तै-अंभ-१ ॥
५. तै-सं—२—१—२ ॥
६. छान्दो-८—१४—१ ॥
७. गोपथब्राह्मणे-पूर्व—१—१६ ॥
८. महोप—१-१ ॥
९. श्वेता—३—४ ॥
१०. तै—आर—१—२३ ॥
११. श्वे—६—१८ ॥
१२. महोपं ॥
१३. पुरुषसू ॥
१४. स्तोत्ररत्ने ॥
१५. भारते-शान्ति-मो-३५७-३१ ॥
१६. मात्स्ये—१८३—८४ ॥
१७. भारते—शा—मो ॥

वडिहलै उपायमाह पत्तुहिरदु। पिर्कूत्ताल्-अच्चेर्तियिले अडिमै।यिर-क्किरदु ॥७॥

छा॥अत्र पूर्वखण्डेन-महालक्ष्मीं पुरुस्कृत्येश्वरचरणावुपायत्वेन स्वीकारः प्रतिपाद्यते । उत्तरखण्डेन-तन्मिथुने कैंकर्यं प्रार्थ्यते ॥७॥

व्या॥ अस्मिन्द्वये पूर्वखण्डेन-'श्रीमत्' इति महालक्ष्मीं पुरस्कृत्य 'नारायणचरणौ' इति ईश्वरचरणौ 'शरणं प्रपद्ये' इति उपा-

१"शिव एव केवलः" २"शम्भुराकाशमध्ये ध्येयः" इत्यादिभिः रुद्रस्य मोक्षप्रदत्वादिसिद्धिरित्याशंका निवार्यते-रुद्रश्चे ति। "नारायणाद् रुद्रो जायते"३"त्र्यक्षश्शूलपाणिः पुरुषोऽजायत"४"अनपहतपाप्माहमस्मि" इत्यादिना तस्य कार्यत्वकर्मवश्यत्वादिप्रतीतेः न मोक्षप्रदत्वसम्भव इति । तस्याकारणत्वादिकं तत्वशेखराख्यप्रबन्धे प्रपंचितामिति नात्र विस्तरभयाल्लिख्यते ।

दिव्यालयनिर्माणदिना भगवत्प्रसादहेतुतयाविलम्बेन ज्ञानजनकत्वात्तदौपयिकार्थप्रदातुरेव रक्षकत्वं परंपरयास्त्वत आह—अथार्थ इति । रक्षकः—रक्षणसाधनभूतः । तथा च तदविनाशस्यापि भगवत्संकल्पसापेक्षत्वात्, विद्यमानस्यापि तस्य निषिद्ध प्रवृत्युपयोगित्वसम्भवान्मोक्षोपयोगित्वं तस्य भगवत्कटाक्षाधीनामिति न तत्प्रदस्य रक्षकत्वमिंति भावः । शेषं स्पष्टम् ॥ ६ ॥

**(नारायणचरणौ)** इति—अनेन चरणावित्यन्तं समस्तमेकं पदमिति सिद्धम् । अत एव षट्पदत्वमस्योच्यते—"षट्पदान्यर्थादश" "हृदयाद्यङ्गभेदेन पदैष्षड्भिरलंकृतः" "देहन्यासं ततः कुर्यान्मन्त्ररत्नेन मन्त्रवित् । षट्पदानि च मन्त्रस्य

१. श्वे-४-१८ ॥
२. अथर्वशिखा ॥
३. महोप-१-३ ॥
४. शतपथब्रा-६-१-१-३-८॥

यत्वेन स्वीकारः प्रतिपाद्यते । उत्तरखण्डेन-'श्रीमते' इति श्रीमहालक्ष्मीनारायणतद्रूपमिथुने 'नारायणाय' इति चतुर्थ्या कैंकर्यं प्रार्थ्यत इत्यर्थः । नमसः कैंकर्यविरोधिनिवृत्तिप्रतिपादकत्वात् 'कैंकर्यं प्रार्थ्यते' इत्यस्मिन्नन्तर्भूतम् ॥ ७ ॥

---

षडङ्गान्येव विन्यसेत्" इत्यादि । "श्रीमन्नारायणचरणारविन्दयुगलं शरणमहं प्रपद्ये" इति श्रीरंगगद्ये । "षट्पदोऽयं द्विखण्डः" इति भट्टार्याः । अयमेव पक्षस्सम्प्रदायसिद्धः । शास्त्रे पक्षद्वयदर्शनात् पदविभागादिकमाचार्यैर्नोक्तमिति केचित् । तत्त्वदीपे तु—"अत्र चरणशब्दात्पूर्वं "श्रीमन्नारायण" इति पदद्वयं सम्बुध्यन्तमनुसन्धेयमिति केषांचित्सम्प्रदायः । तथोक्तं द्वयस्वरूपप्रतिपादके भगवच्छास्त्रे "श्रीमन् नारायण स्वामिन् अनन्यशरणस्तव । चरणौशरणं यातस्तवैवास्म्यहमच्युत ।" "जन्मेदं सफलं श्रीमन् नारायण कृपालय । श्रीमत्वात्पादकमले प्रपद्ये शरणं विभो । नारायणाय नाथाय हरये श्रीमते नमः" इति । शरण्यस्य परोक्षनिर्देशादपरोक्षनिर्देशस्य सौलभ्यादिप्रकाशकत्वेनोक्तत्वात्, तदाभिमुख्यसूचकं सम्बुध्यन्तत्वं युक्तमेव । उक्तंच शरणागतिप्रकरणेषु "कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणम्" "शरणं भव देवेश नाथ लक्ष्मीपते मम" "उपायो भव मे देव शरणं तेऽव्रजं विभो" इत्यादिभिः। द्रमिडोपनिषदि चांजनागिरिनाथं प्रति तथा निर्दिष्टं शठकोपाचार्यैः। तथा भाष्यकारेण द्वयविवरणरूपे गद्ये सर्वत्र सम्बुध्यन्तपदैश्शरण्य निर्देशःकृतः । तदानीमत्र तव शब्दोऽध्याहार्यः । "अनन्यशरणस्तव । चरणौ शरणं यातः" इत्युक्तत्वात् । तथा सति पट्पदत्वमस्य वाक्यद्वयस्याङ्गन्यासोपयुक्तत्वात्, उक्तमित्यवगन्तव्यम् । तदुच्यते" "पंचविंशाक्षरो मन्त्रः प्रपत्तिरिति विश्रुतः । सर्वेषामपि मन्त्राणां मन्त्रोऽयं मन्त्रनायकः । हृदयाद्यङ्गभेदेन पदैष्षड्भिरलंकृतः । नवार्णं हृदयं विद्धि तृतीयार्णं शिरो मतम् । शिखार्णं त्र्यक्षरं विद्धि कवचं तद्वदेव हि । अस्त्रं पंचाक्षरं नेत्रं द्व्यक्षरं परिकीर्तितम्" इति । तथा च पाद्मे "देहन्यासं ततःकुर्यान्मन्त्ररत्नेन मन्त्रवित् । षट्पदानि च मन्त्रस्य षडङ्गान्येव विन्यसेत्" इति । तस्मादङ्गन्यासदशायामस्य षट्पदत्वनिर्बन्धः,अर्थमात्रानुसन्धाने सम्बुध्यन्तत्वमप्यर्थातिशयसूचकत्वादुपपन्नमित्युक्तम् । तथात्वेऽपि षट्पदत्वं च प्रामाणिकम-

(८). इतःपरं प्रतिपदार्थं वक्तुं विचार्य श्रीमत्पदार्थमुपक्रमते-श्रीरिति ।

मू॥ 'श्री' एन्नु पेरियपिराट्टियार्कु तिरुनामम् ॥८॥

छा॥ 'श्रीः' इति महालक्ष्म्याः श्रीनाम ॥ ८ ॥

व्या॥ श्रीशब्दः सम्पदादीनां वाचक इति लोकप्रवृत्तेर्दृश्यमानत्वात्, तद्व्यावृत्त्यर्थम् "श्रीरिति महालक्ष्म्याश्श्रीनाम" इत्याह । अत एव हि* "लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया" इति श्रीनामभिस्सह पठितः ।

---

नुसन्धेयम् । "श्रीमन्नारायणचरणारविन्दयुगलम्" इति गद्यविशेषे समस्तत्वेन भाष्यकारेणोक्तं च । अत उभयमपि साम्प्रदायिकत्वात् यथारुचिपरिग्राह्यमेव" इति ॥७॥

(श्रीशब्दः) इति-श्रीशब्दस्य जगन्मातृपरत्वे श्रीमत्पदेनैवेतरव्यावृत्तिसिद्धेर्नारायणपदमनर्थकं स्यादिति सम्पदादिपरः श्रीशब्दः इति शङ्कां व्युदसितुमिह श्रीशब्दार्थाभिधानम् । "लक्ष्मीं पुरुषकारेण वृतवन्तः" इति पुरुषकारपुरस्करणस्य प्रमाणसिद्धत्वात् "लक्ष्मीं च मां सुरेशेशं" "द्वयेन श्रिया युक्तं भजेदि" ति द्वयस्य लक्ष्मीयुक्तभगवच्छरणवरणे विनियोगात् लक्ष्मीनारायणसमाख्यानात् परांकुशादिभिस्तथैव विवृतत्वाच्च श्रीशब्दो लक्ष्मीपर एव। नारायणपदन्तु उपायभावोपयुक्तगुणविशेषप्रतिपादनार्थं प्राप्यत्वोपयुक्तगुणविशेषप्रतिपादनार्थं चेति न वैयर्थ्यमिति भावः । तथोक्तं श्रीमति रहस्यत्रयसारे द्वयाधिकारे "श्रीधरः श्रीकरश्श्रेयः श्रीमान् लोकत्रयाश्रयः" इत्यादिषु भगवन्नामतया प्रसिद्धः श्रीमच्छब्द एवालमिति चेत्, पूर्वखण्डे उपायभावानुरूपगुणविशेषानुसन्धानार्थम्, उत्तरखण्डे सर्वविशिष्टस्य शेषिणः प्राप्यत्वेन प्रकाशनार्थं च नारायणशब्दस्यापेक्षितत्वात्-अत्र श्रीमच्छब्दो विशेषणपरः" इति ।

---

* अमरकोशे - १.-२७ ॥

इदं च नाम इतरनामवन्न भवति;*"श्रीरिति प्रथमं नाम लक्ष्म्याः" इत्युक्तप्रकारेणास्याः प्रथमाभिधानतया वर्तते। यथा "अ इति भगवतो नारायणस्य प्रथमाभिधानम्" इत्यकार ईश्वरस्य प्रथमाभिधानं

तात्पर्यदीपिकायां तु–अनेकार्थत्वस्यान्यायत्वात् श्रीशब्दस्सम्पद एव बोधकः। तदभिमानित्वाद्देव्यां प्रयोगः। उक्तंचाचार्यैः १ "ऐश्वर्यं यदशेषपुंसि विदिदं सौन्दर्यलावण्ययो रूपं यच्च हि मङ्गलं किमपि यल्लोके सदित्युच्यते। तत्सर्वं त्वदधीनमेव यदतश्श्रीरित्यभेदेन वा यद्वा श्रीमदितीदृशेन वचसा देवि प्रथामश्नुते" इति। एवं चेह न मुख्यसम्भवेऽमुख्यग्रहणमयुक्तमिति अत आह-**श्रीरिति** इति। श्रीशब्दस्य कोशे लक्ष्मीनामसु पाठात्, स्वातन्त्र्येण देव्यां निर्वचनात्, २"श्रीरित्येव च नामते" ३ "यत्किंचिदुज्वलमिदं यदुपाख्ययाहुः" इत्याचार्योक्तेश्च, नामैव श्रीशब्द इति भावः। अथवानेकेषु लक्ष्म्यभिधानेषु सत्स्वपि श्रीशब्द एव कुत उपात्त अत आह-**श्रीरिति** इति ४। "श्रयन्तीं श्रियमाणंच शृणतीं शृण्वतीमपि। शृणाति निखिलान्दोषान् शृणाति च गुणैर्जगत्" "श्रीयते चाखिलैर्नित्यं श्रयते च परम्पदम्" इत्याद्यनेकनिरुक्तबलात्, शब्दस्वाभाव्याच्चेतरसकलशब्दापेक्षया शब्दोऽयमस्या अतिशयपर इति भावः। उक्तं चाचार्यैः "श्रीरित्येव च नामते भगवति" इति। ५ "श्रीरसि यतः" इति च। उक्तं च दीपसंग्रहे "श्रीरिति प्रथमं नाम लक्ष्म्यास्तन्निर्वचक्रमैः। तत्स्वभावविशेषाणां याथात्म्यमवगम्यते" इति। यथा ह्यकारो भगवतो रक्षकत्वोपयुक्तस्वभावविशेषबोधकः, प्रथमाभिधानमेवं पुरुषकारत्वानुगुणस्वभावविशेषबोधकः श्रीशब्दो लक्ष्म्या इति भावः। अथवा ननु ६ "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यत्र तावत् ह्रीशब्दः—"श्रीभूमिसहितं हरिम्" इत्यादिप्रसिद्धेर्वा भूमिपरः। एवं च वाजसनेयके ह्रीशब्दस्थाने श्रीशब्दप्रयोगात्, मृत्तिकाधारणाङ्गे च ७ "गन्धद्वाराम्" इति मन्त्रे गन्धाभिव्यङ्ग्यायां पृथिव्यां श्रीशब्दप्रयोगात्, श्रियस्तत्तुल्याया वसुन्धराया ग्रहणमिति न निश्चेतुं शक्यमत आह–**श्रीरिति** इति। प्रसिद्धिप्राचुर्यात् श्रीशब्दो लक्ष्म्या एव नाम। वाजसनेयकेऽपि

* महानारायणोपनिषदि ॥
१. श्रीस्तवे-७ ॥
२. चतुःश्लोक्यां-१ ॥
३. श्रीवैकुण्ठस्तवे-७-८ ॥
४. अहि-सं ॥
५. श्रीगुणरत्नकोशे-२९ ॥
६. उत्तरनारायणानुवाके ॥
७. तै-ना-अंभस्यानुवाके ॥

भवति, तथा इदमस्याः प्रथमाभिधानम्। स तस्य रक्षकत्वस्यैकान्तस्वभावान् यथा वदति, तथेदमस्याः पुरुषकारत्वस्यैकान्तस्वभावान्वदाति ॥८ ॥

लक्ष्मीशब्द एव जघन्यो लक्ष्मीप्रियसख्यां गौणः । अस्तु वा स्थानप्रमाणेन श्रीशब्द एव कथंचिद्भूमिपरः । न तु तावता सर्वत्र तथात्वमाश्रयणीयम् । वस्तुतस्तु ह्रीशब्दो लक्ष्मीपर एव । लक्ष्मीतन्त्रे १ "परमात्मानमादाय योजयेद् ज्ञानवह्निना । त्रैलोक्यैश्वर्यदोपेतमायामास्मिन्नियोजयेत् ।—शान्तिं नियोजयेच्छक्त्या पूर्वस्य परमात्मनः । शेषमन्यत्समं ह्येषा तनुर्मेऽन्यानुतारिका" इति पंचाविंशे उपक्षिप्तयोस्तारानुतारयोस्सप्तविंशे २ "मम दिव्या परा शक्तिः नित्यं मद्धर्मधर्मिणी । हृल्लेखा परमा विद्या मत्स्वरूपं पुरन्दर । अस्या व्याख्यामिमां सम्यक्सावधानेन चेतसा । श्रद्धधानः प्रसन्नस्त्वमुपसन्नो गृहाण मे" इति ताराया व्याख्यामुपक्षिप्य ३ "आमनन्ति यदात्मानम्" इत्यादिना हकारस्य सूर्यप्राणपरमात्मबोधकतां, रेफस्य चाशेषभुवनाधारत्तेजोरूपतदीयोन्मेषबोधकतां, ईकारस्य पंचकृत्यकरेच्छाज्ञानक्रियारूपविष्णुवल्लभाबोधकतां प्रदर्श्य व्योमेशसंज्ञितानुस्वारेण लक्ष्म्यास्त्रैलोक्यैश्वर्यदव्यापिपरमात्मप्रतिष्ठितत्वं बोध्यत इत्यभिधाय ४ "अस्या रूपाणि पंचेह तत्त्वज्ञास्सम्प्रचक्षते" इत्यादिना व्योमेशान्तत्वव्योमेशोत्तरपरमेश्वरसंज्ञितविसर्गान्तत्वप्रधानसंज्ञितामकारोत्तरबिन्दुनादान्तत्वप्रधानमात्रान्तत्वपक्षानुपन्यस्य, ५ "सृष्टिकर्तारमन्तेऽन्ये वैदिकास्समधीयते" इति विसर्गान्ततया वैदिकैः पठ्यत, इत्युक्त्वा, अनुतारायामप्येतत्सर्वं शंकरेण शान्ताभिधानात् हकारार्थवर्जमतिदिश्य, तृतीयरूपातिरिक्तानां रूपाणां भोगमोक्षसाधनतां तृतीयरूपस्य च मोक्षैकसाधनतां प्रतिपाद्य, तारिकोपदेशक्रमं तन्निष्ठस्य वृत्तिं च प्रदर्श्य, उपसंहृतम्। अत्र च 'ह्रीरि' ति पाठ एव वैदिका अधीयत इति अनूदित इति तस्य लक्ष्मीप्रतिपादकत्वमेव । "गन्धद्वारे" ति मन्त्रश्च श्रीसूक्ते-

१. लक्ष्मीतन्त्रे-२५-३६, ४१ ॥
२. ल-न्त्रे-२७-६, ७ ॥
३. ल-न्त्रे-२७-८ ॥
४. ल-न्त्रे-२७-१७ ॥
५. ल-न्त्रे-२७-२१ ॥

(९). अथास्य श्रीशब्दस्यार्थम् वक्तुं प्रथममस्य व्युत्पत्ति-द्वयमाह-श्रीयते श्रयते इति ।

मू॥ श्रीयते, श्रयते ॥ ९ ॥

छा॥ श्रीयते, श्रयते ॥ ९ ॥

व्या॥ "श्रिञ्—सेवायाम्" इति धातोः 'श्रीयते' इति-श्रीः, 'श्रयते' इति श्री इति सिद्धा कर्मणि व्युत्पत्तिः, कर्तरि व्युत्पत्तिश्चोक्ता॥

ऽपि पठितो लक्ष्मीपरः । लक्ष्मीतन्त्रे देव्यैव स व्याख्यातः । १ "गन्धादयः पृथिव्याद्या द्वाराणि मम वेदने। सर्वेषां पुण्यगन्धानां द्वारभूतास्मि शाश्वती। गन्धद्वारेति मां प्राहुर्विप्रा वेदान्तपारगाः । दुराधर्षास्मि सर्वेषां दैत्यदानवरक्षसाम्। सर्वेषामात्मभूताया मम संवित्क्रियात्मनः । नित्येन विष्णुना पुष्टा नित्यपुष्टा च सद्गुणैः । विषयैर्मे विना पुष्टा नित्यं संवित्परा तनुः । सैव पुष्णाति विषया न जडाभिर्जडात्मनः। नित्यपुष्टांतु मां प्राहुस्सिद्धास्संविद्विचक्षणाः। करिणोनामकर्तारास्त्रिशुद्धास्त्रिक्रियापराः॥ तानिच्छामि सदा द्रष्टुं मनसा यामि तान्सदा । हिमशैलेन्द्रसङ्काशा गजेन्द्रा मम वाहनाः । तैरीश्वरा सदा यामि कर्वी चान्तगती सदा। भूतानामीश्वरी चास्मि प्रियणेशेन सर्वदा । वरदा भुवनेशानामीडिता च सदाखिलैः । वृद्धिदा वर्धमाना च क्षपणी च सदांहसाम् । ईश्वरीत्येव मे नाम तेन देवेन रूपितम्" इति । तद्विभूतिभूम्याभिमानिकत्वात्, पृथिव्यामपि चेत्प्रयुज्यते कामं प्रयुज्यताम्। न तावता लक्ष्म्याम्मुख्यत्वमपैतीति भावः । इति ॥ ८ ॥

(श्रीयते) इति-अत्र श्रीशब्दस्य योगशक्तिग्राहकव्याख्यानमनुपपन्नम् । वागादिशब्दानां वाचिग्रहीतशक्तिकानामपि वृत्तिविशेषेण तदभिमानिदेवताविशेषे प्रयोगवत्, श्रीशब्दस्य संपद्वाचकत्वेन प्रसिद्धस्य तदभिमानिन्यां लक्ष्म्यामपि प्रयोगस्यान्यथासिद्धतयानन्यथासिद्धप्रयोगाभावात्। अतिरिक्तकल्पनं न साधु । तस्माच्छक्तिकल्पनं नसम्भवतीति चेत्, न। लक्ष्मीसहस्रनामादौ श्रीशब्दस्य पाठात् पृथक् शक्तिः कल्प्यते। न च लक्षणया तत्र निर्वाहः। तथा सति नामपाठत्वानुपपत्तेः।तस्मात्प्रमाणबलाधीनशक्तिमत्वं सिध्यतीत्यस्मदाचार्यः ।

१. ल. त्र-५०-१४७, १६० ॥

(१०). व्युत्पत्तिद्वयस्यार्थमाह-अस्यार्थ इत्यादिना ।

मू॥ इदुक्कर्थम्-'एल्लार्कुमिवलैप्पात्तिस्वरूपलाभमाय्, इवळ्तनक्कु मवनैप्पात्ति स्वरूपलाभमायिरुक्कुम्' एन्नु ॥१०॥

छा॥ अस्यार्थः 'सर्वेषामिमामाश्रित्य स्वरूपलाभः, अस्यास्तमाश्रित्य स्वरूपलाभः' इति ॥१०॥

---

(कर्मणि व्युत्पत्तिः) इति-'श्रिञ्-सेवायाम्' इति धातोः १ "क्विप् च" इतिक्विप् । दीर्घश्च । यद्यपि २ "कर्तरि कृत्" इति कर्तर्येव सोऽनुशिष्टः, तथापि ३ "श्रीयते चाखिलैर्नित्यम्" इति निरुक्त्यनुसारात् इह कर्मण्यपि प्रत्ययः। अनेन व्युत्पत्तिद्वयेन पुरुषकारत्वोपयुक्तकृपापारतन्त्र्यानन्यार्हत्वरूपगुणत्रयमुक्तं भवति । अयमर्थः श्रीवचनभूषणे व्यक्तः ॥ ९ ॥

(व्युत्पत्तिद्वयस्ये) ति-ननु कर्मणि व्युत्पत्तौ कर्ता निर्दिष्टः, कर्तरि व्युत्पत्तौ च कर्म । न च भगवच्छास्त्रगतनिरुक्तिबलात्तदध्याहारः। आश्रयणस्य शरणवरणरूपत्वे अखिलकर्तृकत्वस्य बाधितत्वात् । "परं पदम्" इति स्थानाभिधानेऽपि तस्य तत्कर्मत्वायोगात् । 'पद्यते' इनि व्युत्पत्या भगवदभिधानेऽपि तस्य तत्कर्तृत्वासम्भवात्। "श्रयन्ती वैष्णवं भावम्" इत्यन्यस्यैव कर्मणः क्वचिन्निर्देशाच्च। भावशब्दस्य स्वभावपरत्वे सकलभगवद्धर्माश्रयत्वोक्त्या पुरुषकारत्वासिद्धिप्रसङ्गात् । भावशब्दस्याभिप्रायपरत्वेऽपि स्वातन्त्र्यकलुषभगवदभिप्रायानुरोधित्वस्य पुरुषकारत्वविरोधित्वात्, असाङ्गत्यमिति शङ्कायां व्युत्पत्तिद्वयस्यार्थमाहेत्यर्थः ।

(सर्वैस्सेव्यमाना) इति-अयमाशयः- कर्मणि व्युत्पत्तौ तावत् 'सर्वैः' इति कर्ता निर्दिष्टः । धात्वर्थश्च-सेवा । सर्वशब्दश्च स्वरूपयाथात्म्यज्ञानवत्सकलचेतनपरः । तथा चैतत्सेवाभावः स्वरूपयाथात्म्यज्ञानशून्यानामेवेति प्रतीतेः, सर्वशेषित्वमस्यास्सिद्ध्यति । अथवासङ्कुचित एव सर्वशब्दः । अर्हे च कर्मणि प्रत्ययः।

---

१. पाणिनीये-३-२-७६ ॥
२. पाणिनीये-३-४-६७ ॥
३.

व्या॥ अस्य व्युत्पत्तिद्वयस्यार्थः-'श्रीयते' इति 'सर्वैस्सेव्यमाना' इत्युक्तत्वात् सकलचेतनानामिमामाश्रित्य स्वस्य शेषत्वरूपस्वरूप लाभः, 'श्रयते' इतीश्वरं सेवत इत्युक्तत्वात्, अस्या ईश्वरमाश्रित्य-स्वरूपलाभ इत्यर्थः ।

अस्याश्चेतनविषये शेषित्वम्, ईश्वरविषये शेषत्वं च सार्वकालिकं खलु । तस्मादिदं सेव्यत्वं सेवकत्वमुभयमपि नित्यमित्युच्यते ॥१०॥

---

तदर्हत्वंच-शेषित्वमेवेति सर्वशेषित्वलाभः । कर्तरि व्युत्पत्त्या च भगवच्छेषत्वसिद्धिः। "श्रयन्ती वैष्णवं भावम्" इत्यत्रापि शेषत्वानुगुणं भगवदभिप्रायानुविधानं विवक्षितमिति ततोऽप्युक्तार्थलाभः । उक्तं च[१]"तां श्रीरिति त्वदुपसंश्रयणान्निराहुः" इति। अत उभयत्र सम्बन्धः देव्याः श्रीशब्देनोच्यते । तदुक्तं[२]"अस्येशानाजगतो विष्णुपत्नीति च श्रुतौ । लक्ष्मीरुभयसम्बन्धात् घटकत्वोचिता मता" इति । अतो न कदाचिदनुपपत्तिरिति ।

ननु 'श्रीयते, श्रयते, शृणोति, श्रावयति, शृणाति, शृणाति' इति 'श्रिञ्-सेवायाम्' 'श्रु-श्रवणे' 'शॄ-हिंसायाम्' "शॄ-विस्तारे' इत्यादिधातुसिद्धश्रीशब्दस्य षड्विधव्युत्पत्तिसिद्धेः, तासु 'श्रीयते, श्रयते' इति व्युत्पत्तिद्वयमात्रकथनस्यानुचितत्वात्, प्रबन्धान्तरे लोकाचार्यैरेव षड्विधव्युत्पत्त्यर्थानामनुगृहीतत्वाच्च, मीमांसारूपेऽस्मिन्प्रबन्धे अर्थान्तराकथनस्य को वाहेतुरिति चेत् सत्यम्। श्रियः पुरुषकारत्वस्यैव सिद्धान्तत्वात्, तदुपयुक्तगुणवर्णनस्यैव मुख्यत्वात्, अन्येषां तदनुयायित्वात्, तस्यैव साम्प्रदायिकत्वाच्चेति । तथोक्तं सारप्रकाशिकायां द्वयाधिकारे "श्रयन्तीं श्रीयमाणां च शृणतीं शृण्वतीमपि । शृणाति निखिलान्दोषान् शृणाति च गुणैर्जगत्" इत्याद्युक्तषड्विधव्युत्पत्तिं प्रदर्शयन् तासु 'श्रीयते, श्रयते' इतिव्युत्पत्त्योः पुरुषकारत्वज्ञापनं प्रयोजनमिति साम्प्रदायिकमित्याह-श्रीशब्द इत्यादिना ।" इति ।

अत्र तात्पर्यदीपिकायाम्-"श्रिञ्-सेवायाम्" इति धातोरेव श्रीशब्दव्युत्पत्ते-

---

१ वैकुण्ठस्तवे-२९ ॥ | २ दीपसंग्रहे ॥

(१) अप्रदर्शनेऽपि अप्रार्थिनीरुक्तिदर्शनात् कल्प्या इत्याशयः।



(११). ईश्वरस्योपायत्वोपेयत्वरूपमाकारद्वयं यथा वर्तते, तथास्याः पुरुषकारत्वप्राप्यत्वरूपाकारद्वयस्य सत्त्वात्, तत्र क्रमाकारमवलम्ब्यामूमिदानीं वदाति इत्यत आह—इदानीमिति।

मू॥ इप्पोादिवलैच्चोल्लहिरदु पुरुषकारमाह ॥११॥

छा॥ इदानीमिमां वदाति पुरुषकारत्वेन ॥११॥

व्या॥ "पुरुषकारत्वेन" इत्युक्तत्वात्-उपायवस्तुविशेषणत्वाकारमवलम्ब्यास्या उपायत्वेऽन्वयं वदतां पक्षो निरस्तः ॥११॥

---

व्याकरणसिद्धतया तस्या एवेहाभिधानात् । 'श्रु-श्रवणे' इत्यस्मात्केवलाण्यन्ताद्वा निरुक्तिवशेन क्विप्प्रत्ययःकल्प्यः। श्रृणातेस्तु क्विप्प्रत्ययः । "श्रीञ्-पाके" इत्यस्माच्चु यद्यपि प्रत्ययो न कल्प्यः, तथापि विशेषाविधानात् श्रिञो व्युत्पत्तिरेव झटित्युपतिष्ठते। 'शॄ-विस्तारे' इति क्र्यादिषु न दृश्यते(१) । "श्रयन्ती वैष्णवं भावम्" इति "पालयन्ती हरेर्भावं विष्णुपत्नी प्रकीर्तिता" इत्यनेन तुल्यार्थं तदभिप्रायानुविधानम्। एतस्याः 'नित्यमि' ति तच्छेषतामेव बोधयाति । श्रावयतीत्यादिव्युत्पत्यन्तरमपि श्रीवचनभूषणे दर्शितमेव । इहापि "स्ववचनमार्गे आगच्छन्तम्" इत्यनेन 'श्रावयति' इति व्युत्पत्तिस्सूचिता। "सहनमेतदर्थम् "इत्यनेन "शृणाति निखिलान्" इति व्युत्पत्तिः । "चेतनस्यैतदुभयम्" इत्यनेन संशयादिव्युदासकत्वमपि तस्यां व्युत्पत्यामर्थ इति सूचितम् ।—इति ॥ १० ॥

(पुरुषकारत्वप्राप्यत्वरूपाकारद्वयस्य) इत्यनेन—पुरुषकारत्वोपायत्वप्राप्यत्वरूपाकारत्रयकथनपक्षः अनादरणीय इति भावः । "आकारत्रयसम्पन्नाम्" इत्यत्रानन्यार्हशेषत्वानन्यशरणत्वानन्यभोगत्वरूपमन्त्रप्रतिपादिताकारत्रयात्मस्वरूपपरत्वात् न विरोधः । अस्य सर्वेषां जीवात्मनां सत्त्वात्, तस्या अपि जीवकोट्यन्तर्भू-

त्वाच्च । अस्या जीवान्तर्भूतत्वं प्रागेव प्रपंचितम् ।

(इदानीम्) इति–पूर्वखण्डे श्रीमच्छब्दे इत्यर्थः ।

(अस्या उपायत्वेऽन्वयं वदतां पक्षो निरस्तः) इति–श्रुतितुल्यश्रीपांचरात्रे, श्रीरामायणे, पराशरस्मृतौ, आचार्यवचनेषु च लक्ष्म्याः पुरुषकारत्वव्यतिरेकेण भगवत्तुल्योपायत्वादर्शनात् तत्पक्षोऽनादरणीय इति भावः ।

तथा हि श्रीपांचरात्रे भगवद्वचनम्–"अहं मत्प्राप्त्युपायो वै साक्षाल्लक्ष्मीपतिस्स्वयम् । लक्ष्मीःपुरुषकारेण वल्लभा प्राप्तियोगिनी । एतस्याश्च विशेषोऽयं निगमान्तेषु शब्द्यते" "आकिंचन्यैकशरणाः केचिद्भाग्याधिकाःपुनः । मत्पदाम्भोरुहद्वन्द्वं प्रपद्य प्रीतमानसाः । लक्ष्मीं पुरुषकारेण व्रतवन्तो वरानन । मत्क्षमां प्राप्य सेनेश प्राप्यं प्रापकमेव माम् । लब्ध्वा कृतार्थाः प्राप्स्यन्ते मामेवानन्यमानसाः" "मत्प्राप्तिं प्रति जन्तूनां संसारे पततामधः । लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षणम्भवेत्" इति । श्रीरामायणे "स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः । सीतामुवाचातियशाः राघवञ्च महाव्रतम्" "एवमुक्तस्तु रामेण लक्ष्मणस्संयतांजलिः । सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत्" इत्यादि । "स्वाचार्यं हृदये ध्यात्वा जप्त्वा गुरुपरंपराम् । ततस्सम्प्रार्थयेद्देवीं सर्वलोकेश्वरप्रियाम् । माता त्वं सर्वलोकानां सर्वलोकेश्वरप्रिये । आश्रयस्वेश्वरमिममपराधशतैर्युतम् । इति देवीं पुरस्कृत्य पश्चाद्देवं समाश्रयेत्" इति पराशरस्मृत्युत्तरखण्डे । श्रीपराशरभट्टार्यः "पितेव" इत्यादि । वात्स्यवरदगुरुः "अपराधैकसक्तानामनर्हाणां चिरं नृणाम् । भर्तुराश्रयणे पूर्वं स्वयं पुरुषकारताम् । वाल्लभ्येनानुतिष्ठन्तीं वात्सल्याद्युपबृंहणीम्" इति प्रपन्नपारिजाते । कुरुकेशाचार्यः-सामवेदषष्ठशतकदशमदशकदशमगाथाव्याख्याने । श्रुतप्रकाशिकाचार्यः-"प्रतापोष्मलपितृत्वदुरासदभगवत्समाश्रयणसिद्ध्ये पुरुषकारानुप्रविष्टवात्सल्यनिर्भरलक्ष्मीसमाश्रयणं श्रीमच्छब्दविवरणमुखेनाभिधीयते" इति गद्यव्याख्याने । श्रीमन्निगमान्तदेशिकः- "इह च भगवत्प्रपदने स-

मुद्यतस्य सम्यग्ज्ञानसम्पादनपुरुषकारपुरस्कारादिकं पूर्वकृत्यम्" इति पृथुगद्याधिकारे। "अर्थस्वभावानुष्ठानलोकदृष्टिगुरूक्तिभिः । श्रुत्या स्मृत्या च संसिद्धं घटकार्थावलम्बनम्" इति रहस्यत्रयसारादिषु च।

अत्रैवं पूर्वपक्षी मन्यते—भगवच्छास्त्रश्रीरामायणादिवचनैःश्रियःपुरुषकारत्वसिद्धिरिति यदुक्तम्, तन्नोपपद्यते। लक्ष्म्या उपायत्वस्यानेकप्रमाणासिद्धतया तद्विरोधेन पुरुषकारत्ववचनानामतत्परत्वात्। तथा हि श्रीशब्दे "शॄ-हिंसायाम्" "शॄ-विस्तारे" इति व्युत्पत्तिद्वयेन "शृणाति निखिलान्दोषान् शॄणाति च गुणैर्जगत्" इत्युपबृंहणोपबृंहितेनानिष्टनिवर्तकत्वमिष्टप्रापणं च प्रतिपादितम्। एतदेव ह्युपायत्वं नाम। स्मृतिश्च "अलमेषा परित्रातुं राक्षस्यो महतो भयात्" "अलमेषा परित्रातुं राघवाद्राक्षसीगणम्" "आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी" "सर्वकामप्रदां रम्यां संसारार्णवतारिणीम्" "सकृद्विभाता सर्वार्तिसमुद्रपरिशोषिणी" "भवसन्तापहारिणीम्" "परनिर्वाणदायिनी" "ज्योतिष्मत्यमृतावहा" "वाचःपरं प्रार्थयिता प्रपद्येन्नियतःश्रियम्" "यामालम्ब्य सुखेनेमां दुस्तरं त्रिगुणोदधिम् । निस्तरन्त्यचिरेणेत्र व्यक्तध्यानपरायणाः" "मामेकं देवदेवस्य महिषीं शरणं व्रजेत्" "अहं हि शरणं प्राप्ता शरणं भव मेऽम्बुजे" "एषा प्रसादसुमुखी स्वपदं प्रापयिष्यति" "एवं प्रपद्य लक्ष्मीं तां श्रियं सद्गुरुभावतः" इति। "उदाराम्। तां पद्मनेमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे" "श्रियं वसानाममृतत्वमायन्" "कामवत्सामृतं दुहाना" "सा नो लोकममृतं दधातु" इत्यादि श्रीसूक्तमेधाश्रद्धासूक्तादितिसूक्तवाक्सूक्तादिषु च। न चानन्योपायत्वविरोधः। लक्ष्म्या उपायत्वेऽपि अनन्योपेयत्वविरोधाभाववदुपपत्तेः। न च "मामेकं शरणं व्रज" इत्येकत्वावधारणविरोधः। गुणविग्रहवैशिष्ट्येऽपि तदैक्यवत् नित्यसंश्लिष्टाविशेषलक्ष्मीकत्वेऽपि तदुपपत्तेः। यागादिषु पतिप्राधान्येनैकत्वव्यवहारवत् विशेष्यप्राधान्येन तदुपपत्तेश्च। न चेदमुपायत्वं फलप्रदत्वदशायां तदुपयोगिज्ञानाद्युद्बोधकत्वमात्रम्। "आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेःपदे" "स्वाम्युपाय उपेयश्च स्वरूपादिसमर्पणे। प्रथितः प्रतिसम्बन्धी

श्रीमान्निगमचक्षुषा" "उभयाधिष्ठानं चैकं शेषित्वं इत्यात्महविःप्रतिसम्बन्धित्वमा-त्रावैष्णवादीष्विवात्र शेषित्वं मिथुनस्येति प्रसिद्धम्। "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" "स्वाभाविकोऽस्य सम्बन्धः पुंसो यःपरमात्मना। तस्यैव बोधो न्यासाख्यः प्रथमं यात्युपायताम्" इत्यादिषु सामान्यतो मोक्षसाधनज्ञानमात्रस्य शेषत्वानुसन्धानरूपत्वात्, न्यासस्य च विशेषतस्तथात्वंचावगतम्। ततःप्रपत्तेः शेषत्वानुसन्धानरूपत्वात्, शेषत्वस्य मिथुनप्रतियोगित्वाच्च, मिथुनस्याभिगम्यत्वेनात्महविःप्रतिसम्बन्धित्वं, तत्स्वीकर्तृत्वं, तत्फलभूतेष्टप्रापकत्वमनिष्टनिवर्तकत्वं च भगवतस्तुल्यमेवाभ्युपगन्तव्यम्। एवं लक्ष्म्याः भगवत्तुल्योपायत्वस्य विशेषप्रमाणसिद्धतया भरस्वीकाररक्षासंकल्पाश्रयत्वं वक्तव्यम्। संकल्पश्च 'क्षमिष्यामि' 'क्षान्तम्' इत्येवंरूपः। स च पूर्वं लक्ष्म्याः कालुष्यं विना न सम्भवतीति ईश्वरवदेव कालुष्यं तावत्सिद्धम्। अत एव "स्वस्ति श्रीर्दिशतादशेषजगतां सर्गोपसर्गस्थिती स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन् हरिः। यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्" इत्यत्र दुर्गतिप्रदानेऽपि लक्ष्म्याः कर्तृत्वं श्रूयते। ततश्चानाद्याज्ञातिलंघनेन क्रुद्धायाः भरसमर्पणपूर्वभाविसमाश्रयणघटकत्वं न सिध्यति। अन्यथान्योन्याश्रयात्। प्रथमं भरसमर्पणेन कालुष्यनिवृत्तिः, तन्निवृत्तौ घटकत्वस्य सिद्ध्या भरसमर्पणसिद्धिरिति। अतः लक्ष्म्याः स्वयं कलुषतया विमुखेश्वरवशीकरणं विमुखचेतनवशीकरणं चासङ्गतमिति घटकत्वमनुपपन्नम्। अत उपायत्ववचनैःपुरुषकारवचननानां बाधात् पुरुषकारत्वासिद्धिः। न च पुरुषकारवचनैरेवोपायत्ववचनानां बाधः किं न स्यादिति वाच्यम्। "सावकाशनिरवकाशयोः निरवकाशं बलीयः" इत्युपायत्ववचनानां निरवकाशत्वात्, पुरुषकारत्ववचनानां समाश्रयणोत्तरकालीनफलप्रदानसमये तदपेक्षितगुणोद्बोधकत्वविवक्षया सावकाशत्वात्, समाश्रयणघटकत्वपर्यालिकिचिद्विशेषवचनस्य भूयसान्यायेन बाधितत्वसम्भवाच्च तस्मादेवंनिर्णीतत्वात् लक्ष्म्याः पुरुषकारत्वमन्तरोपायत्वमेव सिद्धम्।--इति।

अत्रोच्यते। "ईश्वरस्य दण्डधरत्वं लक्ष्म्याश्च पुरुषकारत्वमित्येवमुभयमपि "युवत्वादौ तुल्येऽपि" "वाचःपरं प्रार्थयिता प्रपद्ये नियतः श्रियम्" इत्युक्तप्रकारेणानादिभगवत्संकल्पव्यवस्थया व्यवस्थितमेतत्। अतो विलक्षणगुणसम्बन्धयुक्तः-

स्वतन्त्र एव स्वामी स्वसंकल्पाधीनपुरुषकारमुखेनैव रक्षतीति प्रमाणसम्प्रदायाभ्यामवगम्यत इति" इति 'पुरुषकारत्वमेव लक्ष्म्यास्स्वरूपम्, उपायत्वमेवेश्वरस्य स्वरूपम्' इति विरोधपरिहारादिग्रन्थेषु आचार्यैरनुगृहीतत्वात् लक्ष्म्याः भगवत्तुल्योपायत्वोक्तिरसङ्गता।

व्यापारसम्बन्धावच्छिन्नकारणत्वरूपोपायत्वमीश्वरस्यैवेति "अमृतस्यैष सेतुः" "धातुःप्रसादान्महिमानमीशम्" "नायमात्मा" "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" "निवासश्शरणं सुहृद्गतिर्नारायणः" "निवासश्शरणं सुहृत्" "शरणं-इष्टस्य प्रापकतयानिष्टनिवारणतया समाश्रयणीयश्चेतनश्शरणम्। स चाहमेव" "सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुश्श्रूयते। सिनोतेर्श्च बन्धनार्थत्वात् सेतुः। अमृतस्य प्रापक इत्यर्थः" "यदुक्तं 'अमृतस्यैष सेतुः' इति प्राप्यप्रापकसम्बन्धव्यपदेशात् प्रापकात्परं प्राप्यमस्तीति, तन्न, प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इत्यनन्योपायत्वश्रवणात्।" "प्राप्यस्यैव परमात्मनः प्रापकत्वोपपत्तेः। यथाह "यमेवैष वृणुते तेन लभ्यः" इति" "अमृतस्यैष सेतुः" इति स्वस्यैवामृतस्य स्वयमेव प्रापकमुच्यते। "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतेः" "उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ" "शास्त्रप्रतिपाद्यमुपायोपेयात्मकम्, सिद्धोपायोपेयं च ब्रह्म। साध्योपायो भक्तिः। तत्र सप्तम्यन्तैः पदैस्सिद्धोपायरूपमुपेयं च ब्रह्मोच्यते" "सकलेतरपुरुषार्थतत्साधनपरित्यागपूर्वकं प्राप्यत्वेनोपायत्वेन यज्जिज्ञास्यमित्यर्थः। प्राप्यतया प्रापकतया च ब्रह्मापाततःप्रतिपन्नम्" "ईदृशेश्वर उपायभूतः, उपेयमन्यदित्यत्राह-परस्मादिति" "अनन्योपायत्वश्रवणात्-प्राप्यस्यैवोपायत्वश्रवणात् इत्यर्थः। विवृणुते तनूं स्वाम्' इत्यनेन प्रापकत्वं प्राप्यत्वं च गम्यते" "सत्तास्थितिप्रयतनप्रमुखैरुपात्तं स्वार्थं सदैव भवता स्वयमेव विश्वम्। दीपप्रकाश तदिह त्वदवाप्तये त्वामव्याजसिद्धमनपायमुपायमाहुः" "आर्तेष्वाशुफला तदन्यविषयेऽप्युच्छिन्नदेहान्तरा वहन्यादेरनपेक्षणात्तनु-

भृतां सत्यादिवद्व्यापिनी । श्रीरङ्गेश्वर यावदात्मनियतत्वत्पारतन्त्र्योचिता त्वय्येव-त्वदुपायधीरपीहितस्वोपायभावास्तु मे ” “ उपायस्स्वप्राप्तेरुपनिषदधीतस्स भगवान्” “प्राप्यत्वं ब्रह्मणस्सिध्येद्ब्रह्मणत्वस्य कीर्तनात् । स्वप्राप्तेस्साधनत्वं हि ब्रह्मणत्वमिहोच्यते” “ ‘इण्-गतौ’ इति धातोः ‘ईयते अनेन’ इति अयनशब्दे करणव्युत्पत्त्या ईश्वरस्योपायत्वम्, ‘ईयते असौ’ इति कर्मव्युत्पत्त्योपेयत्वं च” इत्यादिश्रुतिस्मृत्याचार्यवचनासिद्धम् ।

एतादृशोपायत्वं कारणत्वव्याप्तम् । “कारणन्तु ध्येयः” “नारायणमनुध्यायेत्” “उपायतयोपेयतयापि जिज्ञास्यत्वे कारणत्वेचोपयुक्तानि तत्तत्प्रापकवाक्यासिद्धान्येतच्छ्रुतिविवक्षितानि दर्शयति-सर्वेत्यादिना” इत्यादि वचनात् । एतादृशोपास्यत्वं सद्ब्रह्मात्मादिशब्दवाच्यस्य नारायणस्यैव, नान्यस्येति सिद्धम् । तद्वाच्यत्वं तस्या अप्यङ्गीकारे श्रीभाष्यादिविरोधो दुष्परिहर इति प्रागेवोपपादितम् ।

श्रीतत्त्वसिद्धांजनादिषु ‘लक्ष्म्या ब्रह्मत्वं नास्ति, किन्तु ईश्वरत्वमात्रम् । ब्रह्मलक्षणस्यातिव्याप्तिरिति चेन्न । स्वरूपयोग्यरूपजगत्कारणत्वमीश्वरत्वम् । तल्लक्ष्मीनारायणसाधारणम् । फलोपधानरूपं-ब्रह्मलक्षणम् । तस्मात् जीवत्वप्रसङ्गो नास्ति’ इत्याद्युक्तिरप्यसङ्गता । एतादृशेश्वरब्रह्मलक्षणविभागस्य जगद्व्यापाराधिकरणविरुद्धत्वात् । “यद्येतन्निखिलनियमनम्मुक्तानामपि साधारणं स्यात्, तत इदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते । असाधारणस्य हि लक्षणत्वम्” इति तदधिकरणभाष्यसूक्तिः ।

किंच लक्ष्म्या जगद्व्यापारसामर्थ्याङ्गीकारे “त्वदाश्रितानाम्” इतिश्लोकभाष्यश्रीसूक्तेरप्रामाण्यापत्तिस्स्यात् । “एवम्मुक्तानां जगद्व्यापारशक्तिरस्ति, तत्प्राप्तिर्नास्तीति पक्षोऽपि न विचारार्हः । न हि मुक्तानां सर्वशरीरत्वम् । अश्रुतत्वात्, अनुपपत्तेश्च । तदभावे कथं “बहु स्याम्” इति संकल्पशक्तिः । तथाविधशक्तिशालिनस्तदप्राप्तिश्चात्र दुर्वचा । तैथव नित्यानामपि । उक्तं हि भाष्ये अनन्तपदव्याख्याने “सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः” इति । अतो यथोक्त एवार्थः” इति हि

तत्रत्यश्रीसूक्तिः ।

'अत्र नित्यमुक्तानामुक्तसर्वशरीरत्वासम्भवाच्छ्रुतत्वविरोधबहुभवनसंकल्पशक्त्यादयः लक्ष्म्यास्सन्ति-उत न सन्ति । अस्तिचेज्जीवत्वप्रसङ्गः । नास्ति चेत् विशिष्टाद्वैतसिद्धान्तप्रवेशाभावस्सिद्धः । तस्मात् "ब्रह्म वा इदं सर्वम्" "सर्वं खल्विदं ब्रह्म" "यतो वा इमानि भूतानि जायन्ते—तद्ब्रह्म". इत्यादिवाक्यघटितब्रह्मशब्दवाच्यत्वं तस्या असिद्धम् ।

ब्रह्मशब्दवाच्यत्वाभावदेव "तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः" इत्यनुगृहीतरीत्योपास्यत्वं ब्रह्मण एव । 'सएव-पुरुषोत्तम एवेत्यर्थः । स एवामृतत्वायेतिपदैः "तमेव विद्वान् अमृत इह भवति नान्यःपन्थाः" इति श्रुत्यर्थो विवक्षितः । अत एव पुरुषोत्तमोऽभिधीयते" इत्युक्तम् । श्रुतेरपि पूर्वोक्तहेयप्रत्यनीकत्वकल्याणगुणाकरत्वविशिष्ट एव तापत्रयातुरैरुपास्यः, न तेष्वन्यतम इति भावः" इति श्रुतप्रकाशिका । अनेनोपास्यत्वोपयुक्तानिरुपाधिकजगत्कारणत्वसर्वेश्वरत्वनिखिलहेयप्रत्यनीकत्वसत्यसंकल्पत्वज्ञानानन्दानन्तकल्याणगुणाकरत्वसर्वज्ञत्वसर्वशक्तित्वपरमकारुणिकत्वपरस्मात्पुंस्त्वाद्यभावादस्या उपायत्वं दुर्घटमित्युक्तम्भवति ।

लक्ष्मीप्रभृतीनां निखिलहेयप्रत्यनीकत्वादिकं "यद्यप्यपहतपाप्मत्वादिसत्यसंकल्पपर्यन्तो गुणगणः प्रत्यगात्मनःस्वाभाविक एवाविर्भूतः, तथापि तस्य तथाविधमेव परमपुरुषायत्तम् । तस्य नित्यस्थितिश्च तदायत्ता । परमपुरुषस्यैतान्नित्यताया नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथावस्थानमस्तीति शास्त्रादवगम्यते" "इच्छात एव तत्र विश्वपदार्थसत्ता" इत्युक्तरीत्या भगवन्नित्येच्छाधीनम् । तस्याः पत्नीत्वादिसिद्धेर्निरुपाधिकत्वं कुत्रापि नास्तीतिसिद्धम् । तस्माद्विरोधपरिहारसूक्तिरीत्या अस्या भगवन्नित्यससंकल्पाधीनपुरुषकारत्वमात्रं विना कारणत्वादिव्याप्तमुमुक्षूपास्यत्वं नास्तीति अवश्यमङ्गीकरणीयम् । "श्रियं प्रपद्येत्-शरणं व्रजेत् । पुरुषकारत्वेनेति भावः" इति सारदीपिकोक्तिः । कारणत्वादी-

नामुपास्यत्वोपयोगित्वं जन्माद्यधिकरणश्रुतप्रकाशिकायां व्यक्तम् । अतो जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणाभावात् "यतो वा इमानि" इत्यादिवाक्योदितोपास्यत्वमस्या नास्तीति किम्पुनर्न्यायसिद्धम् ।

ननु श्रियः 'श्रीयते श्रयते' इति व्युत्पत्तिद्वयेन पुरुषकारत्वसत्त्वेऽपि श्रीविशिष्टस्यैव नारायणस्योपायत्वप्रतिपादनेन 'विशिष्टकारणताग्राहकं प्रमाणमसति बाधके तद्विशेषणेऽपि कारणतां गृह्णाति' इति न्यायेन श्रियोऽपि स्वातन्त्र्येणोपायतावच्छेदकतया वा कारणत्वान्वयोऽवश्यम्भावः । किंचोत्तरखण्डश्रीमत्त्वस्य प्राप्यविशेषणत्वेन प्राप्यत्वाङ्गीकारात्, अत्राप्युपायविशेषणत्वेनाप्युपायविशेषणत्वाङ्गीकारोऽप्युचित इतिचेत्—अत्रोच्यते—श्रिय उपायतावच्छेदकतया स्वातन्त्र्येण वा कारणत्वान्वयो नास्तीति द्योतनायात्र पुरुषकारत्वेनोक्तिः । भगवत उपायत्वमुपेयत्वं च निखिलहेयप्रत्यनीककल्याणगुणाकरत्वरूपम् । तत्रोपायत्वं स्वरूपमात्रपर्याप्तम् । न तु-चेतनविशिष्टे । उपेयत्वं च-गुणविग्रहविभूतिविशिष्टेऽपि । उपायत्वस्य सहकार्यन्तरनैरपेक्ष्यात्मकत्वात् । स्वभोग्यत्वस्यान्यभोगसहकारे रस्यतातिशयहेतुतायाः प्रसिद्धत्वात् । उपेयत्वस्य चेतनान्तरविशिष्टवेषेऽपि अन्वये बाधकाभावात् । तस्माच्छ्रियश्चेतनं प्रति उपायांशे पुरुषकारत्वसत्त्वेऽपि कारणत्वान्वयो नास्ति इति ।

ननु 'रथी गच्छति, खड्गी हन्ति, घटत्वादिकं प्रति दण्डादिकं कारणम्' इत्यादिप्रतीत्या गमनहननादिकर्तृत्वस्य विशेषणभूतरथादौ, घटादिकारणत्वस्य दण्डादौ चावच्छेदकतया वान्वयस्वीकारात्, प्रकृते 'श्रीमान् रक्षति' इत्युक्ते विशेषणभूतायामपि अन्वयस्वारस्यात् लक्ष्म्या अप्युपायत्वमङ्गीकार्यमेवेति चेत्—अत्रोत्तरम् । विशिष्टान्वयस्थले विशेष्ये विशेषणे वा विधेयान्वयस्यौत्सर्गिकतया तत्रबाधे सति अन्वयानङ्गीकारात्, तादृशान्वयस्य प्रमाणान्तरसिद्धयोग्यताकविशेषस्थलीयत्वात् न सर्वत्र तथान्वयः । उक्तस्थले तथान्वयेऽपि "दण्डी गच्छति, कुण्डली गच्छति, नीलो गच्छति, श्वेतो गच्छति' इत्यत्र विशेषणस्य प्रकृतिक्रियायोग्यताभावेन विशेषणान्तरान्वयो नशक्यः । एवं रक्तदण्डःकारणम्' इत्यादौ अपि रक्तत्वादेरविप्रसक्तत्वे-

न नान्वयः । तथा च श्रियोऽपि उपलक्षणतया विशेषणत्वमङ्गीकरणीयम् । "नित्यमज्ञातनिग्रहाम्" इत्यादिप्रमाणबलेन निग्रहनिवृत्तिप्रयोजकसङ्कल्पवत्त्वरूपोपायत्वा-न्वयस्य बाधेनाङ्गीकारो न शक्यः । उपायतावच्छेदकान्वयस्तु "नराणामयनमिति नारायणपदम्" इति तत्पुरुषसमासे लक्ष्म्यादिसकलचेतननिरूपितोपायत्वस्य केवल-भगवत्स्वरूपे प्रतिपादितत्वेनावच्छेदकतयापि अन्वयोऽनुपपन्नः । तस्मात् "यत्रायं सारसः, स देवदत्तकेदारः" इत्यत्रेव उपलक्षणतया श्रियो विशेषणत्वेन, न केनापि प्रकारेणोपायत्वमिति ।

तस्मात् जगज्जन्मादिकारणत्वाभावात्, उपायत्वप्रतिपादकवचनानां भगवत्तु-ल्योपायपरत्वाभावात्, "श्रियं प्रपद्येत्-शरणं व्रजेत्, पुरुषकारत्वेनेति यावत्" इति सारदीपिकोक्तेः, "नान्यथा लक्षणं भवेत्" इति कण्ठत उपायत्वनिषेधपूर्वकपुरुष-कारत्वस्यैवोक्तत्वाच्चास्या उपायत्वं वदतां पक्षोऽनादरणीयः ।

नच " आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेःपदे" इत्यादिप्रमाणैः श्रियोऽपि भरसमर्पणप्रतिसम्बन्धित्वं, भरस्वीकर्तृत्वं, विष्णोरिव फलप्रदत्वं चावगतमिति उपाय-त्वसामान्यवचनानामुक्तविशेषपर्यवसानं युक्तमिति वाच्यम् । "उपाये ग्रहरक्षित्रोः" इति रक्षकत्वोपायत्वयोः परस्परमर्थान्तरत्वेन सामान्यविशेषभावापन्नत्वाभावात् । रक्षकत्वं-फलप्रदत्वम् । प्रतिपदविहितोपायस्थाननिविष्टत्वमुपायत्वमिति तयोरत्यन्त-भेदात् । तत्रापि देव्या रक्षकत्वमपि न भगवत्तुल्यरक्षकत्वं प्रतिपाद्यते । तथात्वे मा-तृत्वप्रयुक्तसहजवात्सल्यादीनाम्, पत्नीत्वप्रयुक्तपारतन्त्र्यादीनां च गुणानां नाशा-पत्तेः । अत एवोच्यते " युवत्वादौ तुल्येऽपि " इत्यादि । अतस्तत्रापि रक्षकत्वं न पतितुल्यम् । अन्यत्र देवतयोस्स्वतन्त्रत्वेन स्वतन्त्ररक्षणेऽपि अत्र विशेषणत्वेन हविरुद्देश्यत्वाद्विशेष्यतुल्यरक्षकत्वमनुपपन्नम् । किन्तु विशेषणत्वानुगुणं तद्रक्षणोप-युक्तं तद्गुणोद्बोधकत्वम् । शेषशेषिणोश्शेषशेषीभाववत् तत्कृत्ययोरपि शेषशेषीभावस्यो-चितत्वात् । 'विशेषणं हि-विशेष्यान्वयिधर्मान्वयित्वम्' इत्युक्तिः-अपृथक्सिद्धचेत-नाचेतनयोरदर्शनात् न्यायविरुद्धा । "यथा शुक्लकृष्णरक्ततन्तुसङ्घातोपादानत्वेऽपि

चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसम्बन्ध इति कार्यावस्थायामपि न सर्वत्र वर्णसंकरः" इत्यनुगृहीतरीत्यात्रानुकूलतर्कोऽपि विवक्षितः ।

यच्च दुर्गतिप्रदानेऽपि लक्ष्म्याःप्रयोजयितृत्वमुक्तम्, नन्न । तत्र लक्ष्म्याःस्वपारतन्त्र्यानुगुण्येनानुमन्तृत्वस्योक्तत्वात् । अतःकदाचिदपि लक्ष्म्याः कालुष्यगन्धाभावात् तदुपायत्वं न भगवत्तुल्यफलप्रदत्वम्, न वा भगवत्तुल्योपायत्वमिति तदुपायत्वपरवचनानां न समाश्रयणघटकत्वविरोधित्वमिति ।

न च विद्यामात्रस्य " आत्मेति तूपगच्छन्ति " इति शेषत्वज्ञानरूपत्वात् शेषत्वप्रतिसम्बन्धित्वं च मिथुनस्येति लक्ष्म्याःभरसमर्पणप्रतिसम्बन्धित्वे सिद्धे, तत्स्वीकाररक्षासंकल्पावप्यागताविति वाच्यम् । शरणागतिविद्यायां तादर्थ्यवाचकशब्दाभावेन केवलंभरस्वीकारप्रार्थनेन शेषत्वानुसन्धानाभावात् । सिद्धान्ते लक्ष्म्याः भक्तितुल्योपायत्वाङ्गीकारे न तस्य शरणशब्दार्थत्वेन वेद्याकारत्वम् । किन्तु पुरुषकारत्वस्यैव । श्रीशब्देन "शृणोति" इत्यादिव्युत्पत्तिबोध्यत्वेन तत्रैव वेद्यत्वात् । तस्मात्पुरुषकारद्वारकमुपायत्वं श्रीशब्दवेद्यमित्युक्तं भवति । एवं लक्ष्म्याःपुरुषकारत्वव्यतिरेकेणोपायत्वस्याभावात्, तत्त्वेनोपायत्वस्य भरस्वीकारप्रार्थनापूर्वभावित्वाच्च तादृशोपायत्वं नास्तीति सिद्धम् ।

अपरे तु—लक्ष्म्याः भगवत्तुल्योपायत्वाभावेऽपि स्वपारतन्त्र्यानुगुणं विग्रहगुणसदृशमुपायत्वमस्ति । तथा हि मन्त्ररत्ने मतुप्प्रत्ययेन भगवतः लक्ष्मीवैशिष्ट्यं प्रतिपाद्य, तद्विशिष्टस्य ' शरणम् ' इत्युपायत्वं प्रतिपाद्यते । न चात्र लक्ष्म्याः उद्घात्रितगुणविशिष्टस्यैवोपायत्वात् लक्ष्म्या उपलक्षणत्वमात्रमिति वाच्यम् । उत्तरवाक्ये ऽपि तस्या उपलक्षणत्वप्रसङ्गेनोपेयत्वाभावप्रसङ्गात् । न चेष्टापत्तिः । अपसिद्धान्तात् । यदि मिथुनशेषत्वस्य प्रमाणसिद्धत्वात्, उत्तरवाक्ये श्रियो विशेषणत्वस्य स्वतःप्राप्तस्य बाधकाभावाच्च नोपलक्षणत्वम् । तर्हि तदुपायत्वस्यापि " लक्ष्मीं च मां सुरेशेशं द्वयेनशरणं गतः । मल्लोकमाचिराल्लब्ध्वा मत्सायुज्यं स गच्छति " "निरुपाधि-

स्वतन्त्रश्च स्वामी नः करुणानिधिः । निरुपाधी स्वतन्त्रा च स्वामिनी नः कृपानिधिः । त्वमेव सर्वशास्त्रेषु शरण्यत्वेन गीयसे । आत्मात्मीयञ्च यत्किञ्चिद्दुर्भरं दुस्त्यजम्मम । तत्सर्वं तव विन्यस्तं शुभयोःपादपद्मयोः । उपेयस्य तव प्राप्त्यै त्वामुपायतया वृणे । उपायो भव मे देव शरणं भव मेऽच्युत । उपायो भव मे देवि शरणं भव मेऽम्बुजे । प्लुष्य मे दुरितं सर्वं पुष्य मे त्वद्गतां धियम् । इत्येवमनुसन्धाय मां प्रपद्येत वै गतिम् । आदिदेवं जगन्नाथमीशं वा पुरुषोत्तमम् । सकृदेवं प्रपन्नस्य कृत्यं नैवान्यदिष्यते " इत्यादिप्रमाणसिद्धत्वात् तथात्वे बाधकाभावाच्चोपायत्वमपि मिथुननिष्ठम् । अन्यथा पूर्वोत्तरवाक्ययोः वैरूप्यापात्तिः । तस्मादत्रापि विशेषणत्वमेवाङ्गीकरणीयम् । पारतन्त्र्याद्गुणादितुल्यम्, स्वीकारसंकल्पाश्रयत्वात् ईश्वरतुल्यं चोपायत्वं सिध्यत्येव । न च भगवदुपायत्वस्य लक्ष्म्युपायत्वसापेक्षत्वे निरपेक्षत्वभङ्ग इति वाच्यम् । पुरुषकारसापेक्षत्वेऽपि तत्साम्यात् । यदि स्वाङ्गसापेक्षत्वं न स्वातन्त्र्यभञ्जकम् । तदत्रापि तुल्यम् । अत एवोक्तं " स्वतश्श्रीस्त्वम् " इति श्लोके । अन्यथा "अस्यादेव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति" इत्याद्यनेकप्रमाणविरोधः । "व्यापकावति संश्लेषादेकतत्त्वमिवोदितौ" "गाढोपगूढानि ते" इत्यादिनोक्तसुश्लिष्टविशिष्टतत्त्वरूपत्वविरोधः । उपलक्षणत्वेन पृथग्भावे निरूपकत्वभंङ्गेन "आकारिणस्तु विज्ञानमाकारज्ञानपूर्वकम् । तेनाकारं श्रियं ज्ञात्वा ज्ञातव्यो भगवान् हरिः " इत्यादिविरोधश्च । लक्ष्म्या उपलक्षणत्वे गुणादिनामपि तथात्वापत्तिः । तेषामुपयोगसत्त्वात् । विशेषणत्वे तत्तद्रूस्त्वनुरूपो ह्युपयोगो वाच्यः । लक्ष्मीस्वरूपोपयोगश्च " शृणाति निखिलान्दोषान् शृणाति च गुणैर्जगत्" इति दर्शितः । अत एव " जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे " इत्यादिषु प्रतिपन्नमोक्षप्रदत्वस्य भगवल्लक्षणत्वभङ्गाभावश्च- भगवत्संकल्पस्य ' क्षान्तम् ' इतिरूपत्वात् । एतत्संकल्पस्य ' क्षमस्व ' इति रूपत्वाच्च । तस्मादेकशेषित्वैकाभिप्रायत्वपरस्परप्रावण्यातिशयस्वरूपादिसुश्लिष्टान्वयाद्यविरोधेन विशेषणत्वमेव पूर्ववाक्येऽपि वक्तव्यमिति लक्ष्म्या उपायत्वसिद्धिः— इत्याहुः ।

अयमपि पूर्वोक्तरीत्या निरस्तप्रायः । न शरणशब्देन विशेष्य इव विशेषणेऽप्युपायत्वसम्बन्धो बोध्यते । तस्य 'शृणाति, शॄणाति' इति व्युत्पत्त्या श्रीशब्द एव बोधितत्वात् । न हि प्राप्तेऽर्थे पुनर्विधानसम्भवः । न च श्रीशब्दस्य रूढ्या लक्ष्म्युपस्थापकत्वमात्रम्, अवयवार्थे न विवक्षितमिति वाच्यम् । "शृणाति निखिलान्दोषान्" इत्यादिना श्रीशब्दस्यावयवार्थव्युत्पादकशास्त्रवैयर्थ्यात् । तथा वेद्यत्वाय खलु शास्त्रमवयवार्थव्युत्पत्तिं करोति । न च तदेवात्र शरणशब्देनानूद्यत इति वाच्यम् । यत एकेनैव शब्देन विशेष्यांशे विधायकत्वं, विशेषणांशेऽनुवादकत्वं चाशक्यम् । अनुवादप्रयोजनं च न पश्यामः । न चैवं तेनैवास्मदभिमतसिद्धिश्चेत्, इष्टापत्तिरिति वाच्यम् । 'शृणाति' इत्यादिव्युत्पत्त्यवगतोपायत्वं किं सद्वारकं-उताद्वारकमित्याकांक्षायाम्, तत्रैव 'श्रीयते, श्रयते, शृणोति, श्रावयती' ति व्युत्पत्तिचतुष्टयेन पुरुषकारत्वप्रतीत्या तत्प्रतीतमुपायत्वमर्थसामर्थ्यालिङ्गेन सद्वारकमवगतम् । ततश्च शरणत्वं सद्वारकं रक्षकत्वं चेद्भवदभिमतम्, तदोमिति ब्रूमः ।

ननु सद्वाररक्षकत्वस्य तत्र प्रतिपादनेऽपि अत्र शरणशब्देनाद्वारकरक्षकत्वं प्रतिपाद्यत इति चेत्, अत्र किं रक्षकत्वं विधीयत इत्युच्यते, उत रक्षकत्वस्याद्वारकत्वम्, अहो स्वित्-विशिष्टम् । नाद्यः-श्रीशब्द एव तद्विधेः । न द्वितीयः-अद्वारकशब्दाभावात् । शरणशब्दस्य विशेष्ये अद्वारकरक्षकत्वविधायकत्वम्, विशेषणे अद्वारकत्वमात्रविधायकत्वं चेति विरम्यव्यापारापत्तेः । सद्वारकत्वस्य श्रीशब्दावगतत्वेन, तद्विरोधेनात्राद्वारकत्वविधानानुपपत्तेश्च । सद्वारकत्वस्योपक्रमावगततयोपक्रमाधिकरणन्यायेन प्राबल्यात् । उक्तदोषादेव न तृतीयोऽपि ।

किंच, लक्ष्म्यास्सद्वारकोपायत्वमद्वारकोपायत्वं च विरुद्धम् । पूर्वमेव द्वारेणान्यथासिद्धत्वाच्च । न ह्येककार्यं प्रति एकस्यान्यथासिद्धत्वम्, अनन्यथासिद्धत्वं च सम्भवति । एवं व्रीहिद्वारा शेषभूतस्य प्रोक्षणस्य व्रीहितुल्यं यागशेषत्वं हि न सम्भवति-एवं श्रीशब्दे पुरुषकारत्वस्यावगतत्वात्, अप्राप्तं ब्रह्मोपायत्वमेव शरणशब्दो बोधयति । एवं पुरुषकारत्वसद्वारकरक्षकत्वविशिष्टलक्ष्मीवैशिष्ट्यं प्रत्ययेन बोध्यत इति

विद्यायां तद्वेद्यत्वसम्भवः । अतः न "आकारिणस्तु" इत्यादिविरोधः । किंच 'नीलमुत्पलम्' इतिवद्त्र लक्ष्मीसामानाधिकरण्यमुपायत्वस्य शरणशब्देन बोध्यत इति शाखादिवन्न तस्याःवहिर्भावसिद्धिः । बहिर्भूतस्यैवोपलक्षणत्वे जगज्जन्मादेर्ब्रह्म-लक्षणत्वाभावप्रसङ्गः । ततश्च सुश्लिष्टैकत्वस्यापि न विरोधः ।

किंचात्र गुणविग्रहसामानाधिकरण्यमात्रमुपायत्वस्य बोध्यम् । नाहि'दण्डी गच्छति' इत्यत्र गमनक्रियाया विशेषणविशेष्योभयान्वयवत्, शरणशब्दार्थोपायत्व-स्य विशेषणेष्वप्यन्वयः । उपायत्वस्य चेतनधर्मस्याचेतनेष्ववस्थानायोगात् । उत्तर-वाक्ये तूपेयत्वस्य विशेषणेष्वप्यन्वयस्सम्भवति, तस्य चेतनाचेतनसाधारण्यात् । एवं लक्ष्मीसामानाधिकरण्यमात्रमुपायत्वस्य बोध्यम् । ततो विधेयांशे च गुणादिवत् विशेषणत्वेनापि विषयत्वेऽपि न कमपि विरोधं पश्यामः । नाप्युपायत्वाभावे मोक्ष-प्रदत्वकर्माणि ऐकरस्यहानिः । पुरुषकारत्वेन तत्रान्वितत्वात् । अन्यथा जगत्कारण-त्वादौ गत्यभावप्रसङ्गात् ।

किंचाश्लेषविनाशयोः ईश्वरविषये 'क्षमिष्यामि' इत्येवं रूपार्थकत्वम्, लक्ष्मी-विषये 'क्षमायुक्तं करोमि' इत्यर्थकत्वं च वाच्यम्, तन्न सम्भवति ।"तदधिगम उत्तर-पूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" "उपासनारम्भप्रीतः परमात्मा तत्समाप्तौ उपासकस्याघं 'क्षमिष्यामि' इति सङ्कल्पयाति। समाप्तौ तु 'क्षान्तम्' इति सङ्कल्पयाति" इति सूत्रादिविरोधापतेः । अतः, भरस्वीकाररक्षासङ्कल्पायोगात् न भगवत्तुल्योपाय-त्वादिसिद्धिः ।

किं बहुना "पांचरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" इत्युक्तप्रकारेण भगवत्प्रणीते श्रीपांचरात्रशास्त्रे उपायत्वस्य स्वनिष्ठत्वेन पुरुषकारत्वस्य तन्निष्ठतया चोक्तं खलु । "लक्ष्मीःपुरुषकारत्वे" इति क्षमाद्युद्भावनद्वारा भगवदीयोपायभावप्र-योजकत्वरूपपुरुषकारत्वस्य लक्ष्म्यास्तादितराद्यावृत्तित्वे सति तद्वृत्तिरूपधर्मत्वेनोक्तम् । "नान्यथा लक्षणं भवेत्" इति प्राप्तिपूर्वभावित्वेन पुरुषकारत्वातिरिक्तत्वेन प्राप्त्युप-योगित्वेन चासाधारणधर्मस्याभावकथनात् । . . . . . . . . . .

"अहम्मत्प्राप्त्युपायः" इत्यादेरयमर्थः–'लक्ष्मीपतिः' इति विश्वासहेतुरूपपुरुषकारत्वसम्बन्धः, 'साक्षात्' इति उपायान्तरव्यावृत्तिः, 'स्वयम्' इति लक्ष्मीव्यावृत्तिः, 'मम वल्लभा लक्ष्मीःपुरुषकारेण प्राप्तियोगिनी' इति पुरुषकारत्वरूपप्राप्तिसम्बन्धश्चोक्तः। अतः पुरुषकारत्वं सिद्धम्। अनेन "रथन्तरे प्रस्तूयमाने सम्मीलयेत्। बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्" इत्यत्र रथन्तरसामप्रस्तूयमाने सम्मीलनं, बृहत्सामप्रस्तूयमाने समुद्रध्यानं च "साम्नोर्व्यवस्थया यस्मान्निर्देशो मीलनादिषु। तस्मान्न सङ्करो युक्तः न त्वेवं प्रोक्षणादिषु" इति व्यवस्थाम्नानात् व्यवस्थितमिति पूर्वतन्त्रे नवमाध्याये द्वितीयपादे "एकार्थत्वाद्विभागस्स्यात्" इति निर्णीतम्। तद्वत् 'अहं मत्प्राप्त्युपायः, लक्ष्मीःपुरुषकारेण वल्लभा प्राप्तियोगिनी' इति व्यवस्थाम्नानेनेश्वरस्योपायत्वं, लक्ष्म्याःपुरुषकारत्वं च व्यवस्थितमिति स्पष्टम्। 'एतस्याश्चे' ति-एतस्या मम चेत्यर्थः। 'विशेषोऽयम्' इति प्राग्व्यवस्थिताम्नानेन उपायत्वस्य भगवदितरावृत्तित्वे सति भगवद्वृत्तित्वम्, पुरुषकारत्वस्य लक्ष्मीतरावृत्तित्वे सति लक्ष्मीवृत्तित्वं च सिद्धम्। अतः, तद्वृत्तित्वे सति तदितरावृत्तिरूपधर्मस्य वाचकेन विशेषशब्देनोपायत्वस्य पुरुषकारत्वस्य चानूदितत्वात्। तथा च 'मम एतस्याश्चेमौ, विशेषौ-उपायत्वपुरुषकारत्वरूपप्रतिनियतधर्मौ' इति पर्यवसितम्। एवं प्रतिनियतधर्मत्वेन वेदान्तेषु प्रतिपाद्यत्वेनोक्तत्वात् ईश्वरस्य लक्ष्म्याश्च सामान्येन मोक्षोपयोगित्वबोधकश्रुतिस्मृत्यादिवचनानामुक्तव्यवस्थिताविशेषे "च्छागो वा मन्त्रवर्णात्" इति पश्वधिकरणन्यायेन पर्यवसानमिति अस्य व्यवस्थापकवचनस्य तात्पर्यम्।

"मैत्रायणीयोपनिषदि, "तस्मिन्नेव यजमानास्सैन्धवघन इव लीयन्ते एषा वै ब्रह्मैकता नामात्र हि सर्वे कामास्समाहिताः" इति। सैन्धवघनइवेति-यथा सैन्धवघन उदके प्राप्तः, तत्र लयं प्राप्नोति-तत्समानरूपतया दुर्ग्रहविवेको भवति, रसविशेषेण विवेक्तुं च योग्यः। तद्वद्ब्रह्मणि प्रलीनोऽपीति भावः। अत्र च ब्रह्मैकतानुवादेन लयरूपताविधिः प्रतीयते। तदयं भावः-सर्वेषु मोक्षप्रकरणेषु "ब्रह्म वेद ब्रह्मैव भव-

(१२) ईश्वरस्य नारायणत्वप्रयुक्तस्वाभाविकसम्बन्धादिज्ञानवतस्त-माश्रयतश्चेतनस्यास्याः पुरुषकारत्वेन पुरस्कारकरणं किमर्थमित्याह-नीर इत्यादिना ।

मू॥ नीरिले नेरुप्पु किलरुमापोले कुलिन्र्द तिरुवुलत्तिले अपराधत्ताले शीत्तम्पिरन्दाल् पोरुप्पदु इवलुक्काह ॥ १२ ॥

छा॥ नीरे अग्निवृद्धिरिव शीतले मनसि अपराधेन कालुष्योदये सहनमेतदर्थम् ॥ १२ ॥

व्या ॥ शीतले जलेऽवगाहनप्रतिबन्धकीभूताग्निवृद्धिरिव "सुहृदं सर्वभूतानाम्" "समोऽहं सर्वभूतेषु" इत्युक्तप्रकारेण

---

ति" इत्यादिरूपेणाभेदप्रतिपादकत्वेन प्रतीयमानानां वाक्यानामयमेवार्थ इति" इति पाराशर्यविजये निगमान्तदेशिककटाक्षलब्धपरावरतत्त्वयाथात्म्याविन्महाचार्योक्तरीत्या वेदान्तप्रतिपाद्यार्थौ एतत्प्रतिनियतधर्मौ इति कथनेन सर्वत्रोपायप्रकरणेषु "उदाराम्" संसारार्णवतारिणीम्"; इत्यादिरूपेणोपायत्वप्रतिपादकत्वेन प्रतीयमानानां वाक्यानामयमेवार्थ इति प्रबलप्रमाणभूतश्रीभगवच्छास्त्रे वेदान्त. दुपबृंहणस्थवाक्यानां व्याख्याततत्वात् तद्विरुद्धकल्पनमनादरणीयमित्युक्तं भवति ।

'एतस्या अयंच विशेषः निगमान्तेषु शब्द्यते' इति अन्वये समुच्चेतव्यस्याप्रकृतत्वात् समुच्चयो व्यर्थः । 'एतस्या अयन्तु विशेषः' इत्युक्ते चकारस्य तुशब्दार्थकत्वं क्लिष्टम् । चकारस्य भिन्नक्रमत्वं च क्लिष्टम् । 'अयमेव विशेषः' इत्यङ्गीकारे विशेषान्तरस्य बहुत्वात् बाधप्रसङ्गो दुर्वारस्स्यात् । उभयोर्धर्मप्रतिनियमस्योपक्रान्तत्वात् पुरुषकारमात्रस्य निगमान्तप्रतिपाद्यत्वकथनस्य न्यूनत्वात् 'एतस्यास्त्वयं विशेषः' इत्यपि नोपपद्यते । अतो यथोक्तार्थ एवे-त्यलमतिविस्तरेण ॥ ११ ॥

सर्वभूतसुहृत्त्वं समाश्रयणीयत्वे समत्वमित्येवंरूपस्वभावविशेषैःप्रसन्ने शीतले मनसि "परिपूर्णागसि जने हित स्रोतोवृत्या भवति च कदाचित्कलुषधीः" इत्युक्तप्रकारेण चेतनकृतपूर्णापराधेन "क्षिपामि" "न क्षमामि" इत्युक्तकालुष्योदये तादृशापराध-

---

(सुहृदमि) ति-"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छाति" इति गीतावचनम् । (सुहृत्वम्)-"अनुपकारिण्यपि किमस्य भविष्याति किं करवाणीति शुभाशंसि शोभन हृदयत्वं सुहृत्वम्" इति सहस्रनामभाष्यम् ।

(समोऽहमि) ति-"समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इति गीतावचनम् । "देवतिर्यङ्मनुष्य स्थावरात्मनावस्थितेषु जातितश्चाकारतस्स्वभावतो ज्ञानतश्चात्यन्तोत्कृष्टापकृष्टरूपेण-वर्तमानेषु सर्वेषु भूतेषु समाश्रयणीयत्वे समोऽहम्-'अयं जात्याकारस्वभावज्ञानादिभिर्निकृष्टः' इति समाश्रयणे, न मे द्वेष्योऽस्ति-उद्वेजनीयतया न त्याज्योऽस्ति । तथा समाश्रितत्वातिरेकेण 'जात्यादिभिरत्यन्तोत्कृष्टोऽयम्' इति तद्युक्ततया समाश्रयणे न कश्चित्प्रियोऽस्ति-न संग्राह्योऽस्ति । अपि तु अत्यर्थमत्प्रियत्वेन मद्भजनेन विनात्मधारणालाभान्मद्भजनैकप्रयोजना ये मां भजन्ते, ते जात्यादिभिरुत्कृष्टा अपकृष्टा वा मत्समानगुणवद्यथासुखं मय्येव वर्तन्ते । अहमपि तेषु मदुत्कृष्टेष्विव वर्ते" इति भाष्यम् । 'सर्वेषु भूतेषु समाश्रयणीयत्वे समोऽहम्' इति भाष्यसूक्तिं हृदि निधायाह-समाश्रयणीयत्वे समत्वमिति । सर्वभूतसुहृदो निग्रहप्रसक्तिरेव नास्तीति शङ्कायामाह-परिपूर्णागसि जने इति । अपराध एव तत्र हेतुरिति ।

(क्षिपामि) इति-इदं वचनं स्वापराधविषये । "तानहं द्विषतःक्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इति गीतावचनम् ।

सहनं "किमेतन्निर्दोषः क इह जगति" इत्यादिप्रकारेण स्वोपदेशा-

(न क्षमामि) इति—इदं वचनं तदीयापराधविषये। "अपराधशतं लक्ष-मम नित्यकृतं भवेत्। क्षमाम्येकेन पद्मेन जातिपुष्पेण वा पुनः। मद्भक्तं श्वपचं वापि निन्दां कुर्वन्ति ये नराः। पद्मकोटिशतेनापि न क्षमामि कदाचन" इति वराहपुराणवचनस्थम्।

"पितेव त्वत्प्रेयान् जननि परिपूर्णागसिजने हितस्रोतोवृत्त्या भवति च कदाचित्कलुषधीः। किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसिमाता तदसि नः" इति श्रीगुणरत्नकोशे भट्टारकः। अस्यार्थः—हे जननि-त्वत्प्रेयान्-तव प्रियः भगवान्। परिपूर्णागसि-सम्पूर्णापराधे। जने-चेतनवर्गे। पितेव-पुत्र इति शेषः। हितस्रोतोवृत्त्या-हितविषयधारावाहिकव्यापारेण। उपलक्षणे तृतीया। हितस्रोतोवृत्त्या-युक्त इत्यर्थः। कदाचित्-कदापि। सन्ततमनुकूल एव सन् महापराधदर्शनेन कदापि समये। कलुषधीः-कुपितमनः। भवति च-भवत्यपि। न तु कुपितमनस्त्वं तस्य नैजमिति भावः। तद्दर्शिन्याः श्रियो व्यापारमाह-किमेतत् इति। एतत्-इदं-कालुष्यम्। किम्-किम्मूलकम्। अनुचितमित्यर्थः। अनुचितत्वमुपपादयति-निर्दोष इति। इह-दोषैकाश्रये। जगति-लीलाविभूतौ। निर्दोषः कः-न कोऽपीत्यर्थः। उचितैः-अपराधक्षमापणयोग्यैः। उपयैः-आलोकालापनीवीश्लथनादिभिः। विस्मार्य-तस्य दोषादर्शित्वमासाद्य। नः-अस्मान्। स्वजनयसि-भगवतस्स्वत्वाभिमानगोचरान् करोषि। तत्-तस्मात्कारणात्। प्रियैकपरतयेत्यर्थः। त्वं-माताऽसि-पितुर्हितपरत्वं मातुः प्रियपरत्वञ्च सुप्रसिद्धं युवयोर्दृष्टमिति भावः—इति।

"लक्ष्मीः पुरुषकारेण वृतवन्तो वरानन। मत्क्षमां प्राप्य" इति वचनं स्मारितम्-तादृशापराधसहनमित्यनेन।

(स्वोपदेशादिभिः) इति-उपदेशः-अज्ञातज्ञापनम्। शास्त्रस्य कृपादीनां-

दिभिस्तच्चित्तं शीतलीकृत्य दयोत्पादकैतन्निमित्तमित्यर्थः। तस्मात्सम्बन्धज्ञानवतोऽप्यपराधभयेन पुरुषकारपुरस्करणमपेक्षितमिति हृदयम् ॥ १२ ॥

च परन्दरहस्याद्युक्तविषयविभागस्य-स्वातन्त्र्यमूलकदण्डधरत्वसंरम्भविशेषैः आभिभूतत्वात् लक्ष्मीवाक्यस्याज्ञातज्ञापकत्वमुपपन्नमिति भावः।

उपदेशप्रकारः परन्दरहस्ये श्रीकृष्णपादैरनुगृहीतः। तथा हि—"एवमुष्णजलस्य शीतलजलमिव निरंकुशस्वातन्त्र्येण "अभितःपावकोपमम्" इत्युक्तप्रकारेणानभिभवनीयमीश्वरं स्वभोग्यतातिशयेन परिपक्कंकृत्वा, स्वामिन् 'चेतनमङ्गीकुरुष्व' इति वदति लक्ष्मीः। तत्कथं "श्रुतिस्स्मृतिर्ममैवाज्ञा" इति ममाज्ञारूपशास्त्रमर्यादामतिलङ्घ्य मनसि व्रणं यथा स्यात्तथात्यन्तापराधान्कृत्वा तिष्ठति खलु। तत्कथमङ्गीकुर्यामिति ईश्वरो वदति। तस्य पूर्वापराधान् भवत्क्षमाविषयान्कृत्वा रक्षत्विति लक्ष्मीः। क्षमारक्षणाय शास्त्रमर्यादां कथं विनाश्यत इति ईश्वरः। शास्त्रमर्यादारक्षणार्थं भवतस्स्वाभाविकं क्षमातत्त्वं कथं विनाश्यत इति लक्ष्मीः। क्षमारक्षणे शास्त्रमर्यादा नश्यति। शास्त्रमर्यादारक्षणे क्षमातत्त्वं नश्यति। उभयोरविरोधेन किं कर्तव्यमिति ईश्वरे किंकर्तव्यता मूढे सति, तर्हि उभयोरपि विरोधो यथा न स्यात्, तथोपाय उच्यते, तच्छ्रुत्वा तथा कुरुष्वेति लक्ष्मीः। उभयोर्विरोधं विना चेतनरक्षणे उपायोऽस्तिचेत्, किमस्माकमनभिमतः, वक्तव्य इति ईश्वरः। तर्हि शास्त्रमर्यादां विमुखविषये कृत्वा, भवतः क्षमामभिमतविषये कुरुष्व, तदोभयमपि जीवतीति विषयविभागं करोति लक्ष्मीः। तच्छ्रुत्वा समीचीनोऽयं विभाग इति चेतनमङ्गीकरोतीश्वरः। एवमीश्वरं सापराधजन्त्वङ्गीकारोपयुक्तवचनजातं श्रावयतीति–" इति।

अयमर्थः लक्ष्मीतन्त्रे सप्तदशाध्याये देव्यैव प्रपंचितः। तथा हि "एको नारायणो देवः वासुदेवस्सनातनः। चातुरात्म्यं परं ब्रह्म सच्चिदानन्दमव्रणम्" इति

(१३). अस्य कार्यं स्वोपरि स्वयमारोप्य, तं वशीकृत्योभावपि घटयितुमियं किमबाधितपुरुषकारभूतेत्यत आह—इयं जननीत्यादिना ।

परदशां प्रस्तुत्य "तयोर्नौ परमव्योम्नि परमं पदमुत्तमम्" इत्यादिना विस्तरेण तत्प्रकारानुक्त्वा, "दयिताहं सदा देवी ज्ञानानन्दमयीपरा" इत्यारभ्य "साहमङ्कस्थिता विष्णोर्देवदेवस्य शार्ङ्गिणः। लालिता तेन चात्यन्तं सामरस्यमुपेयुषी" इत्यन्तेन स्वस्वभावमुक्त्वा, "कदाचिद्विश्वदर्शिन्याः कृपा मे स्वयमुद्गता । क्लिश्यतःप्राणिनो दृष्ट्वा संसारज्वलनोदरे । कथन्त्विमे भविष्यन्ति दुःखोत्तीर्णास्सुखोत्तराः ।, संसारपारसीमानमाप्नुयुर्मां कथन्त्विति । साहमन्तःकृपाजुष्टा देवदेवमचूचुदम् " इति निर्हेतुककृपामूलकस्वकृतभगवच्चोदनामुक्त्वा, "भगवन्देवदेवेश" इत्यारभ्य "अमीहि प्राणिनस्सर्वे निमग्नःक्लेशसागरे । उत्तारं प्राणिनामस्मात्कथं चिन्तयासि प्रभो" इति तत्प्रकारश्चोक्तः ।

(स्वोपदेशादिभिः) इत्यादिपदं-सौन्दर्यादिपरम् ॥ १२ ॥

(इयं जननी) इति—"माता पिता भ्राता" इत्यादिभिर्भगवतोऽपि मातृत्वोक्तावपि " उपादिश्यमानधर्माधारादस्त्यतिदिश्यमानधर्माधारस्य विशेषः " इति न्यायेनास्ति वात्सल्ये तारतम्यम् । अस्य च पुंस्त्वानुगुणत्वात्, न दोषावहत्वम् । अनन्याधीनस्यापि भगवतः "पुंप्रधानेश्वरेश्वरी" इत्युक्त्या लक्ष्म्या वाल्लभ्यातिशयप्रयुक्तं नियाम्यत्वमविरुद्धम् । ईश्वरशब्दस्य पुंप्रधानशब्दसन्निधानेन पुंशब्दार्थानन्तर्गतभगवद्विषयकत्वस्यैवौचित्यात् । ईदृशस्य च नियाम्यत्वस्य स्वसङ्कल्पाधीनत्वेनादोषावहत्वादिति भावः । उक्तं च श्रीविष्णुचित्तैः गद्यव्याख्यानारम्भे "मातृत्वेकरूपां श्रियं प्रपद्यते । माता हि हितादपि पुत्रस्य प्रियमेव पश्यति । पिता तूभयं पश्यति । अतो दण्डधरत्वहीनतैवावलम्बनमस्यां दशायामासीत् ". इति । " पितेव

मू॥ इवळ् तायाय् इवर्हळ्क्केशम्पोरुक्कमाट्टादे, अवनुक्कु पत्नियाय् इनियविषयमायिरुक्कैयाले कण्णलिवत्तपुरुषकारम् ॥ १३॥

छा॥ इयं जननी तेषां क्लेशमसहमाना, तस्य पत्नी अभि-

त्वतमेयान्" इत्येतदनुसराद्भिर्व्यासार्यैश्चोक्तम् गद्यव्याख्यानरम्भे "प्रतापोष्मलपितृत्वदुरासदभगवत्समाश्रयणसिद्ध्ये पुरुषकारानुप्रविष्टवात्सल्यनिर्भरलक्ष्मीसमाश्रयणं श्रीमच्छब्दविवरणमुखेनाभिधीयते" इति। सदानुग्रहसम्पन्नत्वं चास्या वचनसिद्धम्। मक्कणसंहितायां "पद्मे स्थिता पद्मवर्णा पद्मनाभप्रिया शुभा। सदानुग्रहसम्पन्ना सा मे देवी प्रसीदतु" इति। अष्टोत्तरसहस्रनामस्तोत्रे च "नमामि कमलां क्षान्तिं क्षमां क्षीरोदसम्भवाम्। अनुग्रहपरामृद्धिमनघां हरिवल्लभाम्" इति।

"कदाचित्क्लिश्यतो दृष्ट्वा" इति लक्ष्मीतन्त्रवचनप्रत्यभिज्ञापनाय-क्लेश शब्द प्रयोगः। (असहमाना) इति-कारुण्यरूपा हि सा इति भावः। "देव्या कारुण्यरूपया" इति वचनात्। करुणा-परदुःखदुःखित्वं, न तु दुःखनिराचिकीर्षामात्रम्। तस्या आस्रहेतुत्वानुपपत्तेः। "करुणास्रावितमुखी" इत्युक्तेः। न चेदृशं दुःखं दोषः। गुणप्रतिपादनप्रकरण एव "व्यसनेषु मनुष्याणाम्" इति पाठात्। अयमर्थः प्रागेव प्रपंचितः। करुणाप्राचुर्याद्धि अस्याः कारुण्यरूपत्वं शास्त्रोक्तमिति न साधारण्यम्। तथोक्तं श्रीवचनभूषणव्याख्याने- "ईश्वरकृपापेक्षयास्याः कृपायाः को विशेष इति चेत्, ईश्वरस्य निरंकुशस्वतन्त्रत्वात्, तस्य कृपा स्वातन्त्र्येण निमग्ना, कासुचिद्दशासु उद्भवति। अस्या अनुग्रहैकशीलत्वात्, एतत्कृपाया अन्येन केनचिदपि अभिभवस्याभावात्, सदैकरूपा भवति तस्मादेतत्कृपोद्वेलं तिष्ठति। सम्बन्धे व्याप्तासिवत् कृपायां व्याप्तचिः" इति (विष्णुपत्नी) ति-"पालयन्ती हरेर्भावम्" इति विष्णुपत्नी शब्दो निरुक्तः। भावः-स्वभावः। स्वाभाविकी करुणा। तस्याःपालनम्-अतिरोहितत्वसम्पादनम्। पत्नीशब्देन-शरणागतरक्षणरू-

मतविषया, अतोऽबाधितपुरुषकारः ॥ १३ ॥

व्या॥"त्वं माता सर्वलोकानाम्"इति"अखिलजगन्मातरम्" इति चोक्तप्रकारेणैतेषां चेतनानां इयं जननी, "स्वस्वपुत्रा रुदन्ति चेत्तत्तन्मातरो न सहन्ते" इत्युक्तप्रकारेण तत्सम्बन्धहेतुना तेषां क्लेशमसहमाना सती "विष्णुपत्नी" इत्युक्तप्रकारेण तस्य पत्नी सती "उन्मत्तः शीतलपुष्पवासिन्याः" इत्युक्तप्रकारेण स्ववैलक्षण्यं दृष्ट्वा विभ्रान्तचित्तः स्ववचनं यथा नोल्लंघयते, तथाभिमतविषयत्वात् अबाधितपुरुषकारभूतेत्यर्थः ॥ १३ ॥

पसंयोगो बोधितः । उक्तं च "कमला निरपायधर्मपत्नी करुणाद्याः स्त्रयमूर्तिजो गुणास्ते । अवनं श्रयतामहनिमाद्यस्त च धर्मस्त्वदनन्यसेवनीयः" इति परमार्थस्तुतौ ।

पत्नीत्वं नियाम्यतायामेव हेतुस्स्यादिति कथं वशीकर्तृत्वसिद्धिरत आह—उन्मत्त इत्यादिना । "स्नेहाद्विशिष्टोऽस्ति मया समो वा" "साहमङ्केस्थिता विष्णोर्देवदेवस्य शार्ङ्गिणः । लालिता तेन चात्यन्तं सामरस्यमुपेयुषी । कान्तस्य तस्य देवस्य विष्णोस्सद्गुणशालिनः । दयिताहं सदा देवी नित्यं तद्धर्मधर्मिणी । महिषी देवदेवस्य विष्णोःकामदुघा विभोः । तुल्या गुणवयोरूपैर्मनःप्रमथिनी हरेः । तैस्तैरनुगुणैर्भावैः" इत्यादिप्रमाणान्यत्र द्रष्टव्यानि । अथवा पत्नीत्वस्य भूम्यादिसाधारणत्वात् आह—अभिमतविषयत्वादिति । निर्वृत्तप्रणयातिवाहनविधौ परीवाहतां नित्यानां नीलामहिष्यादीनां नैतादृशमभिमतत्वमिति भावः । "भोग्यायामपि नान्तरीयकतया पुष्पाङ्गरागैस्समं निर्वृत्तप्रणयातिवाहनविधौ नीताः परीवाहताम् । देवि त्वामनुनीलया सह महीदेव्यस्सहस्रं तथा याभिस्त्वं स्तनबाहुदृष्टिभिरिव स्वाभिःप्रियं श्लाघसे" इति श्लोकोऽत्रानुसन्धेयः ॥ १३ ॥

(१४) ननु भवत्वेवं, तथापि निरंकुशस्वतन्त्र ईश्वरश्चेतनापराधान् लेशतः परिगणय्य, 'दण्डनं करोमि' इति स्थितश्चेत् अनया क्षमापणं कारयितुं शक्यते किमित्यत आह-हनूमन्तमित्यादिना ।

मू॥ तिरुवडियै पोरुप्पवकुमवळ् तन्शोल्वलिवरुमवनै पोरुप्पिकच्चोल्लवेण्डाविरे ॥ १४ ॥

छा॥ हनूमन्तं क्षमापयन्तीयं स्ववचनमार्गे आगच्छन्तं क्षमापयतीति कैमुत्यासिद्धम् ॥ १४ ॥

व्या॥ स्वस्य दशमासपर्यन्तं तर्जनभर्त्सनादिकं कुर्वन्तीनां क्रूरराक्षसीनामपराधगणनां कृत्वा चित्रवधे उद्युक्तं वाक्योलंघन-

---

(आह) इति-उक्तमर्थं कैमुतिकन्यायेन दृढयतीति भावः ।

(तर्जने) ति-भयोत्पादनव्यापारस्य कायिकत्ववाचिकत्वाभ्यां तर्जनभर्त्सनयोर्न पौनरुक्त्यम् । "भर्त्सनन्त्वपकारगीः" इति वचनात् । "भर्त्सितां तर्जितां वापि" इत्यभिप्रेत्योक्तं-तर्जनभर्त्सनेति । "क्रूराः क्रूरतरेक्षणाः" इति वचनं हृदि निधायोक्तम्-क्रूरराक्षसीनामिति । "मुष्टिभिः पाणिभिस्सर्वाश्चरणैश्चैव शोभने । इच्छामि विविधैर्घातैर्हन्तुमेतास्सुदारुणाः । घातैर्जानुप्रहारैश्च दशनानां च पातनैः । भक्षणैः कर्णनासानां केशानां लुंचनैस्तथा । नखैश्शुष्कमुखीभिश्च दारणैर्लंघनैर्हतैः । निपात्य हन्तुमिच्छामि तव विप्रियकारिणीः" इत्यादिकमभिप्रेत्याह-अपराधगणनां कृत्वा चित्रवधे इति । चित्रवधे-'चित्ररूपम्' इतिवत् नानाविधहिंसायामित्यर्थः । चित्रपदं लक्षणया नानाविधपरम् । "क्लेशेन गीतः श्लोको मे तन्निबोध

शीलं हनूमन्तमपि "कःकुप्येत्" "न कश्चिन्नापराध्यति" इत्याद्युपदेशेन क्षमापयन्ती "पुष्पवासिन्यास्तनान्तर्गतः" "महापुष्पवासिन्यास्स्त्रियो मनोऽनुकूलः" "कमलवासिनीभोगाश्चर्यचेष्टितमग्नस्थितः" इत्याद्युक्तप्रकारेण स्वभोग्यतायां मग्नो जलंपीत्वास्थितः, "तव प्रीतिमार्गे स्थित्वा धनुर्गृहीत्वास्मदुपकारकः" इत्युक्तप्रकारेण 'मायामृगस्य पश्चाद्गच्छ' इत्युक्तावपि उल्लंघनंकर्तुमसमर्थस्सन् तस्य पश्चाद्गत्वेत्यवमुक्तमार्गे आगच्छन्तं क्षमापयितुं समर्थेति किम्पुनर्न्यायसिद्धमित्यर्थः ।

" उचितप्रत्युपकारोऽस्य नास्ति " इत्युक्तप्रकारेणोभयोरपि स्वरूपहानिर्यथा न स्यात्तथोपकरणात् अनुल्लंघनीयस्ववचनं हनूमन्तं क्षमापयितुं समर्था, भोग्यतायां मग्नोभूत्वा 'किं कुर्याम्' इति व्याकुलचित्तं मन्दहासे मग्नं मायामृगार्थंगत्तं स्वोक्तिप्रकारे संचरन्तं क्षमापयतीति कैमुत्यन्यायसिद्धम्" इति इममर्थमस्यानुजोऽप्याह॥१५

---

प्लवङ्गम" "पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम" इत्यादिषूक्तसम्बुध्द्यर्थमभिप्रेत्य–वाक्योल्लंघनशीलमित्युक्तत् । अपिः–विरोधार्थकः ।

(कःकुप्येदि) ति-श्रीरामायणवचनम् । "राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया । विधेयानां च दासीनां कःकुप्येद्वानरोत्तम" इति । दासीनां-दासीभ्यः । कःकुप्येत्-उत्तमपुरुषो न कदापि कुप्येदिति भावः । "उत्तमानां स्वभावोऽयं परदुःखासहिष्णुता । वस्स्य दुःखं च सम्प्राप्ते संप्रतेऽन्यस्य वार्यते" इत्युक्तेः ।

(१५). एवं श्रीमत्पदे प्रकृत्यंश उक्तः, अथ प्रत्ययांशमाह-मतुपेति।

मू॥ मतुप्पाले इरुवर्शेर्तियुं नित्यमेन्‌गिरदु ॥ १५ ॥

छा॥ मतुपा उभयोस्संश्लेषो नित्य इत्युच्यते ॥ १५ ॥

व्या॥ अस्य मतुपो नित्ययोगमतुप्त्वात्, अनेन पुरुषाकार-भूताया लक्ष्म्याः, ईश्वरस्य च संश्लेषस्सदास्तीत्यर्थ उच्यत इत्यर्थः॥१५॥

---

(न कश्चिदि) ति-"पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम। कार्यं करुणमार्येण न कश्चिन्नापराध्यति" इति। पापानां-मारुत्यभिप्रायेण। शुभानां-सदानुग्रहसम्पन्नस्त्राभिप्रायेण। वाशब्दद्वयं-मिथोविरुद्धपक्षद्वयसूचकम्।

(अस्यानुजः)-रम्यजामातृदेवः। अरुळिच्चेयल्‌रहस्यप्रबन्ध इति शेषः॥१४

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति 'धनवान्, महदिदं कौशलमायुष्मताम्, बुद्धिमान्, प्रभावान्, वीर्यवान्, स्फटिको रक्तिमवान्, पर्वतो वह्निमान्' इत्यादौ यथाक्रमं मतुपो बहुत्वादि-विशेषितप्रमाणसिद्धतत्तत्सम्बन्धार्थकत्वस्य दर्शनात्, अत्र को वार्थ इत्याकांक्षायां "लक्ष्मीमनपगामिनीम्" "अनन्या राघवेणाहं भास्करेण प्रभा यथा" "अनन्या हि मया सीता भास्करेण प्रभा यथा" "तस्यानपायिनी शक्तिर्देवी तद्धर्मधर्मिणी" "मम सर्वात्मभूतस्य नित्यैवैषानपायिनी" "नित्यैवैषा जगन्माता विष्णोःश्रीरनपायिनी" "अपृथक्चारिणी सत्ता महानन्दमयी परा" इत्यादिप्रमाणान्तरसिद्धानित्य-योगे मतुपोऽर्थ इत्यभिप्रायेणाह-अस्य मतुपो नित्ययागेमतुप्त्वादिति।

ननु श्रियोऽपृथक्सिद्धत्वे 'गौः, अश्वः' इत्यादाविव मत्वर्थीयप्रत्ययनिरपेक्षप्र-

योगस्स्यात् । पृथक्सिद्धत्वे "कीर्तिःश्रीर्वाक्च नारीणाम्" इति मत्त्वर्थीयरहितसामानाधिकरण्यप्रयोगानुपपत्तिरिति चेत्, मन्दमिदं चोद्यम् । अस्य परिहारः श्रीनिगमान्तदेशिकैरुक्तः । तथा हि "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इत्युक्तन्यायेन ज्ञानगुणमादायात्मनः 'ज्ञानम्' इति व्यवहारस्य युक्तत्वेऽपि 'ज्ञानवान्' इति मत्वर्थीयप्रत्ययघटितत्वेन च सामानाधिकरण्यसद्भाववत्, अत्रापि न दोषः । तस्मान्मत्त्वर्थीयप्रत्ययमात्रेण 'पृथक्सिद्धा' इति न निश्चयितुं शक्यः। 'नरपतिरेव सर्वलोकाः' इत्यादाविव विवक्षान्तरस्य सम्भावितस्थले एतत्प्रत्ययविरहसामानाधिकरण्यमात्रावलम्बनेन पृथक्सिध्ध्यभावकथनमपि न युक्तम् " इति श्रीमति रहस्यत्रयसारे । विरोधपरिहारेऽपि तत्सुतैः अनुगृहीतः-"अपृथक्सिद्धसद्भावेऽपि असति निष्कर्षकोक्तिषु मत्त्वर्थीयप्रत्ययेन लक्ष्म्या नित्ययोगोऽभिधीयते । अपृथक्सिद्धस्यापि हि विशेषणस्य निष्कर्षावस्थायां मत्त्वर्थीयप्रत्ययो दृष्टः-'ज्ञानवान्, गुणवान्' इत्यादिषु । तस्माच्छ्रीशब्दार्थस्य भगवता नित्ययोगेऽपि निष्कर्षशब्दवाच्यत्वात्, मत्त्वर्थीयप्रत्ययो युक्तः । सर्वस्यापि तत्त्वजातस्य भगवदपृथक्सिद्धविशेषणेन 'एकं तत्त्वम्' इति वादोऽपि युक्ततरः" इति ।

ननु अत्र मतुपा श्रीमत्त्वनिर्देशो विफलः । प्रत्युत "लक्ष्म्या सह हृषीकेशः" "श्रीसहायो जनार्दनः" इत्यादिप्रमाणानुरोधेन 'श्रीसहितनारायणः, श्रीयुक्तनारायणः' इति निर्देष्टव्यत्वात् । मतुबन्ततया निर्देशे 'दण्डी, कुण्डली' इत्यादाविव कादाचित्कसम्बन्धस्यैव प्रतीत्या नित्यसम्बन्धाप्रतीत्या विवक्षितनित्ययोगासिद्धेश्च । किं च "वशी वदान्यो गुणवानृजुश्शु चिः"इत्यादिषु नित्ययोगेऽपि मतुपः प्रयोगात्, "नित्ययोगेऽतिशायिने" इत्यनुशासनाच्च नित्ययोगसिध्ध्यर्थं मतुबन्तेन निर्देशेऽपि तस्यानितरसाधरणस्य दुर्वचतया मतुपोऽतिशायनार्थकत्वमेव युक्तम् । लक्ष्म्या अतिशयश्च भगवत्स्वरूपादेर्यत्र यत्र व्याप्तिः, तत्र तत्र श्रियोऽपि स्वरूपरूपगुणविग्रहैः रक्षणार्थे व्याप्तेर्भवद्भिरवश्यमङ्गीकरणीयत्वात्। एवं च सति "भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणां" "अ-

नुरूपरूपविभवैर्गाढोऽपि गूढानि ते" "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम" इत्यादिप्रमाणमपि स्वरसतस्सङ्गच्छते । अपि च विवक्षितनित्ययोगो नाम-भगवत्स्वरूपनित्यसम्बन्धः-उत भगवद्विग्रहे वा । द्वितीये कल्पेऽपि सर्वविग्रहावच्छेदेन-उत कतिपयविग्रहावच्छेदेनेति विवेचनीयम् । स्वरूपपक्षो न सम्भवति । चेतनाचेतनसामान्यस्य भगवत्स्वरूपसम्बन्धत्वात् असाधारण्यानुपपत्तिः । द्वितीयकल्पेऽपि न प्रथमः-"पश्यतां सर्वदेवानां ययौ वक्षस्थलं हरेः" इत्यादिना कादाचित्कसम्बन्धस्य प्रतीत्या सार्वत्रिकत्वासिद्धेः । न द्वितीयः-कतिपयविग्रहावच्छेदेन तत्सम्बन्धस्य रक्षणानुपयुक्तत्वात् । तस्मान्मतुवन्तत्वेन श्रीमत्त्वविशेषणमनुपपन्नमितिचेत् -

उच्यते । अत्र मतुबन्ततया श्रीमत्त्वविशेषणं युक्तमेव । मतुपो नित्ययोगेऽपि स्मरणात् । ज्ञानानन्दादिना निरूपितस्वरूपस्यापि देवतान्तरसन्देहसहतया विग्रहविशेषावच्छेदेन भगवत्स्वरूपस्य श्रियैव व्यावृत्तित्वात् । श्रीविशिष्टमेव भगवत्स्वरूपं सर्वदा प्रमाणप्रतिपाद्यमित्यस्य स्वरूपव्यावर्तकतया नित्ययोगसिद्धौ पुरुषकारत्वेनापि रूपेण नित्ययोगस्सिध्यति । न च पूर्वोक्तविकल्पसंभवः । भगवत्सर्वविग्रहावच्छेदेनापि आविर्भावतिरोभावाभ्यां सम्बन्धस्यैवाङ्गीकारात् । न च पूर्वोक्तप्रमाणस्वारस्यभङ्गः । "अर्थो विष्णुरियं वाणी" "देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः । स्त्रीनाम्नी श्रीश्च विज्ञेया नानयोर्विद्यते परम्" इत्यादिना लक्ष्म्या विभूतिप्रतिपादनप्रकरणपर्यालोचनया विग्रहाविशिष्टवेशेण विभुत्वप्रतिपादकत्वेन तद्वचनस्यान्यथासिद्धत्वात् । किंच, सिद्धोपायस्वीकारप्रतिपादकेऽस्मिन्मन्त्रे अनाद्यपराधजनितभयनिवर्तकपुरुषकारसम्बन्धस्य नित्यतयापेक्षितत्वेन तद्विभुत्वादीनामनपेक्षितत्वेन तत्प्रतिपादने 'अपेक्षितविधेरनपेक्षितविधानं दुर्बलम्' इति न्यायेन विभुत्वार्थस्याङ्गीकारानर्हत्वाच्च। तस्मान्मतुपा नित्ययोगप्रतिपादनं सफलमेवेति ।

ननु उत्तरत्र "एतत्सन्निधिना" इत्यादिना लक्ष्म्यास्सान्निध्यासान्निध्ययोः कण्ठतःप्रतिपादनेन सर्वदा सर्वविग्रहावच्छेदेन सम्बन्धस्य प्रतिपादनं स्वोक्तिविरुद्धमिति चेत्-न । इदं वाक्यं लक्ष्मीसान्निध्यासान्निध्यप्रतिपादनपरं न भवति । किन्तु

(१६). नित्ययोगमुपपादयति-अनयेति ।

मू॥ इवलोडे कूडिये वस्तुविनुडैय वुण्मै ॥ १६ ॥

छा॥ अनया मिलित्वैव वस्तुनस्सद्भावः ॥ १६ ॥

व्या॥ "श्रियःपतिर्निखिलहेयप्रत्यनीककल्याणैकतानस्स्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपः" इति स्वरूपनिरूपकज्ञानानन्दादेःपूर्वं श्रियःपतित्वस्योक्तत्वेन स्वरूपस्य प्रधाननिरूपकत्वात् अनया सह मिलित्वैवास्य वस्तुनस्सद्भाव इत्यर्थः॥१६

---

सिद्धोपायेन फले भवितव्ये उपायसामर्थ्यापेक्षया पुरुषकारसम्बन्धस्यैव मुख्यप्रयोजकत्वमिति अन्वयव्यतिरेकाभ्यामवताराविशेषानिष्ठतया दर्शायितुमिदं वाक्यं प्रवृत्तमिति न विरोधगन्धोऽपि ॥ १५ ॥

(नित्ययोगमुपपादयति) इति-नित्ययोगः-नित्यसम्बन्धः । स च त्रिविधः । धर्मसत्ताव्यापकस्वसत्ताकः । यथा पाकपरावृत्तरूपघटयोस्सम्बन्धः । धर्मिसत्ताव्यापकस्वसत्ताकः । यथा कालकालत्वयोस्संसर्गः, यथा जीवात्मपरमात्मनोस्संसर्गः । प्रकृते कीदृशो नित्ययोग इत्याकांक्षयां नित्ययोगमुपपादयतीति भावः ।

(अनया मिलित्वैवास्य वस्तुनस्सद्भावः इत्यर्थः) इति-एतां विना ईश्वरस्य सत्तैव नास्तीत्यर्थः । सत्यत्वानन्तत्वादिवत्, अस्या अन्तरङ्गनिरूपकधर्मत्वादिति भावः । "अहन्ता ब्रह्मणस्तस्य साहमास्मि सनातनी । आत्मा स सर्वभूतानामहम्भूतो हरिस्स्मृतः । अहन्तया विनाहं हि निरुपाख्यो न सिध्यति । अहमर्थं विनाहन्ता निराधारा न सिध्यति" "एवं भगवतस्तस्य परस्य ब्रह्मणो मुने । सर्वभावानुगा शक्तिः ज्योत्स्नेव हिमदीधितेः" "एकं तत्परमं ब्रह्म षाड्गुण्यस्तिमितं

मङः । भावाभावमयी तस्य शक्तेरेकानपायिनी । तद्धर्मधर्मिणी दिव्या ज्योत्स्नेव हिमदीधितेः" "योऽसौ नारायणो देवः परमात्मा सनातनः । अहम्भावात्मिका शक्तिस्तस्य तद्धर्मधर्मिणी । ताविमावेकथैवोक्तौ भेद्यभेदकभावतः । पृथक्त्वेन च शास्त्रेषु जगद्धेतुतयोदितौ । न वै शक्त्या विना कश्चित् शक्तिमानस्ति कारणम् । न च शक्तिमता शक्तिर्विना काप्यवतिष्ठते । तत्तद्गौरवमाश्रित्य तन्त्रवेदान्तपारगैः । जगद्धेतुतया देवावेकैकाविव दर्शितौ ।" "प्रसुप्ताखिलकार्यं यत्सर्वतस्समतां गतम् । नाराणामयनं ब्रह्म सर्वावासमनाहतम् । पूर्णस्तिमितषाड्गुण्यं निस्तरङ्गार्णवोपमम् । तस्य स्तैमित्यरूपा या शक्तिश्शून्यत्वरूपिणी । स्वातन्त्र्यादेव कस्माच्चित्कचिदुन्मेषमृच्छति । सदसच्चिदचिद्रूपैर्यत्र विश्वं प्रकाशते ।" "तस्मिन्नुपरते शश्वद्विश्वकोलाहलोद्गमे । अलक्ष्या कार्यतश्शक्तिर्देवाद्विजहती भिदाम् । इन्धनाभावतो ज्वाला वाह्निभावं यथा गता । ब्रह्मभावं व्रजत्येवं सा शक्तिर्वैष्णवी परा" "एका शक्तिर्हरेर्विष्णोस्सर्वभावानुगामिनी । देवी षाड्गुण्यसम्पूर्णा ज्ञानानन्दक्रियामयी । भाव्यभावकभेदेन सा द्विधाभावमृच्छति" "या सा शक्तिर्हरेराद्या लक्ष्मीनाममहामुने । यासा सर्वात्मना विष्णोर्भावाभावानुगामिनी । तस्या अल्पायुतांशांशस्स्वस्वातन्त्र्यविजृम्भितः । क्रियाविभूतिभेदेन समुदेतीति वर्णितः" "सङ्कल्पःकोटिकोट्यंशश्शक्तेर्भूतिस्तथा विधा । शक्तिस्सा वैष्णवी सत्ता बहुधैवं प्रतीयते । सङ्कर्षणादिभूम्यन्तस्तस्याः कोट्यंश ईरितः । या सा शक्तिर्महासत्ता विष्णोस्तद्धर्मधर्मिणी । तस्याः कोट्यर्बुदांशेन शक्ती द्वे कथिते तव" "परमात्मा परो योऽसौ नारायणसमाह्वयः । तस्यानपायिनी शक्तिर्देवी तद्धर्मधर्मिणी । मायाश्चर्यकरत्वेन पंचकृत्यकरी सदा । व्यापिनी विष्णुरूपेण सर्वभावानुगामिनी । अशेषभुवनाधारा सङ्कल्पप्रविजृम्भणी ।" "द्वेशक्ती तस्य विद्येते विष्णोस्सर्वार्थसाधने । प्रधानभूते याभ्यां तु वहत्येष जगद्धुरम् । एका त्विच्छात्मिका तस्य तथान्या तु क्रियात्मिका । प्रथमा परमा लक्ष्मीर्जगत्त्रयकुटुम्बिनी ।" "तद्धर्मधर्मिणीं शक्तिं ब्रह्मणोऽनपगामिनीम् । अनाकारामनौपम्यां लक्षयन्तीं सदा जगत् । श्रयन्तीं श्रियमाणां च शृणातीं शृण्वतीमपि । महानन्दां महाभासां निर्विकारां निरेषणाम् । ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभाविनीम् । अनन्तामन्त-

रूपां तामभेद्यां सर्वभेदिनीम् । नन्दां भद्रां जयां चैव रिक्तां पूर्णामृतम्भराम् । विरूपामविरूपां च सर्वप्रत्यक्षसम्मताम् । निषेधैरनिषेध्यान्तामविधेयां विधिक्रमैः । अवाच्यां वाचिकां नित्यां गौरीं लक्ष्मीं सरस्वतीम्" इत्यादिषु भगवत्स्वरूपनिरूपकधर्मत्वेन श्रियोऽन्वितत्वं प्रसिद्धम् ।

अत अस्या अन्तरङ्गस्वरूपनिरूपकधर्मत्वात् कृत्स्नेषु भगवद्विषयकज्ञानेष्वप्यस्यास्स्वरूपतो भानमभ्युपेत्यम् । ज्ञानानन्दादिवत् । तथा च धर्मिविषयताव्यापकविषयताकत्वरूपमिह नित्यत्वं सम्बन्धे विवक्षितम् । न तु पूर्वोक्तत्रितयान्यतमं नित्यत्वम् । तादृशनित्यत्वस्यान्तरङ्गस्वरूपनिरूपकत्वाभाववद्धर्मसम्बन्धेऽपि विद्यमानत्वात् । इत्थं च एतादृशनित्यसम्बन्धस्य मतुपा बोधनादस्यात्यन्तान्तरङ्गधर्मत्वलाभात् सर्वदा पुरुषकारसान्निध्यं सूचितमिति भावः । तर्हि सत्यत्वादीनामिवास्यास्स्वरूपनिरूपकत्वं शोधकवाक्येन किमर्थं नोक्तमिति चेन्न, अतिरहस्यत्वात्, अतिप्रसिद्धत्वादिति वा वक्तुं शक्यत्वात् । वस्तुतो लक्ष्मीतन्त्रवचनेनैवावगततया प्रमाणान्तरापेक्षा नास्तीति बोध्यम् ।

(श्रियःपतिः) इति-निगमान्तदेशिकैस्तात्पर्यचन्द्रिकायां व्याख्यातेयं श्रीसूक्तिः । तथा हि-"विशेषज्ञप्तये भर्तृरभिगम्यत्वसिद्धये । समस्तमङ्गलाप्त्यै च प्रथमं श्रीरिहोदिता । "एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम्" "अर्थो विष्णुरियं वाणी" इत्यादिकमिह भाव्यम् । कतिपयहेयानिवर्तकतीर्थसेवादिव्युदासाय-निखिलेति विशेषणम् । अत्र हेयशून्यत्वमर्थसिद्धम् । न हि परगतनिखिलहेयनिराकरणसमर्थः स्वगतं हेयं क्षमते । यद्वा हेयाविरोधिस्वभावतया हेयशून्यमित्यर्थः । तथा निखिलशब्दः-सर्वाचिद्गतं विकारादिकं सर्वचिद्गतं क्लेशादिकं च संगृह्णाति । कुमतिपरिकल्पितमंशभेदेनाकल्याणस्पर्शमपाकर्तुं-कल्याणैकतानशब्दः । अत एव "ज्ञानानन्दैकस्वरूपः" इत्यनेनापौनरुक्त्यम् । अथवा सामान्यविशेषनिर्देशरूपत्वादपुनरुक्तिः । यद्वा कल्याणैकतानः-कल्याणगुणानामेवाश्रयभूत इति वक्ष्यमाणगुणप्रपंचस्य संग्रहः । त्रिविधानां चेतनाचेतनानां पराधीनत्वादिसाम्यादेवं भूतं वस्त्वन्तरं नास्तीत्यभिप्रायेणाह-स्वेतरेति । एतेन ज्ञानभोगसा-

(१७). एवं स्वरूपानुबन्धित्वप्रयुक्तनित्ययोग उक्तः, अथास्या गुणप्रयुक्तनित्ययोगमाह-ईश्वरस्वातन्त्र्यमित्यादिना ।

मू॥ ईश्वरस्वातन्त्र्यत्तैयुम्, चेतननुडैय अपराधत्तैयुङ्कण्डहल माट्टाळ् ॥ १७ ॥

छा॥ ईश्वरस्वातन्त्र्यं चेतनापराधं च दृष्ट्वा दूरे न भवति॥१७॥

न्येऽपि सर्वप्रकारसमत्वनिषेधः । "नित्यं विभुं सर्वगतम्" "विश्वमेवेदं पुरुषः" इत्यादिप्रसिद्धं त्रिविधपरिच्छेदराहितम् । 'अत्रैव देशेऽस्ति, अत्र तु नास्ति' इति देशपरिच्छेदः । 'अत्र कालेऽस्ति, अत्र तु नास्ति' इति कालपरिच्छेदः । 'इदं भवति, इदं न भवति' इति वस्तुपरिच्छेदः । अल्पवर्णस्त्रर्णवत् स्वरूपापकृष्टत्वादिकं वा । एवंविधपरिच्छेदत्रयराहित्यं नाम-सर्वदेशसर्वकालव्यापित्वसर्वान्तर्यामित्वरूपम्। वस्तुपरिच्छेदराहित्यं हि-समस्तवस्तुसामानाधिकरण्ययोग्यत्वादिकम्। न तु पुनर्मिथोविरुद्धविविधवस्तुतादात्म्यं स्वव्यतिरिक्तसमस्तवस्तुमिथ्यात्वं वा। उभयोरत्यन्तासम्भावितत्वात्। विस्तरस्तु शतदूषण्यां कृतोऽस्माभिः।आनन्दस्य ज्ञानविशेषत्वात् ज्ञानानन्दशब्दयोस्सामानाधिकरण्यमुपपन्नम् । तर्ह्यानन्दशब्दस्य विशेषशब्दत्वात् 'घटद्रव्यम्' इत्यादिवत् 'आनन्दज्ञानम्' इति वक्तव्यमिति चेत्, तन्न । बहुलग्रहणेन सर्वोपपत्तेः । यद्वानन्दशब्दस्यानुकूलवेदनीयेषु जडेष्वपि प्रयोगात् तद्विशेषणतया ज्ञानशब्दस्य पूर्वात्वोपपत्तिः । स्वरूपं प्रतीदं विशेषणद्वयं वा" इति ॥ १६ ॥

(स्वरूपानुबन्धित्वं) ति–स्वरूपानुबन्धित्वं–धर्मिस्वरूपातिशयाधायकापृथक्सिद्धविशेषणत्वम् । भूम्यादिमहिष्यन्तरव्यावृत्तस्वरूपान्तरङ्गनिरूपकत्वेनास्या एव पुरुषकारत्वं युक्तमिति भावः । (गुणप्रयुक्तनित्ययोगमाह) इति-कृपागुणप्रयुक्तनित्यसंबन्धमाहेत्यर्थः । पूर्वोक्तनित्ययोगस्य ज्ञातत्वेऽपि लक्ष्म्यास्स्वरूपतो भानेन अत्र घटकतावच्छेदकधर्माक्रान्तत्वसन्देहाच्च भयत्यागस्सम्भवतीत्यत आ-

व्या॥ अपराधान्दशगणयित्वा च्छित्वा च्छित्वानुभवं कारयितुरीश्वरस्य स्वातन्त्र्यं " यद्ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यम् " इत्यादिप्रकारेण कालतत्त्वस्थितिपर्यन्तमनुभवे कृतेऽपि किंचिन्न्यूनं जातमिति वक्तुमयोग्यान् कृतानस्य चेतनस्याकृत्यकरणाद्यपराधांश्च दृष्ट्वा 'किं भविष्यती' तिभयेनेश्वरं त्यक्त्वा क्षणमपि दूरे न भवतीत्यर्थः ॥ १७ ॥

---

कारषट्कात्मकघटकतावच्छेदकधर्मविशिष्टत्वज्ञानार्थं गुणकृतनित्ययोगमुपपादयतीति भावः। अत्र नित्ययोगो नाम-अविनाभावेन स्थितिः। अनपायिनीत्वामिति यावत्।

(यद्ब्रह्मकल्पे) इति-श्रीवैकुण्ठस्तवे "यद्ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे। एवं सदा सकलजन्मसु सापराधं क्षाम्यस्यहो तदभिसन्धिविराममावात्" इति।

(अकृत्यकरणाद्यपराधान्) इति-"अकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारासह्यापचाररूपनानाविधानन्तापचारान्" इति गद्यसूक्तिस्स्मारिता। अत्र श्रीवचनभूषणसूक्तिरनुसन्धेया—"निषिद्धानुष्ठानं चतुर्विधम्। तच्चाकृत्यकरणं भगवदपचारो भागवतापचारोऽसह्यापचारश्च। अकृत्यकरणं नाम-परहिंसा, परस्तोत्रं, परदारपरिग्रहः, परद्रव्यापहारोऽसत्यकथनमभक्ष्यभक्षणमेतत्प्रभृति। भगवदपचारो-नाम-देवतान्तरैस्तुल्यतया ईश्वरस्य चिन्तनम्, रामकृष्णाद्यवतारेषु मनुष्यसजातीयत्वबुद्धिः, वर्णाश्रमविपरीतोपचारः, अर्चावतारे उपदाननिरूपणमात्मापहारः भगवद्द्रव्यापाहारः एतत्प्रभृतिः। भगवद्द्रव्यस्य स्वयमपहारो, ऽपहर्तॄणां सहकारित्वम्, तेभ्यो याचितमयाचितं वा परिग्रहश्च भगवतोऽनिष्टः। भागवतापचारो नाम—अहङ्कारार्थकामहेतुना श्रीवैष्णवेषु क्रियमाणो विरोधः। असह्यापचारो नाम-निर्निबन्धनं भगवद्भागवतविषय इत्युक्तावसह्मानतया स्थितिः, आचार्यापचारश्च" इति। व्या

ख्याता चेयं श्रीसूक्तिः श्रीरम्यजामातृमुनीन्द्रैः-"एवंभूतस्य निषिद्धभेदानाह-निषिद्धेत्यादिना। उपादेयगुणचतुष्टयवद्धेयं निषिद्धं चतुर्विधमित्यर्थः। स च चतुर्विधःको वा इत्यतस्तान्निर्दिशति-तच्चाकृत्यकरणमित्यादि। अस्य वेषःको वेत्यकाङ्क्षायां तं क्रमेण विवृणोति-अकृत्यकरणं नामेत्यादिना। परहिंसा नाम "न हिंस्यात्सर्वा भूतानि" इति विधिमतिक्रम्य क्रियमाणा प्राणिपीडा। परस्तोत्रं नाम-प्राप्तविषयस्तोत्रार्हया वाचाप्राप्तविषयस्तोत्रम्। परदारपरिग्रहो नाम-परेषामनन्यार्हाणां स्त्रीविषयाणां मोहादिभिस्स्वीकारः। परद्रव्यापहारो नाम-परेषां स्वभूतस्य वस्तुनस्तदनुमतिं विना प्रकाशमप्रकाशं वाग्रहणम्। असत्यकथनं नाम-यथादृष्टार्थविषयत्वं भूतहितत्वं च विना स्थितस्य वचनस्य कथनम्। अभक्ष्यभक्षणं नाम-जात्याश्रयनिमित्तदुष्टानां स्वस्य भक्षणानर्हाणां भक्षणम्। एतत्प्रभृतीति-"परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं कर्म मानसम्। पारुष्यमानृतं चैव पैशुनं चैव सर्वशः। अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्। अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च शरीरं त्रिविधं स्मृतम्" इत्याभिर्मन्वादिस्मृतिषूक्तानामनेकत्वात्। अनन्तरं भगवदपचारं विवृणोति-भगवदपचारो नामेत्यादिना। देवतान्तरैस्तुल्यतया ईश्वरस्य-चिन्तनं नाम-"ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम्। ते वै पाषण्डिनो ज्ञेयास्सर्वकर्मबहिष्कृताः" "यस्तु नारायणं देवं सामान्येनाभिमन्यते। स याति नरकं घोरं यावच्चन्द्रदिवाकरम्" इति देवतान्तरैरीश्वरस्य समबुद्धिर्न कर्तव्येति शास्त्रं वदति। "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" "तमीश्वराणां परमं महेश्वरम्" "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्युक्तप्रकारेण स्वेतरसकलनियामकस्य समानाधिकराहितस्येश्वरस्य "अङ्गान्यन्या देवताः" इति तच्छरीरतयाभिहितैर्ब्रह्मादिदेवतान्तरैस्समबुद्धिकरणम्। रामकृष्णाद्यवतारेषु मनुष्यसजातीयत्वबुद्धिर्नाम-"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" इत्युक्तप्रकारेण।जहत्स्वभावस्याप्राकृतदिव्यसंस्थानमितरसजातीयं कृत्वा दुःखप्रचुरे मनुष्यजन्मन्याविर्भूतस्य स्थितिमज्ञात्वावतारे याथार्थ्यनिमित्तं तेन कृतं गर्भवासजननमोहादिक्रमादाय कर्मवश्यानां मनुष्याणां सजातीयोऽयमिति चिन्तनम्। वर्णाश्रम-

विपरीतापचारो नाम-तदाराधनदशायां त्रैवर्णिकार्हवैदिकमन्त्रैश्चतुर्थवर्णैशराधनम्, उत्तमाश्रमिप्रभृतिभिः गृहस्थवत्ताम्बूलादिनिवेदनकरणं च। अर्चावतारे उपादाननिरूपणं नाम-"आश्रिताभिमतं यादृशं रूपम्" इत्यादिप्रकारेणाश्रिताभिमतं यत्किंचित् द्रव्यं विग्रहत्वेनाङ्गीकृत्य तत्रापाकृतविग्रहे क्रियमाणमादरं कृत्वा स्थितस्य स्थितिमविदित्वा मातृयोनिपरीक्षकवत् 'इदमेतद्द्रव्यं खलु' इति विग्रहोपदाननिरूपणम्। आत्मापहारो नाम-"यो ऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन नकृतं पापं चोरेणात्मापहारिणा" इति सकलपापमूलत्वेनोक्ता भगवदेकशेषभूत आत्मवस्तुनि स्वतन्त्रत्वबुद्धिः। भगवद्द्रव्यापहारो नाम-तण्डुलचन्दनप्रभृतिनः प्रकाशमप्रकाशं वा स्वस्वत्वापादनम्। प्रभृतिरित्यनेन एवं शास्त्रेषु बहूनामुक्तत्वात्, द्वात्रिंशदपचारा उक्ताः। पूर्वोक्तवद्भगवद्द्व्यापहारश्च भगवदनिष्टः किमिति शङ्कायां स्वकृतापहारमात्रं विनापहर्तॄणां सहकरणप्रभृतिकमपि तस्यानिष्टमित्याह-भगवद्द्रव्यस्येत्यादिना। स्वयमपहारो नाम-साक्षात्स्वस्यैवात्र कर्तृत्वम्। अपहर्तॄणां सहकारित्वं नाम-'नास्माभिरपह्रीयते खलु' इति विचार्यास्यापहर्तॄणामनुमत्यादिभिस्सहायकरणम्। तेभ्यो याचितपरिग्रहो नाम-'वयमपहारस्य सहकारिणो न खलु' इति विचार्य तेभ्यः कस्यचित् याचनापूर्वकं ग्रहणम्। अयाचितपरिग्रहो नाम-'अस्माभिरपेक्षा न कृते' ति विचार्य तैस्स्वयं दत्तस्य ग्रहणम्। भगवतोऽनिष्ट इति-एतत्सर्वमस्योज्जीवनपरस्य कृषिं कुर्वतस्सर्वेश्वरस्य हृदयस्यानभिमतमित्यर्थः। अनन्तरं भागवतापचारं विवृणोति-भागवतापचारो नामेत्यादिना। परोत्कर्षं दृष्ट्वासहनस्य स्वोत्कर्षबुद्धेश्च हेतुना तेषां वैष्णवाकारं ज्ञात्वा 'एतदाशाविषयश्चेत्त्यजामः' इति स्थातुमशक्तत्वात्, अर्थकामहेतुना श्रीवैष्णवेषु क्रियमाणो विरोध इत्यर्थः। अनन्तरमसह्यापचारं विवृणोति-असह्यापचारो नामेत्यादिना। अन्यापचारेभ्य ईश्वरस्यात्यन्तासह्यत्वादयमसह्यापचार इत्युच्यते। "भवदसहनीयागसि रतः" इति हि भट्टार्यैरुक्तम्। निर्निबन्धनं भगवद्भागवत विषय इत्युक्तावसहमानतया स्थितिर्नाम-पूर्वोक्तप्रकारेणार्थकामादिनिबन्धनत्वं विना हिरण्यवत् भगवद्विषये भागवतविषय इत्युक्तौ द्रष्टुं श्रोतुं वासहमानतया स्थितिः। आचार्यापचारो नाम-तदुक्तार्थप्रकारेणानुष्ठानाभावः, त-

(१८) एतेन चेतनस्य फलितांश उच्यते-चेतनस्येति ।

मू।। चेतननुक्कु इवै यिरण्डैयुं निनैत्तंजवेण्डा ।। १८ ।।

छा।। चेतनस्य एतदुभयं स्मृत्वा न भेतव्यम् ।। १८ ।।

व्या।। एवं स्थित्वेयं रक्षतीति चेतनस्येश्वरस्वातन्त्र्यं स्वापराधमित्येतद्द्वयं स्मृत्वा 'किं वा फलिष्यति' इति न भेतव्यमित्यर्थः।।

(१९) अथास्मिन्मतुपि तात्पर्यांशमाह-अनेनेति ।

मू।। इत्ताल्-'आश्रयिक्कैक्कु रुचिये वेण्डुवदु, कालं पार्क्कवेण्डा' एन्गिरदु ।। १९ ।।

छा।। अनेन-'आश्रयणे रुचिरेवापेक्षिता, कालो न प्रतीक्ष्यः' इत्युच्यते ।। १९ ।।

व्या।। एवम्पुरुषकारोपायवस्तुनोर्नित्ययोगं प्रतिपादयतानेन मतुपा-एतद्विषयमाश्रयणे रुचिरेवापेक्षिता 'उभयोस्संश्लेषदशायामाश्रयणं कर्तव्यम्' इति कालप्रतीक्षा न कर्तव्येत्युच्यत इत्यर्थः।।१९

---

दुपदिष्टमन्त्रतदर्थयोरल्पप्रयोजनाशयानाधिकारिषूपदेश एतत्प्रभृतिः । तद्भक्तापचारो नाम-आचार्यभक्तैस्सब्रह्मचारिभिरैकरस्येन स्थित्यावाश्यकतायां सत्यां तथाकृत्वा तेषु क्रियमाणासूयावज्ञैतत्प्रभुति ।" इति ॥ १७ ॥

(चेतनस्येश्वरस्वातन्त्र्यमि) त्यादि-(न भेतव्यमि) ति-उंक्तच-चतुश्लोक्याधिकारे "त्वत्प्रसादे सति सर्वेश्वरादपि मे भयं नास्तीत्याह-लोकनाथदयित इति । दयिताशब्दः-इह वल्लभात्वाभिप्राय । सर्वभयाभयहेतुभूतस्सर्वेश्वरोऽपि त्वदभिमतं नातिक्रामतीति भावः" इति ॥ १८ ॥

(कालप्रतीक्षा न कर्तव्ये) ति- "पुण्येऽनुकूले समये देशे भागव-

(२०). एतत्पुरुषकारत्वस्यावश्यापेक्षितत्वं ज्ञापयितुमस्यास्सन्निधेरसन्निधेश्च विद्यमानं तारतम्यमाह-एतत्सन्निधिना इत्यादिना।

मू॥ इवल्सान्निधियाले काकं तलै पेत्तदु, अदिल्लामैयाले रावणन्मुडिन्दान् ॥ २० ॥

छा॥ एतत्सन्निधिना काकेन शिरःप्राप्तम्, तदभावेन रावणो मृतः ॥ २० ॥

व्या॥ "देव्या कारुण्यरूपया" इत्युक्तप्रकारेण मूर्तिमत्त्याः कृपाया इव स्वतन्त्रस्येश्वरस्य स्वातन्त्र्यमधःकृत्य कृपामुद्बोधयन्त्या अस्यास्सन्निधिनापराधकृद्ब्रह्मास्त्रलक्ष्यं भूत्वा शिरश्छेदनं

---

तोत्तरे।" इत्यादिवचनानि साधनप्रपत्त्यादिपराणीत्यन्यत्र विस्तर इति भावः। वक्ष्यमाणप्रपत्तेर्देशकालाधिकार्यादिनियमाभावः श्रीवचनभूषणदिव्यशास्त्रे महता प्रबन्धेन प्रपंचितः ॥ १९ ॥

(देव्ये) ति-कारुण्यं रूपम्-शरीरम्, यस्यास्सा तथोक्ता' इति हृदिनिधायाह-मूर्तिमत्या इति। 'कारुण्यम्, रूपयति-प्रकाशयति, इति कारुण्यरूपा' इत्यभिमेत्याह-स्वतन्त्रस्येत्यादि। (काकः) इन्द्रपुत्रो जयन्तः। अस्य काकत्वे निदानं पूर्ववासिष्ठे हनुमद्विजये "वायसोऽभूज्जयन्तस्स इन्द्राणीयमजीजनत्। तत्र हेतुं प्रवक्ष्यामि शृणु भद्रे मयोदितम्। पुरा मरुत्वान्देवेशो गौतमस्य प्रियां सतीम्। अहल्यां कामयन्मोहात् निशीथे वायसोऽरटत्।" इत्यारभ्य "इन्द्रस्य वायसत्वं च जयन्ते प्रत्यपादयन्। आत्मा हि पुत्रस्सर्वेषामिति स्वं नाथमिच्छवः। प्रसाद्य गौतमं तेन वायसत्वस्य चावधिम्। रामास्त्रस्पर्शममराःकारयामासुरीश्वराः। जयन्तः-काकारूपेण विचरन् भुवने चिरम्। वने राघवसिंहस्य कोपं जनयितुं तदा" "अतो रामममहास्त्रेण जयन्तो भयाविद्रुतः। तेनानुद्रवता भद्रे द्रावितो नैव मारुतिः" इत्यन्ते-

प्राप्तःकाकः "कृपया पर्यपालयत्" इत्युक्तप्रकारेण कृपाविषयश्शिरःप्राप्तवान्; एवं स्थितायास्सान्निध्यभावेन गमनं त्यक्त्वा स्थितेस्साम्येऽपि काकतुल्यापराधाभावेऽपि रामशरस्य लक्ष्यं भूत्वा रावणो मृत इत्यर्थः ।

तस्मादाश्रयतामस्यास्सन्निधिरेवापेक्षित इति तात्पर्यम्॥२०

---

न स्पष्टम् ।

(कृपये)ति "स तं निपतितं भूमौ शरण्यश्शरणागतम् । वधार्हमपि काकुत्स्थः कृपया पर्यपालयत्" इति श्रीरामायणवचनम् । "पुरतःपतितं देवी धरण्यां वायसं तदा । तच्छिरःपादयोस्तस्य योजयामास जानकी । प्राणसंशयमापन्नं दृष्ट्वा सीताथ वायसम् । त्राहि त्राहीति भर्तारमुवाच दयया विभुम् । तमुत्थाप्य करेणाथ कृपापीयूषसागरः । ररक्ष रामो गुणवान् वायसं दययैक्षत" इत्यादिवचनमत्रानुसन्धेयम् ।

(काकतुल्यापराधाभावेऽपि) इति । "स दृष्ट्वा जानकीं तत्र कन्दर्पशरपीडितः । विरराद नखैस्तीक्ष्णैः पीनोन्नतपयोधरौ" इति पाद्मोत्तरोक्तप्रकारेणाकृत्यकरणरूपकायिकव्यापारे खलु प्रवृत्तःकाकः । तथा न रावणःप्रवृत्त इति भावः । जयन्तःकामुकतया समागत इति न रामायणोक्तम् । "न चाप्युपारमन्मांसाद्भक्षार्थी बलिभोजनः ""भक्षगृध्नेन काकेन रादितस्तु स्तनान्तरे" इत्यादिमात्रवचनात् । अतो वालिवदसौ इन्द्रजन्मा प्रबलः कश्चिद्वायसः । "मत्कृते काकमात्रे तु ब्रह्मास्त्रं समुदीरितम्" इति चोक्तम्-इति केषांचित्पक्षः । पूर्ववासिष्ठपाद्मोत्तरादिप्रक्रियापर्यालोचनया "नखाग्रैःकेन ते भीरु रादितं च स्तनान्तरे" इति वचनबलेन चोक्तार्थलाभः इत्याचार्याः ॥ २० ॥

(२१) एवं श्रीमत्पदार्थ उक्तः, अनन्तरं नारायणपदार्थमाह—पुरुषकारबलेनेति ।

मू॥ पुरुषकारबलत्ताले स्वातन्त्र्यं तलै शाय्न्दाल् तलैयेडुक्कुणङ्ग्लै च्चोल्लुहिरदु-नारायणपदम् ॥ २१ ॥

छा॥ पुरुषकारबलेन स्वातन्त्र्ये निमग्ने उद्बुध्यमानान् गुणानाह-नारायणपदम् ॥ २१ ॥

व्या॥ उपदेशेन सौन्दर्येण च निराबाधं वशीकृत्य कार्यकरणशक्तपुरुषकारबलेनाश्रयणोन्मुखचेतनानादिकालकृतापराधान्दृष्ट्वा कोपेन 'नाङ्गीकारोमि' इति स्थितस्य स्वातन्त्र्ये निमग्ने तदधःस्थितानुद्बोधप्रतिबन्धे निवृत्ते उद्बुध्यमानान् गुणान्वदति—नारायणपदमित्यर्थः ॥ २१ ॥

---

(पुरुषकारबलेन—उद्बुध्यमानान् गुणान्) इति-ननु पूर्वापराधनिमित्तकालुष्यहेतुभूतस्वातन्त्र्याभिभूतस्य वात्सल्यादिगुणगणस्य यदि पुरुषकारोद्भावितत्वं स्यात् । तर्हि तद्गुणविशिष्टस्योपायस्यं साध्यत्वं स्यात् । अत एव सापेक्षता च । तस्मादुपायस्य वक्ष्यमाणं सिद्धत्वं निरपेक्षत्वं च न सम्पद्यते । अनुद्भूतगुणोद्भवाय हेतुसापेक्षत्वात् । न च स्वातन्त्र्यतिरोहितस्वाभाविकगुणप्रकाशत्वमात्रेण पुरुषकारस्य नोपायाङ्गत्वमिति वक्तव्यम् । आत्मधर्मभूतभक्तिविशेषप्रकाशकस्य कर्मयोगादेस्साधनाङ्गत्वदर्शनात् । साक्षादुपायस्यापि भगवतस्तिरोहितस्वरूपगुणाविर्भावनमेव कार्यकरम् । तस्मात्साध्यत्वसापेक्षत्वयुक्तोपायान्तरव्यावृत्तिरस्योपायस्य न सिध्यति । न चैवं परिहर्तव्यम्-उपायस्येष्टानिष्टप्राप्तिपरिहारहेतुत्वेन, तदुपयोगिज्ञानशक्त्यादिगुणस्य स्वरूपोत्पत्तौ कार्यकरत्वे वा हेत्वन्तरनैरपेक्ष्यात्, तद्विशिष्ट ईश्वर

(२२). ते के इत्यत आह—ते चेत्यादिना ।

मू॥ अवैयावन-वात्सल्यमुम्, स्वामित्वमुम् सौशील्यमुम्, सौलभ्यमुम्, ज्ञानमुम्, शक्तियुम् ॥ २२ ॥

छा॥ ते च-वात्सल्यं स्वामित्वं सौशील्यं सौलभ्यं ज्ञानं शक्तिश्च ॥ २२ ॥

व्या॥ तत्रवात्सल्यं नाम-वत्सविषये धेनोःस्थितिः । सा च दोषस्य

एवात्रोपायभूतः । वात्सल्यादिकं तु तस्याश्रयणसौकर्यापादकमात्रम् । तस्यैव पुरुषकारोद्भावितत्वं, नान्यस्य ज्ञानादिकस्येति तद्विशिष्टस्य सिद्धत्वं निरपेक्षत्वं चमुस्थितमिति, अनेन गुणविभागेनोपायान्तरव्यावृत्तिस्सिद्धेति । अविशेषात् स्वातन्त्र्यपरिबृंहितज्ञानशक्त्यादेः कर्मफलप्रदानरूपदण्डधरत्वोपयुक्तत्वात्, तस्याश्रितसंरक्षणौन्मुख्याय हेतुसापेक्षत्वमवर्जनीयम् । स च हेतुः-अपराधभीतानामाभिमुख्यापादकः पुरुषकार एवेति सापेक्षत्वमस्य दुष्परिहरमिति ।

मैवम् । इदमज्ञातोपायवस्तुयाथात्म्यानां चोद्यम् । "उपायोपेयत्वे तदिहतव त्वत्वं न तु गुणौ" इति भगवत उपायोपेयत्वं स्वरूपासिद्धम्, न तु गुणायत्तम् । एवं स्वतस्सिद्धोपायभावस्य स्वरूपावहिर्भूतस्वासाधारणविशेषलक्ष्मीपुरुषकारोद्भावितस्वगुणद्वारा कार्यकरत्वं न सापेक्षत्वापादकम् । तदुक्तमाचार्यैश्च "स्वतश्श्रीस्त्वं विष्णोस्स्वमसि तत एवैष भगवान् त्वदायत्तर्धित्वेऽप्यभवदपराधीनविभवः। स्वया दीप्त्या रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यं भवति च न चान्यादिनगुणम्" इति ॥२१॥

"अयत्नान्यायवस्सर्वान्दोषेण परिगृह्यते । अद्यजातं यथा वत्सं दोषेण सह वत्सला" "वात्सल्यं नाम-दोषे ष्वपि गुणत्वबुद्धिः । यथा मातुर्वत्से" "वत्सलः

वत्सान्स्वोत्सुकान्कामयते इति। "वत्सांसाभ्यां कामबले" इति लच्प्रत्ययः। स हि चिरं परिचीयमानेष्वपि शरणागतेषु कस्यापि हेतोस्सद्यःप्रसूतेष्विववत्सेषु सहुङ्काराः सपयस्संस्नवस्तनवेदनाः किंकर्तव्यताकुला धेनव इव सम्भ्राम्यतीति। रावणेऽपि प्रसिद्धम् "विदितस्स हि धर्मज्ञश्शरणागतवत्सलः" इति" इत्याद्याचार्यसूक्तिकदम्बमभिप्रेत्य वात्सल्यशब्दार्थमाह—**तत्र वात्सल्यं नामेति**। अनने वात्सल्यस्य ज्ञानविशेषरूपत्वं सिद्धम्।

**अत्र केचित्** वात्सल्यंनाम-न दोषेषु गुणत्वबुद्धिः, तथा सति भगवतो दोषस्य गुणत्वेन ज्ञाने अन्यथाख्यातिप्रसङ्गात्। किन्तु दोषादर्शित्वमेव वात्सल्यम्। अत एवानुगृहीतं श्रीसहस्रनामभाष्ये भट्टपराशरपादैः "अविज्ञाता" इति दिव्यनामव्याख्याने "अविज्ञाता "उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते" इतिवत्प्रपन्नापराधापरिगणनं गुण एव। अतो हि तातपादाः "सर्वज्ञतामिवमुभालभामहे त्वं ह्यज्ञ एवाश्रितदोषजोषणः" इति" इति। रहस्यरक्षायां "वात्सल्यगुणं पूर्वं द्विरुक्तमपि "मित्रभावेन सम्प्राप्तम्.....दोषो यद्यपि तस्य स्यात्" इत्यादि स्मरणाय पुनराह—आश्रितेति। वात्सल्यगुणोदधौ निग्रहादिकं निम्नं भवतीत्यभिप्रायेणैकशब्दः। अत एव हि सर्वज्ञत्वादौ स्थितेऽपि अविज्ञातृत्वाद्युक्तिः" इति। किंच "दोषाणामपि गुणत्वेन दर्शनमिति त्वतिवादः" इति तत्रैवाचार्यैरनुगृहीततया वात्सल्यस्य दोषादर्शित्वरूपत्वमेव सांप्रदायिकं-न तु दोषेषु गुणत्वबुद्धिः-इति वदन्ति।

**अत्रास्मदाचार्याः**—वात्सल्यं नाम—संश्रितदोषेषु गुणत्वबुद्धिः-न तु दोषादर्शित्वम्। श्रुतप्रकाशिकादिषु तथैवानुगृहीतत्वात्। न च दोषेषु गुणत्वबुद्ध्यङ्गीकारेऽन्यथाख्यातिप्रसङ्ग इति वाच्यम्। दोषत्वं च भगवद्विषयीकारप्रतिबन्धकतावच्छेदकशक्तिमत्त्वम्। तादृशशक्तेश्च प्रातिकूल्यव्यवसायनिवृत्तिमात्रेण सम्यक्प्रवृत्तभगवत्कृपाप्रवाहेण वा "नासौ पुरुषकारेण" इत्यादिप्रमाणप्रसिद्धनिरंकुशस्वातन्त्र्यप्रयुक्तविषयीकारेण वा नाशसम्भवात्, तथाविधशक्त्यभावरूपगुणत्वेनैव

दोषाणां भानसम्भवेनान्यथाख्यातिगन्धाभावात् । अत एवोक्तं श्रीरामायणे "दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्" इति । अत्र दोषसद्भावेऽपि 'अगर्हितम्' इति तस्य स्वीकारप्रतिबन्धकत्वाभावस्स्पष्टं प्रतिपाद्यते । न च "अविज्ञाता" इति दिव्योनाम्ना प्रतिपादितदोषादर्शित्वं विरुध्यत इति वाच्यम् । तदुपरितनदिव्यनामव्याख्यानभाष्ये दोषाणामुपेक्षात्मकज्ञानविषयताया एव प्रतिपादिततया विरोधाभावात् । तथा चानुगृहीतं "सहस्रांशुः" इति नामभाष्ये श्रीपराशरभट्टारकैः । इयं च तत्सूक्तिः="अथ च सर्वज्ञः-सहस्रांशुः । सहस्रं-अपरिमिताः, अंशवः-ज्ञानानि, अस्येति । नन्वाश्रितापराधव्यतिरिक्तसर्वज्ञ इति विप्रतिषिद्धम्, न । तदपराधेषु अतात्पर्येणोपेक्षा हि अज्ञानं विवक्षिता । उपेक्षते हि तेषां दोषं— "दोषो यद्यपि तस्य स्यात्" इति । अपि चेत्सुदुराचारो भजते मामनन्यभाक्" इति च" इति । जिज्ञासाधिकरणश्रुतप्रकाशिकायमपि 'दोषेषु गुणत्वबुद्धिः' इत्येव वात्सल्यस्वरूपमनुगृहीतम् । इयं च तत्सूक्तिः– "सम्बन्धविशेषान्वितेषु प्रीतिस्स्नेहः । यस्य विपाका-अस्थानभयशङ्कित्वम्, दोषानवभासः, दोषेषु गुणबुद्धिः, इत्यादयः" इति । न चात्र "दोषानवभासः" इति दोषादर्शित्वमप्युक्तमिति वाच्यम् । "दोषानवभासः" इत्यनेन कारुण्यादिप्रसरणप्रतिबन्धकत्वेनदोषज्ञानं नास्तीत्येव तद्ग्रन्थार्थवर्णनसम्भवात् । पुनःकेन रूपेण भानमिति चेत्-पूर्वोक्तरीत्या गुणत्वेनैव भानं सम्भवतीत्यभिप्रायेण "दोषेषु गुणबुद्धिः" इति अनुगृहीतम् । अन्यथा 'दोषादर्शित्वमेव वात्सल्यम्' इत्यङ्गीकारे "दोषानवभासः" इत्यनेनैव तत्स्वरूपज्ञानसम्भवात् "दोषेषु गुणबुद्धिः" इति वचनमनातिप्रयोजनकमेव भवेत् ।

किंच, पुरुषकारभूतया श्रिया चेतनविषये भगवतो रक्षकत्वस्थैर्यपरिज्ञानार्थं 'चेतनेन बहवो दोषाः कृताः' इति भगवत्सन्निधौ विज्ञापितं चेत्, 'त्वत्पुरुषकारपुरस्सरं मामाश्रितैर्दोषाः कदापि न क्रियन्ते, कदाचित् कृताश्चेत्, तैःकृताः गुणा एव' इति भगवदुक्तिसूचकतया वात्र पक्षद्वयोक्तिः । इत्थं च 'दोषादर्शित्वमेव वात्सल्यमि' त्यनन्यथासिद्धप्रमाणाभावात्, दोषेषु गुणत्वबुद्धिरेव तदित्यकामेनापि अङ्गीकरणीयमिति ।

किंच वत्सलशब्दस्य प्रीतिविशेषविशिष्ट एव शक्तिर्वैयाकरणैः प्रतिपादिता। न तु दोषादर्शित्वरूपदोषज्ञानाभावे। तथा हि काशिकावृत्तौ "वत्सांसाभ्यां कामबले-वत्सांसशब्दाभ्यां लच्प्रत्ययो भवति यथा संख्यं-कामवति, बलवति चार्थे। वत्सलः, अंसलः। वृत्तिविषये वत्सांसशब्दौ स्वभावात्कामबलयोर्वर्तमानौ तद्वति प्रत्ययमुत्पादयतः। न ह्यत्र वत्सार्थः, अंसार्थो वा विद्यते। 'वत्सल' इति स्नेहवानुच्यते। 'वत्सलस्स्वामी, वत्सलः पिता' इति" इति। तत्त्वबोधिन्यामपि—"वत्सांसाभ्यां कामबले-कामबलशब्दौ सूत्रे अर्शआद्यजन्तौ-इति भावः। 'वत्सलः' इति स्नेहवानित्यर्थः" इति।

इत्थं च वत्सलशब्दस्य स्नेहरूपप्रीतिविशेषार्थकतया व्याकरणसिद्धतया दोषज्ञानाभावरूपाभावार्थकत्वे तद्विरोधो दुष्परिहर एव। न च सिद्धान्ते भावान्तरस्यैवाभावरूपतया दोषादर्शनमपि ज्ञानविशेषरूपमेवेति न तद्विरोध इति वाच्यम्, दोषज्ञानाभावस्य भावरूपत्वेन वत्सलशब्दार्थरूपणे व्याकरणविरोधस्य दुर्वारत्वात्।

किंच, भगवत आश्रितानां दोषज्ञानमेव नास्तीति अङ्गीकारे "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति सूत्रभाष्यश्रुतप्रकाशिकाविरोधः। तत्र ह्युपासकस्य पूर्वोत्तराघानां भगवत्सङ्कल्पविशेषविषयतायास्सुस्पष्टं प्रतिपादितत्वात्। इयं च श्रुतप्रकाशिकासूक्तिः— "ननु पूर्वं शरीरपातानन्तरं कर्मक्षय उक्तः, अत्र तूपासनारम्भे कर्मप्रहाणमुक्तम्, कथमिदमुपपद्यते। उच्यते-उपासनारम्भसमाप्त्योर्भगवत्प्रीतिविशेषाभिप्रायत्वात्, अधिकरणद्वयाविरोधः। उपासनारम्भप्रीतः परमात्मा तत्समाप्तौ उपासकस्याघं 'क्षमिष्यामि' इति सङ्कल्पयति। समाप्तौ तु 'क्षान्तम्' इति सङ्कल्पयति। अतोऽधिकरणद्वयार्थ उपपन्नः" इति। अत्र संकल्पविशेषविषयत्वरूपज्ञानविषयत्वप्रतिपादनात्, 'दोषज्ञानाभावो वात्सल्यम्' इति वचनं चिन्त्यमेव। तथा चानुगृहीतमाचार्यैः श्रीमति रहस्यत्रयसारे द्वयाधिकारे "इवैचिल् वात्सल्यमावदु-"दोषो यद्यपि तस्य स्यात्" एन्गिरपडिये आश्रितनुडैय दोषं परादे अङ्गीकरिक्कैक्कु ईडान इरक्कम्" इति।

अत्राश्रितदोषादर्शनपूर्वकप्रीतिरेव वात्सल्यशब्दवाच्यतायास्स्पष्टमनुगृहीततया-ङ्गीकारहेतुभूतस्नेहविशेष एव वात्सल्यमिति सिध्यति। प्रतिपादितं च कठवल्लीभाष्ये रङ्गरामानुजमुनिभिः-"अंगुष्ठमात्रः पुरुषः" इत्यत्र "अंगुष्ठमात्रः-इति । ईशानो भूतभव्यस्य-कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुषः । मध्य आत्मनि-उपासक-शरीरमध्ये अंगुष्ठपरिणामस्सन्नास्ते । न ततो विजुगुप्सते-ततः-भूतभव्येश्वरत्वादेव, वात्सल्यातिशयात्, देहगतानपि दोषान् भोग्यतया पश्यतीत्यर्थः" इति । अत्र संश्रितसम्बन्धिदोषेषु भोग्यत्वबुद्धिः वात्सल्यातिशयकार्येति स्पष्टं प्रतिपादनात् 'दोषभोग्यत्वं वात्सल्यमि' ति सांप्रदायिकमेवेति प्रतीयते ।

तथैवोक्तं नारायणमुनीन्द्रैरहोबिलसंयमिसार्वभौमैः रहस्यत्रयजीवातौ "तत्र वात्सल्यं नाम - 'वत्सं लालयतीति वत्सलः, तस्य भावो वात्सल्यम् । वत्से मातृवत्स्नेहः । यथा वत्सस्य दोषं भोग्यतयोररीकृत्य क्षीरप्रदानेन वर्धयन्ती, प्रतिभटान् शृङ्गादिभिः पीडयति, तथा भगवानपि समाश्रितदोषमत्यादरेण स्वीकृत्य "अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" "मित्रभावेन सम्प्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यात्सतामेतदगार्हितम्" इति प्रक्रियया लालयति । एतेनानवधिकातिशयस्वकृतापराधभीतिर्निवर्त्यते । 'वात्सल्यं-आश्रितविषयदोषादर्शित्वम्' इति वेदान्ताचार्याः । तत्र सम्मतिमप्याहुः । "यतो दोषं भक्तेष्विह वरद नैवाकलयसि" इति । अत्र व्युत्पत्तिसिद्धार्थः प्रामाण्यानुसारेण रसो ग्राह्यः" इति ।

इत्थं च वत्सलशब्दस्य प्रीतिविशेषविशिष्टे वैयाकरणैश्शक्तेःप्रतिपादनात्. आचार्यैश्च दोषेषु गुणत्वबुद्धिरूपतायाः प्रतिपादनाच्च संश्रितदोषविषयकप्रीतिरेव वात्सल्यमिति सम्प्रदाय इति अन्यत्र विस्तरः।

तात्पर्यदीपिकायान्तु-"वत्सं-लालयति इप्रत्यये वत्सलशब्दः । तस्य भावो वात्सल्यम् । अग्रजाते वत्से धेनोर्दोषानादरहेतुस्स्नेहविशेषः । तादृशस्नेहकार्यं दोषादर्शनम् । तदुत्कठावस्थाकार्यं दोषेषु गुणत्वबुद्धिः । तदुक्तं श्रुतप्रकाशिकायां "सम्बन्धविशेषान्वितेषु प्रीतिस्स्नेहः । यस्य विपाका-अस्थानभयशंकित्वं, दोषान-

वभासः दोषेषु गुणत्वबुद्धिरित्यादयः "इति । तत्रैव" समन्वयाधिकरणे "दोषेषु गुणबुद्धिर्वात्सल्यम् । यथा मातुर्वत्से" इत्युक्तम् । अतिमात्रप्रेमयोग्यबन्धवद्विषयकस्नेहविशेषो वात्सल्यं, तत्कार्यत्वाद्दोषादर्शने दोषेषु गुणत्वबुद्धौ वा तत्र तत्र वात्सल्यपदप्रयोगः । दोषादर्शनं परीक्षकस्यापि बन्धान्वितेषु कारुण्यरहितेष्वपि भार्यादिषु दृश्यत इति, वत्सविषये धेनोर्ज्ञानशून्यायाः दृष्टान्तत्वेनोपादानमहिम्ना दोषभोग्यत्वं वात्सल्यमित्येव प्रायशो व्यवह्रियते । "अविज्ञाता सहस्रांशुः" "अविज्ञाता हि भक्तानामागस्सु कमलेक्षणः" "यतो दोषं भक्तेष्विह वरद नैवाकलयसि" इत्यादौ प्रथमावस्थाकार्यमुक्तम्। "नन्बु शेय्दार" "गुणंकोल्लुम्" "नत्तमाहवेकोल्" इत्यादिषु द्वितीयावस्थाकार्यमुच्यत इति न विरोधः । अत एव दयापालमुनिभिर्ज्ञानसारे "वण्डुपाडि" "अत्तमुरैक्किल्" इति गाथाद्वयेन क्रमेण दोषादर्शित्वदोषभोग्यत्वे दर्शिते । अत एव स्वतन्त्रचरमश्लोकव्याख्याने "त्वद्दोषादर्शनस्वभावः, त्वद्दोषेषु भोग्यत्वबुद्धिमान्" इत्युक्तम् । "यद्यपि" इत्यनेन 'दोषादर्शनं स्यात्' इत्यनेन भोग्यता च बोध्यते" इति विष्णुचित्तसूक्तिपर्यालोचनायां विशदम् । "विलंकाय् एरिन्दाय्पोलुम्" इत्यत्रैव पोलुंशब्दो नायथार्थसूचकः, अदर्शनमपि निग्रहाभिसन्धिराहित्यमेव । तथा च यद्ययमाश्रितान्न निगृह्णाति, रागतः वर्तमानान् कोवारयिता । अतस्समाश्रयणात्पूर्वभाविषु च प्रामादिकेषु अकृत्येषु च हेयेषु शरीरादिषु अदर्शनं भोग्यत्वं वा येन स्नेहविशेषेण स भगवतस्स्वीक्रियमाणोऽपि नातिप्रसङ्गापादकः । अत्रैव पूर्वाघविषये दोषेषु गुणत्वबुद्धिरुक्ता । तत्त्वदर्शिसूक्तिष्वपिशब्ददर्शनात् प्रामादिकेषूत्तरेषु "ज्ञानियै विग्रहत्तोडे आदरिक्कुम्" इत्यारभ्य श्रीवचनभूषणे शरीरादिषूक्ता । आश्रितस्य हि दोषा भोग्याः । बुद्धिपूर्वकदोषप्रवृत्तिराश्रितत्वविरोधिनी । अतस्तद्दोषाः प्रामादिका एव । उक्तं हि "प्रपन्न इति गर्वेण न कुर्याद्गुरुपातकम् । ज्ञात्वापि पातकं कर्म कुर्वन्मूढः पतत्यधः" इति । तदेतत्कैमुत्तिकन्यायेन श्रीवचनभूषणे उपपादितम् "यो हि पुण्यादपि बिभेति, न हि स पापं करोति" इति । वेदान्ताचार्यैरपि "आलिह्यतां निरवशेषमलब्धतृप्तिः"

"भरन्यासच्छन्नप्रबलन्नाजिनप्राभृतभृताम्" इत्याभिर्दोषभोग्यत्वमभिधाय एवं मन्दानां कालदोषाद्विपरीतप्रवृत्तिर्माभूत् इति वात्सल्यं दोषादर्शित्वमिति लक्षितम् । "अद्य जातन्तु मलिनं वत्सं गौरिव धावति" इत्यादिकमिह प्रमाणम् । "स्तन्यं तद्विषमम्मिश्रं रस्यमासीज्जगद्गुरोः" इत्येतदपि व्यंजकतयोदाहरन्ति । व्याकरणे तु "वत्सांसाभ्यां कामबले" इति वृत्तिविषये कामपराद्वत्सशब्दान्मत्वर्थीये लच्प्रत्यये वत्सलशब्दो व्युत्पादितः । अन्यैस्तु 'वत्सं लाति-आदत्ते' इति "आतोऽनुपसर्गे कः" इत्युक्तम् । सर्वथा भ्रान्त्यज्ञानादिप्रयोजकस्नेहविशेषो वात्सल्यं । "विश्वं धियैव विरचय्य" इत्यत्र व्यामोहातिशयात् स्वशक्त्यपरिज्ञानेन सरस्तटागमनपादपरिमार्जनादिकं वात्सल्यकार्यमित्युक्तम् । पराशरभट्टपादैरपि "वत्सरो वत्सलो वत्सी" इत्यत्रैवैतादृशस्वभावविशेष उक्तः । "स हि चिरं परिचीयमानेष्वपि शरणागतेषु कस्यापि हेतोस्सद्यः प्रसूतेष्विव वत्सेषु सहुङ्कारास्स्रपयस्संस्नवस्तनवेदनाः किंकर्तव्यताकुलाः धेनव इव सम्भ्राम्यतीति" इति । न च दोषाणामनुकूलतया वेदनीयत्वे तेषां निवर्तनासङ्गतिः । निवर्तनस्य नैतेषां प्रतिकूलं फलं दास्यामीति सङ्कल्परूपत्वात्, ईदृशवात्सल्यदर्शनं स्वदोषदर्शनकृतनिवृत्तिं निवारयदाश्रयण उपयुज्यते । साधनत्वे प्रपत्तेस्तयैव दोषा नश्यन्तीति नार्थो वात्सल्यपर्यालोचनेन । न हि ब्रह्महत्याप्रायश्चित्तद्वादशवार्षिकादिकर्तुर्वात्सल्यं पर्यालोचयितव्यम् ।-इति ।

श्रीशुद्धसत्ववरप्रदगुरवस्तु-"वत्सं लातीति वत्सला, तस्याः भावो वात्सल्यम् । दोषभोग्यत्वमिति यावत् । ननु दोषभोग्यत्वमीश्वरेऽस्तीति चेत्, लोके सर्वेऽपि निर्भीत्या दोषमाचरन्त्विति चेत्, न । 'दोषादर्शित्वं वात्सल्यम्' इति वदतां भवतां पक्षेऽपि ईश्वरस्याज्ञत्वापत्तेः । दोषोपेक्षैव वात्सल्यमिति चेत्, लोके सर्वे दोषमाचरन्तु निर्भीत्येति दोषतौल्यम् । अतस्त्वयापि दासनिष्ठं यत्पूर्वसंचितं पापं तदेवोपेक्ष्यत इति वक्तव्यम् । अस्माकमपि तदेव भोग्यत्वेन स्वीकरोतीति वक्तुं शक्यत्वेन तुल्यमस्मत्पक्षः । धेनुदृष्टान्तेन लोकवेदाधिकरणन्यायेन चानुगृहीतः । तदधिकरणस्य "उत्ताना वै देवगवा भवन्ती"ति विषयवाक्यम् । न हि ईश्वरस्य चेतन-

भोग्यत्वेन स्वीकारः, क्षीरं दत्वा वर्धनम्, पुरत आगतानां शृङ्गाभ्यां पद्भ्यां भयमुत्पाद्य रक्षणं च। एवमीश्वरश्च दोषं भोग्यत्वेन स्वीकृत्य "क्षीरसदृशगुणाः" इत्युक्तप्रकारेण गुणैर्धारणं कारयित्वा "कथंचन-न त्यजेयम्" इति, "अभयं सर्वभूतेभ्यः" इति चोक्तप्रकारेणानुकूलेभ्यः, प्रतिकूलेभ्यश्च रक्षति ।

स्वामित्वं नाम-अस्य वैमुख्यदशायामपि अपरित्यज्य सत्तारक्षणे हेतुःकश्चित्सम्बन्धाविशेषः । स च धनिनस्स्वभावः । अद्वेषमारभ्य कैङ्कर्यपर्यन्तं जायमानानां स्वभावविशेषाणां सर्वेषामुत्पादनमेतत्सम्बन्धविशेषहेतुना ।

सौशील्यं नाम-उभयविभूतियोगेन श्रीमहालक्ष्मीसंश्लेषेण च

---

वत् दोषभोग्यत्वे "पिप्पलं स्वाद्वात्ति अनश्नन्नन्योऽभिचाकशीति" इति श्रुतिविरोधश्शङ्क्यः । तद्भोगस्य स्वतन्त्रेच्छाप्रयुक्तत्वेन कर्मनिबन्धनत्वाभावादनुपपत्तेः । तस्माद्बालपुत्रेण कृतशपनं पिता स्तोत्रत्वेन गृह्णाति, तद्वदीश्वरोऽपि पुरातनदोषान् भोग्यत्वेन स्वीकारोतीति सम्यक् शरणागत्यनन्तरं बुद्धिपूर्वदोषकरणे स्वरूपविरुद्धत्वात्, युवपुत्रकृतापराधं पितेव न सहत इति सुस्थम्" इति ।

**(अनुकूलेभ्यः, प्रतिकूलेभ्यश्चे)** ति—अत्र सुग्रीवविभीषणयोः क्रमेण दृष्टान्तता बोध्या ।

**(स्वामित्वं)** नाम-स्वव्यतिरिक्त वस्तुनस्स्वकीनात्वभिमानः । तत्कार्यपूर्वकमाह—**अस्ये** त्यादिना । **(अद्वेषमारभ्ये)** ति "ईश्वरस्य च सौहार्दम्" इत्यादिकं भाव्यम् ।

**शीलं** नाम-महतो मन्दैस्सह नीरन्ध्रेण संश्लेषस्वभावत्वम् । तस्य सौष्ठवं-

निरंकुशस्येश्वरस्य महत्वं, स्वेषामपकर्षं च दृष्ट्वा "स कुत्रत्योऽहंकः" इति पश्चादगमनार्थं सर्वैस्सहाभ्यन्तरं विना स्वकृतसम्मेलनं, तत्स्वपुरुषार्थं इति स्थितिः, प्रतिपक्षे अपेक्षाशून्येऽपि सम्मेलनं च ।

सौलभ्यं नाम-नेत्रयोरविषयस्य स्वयं नेत्राभ्यां दृष्ट्वाश्रयितुं-योग्यतया सुलभत्वेनावस्थानम् ।

ज्ञानं नाम-अस्य चेतनस्य निवर्तनीयान्यनिष्टानि दातव्यानीष्टानि च साक्षाद्ज्ञातुं हेतुः, स्वव्यतिरिक्तसमस्तपदार्थानेकधा परोक्षयितुं शक्तं ज्ञानम् ।

सौशील्यम् । तच्च महामन्दसंश्लेषायामपि स्वमहत्त्वबुद्धिराहित्यम् । तदुक्तं भगवता "अहं वो बान्धवो जातः" "आत्मानं मानुषं मन्ये रामं दशरथात्मजम्" इति । तदाह-उभयविभूतियोगेने त्यादिना ।

सौलभ्यं तु-लब्धुं सुशकत्वम् । तच्च "न मांसचक्षुरभिवीक्षते तम्" "न चक्षुषा पश्यति कश्चनैनम्" इत्यनीन्द्रियं नित्यमङ्गलविग्रहं सकलमनुजनयनाविषयं कृत्वा नित्यसान्निध्यकारित्वम् । तदाह-नेत्रे ति ।

ज्ञानं नाम-"अजडं स्वात्मसंबोधि नित्यं सर्वावगाहनम् । ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः" इति सर्वदा सर्वविषयप्रकाशकं स्वयम्प्रकाशरूपम् । अनुसंहितं च "युगपदनिशमक्षैस्स्वैस्स्वतो वाक्षकार्ये नियममनियमं वा प्राप्य रङ्गाधिराज । करतलवदशेषं पश्यसि स्वप्रकाशं तदवरणममोघं ज्ञानमाम्नासिपुस्ते ॥२८॥ नयनश्रवणो दृशा शृणोषि ह्यथ ते रङ्गपते महोशितुः । करणैरपि कामकारिणस्ते घटते सार्वपथीनमीक्षणम् ॥ २९ ॥" इति । तदाह-अस्येति ।

शक्तिर्नाम-हेयान्नित्यसंसारिणः उपादेयैर्नित्यसूरिभिस्सहैकपङ्क्तौ स्थापयितुं कारणमघटितघटनासामर्थ्यम् ।

अत्र वात्सल्यादयश्चत्वारः-आश्रयणसौकर्यापादकाः । ज्ञानाद्युभावपि-आश्रितकार्यापादकौ। "सदृशरहितकल्याणगुणवान्" इत्यारभ्य वात्सल्यादीन् चतुरोऽपि आश्रयणहेतुतया श्रीपरांकुशाः उक्तवन्तः । ज्ञानशक्त्योरुभयोःकथनं प्राप्तिपूर्त्योरुपलक्षणम् । कार्यकरणत्वस्य तयोरप्यपेक्षितत्वात् ॥ २२ ॥

---

शक्तिश्च—"जगत्प्रकृतिभावो यस्सा शक्तिःपरिकीर्त्यते" इति जगदुपादनत्वप्रयुक्तमघटितघटनासामर्थ्यम् । अनुसंहिता श्रीरंगराजस्तवे " कार्येऽनन्ते स्त्रतनुमुखतस्त्वामुपादानमाहुस्सा ते शक्तिस्सुकरमितरच्चेति वेलां विलंघ्य। इच्छा यावद्विहरति सदा रङ्गराजानपेक्षा सैवेशानादतिशयकरी सोर्णनाभौ विभाव्य" इति । तदाह—हेयानि ति । अन्येन कर्तुमशक्यस्य घटनायां सामर्थ्यं-अघटितघटनासामर्थ्यं नाम ।

(आश्रयणसौकर्यापादकाः) इति-आश्रयणे-शरणवरणे, सौकर्यस्य-सुखरत्वस्य, आपादकाः-ज्ञापका इत्यर्थः । अत्र "आश्रयणोपयोगित्वं चाक्षुषपूर्वकाश्रयणे निग्रहापादकत्वाशक्यत्वान्यतरबुद्धिनिवर्तनद्वाराश्रयणप्रवृत्त्यौपयिकज्ञानविषयत्वम् । आश्रयणीये ज्ञानशक्त्यादिज्ञानस्यापि नैष्फल्यशंकानिवर्तकतयाश्रयणोपयोगित्वादतिप्रसङ्गवारणाय द्वारेत्यन्तम् । सापराधेन नीचेन वा कृतमाश्रयणं निग्रहापादकं दृष्टमिति वात्सल्यादिविके लक्षणसमन्वयः । सौलभ्यसंग्रहायाशक्यत्वबुद्धिप्रवेश इति बोध्यम्" इति तात्पर्यदीपिकोक्तानिर्वचनं द्रष्टव्यम् । (आश्रितकार्यापादकौ) इति-आश्रितस्य-शरणवरणकर्तुः, कार्यस्य-अनिष्टनिवर्तनादेः,

आपादकाः-उपयोगिनः-आश्रितकार्यापादका इत्यर्थः । "स्वप्रयोजनबुद्धिपूर्वकाकिंचत्कारानपेक्षकार्यकर्तृत्वौपयिकगुणत्वमेव कार्योपयोगित्वम् । विशेष्योपयोगः-ज्ञानशक्त्योः । विशेषणोपयोगः-प्राप्तिपूर्त्योरिति स्वतन्त्रचरमश्लोकव्याख्यानेविशदम्" इत्यादिकमत्रापि द्रष्टव्यम् ।

उक्तार्थे प्रमाणमाह–सदृशे ति । अस्यां गाथायां "निहरिल्पुहळाय्" निस्समाभ्याधिककल्याणगुणवान्' इति वात्सल्यम्, "उलहम्मून्रुडैयाय्" 'लोकत्रयत्रान्' इति स्वामित्वम्, "एन्नै याल्वाने" 'अतिनीचस्य ममापि रक्षकः' इति सौशील्यम्, "निहरिलमरर्मुनिक्कणङ्गल् विरुम्बुं तिरुवेङ्कडत्ताने" 'सदृशरहितानाममराणां मुनिगणानां प्रेमविषयभूत श्रीवेंकटनाथ" इति सौलभ्यं च शब्दादेव सिद्धम् । अन्ये ज्ञानादयो गुणा अर्थसिद्धा इति भावः ।

प्राप्ति र्नाम-निरुपाधिकशेषित्वम् । तच्च सर्वशेषभूतसमस्तवस्त्वाहितातिशयाश्रयत्वम् । "परगतातिशयाधनेच्छया उपादेयत्वमेव यस्य स्वरूपं स शेषः, परश्शेषी" इति हि शेषशेषित्वलक्षणस्योक्तत्वात् । एतेन-आश्रितकार्यकरणं शरण्यस्य स्वप्रयोजनमित्यवगम्यमानत्वात्, आश्रितस्य स्वापेक्षितप्रदाने प्राप्तिहानिशंका निवर्त्यते । अत इदमुक्तमाचार्यैः "उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी । उपायोपेयत्वे तादिह तव तत्त्वं न तु गुणावतस्त्वां श्रीरङ्गेशय शरणमव्याजमभजम्" इति । तस्मात्, शेषित्वं भगवत उपायोपेययोस्स्वार्थत्वमवगयति ।

ननु–पूर्वत्र वात्सल्यादिगुणचतुष्टये स्वामित्वकथनेन प्राप्तेरुक्तत्वात्, शेषित्वस्य स्वामित्वैकार्थत्वाच्च किमनेन पुनरनुसन्धानेनेति । उच्यते । स्वामित्वं नाम-स्वव्यातिरिक्तस्य समस्तस्य वस्तुनस्स्वकीयत्वेनाभिमान इति तत्रैवोक्तम् । शेषित्वं तु-तदाहितातिशयाश्रितत्वमिति भिन्नार्थम् । उभयोः प्राप्तिवचनसामान्येऽपि-

स्वातिशयार्थस्वशेषवस्तुस्वीकाररूपमर्थविशेषं शरण्यस्यानुसन्धातुमत्र शेषित्वोक्तिः। भाष्यकारैरपि स्वामित्वशेषित्वयोः पार्थक्यमभिधीयते - "अशेषचिदचिद्वस्तुशेषिभूत-अखिलजगत्स्वामिन् अस्मत्स्वामिन्" इति ।

अत्रास्मदाचार्याः—"तदेवं नवविधास्वपि प्राप्तिषु स्वस्वामिभावरूपा प्राप्तिः प्रधानतमा। यद्वस्तुसत्तादिलाभालाभावेव यल्लाभालाभौं, तौ स्वस्वामिनौ । केचित्तु शेषिचेतनत्वमेव स्वामित्वमिति वदन्ति। तन्न, किंचित्कारप्रतिसम्बन्धित्वस्यैव शेषित्वरूपतया तदभावेऽपि स्वस्वामिभावोपलब्धेः। तदुक्तं महाकविना "न किंचदपि कुर्वाणस्सौख्यैर्दुःखान्व्यपोहति । तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः" इति। रहस्यत्रयमीमांसाभाष्यकृतस्तु-"यथेष्टविनियोगहेतुभूतसम्बन्धविशेषात्मकशक्तिविशेषरूपं स्वामित्वम्" इति शेषित्वादन्यदेव स्वामित्वं व्याचख्युः" इति सिद्धान्ततूलिकायां प्राहुः ।

पूर्तिर्नाम-नारायणत्वप्रयुक्तसमस्तगुणविभूतिविशिष्टत्वम्। तदुच्यते—"यानि मूर्न्यमूर्तानि यान्यत्रान्यत्र वा क्वचित्। सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः" इति। श्रुतिश्च "यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः" इति । एवमवाप्तसमस्तकामत्वेनस्वापेक्षितार्थानां शरण्याधीनत्वावगमात्, स्वस्यानवाप्तकामत्वनिमित्तापूर्त्तिभयमत्र निवर्त्यते । तदुच्यते-"त्वयि-प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते। समाश्रितादब्रह्मतरोरनन्तान्निस्संशयःपक्वफलप्रपातः" इति ।

स्वतन्त्रचरमश्लोकव्याख्याने दयायाः कार्योपयोगित्वेनानुगृहीतत्वात्, अत्रापि सानुसन्धेया। इयमेव प्रधानभूता भगवच्छरण्यत्वापादिका। तदुच्यते "सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च। सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे" "स तं निपातितं भूमौ शरण्यश्शरणागतम्। वधार्हमपि काकुत्स्थः कृपया पर्यपालयत्"इति। उक्तंच शरण्योक्तितया भाष्यकारैः "केवलं मदीययैव दयये" ति ।

केचित्-सर्वज्ञत्वम् सर्वशक्तित्वम्, परमकारुणिकत्वम्, परमोदारत्वम्, आश्रितवत्सलत्वम्, अशरण्यशरण्यत्वम्, अनालोचितविशेषाशेषलोकशरण्यत्वम्, स्वामित्वम्, श्रियःपतित्वम्, नारायणत्वमिति दशगुणानत्रानुसन्धेयतयाहुः । एते गुणाः विश्वासप्रतिबन्धकभूतमपराधभूयस्त्वम्, उपायफल्गुत्वम्, फलगौरवमिति विरोधित्रयं निरस्यन्तीति वदन्ति । अत्राशरण्यशरण्यत्वानालोचितविशेषाशेषलोकशरण्यत्वरूपगुणद्वयं-शीलसौलभ्यस्थानपतितम् । परमोदारत्वंच-शेषित्वस्थानपतितम् । "स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च" इति स्वप्रयोजनत्ववचनात्, "उदारास्सर्व एवैते" इति स्वेनैवोक्तत्वाच्च । तत्रापि केचित्, इतरगुणजातं सर्वम् तदधीनामिति श्रियःपतित्वनारायणत्वरूपं गुणद्वयमेव विरोधित्रयनिरासार्थमनुसन्दधते।

वेदान्ताचार्यास्तु-'वात्सल्यस्वामित्वसौशील्यसौलभ्यसर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वपरमकारुणिकत्वकृतज्ञत्वस्थिरत्वपरिपूर्णत्वपरमोदारत्वादिगुणगणमनुसन्धेयम्' इत्याहुः । तेषां विनियोगप्रकारश्च श्रीमति रहस्यत्रयसारे तैरेवोक्तः ।

ननु नारायणपदस्य स्वरूपरूपगुणविभवादिसमस्तार्थप्रकाशकत्वेऽपि कथं कतिपयगुणानुसन्धानं क्रियत इति चेत् । उच्यते-वक्ष्यमाणशरणपदार्थोपायत्वोपयुक्तकतिपयगुणविशेषमात्रमपेक्षितामिति स्वतः प्राप्तसमस्तार्थवाचकत्वं शरणशब्दवैयर्थ्यपरिहाराय गोबलीवर्दन्यायेन सङ्कोचयितुं युक्तम् । तथा हि 'गामानय, बलीवर्दं च' इत्युक्ते सामान्यवाचिना गोशब्देन बलीवर्दग्रहणे सत्यपि, बलीवर्दपदप्रयोगवैयर्थ्यपरिहाराय गोशब्दार्थसंकोचो गोबलीवर्दन्यायः । अथवा, अयं न्यायस्सामान्यविशेषरूपो वा । तथा हि विशेषवाचिशब्दसन्निधौ सामान्यवाचिशब्दस्य विशेषानुरूपसङ्कोचस्सामान्यविशेषन्यायः । सोऽयमत्रोपायविशेषवाचिशरणशब्दसान्निधौ तदनुरूपेण सामान्यवाचिनारायणशब्दार्थसङ्कोचेन सिद्धः । एवमनुसंहितं द्वयार्थविवरणरूपे गद्ये भाष्यकारैः-एतत्पदार्थविवरणे-"अखिलहेयप्रत्यनीक" इत्यादिना "निखिलजगदुदयविभवलयलील" इत्यन्तेन सामान्यतो नारायणपदार्थमुक्त्वा, ततः "सत्यकाम" इत्यादिना "वैकुण्ठनाथ" इत्यन्तेन प्राप्यगुणानभिधाय, तदनंतरं "अ-

पारकारुण्य" इत्यादिना "अशरण्यशरण्य" इत्यन्तेनोपायोपयोगिगुणजातस्योक्तत्वात्। अस्तुनाम गोवलीवर्दन्यायेनात्रापेक्षितगुणजातमात्रानुसन्धानम्, तर्हि भाष्यकारानुसंहितकृत्स्नगुणानुसन्धानं कथं न क्रियते, कथं वानुक्तसौलभ्यानुसन्धानमिति चेत्। उच्यते-न तत्र सौलभ्यमनुक्तम्। सौन्दर्यपदेन 'अनालोचित' इत्यादिपदेन चोक्तत्वात्। प्रणतार्तिहरत्वमाश्रितवात्सल्यकार्यतयोक्तम्। निखिलजगदाधारत्वं सकलेतरविलक्षणत्वमर्थिकल्पकत्वमापत्सखत्वमशरण्यशरण्यत्व चं शेषित्वायत्तम्। श्रियःपतित्वं नारायणत्वं च निखिलगुणनिदानभूतमित्यनुसन्धानसौकर्याय कतिपयान्गुणानाचार्यास्संग्रहेणानुसन्दधतो "त्वद्ज्ञानशक्तिकरुणासु सतीषु नेह पापं पराक्रमितुमर्हति मामकीनम्" इति कार्योपयोगितया ज्ञानशक्तिकरुणामात्रं शेषिगुणत्वेन श्रीवत्साङ्काचार्यैरुक्तं च। "श्रीमान्-सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्यउपादत्ते" इति श्रियःपतित्वनारायणत्व एव शरण्यत्वहेतुतया श्रीपराशरभट्टमिश्रैरप्यभिहिते। तस्मात्सुग्रहत्वाय संग्रहेणानुसन्धानं युक्तम्।

परन्दरहस्ये श्रीकृष्णपादाः-"ननु भगवत्स्वरूपरूपगुणविभूतीनामव्यवहितवाचकत्वे सत्ययं नारायणशब्दः रूपादिकं विहाय गुणजातावपि गुणैकदेशानां वाचको भवतीत्यत्र निर्णायकप्रमाणं किमिति चेन्न। एतेषां सर्वेषां वाचकत्वेऽपि "प्रपद्ये" इत्याश्रयणप्रकरणत्वात्, गोवलीवर्दन्यायप्रकारेणाश्रयणैकान्ता गुणविशेषा एवोच्यन्ते। रत्नमंजूषिकायां लोके विद्यमानानां सर्वेषामाभरणानां स्थापनेऽपि स्वेषां स्वेषां तत्तत्कालेषु अभिमतान्याभरणानि आदाय प्रसाधयन्ति। तथास्य सर्वार्थानां वाचकत्वेऽपि तत्तत्कालेऽपेक्षिता अर्थविशेषा विनियुज्यन्ते। न तु सर्वे अर्थाः। तस्मात्सर्वे अर्थाः बोधनीया इति नियमो नास्ति। अन्यथा ईश्वरस्योपायोपेयस्वरूपविभागो न स्यात्। समस्तकल्याणगुणानामाश्रयत्वेऽपि उपायत्वैकान्तस्वभावविशेषा एव तस्मिन्ननुसन्धीयन्ते। न त्वेकाश्रयत्वमात्रेण भोगैकान्तगुणाः। वाच्यभूते तस्मिन्नेवमनुसन्धाने कृते वाचकभूतोऽप्ययं शब्दस्तथैव भवति। गोवलीवर्दन्यायो नाम-प्रयोजकवृद्धेन प्रयोज्यवृद्धं प्रति "गाव आनीयन्ताम्" इत्युक्ते ता-

(२३) एतेषां गुणानामत्र विनियोगः को वेत्यत आह-अपराधमित्यारभ्य ।

मू॥ कुत्तंकण्डु वेरुवामैक्कु वात्सल्यम् । कार्यं शेय्युमेन्तु तुणिहैक्कु स्वामित्वम् । स्वामित्वं कण्डु अहलामैक्कु सौशील्यम् । कण्डु पत्तुहैक्कु सौलभ्यम् । विरोधियै पोक्कि तन्नै कोडुक्कुहैक्कु ज्ञानशक्तिहल् ॥ २३ ॥

छा॥ अपराधं दृष्ट्वाभयाय वात्सल्यम् । कार्यं कुर्यादिति दार्ढ्याय स्वामित्वम् । स्वामित्वं दृष्ट्वा दूरमगमनाय सौशील्यम् । दृष्ट्वाश्रयणाय सौलभ्यम् । विरोधिनिवर्त्य स्वात्मानं दातुमुपयुक्ते ज्ञानशक्ती

व्या॥ आश्रयणोन्मुखचेतनस्य स्वदोषदर्शनजभयनिवृत्तेर्हेतुः-दोषभोग्यत्वेन स्वीकाररूपं वात्सल्यम् । 'अस्मत्कार्यं कुर्याद्वा, न वा' इति शङ्कामकृत्वा 'कार्यं कुर्यात्' इति निश्चेतुं हेतुः-लाभालाभौ स्वस्यैवेत्यवस्थानरूपं स्वामित्वम् । उभयविभूतेरपि नायकत्वेन स्थितिरूपैश्वर्यस्य प्रकाशकं स्वामित्वं दृष्ट्वा स्वनिकर्षा-

---

दृशगोत्वजातेर्वृषभेऽपि सत्वात्, वृषभान् गांश्चानयेत् । तदा "बलीवर्दास्तिष्ठन्तु" इति विशेषविधानेन वृषभान् विहाय गामानयनम् । तथायमपि सर्वेषां वाचकत्वेऽपीदानीं प्रकरणबलेनैतद्गुणविशेषाणामेव वाचको भवति" इति प्राहुः । एतत्सर्वमभिप्रेत्यैव हि श्रीभट्टपराशरमिश्रैः "समुचितगुणजातम्" इत्यनुगृहीतम् ॥ २२॥

(विनियोगः)— आश्रयणसौकर्यापादकत्वाश्रितकार्यापादकत्वरूपाविनियोगोऽभिमेतः ॥ २३ ॥

नुसन्धानेन दूरेऽगमनस्य हेतुः-नीचैस्सहाभ्यन्तररहितसम्मेलनस्वभावरूपं सौशील्यम् । 'अतीन्द्रियः' इति पश्चादगत्वा नेत्राभ्यां दृष्ट्वाश्रयणस्य हेतुः-स्वस्य रूपस्य चक्षुर्विषयकरणरूपं सौलभ्यम् । "सर्वपापेभ्यो मोक्षयिष्यामि" इत्युक्तप्रकारेण प्राप्यविरोधिनं दूरीकृत्य स्वमात्मानमुपकर्तुं हेतू—प्राप्तुरस्य पूर्वस्थितिं पश्चाद्गमनं च ज्ञात्वा ज्ञातप्रकारेण कर्तुञ्चैकान्ते ज्ञानशक्तीत्यर्थः ॥२३॥

(२४) सौकर्यापादकगुणचतुष्टये च सौलभ्यस्य प्रधानत्वात्, तादृशसौलभ्यकाष्ठमाह—अत्रोक्तसौलभ्यस्येति ।

मू॥ इंगुच्चोल्लुहिर सौलभ्यत्तुक्कु एल्लैनिलमर्चावतारम् ॥२४॥

छा॥अत्रोक्तसौलभ्यस्य सीमाभूमिरर्चावतारः ॥२४॥

व्या॥ अस्मिन्पदे आश्रयणोपयोगितयोक्तस्य सौलभ्यस्य सीमाभूमिः आश्रिताभिमतं किंचिद्वस्तु श्रीविग्रहत्वेन स्वीकृत्य तत्र सदा सान्निध्यं कुर्वन्नर्चावतार इत्यर्थः ॥२४॥

---

(सौलभ्यस्य प्रधानत्वात्) इति—चाक्षुषपूर्वकाश्रयणस्यावश्यकत्वात्सौलभ्यस्य प्रधानत्वमिति भावः ।

(अर्चावतारः) इति—"आश्रिता यत्किंचिद्द्रव्यं स्वस्य विग्रहत्वेन कल्पयन्ति चेत्तदेव स्वस्य विग्रहत्वेनाङ्गीकरोति" इत्युक्तप्रकारेणाश्रितानां चेतनानामभिमतेषु स्वर्णरजतशिलापर्यन्तेषु केषुचिद्द्रव्येषु, अयोध्यामथुरादिदेशनियमम्, 'एकादशसहस्रसंवत्सराश्शतसंवत्सराः' इत्यादिकालानियमम्, दशरथवसुदेवाद्यधिकारिनियमं कृत्वा सन्निधिं कुर्वद्भ्यो रामकृष्णादिविभवविशेषेभ्यो वैलक्षण्येन "औ

मनिकेतनेष्वपि कुटीकुंजेषु" इत्युक्तप्रकारेण देशनियमं विनार्चकस्यापेक्षाकालव्यतिरिक्तकालनियमं विना सकलरुचिमदर्थत्वात्; अधिकारिनियमं विना सन्निधिं कृत्वा, "सर्वसहिष्णुः" इत्युक्तप्रकारेण सर्वसहिष्णुत्वात्, तत्कृतापराधान् सर्वान्पश्यतः "अर्चकपराधीनाखिलात्मस्थितिः" इत्युक्तप्रकारेणार्चकपरतन्त्रस्नानासनशयनादिसमस्तव्यापारविशिष्टस्य स्थितिः—अर्चावतारो नाम। "अर्चा पूजाप्रतिमयोः" इत्युक्तत्वात्, अर्चाशब्दः—प्रतिमावाची।

अत्र "सेन्द्रादिभ्यःप्रतिमासु दृश्यो नवशिशतप्रशिरोऽस्मैहशातः। विष्ण्वाद्याख्यैःपंचधा पंचवेरैरर्चारूपो रत्नगर्भालयेभ्यः। व्यक्तास्सिद्धं दिव्यमार्षेयमर्त्यैरित्येतत्सौलभ्यावतारस्य भेदम्" इत्यादिशतपथब्राह्मणज्ञातसूक्तवाक्यं योजनीयम्। "अर्चावतारस्सर्वेषां बान्धवो भक्तवत्सलः। स्वत्वमात्मनि संजातं स्वामित्वं मयि च स्थितम्। इति व्यवस्थिते चापि ममायं केशवस्त्विति। ममायं राम इत्येवं देवः परशुलांछनः। ममायं वामनो नाम नारसिंहाकृतिःप्रभुः। वराहवेषो भगवान् नरो नारायणस्तथा। तथा कृष्णश्च रामश्च ममायमिति निर्दिशेत्। मद्ग्रामवासी भगवान् ममैवेति च धीर्मतेत्। चिन्तयेच्च जगन्नाथं स्वामिनं परमार्थतः। अशक्तमस्वतन्त्रं चरक्ष्यं चापि जनार्दनम्। तदिच्छया महातेजा भुंक्ते वै भक्तवत्सलः। स्नानं पानं तथा यात्रां कुरुते वै जगत्पतिः। स्वतन्त्रस्स जगन्नाथोऽप्यस्वतन्त्रो यथा तथा। सर्वशक्तिर्जगद्धाताप्यशक्त इव चेष्टते। अपराधानभिज्ञस्सन्सदैव कुरुते दयाम्। अर्चावताराविषये मयाप्युद्देश्यतस्तथा। उक्ता गुणा न शक्यास्ते वक्तुं वर्षशतैरपि। ऋते च मत्प्रसादाद्वा स्वतो ज्ञानागमेन वा। एवं पंचप्रकारोऽहमात्मनां पततामधः। पूर्वस्मादपि पूर्वस्माज्ज्यायोनवोत्तरोत्तरैः। सौलभ्यतो जगत्स्वामी सुलभो ह्युत्तरोत्तरः। सर्वातिशायि षाड्गुण्यं संस्थितं मन्त्रविम्बयोः। मन्त्रे वाच्यात्मना नित्यं विम्बे तु कृपया स्थितम्" "सुरूपां प्रतिमां विष्णोःप्रसन्नवदनेक्षणाम्। कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः॥—तामर्चयेत्तांप्रणमेत्तां भजेत्तां विचिन्तयेत्। विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्" इत्यादिवचनमिह भाव्यम्।

(२५) एतदुपपादयति—अर्चिश्चेत्यादिना ।

मू॥ इदुतान्—परव्यूहविभवङ्गल्पोलन्त्रिक्के, कण्णाले काण-लाम्बडि यिरुक्कम् ॥ २५ ॥

छा॥ अयं च-परव्यूहविभववन्न भवति, नेत्राभ्यां द्रष्टुं योग्यः॥

व्या॥ अयमर्चावतारः—देशविप्रकृष्टतया नेत्रयोरविषयभूत-परव्यूहवन्न भवति, कालविप्रकृष्टतया नेत्राविषयाविभववन्न भवति, आसन्नोऽनवरतं सान्निध्यं कुर्वन् सर्वेषां नेत्रेण द्रष्टुं योग्यतया वर्तत इत्यर्थः ॥ २५ ॥

---

अनेन—मुमुक्षुजनसमाश्रयणोपयोगित्वेऽर्चावतारस्य शास्त्रप्रतिपादनात्तस्याप्रतिबुद्धाधिकारत्वं वदतां नास्तिकानां मतं निरस्तम् । नास्तिकमतनिराकरणप्रकारः-वेदमीमांसादिषु श्रीरङ्गसूरिप्रभृतिभिःप्रपंचित इति नात्र लिख्यते ॥ २४ ॥

(परव्यूहे)ति—अत्रान्तर्यामित्वमप्युपलक्षणम् । पररूपं नाम-नित्याकारयुक्तम्, अनन्तगरुडादिनित्यैः परांकुशपरकालशुकवामदेवादिमुक्तैश्च सेव्यम्, परमपदनिलयम्, दिव्यरूपम् । परमपदं च त्रिगुणव्यतिरिक्तत्वे सति सत्वशून्यत्वस्वयंप्रकाशलक्षणलक्षितम् । "आदित्यवर्णं तमसःपरस्तात्" "ते ह नाकं महिमनस्सचन्ते" "योऽस्याध्यक्षःपरमे व्योमन्" "क्षयन्तमस्य रजसःपराके" इत्यादिश्रुतिप्रमाणसिद्धं च । एवं च "तद्विष्णोःपरमं पदं सदा पश्यन्ति सूरयः" इत्यत्रापि व्यतिरेकनिर्देशबलात् स्वरूपाद्भेदसिद्धिः । पदशब्दस्वारस्यात्, सदा दृश्यबलाच्च सदापश्यदनेकद्रष्टव्यपुरुषविशिष्टस्थानसिद्धिः । "यदाग्नेयोऽष्टाकपालः" इत्यादिवदगत्या विशिष्टविधिराश्रीयते । तच्च स्थानं केनचित्प्रदेशानन्त्येन विशिष्टं सत्त्वानवच्छिन्नप्रमाणानन्त्यतमःपरत्वयोश्श्रुतयोरवर्जनीयत्वात् । आनन्त्यमात्रसाम्येऽपि त्रिगुणादपीयमधिका परा

न्यूनाधिकभाववचनात् । आनन्त्येष्वेवंविधतारतम्यं पक्षमासादिषु द्रष्टव्यम् । "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति पादत्रिपाद्व्यपदेशश्च न चतुर्भागाभिप्रायः । "बुध्यर्थः पादवत्" इति सूत्रितत्वात् । अचेतनंचेदम् । जीवेश्वरविलक्षणत्वात् । स्वयंप्रकाशं च । "तत्रानन्दमया लोका भोगाश्चानन्दलक्षणाः" इत्यादिप्रमाणसिद्धाः । तथा 'किमात्मिकैषा भगवतो व्यक्तिरि' ति प्रश्ने, 'यदात्मको भगवान्' इति सामान्य उत्तरे दत्ते, पुनः 'किमात्मको भगवान्' इति प्रश्ने 'ज्ञानात्मकः' इत्युत्तरे उक्तस्य दिव्यमंगलविग्रहस्य ज्ञानात्मकत्वात्, तद्द्रव्यात्मिकाया नित्यविभूतेर्ज्ञानात्मकत्वमुचितम् । ज्ञानात्मकत्वंचेत्र स्वयंप्रकाशत्वमेव । ज्ञानत्वेऽप्यात्मवदस्या निर्विषयत्वकर्तृत्वे युक्ते परस्मै भासमानत्वं च धर्मभूतज्ञानवत्पराक्त्वमुपपन्नम् । सुषुप्तिकाले धर्मभूतज्ञानवत् अन्धकारे सा न प्रकाशते । तदा तु ज्ञानविषयतयैव तत्सिद्धिः । मुक्तानामतिवैभवे सत्यपि सा निरपेक्षा आत्मस्वरूपवत् । इयं च पंचोपनिषत्प्रतिपाद्यपंचभूतेन्द्रियवन्नित्यमुक्तेश्वराणामिच्छानुरूपप्रमाणविषयरूपेणावतिष्ठते । त्रिगुणवदियं च चतुर्विंशतितत्त्वात्मिकेति केचिदाचार्याः । तथापि तेषां न प्रकृतिविकृतिभावः । दिव्यमङ्गलविग्रहादेर्नित्यत्वश्रवणात् । तत्रशरीरादीनां संस्थानानि प्रायशःप्राकृततुल्यानि । प्राणयादिश्रवणात्–इन्द्रियसिद्धिः । "इन्द्रियच्छिद्रविधुरा द्योतमानाश्च नित्यशः" इति । "अशरीरं वा व सन्तम्" इत्यादिकमुत्सर्गापवादन्यायेन कर्मकृतेन्द्रियादिप्रतिषेधपरमेव । एवमन्यान्यपि द्रष्टव्यानि । एवंविधवैभवयुक्ते परमपदे भगवद्रूपमेवमनुसन्धेयम्–"सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणम् कुंचयित्वा जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय । पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शंखचक्रे देवीभूषादिजुष्टो वितरतु भवतां शर्म वैकुण्ठनाथः" इति । अयं च-ज्ञानशक्तिबलैश्वर्यवीर्यतेजःपरिपूर्णो नित्योदितशान्तोदितादिभेदवान् ।

व्यूहो नाम–वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपेण जायमानो विभागविशेषः। चतुर्णां चैषां कृतादियुगभेदेन श्वेतरक्तपीतकृष्णवर्णाः परिहृत्य भवन्ति । अत्र पररूपे व्यूहवासुदेवे च षाड्गुण्यप्रकाशसाम्यात्, त्रिव्यूहपक्षोऽपि क्वचित्क्वचिदभिधीय-

ते। संकर्षणादित्रिपु व्यूहेषु द्वौ द्वौ गुणावभिव्यज्येते। तत्र संकर्षणः-ज्ञानबलयुक्तो जीवतत्त्वमधिष्ठाय तत्प्रधानाद्विविच्य प्रद्युम्नावस्थावान् शास्त्रप्रवर्तनं जगत्संहारं च करोति। प्रद्युम्नः-ऐश्वर्यवीर्यसहितो मनस्तत्त्वमधिष्ठाय तत्प्रधानाद्विविच्य, धर्मोपदेशं शुद्धसर्गसृष्टिं च करोति। अनिरुद्धस्तु-शक्तितेजस्सहितो रक्षणतत्त्वज्ञानप्रदानादिकं करोति। तदुक्तं भगवच्छास्त्रे "मम प्रकारः पंचेति प्राहुर्वेदान्तपारगाः। परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्। अर्चावतारश्च तथा दयालुः पुरुषाकृतिः। इत्येवं पंचधा प्राहुर्मां वेदान्तविदो जनाः" "तत्र ज्ञानबलद्वन्द्वाद्रूपं सांकर्षणं हरेः। भगवानच्युतोऽपीत्थं षड्गुणेन समेधितः। बलज्ञानौ गुणौ तस्य स्फुटौ कार्यवशान्मुने। सोऽयं समस्तजीवानामधिष्ठातृतया स्थितः। संकर्षणस्तु देवेशो जगत्स्रष्टुमनास्ततः। जीवतत्त्वमधिष्ठाय प्रकृतेस्तु विविच्य तत्। विवेकानन्तरं देवः प्रद्युम्नत्वमवाप सः। सोऽयं प्रद्युम्नामाभूत्तदेकान्तवपुर्धरः। शास्त्रप्रवर्तनं चापि संहारश्चैव देहिनाम्। बलेन हरतीदं स गुणेन निखिलं मुने। ज्ञानेन तनुते शास्त्रं सर्वसिद्धान्तगोचरम्। वेदशास्त्रमिति ख्यातं पांचरात्रं विशेषतः। ऐश्वर्यवीर्यसम्भेदाद्रूपं प्राद्युम्नमुच्यते। पूर्णषड्गुण एवायमच्युतोऽपि महामुने। गुणावैश्वर्यवीर्याख्यौ स्फुटौ तस्य विशेषतः। मनसोऽयमधिष्ठाता मनोमय इतीरितः। ऐश्वर्येण गुणेनासौ सृजते तच्चराचरम्। वीर्येण सर्वधर्माणि प्रवर्तयति सर्वशः। मनूनां सर्गमकरोन्मुखबाहूरुपादतः। चतुर्णां ब्राह्मणादीनां सर्गद्वारं जगत्पतिः। द्विजयुग्मं क्षत्रयुग्मं वैश्ययुग्मं तथैव च। मिथुनं च चतुर्थस्य एतन्मनुचतुष्टयम्। मनुभ्यो मानवशतं स्त्रीपुम्मिथुनतो भवेत्। एकैकं वर्णभेदेन तेभ्यो मानवमानवाः। सहसा सम्बभूवुश्च स्त्रीपुम्मिथुनतस्तथा। मनुष्याश्च ततस्तेभ्यः प्रादुष्युर्वीतमत्सराः। एते हि शुद्धसत्वस्था देहान्तं नान्ययाजिनः। निराशाः कर्मकरणान्मामेव प्राप्नुवन्ति ते। त्रय्यन्तेषु च निष्णाता द्वादशाध्यात्मचिन्तकाः। व्यूहानुवृत्तिं सततं कुर्वते ते जगत्पतेः। तृतीयेन जगद्धात्रा निर्मिता मनसा स्वयम्। गुणप्रधानयोगे च निष्ठिताः पुरुषर्षभ। इत्येष शुद्धसर्गोऽयं गणेश तव कीर्तितः। शक्तितेजस्समुत्कर्षादनिरुद्धतनुर्हरेः। पुरुषोऽपि महा-

ध्यक्षः पूर्णषड्गुण उच्यते। शक्तितेजोगुणौ तस्य स्फुटौ कार्यवशान्मुने। शक्त्या जगदिदं सर्वमनन्ताण्डनिरन्तरम्। बिभर्ति पाति च हरिर्मणिसानुरिवाणुकम्। तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने। आद्यदादिद्विपरार्धान्तं कालसर्गमथाकरोत्। तुरीयोऽयं जगन्नाथो ब्रह्माणमसृजत्पुनः। मुखबाहूरुपाज्जातो ब्रह्मणः परमेष्ठिनः। चतुर्विधो भूतसर्गस्तेन सृष्टस्स्वयम्भुवा। ब्राह्मणाद्यास्तथा वर्णा रजःप्राचुर्यतोऽभवन्। त्रयीमार्गेषु निष्णाताः फलवादे रमन्ति ते। देवादीनेव मन्वाना न च मां मेनिरे स्वतः। तमःप्रायास्त्विमे केचिन्मम निन्दां प्रकुर्वते। आराध्यं च नियन्तारं न जानन्तः परस्परम्। सल्लापं कुर्वते व्यग्रवेदवादेषु निष्ठिताः। मां न जानन्ति मोहेन मयि भक्तिपराङ्मुखाः। स्वर्गादिषु रमन्त्येते अवसाने पतन्ति ते। कामात्मानो महाभाग जरामरणयोगिनः। प्लवन्त्येते द्विजा मोहात्ते हि संसारवर्त्मनि। इत्येष मिश्रसर्गस्तु गणेश तव कीर्तितः" इति। एतेषु चतुर्षु व्यूहरूपेषु प्रत्येकं त्रीणि त्रीणि केशवादिव्यूहान्तराणि जायन्ते। एतानि च द्वादशादित्यादीनां मार्गशीर्षादिद्वादशमासेषु द्वादशानामधिदेवताः। ऊर्ध्वपुण्ड्रेषु तेषामेव स्थानं विधीयते। तथोक्तम् नारदेन "ललाटे केशवायेति नाम्ना कुर्यात्सलक्षणम्। नमो नारायणायेति कुक्षौ कुर्याद्विचक्षणः। माधवं वक्षसि जपेद्गोविन्दं कण्ठकूबरे। विष्णुं च दक्षिणे पार्श्वे बाहौ च मधुसूदनम्। त्रिविक्रमं जपेन्नित्यं पार्श्वे कण्ठस्य दक्षिणे। वामनं वामपार्श्वे तु श्रीधरं वामपार्श्वके। कण्ठोत्तरे हृषीकेशं पद्मनाभं तु पृष्ठतः। कण्ठस्य पश्चिमे नित्यं जपेद्दामोदरं तथा" इति। ललाटादिषु केशवादिमन्त्रोच्चारणपूर्वकोर्ध्वपुण्ड्रविधानात् ललाटादीनां केशवादिस्थानत्वमवगम्यत एव। एवंविधपरव्यूहाश्रयणं देशविप्रकर्षम्।

विभवः—"विभवोऽपि तथानन्तो द्विधैव परिकीर्त्यते। गौणमुख्यविभागेन शास्त्रेषु च हरेर्मुने" "प्रादुर्भावो द्विधा प्रोक्तो गौणमुख्यविभेदतः" इत्युक्तप्रकारेण परिगणनाशक्योऽनन्तः, गौणमुख्यभेदेन द्विविधः, इतरसजातीयत्वेनाविर्भावः। अत्र गौणः-अमुख्यः। मुख्यः-श्रेष्ठः। गौणः-आवेशावतारः। मुख्यः-साक्षादव-

तारः । आवेशश्च-स्वरूपावेशः, शक्त्यावेशः, इति द्विविधः । तत्र स्वरूपावेशः-स्वेन रूपेण सहावेशः । स च परशुरामादीनां चेतनानां शरीरेषु स्वासाधारणविग्रहेण सहावेशः । शक्त्यावेशः-कार्यकाले विधिशिवादिचेतनेषु शक्तिमात्रेण स्फुरणम् । तत्र गौणाः-"अनर्च्यानपि वक्ष्यामि प्रादुर्भावान्यथाक्रमम् । चतुर्मुखस्तु भगवान् सृष्टिकार्ये नियोजितः । शङ्कराख्यो महारुद्रस्संहारे विनियोजितः । मोहनाख्यस्तथा बुद्धो व्यासश्चैव महानृषिः । वेदानां व्यसने तत्र देवेन विनियोजितः । अर्जुनो धन्विनां श्रेष्ठो जामदग्न्यो महानृषिः । वसूनां पावकश्चापि वित्तेशश्च तथैव च । एवमाद्यैश्च सेनेश प्रादुर्भावैरधिष्ठिताः । जीवात्मानस्सर्व एते नोपास्या वैष्णवैस्सदा । आविष्टमात्रास्तेसर्वे कार्यार्थममितद्युते । अनर्च्यास्सर्व एवैते विरुद्धत्वान्महामते । अहंकृतियुताश्चेमे जीवमिश्रा ह्यधिष्ठिताः" "ब्रह्मरुद्रार्जुनव्यासस्त्रस्त्रकरभार्गवाः । ककुत्स्थात्रेयकपिलबुद्धाद्या ये सहस्रशः । शक्त्यावेशावतारास्तु विष्णोस्तत्कालविग्रहाः । अनुपास्या मुमुक्षुणां यथेन्द्राग्न्यादिदेवताः" इत्युक्तरीत्या विधिशिवपावकव्यासादयो मुमुक्षुभिरनुपास्याः । मुख्यास्तु-"प्रादुर्भावास्तु मुख्या ये मदंशत्वाद्विशेषतः । अजहत्स्वभावविभवा दिव्याप्रकृतविग्रहाः । दीपाद्दीपा इवोत्पन्ना जगतो रक्षणाय ते । अर्च्या एव हि सेनेश संसृत्युत्तरणाय ते । मुख्या उपास्या सेनेश अनर्च्यानितरान्विदुः" इत्युक्तप्रकारेण मत्स्यादयो मुमुक्षुभिरुपास्या इति विवेकः । एतत्स्माश्रयणं चास्मदादीनां कालविप्रकर्षादनुपपन्नम् ।

अन्तर्यामित्वं-"यमात्मानमन्तरो यमयति" "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" "शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः" इत्यादिषूक्तप्रकारेण चेतनानामन्तःप्रविश्य सकलप्रवृत्तीनां नियन्तृत्वम् । सर्गनरकप्रवेशादिसर्वावस्थास्वपि सकलचेतनानां सहायभूतस्य तांस्त्यक्तुमसमर्थस्य स्थितिः, शुभाश्रयेण विग्रहेण सहितस्य तेषां ध्येयत्वार्थं तान् रक्षितुं च बन्धुभूतस्य हृदयकमले स्थितिश्च । एतदाश्रयणमस्माकं करणविप्रकर्षत्वाद्दुष्करम् ।

एतत्सर्वमभिप्रेत्यैव श्रीवचनभूषणे लोकाचार्यैरनुगृहीतम् "भूगतजलवत्-अन्त-

(२६.) एते सर्वे गुणा अर्चावतारे द्रष्टुं योग्याः किमित्यत आह–एतत्सर्वमित्यादिना ।

मू॥ इवै एल्लां नमक्कु नम्पेरुमाल्पक्कलिले काणलाम् ॥२६॥

छा॥ एतत्सर्वमस्माकमस्मत्स्वामिसमीपे द्रष्टव्यम् ॥२६॥

व्या॥ सौकर्यापादकत्वेन कार्यपादकत्वेन चोक्ता एते सर्वे गुणाः, एतद्दर्शनापेक्षावतामस्माकमस्मत्स्वामिनस्समीपे द्रष्टुं योग्या इत्यर्थः ॥ २६ ॥

(२७.) स्वामिविषये एतद्गुणप्रकाशकानि कानिचिदुक्त्वा, तैस्सह युक्तस्यावस्थितिरेवास्माकं शरणमित्याह–हस्तयोरित्यादिना।

मू॥ तिरुक्कैयिले पिडित्तादिव्यायुधङ्गलुम्, वैत्तञ्जलेन्नकैयुम्, कवित्तमुडियुम्, मुहमुम्मुरुवलुम्, आसनपद्मत्तिले अलित्तनतिरुवडिहलुमाय् निर्किरनिलैयें नमक्कुत्तञ्जम् ॥ २७ ॥

---

र्यामित्वम् । आवरणजलवत्-परत्वम् । क्षीरार्णववत्-व्यूहः । प्रवाहवन्नदीवत्-विभवः । तत्र स्थिता ह्रदा इवर्चावतारः" इति ॥२५॥

(अस्मत्स्वामिनः) इति–श्रीरङ्गनाथस्येत्यर्थः । श्रीरङ्गनाथस्योत्सवादिव्यमङ्गलविग्रहस्यास्मत्स्वामीति नाम्ना व्यवहारो लोकप्रसिद्धः । द्रविडभाषायां "नम्पेरुमाल्" इति ।

'जायमानकालविशेषकटाक्षसहकृतशास्त्राभ्याससंस्कारसहकृतचक्षुषार्चावतारे लोकार्याणामेवैतत्सर्वं प्रत्यक्षम्, इतरेषान्तु प्रत्याभिज्ञावदुपपद्यते' इति श्रीशुद्धसत्त्वाचार्याः प्राहुः ॥ २६ ॥

छा॥ श्रीहस्ते धृतानि दिव्यायुधानि, अभयमुद्रितहस्तः, धृतकिरीटः, मुखंहासश्चासनपद्मे दृढतया स्थापितौ श्रीचरणौ, एतैर्युक्तस्यावस्थितिरेवास्माकं शरणम् ॥ २७ ॥

व्या॥कार्यकरत्वोपयोगिज्ञानशक्त्योःप्रकाशकानि श्रीहस्तेषु धृतानि शंखचक्रादिदिव्यायुधानि, वात्सल्यप्रकाशकोऽभयमुद्रितहस्तः, स्वामित्वप्रकाशकः किरीटः, सौशील्यप्रकाशकं मुखं हासश्च, सर्वेषां द्रष्टुं ग्रहणयोग्यसौलभ्यप्रकाशकौ आसनपद्मे दृढतया स्थापितौ श्रीचरणौ, एतैर्युक्तस्यावस्थितिरेवास्माकमनन्यगतिकानां रक्षिकेत्यर्थः ॥ २७ ॥

---

(शंखचक्रादिदिव्यायुधानि) इति–"पातु प्रणतरक्षायां विलम्बमसहन्निव । सदा पंचायुधीं बिभ्रत्स नश्श्रीरङ्गनायकः" इति रक्षणोपयोग्यायुधधारणेन रक्षणोपयुक्तज्ञानशक्ती प्रकाश्यत इति भावः ।

(वात्सल्यप्रकाशकः) इति–अभयमुद्रितेन च करेण 'अपराधभीता माभैष्टे' ति वदता वात्सल्यं प्रकाश्यत इत्यर्थः । उक्तं च " एते शंखगदासुदर्शनभृतः क्षेमङ्करा बाहवः पादद्वन्द्वमिदं शरण्यमभयं भद्रं च वो हे जनाः । इत्यूचिष्यभयङ्करे करतले" इति । (स्वामित्वप्रकाशकः) इति–"आधिराज्यमधिकं भुवनानामीशते पिशुनयन्किल मौलिः""शिखारत्नोद्दीप्रं दिशि दिशि च माणिक्यलहरी लसच्छ्रीमद्रङ्गप्रभुमणिकिरीटं मनुमहे । समुत्तुङ्गस्फीतं चिदचिदधिराजश्रिय इव प्रियाक्रीडं चूडामणिमपि नितम्बन्तनभितः" इत्यादिकमनुसन्धेयम् । (मुखं हासश्च)–सस्मितेन च मुखमण्डलेन सौशील्यं प्रकाशत इत्यर्थः । "सम्भाष्यमाणमिव सर्ववशंवदेन म-

(२८) उपायोपेयनिष्ठानामुभयेषामपेक्षितमाकारद्वयं च पूर्वोक्तप्रकारेणावस्थितदिव्यमंगलविग्रहे प्रकाशत इत्याह-रक्षकत्वेति ।

मू॥ रक्षकत्वभोग्यत्वङ्गलिरण्डं तिरुमेनियिले तोत्तुम् ॥२८॥

छा॥ रक्षकत्वं भोग्यत्वमुभयमपि श्रीविग्रहे प्रकाशते॥२८॥

व्या॥ रक्षणपरिकरभूतदिव्यायुधैः, रक्षणनिर्वाहकेन धृतकिरीटेन च विशिष्टतया रक्षकत्वस्य प्रकाशमानत्वात्, "अलङ्कारभूतं चक्रं शंखं च धृत्वा" "किरीटकान्तिरूपेण तव मुखज्योतिर्विकासते किम्" इत्युक्तप्रकारेण तान्येव सौन्दर्यस्योपयुक्तानि, 'अभयमुद्रितहस्तः, मुखं मन्दहासः, आसनपद्मे दृढतया स्थापितौ श्रीचरणौ' इत्येकैकस्यालङ्कारसीमाभूमित्वाद्भोग्यत्वस्य प्रकाशमानत्वाच्च द्वयमपि श्रीविग्रहे प्रकाशत इत्यर्थः ॥ २८ ॥

---

न्दस्मितेन मधुरेण च वीक्षितेन" इति ह्युक्तम् । पूर्त्यादयश्च-स्वामित्वप्रकाशने नैवोक्ता इति भावः । करुणाप्रकाशकं वीक्षणमप्यत्राध्याहार्यम् । तदुक्तम्-"करुणामृतकूलमुद्वहैषा प्रणमत्स्वागतिकी प्रसन्नशीता । मयि रङ्गधनोपकर्णिकाक्ष्णोस्सरिता वीक्षणवीचिसन्ततिस्स्तात्" "करुणारसवाहिवीक्षणोर्मे वरद प्रेममयप्रवाहभाजः । ततीरवनावलीभ्रुवौ दृक्चलसिन्धोस्तव नासिकैव सेतुः" "आविष्कुरुते कृपामपाराम्" इति ॥२७॥

(उपायोपेये)ति-प्रसङ्गान्न केवलमुपायत्वोपयुक्ताकारप्रकाशकत्वं दिव्यमङ्गलविग्रहस्य, अपि तु प्राप्यत्वोपयुक्ताकारप्रकाशकत्वमित्याहेति भावः ।

द्वयानुरोधेन 'रक्षकत्वभोग्यत्वे' ति बहुवचः पूर्वनिपातः ॥२८॥

(२९.) एवं नारायणपदार्थमुक्तवान् । अथ 'चरणौ' इति पदार्थमाह-चरणौ-श्रीपादौ इति ।

मू।। चरणौ-तिरुवडिहळै ।। २९ ।।

छा।। चरणौ-श्रीपादौ ।। २९ ।।

(चरणौ—श्रीपादौ) इति—अत्र चरणशब्दस्य व्याख्यानमनुपपन्नम् । कोशादौ पादपर्यायतया प्रसिद्धत्वेनाप्रतिपत्तेरभावात्, इति चेन्न । "चरणं पवित्रम्" "चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः" इत्यादौ चरणशब्दस्यार्थान्तरे प्रयोगदर्शनात् । न चान्यत्र बहुवचनान्तचरणशब्दस्यार्थान्तरे प्रयोगस्सम्भवतीति वाच्यम्; प्रकृत्यर्थनिर्णयानुरोधेन प्रत्ययार्थनिर्णेतव्यतायाः पाशाधिकरणसिद्धत्वात् । तस्मात्पादपरतया व्याख्यानमुपपन्नमेव ।

तात्पर्यदीपिकायां तु—नन्वत्र न तावच्चरणशब्दोऽङ्घ्र्यर्थकः । शरणशब्दार्थानन्वयात् । अचेतनत्वेनोपायनिरपेक्षरक्षकत्वरूपोपायत्वासम्भवात् । तथा च सति "मनो ब्रह्मेत्युपासीत" इत्यादिवद्दृष्टिरूपत्वं स्यात् । यथा विधिं चानुष्ठानं च न विधायकवाक्यचरणयोश्शरणत्वेन वरणविहितम् । प्रत्युत "मामेकम्" इति चरणावापि व्यावर्त्यते । एतेन करणतारूपमुपायत्वं चरणयोरपि सम्भवतीत्यपि निरस्तम् । एवंचोपायत्वोपयुक्तानां गुणानां नारायणपदेन भगवत्यनुसन्धानं चासङ्गतम् । तस्यातथात्वात् । 'मामेकं च श्रिया युक्तम्" इत्यादिवचनैश्च भगवच्छरणागतावेवायं विनियुक्तः । स कथं चरणगतामुपायतां बोधयेत् । नापि "अनेनैव प्रपन्नस्य भगवन्तं सुदर्शनम् । तस्यानुबन्धाःपाप्मानस्सर्वे नश्यन्ति तत्क्षणात्" इति सुदर्शनस्य चरणत्वेनोक्तेः, "पवित्रं चरणं चक्रम्" इति चरणपदस्यापि चक्रपर्यायत्वात्, तत्परोऽत्र चरणशब्दः । पूर्वनिपातोऽभ्यर्हितत्वान्नारायणपदस्येति सुवचत्वेऽपि परवल्लिङ्गत्वेन नपुंसकत्वापत्तेः । पूर्वोक्तदोषाच्च । अतोऽत्र चरणपदानर्थक्यमित्यत आह-

चरणौ-तिरुवडिहलै इति । पाण्यादिग्रहणादपि पादपतनस्य कृपोत्तम्भकत्वा-त् । परम्परयोपायत्वं चरणयोरस्तीति न विरोध इति भावः । तदुक्तं "चित्ताल-म्बनसौकर्यकृपोत्तम्भनतादिभिः । उपायत्वमिह स्वामिपादयोरनुसंहितम्" इति । चित्तालम्बनसौकर्यम्-स्वरूपस्यानाश्रयत्वाद्विग्रहापेक्षया चरणमात्रस्य लघुत्वात् । आदिशब्दः-"शेषभूतन्" इत्यादिना "पिराट्टियुम्" इत्यादिना च वक्ष्यमाणमौचि-त्यं भोग्यत्वं चाभिदधाति । भोग्यतातिशयं च "तवामृतस्यन्दिनि" इत्याद्युक्तरीत्या रुचितरवैराग्यादिसम्पादकतयोपायत्वोपयुक्तः । "सर्वदा चरणद्वन्द्वं व्रजामि शर-णं तव" "त्वत्पादकमलादन्यत्" "लोकविक्रान्त चरणौ शरणं तेऽव्रजं विभो" "स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः" "चरणौ शरणं यातः" "मत्पादद्वन्द्वमेके ये प्रपद्यन्ते" "प्रपन्नाघौघविध्वंसी चरणौ शरणं गतः" "तत्तवं तव विन्यस्तं शु-भयोः पादपद्मयोः" "धिया देवस्य पादयोः" "श्रीमत्त्वत्पादकमले प्रपद्ये शरणं विभो" "तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातमृदुमुक्ताभिरंगुलीभिरलं-कृतौ । प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ" "भक्त्या गृहीतचरणः परया च तेषां नामेषि नाथ हृदयाम्बुरुहात्स्वपुंसाम् । तावद्भयं द्रविणगेहसुहृन्निमित्तं शोकस्पृ-हापरिभवो विपुलश्च लोभः । तावन्ममेत्य सदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः । एषां स एव दययद्भगवाननन्तस्सर्वात्मनाश्रितपदो यदि निर्व्यली-कम् ॥ ते दुस्तरामतितरन्ति तु देवमायां नैषां ममाहमिति धीश्श्व सृगालभक्ष्ये । वि-चक्षणा यच्चरणोपसादनात् सङ्गं व्युदस्योभयतोऽन्तरात्मनः । विन्दन्ति हि ब्रह्मग-तिं गतत्समास्तस्मै ह्युभद्रश्रवसे नमो नमः" इत्यादिषु । एतदभिप्रायेणैव चरणयोरु-पायत्वमुच्यते । आचार्यैश्च—"त्वत्पादमूलं शरणं प्रपद्ये" "त्वदङ्घ्रिमुद्दिश्य—सकृ-त्कृतोऽञ्जलिः" "स्वाभीष्टे परसम्बन्धे स्वशक्त्या हीनसाधनम् । तत्प्राप्त्युपायं त-त्पादौ कृत्वा विश्वासपूर्वकम् । सौगन्ध्यसौकुमार्यादिगुणसंग्रहवान् हरिः । तस्य स्वात्मप्रदाने तु साधनं स्वपदद्वयम्" इत्यादिषु चरणयोरुपायत्वमनुसंहितमिति द्रष्ट-व्यम्-इति ॥ २९ ॥

(३०.) अनेन द्विवचनेनोच्यमानमर्थमाह—अनेनेति ।

मू।। इत्ताल्—शेर्तियळहैयुम्, उपायपूर्तियैयुं शोल्लुहिर्दु।३०।

छा।। अनेन—साहित्यसौन्दर्यम्, उपायपूर्तिश्चोच्यते ॥३०॥

व्या।। "चरणौ" इत्युभयश्रीचरणप्रतिपादयतानेन द्विवचनेन "परस्परसहितकमलचरण" इति प्रकारेणोभयोःकमलयोरिव विद्यमानसाहित्यसौन्दर्यम्, उभयोरुपरि अन्यस्य कस्यचित्प्रवेशस्यासहिष्णुत्वात्, सहायान्तरनिरपेक्षत्वरूपोपायपूर्तिश्चोच्यतइत्यर्थः॥

---

(द्विवचनेन) इति—द्विवचनतात्पर्यार्थमाहेत्यर्थः ।

(अनेन द्विवचनेन) इति—"निक्षिप्य श्रीपतेः पदे" "त्वत्पादकमलादन्यत्" "अडैन्देनुन्तिरुवडियै" तद्विष्णोःपरमं पदं वहतु नश्श्रीरङ्गिणो मङ्गलम्" इत्यादाविव जातिपरतया एकवचनप्रयोगसम्भवेऽपि द्विवचनप्रयोगेणेत्यर्थः । (साहित्यसौन्दर्यम्) इत्यत्र "श्रीरङ्गेशयपादपद्मयुगलं वन्दामहे सुन्दरम्" इत्यादिकमपि भाव्यम् । एकस्यैव धर्मस्य प्रकृत्यर्थतावच्छेदकत्वे उद्देश्यतावच्छेदकव्याप्यपर्याप्तेरेव द्वित्वादिसंसर्गत्वाङ्गीकारेण, प्रकृते द्विवचनेन सजातीयवस्तुगतद्वित्वस्यैव बोधने सजातीयवस्तुद्वयस्य परस्परसम्बन्धरूपानुरूप्यातिशयस्य द्योतनं द्विवचनेन सम्भवतीति भावः । "पशुना यजेत" इत्यादौ एकवचनेन स्वसजातीयद्वितीयराहित्यबोधनवत्, प्रकृते द्विवचनेन तृतीयवस्तुव्यवच्छेदःफलतीत्यभिप्रायः । यथा वा "दर्शपूर्णमासाभ्यां यजेत" इत्यत्र दर्शपूर्णमासव्यतिरिक्तयागान्तरनैरपेक्ष्यम्, तद्वदित्यपि द्रष्टव्यम् ॥ ३० ॥

(३१.) इदानीमुपायत्वैकान्तमस्य गुणाधिक्यमाह-लक्ष्मीरित्यादिना ॥

मू॥ पिराट्टियुम्, अवनुं विडिलुं तिरुवडिहल् विडाडु, "तिण्कळलायि" रुक्कुम् ॥ ३१ ॥

छा॥ लक्ष्मीः, स च त्यजतश्चेदपि श्रीचरणौ न त्यजतः, "दृढचरणौ" इति वर्तेते ॥ ३१ ॥

व्या॥ श्रीमत्पदे पुरुषकारभूतत्वेनोक्ता देवी, स्वयमेव दोषकथनेऽपि, "मम दासा एवं न कुर्युः" इति प्रकारेण नारायणपदोक्तगुणविशिष्टस्य च हस्तं त्यजतश्चेत्, श्रीपादौ स्ववैलक्षण्ये मग्नकरणात्, हस्तं न त्यजतः, "सुन्दरकल्याणगुणनारायणदृढचरणौ" इत्युक्तप्रकारेणाश्रितात्यागरूपदार्ढ्ययुक्तावित्यर्थः ॥ ३१ ॥

---

(दोषकथनेऽपि) इति—न पुरुषकारभूतायाः कदापि दोषकथनत्वं सम्भवति, आश्रितचेतनविषये ईश्वरः कथं तिष्ठतीति परीक्षार्थं दोषकथनेऽपि इत्यर्थः । नाज्ञत्वं ब्रह्मणः प्रसज्येत् । चेतनविश्वासार्थस्य क्रियमाणत्वात् । तथाहि श्रीमति रामायणे आरण्यकाण्डे "स्त्रीचापलादेतदुदाहृतं मे धर्मं च वक्तुं तव कस्समर्थः । विचार्य बुद्ध्या तु सहानुजेन यद्रोचते तत्कुरु मा चिरेण" इति प्रचोदितायै लक्ष्म्यै "अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः" इत्युक्तम् । तस्मात् दोषकथनस्याश्रितसंरक्षणोपयुक्तत्वान्न दोष इति ध्येयम् ।

(३२.) एतद्गुणाधिक्यप्रयुक्तापेक्षयापि अस्य स्वरूपानुरूपं च श्रीपादाश्रयणमिति सदृष्टान्तमाह-शेषिविषये इति ।

मू।। शेषिपक्कल् शेषभूतन् इळियुं तुरै, प्रजै मुलैयिले वायूवैक्कुमाप्पोले ।। ३२ ।।

छा।। शेषिनिषये शेषभूतस्य प्रवेशस्थानम्, प्रजायास्तनमिव।।३२

व्यां।। शेषिणमाश्रयितुमुद्युक्तस्य शेषभूतस्यास्य स्वरूपानुगुणावगाहनस्थानं श्रीपादौ, स्तनन्धयप्रजा मातुरवयवान्तरेषु स-

---

तच्छब्दस्य पूर्वोक्तगुणविशिष्टपरत्वमाह–नारायणपदोक्तेति । 'त्यजतः' इत्यस्य कर्मापेक्षत्वात्–हस्तं त्यजत इत्युक्तम् । तद्गुणानुसन्धानशून्यानामपि रुचिजनकत्वमेवात्र ततोऽतिशय इत्यभिप्रायेण–स्ववैलक्षण्ये इत्युक्तम् । अत एव श्रीवचनभूषणे "अयं च शास्त्रैर्वशीकरणायोग्यानां विषयान्तरेषु निमज्य विमुखानां चेतनानां वैमुख्यं दूरीकृत्य रुचिमुत्पादयति, रुच्युत्पत्तौ उपायो भवति, उपायपरिग्रहे कृते भोग्यो भवति" इत्यनुसंहितम् । रुचिजनकत्वं च-शास्त्रैरशक्यानिवर्तनं विषयान्तराभिनिवेशेन विमुखानां चेतनानां स्वस्य रूपौदार्यगुणैर्वैमुख्यं दूरीकृत्य स्वविषये रुच्युत्पादकत्वम् । चरणयोर्दार्ढ्यं च-स्वस्य शुभाश्रयत्वस्वभावेन स्वाश्रिताकरणवशीकरणत्वमेव ।

अत्रोद्देश्योत्तारकाचार्यद्वयं चरणशब्देन विवक्षितम् । रामानुजवर्यस्यैतदाकारद्वयविशिष्टत्वात् । "मूर्ध्नो, यस्यान्वयमुपगताः" इत्यादिरीत्या वा पदकमलयुगत्वं वक्तव्यमिति रहस्यम् । आचार्याणामुपायत्वपक्षः-तेषां चैतन्यविशिष्टत्वेन षाड्गुण्यप्रकाशकत्वात् अचेतनचरणापेक्षया मुख्य इति बोध्यम्' इतिश्रीशुद्धसत्त्वार्याः।।३१।।

(स्वरूपानुरूपम्)–शेषत्वानुरूपम् । चः-पूर्वोक्तसमुच्चयः । (सदृष्टा-

त्स्वपि स्वस्य प्राप्तमातृस्तनाग्रे यथा मुखं प्रवेशयाति, तद्वदित्यर्थः।

(३३.) इयं श्रीपादोक्तिः, श्रीविग्रहस्योपलक्षणमित्याह-अनेनेत्यादिना ।

मू।। इत्ताल्-षिराट्टिक्किरुप्पिडमाय्, गुणप्रकाशकमुमाय्, शिशुपालनैयुमहप्पड तिरुत्तिचेर्तुक्कोल्लुं तिरुमेनियै निनैक्किरदु ।। ३३ ।।

छा।। अनेन-लक्ष्म्या वासस्थानभूतः, गुणप्रकाशकश्च, शिशुपालमपि प्रासये शिक्षित्वा मेलयिता श्रीविग्रह स्स्मर्यते ।।३३।

व्या।। 'चरणौ" इति विग्रहैकदेशश्रीपादौ प्रतिपादयतानेन "श्रीवासस्थानभूतवक्षाः" इत्युक्तप्रकारेण श्रीमत्पदोक्तायाःपुरुष-

---

न्तमाहे) ति-"निरासकस्यापि न तावदुत्सहे महेश हातुं तव पादपङ्कजम् । रुषा निरस्तोऽपि शिशुस्स्तनन्धयो न जातु मातुश्चरणौ जिहासाति" इत्याळ्वार्यसूक्तिरीत्या दृष्टान्तपूर्वकमाहेत्यर्थः ।

(स्तनन्धये) ति-'स्तनं-धयाति-पिबाति' इति स्तनन्धयशब्दो निष्पन्नः । "धेट्-पाने" इति धातुः ।। ३२ ।।

(श्रीविग्रहस्योपलक्षणम्) इति-"नित्यासिद्धे तदाकार तत्परत्त्वे च पौष्कर । यस्यास्ति सत्ता हृदये तस्यासौ सान्निधिं व्रजेत्" इति विग्रहपरत्वयोरनुसन्धानमावश्यकमिति प्रतीतेः, नारायणपदेन परत्वस्य लाभेऽपि विग्रहानुसन्धानस्यालाभत्वात् इति शङ्कापरिहाराय श्रीपादकथनेन विग्रहस्योपलक्षणत्वकथनस्यावश्यकत्वात् , दिव्यमङ्गलविग्रहस्योपलक्षणत्वमाहेति हृदयम् ।

कारभूताया वासस्थानभूतः, नारायणपदोक्तगुणानां प्रकाशकः, "बहुषु बहुषु दिनेषु निन्दितवन्तं शिशुपालम्" इत्युक्तप्रकारेण प्रद्वेषं कृत्वा निन्दोक्तिमुक्त्वा सञ्चरन्तं शिशुपालं प्राप्त्यर्थं "बहुज-ल्पनिवर्तकसौन्दर्यः" इत्युक्तप्रकारेण स्वसौन्दर्येण द्वेषादिनिवृत्तिर्य-था स्यात्, तथा शोधित्वा, "स्वामिचरणस्थानंप्राप्तः" इत्युक्तप्रका-रेण मेलयितृत्वस्वभावयुक्तदिव्यमङ्गलविग्रहस्स्मर्यत इत्यर्थः॥३३॥

(३४)अनन्तरं शरणपदार्थमाह–शरणमित्यादिना ॥

मू॥ शरणम्-इष्टप्राप्तिक्कुम्, अनिष्टनिवारणत्तुक्कुं तप्पाद उपायमाह ॥ ३४ ॥

छा॥ शरणम्–इष्टप्राप्तेरनिष्टनिवारणस्य चाव्यभिचार्युपायम्।

व्या॥ "उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम् । वर्तते साम्प्रतञ्चैष उपायार्थैकवाचकः" इत्युक्तप्रकारेण शरणशब्दस्य-रक्षितुः, गृहस्य, उपायस्य च वाचकत्वेऽपि, अत्रोपायत्वस्यैव

---

अत्र चरणशब्देन दिव्यमङ्गलविग्रहोपलक्षणं विफलम् । प्रकृतानुपयोगादिति चेत् । उच्यते–"प्रपद्ये" इत्यत्र वक्ष्यमाणस्वीकारस्य चेतनवशीकरणस्य च पुरुष-कारेण सौन्दर्यसौलभ्यादिगुणजातेन च साध्यतया तादृशपुरुषकारादिसम्बन्धप्र-तिपादकदिव्यविग्रहस्यात्यन्तमुपयोगात्तत्प्रतिपादनं सफलमेवेति ॥ ३३ ॥

(उपाये) इति–अत्र शरणशब्दस्य नानार्थकत्वेन "उपाये गृहरक्षित्रोः" इति वचनबलेन प्रकृते उपायार्थकतया व्याख्यानस्य युक्तत्वेऽपि 'इष्टप्राप्तेः' इ-

वाचकत्वा^त^, उपायकृत्यस्येष्टानिष्टप्राप्तिपरिहारकरणरूपत्वाच्च "इष्टप्राप्तेरनिष्टनिवारणस्य चाव्यभिचार्युपायम्" इत्येतत्पदस्यार्थमाह।

---

त्यादिव्याख्यानमनुपपन्नमिति चेन्न, लोके ज्योतिष्टोमाद्युपायानां फलप्रददेवतैश्वर्यादिकमेवापेक्ष्यैव फलप्रदत्वस्य सिद्धतया, प्रकृतेऽपि तथा फलप्रदत्वोपायत्वयोर्वैयधिकरण्येनोपायस्य व्यभिचारविलम्बादिदोषस्स्यादिति शङ्कानिरासायात्र फलप्रदत्वमुपायत्वं च समानाधिकरणमेव, लोकवद्व्यभिचारादिकमपि नास्तीति सूचयितुं तथा व्याख्यानमुपपन्नमिति भावः। किंच "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इत्यत्र कैश्चित् साध्यद्वित्वसाधनद्वित्वयोरङ्गीकारवत्, प्रकृतेऽपि स्यादित्याशङ्कायां, प्रकृते शरणशब्दस्य 'शृ-विशरणे' 'शृ-विस्तारे' इति धातुद्वयनिष्पन्नतया इष्टप्राप्तिपर्यन्तानिष्टनिवृत्तिरूपफलंप्रति भगवानेक एवाभिचरित उपाय इति द्योतयितुं तथा निर्देश इति भावः।

ननु फलाव्यभिचारिण एव ह्युपायत्वम्, तावतैव निर्वाहे 'तप्पाद' इति व्यर्थमिति चेत्, न। "चितःपरमचिल्लाभे प्रपत्तिरपि नोपधिः। विपर्यये तु नैवास्य प्रतिषेधाय पातकम्" इत्युक्तप्रकारेणोपायत्वेनावस्थितानामपि भगवदिच्छाभावे व्यभिचारदर्शनात्। यथा भरतस्य साधनप्रपत्तिः। स्वरूपानुरूपप्रपत्तौ व्यभिचारो नास्तीति सूचनार्थं तत्पदस्य सार्थक्यात्।

अत्र शरणशब्दप्रवृत्तिनिमित्ततयाभिमेतमुपायत्वं-करणत्वरूपमित्याचार्याभिप्रायः। न तावद्रक्षकत्वरूपम्। "उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम्" इत्यहिर्बुध्न्यसंहितावचनेन रक्षकत्वप्रवृत्तिनिमित्तकतां व्युदस्योपायत्वप्रवृत्तिनिमित्तकताव्यवस्थापनात्। तथा व्याख्यातम्–'उपाये' इत्यारभ्य। आचार्यचरणैरेव चरमश्लोकार्थप्रकारणे "अयं शरणशब्दो–रक्षितारम्, गृहम्, उपायंच प्रदर्शयन्नपि अत्रोपायमेव प्रदर्शयति" इति व्याख्यातम्। न च तत्र चरमश्लोकस्थशरणशब्द एव

व्याख्यात इति वाच्यम् । विध्यनुष्ठानयोरैकरूप्यात्, द्वयस्थशरणशब्दस्यापि तत्समानार्थकताया आवश्यकत्वात् । अन्यथा विवरणविवरणिभावस्याप्यसिद्धिप्रसङ्गात् ।

उपात्तवचनस्यायमर्थः—‘शरणमित्ययं शब्दः-उपाये गृहे रक्षितरि स्वप्रवृत्तिनिमित्तभूतोपायत्वगृहत्वरक्षकत्ववत्तासम्बन्धेन वर्तते—उपायत्वगृहत्वरक्षकत्वप्रवृत्तिनिमित्तक इति भावः । साम्प्रतम्-अस्मिन्स्थले । द्वय इत्यर्थः । यद्यपि इदानींशब्दपर्यायस्य साम्प्रतमित्यस्य बुद्धिस्थकालविशेषपरत्वमेव । तथापि द्वयोच्चारणकालस्यैव बुद्धिस्थतयाभिप्रेतत्वात् यथोक्त एवार्थः । चस्त्वर्थे । द्वयघटकास्त्वित्यर्थः । ‘साम्प्रतन्त्वेष’ इति पाठे तु स्पष्टोऽर्थः । तेन “श्रूयते हि कपोतेन शत्रुश्शरणमागतः” “त्वमनादिरनिर्देश्यस्त्वामहं शरणङ्गतः” “सर्वात्मना यश्शरणं शरण्यं नारायणं लोकगुरुं प्रपन्नः” इत्यादिषु शरणशब्दस्य व्यावृत्तिः । उपायशब्दः-उपायत्वपरः । उपायार्थैकस्य वाचक इति षष्ठीतत्पुरुषः । उपायार्थैकस्य-उपायत्वरूपैकार्थस्य । वाचकशब्दः-शक्यतानिरूपकपरः । षष्ठ्यर्थश्च-अवच्छिन्नत्वम् । तस्य वाचकपदार्थैकदेशे शक्यतायामन्वयः । ससम्बन्धिकस्थले भेदसम्बन्धेनैकदेशान्वयस्य व्युत्पत्तिसिद्धत्वात् । तत्पुरुषे पूर्वपदलक्षणापक्षे उपायार्थैकशब्दस्य उपायत्वरूपैकार्थावच्छिन्ने लक्षणा । तस्य च व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽपि शक्यतायामभेदसम्बन्धेनान्वयः । ‘चैत्रदासः’ इत्यादिससम्बन्धिकसमासस्थले तथाविधव्युत्पत्तिस्वीकारात् । एकपदार्थतावच्छेदकैकत्वं च-स्वानाश्रयधर्मावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वसम्बन्धेन धर्मिपारतन्त्र्येणैतच्छब्दार्थे शरणशब्देऽन्वेति । तथा चोपायत्वरूपैकत्वविशिष्टार्थावच्छिन्नशक्यतानिरूपकः, स्वानाश्रयधर्मावच्छिन्नशक्यतानिरूपकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वसम्बन्धेन तदेकत्वविशिष्टश्शरणशब्द इति बोधः । स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्ववाचकपदस्य तथा व्युत्पत्तेः । अत एव “पशुना यजेत” इत्यादौ, अनेकपशुकरणकयागादपूर्वोत्पत्तिवारणाय ‘पशुना’ इत्येकवचनार्थैकत्वस्य स्वानाश्रयपशुकरणकत्वसम्बन्धाव-

च्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वसम्बन्धेन यजिधात्वर्थयागेऽन्वयस्स्वीकृतः। यथाश्रुते चैत्रकर्तृकैकपशुकरणकयागीयपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वान्मैत्रयागीयपश्वेकत्वस्य । एवं मैत्रयागीयपश्वेकत्वस्यापि तथात्वात् । कस्याप्येकत्वस्य स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वाभावेन बाधापत्तेः । एवंच रक्षकत्वोपायत्वयोरेकत्वे 'गृहरक्षित्रोः' इति पृथगुपादानस्य प्रसक्तरक्षकत्वगृहत्वप्रवृत्तिनिमित्तकताव्युदसनायोक्तिसम्बन्धेनैकत्वबोधतात्पर्यकैकशब्दस्य चासाङ्गत्यं दुर्वारमेव ।

यद्यपि नानार्थकशब्दस्य प्रकरणादिना एकार्थतात्पर्यकत्वेऽपि नानाप्रवृत्तिनिमित्तनिषेधो नोपपद्यते । तथापि नानार्थकस्थले प्राकरणिकार्थस्यैव शक्त्या भानम्, अन्यस्य तु शब्दशक्तिमूलव्यंजनयैवेत्यालङ्कारिकरीत्याश्रयणेनादोषः । तदुक्तं काव्यप्रकाशिकायाम् "अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते । संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरंजनम्" इति । अंजनम्-व्यंजनम् । व्यंजनावृत्तिरिति पर्यवसितार्थः । वस्तुतस्तु-उपात्तवचने वाचकशब्दस्य शाब्दबोधेच्छाप्रयुक्ते लक्षणा । शाब्दबोधे च-उपायत्वरूपैकत्वविशिष्टार्थस्य स्वावच्छिन्नविषयताकत्वसम्बन्धेनान्वयः । एकत्वस्य पूर्वोक्तरीत्या धर्मिपारतन्त्र्येण स्वानाश्रयधर्मावच्छिन्नविषयताशालिशाब्दबोधेच्छाप्रयुक्तत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वसम्बन्धेन शरणशब्देऽन्वय इति न किंचिदनुपपन्नम् ।

न चोपात्तवचनेन द्वयस्थशरणशब्दो न व्याख्यातः, किन्तु "इदं शरणमज्ञानाम्" इति वचनस्थशरणशब्द एव व्याख्यातः । तत्र हि "उपायापायनिर्मुक्ता मध्यमां स्थितिमास्थिता । शरणागतिरग्र्यैषा संसारार्णवतारिणी" इति पूर्वप्रस्तुता शरणागतिः-इदंशब्देन परामृश्यते । शरणशब्दप्रधानत्वान्नपुंसकत्वम् । शरणागतेश्च-भगवत्प्रसादात्मकादृष्टद्वारकफलसाधनतारूपकरणत्वात्मकमुपायत्वं सम्भवति । नतु गृहत्वं रक्षकत्वं वा । अतो रक्षकत्वप्रवृत्तिनिमित्तकताव्युदसनपूर्वकोपायत्वप्रवृत्तिनिमित्तकताव्यवस्थापनं सङ्गच्छत इति वाच्यम् ।—"इदं शरणम्" इत्यादिवचनस्य लक्ष्मीतन्त्रसंहितास्थत्वात्, "उपाये गृहरक्षित्रोः" इत्यादिवचनस्याहिर्बुध्न्यसं-

हितास्थत्वेन तत्र शरणागतिविषयशरणशब्ददर्शनात्, शरणागतौ गृहत्वरक्षकत्वयोर्बाधादेव शरणागतिविषयशरणशब्दे गृहत्वरक्षकत्वार्थकताप्रसक्त्यभावेन "उपायार्थैकवाचकः" इत्यस्याप्रसक्तप्रतिषेधत्वापत्तेश्च । भगवति तु सर्वाधारत्वेनावासस्थापरपर्यायगृहत्वस्य फलप्रदत्वेन रक्षकत्वस्य च सम्भवात्, तद्विषयकशरणशब्दे तदर्थकतानिषेधो युक्तः ।

ननु निरपेक्षरक्षकत्वमुपायत्वम्, सम्भवति च भगवति निरपेक्षरक्षकत्वम् । अन्यत्र प्रपत्त्यङ्गकेनोपासनेन देयस्य फलस्याकिंचनविषये प्रपत्तिमात्रेण प्रदातृत्वेन गुरुभूतोपासननिरपेक्षत्वात् । एतदभिप्रायेणैव "उपाये गृहरक्षित्रोः" इत्यादिनिष्कर्षकवचनम् । नैरपेक्ष्यानवच्छिन्नरक्षकत्वार्थकतां व्युदस्य तदवच्छिन्नाश्रितरक्षकत्वार्थकताव्यवस्थापनपरत्वात् । यद्यपि निरपेक्षरक्षकत्वस्य केवलरक्षकत्वस्य च भेदाभावेन "उपायार्थैकवाचकः" इत्यनेन केवलरक्षकत्वार्थकतानिषेधो नोपपद्यते, तथापि निरपेक्षरक्षकत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरक्षकत्वरूपपारिभाषिकभेदस्य विद्यमानतया तदभिप्रायेण वचनमुपपन्नमिति चेत्-न । निरपेक्षरक्षकत्वम् किमुपायशब्दशक्यतावच्छेदकम्, उत लक्ष्यतावच्छेदकम् । आद्ये-यागादौ, भक्तौ चोपायशब्दप्रयोगानुपपत्तिः । तेषामचेतनत्वेन रक्षकत्वासम्भवात् । तदर्थं शक्यन्तरकल्पने-गौरवम्, प्रमाणाभावश्च । किंच निरपेक्षरक्षकत्वम्-भक्तिनिरपेक्षरक्षकत्वम्, प्रपत्तिनिरपेक्षरक्षकत्वम्, उभयानिरपेक्षरक्षकत्वम्, गुरूपायनिरपेक्षरक्षकत्वम्, प्रपत्तिव्यतिरिक्तोपायनिरपेक्षरक्षकत्वम्, वा । नाद्यः-ज्योतिष्टोमादिस्थले गोप्तुरुपायत्वापत्तेः । न द्वितीयः-भक्तिस्थलेऽपि गोप्तुस्तथात्वप्रसङ्गात् । तृतीये-उभयनिरपेक्षत्वम्-उभयाभावरूपम्, अभावद्वयरूपं वा । नाद्यः-उक्तदोषानिस्तारात् । न द्वितीयः-ज्योतिष्टोमादिस्थलेऽतिव्याप्तेः, प्रपत्तिस्थले तदसिध्द्यासम्भवाच्च । न चतुर्थः-द्वादशवार्षिकाद्यशक्तं प्रति सेतुस्नानेन फलदातुरुपायत्वप्रसङ्गात् । न पंचमः-स्वव्यतिरिक्तोपायनिरपेक्षरक्षकत्वस्य सर्वोपायसाधारणतया प्रपत्तिस्थले तस्य विशिष्योक्तौ वैलक्षण्याभावात् । न प्रथमकल्पे द्वितीयः-"त्वमेवोपायभूतो मे भव"

"तदेकोपायतायाञ्चा" "अहं मत्प्राप्त्युपायो वै" "उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ" इत्यादिषु बहूनामुपायशब्दानां गौणत्वप्रसङ्गात्।

किंच उपायत्वं रक्षकत्वमित्येतत् श्रीमद्रहस्यत्रयसारपरिकरविभागाधिकारश्रीसूक्तिविरुद्धम्। तत्र हि "उपाय इत्युक्ते किंचित्साधनमित्येतावन्मात्रतया एतदुपायस्य चेतनाचेतनसाधारणत्वात्, "रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा" "सर्वज्ञोऽपि हि सर्वेशस्सदा कारुणिकोऽपि सन्। संसारतन्त्रवाहित्वाद्रक्ष्यापेक्षां प्रतीक्षते" इत्यादिप्रकारेण चेतनैकान्तस्य गोप्तृत्वस्यानुसन्धेयत्वात्, गोप्तृत्ववरणमत्र विवक्षितम्। तत्र शरणशब्दस्यैकस्मिन्प्रयोगे उभयार्थस्याभिधानाशक्यत्वात्, अस्याधिकारिणोऽसाधारणोपायत्वाध्यवसायोऽत्र शाब्दः। सर्वाधिकारिसाधारणगोप्तृत्ववरणमार्थम्" इत्युक्तम्। यदि निरपेक्षरक्षकत्वमुपायत्वम्, कथं तर्हि चेतनाचेतनसाधारण्यम्। कथं वा रक्षकत्वप्रार्थनारूपगोप्तृत्ववरणस्यार्थत्वम्। न च "प्रपूर्वकपदलृब्धतो रक्षकत्वाध्यवसाये रूढत्वात्, रक्षकत्वाध्यवसायकार्यरक्षकत्वप्रार्थनार्थैव" इति सारास्वादिन्युक्तं युक्तमिति वाच्यम्। निरपेक्षरक्षकत्वाध्यवसायेन तादृशरक्षकत्वप्रार्थनैवार्थी स्यात्, न तु तदविशेषितरक्षकत्वप्रार्थना। न चेष्टापत्तिः-निरपेक्षरक्षकत्वप्रार्थनायास्सर्वाधिकारिसाधारण्यासम्भवात्। न च रक्षकत्वप्रार्थनात्वेन साधारण्यमिति वाच्यम्। निरपेक्षरक्षकत्वाध्यवसायरूपोपायत्वाध्यवसायस्यापि रक्षकत्वाध्यवसायत्वेन सर्वसाधारणत्वेनोभयोस्तुल्यतया साधारण्यासाधारण्ययोरार्थत्वशाब्दत्वबीजत्वोक्त्यसङ्गतेः।

किंच निरपेक्षरक्षकत्वाध्यवसायेन तत्प्रार्थना कथमर्थात्सिध्येत्। अध्यवसायो हि सिद्धविषयकः। प्रार्थना हि असिद्धविषयिणी। इच्छारूपप्रार्थनां प्रति विषयाभावनिश्चयस्य कारणत्वात्, विषयनिश्चयस्य वा प्रतिबन्धकत्वात्। उक्ताध्यवसायस्य विषयनिश्चयरूपत्वात्।

यानिरपेक्षरक्षकत्वाध्यवसायस्य शाब्दत्वोपपादनाय तदधिकारसारास्वादि-

न्यां प्रक्रियोक्ता "उपायार्थैकवाचकः" इति निष्कृष्टश्शरणशब्दश्चरणशब्दसमानाधिकरणश्चेतनाचेतनसाधारणेनैवाकारेण सिद्धोपायाभेदं साध्योपायाभेदञ्चाभिधत्ते। तत्र सिद्धोपायाभेदः-रक्षकत्वरूपो वास्तव एव, साध्योपायाभेदो वास्तवतयारोप्यमाणः, सिद्धोपायाभेदरूपे रक्षकत्वे नैरपेक्ष्यं व्यंजयति" इति । सा परिहसनीया। शरणशब्देन चेतनाचेतनसाधारणाकारेणोपस्थितस्य यस्य कस्यचित् उपायाभेदो बोधनीयः, न तु सिद्धोपायाभेदस्साध्योपायाभेदश्च । 'प्रमेयो घटः' इत्यादौ प्रमेयत्वावच्छिन्नस्य यस्य कस्यचिदभेदो बोध्येत, न तु वास्तवो घटत्वावच्छिन्नाभेदः। अवास्तवः पटत्वावच्छिन्नाभेदश्च ।

किंच-वस्तुतो भगवति विद्यमानोपायाभेदस्य रक्षकत्वरूपत्वेऽपि रक्षकत्वेन तद्बोधनं कथं घटते? येन केनापि रूपेण वास्तवरक्षकत्वज्ञानस्य प्रपत्तित्वे प्रमेयत्वादिना तद्ज्ञानवतोऽपि प्रपन्नत्वप्रसङ्गात् । न च रक्षकत्वेन तद्बोधोऽपि व्यंजनयैव भवतीति वाच्यम् । तर्हि निरपेक्षरक्षकत्वं व्यङ्ग्यार्थ एव स्यात् । न तु तत्र विशेष्यांशश्शक्यार्थ इति वक्तुं युक्तम् । न च तावता का हानिः, शब्दवृत्त्या बोधितत्वमात्रेण शाब्दत्वोपपत्तेरिति वाच्यम् । तथा सत्युपायत्वाध्यवसायवाचकशब्देनगोप्तृत्ववरणस्यापि व्यंजनयैव बोधसम्भवेनार्थत्वकल्पनासङ्गतेः । प्रपूर्वकपद्लृधातोरध्यवसाये रूढत्वोत्कीर्तनमपि प्रमाणविरुद्धम्। "त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता" "तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः" इति लक्षणवचनविरोधात् । न च गोप्तृत्ववरणस्य प्रार्थनारूपत्वात्, तदङ्गत्वाच्छरणागतेरङ्गाङ्गिनोरभेदोपचारेणोक्तवचनाविरोधः, तत्र चोपायताशब्दः-गोप्तृत्वमात्रार्थकः, तथा च पृथिव्या गन्धवत् शरणागतेः प्रार्थना उपलक्षणमेव, न तु स्वरूपलक्षणमिति वाच्यम् । पृथिव्याःप्रत्यक्षेण निर्णीतत्वेन गन्धस्योपलक्षणत्वाङ्गीकारेऽपि, अत्रोक्तवचनद्वयप्रतिपन्नायास्स्वरूपलक्षणत्वे सम्भवति उपलक्षणत्वकल्पनाया अन्याय्यत्वात् । उपायत्वगोप्तृत्वयोरर्थान्तरत्वेनोपायशब्दस्य गोप्तृत्वार्थकत्वोपवर्ण-

नमप्यसङ्गतम् । न च शरणागतेःप्रार्थनारूपत्वे अध्यवसायरूपत्वं न सम्भवति, उक्तं च द्वयप्रकरणव्याख्याने प्रार्थनारूपत्वं दृढाध्यवसायरूपत्वंचाचार्यचरणैरेवेति वाच्यम् । अध्यवसायत्वप्रार्थनात्वयोर्विषयभेदेन विरोधाभावात् । भगवत्युपायत्वांशेऽध्यवसायरूपत्वात्, तत्र स्वनिरूपितत्वांशे प्रार्थनारूपत्वाच्च ।

किंच, यद्युपायत्वं-निरपेक्षरक्षकत्वम्, तदा चरमश्लोके एकशब्दस्य वा 'सर्वधर्मान्परित्यज्य' इत्यस्य वा वैयर्थ्यम् । तयोःपक्षभेदेन नैरपेक्ष्यप्रतिपादकतायाः उक्तत्वात् । उक्तं हि चरमश्लोकाधिकारे "अधिकारं पुरस्कृत्योपायस्य निरपेक्षताम् । एकशब्देन वक्तीति केचिद्वाक्यविदो विदुः । नैरपेक्ष्यं पुरस्कृत्य विहितस्य लघीयसः । उपायस्याधिकारन्तु श्लोकद्योत्यं विदुःपरे" इति । द्वयचरमश्लोकस्थयोश्शरणशब्दयोरैकार्थ्यं प्रागेवोक्तम् । चरमश्लोकाधिकारेऽपि द्वयस्थशरणशब्दार्थश्चरमश्लोकस्थशरणशब्देऽप्यनुसन्धेय इत्युक्तम् ।

किंच, यदि पूर्ववाक्ये शब्दतोऽर्थतो वा गोप्तृत्ववरणमभिप्रेतम्, तदोत्तरवाक्यमनर्थकम् । अनिष्टनिवृत्तीष्टप्राप्तिप्रार्थनायाः पूर्ववाक्य एव प्रतिपादितत्वात् । न च फलसामान्यप्रार्थनायाः पूर्ववाक्ये प्रतिपादनेऽपि तद्विशेषपरत्वादुत्तरवाक्यस्य नानर्थक्यमिति वाच्यम् । प्रार्थनावाचकपदवैयर्थ्यापत्तेः । न च प्रार्थनापदं केवलं वाक्यान्वयसिद्धये अध्याहृतं निरर्थकमेवेति वाच्यम् । निरर्थकस्याकांक्षाविरहेणान्वयघटकत्वानुपपत्तेः । सार्थकं तत्र वाक्यतात्पर्यं नास्तीति चेन्न । अस्यानुष्ठानवाक्यत्वेन विधिवाक्यवत्, एकदेशे तात्पर्याभावकल्पनानुपपत्तेः । न च पूर्वोत्तरवाक्ययोरभिमतफलविशेषलाभाय यथोक्तात्मरक्षाभरं निक्षिपामीति निष्कृष्टविशिष्टैकार्थप्रतिपादकत्वमेवाङ्गीक्रियत इति वाच्यम् । श्रुतिस्मृतिसिद्धस्य द्वयत्वस्य हान्यापत्तेः । न च पूर्ववाक्ये गोप्तृत्ववरणम्, उत्तरवाक्ये फलसमर्पणं प्रतिपाद्यते, यत्र वरणसमर्पणयोः पृथक्प्रतिपादनम्, तत्र शरणशब्दस्य नेयं विवक्षा, किन्तु केवलगोप्तृत्ववरणमात्रपरतैव । यद्वा-अनेकांशविशिष्टे समर्पणे फलसमर्पणस्य व्यक्तीकर-

णायोत्तरवाक्यम्, अथवा स्वरूपस्य फलस्य भरस्य च समर्पणीयतया तत्र स्वरूप-समर्पणपरं पूर्ववाक्यम्, फलसमर्पणपरमुत्तरवाक्यमिति न पौनरुक्त्यमिति वाच्यम्,—साङ्गप्रधानस्य धातुष्फलक्ष्यवेधार्थव्यापारवदङ्गीकृतस्य क्षणिकैकज्ञानत्वस्य भङ्गप्रसङ्गात् । प्रथमपक्षे "उपायार्थैकवाचकः" इति वचनविरोधात् । अनन्तरपक्षयोः स्वरूपभरसमर्पणयोर्व्यक्तीकरणाय भरसमर्पणप्रतिपादनाय च वाक्यान्तरस्यापि प्रसङ्गाच्च । अस्यानुष्ठेयार्थप्रकाशकत्वेन यथा मन्त्रमन्त्रार्थानामनुष्ठेयतया वाक्य-द्वयप्रतिपाद्यस्य वरणस्य समर्पणस्य च प्रत्येकमनुष्ठानापत्तेश्च । तस्मान्न निरपेक्षरक्षकत्वमुपायत्वमिति ।

किंच, यदि निरपेक्षरक्षकत्वमुपायत्वम्, तदा तस्य पूर्वोक्तरीत्या फलप्रदत्व-रूपतया "सामान्यात्तु । उपपत्तेश्च" इति सूत्राभ्यां सेतुत्वरूपोपायतया उक्ततया पुनश्च फलप्रदत्वव्युत्पादनाय "फलमत उपपत्तेः" इत्यधिकरणारम्भो व्यर्थः । सेतुशब्दश्च भगवता भाष्यकारेणोपायशब्देन व्याख्यातः । अयमर्थः प्रागेव प्रपंचितः । तस्मात्फलप्रदत्वरूपनिरपेक्षरक्षकत्वं नोपायत्वमिति ।

अत्रोच्यते—करणत्वम्-उपायत्वम् । करणत्वं च-व्यापारवत्कारणत्वम् । तच्च-स्वजनकत्वस्वजनकजनकत्वोभयसम्बन्धेन किंचिद्विशिष्टत्वपर्यवसितम् । वर्तते चेदं यागादौ अदृष्टद्वारा करणभूते । स्वजनकादृष्टजनकत्वस्वजनकत्वोभयसम्बन्धेन स्वर्गादिरूप-फलविशिष्टत्वाद्यागादेः । एवं कुठारादौ दृष्टद्वारा च्छेदनकरणभूते । तस्य छेदनजनकाभिघातजनकत्वात्, छेदनजनकत्वाच्च । अत एवादृष्टाभिघातादीनां तज्जन्यत्वे सति तज्जन्यजनकत्वरूपं व्यापारत्वम् । अधिकरणकारणेऽतिव्याप्तिवारणाय प्रथम-सम्बन्धनिवेशः । व्यापारेऽतिव्याप्तिवारणाय द्वितीयसम्बन्धनिवेशः । भगवत्यपि प-रमपुरुषार्थजनकादृष्टस्थानीयप्रसादजनकत्वात्, 'व्यापारेण व्यापारिणो नान्यथासिद्धिः' इति न्यायेन परमपुरुषार्थजनकत्वाच्च यागादितुल्यमेव करणत्वम् । भक्त्यादेरुपायतापक्षेऽपीदृशमेव करणत्वम् ।

न च चैत्रादेः पाकजनकव्यापारजनकत्वात्, उक्तन्यायेन पाकजनकत्वाच्च पाककरणत्वापत्त्या 'चैत्रश्चैत्रेण पचति' इति प्रयोगवारणाय कर्तृभिन्नत्वं निवेशनीयम्, एवं यदा चैत्रःकाष्ठैःपचति, मैत्रश्च तुषैःपचति, तदा 'चैत्रस्तुषैर्मैत्रःकाष्ठैःपचति' इति प्रयोगवारणाय करणव्यापारे समभिव्याहृतकर्तृव्यापाराधीनत्वमपि निवेशनीयम्, यदि च 'काष्ठैःपचति' इति वाक्ये कर्तृवाचकपदसमभिव्याहार एव नास्ति, समभिव्याहृतकर्तृव्यापाराधीनत्वमपि नैव भासते, तदा समभिव्याहृतकर्तृव्यापाराधीनत्वे व्यापारवत्कारणत्वे च खण्डशक्तिस्वीकारात्, भगवति नेदं करणत्वम्, तस्य कर्तृभिन्नत्वाभावात्, प्रसादात्मकतदीयव्यापारस्य तदीयव्यापारान्तराधीनत्वाभावादिति वाच्यम्,–"स स्वेनैव फलप्रदः फलमपि स्वेनैव नारायणः" इत्यादिमहाकविप्रयोगानुसारेण स्वातन्त्र्येण कर्तृभिन्नत्वमनिवेश्य व्यापारवत्कारणतायां कर्तृत्वानवच्छिन्नत्वस्यैव निवेशनीयत्वात्। इत्थं च भगवन्निष्ठायाःपरमपुरुषार्थहेतुभूतप्रसादकारणतायाःपुरुषकारगुणवैशिष्ट्याद्यवच्छिन्नत्वेन परमपुरुषार्थप्रधानकर्तृत्वानवच्छिन्नत्वात्। एवं करणव्यापारे समभिव्याहृतकर्तृव्यापाराधीनत्वमनिवेश्य समभिव्याहृतकर्तृभिन्नव्यापाराधीनत्वे करणानुशिष्टतृतीयादेश्शक्तिस्स्वीक्रियते। तथा च भगवद्व्यापारस्यान्यव्यापारानधीनत्वाद्भगवतःकरणत्वोपपत्तिः।

न चैवं यदा चैत्रो मैत्रश्चैकेनैव काष्ठेन पचति, तदा 'चैत्रःकाष्ठेन पचति' इति प्रयोगानुपपत्तिः, तत्र करणभूतकाष्ठव्यापारस्य चैत्रमैत्रोभयव्यापाराधीनतया समभिव्याहृतकर्तृभूतचैत्रभिन्नमैत्रव्यापाराधीनत्वादिति वाच्यम्,– समभिव्याहृतकर्तृव्यापाराधीनो यस्तद्भिन्नव्यापाराधीनव्यापारस्तद्भिन्नत्वे शक्तिस्वीकारात्। प्रकृते चैत्रमैत्रव्यापाराधीनस्यापि काष्ठव्यापारस्य चैत्रव्यापाराधीनत्वेन समभिव्याहृतव्यापारानधीनतद्भिन्नव्यापाराधीनत्वाभावेन तादृशप्रयोगोपपत्तेः। यदि च कार्यमात्रं प्रति तत्तत्कर्तुर्नैककर्तृत्वेन कारणता, किन्तु तत्तदसाधारणधर्मपुरस्कारेण। तत्तद्व्यक्तित्वेन वा। एवं च चैत्रादिनिष्ठपाकादिकारणताया अपि कर्तृत्वानवच्छिन्नत्वेन 'चैत्रश्चैत्रेण पचति' इति प्रयोगापत्तिरिति विभाव्यते, तदा कृतिजनकतावच्छेदका-

नवच्छिन्नत्वस्यैव व्यापारवत्कारणतायां निवेशनीयत्वात् । एवं च चैत्रादिनिष्ठायाः पाकानुकूलव्यापारकारणतायास्तदनुकूलकृतिकारणतायाश्चैकधर्मावच्छिन्नत्वेन कृतिजनकतावच्छेदकधर्मानवच्छिन्नव्यापारवत्कारणतायाश्चैत्रादावभावेन न तादृशप्रयोगापत्तिः । भगवति फलानुकूलकृतिजनकतायास्तत्तत्फलसाधनानुष्ठातृविषयसाधारणतया पुरुषकारगुणविग्रहाणां तत्रानुपयोगेन फलानुकूलकृतिजनकतावच्छेदकानवच्छिन्नत्वस्य सिद्धसाधननिष्ठविषये असाधारणीभूतयां पुरुषकारादिप्रयोज्यायां तदीयपरमपुरुषार्थहेतुभूतनिर्हेतुकप्रसादजनकतारूपायां व्यापारवत्कारणतायां विद्यमानतया निरुक्तकरणत्वोपपत्तिः । न च "स स्वेनैव फलप्रदः" इत्यत्र 'स्वेन' इति न करणे तृतीया, येनोक्तगुरुभूतधर्मे तृतीयादेशशक्तिस्स्वीकरणीया स्यात्, किन्तु हेतावेवेति वाच्यम्,–फलप्रदस्य हेतुताया उक्तिमन्तरेणैव सिद्धतया 'स्वेनैव' इत्यस्य वैयर्थ्यापत्तेः ।

न च ब्रह्मणःकरणत्वाङ्गीकारे "विकरणत्वान्नेति चेत्तदुक्तम्" इति सूत्रविरोधः । तत्र ब्रह्मणः करणाभावेन विचित्रकार्योत्पादनं न सम्भवतीति पूर्वपक्षं कृत्वा "श्रुतेस्तु शब्दमूलत्वात् । आत्मनि चैवं विचित्राश्चहि" इत्यत्र ब्रह्मणो विचित्रानन्तशक्तियोगस्य प्रतिपादिततया करणाभावेऽपि विचित्रकार्योत्पादनं सम्भवत्येवेति सिद्धान्तितमिति वाच्यम्,–ब्रह्मणःकरणत्वेन करणान्तराभावस्यैव तत्राभिप्रेतत्वात्, स्वात्मककरणस्य तत्रानिषिद्धत्वात् । लोके स्वभिन्नकरणमपेक्ष्यैव कर्तुःकार्योत्पादनदर्शनात्, तन्न्यायेनैव तत्र पूर्वपक्षस्य कृतत्वेन तदविरोधात् । अत एव भाष्यकारैःश्रुतप्रकाशिकाचार्यैश्च "उत तमादेशमप्राक्ष्यः" इत्यत्र "अकर्तरि च कारके संज्ञायाम्" इति कर्तृभिन्नकारक एव घञो विहिततया करणार्थे घञ्प्रत्ययमाश्रित्य करणत्वेनापेक्षितप्रशासनकर्तृबोधस्स्वीकृतः । तदुक्तं भाष्ये प्रकृत्यधिकरणे "आदिश्यते–प्रशिष्यतेऽनेनेत्यादेशः । "एतस्य वाक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतेः । साधकतमत्वेन कर्ता विवक्षितः" इति । तत्र टीका "प्रत्ययार्थः–कर्म, प्रकृत्यर्थः-उपदेशः, उपदेश्यमित्यर्थः इत्यादेशशब्दःपरैर्व्याख्यातः । तद्व्यावृत्त्यर्थं व्याचष्टे–आदिश्यत

इत्यादिना । 'प्रशिष्यते' इति प्रकृत्यर्थव्याख्यानम् । 'अनेन' इति प्रत्ययार्थव्याख्यानम् । "अकर्तरि च कारके संज्ञायाम्" इति घञः कर्तृव्यतिरिक्तार्थविषयत्वात्, 'आदिशतीत्यादेशः' इत्यनुक्तिः । अतः 'आदिश्यते प्रशिष्यतेऽनेने' त्येवोक्तम् । प्रशासितृत्वे ब्रह्मणस्सिद्धे हि एवं वर्णनीयमित्यत्राह—एतस्य वेति । अकर्त्रर्थप्रत्ययान्तस्य कथं शासितृवाचित्वमित्यत्राह—साधकतमत्वेनेति । अव्यवहितसाधनत्वं साधकतमत्वम् । तथात्वेन कर्ता विवक्षितः । "विवक्षातः कारकाणि भवन्ति" इति न्यायादिति भावः" इति ।

तथा जिज्ञासाधिकरणश्रुतप्रकाशिकायाम् "उपक्रमे तावत् "उत तमादेशमप्राक्ष्यः" इत्यत्रादेशशब्देन प्रशासिताभिधीयते । अत्र श्लोकावाचार्यपादैरुक्तौ "छान्दोग्ये केचिदाहुर्दिशविरुत तमादेशमप्राक्ष्य इत्यत्राङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्ति घञन्तः । नो कर्तर्यस्ति कर्मण्यगाणि घञिह सत्कर्तृशास्तौ न कर्म स्यात्स्यात्कर्मोपदेशे तदिदमुततमादेशवाचोपदेश्यम् ॥ अत्र ब्रूमः प्रशास्ति वदति दिशिरसावाङ्मुखो नोपदेशं शास्तौ सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसङ्गः । युक्तोऽसाधारणोक्त्या घञगाणि करणेऽप्यत्र वैवक्षिकत्वं शाब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा" इति । आदेशशब्देन-उपदेश्यमुच्यते । प्रकृत्यर्थः—उपदेशः । प्रत्ययार्थः—कर्मत्वम् । "अकर्तरि च कारके संज्ञायाम्" इति कर्तृव्यतिरिक्तकारके घञो विहितत्वात्, उपदेशे ब्रह्मणः कर्मत्वोपपत्तेश्च । प्रशासने तु ब्रह्म न कर्म, अपि तु कर्तृ । कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधिः । नात्र कर्तरि कप्रत्यय उपपद्यते । "क्ङिति च" इति गुणप्रतिषेधात्, आदेशशब्दरूपासिद्धेः । नापि पचाद्यच्प्रत्यय उपपद्यते । दिशिधातोरिगुपधत्वेन "इगुपधात्कः" इत्यपवादसूत्रेण कप्रत्ययप्राप्तेर्गुणाभावात् । अतो घञ्प्रत्ययान्त एवायमादेशशब्दः । स च प्रत्ययः कर्तर्यविहित इति कर्मार्थकत्वस्यैव युक्तत्वात्, उपदेश्यमेवादेशशब्दवाच्यमिति ।—अत्रोच्यते ।—प्रकृत्यर्थश्शासनम् । प्रसिद्धिप्राचुर्यात् । अन्यथा स्वारस्यभङ्गात् । "आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः । उपपूर्वस्तु नियोज्यप्रयोजनवचनः" इति हि न्यास-

कारः। नियोक्तरि प्रयोजनं यस्य तस्यार्थस्य वाचक इत्यर्थः। एवमन्यत्रापि। किंचोपदेश्यत्वं-लौकिकालौकिककर्मब्रह्मभागार्थसाधारणम्। प्रशासितृत्वं तु ब्रह्मणोऽसाधारणम्। "अन्तःप्रविष्टश्शास्ता जनानाम्" "एतस्य वाक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात्। निरुपाधिकोपदेश्यत्वं ब्रह्मणोऽसाधारणमिति चेन्न। इष्टप्राप्त्यनिष्टनिवृत्तितत्साधनेषु साधारण्यात्। यद्यप्यपरिमितसुखप्राप्तिदुःखनिवृत्त्यादि साक्षादुपदेश्यं स्यात्, तथापि संसारानिवृत्तिब्रह्मतदुपासनानामुपदेश्यत्वं साधारणम्। प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम्। अत उपदेश्यत्वकथनवैयर्थ्यं च। ननु "येनाश्रुतम्" इत्यादिनैकवाक्यत्वात्, स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणमिति चेत्, तथापि तादृशमुपदेश्यत्वं प्रतिज्ञावाक्येन प्रष्टव्यत्वोक्त्या चार्थसिद्धमिति अनपेक्षितोपदेश्यत्वकथनादपि अपेक्षितं, प्रशासितृत्वमेव वाच्यमिति युक्तम्। "येनाश्रुतम्" इत्युपादानत्वे सिद्धे प्रशासितृत्वेन निमित्तत्वं सिध्येत्, निमित्तान्तरे सति ह्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते, अतःप्रतिपिपादयिषितवस्तुनोऽपेक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितम्। घञ्प्रत्ययस्य करणे व्युत्पन्नत्वात्, "विवक्षातःकारकाणां प्रवृत्तिः" इति शाब्दोक्तन्यायेन कर्तर्यैव करणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते। "अकर्तरी" ति सूत्रस्य प्रयोजनम्-करणत्वविवक्षया विना कर्तर्यसाधुत्वेन प्रयोगनिवृत्तिः। उपदेशपक्षे-प्रकृत्यर्थास्वारस्यम्, प्रत्ययस्वारस्यं च। प्रशासनपक्षे-प्रत्ययास्वारस्यम्, प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम्। अतःप्रशासनमेवादेशशब्दाभिधेयमिति स्वीकर्तुं युक्तम्" इति।

तथैव वेदार्थसंग्रहश्रुतप्रकाशिकायाम् "'आदिश्यतेऽनेनेत्यादेशः' इति प्रत्ययार्थव्याख्यानम्। 'आदेशःप्रशासनम्' इति प्रकृत्यर्थव्याख्यानम्। अत्र "अकर्तरि च कारके संज्ञायाम्" इति घञःकर्तृव्यतिरिक्तकारके विहितत्वात्, ब्रह्मणःप्रशासने कर्तृत्वात्, उपदेशकर्मत्वोपपत्तेश्च प्रकृत्यर्थःउपदेशः, प्रत्ययार्थः-कर्म च' इति परैर्व्याख्यातम्। तत्र प्रकृत्यर्थास्वारस्यम्, प्रत्ययार्थस्वारस्यम्। अस्मत्पक्षे प्रकृत्यर्थ-

स्वारस्यम्, प्रत्ययार्थास्वारस्यम् । कर्तृव्यतिरिक्तकारकविषयस्य घञः कथं कर्तृर्थत्वम्? "विवक्षातःकारकाणि भवन्ति" इतिन्यायेन कर्तुरेव करणान्तरानिरपेक्षत्वलक्षणेन करणसाधर्म्यरूपेण साधकतमत्वेन करणत्वविवक्षया घञ्प्रत्यय उपपद्यते । एतदभिप्रायेण 'आदिश्यतेऽनेन' इत्युक्तम् । नत्वादिशति इति । विवक्षया कारकप्रवृत्तिश्चेत् "अकर्तरी" ति विधानस्य किं प्रयोजनम्, स्वतःप्राप्तत्वम्-कर्तृव्यतिरिक्तकारकस्य । कर्तरि करणत्वादिविवक्षया कर्तृर्थत्वमस्वरसमिति विभागःप्रयोजनम् । सूत्रस्य प्रयोजनवत्त्वेऽपि स्वारस्यमस्वारस्यं च तुल्यं चेत्, किमनेन प्रयोजनान्तरेण इति चेत्, उच्यते,—परपक्षे प्रत्ययार्थस्यैव स्वारस्यम्, अस्मत्पक्षे स्वारस्यद्वयमस्ति, अर्थस्वारस्यं शब्दस्वारस्यं चेति । प्रकृत्यर्थस्वारस्यं तावत्सिद्धम् । विवक्षितविशेषणस्यासाधारणाकाराभिधानं स्वतःप्राप्तम् । सर्वप्रशासितृत्वं ब्रह्मासाधारणो धर्मः। उपदेश्यत्वं तु कर्मस्वरूपादेस्साधारणम् । किंच 'अपेक्षितविधेरनपेक्षितविधानं दुर्बलम्' इति न्यायेनात्रावश्यापेक्षितप्रशासितृत्वज्ञापनमेव युक्तम् । नानपेक्षितोपदेश्यत्वज्ञापनम् । तस्माच्छब्दस्वारस्यमर्थस्वारस्यं चेति स्वारस्यद्वयविभवादयमेवार्थः" इति ।

यत्तु अत्र छान्दोग्यप्रकाशिकायां रङ्गरामानुजमुनिभिरुक्तम्—"करणत्वस्यारोपेण घञ्समर्थनमपि अनुचितम् । आरोपस्यानुचितत्वात् । ननु करणत्वस्य नाध्यारोपः, तस्य सिद्धत्वादिति चेन्न, तथा सति सिद्धान्ते प्रत्ययास्वारस्याभ्युपगमस्यायुक्तत्वात् । अत एव 'आसिश्छिनात्ति' इत्यादौ सौकर्यातिशयविवक्षया "ब्रह्मदंष्ट्रिरुत्कर्षात्" इति न्यायेन करणे कर्तृत्वारोपेऽपि न कर्तरि करणत्वारोपसम्भवः । तथा सति राजनि भृत्यत्वारोपस्येवानर्थावहत्वात् । अत एव "साधकतमं करणम्" इति सूत्रे अधिकरणस्थाल्यास्तनुकपालतया साधकतमत्वविवक्षया 'स्थाल्या पचाति' इति प्रयोगमुपपाद्य 'न चैवं कर्तुरपि करणत्वविवक्षाप्रसङ्गः, भिन्नजातीयत्वात् । सकलसाधनविनियोगकारी खल्वसौ । न हि 'शतधनो निष्कधनेन स्पर्धितुं प्रभवति' इति कर्तुःकरणत्वाभावस्यैवोपपादितत्वात । निक्षेपरक्षायाम् 'भगवतो रक्षाकरणत्वानुसन्धानं प्रपत्तिः, इति पक्षे करणस्य कर्तृत्वासम्भवेन जीवस्यैव रक्षकत्वमापतेदिति कर्तृत्व-

करणत्वविरोधस्य, भगवति करणत्वानुसन्धाने "अत्यहष्टिरुत्कर्षात्" इति न्यायविरोधस्य च प्रतिपादितत्वात्। "शक्तिविपर्ययात्" इति सूत्रे 'अन्तःकरणस्य कर्तृत्वे ततोऽन्यत्करणं स्यादिति अन्तःकरणादतिरिक्तं करणान्तरमभ्युपगन्तव्यं स्यात्' इति परैरप्युक्तत्वाच्च।

किंच, प्रशासनकर्तुःकरणत्वसम्भवे परमात्मनःप्रशासनकर्मत्वस्यापिसम्भवात्, तदसम्भवोक्तिर्विरुध्येत। किंच करणत्वे विवक्षिते "करणाधिकरणयोश्च" इति परेण ल्युटा बाधितत्वेन घञो न प्रसङ्गः। न च "हलश्च" इत्यनेन घञःप्रसङ्गः। तत्रापि "सञ्ज्ञायामि" त्यनुवृत्तेः। न च त्वन्मतेऽपि कर्मणि घञ् न स्यात्, "अकर्तरि च कारके संज्ञायाम्" इति संज्ञायामेव घञो विधानात् इति वाच्यम्, "अकर्त्तरि च" इत्यत्र चकारस्य भिन्नक्रमत्वमाश्रित्यासंज्ञायामप्यस्तीति पदमञ्जर्यादौ समर्थितत्वात्। "संज्ञाकरणानर्थक्यं च सर्वत्र घञो दर्शनात्" इति वार्तिककृतोक्तत्वाच्च।

किंच, घञः करणार्थत्वे "उपक्रमे आदेशशब्देन प्रशासिताभिधीयते" इति यदुक्तम्, तद्विरुध्येत। प्रशासनकरणत्वस्यैवाभिहितत्वेन तत्कर्तुरनभिहितत्वात्। यच्चोक्तम् "प्रशासितृत्वमसाधारणम्" इति तदपि न। आदेशशब्देन करणत्वमात्राभिधाने प्रशासितृत्वानाभिधानात्। तदभिधानेऽपि निरुपाधिकप्रशासितृत्वस्येव मुख्योपदेश्यत्वस्यापि ब्रह्मासाधारणत्वात्। अत एव जिज्ञासासूत्रे 'ब्रह्मणः' इति कर्मणि षष्ठीपरिग्रहात्, ब्रह्मण एवाभिधानिकजिज्ञासाकर्मत्वम्, तदुपासनादीनां त्वाक्षेपमित्युक्तम्।

किंच, आदेशशब्दमात्रस्यातिप्रसङ्गमाशंक्य "तम्" इति विशेषणोपादानात्, अवश्यम् "तम्" इत्यस्यादेशविशेषकत्वमभ्युपेयम्, यदि ह्यादेशशब्दस्यैव निरुपाधिकप्रशासितृत्वमर्थः, तदा तस्य परमात्मासाधारणत्वात् तच्छब्दो विशेषको न स्यात्।

यदपि चोक्तम्—"प्रष्टव्यत्वकथनेनोपदेश्यत्वं सिद्धमिति तत्कथनस्यानपेक्षितत्वात्, प्रशासितृत्वमेवार्थः" इति, तन्न। यद्यपि पूर्वं नाप्राक्षम्, अधुना स्वयमेव

ज्ञास्यामीति बुद्धिं व्युदसितुमुपदेष्टव्यत्वकथनस्यैवापेक्षितत्वात् । अत एव "तं त्वौपनिषदं पृच्छामि" इत्यादौ प्रष्टव्यस्योपदेश्यत्वलक्षणौपनिषदत्वकथनम् ।

यच्चोक्तम्—सर्वविज्ञानप्रतिज्ञासिध्यर्थं निमित्तत्वमपेक्षितम्" इति, तन्न । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाबलात्, उपादानत्वस्यैव तदन्यथानुपपत्त्या निमित्तत्वस्यापि लाभसम्भवेन तस्य पृथगवक्तव्यत्वात्, तदनुपपत्तेर्भवतैवोक्तत्वाच्च ।

वस्तुतस्तु निमित्तान्तरसद्भावे एकविज्ञानेन सर्वविज्ञानमनुपपन्नमित्युक्तिरप्यसङ्गता, नित्याविभूत्यज्ञानेऽपि एकविज्ञानेन सर्वविज्ञानं यथोपपद्यते, कार्यवर्गस्य ज्ञातत्वात् । सर्वशब्दस्य इदङ्कारगोचरबहुभवनसङ्कल्पपूर्वकसृष्टिमात्रविषयत्वात् । तथा तादृशनिमित्तान्तरसद्भावेऽपि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कुतो न सङ्गच्छत इति ।

अत्रोच्यते—"एष आदेशः" इत्येवं पृथगुपदिष्टयोः "न वायुक्रिये पृथगुपदेशात्" इति न्यायेनादेशोपदेशयोर्भेदावश्यम्भावात्,⋯⋯ततश्च प्रकृतिस्वारस्येन नियमनापरपर्यायाज्ञापनरूपार्थे प्रतीते घञ्प्रत्ययस्य कर्तृव्यतिरिक्तकारकमात्रवाचिनो योग्यतावशात् त्वन्मते कर्मार्थकत्ववत्, अस्मन्मतेऽपि कारकवाचिनो घञ्प्रत्ययस्य सकलकारकप्रयोक्तृकर्तृलक्षणा समाश्रीयते । प्रष्टव्यवस्तुनस्तादृग्रूपत्वात् । असञ्जातविरोधिमुख्यप्रकृत्यर्थानुग्रहेण जघन्यप्रत्ययलक्षणाया आश्रयणीयत्वात् । तथा पूर्वमीमांसायां बहुष्वधिकरणेषु सिद्धान्तितत्वात् ।

वस्तुतस्तु-"उपदेशेऽजनुनासिक इत्" इति सूत्रे "करणाधिकरणयोश्च" इति ल्युटा बाधितस्य घञः "अकर्तरि च कारके" इत्यनेनाप्रसङ्गमाशंक्य "कृत्यल्युटो बहुलम्" इति घञो भाष्यकृता समर्थितत्वात्, तन्न्यायेन कर्तर्यपि तेनैव सूत्रेण घञ्सिद्धौ लक्षणाया अप्रसङ्गात्, प्रशासितृत्वार्थकत्वमेवादेशशब्दस्य युक्तम् । 'आदेशनम्-आदेशः' इति घञन्ताद्भाववाचिन आदेशशब्दात्, अर्शआद्यजन्तादपि प्रशासितृत्वार्थकत्वमेवादेशशब्दस्य युक्तमिति वयमुत्पश्यामः । एतत्सर्वमस्माभिः भावप्र-

काशिकायां प्रपंचितम्, तत्रानुसन्धेयम्" इति ॥

अत्रोच्यते—'ब्रह्मणि वास्तवकरणत्वसत्त्वे प्रत्ययास्वारस्याभ्युपगमविरोधः' इति, तदयुक्तम् । न हीदमविद्यमानकरणत्वस्यारोपेण सिद्धान्ते प्रत्ययास्वारस्यमभ्युपगम्यते, किन्तु विद्यमानकरणत्वस्यान्यथानुपपत्त्या स्वाभिन्नकरणनिरपेक्षप्रशासनकर्तृत्वमाक्षिप्यते । आक्षेपलभ्यार्थस्यापि मीमांसकरीत्या सिद्धान्ते शाब्दबोधे भानं स्वीक्रियते । तेन चापेक्षितप्रशासितृत्वबोधसिद्धावपि आभिधानवृत्त्या तद्बोधाभावेन प्रत्ययेन प्रशासितृत्वबोधनमस्वरसमित्यभिप्रायेण प्रत्ययास्वारस्यमभ्युपगतम् । अत एव "कर्तुरेव करणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते" इत्युक्तं श्रुतप्रकाशिकायाम् । विवक्षाशब्दस्य तात्पर्यार्थकत्वेनारोपार्थकत्वाभावात् ।

यदपि करणत्वारोपस्य राजनि भृत्यत्वारोपवदनर्थावहत्वमुक्तम्, तदप्यसङ्गतम् । करणान्तरनिरपेक्षकार्योत्पादनसामर्थ्यरूपातिशयितशक्तिप्रयोजकस्य करणत्वस्योत्कर्षरूपत्वेन राजनि भृत्यत्वारोपतुल्यत्वाभावात् । करणत्वस्य स्वाभिन्नकर्तृव्यापाराधीनव्यापारत्वरूपतायाः प्रागेव निराकृतत्वात् । यदपि "साधकतमं करणम्" इति सूत्रे कर्तुःकरणत्वविवक्षाया असम्भवप्रतिपादनम्, तदपि कर्तरि स्वाभिन्नकरणत्वारोपस्वभावाभिप्रायकम् । कर्तृभेदविशिष्टकरणत्वस्यैव निकर्षरूपत्वात्, तत्समानाधिकरणस्य तस्योक्तरीत्योत्कर्षरूपत्वात् । एतेन निक्षेपरक्षाकारीरक्षणं दत्तोत्तरम् ।

यच्च—'अन्तःकरणस्य कर्तृत्वे ततोऽन्यत्करणं स्यात्' इति परोक्तसंवादप्रदर्शनम्, तदपि मन्दम् । न ह्यन्तःकरणस्य परैर्वास्माभिर्वा "परास्य शक्तिर्विविधैव श्रूयते" "पश्यत्यचक्षुः" इत्यादिप्रमाणसिद्धा तादृशी शक्तिस्स्वीक्रियते । न चैवं श्रीतत्त्वत्रयव्याख्यानोपात्ततत्त्वशेखरश्रीसूक्तिविरोधः, इत्थं हि तत्रत्य श्रीसूक्तिः "अन्तःकरणमपि नात्मा भवितुमर्हति । कर्तुस्स्मरणादिकार्यस्य करणत्वेन कल्पितत्वात् । इदमेव स्मरतीति वक्तुं न शक्यते, स्मरणस्य करणाभावात् । करणमपि

स्वयमेवेति न वक्तुं शक्यम्, विरुद्धत्वात्" इतिः एवं च कर्तृत्वकरणत्वयोस्सहानवस्थानलक्षणविरोधस्यैव कण्ठोक्तत्वादिति वाच्यम्, अन्तःकरणस्याशक्तत्वेन तत्र कर्तृत्वकरणत्वयोस्सहानवस्थानलक्षणविरोधस्यैव प्रतिपादितत्वात्। "परास्य शक्तिः" इति प्रमाणसिद्धशक्तिमति भगवति कर्तृत्वकरणत्वयोस्सहावस्थाने तत्सूक्तिविरोधाभावात्। अत एवान्तःकरणस्य जीवत्वनिरासकश्रीतत्त्वत्रव्यव्याख्यानश्रीसूक्तेरपि न विरोधः। अन्यथान्तःकरणस्यापि ब्रह्मवदेव करणानिरपेक्षकार्यकरणसम्भवेन करणान्तरापत्तेरसम्भवत्।

यच्च—'प्रशासनकर्तुःकरणत्वसम्भवे तत्कर्मत्वस्यापि प्रसङ्गात्, तदसम्भवोक्तिर्विरुध्यते' इति तदपि चिन्त्यम्, न हि प्रशासनकर्मत्वस्यासम्भवात्, कर्मणि घञः-परित्यागः; सिद्धान्ते स्थूलचिदचिद्विशिष्टब्रह्म प्रति सूक्ष्मचिदचिद्विशिष्टब्रम्हण उपादानत्वाङ्गीकारेण तत्प्रत्येव ब्रह्मणो निमित्तकारणत्वावश्यम्भावेन "बहु स्यां प्रजायेय" इत्याकारकबहुभवनसङ्कल्पात्मकप्रशासनवत्त्वेनैव निमित्तकारणत्वस्य वक्तव्यतया तादृशसङ्कल्पविषयत्वरूपप्रशासनकर्मत्वस्य स्थूलचिदचिद्विशिष्टब्रम्हणि सत्त्वेन प्रशासनकर्मत्वासम्भवस्योक्तसम्भवग्रस्तत्वात्। "येनाश्रुतं श्रुतम्" इत्याद्युत्तरवाक्यस्योपादनत्वाभिप्रायकतया, उपादानत्वस्य कार्याभिन्नत्वे सति कारणत्वरूपतया "येन" इत्याद्युत्तरवाक्ये कारणत्वमवश्यम्प्रतिपादनीयम्। तच्च "उत तमादेशमप्राक्ष्यः" इति पूर्वप्रकृतादेशपरामर्शिना यच्छब्देनैव प्रतिपादनीयम्। आदेशशब्दस्य प्रशासनकर्मत्वार्थकत्वे, उत्तरवाक्यस्थयच्छब्देन प्रकृतं प्रशासनकर्मैव परामृश्येत। प्रशासनकर्मत्वं च न कारणत्वम्, किन्तु कार्यत्वमेव। प्रशासनस्य सविषयकसङ्कल्परूपतया सविषयकक्रियाकर्मत्वस्य विषयतारूपत्वात्, सङ्कल्पस्य स्वविषयं प्रति कारणतया सङ्कल्पविषयतायास्तत्कार्यतावच्छेदकत्वेन तादृशसङ्कल्पविशिष्टब्रम्हकार्यतावच्छेदकतया कार्यत्व एव पर्यवसानात्। तादृशसङ्कल्पवत्त्वेन ब्रह्मणो निमित्ततया सङ्कल्पात्मकप्रशासनस्य कारणतावच्छेदकधर्मरूपत्वेन कारणत्वे पर्यवसानाच्च। अत एव-प्रशासितृत्वस्यापेक्षितत्वोक्तिः। कथं तर्हि "कर्तृ शास्तौ न कर्म" इति प्रशासनक-

मेत्वाभावोक्तिरिति चेत्, पूर्वपक्षिणा स्थूलचिदचिद्विशिष्टस्य कार्यत्वानभ्युपगमात्, सिद्धान्तेऽपि प्रशासनकर्मत्वे प्रत्ययस्वारस्यपरित्यागः उपपादनीयः। उपादानत्वं प्र-सनुपयोगादेवेति न कोऽपि दोषः।

यदपि "करणाधिकरणयोश्च" इति परेण ल्युटा बाधितत्वेन करणे घञेव, न-सम्भवतीति, तदपि न. "उपदेशेऽजनुनासिक इत्" इति सूत्रे उपदेशशब्दे "करणा-धिकरणयोश्च" इति ल्युटा बाधितस्य घञोऽप्रसङ्गमाशंक्य "कृत्यल्युटो बहुलम्" इति घञः भाष्यकारेण समर्थितत्वस्य तेनैवोक्ततया, आदेशशब्देऽपि करणे घञस्सम्भ-वात्। न च करणे घञाश्रयणेन कर्तृत्वस्यार्थत्वमपेक्ष्य "आक्षेपतःप्राप्ताभिधानिक-स्यैव ग्राह्यत्वात्" इति न्यायेन तेनैव बहुलग्रहणेन कर्तर्येव घञाश्रीयतामिति वाच्य-म्, करणे घञाश्रयणे हि ब्रह्माणि करणत्वाभिधानेन स्वाभिन्नकरणनिरपेक्षकर्तृत्वम-र्थात्सिध्येत्, करणान्तरस्य कर्तृन्तरस्य वा सद्भावे हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा नोपपद्यते। करणान्तरस्य कर्तृन्तरस्य च ब्रह्मवदेव जगत्कारणतया तयोर्ब्रह्मकार्य-त्वाभावेन ब्रह्मविज्ञानेन तयोर्विज्ञानासिध्या सर्वविज्ञानासिद्धेः। न च "येनाश्रुतम्" इत्यादिवाक्ये "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवति" इति मुण्डकबृहदारण्यकश्रुत्यनुसारेण "इदं सर्वम्" इत्यध्याहारेऽपि अध्याहृतसर्वशब्दस्य सर्वशरीरकब्रह्मपरतया, "येन" इति तृतीयाया अभेदार्थकतया सर्वशरीरकब्रह्माणि य-त्पदार्थब्रह्माभेदबोधेन कर्तृन्तरकरणान्तरसद्भावेऽपि तद्घटितसर्वशरीरकब्रह्माणि यत्प-दार्थब्रह्माभेदस्याबाधान्नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अनुपपत्तिरिति वाच्यम्, कार्याभिन्नत्वे सति कारणत्वस्य स्वाभिन्नत्वस्वनिरूपितकारणत्वोभयसम्बन्धेन किंचि-द्विशिष्टत्वपर्यवसितस्यैवोपादानत्वरूपतया तत्र सर्वपदवाच्यसर्वशरीरकब्रह्माणि यच्छ-ब्दवाच्यब्रह्माभेदमात्रबोधनेनोपादानतैकदेशभूतकार्याभिन्नत्वलाभेऽपि सर्वशरीरकब्रह्म-निरूपितकारणत्वस्यापि बोधनमावश्यकम्, अन्यथाभेदमात्रस्यातिप्रसक्तत्वेनोपादा-नत्वस्यालाभात्। अतो यच्छब्दपरामृष्टप्रकृतादेशघटकप्रशासनस्य कर्माकाङ्क्षायां स-र्वपदार्थस्यैव कर्मतयान्वयस्स्वीक्रियते। यथा 'पाचकेन तण्डुल आनीयते' इत्यादौ

तण्डुलस्य मुख्यविशेष्यतया पचधात्वर्थे पाके कर्मतासम्बन्धेन प्रकारतया चान्वयः, अन्यथा तद्वाक्येन पाककर्माकांक्षाया अनिवृत्तेः । यथा 'चैत्रो मातरमभिवादयति' इत्यादिवाक्ये चैत्रस्य विशेष्यतया मातृत्वनिरूपकतया चान्वयः, अन्यथा 'कस्य मातरम्' इति जिज्ञासाया अनिवृत्तेः । ततश्च यच्छब्दार्थोद्देशघटकाङ्पूर्वकदिशिधात्वर्थप्रवृत्तिनिवृत्त्यनुकूलसङ्कल्पघटकप्रवृत्तिनिवृत्त्योराधेयतासम्बन्धेन सर्वपदार्थस्य स्थूलावस्थसर्वचिदचिच्छरीरकब्रह्मणोऽन्वयः । निरूपकतासम्बन्धेन धात्वर्थतावच्छेदकफलान्वय्याधेयत्वस्य कर्मतारूपत्वात् । तादृशब्रह्मनिष्ठे च प्रवृत्तिनिवृत्ती तन्निष्ठस्थूलावस्थातदभावरूपे । तादृशब्रह्मनिष्ठस्थूलवैशिष्ट्यरूपावस्थानुगुणसङ्कल्पवत्त्वेन तादृशावस्थाकारणत्वलाभे सति, सिद्धान्तेऽवस्थाकारणस्यैव तद्विशिष्टकारणतया तादृशावस्थाविशिष्टब्रह्मकारणताया लाभेनोपादानत्वलाभः । इत्थं च-कर्त्रन्तरकरणान्तरसद्भावे तयोस्तदीयावस्थयोर्वा ब्रम्हकार्यत्वाभावेन तद्घटितसर्वशरीरकब्रम्हणः ब्रह्मकार्यत्वासम्भवेन "येनाश्रुतम्" इत्यादिवाक्यार्थस्य बाधापत्तेः ।

न च धात्वर्थतावच्छेदकफलान्वय्याधेयत्वमात्रं न कर्मत्वम्, किन्तु तद्धात्वर्थतावच्छेदकफलान्वय्याधेयत्वे सति तद्धात्वर्थक्रियावद्भिन्नत्वम्, अन्यथा यदा चैत्रो ग्रामं गच्छति, तदा चैत्रस्स्वं गच्छतीत्यादिप्रयोगापत्तिः, ग्रामनिष्ठसंयोगानुकूलाक्रियाया इव स्वनिष्ठसंयोगानुकूलक्रियाया अपि चैत्रादावबाधितत्वात्, अतो भेदस्यापि कर्मप्रत्ययार्थत्वमित्यभ्युपगन्तव्यम्, भेदे च प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः, भेदस्य च क्रियायां प्रतियोगितावच्छेदकत्वसम्बन्धेनान्वयः । इत्थं च-स्थूलत्वविशिष्टब्रम्हणि प्रशासनरूपक्रियावद्भेदाभावेन, न तस्य प्रशासनकर्मत्वसम्भव इति वाच्यम्,— 'चैत्रस्स्वं प्रहरति, भिनत्ति' इत्यादिप्रयोगेण कर्मप्रत्ययार्थभेदप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति धातुजन्यकर्मकर्त्रुभयनिष्ठत्वोपलक्षितफलोपस्थितेर्विशेष्यतासम्बन्धेन हेतुत्वोपगमात्, यत्र 'ग्रामं गच्छति, त्यजति' इत्यादौ संयोगविभागरूपफलयोरुभयनिष्ठत्वम्, तत्रैव द्वितीयार्थभेदस्य क्रियायामन्वयः, 'प्रहरति, भिनत्ति' इत्यादौ दुःखावयवविभागरूपफलयोः कर्ममात्रनिष्ठत्वेन नोभयनिष्ठत्वम्,

न तत्र भेदस्य शाब्दबोधे भानम्। यदा मैत्रं प्रहरति, तदा स्वनिष्ठदुःखजनकव्यापारानुकूलकृतेश्चैत्रादावभावादेव 'चैत्रस्स्वं प्रहरति' इत्यादिप्रयोगवारणसम्भवेन तत्र भेदस्य शाब्दबोधे भानानङ्गीकारात्। तस्मात्स्थूलविशिष्टब्रह्मणस्तत्कर्तृकप्रशासनकर्मत्वं सम्भवत्येव।

न च कर्मत्वकर्तृत्वयोर्विरोधाभावे सर्वत्रप्रसिध्यधिकरणगुणसूत्रेण "कर्मकर्तृव्यपदेशात्" इत्यनेन "एतमितःप्रेत्याभिसम्भावितास्मि" इति ब्रह्मणःप्राप्तिकर्मत्वव्यपदेशात्, तत्कर्तृत्वेन व्यपदिष्टजीवभेदसाधनं कथं सङ्गच्छत इति वाच्यम्, प्राप्तेस्संयोगजनकव्यापाररूपत्वेन तत्कर्मत्वस्य भेदगर्भतया तत्सङ्गतेः। अत एव 'लूयते केदारस्स्वयमेव' "आतिसुरभिरभाजिपुष्पश्रिया"इत्यादौ कर्मकर्तरि लकारं शाब्दिका अङ्गीकुर्वन्ति। न चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाबलादेव कर्तृकरणान्तरानिषेधस्सिध्येदिति वाच्यम्, लोकदृष्टकर्तृकरणान्तरसद्भावशङ्कया सर्वविज्ञानप्रतिज्ञायां सङ्कोचशङ्काया अन्यपरताशङ्काया वा जननेनाप्रामाण्यज्ञानानास्कन्दितशाब्दबोधानुदयात्। आदेशशब्देन कर्तृकरणान्तरानिषेधे हि लोकदृष्टव्याप्तिबलाधीनानुमानस्यागमबाधेन कर्तृकरणान्तरसद्भावशङ्काया अनुदयात्।

न च श्रुतप्रकाशिकायां श्रुत्यन्तरानुसारेण "श्रुतेन मतेन विज्ञातेन" इत्यध्याहारस्योक्तत्वात् "न तु ब्रह्मणस्सत्तया सर्वं श्रुतं भवतीति दार्ष्टान्तिकसामर्थ्यात् "यथा मृत्पिण्डेन" इत्यादिदृष्टान्तसामर्थ्याच्च" इत्युक्तत्वाच्च "येन" इत्यादितृतीयाया हेतुत्वार्थकत्वमेव युक्तम्, अभेदार्थकत्वे "श्रुतेन" इत्याद्यध्याहारवैयर्थ्यम्, केवलब्रह्माभेदस्य श्रुतपदार्थे शाब्दबोधविषयतावत्यबाधात्। "न तु ब्रह्मणस्सत्तया सर्वं ह्यश्रुतं भवतीति" दार्ष्टान्तिकसामर्थ्योपपादनविरोधश्च। हेतुत्वार्थकत्वे तु शाब्दधीविषयतायां ब्रह्मस्वरूपसत्ताप्रयोज्यत्वाभावेन शाब्दधीविषयब्रह्मप्रयोज्यतासिद्धये "श्रुतेन" इत्यध्याहारसार्थक्यम्, उपपादनाविरोधश्चेति वाच्यम्,—श्रुतपदार्थे शाब्दधीविषयतावति "येन" इति तृतीयार्थाभेदस्यान्वये शाब्दधीविषयतायां ब्रह्मस्वरूपाभेदप्रयोज्यताभानाय 'श्रुतेन' इत्यध्याहारसार्थक्यात्, उपपादनाविरोधाच्च। न च "स्वज्ञाने-

नान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणम्" इत्युक्त्या ब्रह्मज्ञानेनान्यज्ञानमेव श्रुतप्रकाशिकाभिमतम्, न तु ब्रह्मज्ञानेन ब्रह्मज्ञानमिति वाच्यम्,—तत्रान्यशब्दस्य स्थूलवैशिष्ट्यात्मकान्यधर्मविशिष्टब्रह्मपरत्वात् ।

न च सर्वपदार्थस्थूलविशिष्टब्रह्मणः यत्पदार्थादेशघटकप्रशासने कर्मतासम्बन्धेनान्वये, क्रियानिपातातिरिक्तनामार्थयोस्साक्षाद्भेदसम्बन्धेनान्वयो नास्तीति नियमभङ्गः, अन्यथा कर्तृत्वकर्मत्वादिसम्बन्धेन चैत्रतण्डुलादिप्रकारकपाकादिविशेष्यकबोधतात्पर्येण 'चैत्रःपच्यते, तण्डुलःपचति' इत्यादिप्रयोगापत्तेरिति वाच्यम्,—प्रातिपदिकार्थस्य मुख्यविशेष्यतयाभानस्थल एव तादृशनियमात्, तथा भानस्थले क्रियाप्रातिपदिकार्थयोरपि भेदान्वयबोधस्य 'पाचकेन तण्डुल आनीयते' इत्यादौ प्रदर्शितत्वात् । न च नित्यविभूतेस्सद्भावेऽपि यथैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यते, "आत्मनि खल्वरे" इत्यादिश्रुत्यन्तरानुसारेण "इदं सर्वम्" इत्यध्याहारेण इदंशब्दस्य प्रत्यक्षविषयार्थकतया सर्वशब्देन प्रत्यक्षविषयाणामेव ग्रहणात्, तथा कर्तृकरणान्तरसद्भावेऽपि प्रतिज्ञाया नानुपपत्तिरिति वाच्यम्,—प्रत्यक्षविषयसर्वान्तर्गतेष्वेव कयोश्चित्कर्तृत्वकरणत्वशङ्कया प्रतिज्ञायामन्यपरताशङ्कोदयेन तन्निवृत्त्यर्थमादेशशब्देन कर्तृत्वकरणत्वोक्त्या प्रत्यक्षविषयाविषयकर्तृकरणान्तरसामान्यनिषेधस्यावश्यकत्वात् । अत एव सूत्रकारेण प्रधानकारणवादे चेतनस्य प्रधानकार्यत्वाभावेन प्रतिज्ञाविरोधः "प्रतिज्ञाविरोधात्" इति सूत्र उक्तः । एवमाकाशादेरुत्पत्त्यभावे प्रतिज्ञाहानिः "प्रतिज्ञाहानिरव्यतिरेकात्" इति सूत्रे प्रपंचितः । एतेन—'वस्तुतस्तु' इत्यादिनोक्तकल्पद्वयमपि प्रत्युक्तम् । करणे घञाश्रयणावश्यकतायास्सुदूरमुपपादितत्वात्, अर्श आद्यच्प्रत्ययाश्रयणस्य गुरुत्वाच्च ।

यदपि—आदेशशब्देन प्रशासनकरणत्वाभिधानेऽपि प्रशासितृत्वानभिधानात्, तदभिधानेऽपि निरुपाधिकप्रशासितृत्वस्यैव मुख्योपदेश्यत्वस्याप्यसाधारणत्वात्, अत एव जिज्ञासासूत्रे ब्रह्मण इति कर्मणि षष्ठीपरिग्रहात्, ब्रह्मण एवाभिधानिकजिज्ञासाकर्मत्वम्, इतरेषां त्वाक्षेप्यमित्युक्तमिति, तदपि न साधीयः । ब्रह्मोपासनतत्फ-

लभ्यावृत्तस्य मुख्योपदेश्यत्वस्य दुरुपपादत्वात् । ननु ब्रह्मोपासनज्ञानस्य दुःखनिवृत्तौ तत्फलत्वज्ञानस्य च ब्रह्मज्ञानाधीनत्वात्, स्वज्ञानाधीनस्वोपासनतत्फलज्ञानकत्वमेव मुख्योपदेश्यत्वमिति चेत्, न । फलस्यैव स्वत इच्छाविषयत्वेन तदर्थत्वात् ब्रह्मतदुपासनज्ञानयोः, स्वप्रयोजनकब्रह्मतदुपासनज्ञानकत्वमेव मुख्योपदेश्यत्वमिति वैपरीत्यस्यापि सुवचत्वात् । जिज्ञासासूत्रे ब्रह्मण इति कर्मणि षष्ठीपरिग्रहेण ब्रह्मण आभिधानिकं जिज्ञासाकर्मत्वम्, इतरेषां त्वाक्षेप्यमित्युक्तिमात्रेण ब्रह्मणो मुख्योपदेश्यत्वासिद्धेः । उपासनफलयोर्जिज्ञास्यत्वाभावे फलतत्साधनयोरभावेन ब्रह्मणि जिज्ञास्यत्वमनुपपन्नमित्याकारकानुपपत्तिज्ञानेनोपासनफलयोर्जिज्ञास्यत्वसिद्धिः, ब्रह्मणस्तु वाचकपदस्य विद्यमानतया तदर्थस्य ब्रह्मणःकर्मतया जिज्ञासायामन्वयेनैव ब्रह्मणो जिज्ञासाकर्मत्वमाभिधानिकमित्युक्तिमात्रेण ब्रह्मणो मुख्योपदेश्यत्वलाभस्य पृष्टताडनाद्दन्तभङ्गतुल्यत्वात् ।

यदपि—किंचादेशशब्दमात्रस्यातिप्रसङ्गमाशंक्य "तम्" इत्येवंविशेषणदानात्, अवश्यं "तम्" इत्यस्यादेशविशेषकत्वमभ्युपेयम्, यदि ह्यादेशशब्दस्यैव निरुपाधिकप्रशासितृत्वमर्थः, तदा तस्य परमात्मासाधारणत्वात्तच्छब्दो विशेष्यको न स्यादिति,—तदपि चिन्त्यम् । "तम्" इत्यस्य कथमादेशशब्दातिप्रसङ्गवारकत्वम्, "येन" इत्याद्युत्तरवाक्यार्थपरत्वेन वा, प्रसिद्धार्थकत्वेन वा । " येनाश्रुतम्" इत्यादिवाक्यस्योत्तरत्वेन तद्घटकयच्छब्देन तच्छब्दस्यानाकांक्षितत्वेन तच्छब्दस्योत्तरवाक्यार्थपरामर्शित्वासिद्धेः । उत्तरयच्छब्दस्य तच्छब्दनिरपेक्षत्वात् । न च "यत्तदोर्नित्यसम्बन्धः" इति न्यायविरोधः, प्रक्रंस्यमानपरयत्तच्छब्दयोरेव तादृशनियमात्, प्रकृतपरयोस्तु तयोःपरस्पराकांक्षाविरहेण तादृशनियमाभावात् । प्रक्रंस्यमानपरत्वं च—उत्तरवाक्यप्रतिपाद्यतावच्छेदकधर्मावच्छिन्नतात्पर्यकत्वम् । प्रकृतपरत्वं च-पूर्ववाक्यप्रतिपाद्यतावच्छेदकधर्मावच्छिन्नतात्पर्यकत्वम् । न च यत्तच्छब्दयोः बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नशक्तत्वेन धर्मद्वयावच्छिन्नपरत्वाङ्गीकारे नानार्थकत्वापत्तिरिति वाच्यम्,—बुद्धिविषयतावच्छेदकत्वोपलक्षितवेषेणैव पूर्वोत्तरवाक्यप्रतिपा-

द्यतावच्छेदकधर्मविशेषावच्छिन्नतात्पर्यभेदमात्रस्वीकारेणोपलक्षणविधया शक्यतावच्छेदकधर्मभेदास्वीकारात् । न हि "यां यां प्रियःप्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव" इत्यादाविव "अचिन्तनीयस्तव तु प्रभावो मनीषिता द्यौरपि येन दुग्धा" इत्यादौ यच्छब्दस्य तच्छब्दाकांक्षास्ति, "यां यां प्रियःप्रैक्षत" इति वाक्यश्रवणे यच्छब्दस्य पूर्वं वाक्यान्तराभावेनोत्तरवाक्यप्रतिपाद्यतावच्छेदकधर्मविशेषतात्पर्यं ज्ञात्वा तादृशधर्मविशेषापरिज्ञानेन तावन्मात्रेण तात्पर्यविषयीभूतशाब्दबोधो न जायते । तादृशधर्मविशेषपरिज्ञानाय तच्छब्दघटितवाक्यशुश्रूषामात्रं जायते । "सा सा ह्रिया" इत्यादिवाक्यश्रवणानन्तरं निराकाङ्क्षविशिष्टवाक्यार्थबोधो जायते । "अचिन्तनीयः"इत्यादिवाक्ये तु यच्छब्दस्य पूर्ववाक्यसमभिव्याहारेण पूर्ववाक्यप्रतिपाद्यतावच्छेदकधर्मविशेषतात्पर्यज्ञानेन तादृशधर्मविशेषस्य "अचिन्तनीयः" इत्यादिपूर्ववाक्येन ज्ञाततया तदर्थं तच्छब्दघटितवाक्यान्तरशुश्रूषानुदयात् । न हि 'भूतले यो घटो वर्तते, तमानय' इत्यादाविव 'घटमानय, य इह भूतले वर्तते' इत्यादौ यच्छब्देन तच्छब्दाकांक्षा जायते । प्रपंचितं चेदं गुरुभावप्रकाशिकायामिति नात्र विस्तरः । इत्थं च "येनाश्रुतम्"इतिवाक्यघटकयच्छब्दस्य प्रकृतपरत्वेन न तच्छब्दाकांक्षा, अतो न तच्छब्दस्य "येन" इत्यादिवाक्यार्थपरामर्शित्वम् ।

किञ्च-यदि तच्छब्दस्य " येन " इत्यादिवाक्यार्थपरामर्शित्वम्, तदा " उत तमादेशमप्राक्ष्यः " इतिवाक्यात्पूर्वं " येने " त्यादिवाक्यं स्यात्; तथा न श्रुतिशैली दृश्यते । अत एव महाचार्यैस्सद्विद्याविजये तच्छब्दस्य प्रमाणप्रसिद्धार्थकत्वमुक्तम् । न च तर्हि " येन "इत्यनेनैकवाक्यतया स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणम् " इत्युक्तिः, " तथापि " इत्यङ्गीकारश्च श्रुतप्रकाशिकायां कथं सङ्गच्छत इति वाच्यम्;-अभ्युपगम्यवादतया तत्सङ्गतेः । न द्वितियः-श्रुतिप्रसिद्धार्थक तच्छब्देनोपात्तनतरफलयोर्व्यावर्तनात् । तयोरपि श्रुतिप्रसिद्धत्वात् । न च तद्व्यावर्तकविशेषणवैयर्थ्यमिति वाच्चम्;-श्रुतिप्रसिद्धत्वेनोपदेशगम्यत्वज्ञापनायैव तत्सार्थक्यात् ।

यच्च–प्रष्टृव्यत्त्वोक्त्योपदेश्यत्वमर्थसिद्धमिति तत्कथनमनपेक्षितम्, अतः प्रशासितृत्वमेवार्थ इति; तदपि न। यद्यपि 'पूर्वं नाप्राक्षम्, अधुना स्वयमेव ज्ञास्यामि' इति बुद्धिं व्युदसितुमुपदेश्यत्वकथनस्यैवापेक्षितत्वात् । अत एव "तं त्वौपनिषदं पृच्छामि" इत्यादौ प्रष्टृव्यस्योपदेश्यत्वलक्षणौपनिषदत्वकथनमिति; तदपि न क्षोदक्षमम्। 'न जाने' इत्यनुक्त्वा "नाप्राक्षम्" इत्युक्त्या पृच्छधातोः प्रश्नाधीनशाब्दबोधात्मकज्ञानविशेषार्थकत्वेन तस्यैवापेक्षितज्ञानजनकव्यापारशून्यत्वरूपस्तब्धताहेतुत्वोक्त्या, प्रश्नाधीनशाब्दज्ञानस्योपदेशमन्तराऽलाभेन 'स्वयमेव ज्ञास्यामि' इति बुद्धिव्युदासात्।

न च, जिज्ञासाज्ञानोद्देश्यकव्यापारस्यैव पृच्छधात्वर्थतया तदधीनशाब्दबोधार्थकत्वे लक्षणा; 'कच्चाश्रौषीः' इति शाब्दबोधवाचकशब्दप्रयोगमन्तरा लाक्षणिकशब्दप्रयोगस्य वैयर्थ्यश्चेति वाच्यम्;–तादृशव्यापारमात्रस्य स्तब्धतामात्रहेतुत्वाभावेन तदधीनशाब्दबोधपर्यन्तलक्षणाया आवश्यकत्वात्। "यदृच्छया श्रुतो मन्त्रश्छन्नेनाथ छलेन वा। पत्रेक्षितो वा विफलः प्रत्युतानर्थदो भवेत्" इत्युक्तानिष्टजनकशाब्दबोधव्यावर्तनाय "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" "आचार्यवान्पुरुषो वेद" "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इत्युक्तोपदेशजन्यताप्रतीत्यर्थमेव लाक्षणिकशब्दप्रयोगाच्च। पृच्छधातुना प्रश्नाधीनशाब्दबोधे लक्षिते शाब्दबोधस्योपदेशजन्यत्वमन्तरा प्रश्नाधीनत्वासम्भवेनार्थाक्षेपात्, व्यञ्जनयोपदेशजन्यताप्रतीतेः। "तन्त्वौपनिषदं पृच्छामि" इत्यत्र पृच्छधातोः जिज्ञासाज्ञानोद्देश्यकव्यापारात्मकप्रश्नवाचकत्वमेव, न तु तदधीनशाब्दबोधपर्यन्तलाक्षणिकत्वम्, अनुपपत्त्यभावात्। औपनिषदत्वोक्तिश्च-'किमर्थं पृच्छसि, स्वयमेव जानीहि "परीक्ष्य विविधोपायैः" इत्युक्ताचार्यचिकीर्षितदार्ढ्यपरीक्षानिवर्तनायेति। अतोऽस्योपदेश्यत्वमर्थात्सिध्यतीत्यलं प्रसक्तानुप्रसक्तविचारेणेति सर्वं निरवद्यम्।

इष्टानिष्टे एतादृश इति परन्दपडिग्रन्थे विस्तरेणोक्तवान् । श्रियःपतिप्पडिप्रबन्धे च "अनिष्टं नाम–अविद्या, अविद्याकार्यरागद्वेषौ, पुण्यपापरूपकर्माणि, देवादिचतुर्विधशरीराणि, आध्यात्मिकादिदुःखपरम्पराश्च । इष्टं नाम-अर्चिरादिमार्गगमनम्, परमपदप्राप्तिः, परमात्मदर्शनम्, गुणानुभवकैङ्कर्याणि च" इति सङ्क्षेपेणोक्तवान् ।। तस्मादत्रापि ते वक्तव्ये ॥ ३४ ॥

(३५) पूर्वनिर्दिष्टवस्तुन उपायत्वेन कथनस्य तात्पर्यमाह–अनेन प्राप्यमेवेति ।

मू॥ इत्ताल् प्राप्यंताने प्रापकमेन्गिरदु ॥ ३५ ॥

छा॥ अनेन प्राप्यमेव प्रापकमित्युच्यते ॥ ३५ ॥

---

(अनिष्टं नाम) इति, अविद्या-"अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः" इत्युक्तरीत्यानात्मन्यात्मबुद्धिरूपास्वे स्वप्रतिपत्तिरूपाविद्या । रागद्वेषौ-सुखानुशयी रागः, दुःखानुशयी द्वेषः । पुण्यपापरूपकर्माणि-कथं पुण्यस्याविद्याकार्यत्वम्, तद्धि देहातिरिक्तात्मज्ञानवतानुष्ठीयते; उच्यते; यथात्मनो देहादिविलक्षणत्वात्, देहात्मज्ञानमविद्या, तद्वता च पापं क्रियते; एवमात्मनो भगवच्छेषत्वात् स्वतन्त्रात्मज्ञानमपि अविद्या, तन्मूलं स्वर्गादिफलदकर्मानुष्ठानम्, इति पुण्यस्यापि अविद्याकार्यत्वोपपत्तिरिति, देहात्माभिमानिभिरजडत्वादिधर्मके आत्मनि जडत्वाद्यारोपवत्, भगवदात्मके आत्मनि स्वनिष्ठत्वारोपणम्-भ्रान्तिरेवेति अविद्यैव हि सा । देवादिचतुर्विधशरीराणि - सुरनरतिर्यक्स्थावरात्मकचतुर्विधशरीराणि ॥ ३४ ॥

व्या॥ पूर्वोक्तं विषयमुपायत्वेन कथयतानेन प्राप्यवस्त्वेव प्रापक-वस्तु इत्युच्यत इत्यर्थः ॥ ३५ ॥

(३६) पूर्वं प्राप्यवस्तुप्रसङ्गोऽस्ति वा इत्यत आह—पूर्वोक्तं त्रितयमपीति ।

मू॥ कीळ्चोन्नमून्नुं प्राप्यमिरे ॥ ३६ ॥

छा॥ पूर्वोक्तं त्रितयमपि प्राप्यं हि ॥ ३६ ॥

व्या॥ समस्तपदपूर्वपदे उक्तं लक्ष्मीविशिष्टत्वम्, कल्याण-गुणयोगत्वम्, दिव्यमङ्गलविग्रहोपेतत्वमित्येतत्त्रितयं च "श्रिया सार्धं-आस्ते" "सर्वान्कामान्-अश्नुते" "सदा पश्यन्ति" इत्यस्यानुभवविषयत्वेनोक्तत्वात्, प्राप्यं हीत्यर्थः ॥ ३६ ॥

---

लक्ष्मीविशिष्टत्वादेः प्राप्यत्वे क्रमेण प्रमाणं दर्शयति-श्रिया सार्धमिति। "वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भा-गवतैस्सह" इति पाञ्चरात्रवचनम् । (सर्वान्कामानि) ति-तैत्तिरीयोपनिषदि आनन्दवल्ल्याम् "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति । विपश्चिता ब्रह्मणा सह सर्वान्कामान् समश्नुते । काम्यन्त इति कामाः-कल्याणगुणाः । ब्रह्म-णा सह तद्गुणान्सर्वानश्नुत इत्यर्थः । दहरविद्यायां "तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इतिवद्गुणप्राधान्यं वक्तुं सहशब्दः" इति जिज्ञासाधिकरणभाष्यम्। (सदा पश्यन्ति) इति-"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति । "विष्णोः-परस्य ब्रह्मणः, परमं पदं सूरयः-सदा पश्यन्ति' इति वचनात् सर्वकालदर्शनवन्तः परिपूर्णज्ञानाः केचन सन्तीति ज्ञायते । 'ये सूरयः, ते सदा पश्यन्ति' इति वच-नव्यक्तिः । 'ये सदा पश्यन्ति, ते सूरयः' इति वा" इति वेदार्थसङ्ग्रहे ॥ ३६ ॥

(३७) तर्हि – एतत्किमित्युपायःक्रियत इत्यत आह–अस्येत्यादिना ।

मू॥ इवन् शेयलरुदियाले उपायमाक्कुहिरानित्तनै ॥ ३७ ॥

छा॥ अस्याशक्त्योपायं करोतीति ॥ ३७ ॥

व्या॥ अकिञ्चनस्यानन्यगतिकस्यास्याशक्त्या भोग्यभूतं क्षीरमौषधत्वेन ददन्निव प्राप्यभूतमात्मनं प्रापकङ्करोतीत्यर्थः॥३७॥

(३८) अनेनास्योपायस्य कश्चिदतिशय उक्त इत्याह–चरणौ शरणमित्यादिना ।

मू॥ "चरणौ शरणम्" एन्गैयाले उपायान्तरव्यावृत्तमान उपायमेन्गिरदु ॥ ३८ ॥

छा॥ "चरणौ शरणम्" इत्युक्तत्वात् उपायान्तरव्यावृत्तोपाय उत्युच्यते ॥ ३८ ॥

व्या॥ "चरणौ शरणम्" इति प्राप्यवस्तुनःप्रापकत्वेनोक्तत्वात्, प्राप्यं भिन्नं स्वयं भिन्नमित्येवंरूपोपायान्तरन्न भवति, उपायान्तरेभ्यो व्यावृत्तमुपायमिदमेवेत्यर्थ उक्त इत्यर्थः ॥ ३८ ॥

---

(अनेन) इति-प्राप्यस्यैव प्रापकत्वकथनेनेत्यर्थः ।

अस्य सिद्धोपायस्य साधनान्तरव्यावृत्तिप्रकारश्चरमश्लोकप्रकरणे वक्ष्यते॥३८॥

(३९) अनन्तरं क्रियापदस्यार्थमह-प्रपद्ये आश्रयामीति ।

मू॥ प्रपद्ये-पत्तुहिरेन् ॥ ३९ ॥

छा॥ प्रपद्ये-आश्रयामि ॥ ३९ ॥

व्या॥ एतत्पदस्य "पद्-गतौ" इति धातोस्सिद्धत्वेन गतिवाचकत्वात्, उत्तमत्वाच्च 'आश्रयामि' इत्यस्यार्थमाह ॥ ३९ ॥

(४०) इदं मानसवाचिककायिकरूपत्रिविधगतिं प्रदर्शयतीति तत्र केन करणेन आश्रयणं वदतीत्यत आह-वाचिके इति।

मू॥ वाचिकमाहवुम्, कायिकमाहवुं पत्तिनालुं पेत्तुक्कलिविल्लै, ज्ञानान्मोक्षमाहैयाले, मानसमाहक्कडवदु ॥ ४० ॥

छा॥ वाचिके, कायिके वाश्रयणेऽपि फलस्यालाभो नास्ति, "ज्ञानान्मोक्षः" इत्युक्तत्वात्, मानसेन भवितव्यम् ॥ ४० ॥

व्या॥ "भव शरणम्" इत्यादिरीत्या 'रक्षणं कर्तव्यम्', इति प्रार्थनारूपकेवलवाचिके, "अञ्जलिःपरमा मुद्रा क्षिप्रं देवप्रसा-

---

अत्र गतिः-तत्प्राप्त्यनुकूलो व्यापारः । 'ग्रामं गच्छती' त्यादौ तत्सम्बन्धानुकूलव्यापारस्यैव गछतिना बोधनादिति भावः ।

(उत्तमत्वात्)-उत्तमपुरुषत्वादित्यर्थः ॥३९ ॥

(भव शरणमि) ति-" कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान्" इति श्रीविष्णुपुराणवचनम् । (इत्यादि)-" द्वयवक्तारम्" " शरणागतशब्दभाजः"

दिनी " इत्युक्तरीत्या भगवत्प्रसादहेतुभूताञ्जलिप्रयोगे, निषाद-

---

" शरणमित्यपि वाचमुदैरयम् " इत्यादिकमिहादिशब्दविवक्षितम्। (भगवत्प्रसादहेतुभूते) ति अत्र हेतुः-ज्ञापकहेतुः । भगवत्प्रासादस्य नित्यत्वात्। प्रपञ्चितश्चैतच्छ्रीवचनभूषणमीमांसायाम्। (निषादे) ति-" श्रूयते हि कपोतेन शत्रुश्शरणमागतः " इत्युक्तनिषादवत्।

कपोतोपाख्यानञ्चेतिहाससमुच्चये नवमाध्याये प्रपञ्चितम्। तथा हि-" युधिष्ठिर उवाच। पितामह महाप्राज्ञ सर्वशास्त्रविशारद। शरण्यं पालयानस्य यो धर्मस्तं वदस्व मे ॥ १ ॥ भीष्म उवाच। महान्धर्मो महाराज शरणागतपालने। धर्मनिश्चयतत्त्वज्ञा एवमाहुर्मनीषिणः ॥ २ ॥ शिबिप्रभृतयो राजन् राजानश्शरणागतान्। परिपाल्य महात्मानस्संसिद्धिं परमाङ्गताः ॥ ३ ॥ श्रूयते हि कपोतेन शत्रुश्शरणमागतः। पूजितश्च यथान्यायं स्वमांसैश्चापि तर्पितः ॥ ४ ॥ युधिष्ठिर उवाच। कथं कपोतेन पुरा शत्रुश्शरणमागतः। स्वमांसैस्तर्पितः काञ्च स पक्षी प्राप्तवान्गतिम्॥५॥ भीष्म उवाच। शृणु राजन्कथां दिव्यां सर्वपापप्रणाशिनीम्। नृपतेर्मुचुकुन्दस्य कथितां भार्गवेण या ॥ ६ ॥ इममर्थं महाराज मुचुकुन्दो महातपाः। भार्गवं परिपप्रच्छ प्रणतः पुरुषर्षभ ॥ ७ ॥ भार्गव उवाच। धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम्। शृणुष्वावहितो राजन् गदतो मे महाभुज ॥ ८ ॥ कश्चित् क्षुद्रसमाचारः पक्षिणां कालसम्मितः। विचचार महारण्ये घोरश्शकुनिलुब्धकः ॥ ९ ॥ वक्राक्षः काकवर्णश्च रूक्षः काकरवस्तथा। यवमध्यः कृशग्रीवो ह्रस्वपादो महोदरः ॥ १० ॥ नैव तस्य सुहृत्कश्चिन्न सम्बन्धी न बान्धवः। सुतैस्सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा ॥ ११ ॥ ये नृशंसा दुरात्मानःप्राणिनां प्राणहिंसकाः। उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १२ ॥ स वै करण्डमादाय सर्वान्पक्षिगणान्भृशम्। बबन्ध पाशजालेन वनं गत्वा नराधिप ॥१३॥ एवं हि वर्तमानस्य तथा वृत्त्या दुरात्मनः।

जगाम सुमहान्कालो न च धर्ममबुध्यत ॥१४॥ निसं प्राणवधे युक्ता मांसाहारास्सु-
निर्दयाः । उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥१५॥ तस्य भार्यासहायस्य
रममाणस्य कानने । दैवयोगाद्विमूढस्य नान्या वृत्तिर्व्यरोचत ॥ १६ ॥ ततः कदा-
चिदस्याथ वनस्थस्याभवत्तदा । पातयन्निव वृक्षाग्रात्सुमहान्वातसम्भ्रमः ॥ १७ ॥
मेघसंकुलमाकाशं विद्युन्मण्डलमण्डितम् । सञ्छिन्नं हि मुहूर्तेन नौसार्थेनेव सागरम्
॥ १८ ॥ वारिधारा मुहूर्तेन सम्प्रवर्षन् शतक्रतुः । क्षणेन पूरयामास सलिलेन वसु-
न्धराम् ॥ १९ ॥ ततो धाराकुले काले सम्भ्रमान्नष्टचेतनः । शीतार्तश्च वने तस्मि-
न्नाकुलेनान्तरात्मना ॥ २० ॥ नैव निम्नस्थलं वापि नोच्चं पश्येद्विहङ्गहा । पूरितं हि
जलौघेन तस्य मार्गो वनस्य वै ॥ २१॥ पक्षिणो वातवर्षेण भीता लीनास्तथापरे ।
मृगसिंहवराहाश्च स्थलमाश्रित्य शेरते ॥ २२ ॥ महता वातवर्षेण त्रासितास्ते वनौ-
कसः । भयार्ताश्च क्षुधार्ताश्च विभ्रमन्तीह तद्वने ॥ २३ ॥ प्राणार्थी वेपमानोऽसौ
जगामार्त इतस्ततः । सोऽपश्यत्पतितां भूमौ कपोतीं शीतविह्वलाम् ॥ २४ ॥ वेपमा-
नोऽपि पापात्मा स तां पञ्जरके क्षिपत् । कपोतीं विह्वलां दीनां भर्तृहीनां मनस्विनीम्
॥ २५ ॥ स्वयं दुःखाभिभूतोऽपि दुःखं यःकुरुते परे । पापात्मा पापकारित्वान्न स
दुःखाद्विमुच्यते ॥ २६ ॥ स तु शीतैस्तथा गात्रैर्जगामैव वनेचरः । सोऽपश्यद्वनख-
ण्डञ्च मेघनीलं वनस्पतिम् ॥ २७ ॥ सेव्यमानं खगानीकैश्छाया वा सफलार्थिभिः ।
धात्रा परोपकाराय तं साधुमिव निर्मितम् ॥ २८ ॥ त्राणार्थं सर्वभूतानां पक्षिणां
च विशेषतः । अथाभवत्क्षणेनैव वियद्विमलतारकम् ॥ २९ ॥ महत्सर इवोत्फुल्लं
कुसुमैश्छुरितोदकम् । ताराढ्यं कुसुमाकारं निर्मलं चाभवत्तदा ॥ ३० ॥ घनैर्मुक्तं
ततो दृष्ट्वा लुब्धकश्शीतविह्वलः । दिशो विलोकयामास वेलश्चैव दुरात्मवान् ॥३१॥
दूरग्रामनिवासश्च तस्माद्देशादिति प्रभो । कृतबुद्धिर्वने तस्मिन्नयवसद्रजनीं तदा॥३२॥
सोऽञ्जलिं शिरसा बध्वा वाक्यमाह वनस्पतिम् । शरणं हि गतोऽस्म्यद्य भवतामिति
भारत ॥३३॥ स शिलायां शिरःकृत्वा पर्णान्यास्तीर्य भूतले । इत्युक्त्वा देवताभ्य-
श्च तासां च शरणं गतः ॥३४॥ दुःखेन महता विष्टस्ततस्सुप्तोऽथ पक्षिहा । भीष्म

उवाच । अथ तस्य तरोस्स्कन्धे कपोतो वसते चिरम् ॥ ३५ ॥ पूर्वमेव गता तस्य भार्या वाह्येन चागमत् । प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥ ३६ ॥ कामशोकाभिसन्तप्तः कपोतीं सोऽन्वचिन्तयत् । कपोत उवाच । वातवर्षो महानासीन्न चागच्छति मे प्रिया ॥ ३७ ॥ किन्तु तत्कारणं येन साद्यापि न निवर्तते । पीनोरस्का शुभग्रीवा चित्राङ्गी मधुरस्वरा ॥ ३८ ॥ यदि नागच्छते कान्ता त्यजामि जीवितं ततः । अपि स्वस्ति भवेत्तस्याः प्रियाया वनदेवताः ॥ ३९ ॥ तया विरहितं ह्यन्तश्शून्यमद्य गृहं मम । पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्वतः ॥४०॥ भार्याहीनं गृहस्थस्य शून्यमेव च तद्गृहम् । न गृहं गृहमित्याहुर्गृहिणीगृहमुच्यते ॥ ४१ ॥ गृहं तद्गृहिणीहीनमरण्यसदृशं भवेत् । यदि सा रक्तनेत्रांता चित्राङ्गी मधुरस्वरा ॥ ४२ ॥ नाद्यागच्छति मे कान्ता त्याजिष्ये जीवितं ततः । न भुंक्ते मय्यभुंक्ते सा न स्नाते स्नाति सुव्रता ॥ ४३ ॥ स्थिता भवति सासीने शेते च शयिते मयि । हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता ॥ ४४ ॥ रुष्टे तु दीनवदना क्रुद्धे च प्रियवादिनी । पतिव्रता पतिप्राणा पत्युःप्रियहितेरता ॥ ४५ ॥ यस्या स्यात्तादृशीभार्या स धन्यः पुरुषो भुवि । वृक्षमूलेऽपि दयिता यत्रतिष्ठति तद्गृहम् ॥ ४६ ॥ प्राकारोऽपि तया हीनमरण्यसदृशं भवेत् । धर्मार्थकामकार्येषु भार्या पुंससहायिनी ॥ ४७ ॥ साश्रान्तं च क्षुधार्तश्च जानीते मां तपस्विनी । तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ॥ ४८ ॥ विदेशगमने वापि सैव विश्वासकरिणी । अनुरक्ता हिता चैव भक्ता स्निग्धा पातव्रता ॥ ४९ ॥ सुरूपा सुभगा शान्ता मम प्राणसमा प्रिया । नास्ति भार्यासमं लोके नरस्यार्तस्य भेषजम् ॥ ५० ॥ यस्य भार्या गृहे नास्ति सुरूपा प्रियवादिनी । अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ५१ ॥ भीष्म उवाच । एवं विलपितं तस्य श्रुत्वा सा करुणं बहु । गृहीता शकुनिघ्नेन कपोता वाक्यमब्रवीत् ॥ ५२ ॥ कपोत्युवाच । अहोऽतीवसभाग्याहं यस्या मे दैवतं पतिः । असतोऽपि सतो वापि गुणानेवं प्रभाषते ॥ ५३ ॥ न सा स्त्री च विधातव्या यस्या भर्ता न तुष्यति । तुष्टे भर्तरि नारीणां तुष्टास्स्युस्सर्वदेवताः ॥ ५४ ॥ दावाग्निनैव निर्दग्धा

सपुष्पस्तवकालता । भस्मी भवतु सा नारी यस्यै भर्ता न तुष्यति ॥ ५५ ॥ शृणुष्वावहितः कान्त पते वक्ष्याम्यहं हितम् । प्राणैरपि त्वया नित्यं संरक्ष्यश्शरणागतः ॥ ५६ ॥ एष शाकुनिकश्शेते तव वासं समाश्रितः । शीतार्तस्य क्षुधार्तस्य अस्य पूजां समाचर ॥ ५७॥ यो हि कान्त द्विजं हन्याद्गां च लोकस्य मातरम् । शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ॥५८॥ अग्रणोद्योऽतिथिस्सायं सूर्योढो गृहमेधिनाम् । काले प्राप्तस्त्वकाले वा पूज्यस्सर्वात्मनातिथिः ॥ ५९ ॥ यस्सायमतिथिं प्राप्तं गृहासक्तो न पूजयेत् । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ ६० ॥ सर्वात्मना गृहस्थेन सम्पूज्योऽतिथिरादरात् । स हि तस्य परो धर्म उपधर्मोऽन्य उच्यते ॥ ६१ ॥ मा चास्मै त्वं कुरु द्वेषं मद्बन्धनसमुद्भवम् । स्वकृतैरेव बद्धाहं प्राक्तनैःकर्मबन्धनैः ॥ ६२ ॥ दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च । आत्मापराधवृक्षस्य फलन्त्येतानि देहिनाम् ॥ ६३ ॥ न दाता सुखदःखानां न च कर्ता च कश्चन । स्वकृतान्येव भुज्यन्ते दुःखानि च सुखानि च ॥ ६४ ॥ परो ददाति दुःखानि प्रद्वेषोऽत्र कथं नृणाम् । रोगदुःखानि तीव्राणि तान्येषां कःप्रयच्छति ॥ ६५ ॥ तस्मात्त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम् । धर्मे मनस्समाधाय पूजयैनं यथाविधि ॥ ६६ ॥ उपकारिषु यस्साधुस्साधुत्वे तस्य को गुणः । अपकारिषु यस्साधुस्स साधुस्सद्भिरुच्यते ॥ ६७ ॥ अपकारिष्वपि सदा साधुस्साध्वेव वर्तते । छेत्तारमपि गन्धेन सुखयत्येव चन्दनम् ॥ ६८ ॥ भीष्म उवच । स पत्न्यास्तद्वचश्श्रुत्वा तत्त्वधर्मसमान्वितम् । हर्षेण महता विष्टो बाष्पपर्याकुलेक्षणः ॥ ६९ ॥ तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा । उपगम्य ततश्शीघ्रं कपोतःप्राह लुब्धकम् ॥ ७० ॥ कपोत उवाच । भद्र सुखागतं तेऽस्तु ब्रूहि किं करवाणि ते । तद् ब्रूहि भगवन्क्षिप्रं तत्करोमि यदिच्छसि ॥ ७१ ॥ प्रणयेन ब्रवीमि त्वां त्वं हि नश्शरणागतः । सन्तापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥ ७२ ॥ अध्वश्रान्तमविज्ञातमतिथिं क्षुत्पिपासितम् । यो न पूजयते भक्त्या तमाहुर्ब्रह्मघातकम् ॥ ७३ ॥ शरणागतस्य कर्तव्यमातिथ्यमिह यत्नतः । पंचयज्ञप्रणीतेन गृहस्थेन विशेषतः ॥ ७४ ॥ पंचयज्ञे-

स्तु यो मोहान्न करोति गृहाश्रमी । तस्य नायं च न परो लोको भवति शाश्वतः ॥ ७५ ॥ तद् ब्रूहि शीघ्रं विस्रब्धो यथावत्करवाण्यम् । मा कुरुष्वात्र सन्देहं मा शोके त्वम्मनःकृथाः ॥ ७६ ॥ भीष्म उवाच । तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गहा। बाधते खलु मां शीतं मम त्राणं विधीयताम् ॥ ७७ ॥ समेत्याङ्गारकारान्तरानयामास पावकम् । ततश्शुष्के षुपर्णेषु तमाशु समदीपयत् ॥ ७८ ॥ सुसन्दीप्तं ततः कृत्वा तमाह शरणागतम् । प्रताप्यस्व विस्रब्धं त्वं गात्राण्यकुतोभयः ॥ ७९ ॥ एवमुक्त्वा ततःपक्षी पर्णान्यानीय भूतलात् । तथा शुष्कानि चान्यानि ज्वलनार्थं समानयत् ॥ ८० ॥ स तथोक्तस्तथेत्युक्त्वा व्याधो गात्राण्यतापयत् । अग्नेः प्रत्यागताःप्राणास्ततःप्राह विहङ्गहा ॥ ८१ ॥ लुब्धक उवाच । आहारं देहि मे शीघ्रमेषा क्षुन्मां प्रबाधते । स तस्य वाक्प्रतिश्रुत्य वाक्यमाह विहङ्गमः ॥ ८२ ॥ कपोत उवाच । न मेऽस्ति विभवःकश्चिद्येन ते नाशये क्षुधा । उत्पन्नेन हि जीवामो वयं नित्यं वने चराः ॥ ८३ ॥ सञ्चयो नास्ति चास्माकं मुनीनामिव कानने । करोमि प्रत्यहं तात यंचास्वोदरपूरणम् ॥८४॥ निस्स्वस्य साधोर्यद्दुःखमर्थितस्योपजायते। यद्यर्थिनो भवेत्तादृक्स जीवद्दुष्कृतं ततः ॥ ८५ ॥ धिङ्मां दुष्कृतकर्माणं कृपणं व्यर्थजीवितम् । योऽहं विधात्रा विहितः केवलात्मोदरम्भरः ॥ ८६ ॥ सहस्रं भरते कश्चिच्छतमन्ये दशापरे । मम त्वकृतपुण्यस्य हीनस्यात्मापि दुर्भरः ॥ ८७ ॥ कामं सर्वजना जीव्यस्स्यामहं फलपादपः । माभूवं निर्धनो दीनः केवलात्मोदरम्भरः ॥ ८८ ॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः । धन्या महीरुहा येषां विमुखा यान्ति नार्थिनः ॥ ८९ ॥ एकस्याप्यतिथेरन्नं यःप्रदातुं न शक्नुयात् । तस्यानेकपरिक्लेशे गृहे किं वसतस्सुखम् ॥ ९० ॥ तत्तथा साधयाम्येनं शरीरं व्यर्थजीवितम् । यथा न भूयो वक्ष्यामि नास्तीत्यर्थिनमागतम् ॥ ९१ ॥ भीष्म उवाच । स विनिन्द्यैनमात्मानं ततस्तं लुब्धकं पुनः । उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपाल्यताम् ॥ ९२ ॥ देवतानामृषीणाञ्च संवादे च पुनःपुनः । श्रुतपूर्वो मया धर्मो मया चातिथिपूजने॥९३॥सुदूराद्दाशया प्राप्तं क्षुत्तृष्णाश्रमकर्षितम् । पूजयत्यतिथिं यस्तु पूर्णं स कुरुते व्रतम् ॥९४॥

काकादिवद्रक्षकवस्तुवासस्थलं प्रत्यागमनरूपे केवलकायिके वाश्रयणे कृतेऽपि फलसिद्धेरलाभो नास्ति "ज्ञानान्मोक्षः" इत्युक्तप्रकारेण 'ज्ञानान्मोक्षः' इत्युक्तत्वात्, मानसिकेनाश्रयणं भवितव्यमित्यर्थः।

स च बुद्धिविशेषः। अमुं बुद्धिविशेषं परन्दपडिप्रबन्धे विस्तरेणोक्तवान्। श्रियःपतिप्पडिप्रबन्धे च "स च बुद्धिविशेषः-अनन्यार्हशेषत्वज्ञानकार्यभूतः, इतरोपायव्यावृत्तः, भगवद्रक्ष्यत्वानु-

---

एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना। तमग्निं त्रिःपरिक्रम्य प्रविवेश स्ववेश्मवत् ॥ ९९ ॥" इत्यादि।

(काकादिवत्)—"त्रींलोकान्सम्परिक्रम्य तमेव शरणङ्गतः" इति काकवत्। आदिशब्दग्राह्यः—श्रीविभीषणादिः। "आजगाम मुहूर्तेन यत्र रामस्सलक्ष्मणः" इत्युक्तेः। अनया कायिकभेदोक्त्या तद्भेदरूपप्रणिपातादिरपि उपलक्ष्यते। "प्रणिपातप्रसन्ना हि" इत्यादिवचनात्। "अपनीतशिरस्त्राणाश्शेषास्तंशरणं ययुः। प्रणिपातप्रतीकारस्संरम्भो हि महात्मनाम्" इति लौकिकोक्तेश्च।

(ज्ञानान्मोक्षः) इति "ज्ञानान्मोक्षो जायेत राजसिंह नास्त्यज्ञानादेवमाहुर्नरेन्द्र। तस्माद्ज्ञानं तत्त्वतोऽन्वेषणीयं येनात्मानं मोक्षयेज्जन्ममृत्योः" इति भारतवचनम्।

(इतरोपायव्यावृत्तः)—कर्मज्ञानाद्युपायान्तरविलक्षणः। (भगवद्रक्ष्यत्वानुमतिरूपः)—निरुपाधिकरक्षकेन तेन क्रियमाणस्य रक्षणस्यैतच्चेतनविषये अपेक्षितानुमतिरूपः)—निरुपाधिकरक्षकेन तेन क्रियमाणस्य रक्षणस्यैतच्चेतनविषये अपेक्षिता 'त्वं तस्य रक्ष्यः' इत्युक्तौ 'न भवामि' इत्यनुक्त्वा स्वरक्ष्यत्वानुमतिरूप इत्यर्थः। "रक्ष्यापेक्षां प्रतीक्षते" इत्यत्रोक्तापेक्षा रक्ष्यत्वानुमतिद्योतिकेति भावः। "याञ्चा प्रप-

मतिरूपः, सकृदनुष्ठेयः, व्यभिचारविलम्बविधुरः, सर्वाधिकारः, नियमशून्यः, सुशकः, अन्तिमस्मृतिनिरपेक्षः, याञ्चागर्भः, दृढाध्यवसायरूपो ज्ञानविशेषः" इत्यवोचत् । तस्मादत्र सोऽप्यनुसन्धेयः ॥ ४० ॥

त्तिः" "प्रार्थनामतिः" इति स्वीकारः "अप्रतिषेधद्योतकम्" इति हि वक्ष्यते । (व्यभिचारे) ति-अत्र व्यभिचारो नाम-"अनन्यचेतास्सततं यो मां स्मरति नित्यशः । तस्याहं सुलभःपार्थ नित्ययुक्तस्य योगिनः" इत्युक्तरीत्यानवरतस्मृतेरन्तरायरूपसमाधिभङ्गः । "समाधिभङ्गस्तस्यासीत्तन्मयत्वाद्यतात्मनः । संरक्तराज्यभोगार्थी स्वजनस्यापि भूपतेः" इति स्मृतेः । (विलम्बः)-फलविलम्बः। उपासनादिषु व्यभिचारसद्भावे, फलविलम्बस्स्यात् । साध्यत्वात् । अत्र तु-सिद्धत्वात्तादृशव्यभिचाराभावात्, फलविलम्बाभावस्सिद्ध इति भावः ।(सर्वाधिकारः)-अस्य ज्ञानविशेषस्याग्निविद्याङ्गककर्मानपेक्षत्वेन सत्यार्जवदयादिवत्सर्वाधिकारत्वं सिद्धम् । उत्तमपुरुषाक्षिप्तस्य कर्तुर्विशेषाश्रवणाच्चेति भावः । (नियमशून्यः)-देशकालप्रकारादिनियमरहितः ।(अन्तिमस्मृतिनिरपेक्षः)-अन्तिमस्मृतिः-"अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरम् । यःप्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः" इत्यादिषूक्तप्रकारा । अस्याधिकारिणस्तन्नैरपेक्ष्यन्तु "अहं स्मरामि" इति भगवतस्स्मरणस्य सत्त्वादिति भावः । (सुशकः)-"अक्लेशेन सुमार्गेण वेदसारेण भक्तिमान् । द्वयेन प्राप्नुयात्पुत्र तद्विष्णोःपरमं पदम्" इत्युक्तरीत्या सुखेनकर्तुं योग्यः । असाध्यत्वात्, अपुरुषतन्त्रत्वाच्चेति भावः । "अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाञ्चा प्रपत्तिश्शरणागतिः" इति वचनं हृदि निधाय-(याञ्चागर्भ) इत्युक्तम् । "रक्षिष्यत्यनुकूलान्न इति या सुदृढा मतिः" इत्यभिप्रेत्योक्तम्-दृढाध्यवसायरूप इति ।

(वाचिके) इत्यादि-"एषा च त्रिविधा ज्ञेया करणत्रयभेदतः। गुणत्रयविभेदादप्यैकैका त्रिविधा पुनः॥ २१॥ प्रणामाङ्कनमुख्येन न्यासलिङ्गेन केवलम्। गुर्वधीना हि भवति प्रपत्तिःकायिकी क्वचित्॥ २२॥ अविज्ञातार्थतत्त्वस्य मन्त्रमीरयतःपरम्। गुर्वधीनस्य कस्यापि प्रपत्तिर्वाचिकी भवेत्॥ २३॥ न्यासलिङ्गवताङ्गेन धियार्थज्ञस्य मन्त्रतः। उपासितगुरोस्सम्यक्प्रपत्तिर्मानसी भवेत्॥२४॥ यदीच्छन्प्रतिकूलानि सर्वभूतानुकम्पिनम्। प्रपद्यते हरिं मोहात्सा प्रपत्तिस्तु तामसी॥ २५॥ अभीप्सन्विविधान्कामान्यदकामैकवत्सलम्। प्रपद्यते हृषीकेशं तामिमां राजसीं विदुः॥ २६॥ परित्यज्याखिलान्कामान्भक्त्यैवात्मेश्वरं हरिम्। प्रपद्यते दास्यरतिर्यदेषा सा तु सात्त्विकी॥ २७॥ हीना हीनतमाश्चैवं रजसा तमसा कृताः। सत्त्वेन याःप्रयुज्यन्ते मुख्यास्ताः परिकीर्तिताः॥ २८॥ सत्त्वजा मानसी त्वेका तत्र मुख्यतमा मता। तया हि परमां सिद्धिं सद्यो यान्ति मनीषिणः॥ २९॥" इत्यादि भारद्वाजसंहिताप्रथमाध्यायवचनान्यत्रानुसन्धेयानि।

तात्पर्यदीपिकायां तु-"ज्ञानादिति- "पन्था नान्योऽस्ति विज्ञानादयनाय विपश्चिताम्" इति ज्ञानातिरिक्तस्य मोक्षसाधनत्वनिषेधात्, ज्ञानतारतम्यद्योतनायैव वाचिकादिभेदकल्पनेति विशदज्ञानादिरहितवाचिकादिमतामपि स्वयमेव भगवान् कृपया पूर्णप्रपत्तिमुपजनय्य फलं साधयतीत्यभ्युपगमेऽप्यव्यवहितसाधनत्वम्मानसप्रपत्तेरेवेति तत्कथनमेवात्रोचितमिति भावः। अत एव ह्युच्यते-"सत्वजा मानसी त्वेका तत्र मुख्यतमा मता। तया हि परमां सिद्धिं सद्यो यान्ति मनीषिणः" इति। गुणान्तरकृतप्रपत्त्यपेक्षयात्यन्तिकसिद्धिहेतुत्वम्,करणान्तरजन्यापेक्षया च सद्यो हेतुत्वम्, अव्यवहितसाधनत्वरूपं हि वैलक्षण्यं तत्र कथ्यते।

दीपकृतस्तु-केवलवाचिककायिकयोर्दृप्तमात्रवृत्तितया, आशुफलदजातीयत्वमपि नास्ति; केवलमानसी तु उभयसाधारणी इति आशुफलदजातीयत्वमेव वैलक्षण्यं 'सद्यः' इत्यनेन विवक्षितमित्याहुः।

(४१.) एवं मानसमात्रमलम्, "मनसा च" इत्युक्तप्रकारेण त्रिविधकरणेनापि स्वीकारो नापेक्षितः किमित्यत आह-उपायस्स एनेत्यादिना ।

मू॥ उपायमवनाहैयालुम्, इवै नेरे उपायमल्लामैयाल्लुमिम्मूत्रुं वेणुमेन्गिर निर्बन्धमिल्लै ॥ ४१ ॥

छा॥ उपायस्स एवोति, अयं साक्षादुपायो न भवति, अत एतत्रितयमपि अपेक्षितमिति निर्बन्धो नास्ति ॥ ४१ ॥

---

अन्ये—वाचिककायिकयोराचार्यनिष्ठविषये तन्निष्ठाप्रकाशकत्वेन फलाव्यभिचारित्वम् । उक्तं हि—"प्रणामःकीर्तनं विष्णोस्स्मरणं वापि केवलम् । एकैकमपि चाज्ञानां प्रपत्तिःप्राज्ञसंश्रयात्" इति । अत एव "तव भरोऽहमकार्षि हि धार्मिकैश्शरणमित्यपि वाचमुदैरयम्" इत्याचार्यनिष्ठामुक्त्वा तदुक्तिः, मानस्यास्तु नैवामीति तस्या मुख्यत्वमित्याहुः ।

अन्ये तु-वाचिकादिमद्विषये न सम्बन्धिपर्यन्तमोक्षप्रदत्वं भगवतः, तादृशाभिमतिविशेषविरहात्, मानसस्थले तु "अन्वयादपि चैकस्य सम्यक् न्यस्तात्मनो हरौ । सर्वे एव प्रमुच्येरन् नराःपूर्वेऽपरे तथा" इति तदुक्त्यभिमतितारतम्यताद्विशेष इत्याहुः।

यद्यपि प्रपत्तिशब्दस्य "निश्चितेऽनन्यसाध्यस्य परत्वेष्टस्य साधने । अयमात्मभरन्यासःप्रपत्तिरिति गीयते" इत्यादिवचनैर्मानसमात्र एव मुख्यत्वं प्रतीयते; तथापि इह धातुमात्रसद्भावात्प्रतित्वेन त्रिविधगतिबोधनसम्भवात्, शङ्कापरिहारोपपत्तिः । "शरणं व्रज" इत्यत्र तु कृष्णपादैर्गतित्वेन त्रिविधगत्यन्यतमबोधनेन भगवद्वैभवं, त्रिविधगतीनामपि बोधनेन "वाचा नमः" इत्युक्त्या पूर्णप्रपत्तिर्वा प्रकाश्यत इत्युक्तम् ।" इति ॥४०॥

ऽया।। फलसिद्धेरुपायत्वेन स्वीकर्तव्य ईश्वर एवेति, करणत्रयेण जायमानानामाश्रयणानामेतेषामापातप्रतीत्योपायवद्भासमानतया साक्षादुपायत्वाभावात्, फलसिद्धेरध्यवसायात्मकमानसस्वीकार एक एवालम्, अत एतत्त्रितयञ्चापेक्षितामिति निर्बन्धो नास्तीत्यर्थः।

---

(आपातप्रतीत्या) इति-आपातप्रतीतिः-विचारात्पूर्वभावित्वेन, श्रवणानन्तरभावित्वेन च सम्भावितप्रामाण्यरूपा प्रतीतिः। "दर्शनक्षण आपातस्तथैवाकर्णनक्षणः" इत्युक्तेः। "आपातप्रतीतिः-संम्भावितप्रामाण्या विवक्षिता" इति हि श्रुतप्रकाशिका।

अयमभिसन्धिः—उपायवरणात्मिकायाः प्रपत्तेरुपायत्वं नास्ति। "मामेकं शरणम्" "त्वमेवोपायभूतः" इत्याद्येकशब्दैवकाराभ्यामुपायत्वनिषेधात्। न च 'सिद्धोपायान्तरप्रतिक्षेपकपरौ एकशब्दैवकारौ' इति वाच्यम्, सङ्कोचे, मानाभावात्। तस्मादुपायान्तररूपसिद्धोपायप्रवृत्तिप्रतिबन्धकाभावरूपा भवति। 'सत्यां सामग्र्यां प्रतिबन्धकसद्भावात्कार्यानुत्पादः" इति व्यवहारदर्शनात्, प्रतिबन्धकाभावस्यान्वयव्यतिरेकशालित्वसद्भावेऽपि सामग्र्यनुप्रवेशो नास्ति। सिद्धान्ते शक्त्यङ्गीकारसद्भावात्, मण्यभावस्य दाहहेतुत्वं नास्ति। भरन्यासविशिष्टवरणरूपेयं स्वप्रवृत्तिरूपप्रतिबन्धकाभावरूपत्वात्, अविवादानुमतिशब्दैर्व्यवह्रियते। भगवदुपायत्वबोधकप्रमाणबलात्, तस्यैव भक्तिस्थानापन्नत्वावगमात्, प्रपत्तिं विना कार्यनिष्पादाभावाच्च भरन्यासाभावरूपोपायप्रवृत्तेः प्रतिबन्धकत्वकल्पनं न दोषः। प्रपत्तेरुपायत्वे भगवदुपायत्वं निरर्थकम्। न च गुरूपायानपेक्षतत्साध्यफलप्रदत्वमुपायत्वमिति वाच्यम्, द्वादशवार्षिकाद्यशक्तस्यानुकल्पसेतुस्नानादेरुपायत्वेनेश्वरस्यानुपायत्वात्। "उपायार्थैकवाचकः" इत्युपायान्तरानपेक्षरक्षकत्वरूपं ह्यत्रेश्वरस्योपायत्वम्। तस्य सर्वत्रादर्शनाद्भरन्यासाभावस्य प्रतिबन्धकत्वाश्रयणम्। उपायभूतयागाद्यनुष्ठानम्-त-

त्सम्बन्धरूपवत्, उपायवरणमपि उपायसम्बन्धरूपत्वादनुपाय एव। न भक्तेश्चोपायसम्बन्धरूपत्वप्रसङ्गः, भक्तेरेव करणत्वात्। अत्र भगवत एव करणत्वात्। वरणस्य तत्सम्बन्धरूपत्वात्, अनुपायत्वं सिद्धम्। प्रपत्तेरधिकारिविशेषणत्वाच्चानुपायत्वम्।

न च "फलादिभ्यो विभिन्नत्वात्प्रपत्तेर्विध्यनन्वयात्। विधेयान्तरहानेश्च नाधिकारिविशेषणम्" इति फलतत्कामनानिमित्तान्यत्वेनासिद्धेरस्याधिकारिविशेषणत्वं न सम्भवति, "सिद्धमेव हि सर्वत्र नियोज्यस्य विशेषणम्" इत्यनुगृहीतत्वात्, असिद्धस्यास्याधिकारिविशेषणत्वं न निपुणाभ्युपगतमिति वाच्यम्, "मत्पदद्वन्द्वमेकं ये प्रपद्यन्ते परायणम्। उद्धरिष्याम्यहं देवि संसारात्स्वयमेव तान्" "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि" "रक्षिष्यत्यनुकूलान्नः" इत्यादिस्थले अधिकारिविशेषणत्वस्य प्रतीतेः, अन्यत्राधिकारतायत्तस्तिद्धस्यैव सत्वेऽपि, अत्रोपायसिद्धत्वमहिम्नाधिकारत्वं साध्यस्यापि सम्भवति। विधेयत्वे अधिकारत्वनियतानुवाद्यत्वं न सम्भवति। अस्यैव विधेयत्वेनेदमनूद्य विधेयान्तराविधानादर्शनात्, नास्याधिकारत्वम्।

किंच—अधिकारस्य सिद्धत्वम्-विध्यन्तराधीनानुष्ठानेन वा स्वत एव वा। "अग्नीनादधीत" "स्वाध्यायोऽध्येतव्यः" इत्युक्तविध्यन्तराधीनानुष्ठानप्रयुक्तसिद्धत्वयुक्तानामग्निविद्यादीनां क्रत्वधिकारत्वदर्शनात्। अत एव हि तस्याधिकाराध्याये विचारितम्। अत एवाध्ययनविधेः "सोऽयमधिकारिनियमः अपशूद्राधिकरणे वक्ष्यमाणः अध्ययनविधिप्रसादलभ्यः" इति अधिकारफलकत्वं तान्त्रिकैरुक्तम्। विध्यन्तरविहितस्य विध्यन्तरे अनुवाद्यत्वं सम्भवति। यद्वतामुपायो विधीयते सोऽधिकारः, उपाये च विधेयत्वम्, क्वचिदज्ञातज्ञापनविषयत्वम्, क्वचिदप्रवृत्तप्रवर्तनविषयत्वम्। अत्र पूर्वार्धे 'व्रज' इति विहितं वरणं उत्तरार्धे 'त्वा' इत्यनूद्य 'अहं-मोक्षयिष्यामि' इत्युपायानपेक्षरक्षकत्वरूपसिद्धोपायस्याज्ञातज्ञापनरूपविधिविषयत्वं कृतम्। अष्टवर्षत्वाभावे उपनेयत्वाभावसिद्धिवत्, वरणाभावे उपायानपेक्षरक्षणविषयत्वाभावसिद्धिः अधिकारानुबन्धादप्रयोजना स्वत एव सिद्धतायुक्तायां फलकामनायामपि, वि-

ध्यन्तराधीनानुष्ठानमूलकसिद्धतायुक्ताग्निविद्यादिषु, सान्याय्याधिकारसोमयागे, परविद्याधिकारात्मावलोकने चानुगतोपायतदङ्गान्यफलसाधनत्वमेवाधिकारिविशेषणत्वशब्दार्थो भवति ।

अस्योपायाङ्गत्वं न शङ्कनीयम्, अङ्गत्वस्य-तद्गतकार्यानुकूलशक्त्युद्बोधकत्वरूपत्वात्, नित्योद्भूतशक्तिकस्येश्वरस्य शक्त्युद्बोधस्यानपेक्षितत्वात् । कारणमात्रस्य विधेयमात्रस्य च कार्योपायो न भवति । फलकामनायाः, प्रयाजादेश्चोपायत्वाभावात् । कृतिसाध्यत्वमात्रस्य विध्यर्थत्वात्, "यजेत-स्वर्गकामः" इत्यादिषु उपायान्तराभावबलादनुमेयोपायत्वम्, अत्र निषेधविरोधादनुमेयत्वं न भवेत् । अस्यां प्रपत्तौ प्रवृत्तिश्च 'भगवद्गतोपायभावानिरूपकं भूयात्' इत्येव जायते । भक्तिस्थले एवं भगवदुपायत्वबोधकवचनाभावात्, उपायत्वनिषेधाभावाच्च न भक्तेरधिकारत्वापादनम् । प्रमाणवैषम्ये प्रतिबन्धिनोऽवकाशाभावात् । तस्मात्प्रपत्तेरधिकारिविशेषणत्वं निपुणाभिमतम् ।

वरणस्याधिकारिविशेषणत्वं चास्मत्प्राचार्यैःप्रपंचितम् । तथा हि—"फलादिभ्योऽप्यभिन्नत्वात्, प्रपत्तेर्विधितोऽन्वयात् । विधेयान्तरसत्वाच्चाप्यधिकारिविशेषणम्"। प्रपत्तेरधिकारिविशेषणता हि—फलकामनारूपतया, फलतया, निमित्ततया च स्यात्। तत्राद्ये "प्रार्थनामतिः । शरणागतिः" इत्युक्तलक्षणसिद्धोपायफलोपधानप्रार्थनात्मकप्रपत्तेर्योग्यतावस्थसिद्धोपायफलकामनारूपत्वस्य दुरपह्नवतया तेन रूपेण तदधिकारिविशेषणत्वोपपत्तिः । अथ द्वितीयेऽपि-यथावस्थितपारमार्थिकभगवच्चरणारविन्दशरणागतेर्भगवदेकशरणत्वरूपस्वरूपाविर्भावात्मकत्वेनानवरतभोग्यफलात्मकतायाः द्वयपूर्वखण्डक्रियावर्तमानप्रत्ययादिसिद्धत्वेन दुरपह्नवतया तेन रूपेण तथात्वोपपत्तिः । न च फलस्य स्वरूपेण विशेषणत्वासम्भवः, स्वविषयककामनावत्त्वसम्बन्धेन तस्यापि विशेषणत्वोपपत्तेः । अथ तृतीयेऽपि-प्रपत्तेर्निमित्ततयाधिकारिविशेषणत्वं हि-निषिद्धतया, केवलतया च स्यात् । तत्राद्ये-"कालुष्येणोपायबुध्या क्रियमाणा प्रपत्तिरपि पातकसमाना" इत्यनुगृहीतरीत्या प्रपत्तिविशेषस्य निषिद्धनिमित्तान्तर्गततया अपि

सर्वपापशब्दासिद्धत्वेन दुरपह्नवतया तेन रूपेण तथात्वोपपत्तिः। न चैवं प्रपत्तेःपरिहरणीयताप्रसङ्गः। तेन रूपेण तथात्वस्येष्टत्वात्। अथ तत्र द्वितीयेऽपि-"जगति गतिमन्यामविदुषाम्। गतिर्गम्यश्चासौ हरिः" इत्यनुगृहीतरीत्यानन्यशरणत्वाविर्भावात्मिकायाःप्रपत्तेः केवलनिमित्ततायास्सिद्धोपायाधिकारिविशेषणतया जितन्तादिसिद्धत्वेन दुरपह्नवतया तेन रूपेण तथात्वोपपत्तिः। एवं "स्वातन्त्र्यं निजरक्षणम्" इत्याद्यनुगृहीतरीत्या सर्वेषां चेतनानां भगवदनन्यरक्षकत्वात्मकानन्यशरणत्वरूपस्वरूपस्य तादृशस्वरूपविशिष्टसर्वचेतनविषयेऽपि भगवत एव रक्षणप्राप्तेश्चाष्टाक्षरनमःपदादिसिद्धतया दुरपह्नवत्वेन सिद्धरूपशरणागतेरपि केवलनिमित्ततया सिद्धोपायाधिकारिविशेषणत्वोपपत्तिः।

न चात्र विधिप्रत्यययोगःपरिपन्थीति वाच्यम्, विकल्पासहत्वात्। किं सिद्धरूपायाश्शरणागतेःकेवलनिमित्तत्वे विधिप्रत्ययविरोधःप्रतिपिपादयिषितः, उत साध्यरूपायास्तस्यास्तथात्वे। न तावदाद्यः-तद्विषयविधिप्रत्ययस्यैव गगनकुसुमसमत्वात्। नापि द्वितीयः-तस्यापि विकल्पासहत्वात्। किं तदधिकारिविशेषणत्वग्राहकवाक्यान्तर्गतविधिप्रत्यययोगविरोधः प्रतिपिपादयिषितः, उत वाक्यान्तरगततद्विरोधो वा। न तावदाद्यः-"अहं त्वाम्" इत्यादिवाक्ये विधिप्रत्ययाश्रवणात्। नापि द्वितीयः-"परीक्ष्य लोकान्" इत्यादिषु वाक्यान्तरविहिताया एव गुरूपसत्त्यादेर्वाक्यान्तरे अधिकारिविशेषणत्वेनाप्युपादानदर्शनेन वाक्यान्तरीयविधिप्रत्यययोगस्य वाक्यान्तरोपात्ताधिकारिविशेषणत्वेन साकमविरोधदर्शनात्। अभ्युपगतं चाचार्यैः वाक्यान्तरविहितायाःप्रपत्तेरेव प्रपन्नासाधारणधर्मद्वयस्मरणादिविधिषु केवलनिमित्ततयाधिकारिविशेषणत्वमपि। तस्मात्सिद्धं फलकामनारूपतया, फलतया, निमित्ततया च प्रपत्तेरधिकारिविशेषणत्वमुपपद्यत एवेति।

न चैवं विधेयान्तरासिध्द्या तथात्वासंभवशङ्का, अधिकारिविशेषणानां नियोज्यतावच्छेदकत्वनियमे प्रमाणाभावात्। न च प्रायोदर्शनमात्रेण तत्सिद्धिः, पार्थिवत्वलोहलेख्यत्वयोर्व्यभिचारात्। अधिकारिविशेषणानां नियोज्यतावच्छेदकत्वं न ता-

वदधिकारिविशेषणताप्रयुक्तम् । किन्तु-उपायगताधिकारियत्नसाध्यत्वरूपोपाधिनिबन्धनम् । अतो यत्रोपायस्य सिद्धत्वम्, तत्र तदधिकारिविशेषणस्य नियोज्यतावच्छेदकाभावो न नःक्षतिमावहतीति युक्तं प्रपत्तेर्विधेयान्तराभावेऽपि सिद्धोपायाधिकारिविशेषणत्वम् । नतु सर्वाधिकारिविशेषणत्वम् । ननु सर्वाधिकारिविशेषणसाधारणमधिकारिविशेषणत्वं किं नामेति चेत्, उपायान्वयितावच्छेदकत्वमेवेति ब्रूमः । सिद्धश्च प्रपत्तेस्सिद्धोपायान्वयितावच्छेदकत्वम्, "शरणमाहुं तनताललैन्दार्केल्लाम्" इत्यादिदिव्यसूरिसूक्तिभिः । तस्मान्न विधेयान्तरासिद्धावपि प्रपत्तेरधिकारिविशेषणत्वविरोधः ।

अथवा—स्यान्नामाधिकारिविशेषणानां नियोज्यतावच्छेदकत्वानियमोऽपि । तथापि न प्रपत्तेरधिकारिविशेषणत्वहानिः । प्रपन्नं प्रति सिद्धोपायस्यैव विधीयमानत्वात् । न च सिद्धस्य प्रवृत्त्यसाध्यत्वाद्विधेयत्वासम्भवः, तस्योत्पाद्यत्वलक्षणसाध्यत्वासम्भवेऽपि प्राप्यत्वलक्षणसाध्यत्वानपायेन तत्साध्यकविध्युपपत्तेः । उत्पाद्यविकार्यसंस्कार्यप्राप्यभेदेन साध्यचातुर्विध्यं हि सिद्धान्तसिद्धम् । विधीयते च लक्ष्मीमन्त्रे प्रपन्नप्राप्यतया सिद्धोपायः—"एवं मां शरणं प्राप्य वीतशोकभयक्लमः.... मामेव शरणं प्राप्य मामेवान्ते समश्नुते" इति । अत्र "एवं मां शरणं प्राप्य" इत्यधिकारिविशेषणतया शरणागतिमनूद्य, तद्विशिष्टं प्रति "मामेव शरणं प्राप्य" इति प्राप्यतया सिद्धोपायविधानात् । किंच-प्रतिबन्धकविनिर्मोकविशिष्टवेषेण सिद्धोपायस्यापि साध्यत्वसम्भवेन तद्विधेरक्षतत्वाच्च । न च विशिष्टोपादानस्य विशेषणमात्रार्थकत्वेन प्रतिबन्धकविनिर्मोकमात्रस्यैव साध्यतया विधेयता स्यादिति वाच्यम्, तथा सति लौकिकवैदिककार्यकारणभावमात्रभङ्गप्रसङ्गात् । घटत्वाद्यवस्थाविशिष्टं प्रति कपालत्वाद्यावस्थाविशिष्टं हि कारणमित्युच्यते । तत्राप्युक्तन्यायेन तत्तदवस्थामात्रस्य कार्यकारणभावापातात् । अस्त्विति चेत्, "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिसिद्धकार्यकारणभेदसिद्धान्तभङ्गप्रसङ्गात् । न च तत्र प्रमाणबलाद्विशिष्टस्य साध्यताभ्युपगम्यते, इह तु तदभावात्तदनभ्युपगम इति वाच्यम्,—"द्रौप-

था सहितास्सर्वे नमश्चक्रुर्जनार्दनम्" "रक्षिष्यतीति विश्वासादभीष्टोपायकल्पनम्" "स्वाभीष्टे परसम्बन्धे स्वशक्त्या हीनसाधनः। तत्प्राप्त्युपायं तत्पादौ कृत्वा विश्वासपूर्वकम्" इत्यादिव्यवहारानुगुण्येनेहापि विशिष्टवेषेण साध्यताया अवश्याभ्युपेयत्वात्।

न चैवमपि सिद्धोपायगतप्रतिबन्धकविनिर्मोकस्य कर्तृव्यापाररूपत्वाभावेन तस्य साक्षात्कृत्यसाध्यत्वेन विधेयत्वासिद्धिः, स्वरक्षणार्थस्वप्रवृत्तीनामेव सिद्धोपायफलोपधानप्रतिबन्धकतया तन्निवृत्तिरूपतद्विनिर्मोकस्य कर्तृव्यापाररूपत्वेन साक्षाद्विधेयत्वोपपत्तेः। न च तादृशविधिवाक्यदौर्लभ्यम्, "तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः" "अपायोपायसंज्ञौ तु पूर्वराशी परित्यजेत्....तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत्" इत्यादीनां सुलभत्वात्। न चाशुतरविनाशनीनां चेतनप्रवृत्तीनां प्रतिबन्धकत्वानुपपत्तिः, स्वजन्यभगवन्मनसःकालुष्यात्मकादृष्टवत्तासम्बन्धेन तदुपपत्तेः।

अथवा-अस्तु मनःकालुष्यविशेषाणामेव प्रतिबन्धकता, तथापि न तद्विनिर्मोकस्य कर्तृव्यापारसाध्यत्वम्; परम्परयापि तदुपपत्तेः। न चैवं कालुष्यविनिर्मोकस्य भगवत्प्रसादात्मकत्वेन तस्य पारम्पर्येण साध्यत्वोक्तौ औचित्यात् स्वर्गादिवत् फलरूपत्वस्य तद्धेतुभूतावान्तरव्यापाररूपत्वस्य वा प्रसङ्गः; कालुष्यशान्तिरूपप्रसादस्याभावरूपत्वेन तस्य स्वर्गादितुल्यतया फलादिरूपत्वाभावात्। न च तस्य 'भावान्तरमभावः' इति न्यायेन स्वाभाविकभगवत्प्रीतिरूपत्वाश्रयणेन तथात्वप्रसङ्गः; तथा सति तस्येष्टप्रसङ्गरूपत्वात्। न चैवं सिद्धोपायस्य निमित्तमात्राधिकारत्वहानिः; अस्य चोद्यस्य जीवनादिनिमित्तकस्थलेऽपि तुल्यत्वात्। तत्राप्युक्तदिशा परम्परया कर्तृव्यापारसाध्यस्य प्रत्यवायपरिहारादेस्सिद्धान्ते भगवत्प्रीतिरूपत्वात्। किञ्च "परिबृढतया वा विदितया जगति गतिमन्यामविदुषाम्। गतिर्गम्यश्चासौ हरिः" इत्याद्यनुगृहीतरित्या सिद्धोपायं प्रति जीवनादिवत्स्वरूपयाथात्म्यज्ञानरूपत्वेनाकारेण निमित्तभूताया एव शरणागतेः "याञ्चा प्रपत्तिश्शरणागतिः" "प्रार्थनामतिः। शरणागतिः" इत्यादिभिःप्रमाणैः फलकामनारूपत्वस्यापि-

सिद्धत्वेन तदधिकारकसिद्धोपायस्य तन्त्रप्रयुक्ताग्निहोत्रन्यायेन संवलिताधिकारत्वस्य सिध्द्या सिद्धोपायस्य केवलनैमित्तिकत्वभङ्गप्रसङ्गस्येष्टप्रसङ्गरूपत्वाच्च । न चैवमपि विधेयान्तराभावेन सिद्धोपायफलोपधानप्रतिबन्धकविनिर्मोकस्यासाध्यत्वप्रसङ्गः, "उपायापायसंयोगे निष्ठया हीयतेऽनया । अपायसम्प्लवे सद्यःप्रायश्चित्तं समाचरेत् । प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत् । उपायानामुपायत्वस्वीकारेऽप्येतदेव हि" इत्यादिविहितस्य प्रायश्चित्तविशेषस्यैव जागरूकत्वात् ।

अथवा—मास्तु सिद्धोपायस्य विशिष्टवेषेण विधेयत्वाश्रयणम्, तथापि न प्रपत्तेस्सिद्धोपायनियोज्यतावच्छेदकत्वहानिः, अज्ञातज्ञापनरूपविधौ तस्य स्वरूपत एव विषयत्वोपपत्तेः । न च "अमृतस्यैष सेतुः" इत्यादिशास्त्रैःप्रपत्त्यविशिष्टस्यापि सिद्धोपायज्ञानदर्शनेन तद्विशिष्टस्यैव तदधिकारित्वासिद्धिः । लोकदर्शनमात्रस्य शास्त्रीयनियमभञ्जकत्वायोगात् । तथा सति शूद्राणामपि क्वचिद्वेदाध्ययनादिदर्शनेन तेषां त्रैवर्णिकाधिकारत्वभङ्गप्रसङ्गात् । न चेह तदधिकारत्वनियमज्ञापकशास्त्रदौर्लभ्यम्, "शीलवान्वैष्णवश्शुचिः" "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" "शरणमुपगतश्शास्त्रविश्वासशाली" इत्यादिभिस्तन्नियमसिद्धेः । न च प्रपत्तेश्शास्त्राधिगम्यत्वेन सिद्धोपायशास्त्रश्रवणतत्प्रपदनयोरन्योन्याश्रयप्रसङ्गः, "अर्जुनः कृष्णश्चातिमानुषचेष्टितैः ऋषिवाक्यैः" इत्यादिना श्रीवङ्गीपुरेशपूर्णानुगृहीतरीत्या श्रवणमन्तरेणापि प्रपदनसम्भवात् । न चैवं प्रपन्नस्य पुनास्सिद्धोपायज्ञाननैरर्थक्यम्, प्रपन्नोत्तरवृत्तीनामिव स्वयंप्रयोजनभगवत्प्रीत्यर्थत्वसम्भवात्, "सत्त्वोन्मेषणसमये" इत्याद्यानुगृहीतरीत्या भयनिवृत्त्याद्यर्थकत्वसम्भवाच्च । किञ्च—अलौकिकश्रेयस्साधनानां सर्वेषां तत्तदधिकारिविशेषणावच्छिन्नतत्तद्विधिमूलककर्तृव्यापारोपात्ततयैव तत्तत्फलोपधायकत्वदर्शनेन, प्रकृतेऽपि सिद्धप्रपदनेन पुंसां साधनतया ज्ञायमानं ब्रह्मैव साधनमित्यवश्यं वक्तव्यत्वेन तत्सार्थक्यसम्भवाच्च । न चैवं ब्रह्मज्ञानस्यैव विधेयतया साधनत्वप्रसङ्गः, विधेयत्वस्य प्रपन्नोत्तरवृत्त्यन्तर्गतद्वयार्थानुसन्धानादिषु व्यभिचरितत्वेन साधनत्वासाधकत्वात् । अत एव हि "कर्तृव्यापारकृतिसाध्यतामात्रं लिङादेर्वाच्यं शब्दा-

नुशासनासिद्धम्, नान्यदलौकिकम्" इति भाष्यकारमतमुपपद्यते । किञ्च-सिद्धोपायविधायकशास्त्रेषु एकपदैवकारादिभिस्तद्ज्ञानादीनां साधनत्वस्य निषिद्धतया तद्विरोधेन तदसम्भवाच्च । अपि च "अमृतस्यैष सेतुः" "सा काष्ठा सा परा गतिः" "यमेवैष वृणुते तेन लभ्यः" "विष्णुपोतं विना नान्यत्किञ्चिदस्ति परायणम्" "त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि । निमित्तं कुशलस्यास्ति" इत्यादिबहुप्रमाणानुगृहीतेन शरणपदेन ब्रह्मण एवोपायभावस्य कण्ठोक्ततया तद्विरोधेन तद्ज्ञानस्योपायत्वकल्पनायोगाच्च ।

एतेन "मामेकं शरणं व्रज" इत्यादेस्साधनत्वेन ब्रह्मानुसन्धानविधानपरत्वे ब्रह्मणस्साधनत्वासिध्या केवलदृष्टिविधमात्रपरत्वमेव स्यादिति मिथ्याज्ञानादपवर्गप्रसङ्गः" इति यदुक्तं निक्षेपरक्षायां, तदपि परास्तम् । "अमृतस्यैष सेतुः" इत्यादिभिरेव तत्सिद्धेः । न च तेषां रक्षकत्वमात्रविषयता, तस्य सर्वसाधारणत्वेन"अमृतस्य" इत्यादिविशेषोपादानानुपपत्तेः । "उपाये गृहरक्षित्रोः" इत्यादिशरणशब्दार्थनिष्कर्षकवचनविरोधापत्तेश्च । न चैवमपि तादृशसाधनत्वज्ञानस्य श्रवणमात्रसम्पाद्यत्वेन विधिव्यापाराविषयत्वासम्भवः, हेत्वन्तरप्राप्तस्यापि धात्वर्थस्याविलम्बितसिद्धिलाभाय लोके विधिदर्शनेन तन्न्यायेनात्रापि विधिविषयत्वसंभवात् । न चैवं कुदृष्टिमतोत्थानप्रसङ्गः, अस्य ज्ञानस्य मोक्षसाधनत्वानभ्युपगमात् । मोक्षस्य केवलसिद्धोपायसाध्यत्वं हि अस्मत्सिद्धान्तासिद्धम् । न चाविधेयज्ञानस्य परम्परया यथाकथञ्चिन्मोक्षोपयुक्तत्वमात्रेण कुमतिमतोत्थानप्रसङ्गः, तथा सति तस्य सर्वेषां तुल्यत्वात् ।

न चैवं समर्पणपर्यन्तसाधनत्वबुद्धिविशेषस्यैव प्रपत्तित्वाभ्युपगमात्, अधिकारिविशेषणविधेययोरैक्यप्रसङ्गः, प्रपत्तिव्यक्त्योर्भिन्नत्वात् । नो चेत्प्रपन्नकर्तव्यतया नित्यविहितस्य प्रपत्तेरपि हानप्रसङ्गात् । किंच–'गोप्तृत्ववरणात्मकसाधनत्वबुद्धिरधिकारिविशेषणम्, करणत्वबुद्धिरूपं शरणवरणं विधेयम्' इति तयोर्भेदोपपादनसम्भवाच्च ।

न चैवं भर्तरि ब्रह्मणि करणत्वबुद्धेर्महापराधरूपता, तथा सति "करणं कारणं

कर्ता" इति सहस्रनामस्तोत्रे 'करणम्' इत्यस्य परिहरणीयत्वापत्तेः । यदि च कर्तृत्वसमानाधिकरणस्य करणत्वस्य गुणरूपतया तस्य स्तुतिपरत्वमुच्येत, तर्हि सर्वत्र दीयतां दृष्टिः । न चैवं ब्रह्मणःकरणत्वे करणस्य च कर्तृनिरूपितस्वरूपत्वेन कर्त्रपेक्षायां परिशेषादौचित्याच्चाधिकार्येव कर्तेति प्रतीयेतेति पारतन्त्र्यविरोधप्रसङ्गः, अस्य चोद्यस्याङ्गप्रपत्तिस्थलेऽपि तुल्यत्वात् । तन्निष्ठानां "तस्य च वशीकरणं तच्छरणागतिरेव" इत्युक्तरीत्या ब्रह्मवशीकरणात्मकशरणागतिकर्तृत्वाभ्युपगमात् । यदि च तत्र धात्वर्थस्वभावात् कर्तृत्वविशेषसिद्धिरभ्युपगम्येत, तर्हि प्रकृतेऽपि 'ब्रह्मणा करणेन फलं प्राप्नोति प्रपन्नः' इत्यत्र परार्थप्राप्तिलक्षणधात्वर्थस्वभावादपि तत्कर्तृत्वविशेषलाभो निष्कण्टक एवेति पश्यतु भवान् । किंच "अहं हि शरणं प्राप्तो नरेणानन्यचेतसा । प्रापयाम्यात्मनात्मानं निर्धूताखिलकल्मषम्" इत्यादिना भगवत्करणकक्रियायां भगवत एव कर्तृत्वस्य सिद्धत्वेन तद्विरोधेन चेतनस्य तत्र स्वतन्त्रतया कर्तृत्वाश्रयणस्यात्यन्तानुचितत्वात् । न च करणत्वकर्तृत्वयोः लोके विरोधदर्शनात्, भगवत्करणकक्रियायां भगवतःकर्तृत्वासम्भवः, तथा सति जगत्सृष्टावुपादानतया करणभूतस्य कर्तृत्वत्यागप्रसङ्गात् । न च तत्र प्रमाणबलात्तत्सिद्धिः, प्रकृतेऽपि प्रमाणानामुदाहृतत्वात्तत्सिद्धिः । न च भगवतो मोक्षकरणत्वपराणां वचनानां निरपेक्षमोक्षप्रदानकर्तृत्वमात्रपरतयान्यथासिद्धता, जगदुपादानत्वपराणामपि वचनानां निरपेक्षकर्तृतापरतयाप्यन्यथासिद्धिप्रसङ्गात् । न चोपादाननिरपेक्षसृष्टेर्लोकेऽदर्शनात्, तदनुपपत्तिः, करणनिरपेक्षरक्षणस्यापि लोकेऽदर्शनेन तस्याप्यनुपपन्नत्वात् । न च विचित्रशक्तौ भगवति तदुपपत्तिः, तथैवात्राप्युपपत्तिः । तस्माज्जगत्सृष्टाविव मोक्षप्रदानेऽपि ब्रह्मणःकरणत्वकर्तृत्वयोरविरुद्धत्वात्, न भगवत्करणकक्रियायां भगवतः कर्तृत्वासम्भवः ।

न चैवं प्रपत्तेरधिकारिविशेषणत्वे "तेन तेनाप्यते तत्तन्न्यासेनैव महामुने" इत्यादौ तस्य साधनत्वोक्तेरमुख्यत्वापत्तिः, केषांचित्प्रपत्तिविशेषाणां भक्तितुल्यत्यास्माभिस्साधनत्वाभ्युपगमेन तेषां वचनानां तद्विषयतया विरोधाभावात् । "अमृत-

स्यैष सेतुः" इत्यादिबहुप्रमाणमूलकस्य भगवतःकरणत्वव्यपदेशस्यामुख्यत्वपरिहाराय सिद्धोपायनिष्ठानुष्ठेयानां प्रपत्तीनामधिकारिविशेषणमात्रत्वमकामेनापि स्वीकर्तव्यमेवेति सर्वमवदातम् " इति।

किंच-योगातिरिक्तोपायनिषेधबलात्, वरणस्यानुपायत्वं सिद्धम्। "क्लेशानां च-क्षयकरं योगादन्यन्न विद्यते। न कर्मणां क्षयो भूतजन्मकोट्ययुतैरपि। ऋते योगात्कर्मकक्षं योगाग्निः क्षपयेत्परम्" इति वचनात्। भक्त्यतिरिक्तोपायनिषेधस्य तु स्वातुल्यपुरुषकृतिसाध्योपायनिषेधयुक्तत्वात् अस्यानुपायत्वं सिद्धम्। क्रियागतोपायभावविलक्षणरूपभगवदुपायत्वस्य निषेधप्रसङ्गाभावात्, निषेधस्य विहितव्यतिरिक्तविषयतया न सङ्कोचो न्याप्यः। अधिकारिविभागाच्चास्यानुपायत्वम्। "विष्णूपायो योऽन्यफलस्सोऽधमः परिकीर्तितः। अन्योपायो विष्णुफलो मध्यमःपरिकीर्तितः। माधवांघ्रिद्वयोपायो माधवांघ्रिप्रयोजनः। स उत्तमोऽधिकारी स्यात्कृतकृत्योऽद्य जन्मनि" इति भगवच्चरणशरणस्य भगवदन्योपायशून्यत्वेन वर्तनस्यावश्यकत्वात्, भगवच्छरणशरणवरणस्यानुपायत्वम्।

किंच-अस्य पुरुषकारपुरस्करणात्, अनुपायत्वं सिद्धम्, अस्य भक्तिवदुपायत्वे तद्वदेव पुरुषकारानपेक्षितं स्यात्।

किंच-"मत्स्वीकारस्वरूपायाः प्रपत्तेरप्युपायताम्। इच्छन्ति केचिद्दुर्दान्तास्सन्तो मामेव मन्वते" इति विहगेन्द्रसंहितावचनाच्चास्यानुपायत्वं सिद्धम्। उपायस्वीकारस्य स्वयमुपायत्वं नास्तीत्यर्थस्य, स्वीकारानात्मिकरूपतदेकरक्ष्यत्वाध्यवसायरूपा काचित्प्रपत्तिरस्तीति द्योतनाय च-'मत्स्वीकारे' त्यादि। अयं शास्त्रार्थः-अनुपायः, 'उपायस्वीकाररूपत्वात्, व्यतिरेकेण यज्ञादिवदीश्वरवच्च' इत्यनुकूलतर्कस्सूचितः। न च "तुल्यन्तु दर्शनम्" इति पुरुषार्थाधिकरणसिद्धान्तगुणसूत्रोक्तरीत्या तत्त्वविदामधिकारिविशेषणसिध्यर्थतयानुष्ठानस्यापेक्षितत्वात्, 'उपायत्वेनानुष्ठानम्' इति नियन्तुं शक्यम्; "न्यासेनैवाप्यते" इति तृतीयाश्रुतेः "असार्वत्रिकी"

इति तत्रत्यमूत्रोक्तरीत्या उपायप्रयोगावच्छिन्नप्रपत्तिगतसाधनत्वे प्रामाण्यम्, नानुपायप्रयोगावच्छिन्नप्रपत्तावपि साधनताग्राहकं भवति । न्यासशरणागत्योस्संयोगरूपचोदनादिभेदात् भिन्नत्वं वक्ष्यते ।

किंच—प्रपन्नम्प्रति भगवतः "हेतुर्वेधे विमर्शे भजनवदितरत्किन्त्वनुष्ठानकाले वेद्यस्तद्रूपभेदो विविध इह स तूपायतान्यानपेक्षा" इत्यादिरीत्या साधनान्तरनिरपेक्षसाधनत्वं न्यासविद्याया वेद्याकार इति ह्युच्यते, एवं च भगवतो निरपेक्षसाधनत्वान्यथानुपपत्तिप्रसूतार्थापत्त्या प्रपदनानुपायत्वं सिध्यति । अन्यथा भक्तं प्रत्यपि भगवतो भक्त्युपायसापेक्षत्वेऽपि निरपेक्षसाधनत्वं तुल्यमिति न्यासविद्याया वेद्याकारो न स्यात् । न चेष्टापत्तिः, तत्प्रतिपादकवचनविरोधात्, अपसिद्धान्तत्वाच्च । न च 'भक्तिप्रपत्त्युभयनिरपेक्षसाधनत्वं विवक्षितम्, भक्तम्प्रति तु तदुभयसापेक्षितत्वेन न निरपेक्षोपायत्वम्, इति वाच्यम्;—भक्तम्प्रति प्रपदनस्य स्वतन्त्रोपायत्वाभावेनोभयसाधननिरपेक्षहेतुत्वस्य वक्तुं शक्यत्वात् । अतःप्रपदनमपि हेतुत्वेनानपेक्ष्य भगवान्स्वयमेव साधयतीति निरपेक्षोपायत्वस्य वक्तव्यत्वेन तदनुपायत्वं सिद्धमेव ।

किंच—भगवत उपायान्तरस्थाननिवेशादपि प्रपत्तेरनुपायत्वं गम्यते । तथा हि—स्वकृतिसाध्यसर्वोपायरहितस्य तत्स्थाने सर्वेश्वरास्स्थित्वा मोक्षं ददातीति उपायान्तरस्थाननिवेशो वक्तव्यः । अन्यथा भक्तिस्थलेऽपि भगवत उपायान्तरस्थाननिवेशापत्तेः । स्वतन्त्रोपायभूतप्रपत्तिराहितोपासकस्य तत्स्थाने भगवन्निवेशस्य वक्तुमुचितत्वात् । न च भक्त्युपायस्यानेकजन्मसु बहुयत्नसाध्यतया फलानुरूप्यमस्तीति न तत्र स्थाननिवेशः, प्रपत्तेस्तु क्षणकालीनस्वल्पयत्नसाध्यतयातिफल्गुत्वेन विसदृशत्वादेतस्यास्साधनत्वेऽपि फलानुरूपसाधनस्थाने भगवन्निवेश उचित इति वाच्यम्,—भक्तेर्बहुकालीनयत्नसाध्यत्वेऽपि नित्यपुरुषार्थमोक्षफलापेक्षयातिफल्गुत्वेन विसदृशत्वात्तत्सिद्ध्यर्थं तत्रापि स्थाननिवेशापत्तेः । न च वाच्यम्—'भक्तेर्नित्यपुरुषार्थापेक्षया विसदृशत्वेऽपि लघूपायनिष्ठस्य गुरूपायसाध्यसिद्ध्यर्थं तन्निवेशस्स्वीकर्तव्यः' इति; अशक्तस्य लघूपायेनैव तादृशफलसिद्धौ स्थाननिवेशस्याप्रयोजकत्वात् । अन्यथा गुरुस्नानादिसाध्यफलसिद्ध्यर्थं गौणस्नानादिलघूपायनिष्ठस्याशक्तस्यापि भगवत उ-

पायान्तरस्थाननिवेशापत्तेः। अथ प्रपदनोपायत्वमभ्युपेत्योपायान्तरस्थाननिवेश उच्यतामिति चेन्मैवम्,-स्थाननिवेशनप्रतिपादनवचनानामर्थान्तरपरत्वाभावेनाप्रामाण्यप्रसङ्गात्। न च 'भक्तिप्रपदनयोरुपायत्वतौल्येऽपि प्रपदनस्थले विधिबलादेव स्थाननिवेशस्स्वीकृतः, न भक्तिस्थले, विध्यभावात्' इति वाच्यम्;-उपायान्तरस्थाननिवेशशब्दार्थपर्यालोचनायां तदनुष्ठानशक्त्या तत्स्थाने भगवन्निवेशानुसन्धानस्य प्रतीयमानतया, प्रतीयमानार्थपरित्यागेन केवलादृष्टार्थकविधिपरिकल्पनमसमर्थकृतं स्यात्। अत उपायान्तरस्थाननिवेशान्यथानुपपत्त्या प्रपत्तेरनुपायत्वं सिद्धम्।

किंच-भगवच्छास्त्रे "चितःपरमचिल्लाभे प्रपत्तिरपि नोपाधिः। विपर्यये तु नैवास्य प्रतिषेधाय पातकम्" इति प्रपत्तेरनुपायत्वं व्यक्तमुक्तम्। अत्र परमत्वं-स्वामित्वस्वतन्त्रत्वादिनोत्कृष्टरहितत्वम्। 'चितः' इत्यत्र स्वत्वपरतन्त्रत्वादिकमभिमेतम्। 'परमचित्कर्मकलाभे चितःप्रपत्तिरपि नोपधिः' इत्यन्वयः। अनेन "कर्मणि-च" इति सूत्रेण उभयप्राप्तौ कर्मणिषष्ठ्या न समासप्रतिषेधः। अर्थात् लाभक्रियायां चितःकर्तृत्वसद्भावात्, उभयोपादानाभावादिति द्रष्टव्यम्। यद्वा 'चितः' इत्यस्य लाभे अन्वयतया परमचिच्छब्दस्य शेषे षष्ठीसमासो वा। 'अपि' शब्दः-निर्दोषत्वसगुणत्वहेतुकप्राधान्यपरः। उपधिः-व्याजः। व्याजत्वस्यापि निषेधे, साधनत्वाभावः कैमुतिक इति भावः। विपर्यये तु-पूर्वोक्तचित्कर्तृकपरमचित्कर्मकलाभस्य विपरीतपरमचित्कर्तृकचित्कर्मकलाभे इत्यर्थः। अस्य-चितः। पातकम्-'रौरवादिनरकेषु पातयतीति पातकम्' इति वा, 'पुमांसं पातयति-पतितं करोतीति पातकम्' इति वार्थः। अनेन-पंचमहापातकान्युच्यन्ते। प्रतिषेधाय नालम्, "गम्यमानापि क्रियाकारकविभक्तीनां प्रयोजिका" इति 'अलं' शब्दार्थभूतसामर्थ्यस्य गम्यत्वात्, "नमस्स्वस्ति" इत्यादिना चतुर्थी॥ 'प्रतिषेधाय' इत्यत्र 'परमचितः' इत्यध्याहार्यम्। यद्वा पातकमस्य प्रतिषेधाय नालम्। 'पातकम्' इत्यस्य प्राक् 'चितः' इत्यस्यानुषङ्गः। तथा च 'चितःपातकम्, अस्य परमचितः प्रतिबन्धाय न समर्थमेव' इत्यर्थः।

अहिर्बुध्न्यसंहितायां नमसःप्रपदनस्वरूपप्रतिपादकत्वेनार्थप्रकाशनसमये-"न-

न्तव्यः परमश्शेषी शेषा नन्तार ईरिताः । नन्तृनन्तव्यभावोऽयं नप्रयोजनपूर्वकः ।.... उपाधिरहितेनायं येन भावेन चेतनः । नमति ज्यायसे तस्मै तद्धि नमनमुच्यते ।.... शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् । पुरुषं परमुद्दिश्य न मे सिद्धिरतोऽन्यथा" इत्यादिवचनैर्नमसश्शाश्वतपरमप्रयोजनत्वकथनाच्चस्वव्यतिरिक्तप्रयोजनान्तरनिरपेक्षत्वं तस्य स्वरूपमिति प्रतिपादितत्वाच्च प्रपदनस्यानुपायत्वं सिद्धम् । एतत्सर्वमभिप्रेत्यैव निगमान्तदेशिकैः न्यायसिद्धाञ्जने 'इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किम्पुनस्सहकारिणाम्" इति शरणागतेरनुपायत्वं कण्ठोक्तम् । न्यासतिलके च "त्वय्येव त्वदुपायधीरपिहितस्वोपायभावास्तुमे" इति साधनभावरहिता शरणागतिरेव प्रार्थिता । श्रीपराशरमिश्रैः "उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणावतस्त्वं श्रीरंगेशय शरणमव्याजमभजम्" इत्यत्राव्याजपदेन प्रपदनस्यानुपायत्वमभ्यधायि ।

किंच-प्रपत्तेरुपायत्वं वदन् वादी प्रष्टव्यः-किं प्रपन्नस्य भगवानपि करणं न वा इति । नाद्यः-प्रपदनस्य करणत्वं न स्यात् । एककार्यम्प्रति एकस्य करणत्वनियमात् । न द्वितीयः-"मुमुक्षुर्वैश्शरणमहं प्रपद्ये" "शरणं सुहृद्गतिर्नारायणः" "चरणौ शरणं प्रपद्ये" "मामेकं शरणं व्रज" "त्वामेव शरणं प्राप्य" "सञ्चिन्त्य शरणं व्रज" "सोऽहं त्वां शरणमपारमप्रमेयम्" "चरणद्वन्द्वं व्रजामि शरणम्" "शरणं त्वामनुप्राप्ताः" "अमृतं साधनं साध्यम्" "राघवं शरणं गतः" "स्वासिद्धेस्स्वयमिहकरणम्" "स्वप्राप्तेस्स्वयमेव साधनतया जोघुष्यमाणश्श्रुतौ" "उपायस्स्वप्राप्तेरुपनिषदधीतस्स भगवान्" इत्यादिपरस्सहस्रवचनानां भगवदुपायत्वप्रतिपादकानामनन्यथासिद्धानामप्रामाण्यप्रसङ्गात् ।

किंच "न ह्यध्रुवैः प्राप्यते" "नास्त्यकृतः कृतेन" इत्यादि वचनैः परमात्मन एव सर्वत्रोपायत्वकथनादस्य वरणस्यानुपायत्वं सिद्धमित्यलं रहस्यार्थसारविस्तरेणेति ।

अथवा, एकैकमेव किमित्युच्यते त्रिविधकरणेनापि 'आश्रयणे कथिते को विरोध इत्यत आह-उपाय इत्यादिना। तदापि एकैकमेवालम्, त्रयमपेक्षितामिति निर्बन्धो नास्तीत्यर्थः। "निर्बन्धो नास्ति" इत्युक्तत्वात्-एतस्मिन्स्वीकारे त्रिविधकरणेन च सद्भावेऽपि न्यूनता नास्तीत्ययमर्थः विज्ञायते।

"एतत्प्रपदनम्-करणत्रयेणास्तु वा, एककरणेन वास्तु; फलसिद्धेर्न्यूनता नास्ति, अधिकारिपूर्तैः करणत्रयमप्यपेक्षितम्, फल-

---

(साक्षादुपायत्वाभावात्) इति-अत्रायमाशयः-प्रपदनस्य दृष्टविधया कारणत्वमङ्गीकृतम्। तच्च व्याजमात्रम्। व्याजत्वं च-अहेतुत्वे सति अतिप्रसङ्गावरकत्वम्। यथा मङ्गलार्थमारोपितस्यापि दीपस्य तिमिरप्रत्यनीकतास्वभावतया यद्दर्शनकरणत्वं प्रसङ्गाद्भवति, तद्वत्। अत एव निगमान्तदेशिकैस्तत्रतत्र प्रपदनस्य व्याजत्वमनुगृहीतम्। तावन्मात्रेण तस्योपायत्वं न सिद्ध्यतीति प्रागेव प्रपंचितम्। अनुगृहीतं चैतत् आचार्यचरणैरेव श्रीवचनभूषणदिव्यशास्त्रे। वक्ष्यते च चरमश्लोकप्रकरणे एकपदार्थव्याख्यानावसरे-इति।(मानसस्वीकार एक एवालम्) इति-सर्वमुक्तिप्रसङ्गादिनिवारणायेति भावः। (एतात्रितयं च) इति-समुचित्येति भावः।

(अथवे) ति-"मानसेन भवितव्यम्" इत्यवलम्ब्य पूर्वसङ्गतिः, "वाचिके कायिके चाश्रयणेऽपि फलस्यालाभो नास्ति" इत्यवलम्ब्येयं सङ्गतिरिति द्रष्टव्यम्। (एकैकमेवालम्)—करणत्रये अन्यतमकरणमेवालमित्यर्थः। फलसिद्धेस्साक्षादुपाय ईश्वरः, अस्य चेतनस्य प्रदीयमानफलस्याप्रतिषेधद्योतकरूपस्यकस्यचिद्व्यापारस्यापेक्षितत्वात्, तस्योपायत्वे अधिकारत्वेनाप्रतिषेधद्योतकरूपैककरणसमाश्रयणमे-

सिद्धेरेककरणमेवालम्, उपायपूर्तेः-श्रियःपतित्वम्, वात्सल्यादिगुण-योगः, दिव्यमङ्गलविग्रहश्च यथापेक्षितः, तथाधिकारपूर्तेः करण-त्रयमप्यपेक्षितम्" इति हिं परन्दपडिप्रबन्धे उक्तवन्तः ॥ ४१ ॥

(४२). "सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम्" "सकृ-देव प्रपन्नाय" इत्यादिषूक्तप्रकारेण प्रपत्तेस्सकृत्करणीयत्वात्, वर्त-मानत्वकथनं किमर्थमित्यत आह-वर्तमाननिर्देश इत्यादिना ।

---

वालमिति भावः ।

उक्तार्थे ग्रन्थान्तरवाक्यं दर्शयति-एतत्प्रपदनमिति । सम्भूयकरणत्रयानु-ष्ठानं किमर्थमित्यत्राह-अधिकारिपूर्तेरिति । (एककरणमेवालम्)-एककर-णेनोत्पन्नप्रपदनमेवालामित्यर्थः । अधिकारिपूर्तेःकरणत्रयप्रपदनस्यावश्यकत्वे पूर्णा-धिकारिण एव फलसिद्धिस्स्यात्, तेन फलसिद्धेःकरणत्रयमवश्यापेक्षितमिति शङ्का-यामाह-उपायपूर्तेरिति । उपायत्वपूर्तेरित्यर्थः । अज्ञातसुकृतं व्याजीकृत्याङ्गीक-र्तुरीश्वरस्य चेतनविषये अप्रतिषेधमेवालामिति हृदयम् ॥ ४१ ॥

(सकृदेव ही) ति लक्ष्मीतन्त्रस्थवचनम् । "अस्यां स्थितो जगन्नाथं प्रप-द्येत जनार्दनम्" इति पूर्ववाक्योक्तप्रपत्तिपरामर्शपरः-अयमिति शब्दः । (इ-त्यादिषु) "सत्यं तद्द्वयं सकृदुच्चारो भवति" "सकृदेव प्रपन्नस्य कृत्यं नैवान्य-दिष्यते" "सकृत्कृतोऽञ्जलिः" इत्यादिकमादिशब्दग्राह्यम्।(वर्तमानत्वकथनम्) इति-'प्रपेदे' इति भूतार्थप्रयोगमकृत्वा 'प्रपद्ये' इति वर्तमाननिर्देशकथनमित्यर्थः । अत्र पुनःपुनरनुसन्धानयोग्ये मन्त्रे वर्तमानार्थकधातुप्रयोगे तत्तच्छब्दप्रयोगाधिकर-णकालानां सर्वेषां तदा तदा वर्तमानकालत्वेन तत्तत्कालीनप्रपत्त्याश्रयत्वबोधने सति

मू॥ वर्तमाननिर्देशम्-सत्त्वं तलैयेडुत्तञ्जिनपोदनुसन्धिक्कैक्काह ॥ ४२ ॥

छा॥ वर्तमाननिर्देशः-सत्त्वोन्मीलने भये सति, तदानुसन्धानाय ॥ ४२ ॥

व्या॥ "लोकविक्रान्त चरणौ शरणं तेऽव्रजं विभो" "त्वच्चरणयुग्मं प्राप्तोऽस्मि""चरणयोरधस्तात् सम्यक्प्रविष्टोऽस्मि"इत्युक्तप्रकारेणानुक्त्वा 'प्रपद्ये' इति वर्तमानत्वकथनम् प्रकृत्या सह वर्तमानोऽयं रजस्तमोभ्यां कलुषितः, उपायापायेष्वेकस्मिन्नन्वितः,

---

असकृत्करणीयतया सूचनं भवति, भूतार्थकधातुप्रयोगे सति मन्त्रस्य पुनःपुनरनुसन्धानेऽपि स्वप्रपत्यवच्छेदकस्यैककालस्यैव बोधविषयत्वं सुवचमिति सकृत्करणीयतालाभो भवति, अतो वर्तमानार्थकधातुप्रयोगः सकृत्कर्तव्यप्रपत्त्यनुष्ठानप्रकाशकमन्त्रे अनुपपन्न इति पूर्वपक्षाशयः।

'जन्मान्तरसुकृतपरिपाकवशात्, प्रपत्तावधिकृतानामधिकारिणामनुगुणायेदं सूत्रं प्रवृत्तम्। तेषामेव मिश्रसत्त्वसद्भावात्। केवलभगवन्निर्हेतुकजायमानकालकटाक्षजन्यनिष्कृष्टसत्त्ववतामुपायापायसंयोगजन्यदोषसंभावानावकाशाभावात्, न तेषामनुगुणायेदं प्रवृत्तम्। अत एव "मन्दाधिकारिणां रजस्तमोवशेनोपायापायसंसर्गसंभवात्" इति वीरराघवाचार्यैस्तात्पर्यदीपिकायामुक्तम्। तर्हि वर्तमाननिर्देशप्रयोजनं किमिति चेत्-"बर्हिर्देवसदनं दामि" इत्यादिवाक्येष्विव तत्कालानुष्ठानमात्रज्ञापकपरत्वाच्चास्य। वक्ष्यमाणरीत्या कालक्षेपादिपरत्वाच्चेति ज्ञेयम्' इत्यस्मदाचार्याः।

सूत्रं व्याचष्टे-लोकविक्रान्ते ति। (इत्युक्तप्रकारेणानुक्त्वा) इति-भूतार्थकधातुप्रयोगेणानुक्त्वेत्यर्थः। "उपायापायसंयोगे निष्ठया हीयतेऽनया। उपायसंप्लवे सद्यःप्रायश्चित्तं समाचरेत्" इति वचनमभिप्रेत्याह-उपायापायेषु इति

सत्त्वाभिवृद्धौ अनुतापोत्पत्त्या भीतश्चेत्, "प्रायश्चित्तिरियं सात्र

"हिंसास्तेयादयश्शास्त्रैरपायत्वेन दर्शिताः । कर्मसांख्यादयश्शास्त्रैरुपायत्वेन दर्शिताः" इति पूर्वानुसारेण–उपायशब्दः-"कर्मसांख्यं तथा योग इति शास्त्रव्यपाश्रयाः" इत्युक्तकर्मज्ञानभक्तिपरः। अपायशब्दः-हिंसाचौर्यादिपरः । (प्रपत्तिविने) ति-यथा योगनिष्ठस्य "अपि चेत्पातकं किंचित् योगी कुर्यात्प्रमादतः । योगमेव निषेवेत नान्यं यत्नं समाचरेत्" इति पातकादिसम्प्लवे कर्मरूपप्रायश्चित्तव्यतिरेकेण योगस्यैव प्रायश्चित्तत्वविधानम्, तद्वदत्रापि उच्यत इति भावः ।

ननु'प्रपन्नस्य प्रतिपदोक्तप्रायश्चित्ताभावः प्रत्यपादि, स च न सम्भवति, मन्वादिभिःप्रायश्चित्ततया कृच्छ्रचान्द्रायणादीनां विधानात्, अन्यथा तत्प्रतिपादकशास्त्रविरोधस्स्यात्' इति चेन्न,-तादृशशास्त्राधिकारः कर्मयोगमात्रनिष्ठस्यैव, न तु तद्व्यतिरिक्तस्येति वक्तुं शक्यत्वात्

न च शरणागतस्यापि प्रतिपदोक्तप्रायश्चित्तमस्त्विति वाच्यम्,–"प्रायश्चित्तात्मकः कश्चिदुत्पन्नानर्थनाशनः । तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत् ॥ तस्मात्प्रमादाद्बुध्या वा यत्प्रपन्नस्य दुष्कृतम् । तत्सर्वं शमयत्याशु शरणागतिरेवसा" इति लक्ष्मीतन्त्रवचनेन तादृशप्रायाश्चित्तनिषेधात् । न चाशक्तप्रपन्नस्य तन्निषेध इति वाच्यम्,-प्रतिपदोक्तप्रायश्चित्तस्याशक्तम्प्रत्यप्रसक्तत्वेन तन्निषेधायोगात् । त्वत्पक्षे सर्वस्यैव प्रपन्नस्याशक्तत्वात् । तस्मादप्यशक्तमात्रविषयत्वकल्पने प्रमाणाभावः ।

वरदाचार्यैश्च प्रपन्नपारिजाते विहितव्यवस्थापनपद्धतौ "अत्र हिंस्याद्यपायश्च काम्यश्चेत्यादिकं तथा । उपायं कर्मसांख्यादि प्रायश्चित्तादिकं तथा । चान्द्रायणादिकं कर्म न कुर्यात्तु कदाचन" इति प्रपन्नविषये ह्यपायादिवत्तन्निषेधस्समर्थितः ।

तथा सौम्यजामातृमुनिभिस्तत्त्वदीपे चरमश्लोकव्याख्यानावसरे–"त्रिविधां प-

श्य देवेश कर्मणो गहनां मतिम् । निषेधविधिशास्त्रेभ्यस्तां त्रिधां च निबोध मे ॥ अनर्थसाधनं किंचित् किंचिच्चाप्यर्थसाधनम् । अनर्थपरिहाराय किंचित्कर्मोपादिश्यते ॥ वैश्वरूप्यं कर्मणामेवं विज्ञेयं शास्त्रचक्षुषा । अपायोपायसंज्ञौ तु पूर्वराशी परित्यजेत् ॥ तृतीयो द्विविधो राशिरनर्थपरिहारकः । प्रायश्चित्तात्मकः कश्चिदुत्पन्नानर्थनाशकः ॥ तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत् । क्रियमाणं न कस्मैचिद्यदर्थाय प्रकल्पते ॥ आक्रियावदनर्थाय तत्तु कर्म समाचरेत् । एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा ॥ अस्यां स्थितो जगन्नाथं प्रपद्येत जनार्दनम् " इति । एतदुक्तं भवति- " उपायापायसन्त्यागी मध्यमां स्थितिमास्थितः " इति शरणागतस्योपायापायमध्यमस्थितिश्रवणानन्तरम् " उपायापाययोर्मध्ये कीदृशी स्थितिरम्बिके । उपायापायतामेव क्रिया सर्वावलम्बते । स्वीकारे व्यतिरेके वा निषेधविधिशास्त्रयोः । दृश्यते कर्मणो व्यक्तमपायोपायरूपता" इति विधिनिषेधात्मकं शास्त्रचोदितस्य सर्वस्य कर्मणोऽनुष्ठाने उपायरूपत्वम् , अननुष्ठाने अपायरूपत्वमिति उभयव्यतिरेकेण मध्यमस्थित्यदर्शनात् , उत्पन्नसन्देहस्य शक्रस्य मध्यमस्थितिप्रदर्शनार्थं कर्मविभागमुपादिशाति । तत्रानर्थरूपनरकादिदुःखहेतुभूतो निषिद्धानुष्ठानात्मकः कश्चिदपायसंज्ञः, भोगमोक्षरूपपुरुषार्थसाधको विहितानुष्ठानरूपः कश्चिदुपायसंज्ञः, उभावपि शरणागतस्य त्याज्यौ । अपायः-अनर्थभयात्त्याज्यः; उपायः- भगवदुपायत्ववरणाङ्गतया त्याज्यः । उभयव्यतिरिक्तः कश्चिदनर्थपरिहारको राशिः-पूर्वार्जितपापरूपानर्थपरिहारप्रायश्चित्तात्मकतया, अकरणे प्रत्यवायरूपागाम्यनर्थपरिहारानित्यनैमित्तिककर्मात्मकतया च द्विविधः । तत्र पूर्वार्जितपापनिवर्तकप्रायश्चित्तात्मको राशिः सर्वपापविमोचकसिद्धोपायावलम्बिनस्त्याज्य एव " इति अपायत्वप्रतिपदोक्तप्रायश्चित्तकर्मापि प्रपन्नस्य त्याज्यमित्युक्तम् । तत्रैव स्थलान्तरे " अपायोपायभूतोभयसंयोगे अस्याधिकारिणः प्रायश्चित्तं पुनःप्रपदनमेव । यथा योगनिष्ठस्य "अपि चेन्नरकं किंचिद्योगी कुर्यात्प्रमादतः । योगमेव निषेवेत नान्यं यत्नं समाचरेत् " इति पातकादिसम्भवे कर्मरूपप्रायश्चित्तव्यतिरेकेण योगस्यैव प्रायश्चित्ततया विधा-

म्, तद्वदत्राप्युच्यते, "अपायसम्प्लवे सद्यःप्रायश्चित्तं समाचरेत् । प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत् ॥ उपायानामुपायत्वस्वीकारेऽप्येतदेव हि" इति प्रतिपदोक्तकर्मादिरूपप्रायश्चित्तनिषेधपूर्वकं पुनश्शरणवरणं प्रायश्चित्तम्" इति प्रपंचितम् ।

श्रीरामायणे च "कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बध्वा लक्ष्मणस्य प्रसादनात्" इति 'प्रपदनरूपांजलिव्यतिरेकेण लक्ष्मणस्य प्रसादकं किञ्चिन्नास्ति' इति सुग्रीवमुद्दिश्य सम्यगुपपादितम् । तथैव तेन तदेवानुष्ठितं च ।

ननु 'प्रपन्नानां प्रतिपदोक्तप्रायश्चित्तानङ्गीकारे पाषण्डचण्डालादिस्पर्शे स्नानकर्म न स्यात्, सूतिकागृहशुद्ध्यर्थं पुण्याहकर्म च न स्यात्, इति चेन्नैवम्,-साक्षान्नरकजनकपापानां चण्डालादिस्पर्शादिभिरनुदयात्, कर्मानुष्ठानयोग्यतावैकल्यहेतुभूतपापोत्पत्तिनिरासकत्वेनाभ्युपगमाच्च । न हि तावता साक्षान्नरकहेतुभूतब्रह्महननादिप्रयुक्तपापध्वंसार्थं प्रतिपदोक्तप्रायश्चित्तं तन्त्रवचनानिषिद्धं प्रपन्नानां युक्तम्,-"क्रियमाणं न कस्मैचिद्यदर्थाय प्रकल्पते । अक्रियावदनर्थाय तत्तु कर्म समाचरेत्" इति भाव्यनर्थपरिहाररूपस्नानसन्ध्यावन्दनादिरूपकर्मावश्यं कर्तव्यमिति लक्ष्मीतन्त्रे निर्णीतम् । वरदार्यैरपि "भाव्यनर्थस्य यत्कर्म परिहारेण कीर्तितम् । सन्ध्यार्चापंचयज्ञादि तन्मुमुक्षुभिरादृतम् । नैमित्तिकं चाग्रयणं सीमन्तोन्नयनादिकम् । अग्न्याधानादिकं कार्यमधिकारे सति द्विजैः" इत्ययमर्थस्स्पष्टमभ्यधायि ।

अतःप्रपन्नस्यानुतप्तस्य पातकादिसम्भवे "अपायसम्प्लवे सद्यःप्रायश्चित्तं समाचरेत् । प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत्" इत्याद्युक्तं प्रपदनमेव प्रायश्चित्तमिति स्वीकर्तव्यम् । वरदार्यैरपि-"प्रायश्चित्तस्प्रपन्नस्य विशेषेण यदुच्यते । लक्ष्मीतन्त्रे कमलया निमित्ते तु तदाचरेत्" इति । प्रदेशान्तरे च "तेष्वन्वये सति सतामनुतापो भवेद्यदि । प्रायश्चित्तं ततः कुर्यू रहस्यश्च प्रकाशकम् । प्रपन्नस्यानुतप्तस्य रहस्ये त्वधिकारिता । प्रायश्चित्तं यथेन्द्राय पृच्छते कमलाह च । प्रायश्चित्तं प्रपन्नस्य दर्शितं पूर्वपद्धतौ । एतदर्थमभिप्रेत्य पराशरवचो य-

यन्पुनश्शरणं व्रजेत्" इत्युक्तप्रकारेण प्रपत्तिं विना तस्य परिहाराभावात्, तस्यास्सकृत्करणानन्तरं पुनःकरणाभावात्,

---

था। कृते पापेऽनुतापो वै यस्य पुंसःप्रजायते। प्रायाश्चित्तं तु तस्यैकं हरिसंस्मरणं परम्। पापे गुरूणि गुरिणि स्वल्पान्यल्पे च तद्विदः। प्रायश्चित्तानि मैत्रेय जगुस्स्वायम्भुवादयः। प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै यानि तेषामशेषाणां कृष्णानुस्मरणं परम्। भगवद्ध्यानयुक्तस्य तद्ध्यानावधिकाः क्रियाः। नास्तिकस्य तु मूर्खस्य युक्तं द्वादशवार्षिकम्। एवं विषयभेदेन गुरुलघ्वोर्न सङ्करः। क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता। इत्येवं याज्ञवल्क्येन ब्रुवता स्वपरात्मनोः। शेषशेषित्वविज्ञानाच्छुद्धिर्जीवस्य वर्णिता। अतिपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्। भूयस्तपस्वी भवति पंक्तिपावनपावनः। अपवित्रःपवित्रो वा सर्वावस्थांगतोऽपि वा। यस्स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरश्शुचिः। इत्यादिशौनकाद्युक्तेर्भगवद्ध्यानिनां नृणाम्। कृते पापेऽनुतप्तानां तद्ध्यानादवधिक्रिया" इत्यादिभिःप्रपदनमेव प्रायश्चित्तमिति पुनः पुनःप्रपंचितम्।

ननु रहस्यत्रयसारे अपराधपरिहाराधिकारे कथं तर्हि वेदान्ताचार्यैः प्रतिपदोक्तं कर्मरूपप्रायश्चित्तमभ्युपगतमिति चेत्, प्रपन्नस्याकृत्येषु प्रवृत्तिनिरसनार्थं भयजनकत्वेन तथा व्याख्यातमिति निगूढमेतत्। अन्यथा सकलशास्त्रपारङ्गतवरदाचार्यवचनविरोधो दुर्वारस्स्यात्। पूर्वाचार्यवचनसम्प्रदायविरोधश्च। लक्ष्मीतन्त्रवचनविरोधश्च। तस्मात्प्रपन्नस्य पुनःपापसम्भवादिभिरनुतप्तस्य प्रपदनं विना प्रायश्चित्तं नास्तीति सिद्धान्तसिद्धमभिप्रेत्यैव–प्रपत्तिं विना तस्य परिहारभावादित्यनुगृहीतम्।

उपात्तवचनेषु "सकृदेव हि शास्त्रार्थः" इति सावधारणसकृत्त्वस्य पुनश्शरणा-

गतेश्च मिथो व्याघात इति शङ्कायाम्, उपक्रमावगतसकृत्त्वानुगुणोपसंहारगतपुनः-प्रपत्तिवचनम्-पूर्वकृतप्रपत्तिस्मरणपरम्' इति उपक्रमाधिकरणन्यायसिद्धमिति परि-हारमभिप्रेत्याह-पूर्वप्रपदनानुसन्धानार्थमिति । "यत्पुनश्शरणं व्रजेत्" इत्यत्र शरणशब्दः-पूर्वस्वीकृतोपायपरः । "व्रजेत्" इतिधातुः-तत्स्मरणरूपज्ञानपर इति भावः ।

ननु अनन्यथासिद्धोपक्रमावगतस्य-उपसंहारस्यास्वारस्योपगमापादकत्वेऽपि, अत्र विद्यान्तरन्यायप्राप्तावृत्तिनिवारकत्वेनान्यथासिद्धस्यार्थादवगतस्य च सकृत्त्व-स्य, उपसंहारगतत्वेऽपि विधिरूपपुनश्शरणागतिवचनस्य च स्वारस्यहान्यापादकत्वं न भवति, किंच[(१)]-"सकृदेव प्रपन्नस्य कृत्यं नैवान्यादिष्यते । उपायापायमुक्तस्य व-र्तमानस्य मध्यतः" इत्युपायापायसंप्लवविरहदशायां कर्तव्यान्तरनिषेधात्, उपाया-पायप्रवृत्तिदशायां कर्तव्यान्तरनिषेधाभावाच्च । न च समर्पितभरस्यास्वीयत्वात् पुनः समर्पणासम्भवः, मोक्षार्थभरस्य समर्पितत्वेऽपि उपायसंयोगादिनिवृत्त्यर्थभरसमर्पणाभा-वात्, समर्पणीयभराभावश्च नास्ति । न ह्युपायसंयोगो मोक्षप्रतिबन्धकः । फलविलम्बोप-क्लेशान्यतरमात्रहेतुत्वात् । न च "कृते पापेऽनुतापो वै" इत्यादिषु स्मरणशब्दश्रवणा-त्तत्सिद्धिः, प्रथमप्रपत्तावपि, "स्मर्ता" इतिश्रवणात् । नच 'प्राथमिकप्रपदनेनोपायापा-यप्रवृत्तिनिवृत्तेस्सद्भावात्, पुनःप्रपदनमनपेक्षितम्' इति वाच्यम्, भक्तेरिव प्रपदन-स्यापि अबुद्धिपूर्वकाघमात्रनिवर्तकत्वात्, पुनःप्रपदनविधिसामार्थ्येन "सर्वपापेभ्यः" इति सर्वशब्दस्य बुद्धिपूर्वकोत्तराघव्यतिरिक्तविषये सङ्कोचस्य न्याय्यत्वात् । किंच-पूर्वकृतप्रपत्तेः बुद्धिपूर्वोत्तराघनिवर्तकत्वे विशिष्य वचनमपि नास्ति, वचनाभावेन च बुद्धिपूर्वोत्तराघनिवृत्त्युद्देशेन प्रपत्त्यनुष्ठाने भक्तेश्चानुष्ठानत्वप्रसङ्गस्स्यात् । सर्वैरप्येवं बुद्धिपूर्वकोत्तराघनिवृत्त्यर्थं प्रपत्त्यनुष्ठानप्रसङ्गेन पुनःप्रपत्तिविधेर्निर्विषयत्वप्रसङ्गो दु-र्वारः । "करिष्यमाणांश्च" इति गद्यश्रीसूक्तिश्चाबुद्धिपूर्वकोत्तराघमात्रविषया । करि-ष्यमाणशब्दः-करिष्यमाणपापारम्भकपापपरो वा । तस्य पूर्वाघत्वात्, प्राथमिक प्रपत्तिनिवर्त्यत्वं सम्भवति । किंच-'निमित्तवत एव नैमित्तिकाधिकारत्वात्, बुद्धि-

(१) किञ्चेत्याधिकम्

पूर्वप्रपदनानुसन्धानार्थमित्यर्थः ॥ ४२ ॥

पूर्वोत्तराघरूपभविष्यन्निमित्तस्य-प्राथमिकप्रपदनरूपपूर्वनैमित्तिकप्रयोजकत्वाभावात् । तस्मादुपक्रमावगतसकृत्त्वस्यान्यथासिद्धत्वात् तद्बलेनोपसंहारगतपुनःप्रपदनविधिस्वारस्यस्य बाधयितुमशक्यत्वात् इति कैश्चिदुक्तम्, तत्प्रसङ्गमसङ्गतमित्यभिप्रायेण–पूर्वप्रपदनानुसन्धानार्थमित्युक्तम् । अत एव श्रीवचनभूषणव्याख्याने "पुनः प्रपदनं नाम–पूर्वप्रपदनस्मरणम्, न पुनःप्रयोगः" इत्यनुगृहीतम् ।

अयमभिप्रायः–प्रपत्तेःप्रारब्धनिवर्तकत्वे "मा शुचः" इति प्रमाणमिति भाष्यकारैर्दाशरथेरुक्तमिति सिद्धान्तसिद्धम् । एतेन–'अनार्तस्य प्रारब्धदेहे शोकाभावात्तदनुवृत्तिः, आर्तस्य तत्र शोकसत्त्वात्तन्निवृत्तिश्च' इत्युक्तम्भवति । तस्मात्–शोकजनकसर्वपापनिवर्तकत्वं प्रपत्तेस्सम्प्रतिपन्नम् । सम्भाव्यमानबुद्धिपूर्वोत्तराघेण सञ्जातशोकः कश्चित् 'तदपि क्षमाविषयं करणीयम्' इति प्रार्थितश्चेत्, भगवान् तदपि क्षमाविषयं करोति । अनेन–"मा शुचः" इत्यस्यैव बुद्धिपूर्वोत्तराघनिवर्तकत्वे प्रमाणत्वात्, प्रमाणाभावः, भक्त्यतिप्रसङ्गश्च प्रत्युक्तः । अत एव हि भाष्यकाराः "कृतान् क्रियमाणान् करिष्यमाणांश्च सर्वानशेषतःक्षमस्व" इति प्रार्थितवन्तः । 'करिष्यमाणशब्दः–अबुद्धिपूर्वोत्तराघमात्रविषयः' इति चेत्, सङ्कोचः, कृत्युद्देश्यत्वे सति कृतिविषयत्वस्य वाचकस्य करिष्यमाणशब्दस्य कृत्युद्देश्यत्वांशत्यागेन भागत्यागरूपलक्षणा च स्यात् । 'करिष्यमाणपापारम्भकपापपरः' इति चेत्, लक्षणाप्रसङ्गः, 'कृतान्' इत्यस्यारम्भकव्यतिरिक्तपरत्वे संकोचश्च स्यात् ।

'एवं ज्ञात्वा सर्वैः प्रथमत एव करिष्यमाणपापारम्भकपापक्षमाप्रार्थनासम्भवात्, पुनःप्रपदनविधिवैयर्थ्यप्रसङ्गः' इति, 'पापारम्भकपापनिवृत्तेस्स्वतःप्रयोजनाभावात्, कामनावश्यम्भावाभावात्,' इति, 'प्रत्युतागम्यागमनादिजन्यसुखविरोधित्वेन द्वेषविषयत्वात्, तत्प्रार्थनां न करोति' इति च यदुक्तम्, तदस-

न्तानुपपन्नम्, 'बुद्धिपूर्वोत्तराघः भगवन्निग्रहहेतुः' इति ज्ञानवतः, तदारम्भकपापनिवृत्तौ कामनाया आवश्यकत्वात्, 'अगम्यागमनादिजन्यसुखविरोधि' इति तत्र द्वेषं कुर्वतः प्रातिकूल्यव्यवसायनिवृत्तेरभावात्, प्रथमत एवाधिकारित्वाभावाच्च, तदङ्गीकारस्यानुपपन्नत्वात्। 'निमित्तवत एव नैमित्तिके तदधिकारः' इत्युक्तिरपि न विरुद्धा, भविष्यन्निमित्तकोऽपि निमित्तवान्खलु। निमित्तस्य नैमित्तिकानुष्ठानकालीनत्वनियमश्च नास्ति। "ऐन्द्राग्नमेकादशकपालं निर्वपेत् जनतामेष्यन्" इत्यादिषु एष्यज्जनतागमः पूर्वकालीननैमित्तिकप्रयोजकत्वेन दृष्टःखलु। निमित्तनिश्चयः नैमित्तिकप्रयोजकः। 'स च निमित्तस्य वर्तमानत्वभविष्यत्त्वयोरस्ति, प्रकृते सम्भाव्यबुद्धिपूर्वोत्तराघस्थले नास्ति' इति वचनमपि अनुपपन्नम्, उपरागशङ्कायां स्नानाचरणस्य, अज्ञातभुक्तशुद्ध्यर्थकृच्छ्रचान्द्रायणाद्याचरणस्य च शिष्टजने दर्शनात्, स्पर्शशङ्कायां स्नानाचरणस्य दर्शनाच्च, 'संशयनिश्चयसाधारणनिमित्तज्ञानमात्रं नैमित्तिकापेक्षितम्' इति स्वीकारो युक्तः। एवं स्वीकाराभावे पापारम्भकपापसद्भावस्यानिश्चितत्वात्, तस्य-प्रथमप्रपदनस्य प्रायश्चित्तत्वानुपपत्तिप्रसङ्गापत्तेः। तस्माद्बुद्धिपूर्वोत्तराघसम्भावनारूपनिमित्तज्ञानस्येदानीं सद्भावात्, नैमित्तिकानुष्ठानमुपपन्नम्। बह्वायाससाध्यस्थलीयनिष्कम्पप्रवृत्तौ निमित्तनिश्चयस्यापेक्षितत्वात्, एष्यन्महापातकशङ्कया तत्प्रायश्चित्तानां नित्यानुष्ठानप्रसङ्गश्च नास्ति।

किंच-पापारम्भकपापनिवृत्त्यर्थमनुष्ठाने विशिष्यवचनमपि नास्ति, प्रारब्धनिवर्तकत्ववचनानामार्ताधिकारिविषयत्वात्, दृप्तस्य पापारम्भकपापनिवर्तने तेषामनुपयोगात्, प्रमाणत्वे दृप्तस्य वर्तमानदेहे दुःखनिवृत्त्यंशमात्रेच्छया दुःखहेतुकर्मनिवृत्तेरसम्भवात्, दुःखानुभवितृप्रपन्नोच्छेदप्रसङ्गात्, 'वैराग्यार्थं दुःखहेतुकर्मांशो नेश्वरेण क्षम्यते' इति चेत्, शिक्षाप्रयोजकपापेऽपि तत्तुल्यम्।

त्क्त्वा

किंच-यच्छब्दयदिशब्दसप्तमीत्वाप्रत्ययशतृप्रत्ययादिरूपनिमित्तानिर्देशाभावात्, "मुमुक्षुर्वै शरणमहं प्रपद्ये" "शरणं व्रज····मोक्षयिष्यामि" इति कामनाप्रतीतेश्च पापे निमित्ते प्रपत्तिविधानस्य न नैमित्तिकविधिपरत्वम्, किन्तु पापनिवृत्तिकामनया प्रप-

त्तिविधेः, 'निमित्तवत एव' इत्यादिकमस्थानविजृम्भितम्। 'आवाहिता देवता यागाकरणे कुप्येत्' इतिवत्, अत्र बाधकाभावात्, बुद्धिपूर्वोत्तराघाभावे न क्षतिः। बुद्धिपूर्वोत्तराघनिवृत्तौ शोकातिरेकस्याधिकारत्वात् स्वैरचारप्रसङ्गादयो न सन्ति। एवं बुद्धिपूर्वोत्तराघनिवर्तकत्वम्-"तस्मात्प्रमादाद्बुद्ध्या वा यत्प्रपन्नस्य दुष्कृतम्। तत्सर्वं शमयत्याशु शरणागतिरेव सा" इति प्रपन्नपारिजातेऽप्युक्तम्। प्रामादिकनिवर्तकपूर्वप्रपत्तेर्बुद्धिपूर्वकाघनिवर्तकत्वमुक्तम्। "तथाप्यत्र प्रवृत्तिर्या त्वत्स्मृतस्सा विनश्यतु" इति प्रागेव बुद्धिपूर्वोत्तराघनिवृत्तिप्रार्थना च दृष्टा खलु। एवं शोकजनकसर्वपापनिवर्तकत्वरूपार्थसामर्थ्यसचिवोपक्रमावगतसावधारणसकृत्त्वानुगुणतयोपसंहारस्थपुनःप्रपत्तिविधानस्य प्रायश्चित्तान्तरप्रवृत्तिनिवृत्तिफलकपूर्वप्रपदनस्मरणपरत्वाश्रयणमुपपन्नम्। "यत्पुनश्शरणं व्रजेत्" इत्यत्र धातुना स्मरणं लक्षयति। शरणपदम्-पूर्वस्वीकृतोपायपरम्। धातुश्च स्मरणरूपज्ञानपरो वा। "प्रायश्चित्तात्मकः कश्चित् उत्पन्नानर्थनाशनः। तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत्" इत्यनुरोधेन "पुनश्शरणं व्रजेत्" इत्यस्य प्रायश्चित्तान्तरप्रवृत्तिनिवृत्त्यर्थं पूर्वप्रपदनस्मरणपरत्वमुपपन्नम्। अतः पूर्वकृतप्रार्थनास्मरणं पूर्वप्रपदनस्मरणम्। एवंविधपूर्वप्रपदनमेव युक्तम्, नेदानीं प्रार्थनापर्यन्तानुष्ठानरूपपुनःप्रयोगो युक्तः-इति।

अत्र "पूर्वप्रपत्तिप्रतिसन्धानम्, न तु पुनःप्रयोगः" इति तत्त्वदीपवचनमभिप्रेतम्। श्रीनारायणमुनिभिश्चैवमेवोक्तम्-रहस्यत्रयजीवातुरहस्यप्रबन्धे। तथा हि "वर्तमाननिर्देशस्तु-प्राकृतविग्रहसम्बन्धेन रजस्तमोभिभूतस्य तत एवोपायान्तरान्वयवतः, पश्चात्सत्त्वोद्रेकेणानुतापेन सहितस्य "प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत्" इति प्रपत्तिमन्तरेण परिहाराभावात्, सकृत्कृतायास्तस्याः पुनःकरणस्यानुचितत्वाच्च पूर्वकृतप्रपदनानुसन्धानार्थम्" इति।

नन्वे वर्तमानप्रयोगेण नानाकालानां स्वकृतप्रपत्त्यवच्छेदकत्वलाभेऽपि तत्तत्कालावच्छिन्नप्रपत्तिषु प्रथमप्रपत्तिरेवानुभवात्मिका, अनन्तरप्रपत्तयः-स्मरणात्मिकाः, अनुभवसमानाधिकरणा हि स्मृतयः, कालविशेषेषु स्मृतीनान्त्वावश्यकत्वं प्र-

(४३). पुनश्च वर्तमाननिर्देशस्य कानि चित्प्रयोजनान्याह- उपायान्तरेष्वित्यादिना ॥

मू॥ उपायान्तरङ्गलिल् नेञ्जुशेल्लामैक्काहवुम्, कालक्षेपत्तु-क्कुभिनिमैयाले विडवोण्णामैयालुं नडक्कुम् ॥ ४३ ॥ दुःशकत्वात

छा॥ उपायान्तरेषु मनसोऽगमनाय, कालक्षेपस्य च रस्यतया त्यक्तुमशक्यत्वाच्चानुवर्तते ॥ ४३ ॥

व्या ॥ पूर्ववासनया अवशादुपायान्तरेषु मनसोऽगमनाय, एतदनुसन्धानेन विना कालगमनस्य दुश्शकत्वात्

---

माणबोधितम् । अतो वर्तमाननिर्देशेऽपि अनुभवात्मकप्रपत्तेर्नसकृत्त्वकरणीयतासिद्धान्तभङ्गः । आवश्यकस्मृतिबोधकत्वेन तस्य सार्थक्यं चेति सिद्धान्ताभिप्रायः ॥४२॥

(पूर्ववासनये) ति-पूर्ववासनयोपायान्तरेषु उपायत्वस्वीकारनिवृत्तिर्विश्वासानुवृत्तेः प्रयोजनमिति भावः । अत एव शठारिणा भगवच्चरणारविन्दशरणत्वाध्यवसायस्य सार्वकालिकत्वमभिहितम् । लक्ष्मीतन्त्रे च "भूयस्त्वं शृणु संक्षेपमनसूयेन सूयया । श्रुत्वा च कुरु यत्नेन ररक्ष चाप्रमादिनी" इति औत्तरकालिकापायान्वयनिवृत्तिप्रयोजकविश्वासानुवृत्तिरूपरक्षाया अवश्यकर्तव्यत्वमुक्तम् । यःपुनर्निपुणतरः प्रागेव साधनान्तरसंसर्गारम्भककर्मनिवृत्तौ अपि भगवन्तमुपायमवृणोत्, तस्य विश्वासानुवृत्तिर्यद्यपि नोक्तप्रयोजना, तथापि तस्य भगवद्गुणानुसन्धानांशेन-कालक्षेपभोगार्थत्वेन सम्भवः-इत्यभिप्रायेण—कालक्षेपस्येत्यादिकमुक्तम् । "यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं साभ्रान्तिस्सा च विक्रिया" "एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम्" इत्यादिकमभिप्रेत्य-एतदनुसन्धानेन विना कालगमनस्य दुश्शकत्वादित्युक्तम् । "सत्ताहेतुसकृज्जपेन सकलं कालं द्वयेन क्षिपन्" इत्या-

कालक्षेपार्थम्, तस्य रस्यतया त्यक्तुमशक्यत्वाचैतदनुसन्धानं विच्छेदमन्तरेणानुवर्तनीयमित्यर्थः ॥ ४३ ॥

(४४). एवंविना फलसिद्धौ बहुकालमनुसन्धातव्यमित्युक्तौ को दोष इत्यत आह—फलायेत्यादिना ।

मू॥ 'पेत्तुक्कु पलकालं वेणुम्' एन्नु निनैक्किलुपायं नलुवुम् ॥ ४४ ॥

छा॥ 'फलाय बहुकालापेक्षिता' इति स्मरणे उपायश्च्युतो भवति ॥ ४४ ॥

व्या॥ पूर्वोक्तप्रयोजनानि विहाय 'फलार्थं बहुकालमनुसन्धानं कर्तव्यम्' इति प्रतिपत्तौ कृतायां सहायान्तरसंसर्गासहसिद्धोपायश्शणरज्जुसम्बन्धे ब्रह्मास्त्रमिव च्युतो भवतीत्यर्थः ॥

---

चार्यसूक्तिरनुसन्धेया । "नारायणपदद्वन्द्वं प्रपन्नो यावदायुषम् । द्वयमावर्तयेन्नित्यं तस्यार्थमनुचिन्तयन्" इति वचनम्, "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता" इति तदनुसारिभाष्यकृद्वचनं चैतदभिप्रायम् । उक्ता च प्रपत्तेरपि उत्तरकालं फलतयावृत्तिर्भरद्वाजेन "स्वाभाविकोऽस्य सम्बन्धःपुंसो यःपरमात्मनः । तस्यैव बोधो न्यासाख्यःप्रथमं यात्युपायताम् । स एवोपर्युपर्यस्य परां प्रीतिमुपावहन् । वृत्त्याख्यफलतां याति तदेवामृतमुच्यते" इति ॥ ४३ ॥

(एवंविना)-वर्तमाननिर्देशस्य पूर्वोक्तप्रयोजनमन्तरेत्यर्थः ।

'मामेकम्' इत्यत्रैकव्दार्थमभिप्रेत्याह—सिद्धोपाय इति । (सहायान्तरसंसर्गे) ति स्ववरणव्यतिरिक्ताङ्गकलापादिरूपसहायान्तरसंसर्गासहसिद्धोपाय इ-

एवं पूर्ववाक्यस्यार्थमुक्तवान् ॥ ४४ ॥

सर्थः । "अस्योपायविशेषस्य स्वव्यतिरिक्तासहत्वाद्धि आनुकूल्यसङ्कल्पादीनामुपायाङ्गत्वं विनावघातस्वेदवत्सम्भावितस्वभावत्वम्" इत्यमुमर्थं परन्दपडिप्रबन्धे स्वयमेवावोचत् । (उपायाङ्गत्वं विना)—वरणस्यादृष्टद्वारकफलसाधनत्वाभावेन तद्गतातिशयजननार्थमुपादेयतया विहितत्वं विनेत्यर्थः । (अवघाते) त्यादि-"व्रीहीनवहन्ति" इति विहितव्रीह्यवहननजन्यस्यावघातविध्यविषयत्वेन, स्वेदस्य स्वयमेवावहन्तृस्वभावप्रयुक्तजन्यत्ववत्, अत्यन्तपारतन्त्र्यज्ञानवतोऽस्याधिकारिणो भगवद्विषये आनुकूल्यादयोऽपि-विध्यविषयत्वेन, कृत्यनुपादेयत्वेन, वरणानपेक्षितत्वेन, वरणसमयवर्तित्वेन च स्वयमेवागच्छन्तीत्यर्थः । (सम्भावितस्वभावत्वम्)—विधिप्रयुक्तोपादेयताशून्यत्वे सति स्वत एव सत्तार्हत्वमिति सूक्त्यर्थः ।

अयमभिसन्धिः—"आनुकूल्यस्य सङ्कल्पः" इत्यादिना 'षट्प्रकारविशिष्टा शरणागतिः' इत्युच्यते । "अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः । त्वमेवोपायभूतो मे भवेति" इति स्वाकिंचन्यं पुरस्कृत्य 'त्वमेवोपायो भवितव्यः' इत्यपेक्षायाः शरणागतित्वेनोक्तम् । अत्रैकस्य स्वीकारे अन्यस्याप्रामाण्यं सिद्ध्यति, तर्हि उभयोराविरुद्धत्वेन नयनप्रकारः क इति चेत्, 'त्वमेव' इत्यत्रोपायान्तरनैरपेक्ष्यदर्शनात्, शरणागतेस्स्वरूपमुच्यते । 'आनुकूल्यस्य' इत्यादिश्लोकेन शरणागतिप्रवेशस्थले प्रवेशतया शरणागतस्य सम्भावितस्वभावा उच्यन्ते । अस्मिन् श्लोके शरणागतेस्स्वरूपदर्शने अन्यासहिष्णुत्वरूपा भवति, अथ शरणागतस्वरूपदर्शने तु एतत्स्वभावयुक्त एव वर्तते" इति श्रीकृष्णपादैरुक्तप्रकारेण प्रपत्तिस्वरूपपरवाक्यस्थोपायनैरपेक्ष्यानुरोधेन "आनुकूल्यस्य" इत्यादिवाक्यम्-उत्पन्नप्रपत्तिनियतस्वभावपरमिति स्वीकर्तुमुचितम् । 'षड्विधा शरणागतिः' इत्यत्र विधाशब्दः-प्रकारवाचित्वात् स्वभावपर एव । षड्विधाःस्वभावाः, यस्यास्सा तथोक्ता, सामानाधिकरण्यं षष्ठ्यर्थः, अत एव

हि अङ्गाङ्गिभावानिर्देशेन समप्राधान्यनिर्देशः कृतः । एवंस्वीकारे अङ्गाङ्गिषु पद्विधत्वोपचाराश्रयणक्लेशोऽपि नास्ति । अस्मिन्प्रपत्तिशास्त्रे अङ्गशब्दः-परोद्देश्यकक्रतिकारकत्वेन विहितत्वरूपतार्तीयकप्रयाजाद्यसाधारणाङ्गत्वपर इति न स्वीकारयोग्यः; गोप्तृशक्तिनिरूपणेऽप्यङ्गत्वस्य कथनात्, अकर्तव्यानां विरोध्यभावादीनामुपाङ्गत्वस्य कथनाच्च । तस्मात् सम्भावितस्वभावपरत्वमुचितमिति ।

श्रीमन्निगमान्तदेशिकैः श्रीमद्रहस्यत्रयसारे परिकरविभागाधिकारे द्वयमन्त्रप्रतिपाद्यशरणागतेरानुकूल्याद्यङ्गकत्वस्य महता प्रबन्धेन दर्शितत्वेऽपि, तस्य न्यासविद्यानिष्ठमात्रपरत्वेनाचार्यैरन्यत्र प्रपंचितत्वात् नात्र विरोधश्शङ्कनीयः । "वेदान्ताचार्याणां साधनप्रपत्तिशास्त्रप्रवर्तनाधिकृतत्वात्"-इत्याचार्यैरुक्तम् ।

(शणरज्जुसम्बन्धे)इति-"प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते । सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा॥सकृदुच्चारिता येन तस्य संसारनाशिनी । राक्षसानामविस्रम्भादांजनेयस्य बन्धने । यथा विगलिता सद्यस्त्वमोघाप्यस्त्रबन्धना । तथा पुंसामविस्रम्भात्प्रपत्तिः प्रच्युता भवेत् । तस्माद्विस्रंभयुक्तानां मुक्तिं दास्यति साचिरात्" इत्यादिकमिह भाव्यम् । अत्र प्रपत्तिशब्दः-प्रपत्तव्यपरः, 'प्रपद्यत इति-प्रपत्तिः' इति व्युत्पत्तिनिष्पन्नस्य तस्य "अकर्तरि च कारके संज्ञायाम्" इत्यधिकारे "स्त्रियां क्तिन्" इति कर्मणि क्तिन्प्रत्ययविधानेन गतिशब्दवत्, शक्त्या प्रपत्तव्यपरत्वस्य युक्तत्वात् । "पन्था नमननामवान्" इत्यादिवचनेन प्रपत्तिवाचकशब्दस्य भगवत्परतायां अन्यत्र निर्णीतत्वात् । यद्वा लक्षणया भगवत्परः । तदुक्तं सम्प्रदायचन्द्रिकायां श्रीवेङ्कटनाथसूरिभिः द्वितीयप्रकाशे "ननु "भक्त्या परमया वापि प्रपत्त्या वा महामुने" इत्यत्र भक्त्या सह प्रपदनस्य विकल्पो दृश्यते, तदनुपायत्वपक्षे विकल्प एव न स्यादिति चेन्नैवम्; प्रपत्तेर्विकल्पासम्भवेऽपि प्रपत्तिपदस्य प्रपत्तव्यपरत्वेन तस्य तया विकल्पसम्भवात् । एवं "न्यासेन" इत्यादिषु तृतीया श्रुत्या करणत्वप्रतीतमपि प्रपत्तव्यस्येति न किंचिदनुपपन्नम् । ननु प्रपत्तिपदस्य प्रपत्तव्ये लक्षणाप्रसङ्गः इति चेत्, इष्टापत्तिः । अन्यथा प्रपत्तेरुपायत्वप्रसङ्गात् । न चेष्टाप-

त्तिः; प्रपदनस्वरूपोच्छेदप्रसक्तेः। प्रपदनानुपायत्वस्यानन्यथासिद्धानेकवचनन्यायलक्षणसिद्धत्वात्" इति।

**अत्रेदं तत्त्वम्**–अत्रोक्तप्रपदनस्य न्यासादिभिन्नत्वमाचार्यसम्मतम्। संयोगरूपचोदनाख्याभेदात्। तथा हि-"ओमित्यात्मानं युंजीत" इति श्रुतिर्न्यासचोदना। "मामेकं शरणं व्रज" "उपायं वृणु लक्ष्मीशम्" इत्यादिका वरणचोदना। अनयोश्चोदनयोरैक्यं न सम्भवति। योगवरणयोर्मिथोविभिन्नत्वात्। योगो नाम-ध्यानम्। "ओमित्यात्मनं ध्यायथ" इति वाक्यान्तरात्, 'युजिर्-योगे' 'युज-समाधौ' इत्यनुशासनात्, "योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु" इति कोशाच्च। वरणन्तु-प्रार्थनात्मको व्यापारविशेषः। तस्माच्चोदनाभेदादुभयोर्भेदो दुरपह्नवः।

ननु न्यासस्य सकृत्त्वं सर्वसम्प्रतिपन्नम्, तत्कथमत्र ध्यानात्मकत्वमुच्यते इति चेत्सत्यम्,–तत्तु सकृत्त्वं "न्यसेत्" इति विधीयमानस्य तान्त्रिकन्यासस्यैव, न "युंजीत" इति विधीयमानस्य वैदिकन्यासस्य। 'युजि-समाधौ' इति धातुबलात्, शास्त्रार्थस्वरूपस्यैवासकृदावृत्तत्वसिद्ध्या तस्य वचनान्तरेण सकृत्त्वविधाने बाधापत्तेः। यद्वा, "सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम्" इति वचनेन शास्त्रार्थस्यैव सकृत्त्वोक्त्या "युंजीत" इति विधीयमानस्य ध्यानरूपशास्त्रार्थस्यैव सकृत्त्वनियमः विप्रहितो भवति। तथा च न्यासविद्यायास्सकृत्त्ववचनेन सदादिविद्यानामिवाप्रयाणावृत्तिनिर्बन्धो निवारितो भवति। न तु शास्त्रार्थस्वरूपान्तर्गतामुत्पत्तिवाक्यसिद्धां योगरूपतामपि सकृत्त्ववचनं निवारयति। तथा सति शास्त्रार्थस्वरूपस्यैव लोपात् विधित्सितसकृत्त्वस्याश्रयासिद्धिप्रसङ्गात्।

किंच "क्षेत्रज्ञं ब्रह्मणि न्यसेत्" इत्यादिचोदनायामपि निपूर्वकासधातोर्निधानमात्रार्थकतया वरणार्थकत्वायोगात्, चोदनाभेदो दुरपह्नव एव।

रूपमपि भिद्यते–"आत्मनं युंजीत" इति न्यासविद्याया जीवात्मविशेष्यकत्वात्, "मामेकं शरणं व्रज" इति शरणागतेःपरमात्मविशेष्यकत्वाच्च।

किंच-न्यासविद्यायां जीवविशेषणतयानुसन्धीयमानस्य ब्रह्मणः "ब्रह्मा विश्वः कतमस्स्वयम्भुः प्रजापतिस्संवत्सरः" इत्यादिप्रतिपन्नं निरतिशयबृहत्त्वादिमहत्त्वपर्यन्तगुणजातं विशेषणत्वेनानुसन्धेयम्। शरणागतौ तु वात्सल्यादिगुणाष्टकं विशेष्यतावच्छेदकत्वेनानुसन्धेयम्। न्यासस्य "वसुरण्यो विभूरसि" इति सर्वाधारभूतं विभुस्वरूपं विषयः। शरणागतेः "सर्वं पूर्णं सहोम्" इत्युक्तार्चावतारो विषयः। न्यासे ब्रह्मात्मेति देवतान्तर्यामित्वमप्यनुसन्धेयम्। शरणागतौ "चरणौ" इति श्रीपरांकुशाद्याचार्यवैशिष्ट्यमनुसन्धेयम्। न्यासे "ब्रह्मणे" इति चतुर्थ्यन्तपदैर्ब्रह्मणश्शेषित्वं तत्समानाधिकरण्येन प्रणवघटकाकारेण रक्षकत्वं चानुसन्धेयम्। शरणवरणे तु मोक्षकरणत्वं शरणशब्देनानुसन्धेयम्। तस्माद्रूपभेदो दुरपह्नव एव।

तथानयोस्संयोगोऽपि भिद्यते-न्यासस्योपायविद्यात्वेन तन्निष्ठानां तत्र फलस्वाम्यलक्षणाधिकारबोधसत्त्वात्, "शास्त्रफलं प्रयोक्तरि" इति न्यायेन स्वार्थमोक्ष एव तत्र फलं भवति। शरणागतेरनुपायत्वेन सिद्धस्यैव भगवतस्तत्रोपायतया चेतनस्य प्रयोक्तृत्वाभावात्, "तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता" इति फलस्वाम्यलक्षणाधिकारत्यागात्, उत्तरखण्डनमश्शब्देन फलपारार्थ्यप्रार्थनाच्च केवलपरार्थमोक्ष एवात्र फलं भवतीति तयोस्स्वार्थपरार्थत्वाभ्यां फलवैषम्यात्।

'न्यासविद्या, शरणागतिविद्या' इति-आख्याभेदः-"तस्यैव बोधो न्यासाख्यः प्रथमं यात्युपायताम्" "शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्" इत्यादिषु स्फुट एव। तदेवं न्यासशरणागत्योस्संयोगरूपचोदनाख्यानामत्यन्तविशेषे सत्यपि यद्यैक्यमिष्येत, तर्हि सर्वेषां कर्मणामुपासनानां चाभेदात्, सर्वत्र सर्वेषामुपसंहारात्, सर्वशास्त्रार्थसाङ्कर्यापत्तिः। भेदकप्रमाणानां शब्दान्तरादीनामपि दत्तांजलिता स्यात्। 'योऽहमस्मि स सन्यजे" "जीवात्मानं हविःकृत्वा तच्छरीरं महीयसि। ब्रह्माग्नौ जुहुयात्" इत्यादिषु यागदानहोमादिशब्दान्तरश्रवणे सत्यपि यदि विधेयभेदो न स्यात्, तर्हि "शब्दान्तरे कर्मभेदः" इत्यादि तपस्विवचनं किमालम्ब्य प्राणधारणं करिष्यति। तस्माद्यागदानहोमादिशब्दैर्न्यासविद्यास्वपि अवान्तरभेदसिद्ध्या न्या-

सशरणागत्योर्भेदसिद्धिःकैमुत्तिकैव।

सद्विद्यादहरविद्यादिस्थलेषु वेदनोपासनशब्दानामेव श्रवणात्, साक्षाच्छब्द-भेदाभावेऽपि विद्यास्वरूपाणां "अर्थेनैव विशेषो हि निराकाङ्क्षतया धियाम्" इति न्यायेन विषयविशेषैकनिरूपणीयतया तत्तद्विषयविशेषात्मकरूपभेदेनैव शब्दोऽपि भिद्यत इति भगवता बादरायणेन "नाना शब्दादिभेदात्" इति तादृशश-ब्दभेदादिना विद्यानानात्वं सूत्रितम्। प्रकृते "ओमित्यात्मानं युञ्जीत" "शरणं व्रज" इत्यादिसाक्षाच्छब्दादिभेदानां सत्त्वात्, तैर्विद्यानानात्वसिद्धिरकामेनापि स्वीकर्तव्यैव।

ननु "ओमित्यात्मानं युञ्जीत" इति प्रणवकरणकं ब्रह्मविशेष्यकं ध्यानं सामान्येन विधीयते, "मामेकं शरणं व्रज" इत्यनेन तस्यैव ब्रह्मण उपायत्वेनाकारेण ध्यानं विधीयत इति सामान्यविशेषभावेन विधिद्वयस्याप्येकार्थपर्यवसानं युज्यत इति चेत्; नः तथा सति कर्मकाण्डे यागहोमादिशब्दानामप्येवमेवैकार्थपर्यवसानापत्तेः। 'याग-शब्देन देवताराधनसामान्यं विधीयते, होमशब्देन तद्विशेषः' इत्यादिरूपेण सामान्य-विशेषसम्भवात्।

किञ्च, "ओमित्यात्मनं युञ्जीत" इत्यत्र प्रणवस्य ब्रह्मवाचित्वं न सम्भवति, "ब्रह्मणे महसे" इत्यादिचतुर्थ्यन्तशब्दानामनन्वयापातात्, "ईदृशःपरमात्मा-सौ प्रत्यगात्मा तथेदृशः। अनयोरेष सम्बन्ध इति योगः प्रकीर्तितः" "स्वा-भाविकोऽस्य सम्बन्धः पुंसो यःपरमात्मना। तस्यैव बोधो न्यासाख्यः प्रथमं यात्यु-पायताम्" इति शाण्डिल्यभरद्वाजाभ्यां 'युञ्जीत' इति श्रुतिविहितन्यासयोगस्वरूप-स्य भगवच्छेषत्वज्ञानात्मकत्वेनोपबृंहिततया, तद्बलेन प्रणवस्य भगवच्छेषभूतचेतन-परत्वस्यैव स्वरसतस्सिद्धेश्च। तस्मात् "ब्रह्मणे त्वा महसे" इत्यत्र त्वेति युष्मच्छ-ब्दे सन्दंशेन चतुर्थ्यर्थे व्यत्ययेन द्वितीया, "महसे" इत्ययेन 'महः' इति "तद्ब्रह्म" इति पूर्वप्रश्नोक्तं स्मारितम्। "ओम्" इति त्र्यक्षरप्रणवोऽभिमतः।

तत्राकारो लुप्तचतुर्थ्यन्तः, उकारोऽवधारणार्थः, मकारो निष्कृष्टात्मस्वरूपपरः। तथा च 'महसे-ब्रह्मणे तुभ्यम्, आयैवाहमस्मि' इति; 'ब्रह्मणे' इत्यादिचतुर्थ्यन्तानां प्रणवान्तर्गतलुप्तचतुर्थ्यन्ताकारेणाभेदान्वयबोधनेन मकारार्थविशेषणत्वेनान्वयस्य-विवक्षितत्वात्, शाण्डिल्याद्युपबृंहणैककण्ठयसिद्धिः। 'ओमि' त्यस्याखण्डप्रणवपरत्वे तस्यापि ब्रह्मवाचकत्वेन 'ब्रह्मणे' इत्यनेन पौनरुक्त्यं दुर्वारम्। विशेष्य-वाचकाहमिति पदान्तराध्याहारप्रसङ्गश्च। "नमस्स्वस्ति" इत्यादिना चतुर्थ्युक्तौ-नमश्शब्दाध्याहारविभक्तिवैयर्थ्यदोषौ दुष्परिहरौ। "इत्यात्मानं युञ्जीत" इत्यनेन 'भगवदनन्यार्हशेषत्वरूपः, परमात्मसम्बन्धः, प्रकारतया वेद्याकारः' इत्युक्तम्। आत्मशब्देन स्वपर्यायेण 'युञ्जीत' इति समभिव्याहृतयोगकर्ता परामृश्यते। 'युञ्जीत-ध्यायीतेत्यर्थः। तदेवं न्यासविद्यायां परब्रह्मशेषत्वेनाकारेण चेतनस्यैवोपास्यत्वात्, पञ्चाग्निविद्यातुल्यस्यास्य शरणागतिविद्यापेक्षया भिन्नत्वं दुरपह्नवमेव।

ननु शरणागतिकरणमन्त्रेऽपि "प्रपद्ये" इत्यस्मदर्थमुख्यविशेष्यकबोधस्यैव जायमानतया तत्राप्यात्मन एव वेद्यत्वमिति चेन्न, "मामेकं शरणं व्रज" इति भगवदेकविशेष्यकोपायत्वप्रकारकज्ञानविशेषस्यैव विधीयमानत्वात्। 'प्रपद्ये' इत्युत्तमपुरुषस्तु-"बर्हिर्देवसदनं दामि" इत्यादिष्ववानुष्ठीयमानार्थप्रकाशकत्वरूपमन्त्रस्वभावनिबन्धनः। तस्मात्तदर्थस्य विधेयकोटिप्रवेशः।

किंच-सिद्धान्ते ज्ञानमात्रस्य 'जानाम्यहम्' इत्याकारकत्वेन ज्ञानस्वभावात् सर्वमप्युपासनमात्मविशेष्यकमेव। नैतावता ब्रह्मविद्यापंचाग्निविद्यादीनां ब्रह्मविशेष्यकत्वात्मविशेष्यकत्वादिविभागानुपपत्तिः। तद्वदत्रापि "तत्र इत्थं विदुः" इति वत् "आत्मानं युंजीत" इति न्यासविद्यायां प्रत्यगात्मन एव विशेष्यतयानुसन्धानविधानात्, "श्रद्धा तप इत्युपासते" इति वत् "मामेकं शरणं व्रज" इति शरणागतिविद्यायां भगवत एव विशेष्यतयानुसन्धानविधानाच्च, न्यासविद्यायाः पंचाग्निविद्यातुल्यत्वम्, शरणागतिविद्यायाः परविद्यातुल्यत्वं च दुरपह्नवमेवेत्युभयोर्भेदासिद्धिर्निष्प्रत्यूहैव। एतत्सर्वं प्रपंचितं वरददेशिकैःश्रीवचनभूषणमीमांसाभाष्ये। तत्र यथेष्टं द्रष्टव्यमित्यत्र विस्तर-

भीत्या न लिख्यते ।

एवं न्यासशरणागत्योःप्रदर्शितस्य विद्याभेदस्य स्थेम्ने शारीरकमीमांसान्यायैःकैश्चिदयं भेदो विशिष्य निरूप्यते । तत्र तावत्तैत्तिरीयके न्यासविद्यायां "न्यास इति ब्रह्म····न्यास इत्याहुर्मनीषिणो ब्रह्माणम्" इत्यादिना केवलब्रह्मस्वरूपमात्रं न्यासविद्याविषयत्वेन प्रदर्श्य, "वसुरण्यः" इत्यादिकरणमन्त्रेऽपि "ब्रह्मणे त्वा महसे" इति विग्रहविशेषमनुपादायाकारार्थकारणत्वादिविशिष्टं ब्रह्मस्वरूपमेव स्मर्तव्यतया श्रुतम् ।

अहिर्बुध्न्यसंहितायां शरणागतिप्रकरणे तु सुदर्शनस्वरूपं प्रस्तुत्य "अनेन दानवान्दैत्यान् निहन्ति मधुसूदनः । क्रियते ऽनेन तत्कर्म सर्वं सर्वगतेन वै ॥ तस्मात्सर्वात्मना चैनं स्वं बुध्वा परिरक्षति" इति तस्य भगवदन्तरङ्गकिङ्करतया तदत्यन्ताभिमतत्वमुक्त्वा, पश्चात् "अथवा भगवानेव स्वयं चक्रस्वरूपधृक् । अवस्थित इति प्राज्ञैः कथ्यते पुरुषोत्तमः" इति तस्यैव भगवदावेशावताररूपत्वमपि प्रतिपाद्य, तद्विषये "शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्" इति शरणागतिर्विहिता । एवं श्रीभगवद्गीतायामपि महाप्रकरणेनार्जुनम्प्रति आचार्यतया प्रस्तुत भगवदवतारविशेषे "मामेकं शरणं व्रज" इति शरणागतिर्विहिता । चरमश्लोकमूलभूते शरणागतिकरणमन्त्रे "चरणौ शरणं प्रपद्ये" इत्यर्चावताराचार्यावतारादिविग्रहविशिष्टस्यैव वरणीयत्वं प्रकाश्यते ।

तथा च न्यासविद्यायां व्यापकभगवत्स्वरूपमात्रमुपास्यम् । शरणागतिविद्यायामर्चाविग्रहादिविशिष्टं स्वरूपमुपास्यमित्युभयोर्भेदसिद्धिः। यथा "अन्यथात्वं शब्दातु" इत्याद्यधिकरणे वाजिनां छन्दोगानां चोद्गीथविद्ययोरुद्गीथविद्यात्वसाम्ये सत्यपि छन्दोगानामुद्गीथविद्यायां "ओमित्येतदक्षरमुद्गीथमुपासीत" इति प्रकृतमुद्गीथावयवं प्रणवं प्रस्तुत्य, तस्यैव प्राणदृष्ट्योपास्यत्वविधानात्, वाजिनामुद्गीथविद्यायां कृत्स्नमुद्गीथं प्रस्तुत्य तस्यैवोपास्यत्वविधानाच्च कृत्स्नोद्गीथविषयकत्वतदेकदेशविषयकत्वा-

भ्यां तयोर्भेदः "न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्" इत्यादिना सिद्धान्तितः। तथात्रापि स्वरूपमात्रविषयकत्वार्चावताराचार्यावतारादिविग्रहविशेषविशिष्टस्वरूपविषयकत्वाभ्यां न्यासशरणागत्योर्भेदसिद्धिरिति।

न च न्यासे निरुक्तविग्रहविशेषविशिष्टविषयकत्वं कथञ्चिदपि वक्तुं शक्यम्, विग्रहविशिष्टवेषेण भगवतो जीवस्वरूपान्तर्यामित्वायोगेन विग्रहविशिष्टत्वेऽपि स्वस्वरूपस्य न्यासायोगात्। विग्रहविशेषावच्छिन्नभगवन्निष्ठात्मतानिरूपितशरीरताया जीवे दुर्लभतया तत्प्रकारकजीवविशेष्यकानुसन्धानरूपन्यासयोगस्य भ्रान्तिरूपत्वापातादिति।

एतेन-क्वचिन्न्यासेऽपि शरणागतिशब्दप्रयोगदर्शनाद्द्वित्युक्तामिति निरस्तम्। "संज्ञातश्चेत्तदुक्तमस्ति तु तदपि" इत्यधिकरणगुणसूत्रोक्तप्रकारेण संज्ञैक्यस्य व्यभिचरितत्वात्। "संज्ञैक्यं विधेयभेदेऽप्यस्त्यैव। यथाग्निहोत्रसंज्ञा-नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च। यथा चोद्गीथविद्येति * छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु" इति हि तत्र भाष्यम्।

किंच-छन्दोगोद्गीथविद्यायामुद्गीथैकदेशस्येव, न्यासविद्यायां सिद्धोपायैकदेशभूतस्वरूपमात्रस्य विषयत्वम्, वाजिनामुद्गीथविद्यायां कृत्स्नोद्गीथोद्गातुरिव, मन्त्ररत्नचरणशब्दतात्पर्यविषयीभूतपरिपूर्णसिद्धोपायसिद्धस्य विषयत्वमित्यपि विषयभेदो द्रष्टव्यः। न चैवं शरणागतानां सिद्धोपायहानिः, उद्गातृनिष्ठस्योद्गीथनिष्ठात्वदेवोपपत्तेः। न चैवं न्यासेऽप्याचार्यादीनां विषयत्वं युज्यते, आचार्यादीनां परमात्मत्वायोगात्। परमात्मसम्बन्धज्ञानस्यैव न्यासात्मकत्वात्।

अथ न्यासविद्यायां "येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरादिशाश्च" इति सर्वदेशावच्छिन्नस्यैवोपास्यत्वोक्तेः, अनुष्ठानमन्त्रेऽपि "वसुरण्यो विभूरसि" इति विभुत्वानुसन्धानावगमात्, "जीवात्मानं हविःकृत्वा तच्छरीरं महीयसि। ब्रह्माग्नौ जुहुयात्" इति "महतो महीयान्" इत्युक्तापरिच्छिन्नस्वरूपावि-

षयकत्वस्यैव स्मरणाच्च सर्वदेशावच्छिन्नं ब्रह्मैव तत्रोपास्यम् । शरणागतिविद्यायां तु-"सर्वं पूर्णं सहोम्" इति द्वयोपनिषदहिर्बुध्न्यसंहितादिषु अर्चावतरादिकं प्रकृत्यैव शरणागतिविधानात्, सकलमनुजनयनविषयदिव्यमङ्गलविग्रहविशेषावच्छिन्नं स्वरूपं वरणीयमित्यनयोस्स्थानसम्बन्धभेदादपि भेदसिद्धिर्दुर्वारैव । यथा "सम्बन्धादेवमन्यत्रापि" इत्यधिकरणे बृहदारण्यके "सत्यं ब्रह्म" इत्युपक्रम्याम्नातस्य सत्यसंज्ञितब्रह्मोपासनस्यैक्येऽपि "य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्" इति सूर्यमण्डलरूपात्, दक्षिणाक्षिरूपाच्च स्थानभेदाद्विद्याभेदः "न वाविशेषात्" इति सूत्रेण प्रतिपादितः । तथैवात्रापि सर्वदेशरूपात्, दिव्यदेशरूपाच्च स्थानभेदाद्विद्याभेदः । न च दिव्यदेशावच्छिन्नस्यैव भगवत अघटितघटनाशक्त्यानवच्छिन्नत्वस्यापि सम्भवात्, उभयोरर्चावतारसमुच्चय इति शक्यं वक्तुम्, तथा सति "सम्भृतिद्युव्याप्त्यपि चातः" इत्यधिकरणविरोधात् । तत्र "ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान" इत्याम्नातयोस्सम्भृतिद्युव्याप्त्योर्हृदयाद्यल्पस्थानगोचरासु विद्यासूपसंहारासम्भवस्य भाषितत्वात् ।

ननु शाण्डिल्यदहरादिविद्यास्वल्पस्थानविषयासु "ज्यायान्पृथिव्याः यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्याम्नातानां तत्र तत्रोपसंहारानर्हाणां गुणानामुपास्यमाहात्म्यप्रतिपादनमात्रपरतयोपास्यानन्तर्भाववत्, अत्रापि "येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षश्च द्यौश्च दिशश्चावान्तरादिशश्च" इत्यादीनां केवलमाहात्म्यप्रकाशनमात्रार्थत्वान्न दोष इति चेन्मैवम्,—अनुष्ठानकरणमन्त्रे "विभूरसि" इति विभुत्वस्योपास्यान्तर्भावसिद्ध्या तदयोगात् ।

एवं तैत्तिरीयके न्यासविद्याप्रकरणे "तस्यैवं विदुषः" इत्यादिना पुरुषविद्यावाक्येन न्यासविद्यानिष्ठस्य मरणपर्यन्तोचरवृत्त्यादीनां यज्ञावयवत्वबुद्धिसम्भृतानां न्यासविद्याङ्गत्वं विहितम् । अहिर्बुध्न्यसंहितायां शरणागतिप्रकरणे वरणीयस्यैव सर्वयज्ञमयत्वेन सिद्धत्वं प्रतिपाद्य तादृशसिद्धधर्मभूतं सुदर्शनं शरणागत्यन्तर्भूतज्ञानात्मकयथावस्थितात्मयागेनाराधितवतश्शरणागतस्य "विदुःकृष्णं ब्राह्मणा-

स्तत्त्वतो ये तेषां राजन् सर्वयज्ञास्समाप्ताः" इत्याद्युक्तरीत्या शरणागत्यन्तर्गतशेषशेषिभावज्ञानात्मकसम्बन्धेन परिनिष्पन्नसर्वयज्ञसमाप्त्यात्मकभगवद्विशिष्टतया "कृतान्यनेन कर्माणि तपांसि तपतां वर । सर्वतीर्थास्सर्वयज्ञास्सर्वदानानि च क्षणात् । कृतान्यनेन मोक्षश्च तस्य हस्ते न संशयः" इति शरणागतस्योत्तरवृत्त्यादिनैरपेक्ष्यस्य प्रतिपादितत्वाच्च । पुरुषविद्यारूपाङ्गसापेक्षत्वतन्निरपेक्षत्वाभ्यामुभयोर्भेदासिद्धिश्च दुर्वारैवं ।

ननु श्रीमन्निगमान्तदेशिकैः "तस्यैवंविदुषः" इत्यादिकस्य केवलार्थवादत्वस्थापनात्, कथमस्याङ्गविधायकत्वमिति चेत्, "तेजो वै घृतम्" इत्याद्यर्थवादानां घृतादिविधायकत्ववदत्राप्युपपत्तेः । अन्यथा भाष्ये न्यासविद्यायाः पुरुषविद्याङ्गत्वस्य कण्ठतोऽनुगृहीतत्वात् सम्प्रदायविरोधो दुरुद्धरः । "पुरुषविद्यायामपि" इति भगवता बादरायणेनैव तत्र विद्याशब्दस्य प्रयुक्ततया केवलस्वरुचिमात्रेण महर्षिवचनविरुद्धार्थप्रतिपादने "विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम्" इति ब्रह्महत्यादोषो दुर्वारस्स्यात् ।

किंच-आत्मयागरूपत्वेनाभिमताया न्यासविद्याया यजमानपत्न्यादिसर्वपदार्थसापेक्षत्वेन तद्विधायकशास्त्रान्तराभावे न्यासरूपात्मयागस्यैवासिद्धिप्रसङ्गेन "तस्यैवंविदुषः" इत्यादिपुरुषविद्यावाक्यस्य न्यासविद्याङ्गपरत्वं भवतामवश्यं वक्तव्यम् । अत एव रङ्गरामानुजदेशिकैः "तस्यैवं विदुषः" इत्यत्र "एवंविदुषा क्रियमाणस्यात्महविस्समर्पणरूपयज्ञस्यात्मा यजमानस्समर्पणीय आत्मा यजमानः" इति प्रदर्शितम् । स्वसिद्धान्तानुकूलं योजनान्तरमुपपद्यते । कथं तर्हि भाष्ये यज्ञशब्दविद्वच्छब्दयोस्सामानाधिकरण्येन योजना प्रदर्शितेति चेत्,-"अबध्नन्पुरुषं पशुं तं यज्ञं बर्हिषि प्रौक्षन्" इति समर्पणीयस्यैवात्मनो यज्ञरूपत्वस्यैव श्रुत्युक्तत्वादिति ब्रूमः । तथा च योजनाद्वयेऽपि पुरुषविद्या न्यासविद्याङ्गमेवेति तादृशाङ्गविशिष्टात् न्यासाच्छरणागतिर्भिद्यत एव ।

अपि च न्यासविद्याया अपि ब्रह्मविद्यात्वाविशेषात्, "अनियमस्सर्वेषामविरोधशब्दानुमानाभ्याम्" इत्यधिकरणोक्तन्यायेनार्चिरादिनियमसत्वात्, गत्यनुस्मृतिरूपाङ्गवैशिष्ट्याच्छरणागतेस्तदभावाच्च विद्याभेदो दुरपह्नवः । न च तुल्यन्यायाच्छरणागतेरपि तद्वैशिष्ट्यं शक्यम्, शरणागतेरुपायत्वाभावेनोपायभूतविद्यामात्रविषयकन्यायस्य शरणागतावप्रवृत्तेः । शरणागतिनिष्ठविषये "अहं स्मरामि मद्भक्तं नयामि परमाङ्गतिम्" "गरुडस्कन्धमारोप्य यथेष्टं तं नयाम्यहम्" इति साक्षाद्भगवदतिवाह्यविलक्षणगत्यन्तरस्य सिद्धत्वात्, तदर्थस्मरणस्य "काष्ठपाषाणसन्निभम्" इत्यनेनानावश्यकत्वस्य सिद्धत्वात्, "अहं स्मरामि" इति भगवत एव तद्विषयस्मरणोक्तेः, श्रीयोगिवाहादिविषये तादृशविलक्षणगतिविशेषस्य सर्वलोकप्रसिद्धत्वात्, "विशल्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्" इत्यर्चावतारनिष्ठानां शरणागतानां श्रीयोगिवाहस्येवात्रैव प्राप्तिसम्भवेन देशविशेषगमनस्यानपेक्षिततया तदर्थमर्चिरादिगतेरनावश्यकत्वात्, "संसृत्यक्षरवैष्णवाध्वसु" इत्युक्तवैष्णवाध्वविशेषस्य निरंकुशस्वतन्त्रभगवदिच्छाप्रमाणकस्य प्रमाणपथागोचरत्वेन चेतनैस्तदनुसन्धानस्य कर्तुमशक्यत्वाच्च शरणागतिनिष्ठानां गतिचिन्तनाभावात् ।

अपि च "ब्राह्मणो विद्वानभिजयति" इति न्यासविद्यायास्त्रैवर्णिकाधिकारत्वकण्ठोक्तेरपशूद्राधिकरणन्यायाच्चाधिकृताधिकारत्वात्, शरणागतेः "मुमुक्षुर्वै शरणमहं प्रपद्ये" "सर्वयोग्यमनायासमप्रमादमनूपमम् । प्रपन्नार्तिहरं विष्णुं शरणं गन्तुमर्हसि" "कुयोनिष्वपि संजातो यस्सकृच्छरणागतः । तम्मातापितृहन्तारमपि पाति भवार्तिहा" "त्रीन्लोकान्सम्परिक्रम्य तमेत शरणङ्गतः" इत्यादिषु सर्वाधिकारत्वोक्तेश्चानयोर्भेदो दुरपह्नव एव । न च विशेषवचनप्राबल्यात् निषादस्थपत्यधिकरणन्यायेन न्यासस्यापि सर्वाधिकारत्वम्, तादृशवचनस्यैव शशशृङ्गसोदरत्वात्, "ब्राह्मणो विद्वानभिजयति" इति प्रत्यक्षश्रुतिबाधितत्वेनाप्रामाण्याच्च । "सिद्धे सत्यारम्भो नियमार्थः" इति न्यायेन "ब्राह्मणो विद्वान्" इति श्रुतेर्न्यासविद्यायां ब्राह्मणस्याधिकारो नान्यस्येति नियमपरत्वात्, "ब्राह्मणो निर्वेदमायात्"

इत्यत्रेवावत्यब्राह्मणशब्दस्याधीतवेदपरत्वेऽपि शूद्रस्याध्ययनाभावेन तस्य ब्राह्मणशब्दवाच्यान्तर्भावस्य कथंचिदपि वक्तुमशक्यत्वाच्च, केवलस्वेच्छया श्रुतिस्वारस्यपरित्यागेन क्लिष्टगतिकल्पनेन "नैतदब्राह्मणो विवक्तुमर्हति" इत्यादावपि तादृशार्थवर्णनसम्भवेन मद्विद्यादीनामपि सर्वाधिकारत्वप्रसङ्गात् । तत्रापि "सर्वयोग्यमनायासम्" इत्युक्तस्य सर्वशेषिण एव भजनीयत्वात् । तस्मात्सद्विद्यादिब्रह्मविद्यान्तर्गताया न्यासविद्याया अपशूद्राधिकरणन्यायात् "ब्राह्मणो विद्वानभिजयाति" इति विशेषवचनबलाच्चाधिकृताधिकारत्वमेव ।

ननु "वैदिकास्तान्त्रिकाश्चैव यथार्था लौकिकास्स्मृताः । प्रपत्तौ विहिता मन्त्रास्तत्र तत्र व्यवस्थया" इति भाषादिमन्त्रैश्शूद्रादीनामपि न्यासविद्यानुष्ठानं सम्भवतीति चेन्न;—तथा भाषादिमन्त्रैरेव तेषां सर्वविद्यानुष्ठानप्रसङ्गात्, "श्रवणाद्यध्ययनार्थप्रतिषेधात्" इति सूत्रोक्तन्यायेन "शूद्रो बहुपशुरयज्ञीयः" इति वेदार्थयज्ञादिस्वरूपानुष्ठानस्यैव प्रतिषेधात्, न्यासविद्याया अपि आत्मयागरूपत्वेन तस्यापि तेषां निषिद्धत्वात्, "न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" इति शूद्रं प्रति धर्मोपदेशसामान्यस्य प्रतिषिद्धत्वाच्च । न च 'विशेषवचनबलान्न्यासमात्रस्य भाषमन्त्रादिविकल्पाङ्गीकारो न विरुद्धः' इति वाच्यम्, तथा सति वचनबलेन "औदुम्बरीं सर्वा वेष्टितव्या" इत्युक्तन्यायेनौदुम्बरीसर्ववेष्टनस्यापि विकल्पेनानुष्ठानप्रसङ्गात् । तत्र श्रुतिस्मृत्योरतुल्यबलत्वान्न विकल्प इति चेदत्रापि तुल्यत्वात् । पांचरात्रं श्रुतितुल्यमिति चेत्, पांचरात्रे क्वचिदपि न्यासविद्यायास्सर्वाधिकारत्वप्रतिपादकवचनानुपलम्भात्, प्रपत्तिसामान्यविषयकसर्वाधिकारत्वविषयकसर्वाधिकारत्ववचनानां "प्रपत्तिं संश्रयेदेनां शरणागतिलक्षणाम्" इत्युक्तप्रपत्तिविशेषपर्यवसानात्, तथैव तत्र तत्र न्यासविषयकतथात्ववचनानामपि शरणागत्यन्तर्गतशेषत्वज्ञानमात्रविषयतया पर्यवसानाच्च वेदाविरोधे सम्भवति तद्विरोधसम्भावनेनाष्टदोषदुष्टविकल्पाश्रयणस्यातिहेयत्वात् ।

ननु न वयं शरणागतेर्वैदिकन्यासात्मकत्वं ब्रूमः, किन्तु वैदिकन्यासभिन्नत-

च्छायानुकारितान्त्रिकन्यासात्मकत्वमेवेति चेत्;—तत्रापि "न मत्तोन्मत्तपतिताभिशस्तक्रूरनास्तिकाः" इति मत्तोन्मत्तपतितादीनां तान्त्रिकन्यासाधिकारनिषेधात्, "दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकःपुरा। समाश्रयेदादिदेवं श्रद्धया शरणं यदि। निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः" "कुयोनिष्वपि संजातो यस्सकृच्छरणागतः। तं मातापितृहन्तारमपि पाति भवार्तिहा" "अपि वध्यं प्रपन्नं न प्रति प्रयच्छन्ति" "स तं निपतितं भूमौ शरण्यश्शरणागतम्। वधार्हमपि काकुत्स्थः कृपया पर्यपालयत्" इत्यादिभिर्मत्तोन्मत्तादीनामपि शरणागताधिकारश्रवणाच्च तयोरपि भेदो दुर्वार एव। न च "दुराचारोऽपि" इत्यादीनां पुरातीतविषयत्वान्न दोष इति वाच्यम्; तर्हि "परमात्मनः-प्रभावात्-निर्दोषं विद्धि" इत्यस्यासाङ्गत्यप्रसङ्गात्, आर्द्रापराधानां निषादकाकादीनां शरणागत्यनधिकारत्वप्रसङ्गात्, "तं मातापितृहन्तारमपि" इत्यत्र प्रपत्त्यनन्तरकालिकदुराचारस्यैव प्रतीतेश्च। न चैवं सर्वेषां स्वैरविहारप्रसङ्गदोषः; एतद्दोषभयेन प्रमाणानामन्यथाकरणायोगात्, तत्करणेऽपि निरंकुशस्य भगवन्माहात्म्यस्य गोपयितुमशक्यत्वाच्च। "दुराचारोऽपि" इत्यादीनां पुराकृतविषयत्वोक्तौ अपि मरणासन्नकाले; अतिसुलभक्षणमात्रसाध्यभरन्यासानुष्ठानधैर्येण यावज्जीवस्वैरविहारप्रसङ्गदोषस्यानुकारात्, दुराचारप्रसक्तं कदाचिदपि भगवान्न पालयेदित्युक्तावेव हि स्वैरदोषपरिहारस्स्यात्। तस्माद्वैदिकस्य तान्त्रिकस्य वा न्यासस्याधिकृताधिकारत्वात्, शरणागतेस्सर्वाधिकारत्वाच्चानयोर्भेदो दुरपह्नव एव।

तदेवं न्यासशरणागत्योर्भेदस्य बहुप्रमाणोपपत्तिसम्प्रदायसिद्धत्वेन दुर्द्धर्षणतया शरणागतिप्रयोगविधिवाक्ये गुणोपसंहारन्यायागतन्यासविधानप्रतिपादनमविचारितरमणीयमित्यास्तां विस्तरः।—इति।

## अत्रायमर्थोऽनुसन्धेयः—

"प्रपद्ये" इत्यत्रोक्तशरणागत्याधिकारिणः—प्रपदनहेतुभेदादज्ञत्वसर्वज्ञत्वभक्ति-

परवशत्वरूपेण त्रिविधाः। अत्र प्रमाणम्—"इदं शरणमज्ञानामिदमेव विजानताम्। इदं तितीर्षतां पारमिदमानन्त्यमिच्छताम्" "अविद्यातो देवे परिबृढतया वा विदितया स्वभक्तेर्भूम्ना वा जगति गतिमन्यामविदुषाम्। गतिर्गम्यश्चासौ हरिरिति जितन्ताह्वयमनो रहस्यं व्याजह्रे स खलु भगवान् शौनकमुनिः" इत्यादिकम्। तत्राज्ञा नाम—भगवल्लाभार्थं साधनानुष्ठानं कर्तुमुपयुक्तज्ञानरहिताः। ज्ञानाधिकाः-साधनानुष्ठानोपयुक्तज्ञानशक्त्यादिसत्त्वेऽपि भगवदत्यन्तपारतन्त्र्यस्वरूपयाथात्म्यदर्शनेनोपायान्तराणि स्वरूपविरुद्धानीति तत्त्यागोपयुक्तज्ञानपूर्तिमन्तः। भक्तिपरवशास्तु-एकमपि क्रमेणानुष्ठातुमक्षमा भगवत्प्रेमातिशयेन शिथिलकरणाः। एतेषां त्रयाणामपि उपायान्तरस्वरूपविरुद्धत्वज्ञानमनुगतम्, आकिंचन्यं च। अयमर्थश्श्रीवचनभूषणे प्रपंचितः।

अत्रैवं पूर्वपक्षी मन्यते—"इदं शरणमज्ञानामिदमेव विजानताम्" इति वचनस्थविज्ञानशब्दो नोपायान्तरस्वरूपविरुद्धत्वज्ञानपरः। "अविद्यातो देवे परिबृढतया वा विदितया" इति श्रीमद्भट्टारकार्यैः, "सदृशोपायवैधुर्यं साक्षाद्भगवतो विदन्। सर्वज्ञश्शरणं याति योगमार्गपराङ्मुखः" इति वरदाचार्यैश्च प्रपत्त्युपयुक्तपरिबृढत्वरूपशरण्यगुणविशेषज्ञानामिति व्याख्यातत्वात्। एवं चात्राज्ञानं नाम-उपायान्तरविषयज्ञानाभावः, अस्मिन्नप्युपाये सूक्ष्मविशेषज्ञानाभावश्च भवति। विज्ञानमपि-उक्तोभयज्ञानविशेष एव। ततश्चैवमर्थस्सम्पद्यते—'उपायान्तरम्, उक्तोपायं चाजानतामपीदमेव; तदुभयगोचरविशेषज्ञानसत्त्वेऽपि शक्त्यभावे सति तथाभूतानामपि इदमेव, ज्ञानशक्तिसम्भवेऽपि भक्त्या विलम्बाक्षमाणामपि इदमेव' इति। अन्यथा धर्माणां स्वरूपविरुद्धत्वात् ज्ञानविवक्षायां चरमश्लोकाद्युपदेष्टृणां व्यासादीनामुक्तज्ञानसत्त्वेन तेषां प्रपत्तावेवाधिकारस्स्यात्। ततश्च भक्तत्वं व्याहन्येत। न च तेषां प्रमाणोपदेशसमये तथा ज्ञानसत्त्वेऽपि पश्चाद्व्याकुलचित्ततयोपायान्तरानुष्ठातृत्वमिति वाच्यम्,-तथात्वे प्रमाणाभावात्। न च तेषां प्रपन्नत्वेऽपि लोकसंग्रहार्थमुपासनानुष्ठानमिति वाच्यम्,-स्वाधिकारविरुद्धस्य लोकसंग्रहार्थतयानुष्ठाने प्रत्यवायापत्तेः। अन्यथा सन्न्यासिनो-

ऽपि लोकसंग्रहार्थं गृहस्थधर्मानुष्ठानप्रसक्तेः । न च कैङ्कर्यत्वेनोपायान्तरानुष्ठानस-म्भवः, प्रपत्त्यपेक्षितानां तथानुष्ठाने विरोधाभावेऽपि तद्विरुद्धानां कैङ्कर्यत्वेनानुष्ठाने-ऽपि विरोधापत्तेः । अत एव "नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते" इत्येतद-पि "अशक्तस्यातिकृच्छ्रेषु दुराशादार्ढ्यशालिनः । कस्यचिद्बुद्धिदौर्बल्यं लघुत्या-गस्य कारणम् । तत्र प्रपत्त्यनर्हाणामन्यदित्यपि युज्यते । व्यासादिषु च नैवैपा नीतिस्संशयघातिषु" इति परिहृतम् इति ।

अत्रोच्यते—"इदं शरणमज्ञानाम्" इति वचने "विजानताम्' इति विज्ञा-नशब्देन ज्ञानविशेष एवोपस्थापितः, न त्वशक्तिः । "देवे परिबृढतया वा विदितया" इति विदिशब्दस्य परिबृढत्वलक्षणकल्याणगुणज्ञानपरत्वेन व्याख्यातत्वात् । तच्च प-रिबृढत्वज्ञानं "सदृशोपायवैधुर्यं साक्षाद्भगवतो विदन्" इत्यत्र भगवत्सदृशोपायाभाव-ज्ञानमिति विशेषितम् । "अज्ञसर्वज्ञभक्तानाम्" इति शौनकवचने विज्ञानविशेष एवो-क्तः । अतस्सर्वत्र ज्ञानविशेषस्यैवोक्तत्वात्, अशक्तिपरत्वे सर्वत्र लक्षणा, अश्रुतक-ल्पना च स्यात् । न चाशक्तस्यावश्यं संग्राह्यत्वात् लक्षणा युक्तेति वाच्यम्;-अज्ञान-शब्द एव तदुपपत्तेः । न च विनिगमनाविरहः; पूर्वाचार्यव्याख्यानानुरोधस्याजहल्ल-क्षणायाश्च विनिगमकत्वात् ।

किंच-"उद्भिज्जस्य पंचमाहुतिनिरपेक्षत्वसम्प्रतिपत्तेः, पृथिव्यूष्मजत्वायोनिजत्व-पापोत्तरत्वसाम्याच्च तृतीयशब्देन संग्रहः; न तु प्रथमेन द्वितीयेन चेति" इति "तृती-यशब्दावरोधस्संशोकजस्य" इति सूत्रोक्तन्यायेन मन्दाधिकारिनिष्ठत्वसम्प्रतिपत्त्या चोपायान्तरानुष्ठानाभावप्रयोजकत्वसाम्याच्च 'अज्ञानाम्' इत्यत्रैवाशक्तिलक्षणा युक्ता।

किंच-"विधिस्तु धारणेऽपूर्वत्वात्"इत्यत्रैवाज्ञानादित्रयस्य प्रपत्त्यधिकारत्वं प्र-माणान्तराप्राप्तमपूर्वमिह विधीयते; ततश्च विज्ञानशब्दस्य लक्षणा न युज्यते; "न वि-धौ परश्शब्दार्थः" इति निषेधात् । अज्ञानशब्देऽपि न लक्षणा, तत्रत्य ज्ञानशब्दस्य योगपरत्वात् । अन्यथा शास्त्रपर्युदस्तस्यासंग्रहापत्तेः । योगराहित्यन्तु शक्तिरहिता-

नां शाश्वतःपर्युदस्तानां चाविशिष्टमिति सर्वसंग्रहस्सिद्ध्यति । अत एवोच्यते "सर्वज्ञश्शरणं याति योगमार्गपराङ्मुखः" इति । ततश्च "योगाशक्तानामपीदमेव; तत्सत्त्वेऽपि विज्ञानविशेषवतामपीदमेव; तस्मिन्योगे सति भक्तिपरवशानामपीदमेव' इति तात्पर्यम् । क्वचिदपि लक्षणाभावात् । पूर्वाचार्यैर्विज्ञानशब्देन योगशब्दस्य विशेषितत्वाच्च, वचनान्तरानुगुण्यात्, व्याख्यानानुगुण्यात्, अपूर्वार्थविषयस्वारस्याच्च । "उपायान्तरविज्ञानाशक्तिरज्ञस्य युज्यते" इत्यत्रोपायान्तरस्य विज्ञानमिति तत्पुरुषादपि कर्मधारयो निषादस्थपतिन्यायसिद्धो युक्तः । अज्ञानशब्दश्चाविद्याशब्देन व्याख्यातः; विद्याशब्दश्च योगे स्वरसः । "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इत्यादिप्रसिद्धिप्राचुर्यात् । यद्वा विद्याशब्दस्य "द्वे विद्ये वेदितव्ये" इतिवत् शब्दजन्ययोगजन्योभयविद्यावाचकत्वात्, अविद्याशब्देन तदुभयशक्त्यभावो विवक्षित इति विज्ञानशब्दो नाशक्तिलक्षकः । अत एव "उपायान्तराविज्ञानाशक्तिः" इत्युक्तम् । तस्मादज्ञानादिशब्दानां पूर्वपक्षोक्तार्थोऽनुपपन्नः । विज्ञानशब्दस्य भट्टाचार्यवरदाचार्यवचनाभ्यामुपायपरिबृढत्वोपायान्तरतुच्छत्वज्ञानपरत्वेन व्याख्यातत्वात् । तादृशविज्ञानस्योपायान्तरत्यागहेतुत्वेन पूर्वपक्षोक्तशृंखलितोक्त्यसम्भवश्च ।

ननु परिबृढत्वादिज्ञानासंभवस्य व्यासादिषु दुर्वचत्वात् कथमस्याधिकारत्वमिति चेत्,—उच्यते;—भक्त्यभावस्यापि तेषु दुर्वचत्वात्, भक्तेरप्यधिकारत्वं न स्यात्; यदि तेषामधिकारिपुरुषत्वात्, आशुफलेच्छारूपो भक्तिभूमा नास्तीत्युच्यते, तर्हि उपायोपेयगोचरसार्वज्ञ्येऽपि किंचिद्वैकल्यं प्रमाणबलादभ्युपगन्तव्यमिति ।

किंच—व्यासादीनामधिकारविशेषाधिकृतत्वात् यथा प्रारब्धमात्रनाशे इच्छा न जायते; तद्वदत्रापि परिबृढत्वोपायफल्गुत्वज्ञाने सत्यपि प्रारब्धखण्डनाशेऽपीच्छा न जायते । अधिकारारम्भककर्मणो यावदधिकारसमाप्त्यवस्थानेनानुभवनाश्यत्वात् । न चोपायान्तरोपेयगोचरफल्गुत्वपरिबृढत्वज्ञानस्य प्रपत्त्यधिकारत्वे भक्तिशास्त्रानवकाशापत्तिः, भक्तेरिवोक्तज्ञानपूर्तेरधिकारत्वेन तद्रहितानां भक्त्यारम्भोपपत्तेः । एवमस्मि-

न्वचने उपायान्तरफल्गुत्वज्ञानस्य शरणागत्यधिकारत्ववचनात्, तस्य चाष्टाङ्गभूते षडङ्गे अत्यन्तफल्गुतरे अधिकारत्वविरोधात्, तदधिकारा शरणागतिस्साधनम्, किन्तु फलभूतेति विज्ञायते ।

यद्वा—"विजानताम्" इत्यत्र विज्ञानशब्दः—"देवे परिबृढतया" इत्यनेन देव-विषयविज्ञानपरः' इति दर्शितः । "सदृशोपायवैधुर्यमि" ति वरदाचार्यवचनं भट्टा-चार्यवचनफलितार्थकथनम् । ततश्च परिबृढत्वं-उपेयाकारपरिबृढत्वमुपायाकारपरि-बृढत्वं च विवक्षितम् । पूर्वत्र "सदृशोपायवैधुर्यम्" इत्युपायान्तराणां फल्गुत्वं फलि-तार्थत्वेन विवक्षितम् । यद्यप्युपायाकारपरिबृढत्वं रस्यत्वसकृत्त्वापथ्यसहत्वनिरपेक्ष-त्वसिद्धत्वचेतनत्वस्वयंफलत्वफलप्रदत्वस्वरूपानुरूपत्वादीनि, तथाप्यत्रोपायान्तरत्या-गहेतुभूतसादृश्याभावः स्वरूपविरुद्धत्वम्, ततश्चोपायान्तराणां भगवत्सादृश्याभावः, 'यथा भगवान् स्वरूपानुरूपोपायः, न तथोपायान्तराणि' इत्येवंरूपो मतः । तस्मा-त्स्वरूपानुरूपत्वं च सादृश्यं विवक्षितामिति । 'विजानताम्' इत्यत्र विज्ञानशब्दः-उ पायान्तरस्वरूपविरुद्धत्वज्ञानपरः। तस्मादुपायान्तरस्वरूपविरुद्धत्वज्ञानस्योपायान्तरवत् स्वरूपविरुद्धे षडङ्गेऽनधिकारात् 'तदधिकारा शरणागतिः फलरूपे' ति सिध्यति ।

एवंच—"मामाराधयितुं नृणां कर्मसुज्ञानभक्तिभिः । अशक्तानां पुनश्चैकस्सुल-भोपाय उच्यते" इत्यादिशास्त्रे षडङ्गाधिकारत्वेनोक्ता या उपायान्तराशक्तिः; सापि शरणागतावधिकारः, स्वरूपविरुद्धत्वज्ञानं भक्तिपारवश्यं चेति षडङ्गव्यावृत्तं विलक्षण-मधिकारिद्वयम्, अधिकं शरणागतावधिकार इत्यनेन वचनेनोक्तम्भवति । 'स्वरूप-विरुद्धत्वज्ञानमनुयाग्यधिकारः' इति त्रयाणामपि, अष्टाङ्गयोगवत्, षडङ्गत्यागोऽपि सिद्ध्यति । अन्यथा सुलभत्वादशक्तपरतन्त्राणामाशुफलत्वात्, भक्तिपरवशपरतन्त्रा-णामपि षडङ्गस्वीकारापत्तेः । षडङ्गे आर्तदृप्तयोरशक्तिरेकैवाधिकारः । शक्तानामा-र्तानां दृप्तानाञ्च वसुरण्यादिमन्त्रकोपासनात्मकप्रपत्तावधिकारात् । अतोऽशक्तिमात्रा-धिकारात्षडङ्गात्, अशक्त्याधिकारा शरणागतिर्भिद्यते ।

नन्वेवं शक्तानामशक्तानाञ्च शरणागतावधिकारे अष्टाङ्गषडङ्गयोगयोरनुष्ठा त्र-

भावेनाप्रामाण्यापत्तिरिति चेन्मैवम्,–" नराणां बुद्धिदौर्बल्यादुपायान्तरमिष्यते " इति स्वयत्नस्वरूपविरुद्धत्वज्ञानवतां शक्तानामशक्तानाञ्च यथाक्रमं तयोरधिकारसम्भवात्। ततश्च 'नराणाम्' इति वचनमेव शरणवरणोपायान्तरयोःप्रपत्तिनियताधिकारव्यवस्थापरम्। 'बुद्धिदौर्बल्यवतां नराणामुपायान्तरम्, बुद्धिदौर्बल्यहीनानां प्रकृतशरणागतिः' इति हि तात्पर्यम्। अत इदं वचनं 'विजानताम्' इत्यस्योक्तार्थपरत्वे उपोद्धलकञ्च भवति।

ननु 'बुद्धिदौर्बल्यशब्दः लघूपायप्रतिपादकप्रपत्तिशास्त्रे प्रामाण्याध्यवसायाभावपरः; नरशब्दश्चाशक्तपरः, अतःकस्यचिदशक्तस्य कृच्छ्रोपाय एव दुराशादार्ढ्यशालिनः, प्रपत्त्यनर्हत्वात्, उपायान्तर एवाधिकार इत्युच्यते। अन्यथा व्यासादिषु 'सर्वसंशयघातित्वादुक्तनीतेरसम्भवात्' इति चेन्मैवम्। व्यासादिव्यावर्तनाय 'अशक्तस्य' इति पदं तावदध्याहर्तव्यम्। तथा चाशक्तेनोपायान्तरस्यैष्यमाणत्वायोगात्, उपायान्तरशब्दस्तदुपायदेशवासादिपरो वाच्यः। ततश्च लक्षणा स्यात्।

ननु 'बुद्धिदौर्बल्यशब्दः–उपायान्तरे स्वाधिकारभ्रमपरः। अत उपायान्तरशब्दस्य न लक्षणा' इति चेन्न;–दार्ढ्याभाववाचकस्य दौर्बल्यशब्दस्य भ्रमपरत्वे स्वारस्यभङ्गापत्तेः। अध्याहारदोषतादवस्थ्याच्च।

ननु 'यदि अनध्याहारयोजनापक्षपातेन व्यासादिषु उपायान्तरस्वरूपविरुद्धत्वलक्षणशास्त्रार्थे ज्ञानाभावो वा, ज्ञाने सत्यपि अध्यवसायाभावो वा, अध्यवसाये सत्यपि तस्य दार्ढ्याभावो वा कल्प्येत; तदाङ्गत्वेन प्रपत्त्यनुष्ठातॄणां व्यासादीनां स्वोपदिष्टशास्त्रार्थेषु ज्ञानविश्वासदार्ढ्याभावस्यानेकोपपत्तिप्रमाणविरोधस्स्यात्; अतस्तदविरोधायास्मिन्वचनेऽध्याहाराद्यस्वारस्याश्रयणमेव युक्तम्; भूयसां न्यायात्' इति चेन्नैवम्;–अत्र हि वचने स्वारस्यबलात्, उपायान्तराधिकृतेषु व्यासादिष्वपि प्रपत्तिविषये किंचिदज्ञानं तावत्प्रतीयते; "इदम्महोपनिषदं देवानां गुह्यमुत्तमम्" इत्यादौ प्रपत्तिविषये देवगुह्यमप्यस्तीत्युक्तम्। ततश्च देवनामिव तत्प्रसादलब्धसार्वज्ञ्यवतां व्यासादीनामपि प्रपत्तिविषये तद्याथात्म्यज्ञानं नास्तीत्यपि स्वीकार्यम्। तत्र प्रपत्ते-

स्साधनत्ववेषानुबन्धिप्रकारविशेषाणामङ्गत्वेन तदनुष्ठानतदुपदेशदेशिकैस्तैरवगतत्वेऽपि फलत्ववेषानुबन्धिप्रकारविशेषाणामनवगतत्वसम्भवात्, फलप्रपत्तौ प्रधानाधिकारभूतोपायान्तरस्वरूपविरुद्धत्वज्ञानाभावस्यापि तेषु सम्भवात्, उक्तज्ञानाभाव एव तेषामुपायान्तरस्वीकारे हेतुरिति पारिशेष्यात्, स्वारसिकवचनार्थोऽवगम्यते। अत एव केषांचित्प्रपत्तिविषये सार्वज्ञ्यमुच्यते,—"अज्ञसर्वज्ञभक्तानाम्" इति।

अथवा, व्यासादीनां प्रपत्तियाथात्म्यस्य, तदनुबन्धिनामुपायान्तरस्वरूपविरुद्धत्वादीनां चोपदेशयोग्यज्ञानसम्भवेऽपि अनुष्ठानोपयुक्तदृढतरज्ञानं तेषां नास्ति; तेषामधिकारिपुरुषत्वेन तत्तदधिकारारम्भककर्मण एव प्रतिबन्धकत्वात्। तस्मात् व्यासादिसार्वज्ञ्यादिप्रतिपादकप्रमाणविरोधाभावात्, देवगुह्यत्वादिवचनानुगुण्यात्, अन्यथाध्याहारादिदोषापत्तेः, शब्दस्वारस्याच्च बुद्धिदौर्बल्यशब्दः-उपायान्तरस्वरूपविरुद्धत्वाध्यवसायाभावपरः।

एवम्, अत्र बुद्धिशब्दस्य परिशेषादुपायान्तरस्वरूपविरुद्धत्वज्ञानपरत्वात्, "देवे परिबृढतया" इत्यस्योपायभावपरिबृढत्वस्य विवक्षिततया, "सदृशोपायवैधुर्यम्" इत्यादितद्विवरणे 'सिद्धोपायसादृश्याभावः, स्वरूपविरुद्धत्वम्' इति पर्यवसितत्वाच्च 'विजानताम्' इत्यत्र विवक्षितविशेषज्ञानं-इतरोपायत्यागहेतुभूतमुपायान्तरस्वरूपविरुद्धत्वज्ञानमेव भवति।

यद्यपि "आकिंचन्यैकशरणाः" "अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः" इत्यादिभिःप्रपत्तिशास्त्रे आकिंचन्यमेवाधिकार इत्युक्तम्' इत्यधिकारत्रयवचनं विरुद्धमिव भाति, तथापि प्रपत्तावाकिंचन्यमेक एवाधिकारः, अज्ञानादित्रयं तन्निमित्तं सद्वारकाधिकारः। अतो नोभयवचनविरोधः।

एवं शास्त्रे अधिकारत्रयपरवचनानां शरणागतिविषयत्वात् षडङ्गशास्त्रे "प्राप्तुमिच्छन्परां सिद्धिं जनस्सर्वोऽप्यकिंचनः" इत्यशक्तिमात्राधिकारश्रवणाच्चाधिकारिचातुर्विध्ये किमपि प्रमाणं न पश्यामः। तथापि "भक्त्यादौ शक्त्यभावः प्रमितिर-

(४५). अथोत्तरवाक्यार्थं वक्तुमुपक्रमते—उत्तरवाक्येनेत्यादिना ।

मू॥ उत्तरवाक्यत्ताले प्राप्यं शोल्लुहिरदु॥४५॥

छा॥ उत्तरवाक्येन प्राप्यमुच्यते ॥ ४५ ॥

व्या॥ प्राप्यं नाम-श्रियःपत्युः सर्वस्वामिनस्सर्वेश्वरस्य चरणयोःक्रियमाणं कैङ्कर्यम् ॥ ४५ ॥

---

हितता शास्त्रतःपर्युदासः कालक्षेपाक्षमत्वान्त्विति नियतवशादापतद्भिश्चतुर्भिः । एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियास्संश्रयन्ते सन्तःश्रीशं स्वतन्त्रप्रपदनविधिना मुक्तये निर्विशङ्काः” इत्यस्यायमभिप्रायः—'वेदान्ताचार्याणां साधनप्रपत्तिशास्त्राधिकृतत्वात्, देवगुह्यार्थस्य च गोपनीयत्वात्, उपायान्तरस्वरूपविरुद्धत्वानुपायत्वादिप्रदर्शने न्यासस्याप्युपायान्तरतया साधनप्रपत्तौ अशक्तस्वतन्त्राणामश्रद्धा भवेत्' इति तद्वारणार्थं च "इदं शरणम्" इति वचने अज्ञानशब्देनात्रैवर्णिकानामपि अनुष्ठानोपयोगिज्ञानाभावात्संग्रहम्, अज्ञानशब्दस्यानुष्ठानाशक्तिवाचकत्वेऽपि, विज्ञानशब्दार्थगोपनाय विज्ञानशब्दस्याशक्तिपरत्वम्, "इदं तितीर्षताम्" इत्यदेः भक्तिसामान्यपरत्वं चाभिमेत्याधिकारिचातुर्विध्यं प्रदर्शितम्' इति शक्ताशक्ताधिकारत्ववादिनां भक्तियोगतदुपायोभयविधिवैयर्थ्यवारणायोपायान्तरस्वरूपविरुद्धत्वज्ञानमनुयाय्यधिकारो वाच्यः; स्वरूपविरुद्धत्वज्ञानाधिकारत्वमनभ्युपगच्छतां, देशवासाद्यङ्गविधिवैयर्थ्यवारणाय देहान्तरविलम्बाक्षमत्वम् "आत्यन्तिकीमनिष्टानां सद्यश्शान्तिमभीप्सता । प्रपत्तिरञ्जसा कार्या" इत्यादिप्रमाणसिद्धमनुयाय्यधिकारो वाच्यः तथाप्यत्र "एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियाः" इत्युक्तिः किमभिमेत्येति चिन्त्यम्—इति दिक् ॥ ४४ ॥

एवं पूर्ववाक्यार्थःप्रपंचितः, अथोत्तरवाक्यार्थं वक्तुमारभते-अथेति । अथ—श्रीमन्नमश्शब्दार्थविवरणभूतपूर्ववाक्यार्थकथनानन्तरम् ।

(४६). प्रापकवरणानन्तरं प्राप्यकथनस्याभिप्रायमाह-प्राप्यान्तरायेति ।

मू॥ प्राप्यान्तरायुक्कन्त्रेग्गै ॥ ४६ ॥

छा॥ प्राप्यान्तराय न भवति ॥ ४६ ॥

व्या॥ पूर्ववाक्ये प्रतिपादितसाधनस्य फलचतुष्टयसाधारणत्वात्, पूर्वं कृतं प्रापकवरणं प्राप्यान्तराय न भवतीति वचनमिदानीं प्राप्यकथनस्यास्य प्रयोजनमित्यर्थः ॥ ४६ ॥

---

(स्वामिनस्सर्वेश्वरस्ये)ति नारायणपदार्थः । अत्र स्वामित्वं शेषित्वम् । नारायणपदस्यानेकार्थकत्वेऽपि प्रकरणाच्छेषित्वमर्थ इति भावः । " स्वामित्वम् " इति पराशरभट्टपादसूक्तेः । उपरिष्टादयमर्थो व्यक्तीभविष्यति । (कैङ्कर्यम्)-शेषत्वोपधायकभोग्यप्रार्थनापरप्रयोजनप्रवृत्तिरूपत्वम् ॥ ४५ ॥

(प्रतिपादितसाधनस्य)-सिद्धोपायवरणस्य । (फलचतुष्टयसाधारणत्वात्)-धर्मार्थकाममोक्षाख्यफलचतुष्टयसाधारणत्वादित्यर्थः । "ऐहलौकिकमैश्वर्यम्" इत्याद्युक्तरीत्या वा स्यात् । "यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत्सांख्येन योगेन न च भक्तितः । प्राप्यते परमं धाम यतो नावर्तते पुनः। तेन तेनाप्यते तत्तन्न्यासेनैव महामुने । परमात्मा च तेनैव साध्यते पुरुषोत्तमः" इति शरणागतेस्सर्वफलहेतुत्वं प्रतिपाद्यते ।

ननु शरणागत्यधिकारिण एवाकिंचन्यसद्भावात्, "आकिंचन्यैकशरणाःकेचिद्भाग्याधिकाःपुनः । मत्पदाम्बोरुहद्वन्द्वं प्रपद्य प्रीतमानसाः । लक्ष्मीं पुरुषकारेण वृतवन्तो वरानन" इति तेषामेव पुरुषकारत्वस्यावश्यकत्वात्, अन्येषां प्रायश्चित्तादिना स्वाभिलपितफलप्रतिबन्धकपापविमोचनस्यान्यत्रोक्तत्वाच्च, न तेषां

पूर्ववाक्योक्तपुरुषकारपुरस्करणादिकमपेक्षितम् । तस्मात्पूर्ववाक्योक्तसाधनस्य पुरुषार्थचतुष्टयसाधारणत्वं न सम्भवतीति चेत्-सत्यम् । यथोपासकस्य कस्यचित् अवताररहस्यपुरुषोत्तमविद्याङ्गकोपासनविधेर्दर्शनात्, प्रायश्चित्तादिकं विहाय कैश्चिदुपासनं तथानुष्ठीयते; तथा कश्चित्पुरुषः फलान्तराभिलाषेण पुरुषकारपुरस्कारपूर्वकं भगवन्तं शरणमुपगम्य स्वाभिलषितफलमुपलभते । अत एव नृसिंहविषये भीतैर्देवैः पुरुषकारपुरस्करणं कृतम् । "जाज्वल्यमानं तं दृष्ट्वा नरसिंहं सुरोत्तमाः । पुरस्कृत्य श्रियं भेजुः शरणं शान्तिकांक्षिणः" इति पुराणप्रसिद्धम् । वेदान्ताचार्यैश्च द्वयाधिकारेऽयमर्थ उक्तः-"अनुष्ठानं नाम-प्रह्लादविषये प्रेमातिशयात् प्रातिकूलविषयोत्पन्नकोपातिशयं दृष्ट्वा समीपगमने भीताः ब्रह्मादयः इमां शरणत्वेनाश्रित्य इमां पुरस्कृत्य श्रीनृसिंहरूपसर्वेश्वरं प्राप्य स्तोत्रं कृतवन्त इति पुराणप्रसिद्धम्" इति । ऐश्वर्यकैवल्यार्थिनामपि पुरुषकारपुरस्करणमस्तीति श्रीवचनभूषणव्याख्याने आचार्यचरणैरेवोक्तम् । तथा हि "अयं पुरुषकारोऽनन्यप्रयोजनत्वेन प्रपत्तिं कुर्वतामेव वा, प्रयोजनान्तरपरत्वेन कुर्वाणानामपि अपेक्षितो वा इत्यत आह-अधिकारीति । अधिकारित्रयस्येति-ऐश्वर्यकैवल्यभगवच्चरणार्थिनः, एतेषां त्रयणाम्पुरुषकारोऽवर्जनीय इति । स्वस्वाभिलषितसिद्धं प्रति ईश्वरस्योपायत्वेन स्वीकारसमये एतेषामपराधान्क्षमित्वा स यथाङ्गीकुर्यात्, तथा कर्तुं पुरुषकारोऽवश्यापेक्षित इत्यर्थः ।"पूर्ववाक्ये पुरुषकारपूर्वकोपायवरणस्य प्रयोजनान्तरपराणामपि साधारणत्वात् उत्तरवाक्येनानन्यप्रयोजनताप्रकाशकमावश्यकम् । पूर्ववाक्ये प्रतिपादितस्साधनविशेषः फलचतुष्टयसाधारणःखलु वर्तते । तत्रास्याधिकारिणोऽभिलषितःफलविशेषोऽयमिति प्रकाशयतीदं वाक्यम्" इति परन्दपडिप्रबन्धे. "पूर्वोक्तसाधनस्य फलचतुष्टयसाधारणत्वात्, अस्यापेक्षितफलविशेष उच्यते" इति श्रियःपतिप्पडिप्रबन्धे, "उत्तरवाक्येन प्राप्यमुच्यते । प्राप्यान्तराय न भवति" इत्यादिना मुमुक्षुप्पडिप्रबन्धे चायं स्वयमेवावोचत्खलु । "लक्ष्मीव्यामोहशालिनं प्रत्यञ्जलिकुर्वन्तः" इत्युक्तप्रकारेण पुरुषकारपूर्वकमाश्रित्य प्रयोजनान्तरमादाय निवृत्तिं विना तत्त्यक्त्वा

तेजिष्ठहस्ताभरणविशिष्टलक्ष्मीतद्रूपमिथुने कैङ्कर्यफलमिति पूर्वोक्तोपायफलं प्रदर्शयत्यनन्तरभागेन" इति ह्यस्यानुजोऽपि अरुलिच्चेयल्रहस्येऽवोचत् " इति ।

"ननु "श्रीमन्नारायण स्वामिन् अनन्यशरणस्तव । चरणौ शरणं यातस्तवैवास्म्यहमच्युत" इत्यादिद्वयविवरणमन्त्रान्तरे "तवैवास्म्यहमच्युत" इति सिद्धशेषत्वानुसन्धानरूपात्मसमर्पणमेवोत्तरवाक्यार्थतया प्रतीयते इति चेत्, न । "तवास्मीति च याचते" इत्यस्येव "तवैवास्मी" त्यस्यापि फलप्रार्थनामात्रपरत्वात् । न हि तत्रापि निक्षेपः प्रतिपाद्यः, तस्य प्रपत्तिबहिर्भावापत्तेः, किन्तु कारणाभिधानानन्तरं फलाभिधानौचित्यात्, "याचते" इत्येतदनुरोधाच्च फलप्रार्थनापरत्वमेव । न चैवं प्रपत्तेस्सर्वफलसाधनत्वासिद्धिः, स्वरूपसमर्पणपरत्वेऽपि भरसमर्पणाद्युपलक्षणत्वस्य वक्तव्यतया फलान्तरोपलक्षणत्वस्यैतत्पक्षे स्वीकारात् । "शरणं च प्रपन्नानां तवास्मीति च वादिनाम् । प्रसादं पितृहन्तॄणामपि कुर्वन्ति साधवः" इत्यत्र तु कायिकवाचिकप्रपत्ती विवक्षिते । 'तवास्मि' इत्यस्य 'तव रक्ष्योऽस्मी' त्येवंपरत्वात् । प्रपत्तिशब्दस्यैव वाचिकाभिधानसमर्थत्वेऽपि ज्ञानप्राधान्याद्भेदेन प्रकीर्तनम् । न च तत्र 'वादिनाम्' इति शब्दबलात् वाचिकपरता, इतिशब्दस्यानुपूर्व्याकारसाधारण्यात् । अन्यथा "इति प्रार्थनामतिः" इत्यादावनवगतेः । 'प्रपन्नाय' इति प्रयोजनान्तरपरपरं, गोबलीवर्दन्यायात् । 'तवास्मी' ति तु अनन्यप्रयोजनपरमित्युक्तावप्यनन्यप्रयोजनस्यापि प्रपन्नस्यैव रक्ष्यत्वेन 'प्रपन्नाय' इत्यस्यावृत्तिप्रसङ्गात् । अत एव स्तोत्रव्याख्याने "तवाहमस्मीति च याचमानः" इत्यस्य फलप्रार्थनापरतैव स्वपक्षत्वेनोपन्यस्ता । 'तवास्मी' ति 'स्याम्' इत्यर्थकं, कैङ्कर्यार्थे पुमर्थेऽप्यनुषंजाति, तदभ्यर्थना हेतुभावात्' इति कैङ्कर्यप्रार्थनाहेतुभूतशेषत्वानुसन्धानपरं सत्तत्परं वा उत्तरखण्डस्य फलप्रार्थनापरत्वमेव च साम्प्रदायिकम् । पूर्णप्रपदनगाथायां परांकुशमुनिभिरुत्तरखण्डार्थानुक्तेः। "श्रिया च सहितायात्मेश्वरायार्थये-मिथुनपरं प्राप्यमेवं प्रसिद्धम् । स्वामित्वं प्रार्थनां च" इत्यादिभट्टपराशरपादसूक्तिदर्शनात् । भाष्यकारैरपि विरोधिप्रहाणस्य पूर्वभावित्वाद्वैदिकमन्त्रपाठक्रमालम्बनेनैव नमश्शब्दार्थं प्रथमतो विवृत्य शेषं "परभक्ति"

इत्यादिना विवृतम् । अतःफलप्रतिपादनपर एवोत्तरखण्ड इति भावः" इति तात्पर्यदीपिकायां श्रीवीरराघवसूरिः ।

श्रीकृष्णपादाः विस्तृतरहस्ये तु–"अनन्तरमत्र स्वीकृतसिद्धोपायस्य "तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथा सुखम् । यावन्न याति शरणं त्वामशेषाघनाशनम्" इत्यार्तादीनां चतुर्विधाधिकारिणां साधारणत्वात्, एतेषु पूर्वमुपायं स्वीकृत्य वर्तमानोऽधिकारी कीदृश इत्यपेक्षायां "मुमुक्षुर्वै शरणमहं प्रपद्ये" "ब्रह्मणो महिमानमाप्नोति" इत्युक्तप्रकारेण फलविशेषप्रार्थनारूपाध्यवसायेन इमं विशेषयत्युत्तरार्धः । एवं पूर्वार्धेनोपायप्रार्थना कृता । उत्तरार्धेन तत्फलभूतमुपेयं प्रार्थ्यते । ननु–उपायप्रार्थनं नाम-'स्वेष्टानिष्टप्राप्तिपरिहारयोस्त्वमेव साधनं भव' इत्यपेक्षा । यथा स्वर्गकामतया ज्योतिष्टोमादौ अधिकरोति, एवं 'अस्माकं प्राप्यमिष्टमेतत्, परिहार्यमनिष्टमेतत्' इति निश्चयोत्पत्त्यनन्तरं खलु तदनुगुणोपायस्वीकारेऽधिकरोति; एवं सति किं प्राप्यापेक्षा? धर्मार्थादिप्राप्यान्तरेभ्यः व्यावर्तयितुं क्रियते-उत उपायतया स्वीकृतस्य प्राप्यविशेषपरिज्ञानार्थम्; अहोस्वित्-प्राप्यविशेषप्रार्थना विना तं न ददातीति;-उपायस्वीकारपूर्वभाविना मुमुक्षुत्वेन धर्मादिकामेभ्यः व्यावृत्तिसिद्धेः, स्वीकृतोपायस्य सर्वज्ञत्वात्, स्वीकृतस्य सर्वज्ञस्य प्राप्यापेक्षाप्रतीक्षया प्रयोजनाभावाच्चोपायस्वीकारमन्तरा प्राप्यापेक्षा न कार्या; अथ प्राप्यं दातव्यमित्यपेक्षा प्राप्यापेक्षेति चेत्, उपायस्वीकारस्य पूर्वार्धस्य नैरर्थक्यम्; तस्मात्पूर्वार्धानुसन्धानमात्रेणोपेयलाभस्यार्थत्वेऽपि, पूर्वार्धानुसन्धानं वोत्तरार्धानुसन्धानं वा कर्तव्यम्, उभयानुसन्धाने पौनरुक्त्यं स्यादिति चेत्–न; पूर्वानुसन्धानमात्रेणोपेयलाभस्यार्थत्वेऽपि "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" "तरति शोकमात्मवित्" इति मुमुक्षोःफलकथनसमये शोकनिवृत्तिमात्रं पुरुषार्थ इत्युच्यते; "तत्सुकृतदुष्कृते विधूनते" इति पुण्यपापविमोचनमात्रं पुरुषार्थ इत्युच्यते; "तस्य तावदेवचिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति देहविमोचनमात्रं पुरुषार्थ इत्युच्यते; "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनःपारमाप्नोति तद्विष्णोःपरमं पदम्" इति कस्यचिद्देशविशेषस्य

प्राप्तिः पुरुषार्थ इत्युच्यते; "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति स्वस्वरूपप्राप्तिः पुरुषार्थ इत्युच्यते; "निरंजनः परमं साम्यमुपैति" इति भगवत्सामीप्यं पुरुषार्थ इत्युच्यते; "सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता" इति भगवद्गुणानुभवः पुरुषार्थ इत्युच्यते; "विज्ञानादानन्दो ब्रह्मयोनिः" "रसं ह्येवायं लब्ध्वानन्दी भवति" इति भगवदनुभवजनितः परमानन्दः पुरुषार्थ इत्युच्यते; "येन येन धाता गच्छति तेन तेन सह गच्छति" इति भगवदनुवृत्तिरूपं कैङ्कर्यं पुरुषार्थ इत्युच्यते; एवं पूर्वोक्तशोकनिवृत्त्यादीनि पुरुषार्थत्वेन प्रतिपादयद्भिः वाक्यैश्चरमपुरुषार्थनिष्कर्षानुपपत्तेः, तादृशपुरुषार्थविशेषं प्रकाशयितुमुत्तरार्धोदयात्, उपायस्वरूपविशेषप्रतिपादकतया पूर्वार्धोदयाच्च पौनरुक्त्यं नास्ति । उपेयतया वरणमुपायतया वरणं चोभयोः कृत्यम् । उपेयत्वेन वरणसमये उपायापेक्षास्ति; उपायत्वेन वरणसमये उपेयापेक्षास्ति । अत उभयमप्यपेक्षितं स्यात् । उपेयतया वरणं नाम-ईश्वरश्रीचरणयोः कैङ्कर्यमेवोपेयमित्यध्यवसायः । उपायत्वेन वरणं नाम-'तच्चरणौ उपायः' इत्यध्यवसायः । अध्यवसायद्वयं चास्याधिकारिणोऽपेक्षितम् । अनन्यसाधनत्वसिध्द्यै उपायाध्यवसायोऽपेक्षितः । अनन्यप्रयोजनत्वसिध्द्यै उपेयाध्यवसायश्चावश्यकः । उपायविशेषाध्यवसायस्य प्रयोजनान्तरपरे च सत्त्वात्, तद्व्यावृत्तिसिद्धये उपेयाध्यवसायोऽपेक्षितः । साधके उपेयाध्यवसायस्य सत्त्वात्, तद्व्यावृत्तिसिद्धये उपायाध्यवसायोऽपेक्षितः । साधकस्स्वयं "इष्टम्मनिषाण अमुम्मनिषाण सर्वम्मनिषाण" इत्युपेयविशेषमपेक्षित्वा स्थितः । "दैत्यसैन्यपराजिताः । शरणं त्वामनुप्राप्ताः" इति प्रयोजनपरस्यापि उपायाध्यवसायोऽस्ति । तद्व्यावृत्तिसिद्धये "अन्तरिक्षगतः श्रीमान्" "स तु नागवरश्श्रीमान्" इत्युक्तप्रकारेणोपायोपेयाध्यवसायरूपमहदैश्वर्यस्याधिकारिणोऽपेक्षितत्वात्, तदुद्वयमपि वाक्यद्वयेनोच्यते । अत एव "मुमुक्षुर्वै शरणमहं प्रपद्ये" इति श्रुतम्भवति । पूर्वं 'प्रपद्ये' इति स्वीकृतस्योपायस्य फलं कैङ्कर्यमपेक्षमाणेन तस्य च प्रतिसम्बन्धिविशेषाधीनत्वात्स च प्रतिसम्बन्धिपूर्तिपूरणपूर्वकमनुसन्धीयते" इति ।

(४७). प्राप्यान्तराणि विहायैतत्प्राप्यापेक्षा किमिति क्रियत इति शङ्कायामाह—उपायान्तरानिति ।

मू॥ उपायान्तरङ्गलै विट्टु चरमोपायत्तै पत्तिनाप्पोले, उपेयान्तरमान ऐश्वर्यकैवल्यङ्गलै विट्टु एल्लैयान् प्राप्यत्तै अर्थिक्किरदु ॥

छा॥ उपायान्तराणि त्यक्त्वा चरमोपायस्याश्रयणवत्, उपेयान्तरैश्वर्यकैवल्ये त्यक्त्वा सीमाभूतप्राप्यमर्थ्यते ॥ ४७ ॥

व्या॥उपायवरणकरणसमये अनन्यशरणत्वरूपस्वरूपानुगुणत्वेन कर्मज्ञानभक्तिरूपोपायान्तराणि त्यक्त्वा चरमभूतसिद्धोपायाश्रयण-

---

अत्र "पंचविंशाक्षरो मन्त्रःपदैष्षड्भिस्समन्वितः । वाक्यद्वयं परं ज्ञेयं मन्त्ररत्नमनुत्तमम् ॥ यदा श्रयति विद्यादिःसंस्थिता जगतां पतिम् । तया विद्यानपायिन्या संयुतं परमःपुमान् ॥ नारायणोऽच्युतश्श्रीमान्वात्सल्यगुणसागरः । नाथस्सुशीलस्सुलभस्सर्वज्ञश्शक्तिमान्परः ॥ आपद्बन्धुस्सदा मित्रं परिपूर्णमनोरथः । दयासुधाब्धिस्सविता वीर्यवान्द्युतिमान्विभुः ॥ प्रपद्ये चरणौ तस्य शरणं श्रेयसे मम । श्रीमते विष्णवे नित्यं सर्वावस्थासु सर्वदा । निर्ममो निरहङ्कारः कैङ्कर्यं करवाण्यहम् । एवमर्थं विदित्वैव पश्चान्मन्त्रं प्रयोजयेत्" इत्यादिकमनुसन्धेयम् ॥ ४६ ॥

(अनन्यशरणत्वरूपस्वरूपानुगुणत्वेन) इति—अनन्यशरणत्वम्—भगवत्प्रसादद्वारकफलसाधनगोचरप्रवृत्त्यनर्हत्वम् । मूले 'उपायान्तरान्' इत्युपायान्तरशब्दः "नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते" इति वचनं प्रत्यभिज्ञापयति; तत्रैकवचनं "उपायास्ते त्रयःपूर्वे""पूर्वे त्रय उपायास्ते" इत्याद्यनुरोधात्, जात्येकवचनमितिसूचयितुं बहुवचनप्रयोगः; इत्यभिप्रेत्याह-कर्मज्ञानभक्तिरूपोपायान्तराणीति । कर्मादीनां पृथगुपायत्वमभिमतम् । वर्णितं च प्रथमप्रकरणे । उपरिष्ठा-

वत्, उपेयप्रार्थनाकरणसमये अनन्यभोग्यत्वरूपस्वरूपानुगुणत्वेनोपेयान्तरभूतैश्वर्यकैवल्ये त्यक्त्वा चरमभूतप्राप्यमर्थ्यत इत्यर्थः॥

---

न्निपुणतरमुपपादयिष्यामः। उपायान्तरत्यागहेतुश्च दुष्करत्वादिरिति प्रागेवोक्तः; तृतीयप्रकरणेऽपि स्पष्टो भविष्यति। **(चरमभूते)** ति-चरमोपायः-प्रपत्तिः। तद्व्याजेन स्वीकृतपरमात्मन एवोपायत्वात् लक्षणया सिद्धोपायपर इति भावः। परमात्मन एवोपायत्वं तस्याःव्याजत्वमात्रमिति प्रपंचितम्प्रागेव। मुमुक्षुत्वे सति भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिप्रागभावासमानाधिकरणभगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिर्मुक्तिव्याजभूतेति। ननु सिद्धान्ते प्रपत्तेर्व्याजत्वमुच्यते-किमिदं व्याजत्वम्; फलविसदृशत्वमिति चेत्, ज्योतिष्टोमादीनामपि फलविसदृशत्वेन व्याजत्वप्रसङ्गः; तर्हि गौणत्वमिति चेत्, मन्त्रस्नानादीनां गौणतयाभिमतानां व्याजत्वप्रसङ्गः; अत इदं दुर्वचमिति चेन्न;—अहेतुत्वे सति अतिप्रसङ्गवारकत्वमिति निरुक्तेस्सूपपादत्वात्—इति। **(उपेयप्रार्थने)** ति—परार्थकैङ्कर्यप्रार्थनाकरणवेलायामित्यर्थः। **(अनन्यभोग्यत्वे)** ति-अनन्यभोग्यत्वम्-स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वम्। स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वं नाम-स्वप्रवृत्त्युद्देश्यभोगानर्हत्वम्। प्रवृत्त्यभावेऽपि भोग्यस्योद्देश्यत्वं स्यान्नामेति चेत्-भगवद्भोगस्य स्वप्रयोजनत्वेनोद्देश्यत्वं नास्तीति च प्रवृत्तिश्च पारतन्त्र्यस्वरूपविरुद्धा इति सूचयितुं-स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वमित्युक्तम्। अतो भगवन्मुखोल्लासमात्रोद्देश्यकप्रवृत्त्यनर्हत्वमित्यनन्यार्हशेषत्वेनापुनरुक्तिः। **(उपेयान्तरभूतैश्वर्यकैवल्ये त्यक्त्वे)** ति-ऐश्वर्यरूपपुरुषार्थो द्विविधः-इहलोकैश्वर्यपरलोकैश्वर्यभेदात्। इहलोकैश्वर्यम्-पितृमातृरत्नधनधान्यवस्त्रान्नपानपुत्रमित्रकलत्रपशुगृहक्षेत्रचन्दनकुसुमताम्बूलादिपदार्थेषु शब्दादिविषयानुभवजन्यसुखविशेषः। परलोकैश्वर्यम्-एतेभ्यो विलक्षणतया तेजोरूपस्वर्गादिलोकेषु पुण्यविशेषेण गत्वा क्षुत्पिपासाशोकमोहजरामरणादिराहित्येनार्जितपुण्यानुरोधेनामृतपानं कृत्वाप्सरसादिभिश्शब्दादि

विषयानुभवकरणम् । एतादृशैश्वर्यस्याल्पास्थिरत्वादिदोषदुष्टत्वात्-मुमुक्षूणां सर्वेषामपि त्याज्यम् । "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकःक्षीयते "प्लवा ह्येते अदृढा यज्ञरूपाः" "अन्तवदेवास्य तद्भवति" "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, यथैतमेवाध्वानं पुनर्निवर्तन्ते" "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्यादिश्रुतेः । "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति" इत्यादेरुदाहृतानेकप्रमाणविरोधेन चिरकालस्थायित्वमात्रपरत्वात् । तथैव शबरस्वामिप्रभृतिभिर्व्याख्यातेयं श्रुतिः । चतुर्मुखादीनां च कर्मसम्पादितैश्वर्याणामनित्यत्वं स्मर्यते "गङ्गायास्सिकताधारा यथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताःपितामहाः" इति। गर्भजन्मबाल्यजरामरणयातनादिषु दुःखप्रतिपादकानि प्रमाणानि पुराणादिषु द्रष्टव्यानि । अतस्संसारे नास्ति सुखलेशः ।

कैवल्यरूपपुरुषार्थश्च - परमात्मानुभवजनितप्रीतिकारितपरार्थकैङ्कर्यरूपपरमपुरुषार्थलक्षणमोक्षव्यतिरिक्तपरमात्मदिव्यमङ्गलविग्रहसमस्तकल्याणगुणानुभवराहितपंचाग्निविद्यासाध्यार्चिरादिगतिपूर्वकप्रकृतिविविक्तब्रह्मात्मकस्वात्मानुभवरूपमोक्षविशेषः । तादृशानुभवस्य परमपुरुषानुभवापेक्षया जघन्यत्वादल्पत्वं सिद्धम् । तदुक्तं "निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरैकान्तात्यन्तिकी मता" इति। निरस्तातिशयत्वम्-उत्कर्षानिरूपकत्वम् । आह्लादकत्वं-सुखान्तरानुभवक्षमत्वापादकोत्कर्षः । भावशब्देन दुःखनिवृत्तिव्युदासः । एकान्तत्वं-दुःखासम्भिन्नत्वम् । आत्यन्तिकत्वं-नित्यत्वम् । अत्र कैवल्यव्यावृत्तकेननिरस्तातिशयपदेन तस्य सातिशयत्वं सिद्धम् । व्यक्तं पाद्मोत्तरे "तदिच्छन्त्यल्पमतयो मोक्षं रसविवर्जितम्" इति ।

**अत्र केचित्**-पंचाग्निविदां ब्रह्मविदां चानुभवरूपफलभेदस्य प्रामाणिकत्वे खलु पंचाग्निविद्यासाध्यमोक्षविशेषस्य परममुक्तित्वमिति विभागःकर्तुं शक्यते । तदेव न सम्भवति । छान्दोग्ये उभयोरपि ब्रह्मप्राप्तिरूपफलैक्यस्य प्रतिपादितत्वात् । तथा हि-छान्दोग्ये पंचमप्रपाठके "श्वेतकेतुर्हारुणेयः पंजालानां समितिमेयाय" त्यारभ्य

"तद्य इत्थं विदुः, ये चेमे अरण्ये श्रद्धा तप इत्युपासते अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेतिमासांस्तान्मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान्ब्रह्मगमयत्येष देवयानःपन्था" इत्यादिनोभयोरपि ब्रह्मप्राप्तिरूपं फलमेकमेव प्रतिपाद्यते । अतः पंचाग्निविद्यासाध्यफलस्य ब्रह्मविद्यासाध्यफलस्य च भेदोपपादनमप्रामाणिकमेव ।

किंच-अर्चिरादिनागतस्य सर्वस्यापि "विकल्पोऽविशिष्टफलत्वात्" इत्यादिनैकरूपफलस्यैव सूत्रकारेण प्रतिपादितत्वात्, उभयोःफलभेदपरिकल्पनं न सम्भवत्येवेति ।

अथ "स एनान्ब्रह्म गमयति" इत्यत्र प्रतिपादिता ब्रह्मप्राप्तिःस्वस्वरूपाविर्भावपूर्वकालीना; न तु स्वस्वरूपाविर्भावानन्तरभाव्यनुभवरूपा । तदुक्तं सूत्रकृता "सम्पद्याविर्भावस्स्वेनशब्दात्" इति । न चात्र 'मुखं व्यादाय स्वपिति' इत्यादिवल्ल्यपः पूर्वकालीनत्वाविवक्षा नास्तीति वाच्यम्;—"अविभागेन दृष्टत्वात्" इति सूत्रे "दृष्टत्वात्-परं ब्रह्मोपसम्पत्त्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन दृष्टत्वाव" इति भाषितत्वेन तत्र तृतीयाश्रुत्या हेतुतायास्स्पष्टतया प्रतिपादिततया कालविवक्षा नास्तीति वक्तुमशक्यत्वात् । तथा च स्वरूपाविर्भावपूर्वकालीनब्रह्मप्राप्तेस्तुल्यत्वेऽपि तदनन्तरभाव्यनुभवस्य यथोपासनभाविताया यथाक्रतुन्यायसिद्धत्वात्, पंचाग्निविदां ब्रह्मात्मकजीवमुख्यविशेष्यकोपासनस्य "तद्य इत्थं विदुः" इति श्रुत्या प्रतिपादनात्, ब्रह्मविदां च ब्रह्ममुख्यविशेष्यकोपासनस्य "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति श्रुत्या प्रतिपादनाच्चोभयोरपि फलभूतानुभवे वैषम्यमकामेनापि अङ्गीकरणीयमेवेति चेत्;—मैवम् । "स एनान्ब्रह्म गमयति" इत्यत्र प्रतिपादितब्रह्मप्राप्तेःस्वरूपाविर्भावानन्तरभाविब्रह्मानुभवरूपफलस्योक्तोभयविधाधिकारिसाधारण्यस्य श्रीभाष्यादिषु सिद्धत्वात् । तथा चानुगृहीतम् "अविभागेन दृष्टत्वात्" इति सूत्रभाष्ये "अविभागेनेति-परस्माद् ब्रह्मणस्स्वात्मानमविभागेनानुभवति मुक्तः; कुतः-दृष्टत्वात् परब्रह्मोप-

सम्पत्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् । स्वात्मनस्स्वरूपं हि "तत्त्वमसि" "अयमात्मा ब्रह्म" "ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्येन निर्देशैः, "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" इत्यादिभिश्च परमात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितं—"अवस्थितेरिति काशकृत्स्नः" इत्यत्र । अतोऽविभागेन "अहं ब्रह्मास्मि" इत्येवानुभवति" इति । अत्र परब्रह्मोपसम्पत्या निवृत्तातिरोधानस्य सर्वस्यापि मुक्तस्याविशेषेणैकरूपब्रह्मानुभवस्यैव प्रतिपादितत्वान्नोभयाविधाधिकारिणोऽनुभवे वैलक्षण्यं सम्भवतीति ।

ननु "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यत्र पंचाग्निविदां ब्रह्मविदां चाधिकारिभेदस्स्पष्टतया श्रूयते । स च तत्तद्विद्याप्राप्यफलभेदनिबन्धन एव। श्रीमति गीताभाष्ये तथैवानुगृहीतत्वाच । तथा हि "चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ" इति श्लोकव्याख्यानावसरे "जिज्ञासुः-प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः ।ज्ञानमेवास्य स्वरूपमिति 'जिज्ञासुः' इत्युक्तम् । ज्ञानी च-"इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् " इत्यादिनाभिहितभगवच्छेषैतैकरसात्मस्वरूपवित् , प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यन् भगवन्तं प्रेप्सुः भगवन्तमेव परमप्राप्यं मन्वानः" इति प्रतिपाद्य, पुनरपि "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यःप्रयाति त्यजन्देहं स याति परमाङ्गतिम्" इति श्लोकव्याख्यायामपि "प्रकृतिवियुक्तं मत्समानाकारमपुनरावृत्तिमात्मानं प्राप्नोतीत्यर्थः" इति जिज्ञासोःप्राप्यं प्रदर्श्य, उपरितनग्रन्थे "ज्ञानिनःप्राप्यन्तु तस्मादत्यन्तविभक्तमित्याह- "मत्तःपरतरं नान्यत्किंचिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" "मामेभ्यःपरमव्ययम्" इत्यादिना निर्दिष्टस्य यस्यान्तस्थानि सर्वाणि भूतानि येन च परेण पुरुषेण सर्वमिदं ततम्, स परःपुरुषः "अनन्यचेतास्सततम्" इत्यनन्यया भक्त्यालभ्यः" इत्यादिना ब्रह्मविदःप्राप्तेः पृथगेव प्रतिपादितत्वादुभयोःप्राप्यभेदोऽत्र-

श्यमङ्गीकरणीयः । तथा च फलभेदसत्त्वात्तत्प्रयुक्ताधिकारभेद इति चेत् ;—

नैवम् । पंचाग्निविदां ब्रह्मविदां च पृथगधिकारप्रदर्शनं न फलभेदनिबन्धनम्, अपि तु मुक्तिकालीनब्रह्मानुभवस्य विलम्बाविलम्बानिबन्धनमेव । पंचाग्निविदस्तु मुक्तौ कंचित्कालं स्वात्मानन्दमनुभूयानन्तरं ब्रह्मानुभवन्ति । ज्ञानिनस्तु तादृशविलम्बं विना परमात्मानमेवानुभवन्तीति सिद्धान्तात् । तथा चानुगृहीतमाचार्यैः गीताभाष्यतात्पर्यचन्द्रिकायाम् "इह तावच्छ्रुतिसूत्रभाष्यादिषु अन्यत्र च पंचाग्निविदः परमात्मात्मकस्वात्मानुसन्धातृत्वमार्चिरादिगतिश्चाविशेषेणोच्यते । तस्याश्च ब्रह्मगमयितृत्वस्य श्रुत्यादिषु, इह च "तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति सिद्धत्वात्, पंचाग्निविदोऽपि परमात्मप्राप्तिरस्त्येवेति स्वीकर्तव्यम् । तत्र प्राप्तौ ज्ञानिनां परमात्मा स्वविशिष्टो भोग्यः, अक्षरयाथात्म्यनिष्ठानां तु स्वस्वरूपमेव पूर्वं भोग्यम्; वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तिसाधनमधुविद्यान्यायादन्तो ब्रह्मप्राप्तिः । ईदृशपर्वक्रमनियमश्च प्राचीनापेक्षाभेदात् । स च प्राचीनकर्मविशेषादिति "चतुर्विधा भजन्ते माम्" इति प्रागेव दर्शितः । न चात्र जिज्ञासोरन्य एवात्मयाथात्म्यविदिति भाष्यते; जिज्ञासुवेद्यतयोक्तस्वभावविसर्गयोरत्र पंचाग्निविद्योदाहरणात्; मध्ये च कैवल्यार्थिन एव मूर्धन्यनाड्या निष्क्रमणमनावृत्तिश्चोक्ता । आत्मयाथात्म्याक्षरयाथात्म्यशब्दयोश्चात्र न भिन्नार्थत्वम्; तस्योपासने कश्चिदस्तिविशेषः; अक्षरयाथात्म्यविदः-परमात्मशरीरभूतस्वात्मोपासकाः; ज्ञानिनस्तु स्वात्मशरीरकपरमात्मोपासका इत्ययमेव विशेषः "तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति विभागनिर्देशोऽभिप्रेत इति भाष्यादिषूक्तः" इति । सप्तमाध्यायेऽपि "केवलात्मन्यपर्यवस्यान्भिति-नगरं प्रविविक्षोरध्वगस्य छायातरुमूलस्वापवदात्मानुभवविलम्ब इति भावः । ....भगवन्तमेवेत्यात्मानुभवविलम्बाक्षमत्वमभिप्रेतम्" इति । इत्थं चोक्तोभयाधिकारिणोर्ब्रह्मानुभवरूपफलप्राप्त्यंशे विलम्बाविलम्बनिबन्धनः, उपासनदशायां ब्रह्मणो विशेषणविशेष्यभावनिबन्धनो वाधिकारभेद इति नात्र प्राप्यभेदप्रसक्तिरिति ।

ननु ब्रह्मप्राप्तिरूपफलविलम्बाविलम्बयोरेव "तद्य इत्थं विदुः" "चतुर्विधा भ-

जन्ते माम्" इत्याद्युक्ताधिकारभेदनिबन्धनत्वे ब्रह्मवित्त्वेन सम्प्रतिपन्नस्य मधुविद्यानिष्ठस्य ज्ञानिकोट्यन्तर्भावो न सम्भवति, तस्य वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तेरेव फलतया वस्वादिपदप्राप्तिरूपविलम्बहेतुसद्भावात्, तथा च "चतुर्विधाः" इत्यधिकारिभेदप्रदर्शनं नोपपद्यत एवेति चेत्;—न; तत्र जिज्ञासुपदस्याधिकारिविशेषोपलक्षकत्वात्। तथा हि-मुमुक्षवो द्विविधाः-प्रयोजनान्तरप्राप्तिपूर्वकमोक्षेच्छावन्तः, अव्यवधानेन भगवत्प्राप्तिरूपमोक्षेच्छावन्तश्चेति। प्रयोजनान्तरपराणां मधुविद्यापंचाग्निविद्यादिनिष्ठानां "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" इत्युक्तानन्यप्रयोजनाधिकारिषु अन्तर्भावासम्भवात्, जिज्ञासुपदोपलक्षितप्रयोजनान्तरप्राप्तिपूर्वकमोक्षेच्छावदधिकारिष्वेवान्तर्भावसम्भवान्न चातुर्विध्यहानिः। उक्तं च न्यायसिद्धांजनव्याख्याने रत्नपेटिकाख्याने "न चाविलम्बितमोक्षेच्छावत एव ज्ञानिरूपत्वे मधुविद्यानिष्ठानां ज्ञानिजिज्ञासूभयबहिर्भावेन चातुर्विध्यव्याकोपः' इति वाच्यम्,—जिज्ञासूपलक्षितेषु प्रयोजनान्तरप्राप्तिपूर्वकमोक्षेच्छावत्सु तेषामन्तर्भावितया चातुर्विध्यव्याकोपविरहात्। तथा हि-न तावन्मधुविद्यानिष्ठानां ज्ञानिषु अन्तर्भावसम्भवः; "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" इत्येतद्भाष्ये ज्ञानिनां भगवदेकप्राप्यत्वाभिधानात्। मधुविद्यानिष्ठानां वस्वादिपदप्राप्तिरूपप्राप्यान्तरसद्भावात्। अनन्यप्रयोजनैस्सह प्रयोजनान्तरपराणामैकराश्येन परिगणनस्यात्यन्तानुचितत्वात्" इत्यादिना। तस्मात्पंचाग्निविदां ब्रह्मविदां च ब्रह्मानुभवरूपफलमेकरूपमेव, प्रत्युत विलम्बाविलम्बावेव तत्र विद्येते। अनुगृहीतं च वेदान्तसारे "उभयेऽपि हि परिपूर्णं ब्रह्मोपासते सुखभेदेन। स्वात्मशरीरकं ब्रह्म केचन, ब्रह्मात्मकस्वात्मानमितरे" इति। न चात्र 'सुखभेदेन' इत्युक्त्या फलवैलक्षण्यासिद्धिरिति वाच्यम्,—विशेषणविशेष्यभेदस्यैव सुखभेदरूपत्वात्। तुल्यवित्तिवेद्यतयोभयोरप्युभयविषयकत्वसम्भवाच्च—इत्याहुः।

**अत्रास्मदाचार्याः**-पंचाग्निविदां ब्रह्मविदाश्च प्राप्यं फलमत्यन्तभिन्नमेव। यथोपासनभावित्वात्प्राप्यानुभवस्य। पंचाग्निविदामुपासनन्तु-जीवात्मविशेष्यकपरमात्मशेषत्वप्रकारकम्। ब्रह्मविदान्तु-परब्रह्मविशेष्यकजीवात्मप्रकारकम्। अत एव

यथाक्रतुन्यायात्पंचाग्निविदां जीवमुख्यविशेष्यको ब्रह्मानुभव एव फलम् । ब्रह्मविदां तु-परमात्मविशेष्यकोऽनुभव एव फलमिति वैषम्यं स्फुटमेव । तथा चानुगृहीतं वेदान्तदीपे कार्याधिकरणे "पंचाग्निविदो हि-प्रकृतिवियुक्तब्रह्मात्मकात्मस्वरूपविदः। ते च केवलं ब्रह्म प्राप्य पुनर्न निवर्तन्ते । परंब्रह्मोपासीनानान्तु-यथावस्थितं परिपूर्णं परंब्रह्मैव प्राप्य पुनर्न निवर्तन्ते" इति ।

अत्र परब्रह्मोपासकानां प्राप्ये यथावस्थितत्वादिविवरणेन, पंचाग्निवित्प्राप्ये तदभावस्सूच्यते । अनुगृहीतं चार्यैस्तात्पर्यचन्द्रिकायामष्टमाध्याये उभयोरप्युपासने फले च वैलक्षण्यम्-"अक्षरयाथात्म्यविदः-परमात्मशरीरभूतस्वात्मोपासकाः । ज्ञानिनस्तु-स्वात्मशरीरकपरमात्मोपासका इत्ययमेव विशेषः ।....तत्र प्राप्तौ ज्ञानिनां परमात्मा स्वविशेष्यो भोग्यः; अक्षरयाथात्म्यनिष्ठानां तु-स्वस्वरूपमेव पूर्वं भोग्यम्, वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तिसाधनमधुविद्यान्यायादन्ततो ब्रह्मप्राप्तिः" इति। अत्रापि ज्ञानिनः प्राप्ये ब्रह्मणि स्वत इष्टत्वरूपभोग्यत्वमभिधाय पंचाग्निवित्प्राप्ये तदनभिधानात् प्राप्यवैलक्षण्यं स्पष्टमेवेति प्रतीयते। तथा चोदाहृतसूक्त्योभयोरपि फलोपासनयोर्वैलक्षण्यस्य स्फुटतया प्रतिपादनात्, फलस्य च यथोपासनभाविताया यथाक्रतुन्यायसिद्धत्वात्, पंचाग्निविदां ब्रह्मविदां चानुभवरूपफलवैलक्षण्यं दुर्वारमेव ।

न च "स एनान्ब्रह्म गमयति" इत्यादिनोभयोरपि ब्रह्मप्राप्तेरेकरूपायाश्श्रुतत्वात् "अविभागेन दृष्टत्वात्" इत्यधिकरणे सर्वस्यापि मुक्तस्य ब्रह्मानुभवरूपफलैक्यस्य प्रतिपादनाच्चोभयोरपि फलवैलक्षण्यं दुरुपपादमेवेति वाच्यम्;-"स एनान्ब्रह्म गमयति" इत्युक्तब्रह्मप्राप्तेस्स्वरूपाविर्भावपूर्वकालीनतायाः "सम्पद्याविर्भावस्स्वेनशब्दात्" इति सूत्रादिसिद्धतया तस्या उभयसाधारण्येऽपि स्वरूपाविर्भावानन्तरभाविप्राप्यानुभवस्य यथोपासनभाविताया यथाक्रतुन्यायसिद्धतया तयोःफलवैलक्षण्यस्य सूपपादत्वात् । "अविभागेन दृष्टत्वादि" त्यधिकरणे चाहमर्थसामानाधिकरण्येन विहितब्रह्मविद्यानिष्ठानां ज्ञानिनां यथाक्रतुन्यायेन प्राप्तस्य परमात्मविशेष्यकानुभवस्यैव फलत्वप्रतिपादनाय साम्यसाहित्यश्रुत्यनुरोधेन यथाक्रतुन्यायस्यान्यथासिद्धिमाशंक्य

साम्यादिश्रुतेरेवान्यथासिद्धिप्रतिपादनेन यथाक्रतुन्यायस्यैव फलव्यवस्थापकत्वसमर्थनपूर्वकं तादृशब्रह्मविद्यानिष्ठानां ब्रह्मविशेष्यकानुभव एव फलमिति व्यवस्थापितम्।न तु अहमर्थवैयधिकरण्येन विहितपंचाग्निविद्यानुभवोऽपि प्रतिपादित इति न तदधिकरणविरोधः।

इदं च तदधिकरणश्रीभाष्यम्—"अविभागेन दृष्टत्वात्—किमयं परंज्योतिरुपसम्पन्नस्सर्वबन्धविनिर्मुक्तःप्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति-उत तत्प्रकारतया तदविभक्तमिति विशये "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" "यदा पश्यःपश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम्। तदा विद्वान्पुण्यपापे विधूय निरंजनःपरमं साम्यमुपैति" "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इत्यादिश्रुतिस्मृतिभ्यां मुक्तस्य परेण साहित्यसाम्यसाधर्म्यावगमात् पृथग्भूतमनुभवतीति प्राप्ते, उच्यते—अविभागेनेति-परस्माद्ब्रह्मणस्स्वात्मानमविभागेनानुभवति मुक्तः। कुतः?-दृष्टत्वात्-परब्रह्मोपसम्पत्त्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात्। स्वात्मनस्स्वरूपं हि—"तत्त्वमसि" "अयमात्मा ब्रह्म" "ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्यादिसर्वसामानाधिकरण्यनिर्देशैः "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम्—"अवस्थितेरिति काशकृत्स्नः" इत्यत्र। अतोऽविभागेन "अहं ब्रह्मास्मि" इत्येवानुभवति। साम्यसाधर्म्यव्यपदेशः-ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनस्स्वरूपं तत्साम्यमिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति। सहश्रुतिस्तु-एवंभूतस्य प्रत्यगात्मनः प्रकारिणि ब्रह्मणि सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः" इति।

अत्र श्रुतप्रकाशिका—"यथावस्थितस्यैवोपास्यत्वे यथोपासनंभावित्वे च फलस्य स्थिते कथं पूर्वपक्षोत्थानमिति शङ्कायां सहश्रुतिसाम्यश्रुतिसाधर्म्यस्मृतीनां बलात्तत्क-

तुन्यायोऽपोदित इत्यभिप्रायेण पूर्वपक्षमाह" इत्यारभ्य "अहं ब्रह्मास्मी" त्येवानुभवतीति–अहमर्थस्य तत्पर्यन्तत्वेन तद्बुद्धिशब्दयोश्च तत्पर्यन्तत्वात्तथात्वेनानुभवतीत्यर्थः" इति।

इत्थं चोदाहृतभाष्यश्रुतप्रकाशिकयोरहमर्थसामानाधिकरण्येन विहितोपासनस्यैव यथाक्रतुन्यायेन तथाविधानुभवफलकतायाःप्रतिपादनात्, अहमर्थव्यधिकरणतया प्रवृत्तपंचाग्निविद्याया अपि तत्क्रतुन्यायेनैवात्मविशेष्यब्रह्मप्रकारकानुभव एव फलमिति अकामेनाप्यङ्गीकरणीयमिति।

ननु कार्याधिकरणभाष्ये "पंचाग्निविदोऽप्यर्चिरादिना गतिश्रवणात्, अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च। अत एव तत्क्रतुन्यायात्प्रकृतिविनिर्मुक्तब्रह्मात्मकस्वात्मानुसन्धानं सिद्धम्" इति पंचाग्निविद्याया अपि ब्रह्मानुसन्धानस्यानुगृहीतत्वात्, तदधिकरणश्रुतप्रकाशिकायां च "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यत्र पंचाग्निविद्यानिष्ठस्यार्चिरादिगतिश्रवणात् तया गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणात्फलस्य च यथोपासनभावित्वात्, अर्चिरादिना ब्रह्मप्राप्तिफलोपासननिष्ठः पंचाग्निविद्यानिष्ठो ब्रह्मोपासक एव" इत्यनुगृहीतत्वात्, अधिकरणचिन्तामणौ कार्याधिकरणे "अयमत्र भावः-स्वशरीरकपरमात्मोपासनं, परमात्मशरीरभूतस्वात्मोपासनमित्युभयमप्यर्थादेकमेव। तेन परमात्मशरीरभूतस्वात्मोपासकस्यापि ब्रह्मोपासकत्वादर्चिरादिगमनोपदेशो न विरुध्यते" इति प्रतिपादनाच्च पंचाग्निविद्यापि ब्रह्मविद्यैव। ब्रह्मविद्यासामान्येऽनुसन्धानप्रकारस्य तत्फलानुभवप्रकारकस्य चात्मत्वोपासनाधिकरणाविभागाधिकरणयोरेकरूपतया निर्णीततया पंचाग्निविदां ब्रह्मविदां च फलवैषम्यं दुरुपपादमेवेति चेत्;–मैवम्। "पंचाग्निविद्यानिष्ठो ब्रह्मोपासक एव" इति श्रुतप्रकाशिकायां भाष्ये ब्रह्मोपासकपदेनाविद्यानिवृत्तिफलकब्रह्मविषयकोपासक एव विवक्षितः। तथाविधब्रह्मोपासकत्वस्योभयविधाधिकारिसाधारण्यात्। तावता पंचाग्निविदः "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्युक्तयथावस्थितपरिपूर्णब्रह्मोपासकेष्वन्तर्भावो न सम्भवति; अपि तु प्रतीकोपासकान-

न्तर्भाव एव । अत एव "अप्रतीकालम्बनान्नयति" इति सूत्रेण प्राप्योपासनवैलक्षण्यप्रयुक्ताधिकारिभेदसंग्राहकेनाप्रतीकालम्बनत्वेनैवोभयोर्निर्देशः उपपद्यते । अनुगृहीतं च कार्याधिकरणश्रुतप्रकाशिकायां "प्राप्यभेदप्रयुक्तोपासनभेदः; तच्च "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति विभागान्यथानुपपत्त्या स्वात्मविशिष्टब्रह्मोपासनम्, ब्रह्मात्मकस्वात्मोपासनं चेति कल्प्यम्; ब्रह्मप्राप्त्यानुगुण्यात्; पृथङ्निर्देशावैयर्थ्याच्चेत्यर्थः" इति । तथा चोभयोरुक्तरीत्या ब्रह्मोपासकत्वेऽपि उपासनवैलक्षण्यस्य स्फुटतरं प्रतिपादितत्वेन पंचाग्निविदो यथावस्थितब्रह्मोपासकज्ञानिकोट्यन्तर्भावो न सम्भवत्येवेति ।

यदि च पंचाग्निविदां ब्रह्मविदां च मोक्षहेतुब्रह्मोपासनस्याविशेषादैश्वर्यार्थिवदेक एवाधिकार इत्युच्यते, तदा "परं जैमिनिर्मुख्यत्वात्" इति सूत्रेणैव बादरिमतानिराकरणपूर्वकस्वसिद्धान्तस्य प्रदर्शितत्वात् "अप्रतीकालम्बनान्नयति" इत्यादिसूत्रप्रणयनं निष्प्रयोजनमेव भवेत् ।

इदं च "परं जैमिनिः" इत्यादिसूत्रभाष्यम्—"परं जैमिनिर्मुख्यत्वात्—" परंब्रह्मोपासीनानर्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते । कुतः! मुख्यत्वात्—"तत्पुरुषोऽमानवस्स एनान्ब्रह्म गमयति" इति ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् । प्रमाणान्तरेण कार्यत्वे निश्चिते हि लाक्षणिकत्वं युक्तम् । न च गमनानुपपत्तिःप्रमाणम्, परस्य ब्रह्मणस्सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिशास्त्रात् । यथा हि विद्योत्पत्तिर्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा, "तमेतं वेदानुवचनेन" इति शास्त्रादवगम्यते । तथा निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते । विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम् । यत्तु "ब्रह्मलोकान्" इति लोकशब्दब्रह्मवचनाभ्यां विशेषणात्कार्यभूतहिरण्यगर्भप्रतीतिरिति; तदयुक्तम्; निषादस्थपतिन्यायेन 'ब्रह्मैव लोको ब्रह्मलोकः' इति कर्मधारयस्यैव युक्तत्वात् । अर्थस्यैकत्वे निश्चिते बहुवचनस्य "आदितिपाशान्" इतिवदुपपत्तेः । परस्य ब्रह्मणःपरिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिक-

ल्पितास्त्रासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्तीति श्रुतिस्मृतिपुराणप्रामाण्यात्" इति ।

अत्र च ब्रह्मोपासकानां सर्वेषामपि ब्रह्मप्राप्तेःप्रतिपादनात्, उत्तरसूत्रारम्भो निर्युक्तिक एव ।

अथ—परब्रह्मोपासका द्विविधाः-ब्रह्मविशेष्यकोपासकाः, ब्रह्मप्रकारकोपासकाश्चेति । तयोर्मध्ये ब्रह्मविशेष्यकोपासकानामेवार्चिरादिगतिपूर्वकब्रह्मप्राप्तिर्जैमिनिना प्रतिपादिता; सिद्धान्तिना तु—उभयविधाधिकारिणोऽप्यर्चिरादिगतिपूर्वकब्रह्मप्राप्तिश्रवणादुभयोरप्यप्रतीकालम्बनसूत्रेणार्चिरादिगतिपूर्वकब्रह्मप्राप्तिःप्रतिपादितेति न सिद्धान्तसूत्रप्रणयनवैयर्थ्यमिति चेत्;—न; "परं जैमिनिर्मुख्यत्वात्" इत्यत्र परशब्दोत्तरद्वितीयाया विशेष्यतैवार्थ इति न नियन्तुं शक्यते । "उभयेऽपि हि परिपूर्णं ब्रह्मोपासते मुखभेदेन" इति सारवाक्ये ब्रह्मशब्दोत्तरं विषयता सामान्ये द्वितीयाप्रयोगदर्शनादत्रापि द्वितीयाया विषयतैवार्थ इति वक्तुं युक्तम् । तथा सति ब्रह्मविषयकोपासनस्योभयोरपि सत्त्वादनेनैव सूत्रेण सिद्धान्तसम्भवादुत्तरसूत्रारम्भप्रयासो निष्प्रयोजनक एवेति तथाधिकारिभेदमङ्गीकृत्य सूत्रसार्थक्यवर्णनस्यासम्भावितत्वात् ।

ननु भवत्पक्षेऽपि अप्रतीकालम्बनसूत्रारम्भसाफल्यं न सम्भवति; 'परं जैमिनिः' इत्यत्र परशब्दोत्तरद्वितीयाया विशेष्यताप्रकारतासाधारणविषयतामात्रार्थकत्वे उभयोरपि ब्रह्मविषयकोपासनसद्भावेन तेनैवोभयाधिकारिसंग्रहसम्भवात् । किंचोभयोरप्युपासने फले च विशेष्यताप्रकारताभेदावलम्बनेन वैलक्षण्यं दुर्वचम् । उभयोरपि ब्रह्मविशेष्यकोपासनसम्भवात् । तथा हि पंचाग्निविद्यायां मुखतः ब्रह्मशरीरभूतस्वात्मोपासनेऽपि तुल्यवित्तिवेद्यतया परमात्मनि स्वात्मशरीरित्वस्यापि भानसम्भवेन ब्रह्मविशेष्यकोपासनस्यापि सम्भवात्, सद्विद्यादिषु मुखतो जीवशरीरित्वस्य ब्रह्मणि भानेऽपि जीवे परमात्मशरीरत्वस्यापि भानसम्भवात्, उपासने वैलक्षण्यस्य दुरुपपादतया फलस्य च यथोपासनभावितायास्सिद्धान्तसिद्धत्वात्, फलवैलक्षण्यस्याप्यसं-

भवेनाधिकारिभेदाभावात् पूर्वसूत्रेणैव सर्वसंग्रहसम्भवे उत्तरसूत्रप्रणयनं निर्युक्तिकमेवेति चेत्;—नैवम्; उभयोरपि ब्रह्मविषयकोपासनसद्भावेनोपासने विषयताप्रयुक्तवैलक्षण्याभावेऽपि प्रकारान्तरेणोपासनयोर्वैलक्षण्यस्य वक्ष्यमाणत्वात् । किंच—उभयोरपि फलोपासनयोर्वैलक्षण्यं स्फुटतया प्रतीयते । पंचाग्निविदां तुल्यवित्तिवेद्यतया परमात्मविशेष्यकोपासनसत्त्वेऽपि तेषां ब्रह्मविशेषणकानुसन्धानमेव मुख्यम्, वैधत्वात् । "तद्य इत्थं विदुः" इत्यादिना जीवात्मविशेष्यकानुसन्धानस्यैव श्रुत्या प्रतिपादनात् । विहितव्यतिरिक्तविषये आनुषङ्गिके तात्पर्याभावाच्च । "भावोज्झितास्ते न फलं लभन्ते" इति न्यायेनानुषङ्गिकस्य ब्रह्मविशेष्यकानुसन्धानस्य तात्पर्याविषयतया फलाधायकत्वाभावाच्च । फलस्य यथोपासनभावितया पंचाग्निविदां मोक्षदशायामविभागेन ब्रह्मानुभवरूपफलस्याप्यसम्भवाच्च ।

किंच—पंचाग्निविदां ब्रह्मविदां च फलोपासनयोर्वैलक्षण्योपपादनार्थमेव "अप्रतीकालम्बनान्नयति" इति सूत्रं प्रणीतं सूत्रकारेण । तथा हि—"ये परं ब्रह्मोपासते" इत्यत्र ब्रह्मशब्दोत्तरद्वितीयाया विषयत्वमर्थः । तस्य चोपास्तावन्वयः । उपासनं नाम-निरतिशयप्रीतिरूपो ज्ञानविशेषः । उपासने प्रीतिरूपत्वं च-"स्मर्यमाणात्यर्थप्रियत्वेन" इत्यादिभाष्यानुगृहीतरीत्या प्राप्यतयोपास्यवस्तुगतनिरतिशयप्रियत्वनिबन्धनमेव । उपासनं च—"सेवा भक्तिरुपास्तिः" इति निघण्टुपाठेन भक्तिशब्दपर्यायत्वात्, भक्तिरूपापन्नमेव । तथा च "ये परं ब्रह्मोपासते" इत्यनेन परब्रह्मविषयकनिरतिशयप्रीतिरूपोपासनविशिष्टास्सदादिविद्यानिष्ठा ज्ञानिनोऽभिधीयन्ते । एवमेव "ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते" इत्यत्रात्मपदोत्तरद्वितीयाया विषयत्वार्थकत्वाद् ब्रह्मात्मकस्वात्मस्वरूपविषयकनिरतिशयप्रीतिरूपोपासनविशिष्टाः पंचाग्निविदो जिज्ञासुशब्दवाच्या अभिधीयन्ते । तेषां च ब्रह्मणि प्रीतेरात्मविशेषणत्वनिबन्धनतया स्वात्मप्रीत्या सातिशयत्वात् । तथा चोभयेषामप्युपासने वैलक्षण्यस्य स्फुटतया प्रतिपादनात् यथोपासनभाविफलेऽपि वैलक्षण्यमकामेनापि स्वीकार्यम् । यथाक्रतुन्यायात् । अत एवाचार्यैस्तात्पर्यचन्द्रिकायामष्टमाध्यायेऽनुगृहीतम्—"तत्र प्रा-

सौ ज्ञानिनां-परमात्मा स्वविशिष्टो भोग्यः, अक्षरयाथात्म्यनिष्ठानां तु-स्वस्वरूपमेव पूर्वं भोग्यम्, वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तिसाधनमधुविद्यान्यायादन्ततो ब्रह्मप्राप्तिः" इति। अनुगृहीतं च दीपे "पंचाग्निविदो हि प्रकृतिवियुक्तब्रह्मात्मकात्मस्वरूपविदः। ते च तत्प्राप्य पुनर्न निवर्तन्ते। परंब्रह्मोपासीनास्तु-यथावस्थितं परिपूर्णं परंब्रह्मैव प्राप्य न पुनर्निवर्तन्ते। "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति "इत्युभयाविधान्भेदेनार्चिरादिगतिश्रुतेः" इत्यादिना।

इत्थं च "परं जैमिनिर्मुख्यत्वादि" ति सूत्रे परब्रह्मविषयकनिरतिशयप्रीतिरूपोपासननिष्ठानामेवार्चिरादिगतिप्रतिपादनेन पंचाग्निविदामसंग्रहात्तत्संग्रहार्थं सिद्धान्तसूत्रारम्भसार्थक्यमित्यस्मत्पक्षे नानुपपत्तिगन्धः।

किंच-श्रीगीताभाष्ये जिज्ञासुशब्दवाच्यपंचाग्निविदां ब्रह्मविदां ज्ञानिनां च प्राप्यफलवैलक्षण्येनैवाधिकारिभेदप्रदर्शनपूर्वकं जिज्ञास्वपेक्षया ज्ञानिनामनेकप्रकारवैलक्षण्यं चानुगृहीतम्—"सुकृतिनः पुण्यकर्माणो मां शरणमुपगम्य मामेव भजन्ते। ते च सुकृततारतम्येण चतुर्विधाः। सुकृतगरीयस्त्वेन प्रतिपत्तिवैशेष्यादुत्तरोत्तराधिकतमा भवन्ति। आर्तः—प्रतिष्ठाहीनः, भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः। अर्थार्थी—अप्राप्तैश्वर्यतया ऐश्वर्यकामः। तयोर्मुखभेदमात्रम्, ऐश्वर्यविषयतयैक्यादेक एवाधिकारः। जिज्ञासुः—प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः। ज्ञानमेवास्य स्वरूपमिति 'जिज्ञासुः' इत्युक्तम्। ज्ञानी च "इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्" इत्यादिनाभिहितभगवच्छेषतैकरसात्मस्वरूपवित्प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यन्भगवन्तं प्रेप्सुः, भगवन्तमेव परमप्राप्यं मन्वानः। "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।" कुतः! नित्ययुक्तः, एकभक्तिरिति च। तस्य हि मदेकप्राप्यस्य मया योगो नित्यः। इतरयोस्तु यावत्स्वाभिलषितप्राप्तिर्मया योगः" इति। एवं च जिज्ञासोर्ज्ञानिनश्च प्राप्यभेदनिबन्धनाधिकारभेदस्य स्पष्टतया प्रतिपादनात्, उभयोरपि फलवैलक्षण्यं प्रामाणिकमेव। अन्यथा-उभयोः प्राप्यफलवैलक्षण्याभावे ऐश्वर्यार्थिवदेकाधिकारस्यैव, सम्भवात्

धिकारभेदप्रदर्शनं निष्प्रयोजनकमेव स्यात् । तथा च पंचाग्निविदां ब्रह्मविदां च फलभेदनिबन्धनः परस्परं भेदस्स्फुट एवेति ।

नन्वेवं पंचाग्निविदामुक्तरीत्या ब्रह्मविदपेक्षयातिरिक्तत्वे मतिश्रुत्यन्यथानुपपत्त्या "पंचाग्निविदपि ब्रह्मोपासक एव" इति श्रुतप्रकाशिकासूक्तिः कथं सङ्गच्छत इति चेत्;—उच्यते । कार्याधिकरणे हि "स एनाम्ब्रह्म गमयति" इति श्रुतिवाक्यघटकब्रह्मशब्दस्य लक्षणया कार्यब्रह्मपरत्वमङ्गीकृत्य बादरिणार्चिरादिगतिनिर्वाहःकृतः; 'मुख्यवृत्त्या निर्वाहे सम्भवति लक्षणा नोचिता' इति जैमिनिना सिद्धान्तैकदेशावलम्बनेन बादरिमतं निराकृतम्; पंचाग्निविदोऽप्यार्चिरादिगतिपूर्वकब्रह्मप्राप्तिश्रवणात्, तस्यापि ब्रह्मविशेषणकोपासनपरिकल्पनेन ब्रह्मोपासकत्वं सम्पाद्य गतिश्रुतिनिर्वाहः कर्तव्य इति सूत्रकृतोभयाधिकारिसंग्राहकेणाप्रतीकालम्बनसूत्रेण स्वाभिमतसिद्धान्तं प्रदर्श्य, तत्क्रतुन्यायेनोभयोःफलभेदसम्भवात्, अधिकारिभेदोऽपि सम्भवतीति "तत्क्रतुश्च" इति सूत्रखण्डेन सूचितम् ।ततश्च मोक्षहेतुब्रह्मविषयकोपासनस्योभयोरपि सम्भवात्तयोर्ब्रह्मोपासकत्वं श्रुतप्रकाशिकायामुक्तमिति न तद्ग्रन्थविरोधः । तथा चानुगृहीतम्प्रतीकालम्बनसूत्रभाष्यश्रुतप्रकाशिकायां " प्रतीकालम्बनव्यतिरिक्त एव हि परंब्रह्मोपासीनस्तं नयतीति तादृशाज्जैमिनिमतात्सिद्धान्तिमतस्य को विशेष इत्यत्राह-एतदुक्तमिति । प्रतीकालम्बनव्यतिरिक्तेषु केषाञ्चिदर्चिरादिगतिर्जैमिनिनोक्ता, प्रतीकालम्बनव्यतिरिक्तत्वोपाधिर्येषु तान्सर्वान्नयतीति सिद्धान्तिमतमिति विशेषः" इति । अत्र चोपासनभेदस्य " तत्क्रतुश्च" इति फलभेदस्य च स्पष्टतया प्रतिपादनात्पंचाग्निविदां ब्रह्मविदां च फलवैलक्षण्यं दुरपह्नवमेवेति ।

ननु पंचाग्निविदां ब्रह्मविदां च प्राप्यफलभेदनिबन्धनो नाधिकारिभेदः, किन्तु स्वस्वाभिलषितब्रह्मानुभवस्यात्मानुभवरूपविलम्बतदननुभवरूपाविलम्बनिबन्धन एव; अनुगृहीतं च तात्पर्यचन्द्रिकायां सप्तमाध्याये "केवलात्मन्यपर्यवस्यन्निति-नगरं प्रविविक्षोरध्वगस्य छायातरुमूलस्वापवदात्मानुभवविलम्ब इति भावः" इति; अष्टमेऽध्याये च "अत एव सप्तमे प्रक्रान्तो जिज्ञासुः परमात्मप्राप्तिकामज्ञानिव्यतिरिक्तत्वाद्ब्रह्मा-

त्मकस्त्वात्मानुसन्धायीति न भ्रमितव्यम्, तस्य चोदारकोटिमात्रे निवेशः स्वात्मानुभवविलम्बाविमुखज्ञानिव्यतिरेकात्" इति । अत्र च जिज्ञासुशब्दवाच्यपंचाग्निविद आत्मानुभवरूपविलम्बस्य प्रतिपादनात्, ज्ञानिनश्च तदप्रतिपादनाच्च विलम्बाविलम्बौ एवाधिकारिभेदप्रयोजकौ । किंच-मधुविद्यानिष्ठो यथा वस्वादिपदप्राप्तिपूर्वकं परिपूर्णब्रह्मानुभवरूपं फलं प्राप्नोति, तथैव पंचाग्निविदपि कंचित्कालमात्मानन्दमनुभूय ततःपरिपूर्णब्रह्मानुभवयुक्तो भवतीति तस्यापि ब्रह्मविदामिव फलभेदो नास्त्येव; ब्रह्मोपासकत्वाविशेषादिति चेत्;-

न; पंचाग्निविदां फलत्वेनाभिलषितः प्रकृतिसम्बन्धरहितात्मानुभवः-प्रकृतिमण्डले यत्रकुत्रचित्स्थानविशेषे वा, परमपदप्राप्त्यनन्तरं देशविशेषे वाभिमतः; न तावदाद्यः-"तदापीतेस्संसारव्यपदेशात्" इति सूत्रोक्तरीत्या ब्रह्मप्राप्तिपर्यन्तं प्रकृतिसम्बन्धस्य सत्त्वात्, प्रकृतिमण्डले तद्रहितात्मानुभवासम्भवात्, "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुत्यार्चिरादिगत्यनन्तरं ब्रह्मप्राप्तिपर्यन्तं मध्ये तत्तद्विद्यासाध्यमुख्यफलानुभवासम्भवस्य प्रतिपादनादात्मानुभवविलम्बस्य वक्तुमशक्यत्वात् ।

न च दक्षिणायनमृतस्य चन्द्रप्राप्तिवद्गतिमध्ये वान्यत्र वात्मानुभवविलम्बस्सम्भवत्येवेति वाच्यम्,-चन्द्रप्राप्तेस्तत्तद्विद्यासाध्यमुख्यफलत्वाभावेन मध्ये आनुषङ्गिकफलीभूततदनुभवसम्भवेऽपि पंचाग्निविद्यासाध्यमुख्यफलस्य गतिमध्ये वान्यत्र वानुभवासम्भवात् । न चात्मानुभवोऽप्यानुषङ्गिकफलमेवेति वाच्यम्,-"जिज्ञासुः-प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः" "जरामरणमोक्षाय" इत्यादिना तस्य परमफलत्वप्रतिपादनात् । किंच-"प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यन्भगवन्तमेव परमप्राप्यं मन्वानः" इति गीताभाष्यस्वारस्येन प्रकृतिवियुक्तकेवलात्मानुभव एव जिज्ञासुशब्दवाच्यपंचाग्निविदो मुख्यं फलम्, भगवत्प्राप्तेरात्मानुभवरूपमुख्यफलापेक्षया प्राधान्यं च स्पष्टं प्रतिपाद्यते । अत आत्मानुभवस्तस्यावान्तरफलं न भवति। अपरं च-पंचाग्नि-

विदां प्रकृतिवियुक्तात्मस्वरूपानुभव एव मुख्यं फलम्, ज्ञानिनस्तु परिपूर्णब्रह्मानुभव एवेति गीताभाष्ये अष्टमाध्याये स्पष्टतया प्रतिपादितम्। विस्तरभयान्नात्रोदाह्रियते। तत्रैव द्रष्टव्यम्।

एवं च-प्रकृतिवियुक्तात्मानन्दानुभवस्य प्रकृतिमण्डले गतिमध्ये वासम्भवात्तदनुभवविलम्बादधिकारिभेदप्रतिपादनं चिन्तनीयमेव। अत एवात्मानुभवादनन्तरं गत्युपक्रमस्य गतिमध्ये आत्मानुभवस्य च प्रतिपादनमन्वारुह्यवाद एवेति सम्प्रदायविदामाशयः। मधुविद्यान्यायोदाहरणं च भवतो विपरीतफलमेव। तथा हि-मधुविद्यायां 'प्रथमं वस्वादिभोग्यादित्यादिशरीरकब्रह्मानुभवो भूयात्, अनन्तरं देशविशेषावच्छेदेन परिपूर्णब्रह्मानुभवो भूयात्' इत्युद्देशपूर्वकमुपासनानुष्ठानाद्यथाक्रतुन्यायेन कार्यब्रह्मानुभवरूपफलानुभवपूर्वकब्रह्मानुभवरूपफलं सम्भवति; पंचाग्निविद्यायान्तु-निरतिशयानन्दत्वावस्थापन्नप्रकृतिवियुक्तजीवस्वरूपानुभवोद्देशेनैव जीवप्रधानकोपासनानुष्ठानात्, यथाक्रतुन्यायेन प्रकृतिवियुक्तब्रह्मात्मकात्मानुभव एव मुख्यं फलमिति न तस्यावान्तरफलत्वसम्भवः। तथा चानुगृहीतं मध्वधिकरणश्रीभाष्ये "भावन्तु बादरायणोऽस्ति हि"-आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान्बादरायणो मन्यते। अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सा सम्भवः। इदानीं वसूनामपि सतां कल्पान्तरेऽपि वस्वादित्वप्राप्तिश्चापेक्षिता भवति। अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते,—"असौ वा आदित्यो देवमधु" इत्यारभ्य "अथ तत ऊर्ध्व उदेति" इत्यतःप्रागादित्यवस्वादिकार्यविशेषावस्थं ब्रह्मोपास्यमुपदिश्यते, "अथ ऊर्ध्वं उदेति" इत्यादिनादित्यान्तरात्मतयावस्थितं कारणावस्थमेव ब्रह्मोपास्यमुपादिश्यते। तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणावस्थं ब्रह्म प्राप्नोति" इति।

अत्र च मधुविद्यायां कार्यकारणोभयावस्थब्रह्मोपासनस्य विहितत्वादादित्यादीनामतद्रूपविशिष्टजीवशरीरकब्रह्मरूपकार्यावस्थब्रह्मणः नित्ये परमपदेऽनुभवासम्भ-

वात्प्रकृतिमण्डल एवाप्रधानं तत्फलमनुभूयार्चिरादिगतया देशविशेषप्राप्तिपूर्वकं यथोपासनं प्रधानफलभूतब्रह्मानुभवस्सम्भवतीति स्पष्टं प्रतीयते। पंचाग्निविद्यायान्तु-प्रकृतिवियुक्तब्रह्मात्मकस्वात्मानुभवस्यैव मुख्यफलतया प्रतिपादनात्तस्य प्रकृतिमण्डले असम्भवात्, अर्चिरादिगत्यनन्तरं देशविशेष एवेत्यकामेनापि अङ्गीकरणीयमिति मधुविद्यान्यायोदाहरणं प्रकृतानुपयुक्तमेवेति सुधियो विभावयन्तु। अत्र विस्तरस्तु-रहस्यविवेकसम्प्रदायचन्द्रिकागुरुभावप्रकाशिकारहस्यमंजर्यादिपूर्वाचार्यप्रवन्धेषु द्रष्टव्यः।

अथ-पंचाग्निविदां ब्रह्मविदां च मुक्तिदशायां फलभेदो न सम्भवति। यथावस्थितब्रह्मानुभवप्रतिवन्धककर्माविद्यादीनां निश्शेषनिवृत्तेः। "विकल्पोऽविशिष्टफलत्वात्" इत्यादिना ब्रह्मोपासनसामान्यस्य समानफलकत्वप्रतिपादनात्। यथाक्रतुन्यायस्यायोगव्यवच्छेदपरतायाः "उपासितगुणादेर्या प्राप्तावप्यत्रहिष्क्रिया। सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम्" इत्यादिनानुगृहीतत्वात्तन्नयायेनापि फलभेदो न सिध्यतीति चेन्न;—पञ्चाग्निविदां निश्शेषकर्मक्षयेऽपि न यथावस्थितब्रह्मानुभवसम्भवः। स्वात्मप्रधानकोपासनरूपस्य ब्रह्मप्रधानकानुभवप्रतिवन्धकस्य यावदात्मभाविस्वात्मानुभवमात्रं दद्यामिति भगवत्सङ्कल्पविशेषस्य च चेतनापेक्षानुगुण्येनैव फलं दद्यामित्यनादिनिरङ्कुशस्वतन्त्रभगवत्सङ्कल्पकृतस्य सद्भावात्।

ननु-ईदृशसङ्कल्पः केनावगम्यत इति चेत्, श्रुतिप्रसिद्धेन यथाक्रतुन्यायेनेति ब्रूमः। न च तन्नयायस्यायोगव्यवच्छेदपरताया वेदान्ताचार्यैरनुगृहीततयानुपासितगुणानामपि प्राप्तिसम्भवात्, नानुभववैलक्षण्यं मुक्तानां सम्भवतीति वाच्यम्;—यथाक्रतुन्यायस्यायोगव्यवच्छेदपरत्वे एकयैव विद्यया तत्तद्विद्याप्रकरणपठितगुणाविशिष्टब्रह्मानुभवरूपफलस्य सम्भवाद्विद्यान्तरविधायकवाक्यानां वैयर्थ्यापत्तेः।

किञ्च-यथाक्रतुन्यायस्यान्ययोगव्यवच्छेदपरत्वमेव श्रुतिसूत्रभाष्यश्रुतप्रकाशिकादिस्वारस्यसिद्धम्। तथा हि श्रुतौ तावत्-"तं यथायथोपासते तथैव भवति" इति। 'तथैव' इत्येवकारेणानुपासिताकारप्राप्तेर्व्यवच्छेदस्य स्पष्टतया प्रतिपादनात्।

" अप्रतीकालम्बनात्" इत्यादिसूत्रे "तत्क्रतुश्च" इति सूत्रखण्डेन ब्रह्मप्राप्त्यानुगुण्येन ब्रह्मोपासनस्य कल्पितत्वात्; तद्भाष्ये च "तथोपासीनस्तथैव प्राप्नोतीत्यर्थः" इति भाषितत्वाच्च तत्क्रतुन्यायस्यान्ययोगव्यवच्छेदपरत्वं दुरपह्नवमेव । न च विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदपरतया 'शङ्खः पाण्डर एवे' त्यादौ तान्त्रिकैरङ्गीकृतत्वात्, "तथैव भवति" इति विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदकत्वं स्वरसमेवेति वाच्यम्, विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदकत्वमेवेति नियमाभावात् । तथा चानुगृहीतमाचार्यैरधिकरणसारावल्याम्–"धर्मस्थे त्वेवकारे त्रिविधमपि भवेत्तद्व्यवच्छेदकत्वं धर्मिण्यस्यान्वये स्यात्तदितरविषये तस्य धर्मस्य हानिः । जानात्येवेत्यबोद्धा न भवति जडता ज्ञानमात्रोक्तिवार्या ज्ञानालोपादिवाक्यानुगुणविषयतां यात्यसावेवकारः" इति । व्याख्यातश्च चिन्तामणौ "यद्यप्येवं धर्मस्थेनैवकारेण विवक्षावशात्त्रिविधमपि अवधारणं कर्तु शक्यते" इति ।

किञ्च–'अयं विद्वानेव' इत्यनेनाविद्वत्ताव्यवच्छेदप्रतीतेरनुभवसिद्धत्वात्, "सदेव सोम्येदमग्र आसीत्" इत्यत्रेदंशब्दविशेषणीभूतसच्छब्दसङ्गतैवकारेणासत्त्वव्यावर्तनस्य महासिद्धान्तारम्भणाधिकरणादिश्रुतप्रकाशिकायां स्पष्टत्वाच्चान्ययोगव्यवच्छेदस्सिद्धत्येव ।

किञ्च–यथाक्रतुन्यायश्च छान्दोग्ये शाण्डिल्यविद्यायामाम्नातः "यथा क्रतुरस्मिंल्लोके पुरुषो भवति" इत्यादि । अस्याश्श्रुतेरर्थः रङ्गरामानुजमुनिभिरित्थं वर्णितः-"तं यथायथोपासते तथैव भवति" इति श्रुत्यन्तरादिह लोके पुरुषः यथाक्रतुः–यथोपासनः, तथैवेतःप्रेत्यामुष्मिन् लोके भवति" इति । ततश्च " तं यथायथोपासते तथैव भवति" इति श्रुत्यन्तरानुगुण्येन 'तथा+भवति' इत्यस्य 'तथैव+भवति' इत्यर्थवर्णनेन स च न्यायः-अन्ययोगव्यवच्छेदार्थक इति प्रदर्शितो भवति। युक्तं चैतत् "व्यतिरेकस्तद्भावभावित्वात्" "अप्रतीकालम्बनान्नयति" इत्यादिसूत्रभाष्ययोः प्राप्याकारस्यैवोपासनविषयत्वप्रतिपादनेनानुपासितप्रकाराणां प्राप्यत्वासम्भवस्य सु-

चितत्वात्, जन्माद्यधिकरणश्रुतप्रकाशिकायां "प्राप्याकारविशिष्टं च ब्रह्म प्रमाणान्तर-सिद्धमिहानूद्यते। प्रमाणान्तराणि च विभूतिद्वयविशिष्टं ब्रह्म प्राप्यं वदन्ति। प्राप्याकारस्य चोपास्यत्वं तत्क्रतुन्यायसिद्धम्" इत्यनुगृहीतत्वाच्च।

तथा च "यथा क्रतुः" इत्यादेरयं निर्गलितार्थः—साधनदशावच्छिन्नफलकामनावान्पुरुषः, यद्यद्रूपावच्छिन्नावच्छेदकताकविशेष्यतानिरूपितयद्यद्रूपावच्छिन्नप्रकारताशाल्युपासनाश्रयवृत्त्यसाधारणधर्माश्रयो यः, स फलदशावच्छेदेन तत्तद्रूपावच्छिन्नावच्छेदकताकविशेष्यतानिरूपिततत्तद्रूपावच्छिन्नप्रकारताभिन्नप्रकारताशून्यत्वे सति तथाविधविशेष्यतानिरूपितप्रकारताशाल्यनुभववान्भवती-ति।

इत्थं च-उपासनविषयतासमनियतविषयताशाल्यनुभव एवोपासनस्य फलमिति अन्ययोगव्यवच्छेदकैवकारमहिम्ना प्रतीयते। उपासनदशायां येन येन रूपेण यस्य यस्य भानं तेन तेन रूपेणैव तेषां श्रुतिसूत्रभाष्यादिसम्मतत्वात्।

ननु दहरादिविद्यासु अपहतपाप्मत्वादिकतिपयगुणानामेवोपास्यत्वात्, "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते" त्यादिना सर्वकल्याणगुणविशिष्टब्रह्मणः प्राप्यत्वाभिधानेनानुपासितगुणानामपि प्राप्यत्वसम्भवात्, तत्कथमुपासनविषयतासमनियतविषयताशालित्वं फलीभूतानुभवस्य सम्भवतीति चेत्;—उच्यते;—सर्वासु ब्रह्मविद्यासु सर्वकल्याणगुणविशिष्टं ब्रह्मैवोपास्यं प्राप्यमपि, तथाविधं ब्रह्मैव, तत्र यासु यासु विद्यासु ये ये गुणाः विशिष्य प्रतिपाद्यन्ते, त एव गुणास्तत्तदसाधारणाकारेणोपास्यन्ते; ते च तथैवानुभूयन्ते; अन्ये गुणाश्च सामान्याकारेणेति विषयतासमनैयत्यस्य नानुपपत्तिः। तथा चानुगृहीतं वेदार्थसंग्रहे—"तत्त्वमसी" ति सद्विद्यायामुपास्यं ब्रह्म सगुणम्; सगुणब्रह्मप्राप्तिश्च फलमित्यभियुक्तैः पूर्वाचार्यैर्व्याख्यातम्। यथोक्तं वाक्यकारेण "युक्तं तद्गुणकोपासनात्" इति। व्याख्यातं च द्रमिडाचार्येण विद्याविकल्पं वदता "यद्यपि सच्चित्तः न निर्भुग्नदैवतं गुणगणं मनसानुधावेत्, तथाप्यन्तर्गुणामेव देवतां भजते, इति तत्रापि सगुणैव देवता प्राप्यते" इति। सच्चित्तः-

सद्विद्यानिष्ठः । न निर्गुणदैवतं गुणगणं मनसानुधावेत्-अपहतपाप्मत्वादिकल्याणगुणगणं दैवताद्विभक्तं यद्यपि दहरविद्यानिष्ठ इव सच्चित्तो न स्मरेत् । तथाप्यन्तर्गुणामेव देवतां भजते-देवतास्वरूपानुबन्धित्वात् सकलकल्याणगुणगणस्य केनचित्परदेवतासाधारणेन निखिलजगत्कारणत्वादिनानुगुणेनोपास्यमानापि देवता वस्तुतस्स्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यते । अतस्सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्यादहरविद्ययोर्विकल्प इत्यर्थः" इति। व्याख्याता चेयं तात्पर्यदीपिकायां व्यासार्यैः-"यद्यपीत्यादि द्रमिडाचार्यग्रन्थः । तद्व्याचष्टे-सच्चित्त इति । 'अन्तर्गुणामि' ति पदस्य हेतुगर्भतां प्रदर्शयन्वाक्यस्यार्थमाह-देवतास्वरूपेति । प्रकृतसद्विद्याया असाधारणत्वान्निखिल जगत्कारणत्वमुक्तं प्रतिविद्यं व्यवस्थितानां गुणानां प्रदर्शनार्थम् । आदिशब्देन सर्वविद्यासाधारणा आनन्दत्वादयो विवक्षिताः । सर्वकल्याणगुणशब्देन निरूपितस्वरूपगुणा विवक्षिताः । दहरविद्यायां "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इति दैवतात्पृथक् अपहतपाप्मत्वादिगुणजातं विभक्तमुपास्यं विहितम् । एवं सद्विद्यायां देवतायाः पृथग्गुणजातमुपास्यत्वेन न विहितम् । तथापि जगत्कारणत्वादिकतिपयगुणविशिष्टत्वेनोपास्यमानं ब्रह्म स्वतोऽपरिमितकल्याणगुणमिति सामान्येनापरिमितगुणत्वेनोपास्यमानत्वात्, तस्यापि प्राप्यं सगुणमेव ब्रह्मेत्यर्थः। आनन्त्यस्य सर्वविद्यासाधारणत्वाद् गुणतोऽप्यानन्त्यस्य तदन्तर्गतत्वात्, सामान्येनापरिमितगुणत्वं हि सर्वविद्यानुयायी" ति ।

तथा च सर्वासु विद्यासु सर्वगुणानां सामान्याकारेणोपास्यत्वप्रतिपादनादनुपासितगुणानामप्रसिध्द्या तत्तद्विद्यासु विशेषतः पठितानां गुणानां विशेषाकारेणानुभवगोचरत्वमिति स्पष्टतया प्रतिपादनादुपासनतत्फलानुभवयोर्न समनियतविषयत्वानुपपत्तिगन्धः ।

किंच-"व्यतिरेकस्तद्भावभावित्वात्" इति सूत्रभाष्ये उपासनदशायामननुसंहितस्य प्राप्यत्वाभवस्स्फुटतरं प्रतिपादित इति यथाक्रतुन्यायस्यान्ययोगव्यवच्छेदकत्वमेव स्वरसम् । इयं च श्रीभाष्यसूक्तिः-"व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत्-न त्वेतद-

स्ति-यद् ज्ञातृत्वाद्याकार एवानुसन्धेय इति, अस्यात्मनस्संसारदशायां यो व्यतिरेकः, सोऽपहतपाप्मत्वादिकोऽनुसन्धेय इत्यर्थः । कुतः?-तद्भावभावित्वात्-तद्रूपापत्तेः । "यथा क्रतुरस्मिन् लोके पुरुषो भवति, तथेतःप्रेत्य भवति" "तं यथा यथोपासते तथैव भवति" इति यथोपासनमेव हि प्राप्तिश्श्रूयते । न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते;—प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वात् । अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरकपरमात्मोपासनस्य तथा रूपमेव प्राप्यमित्युक्तं भवति । अत एव "एवं क्रतुर्हामुं लोकं प्रेत्याभिसम्भवितास्मि" इत्युच्यते । तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः" इति ।

अत्र यथा क्रतुन्यायस्यायोगव्यवच्छेदपरत्वे जीवात्मनःपूर्वपक्षोक्तकर्तृत्वज्ञातृत्वभोक्तृत्वादीनां मोक्षदशायमनुवर्तमानतया तन्न्यायस्यायोगव्यवच्छेदपरत्वसम्भवात्, "व्यतिरेकस्तद्भावभावित्वात्" इत्यादिसूत्रेण प्राप्याकारस्योपासनदशायामनुसन्धानमावश्यकम्, अनुपासिताकारस्य प्राप्यत्वासम्भवादिति सिद्धान्तप्रणयनं निष्प्रयोजनकमेव भवेत् । अन्ययोगव्यवच्छेदपरत्वे तु-अनुपासिताकारस्य प्राप्तिदशायामनुभवासम्भवादवश्यं प्राप्याकार एवानुसन्धेय इति सिद्धान्तसूत्रप्रणयनं सार्थकं भवतीति तन्न्यायस्यान्ययोगव्यवच्छेदपरत्वमेव न्याय्यमिति सुस्पष्टं प्रतीयते ।

नन्वेवं "उपासितगुणादेर्या" इति सूक्तिःकथं सङ्गमनीयेति चेत्;-इत्थं तत्सूक्त्यभिप्रायः—सर्वकल्याणविशिष्टब्रह्मण एव सर्वविद्यासूपास्यतयानुपासितगुणाप्रसिध्या यासु विद्यासु येषां गुणानां येन रूपेणोपास्यत्वं, फलदशायां तेषां गुणानां तेनैव रूपेणानुभवगोचरत्वम्; इतरेषां तु गुणत्वरूपसामान्याकारेणेति । अत एव "नाकारान्तरवर्जनम्" इत्यनुगृहीतम् । न तु 'न गुणान्तरवर्जनम्' इति ।

किंच-कार्याधिकरणभाष्यादौ फलबलादुपास्यविशेषाकारस्य साधिततया तद्बलेनापि तन्न्यायस्यान्ययोगव्यवच्छेदपरत्वं सिध्यति । तत्र हि-'पंचाग्निविद्या ब्रह्मविषयिणी । ब्रह्मगमनफलकत्वात् । यथा सद्विद्यादिः' इत्यनुमाने 'ब्रह्मगमनफलक-

त्वरूपहेतुरस्ति । ब्रह्मविषयकत्वरूपसाध्यं मास्तु' इत्यप्रयोजकताशङ्कायां तत्क्रतुन्याय एव ह्यनुकूलतर्कतया विवक्षितः । यदि तत्क्रतुन्यायोऽयोगव्यवच्छेदमात्रपरस्स्यात्, तर्हि मोक्षहेतुकेवलजीवोपासकस्यापि ब्रह्मगमनसम्भवात्तन्न्यायस्य तदप्रयोजकताशङ्कावारकत्वायोगेन तदनुमानमनुपपन्नं स्यादिति तद्बलेन तस्यान्ययोगव्यवच्छेदफलकतया आवश्यकत्वात् ।

इदं च-जिज्ञासाधिकरणे "फलोपासनयोःप्रकारैक्यं "यथा क्रतुरस्मिन् लोके पुरुषो भवति" इति श्रुत्यैव सिद्धम्" इत्यनुगृहीतम् । अत्र श्रुतप्रकाशिका "फलदशायां गुणप्राधान्यश्रवणादुपासने गुणप्राधान्यं कथं सिध्यतीत्यत्राह-फलोपासनयोरिति इति" । अत्र "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा" इत्यादिना फलदशायां श्रूयमाणगुणप्राधान्यानुगुण्येनोपासनदशायामपि गुणप्राधान्यस्य समर्थितया तन्न्यायस्यान्ययोगव्यवच्छेदपरत्वमेवोदाहृतभाष्यश्रुतप्रकाशिकयोस्स्फुटतया प्रतीयते । अन्यथा प्राप्यदशानुगुण्येनोपासनस्य सगुणत्वप्रतिपादनासम्भवाच्चेति तत्क्रतुन्यायोऽन्ययोगव्यवच्छेदपर एव । विस्तरस्तु तत्क्रतुन्यायमीमांसायामस्माभिःप्रपंचित इति नात्र विस्तृणीमहे ।

इत्थं च-पंचाग्निविदां ब्रह्मप्रधानकोपासनाभावान्न तथाविधब्रह्मानुभवसम्भवः । ब्रह्मविदां तु-ब्रह्मप्रधानकोपासनसद्भावात्, "अविभागेन दृष्टत्वात्" इत्याद्युक्तब्रह्मप्रधानकानुभवस्सम्भवत्येवेति ।

नन्वेवं-तत्तद्विद्याजन्यानुभवेषु निरूप्यनिरूपकभावापन्नविषयतावैलक्षण्याङ्गीकारेण फलभेदाङ्गीकारे "विकल्पोऽविशिष्टफलत्वात्" इति सूत्र विरोधो दुर्वार एव । तत्र सर्वासां ब्रह्मविद्यानामेकजातीयफलजनकत्वव्यवस्थापनात् । तथा चानुगृहीतं तत्सूत्रभाष्ये "सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्दब्रह्मानुभवःफलमविशिष्टं श्रूयते" इति । अतस्सर्वब्रह्मविद्यानामेकजातीयफलजनकत्वस्यावश्यकतया निरुक्तविषयतावैलक्षण्यप्रयुक्तफलवैलक्षण्यकल्पनमप्रामाणिकमेवेति चेत्;-उच्यते;-विकल्पस्थले

सर्वत्र एकरूपावच्छिन्नं प्रति रूपद्वयावच्छिन्नसाधनताबोधस्य प्रामाणिकत्वे तस्य कार्यवैजात्यकल्पनयैवोपपाद्यमानत्वात् । अन्यथा "व्रीहिभिर्यजेत" "यवैर्यजेत" इत्यादौ परस्परव्यतिरेकव्यभिचारेण सामान्यरूपावच्छिन्नकार्यं प्रति रूपद्वयावच्छिन्नसाधनताया बाधप्रसङ्गात् । तथा च या या विद्या यादृशयादृशनिरूप्यकभावापन्नविषयताशालिनी, सा सा तादृशतादृशविषयताशाल्यनुभवरूपमुक्तिहेतुरिति तत्क्रतुन्यायपर्यवसितार्थः ।

न च "अविशिष्टफलत्वात्" इति सूत्रखण्डोक्तहेतुना सर्वविद्यानामेकजातीयफलकत्वानुपपत्तिर्दुर्वारैवेति वाच्यम्;—सर्वकल्याणगुणविशिष्टपरिपूर्णब्रह्मानुभवत्वेन रूपेण सर्वेषामनुभवानां साम्यस्य सम्भवादुक्तानुपपत्तेरनवकाशात् । सूचितश्चायमर्थः-"काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वाभावात्" इति सूत्रभाष्ये "पूर्वहेत्वाभावादि" त्यस्य व्याख्याने "अपरिमितफलत्वाभावादित्यर्थः" इति ग्रन्थेन । तथा चापरिमितत्वेनैव साम्यं विवक्षितमिति तथाविधं फलमेकविधविद्यया लब्धं चेद्विद्यान्तरसमुच्चये प्रयोजनाभाव इति तदधिकरणार्थवर्णनसम्भवात् । यथा नवरत्नमालानां सन्दर्भविशेषेण भिन्नानामनुभवभेदेन भोगभेदेऽपि नवरत्नमालानुभवरूपभोगस्सर्वेषां भोक्तॄणां समानः; तथा सर्वकल्याणगुणगणविशिष्टब्रह्मणस्सामान्यविशेषरूपतत्तद्धर्मावच्छिन्नविषयताशाल्यनुभवभेदेन भोगभेदेऽपि सर्वेषां परिपूर्णब्रह्मानुभवरूपभोगस्समान एवेति न भोगसाम्यप्रतिपादकसूत्रभाष्यविरोधः ।

किञ्च-ब्रह्मविद्यायां विकल्पस्य तत्तदधिकारिणां रुचिविशेषमूलकतया रुचेश्च प्राप्यफलभेदनिबन्धनत्वात्सर्वेषूपासनेषु सर्वेषां कल्याणगुणानां तत्तदसाधारणरूपेण भानाङ्गीकारे एकेनैवोपासनेन सर्वकल्याणगुणानां तत्तदसाधारणरूपेण भानसम्भवाद्विद्यान्तरविधानानुपपत्त्या विकल्पानुपपत्तिरिति फलोपासनयोर्गुणानां सामान्यविशेषरूपेणैव भानमावश्यकमेव ।

इत्थञ्च यथाक्रतुन्यायेन प्राप्यवैलक्षण्यसिद्ध्या न पंचाग्निविदां ब्रह्मविदांचैकरूपं फलं सम्भवति ।

एवञ्च पंचाग्निविदां ब्रह्मविदां चोदाहृतप्रमाणोपपत्तिभिः फलवैलक्षण्यस्य सिद्धत्वात्, पंचाग्निविदामेव जिज्ञासुशब्दवाच्यकेवलत्वात्तस्यार्चिरादिगत्या ब्रह्मप्राप्तिपूर्वकस्वात्मविशेष्यकब्रह्मात्मकत्वप्रकारकानुभवरूपफलस्य सिध्या कैवल्यं नित्यं मोक्षरूपं चेति सत्सम्प्रदायानुसारिभिः प्रामाणिकैरङ्गीकरणीयमेव ।

एतेन "स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता" "सामिति कैवल्यव्यावृत्तिः" "परमस्वराडि" ति मुक्तात्मोच्यते । तत्र परमशब्देन कैवल्यमोक्षव्यावृत्तिः" "मुक्तानां परमा गतिः" "परमेति विशेषणेन मुक्तानामेव केषांचिदर्वाचीना गतिर्गम्यते; गृह्यते च निर्मुक्तजरामरणात्मककैवल्यलक्षणा "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये" इति । संसारपरमपदयोर्मध्ये तेषां स्थानं च, "योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम्" इति" "विरजा परमव्योम्नोरन्तरा केवलं स्मृतम् । तत्स्थानमुपभोक्तव्यं व्यक्तं वै ब्रह्मवादिना ॥ स्वात्मानुभवजानन्दसुखदं केवलं पदम् । निश्रेयसं च निर्वाणं कैवल्यम्मोक्षमुच्यते ॥ श्रीशांघ्रिभक्तिसेवैकरसभोगविवर्जितम् । तदिच्छन्त्यल्पमतयो मोक्षं सुखविवर्जितम्" इत्यादिपूर्वाचार्यादिसूक्तीनां प्रकारान्तरेणार्थवर्णनमभ्युपगम्यवाद एवेति सुधियो विदांकुर्वन्तु । विस्तरस्तु रहस्यार्थविवेकसम्प्रदायचन्द्रिकागुरुभावप्रकाशिकासदनुष्ठानदर्पणकैवल्यशतदूषण्यादिपूर्वाचार्यग्रन्थेषु द्रष्टव्य इत्यलमतिविस्तरेण ।

अत उक्तन्यायेन परमपुरुषार्थलक्षणमोक्षाधिकारिणां कैवल्यस्यापुरुषार्थत्वसिध्या त्याज्यत्वं सिद्धम् ।

अत्र कैवल्यशब्दः-वक्ष्यमाणपरार्थैकैंकर्यनिष्ठव्यतिरिक्तोपासकस्वप्रयोजनाधिकारिपरश्च । कैवल्यनिष्ठाः-"स्वात्मसन्तोषकारिणाम्" इत्युक्तरीत्या स्वात्मसन्तोषकारिण इति सुप्रसिद्धम् । उपासकस्वार्थप्रपन्नावपि तत्तुल्यौ हि । तथा हि-स्वात्मसन्तोषकारिणः-त्रिविधाः । तद्भोग्यस्यात्मनो ज्ञानत्वज्ञातृत्वकर्तृत्वरूपधर्मत्रयवैशिष्ट्यात् । सुषुप्ताविवज्ञानत्वमात्रपर्यवसन्नाः-केवलाः । ज्ञातृत्वपर्यन्तानुधाविनस्साधनान्तरनिष्ठाः । कर्तृत्वलक्षणकैङ्कर्यपर्यन्तानुधाविनस्स्वप्रयोजनपराः । अयमर्थः-श्रीवच-

नभूषणे प्रपंचित इति नात्र विस्तरभयाल्लिख्यते । अस्याधिकारिणः स्वार्थानुभवकैङ्कर्ययोस्त्याज्यत्वात्, उक्तार्थलाभः । अत एव प्रथममूत्रार्थकथनावसरे "आत्मप्राप्तिकामस्य मुमुक्षुत्वेऽपि नात्र स विवक्षितः तस्य रहस्यत्रयज्ञानानपेक्षत्वात्" इति सामान्येनानुगृहीतम् । रहस्यत्रयज्ञानानपेक्षत्वस्य त्रयाणामपि तुल्यत्वात् । तेषां स्वरूपपारतन्त्र्योपायपारतन्त्र्यफलपारतन्त्र्याभावात् । तत्र स्वार्थत्वं तेषां सुप्रसिद्धम् । अत्र स्वार्थत्वनिषेधात् पारार्थ्यं सिद्धम् । तस्माच्चद्व्यावृत्तिर्वक्तव्येति ।

तथा हि-सिद्धोपायनिष्ठस्य साधनान्तरनिष्ठस्य च भगवति निरतिशयप्रीतियुक्तत्वभगवद्वरणविषयीभूतत्वस्वानुष्ठीयमाणभक्त्यादिस्वाभिलषितफलसाधनत्वबुद्धियुक्तत्वनिरतिशयप्रीतिरहितत्वभगवत्स्वीकाराविषयीभूतत्वभेदात्, स्वार्थत्वपरार्थत्वे सिद्धे । उभयाधिकारिणामपि स्वस्वाभिलषितफलानि रुचिभेदात्स्वार्थत्वपरार्थत्वयुक्तानि भवन्ति । एतादृशाधिकारिद्वैविध्यं जिज्ञासाधिकरणश्रुतप्रकाशिकायामनुगृहीतम्-"प्रियतमं एववृणीति-प्रीतिविषयमात्रस्य न वरणीयत्वम्; किन्तु स्वयमुपस्थितस्य स्वीकार एव । अतस्तद्व्यावृत्त्यर्थं-प्रियतम इत्युक्तम्" इति । अनेन ग्रन्थेन साधनान्तरनिष्ठानां "मत्फलसाधनत्वान्मदर्थमिदं कर्म" इति बुध्या स्वातिशयलक्षणमोक्ष एव निरतिशयप्रीतिमत्त्वेन भगवति निरतिशयप्रीतेरभावेन वरणविषयत्वासम्भवात्, महोदारस्य भगवतस्तेषु प्रीतिविषयत्वमात्रं, न तु वरणविषयत्वम्; तस्य भगवति निरतिशयप्रीतिनिबन्धनत्वादिति ।

तथा च साधनान्तरनिष्ठानामभिमतमोक्षः स्वार्थतागर्भः, सिद्धोपायनिष्ठानामभिमतस्तु केवलपरार्थत्वगर्भ इति ।

अत्र केचित्-मुमुक्षूणां सिद्धोपायनिष्ठत्वसाधनान्तरनिष्ठत्वाभ्यां, मोक्षस्यापि स्वार्थत्वपरार्थत्वाभ्यां विभागश्च नोपपद्यते; मुमुक्षूणां सर्वेषां न्यासोपासनान्यतरसाधनस्य तत्फलप्रदस्य सिद्धोपायस्य च साधारण्येन सिद्धान्तसिद्धत्वात् । तथा हि श्रीभाष्ये 'अखिले' त्यादिमङ्गलश्लोके शास्त्रसंग्रहरूपे ससम्यन्तैःपदैस्सिद्धोपायस्वरू-

पं प्रतिपाद्य 'शेमुषी भक्तिरूपे' ति तद्विषयकभक्तिर्मुमुक्षुसामान्यप्रार्थनीयतया प्रतिपादिता। श्रुतप्रकाशिकायां च "शास्त्रप्रतिपाद्यमुपायोपेयात्मकं, सिद्धोपायोपेयंच ब्रह्म, साध्योपायो भक्तिः" इत्यनुगृहीतम्।

तथा च सिद्धोपायसाध्योपाययोस्सर्वसाधारणतया न भवदुक्ताधिकारिभेदः प्रमाणिकः; नापि मोक्षद्वैविध्यसम्भवः। "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" "निरंजनःपरमं साम्यमुपैति" "रसं ह्येवायं लब्ध्वानन्दी भवति" इत्यादिना सर्वेषां मुमुक्षूणामेकजातीयमोक्षस्यैव शास्त्रप्रतिपादनात्। न च "चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन" इत्युक्तरीत्या सुकृतमूलकरुचिविशेषात्स्वार्थत्वपरार्थत्वादिकमपि मोक्षे सम्भवतीति वाच्यम्;-"पुण्य पापे विधूय," इत्युक्तरीत्या मुक्तिदशायां निश्शेषकर्मक्षयात्तन्मूलकरुचिविशेषस्यापि तत्रासम्भवेन तदधीनस्वार्थत्वादीनां तदासम्भावितत्वात्। न च श्रुतप्रकाशिकायां "स्वयमुपस्थितस्य स्वीकार एव" इत्यादिनाधिकारिभेदस्य प्रदर्शितत्वात्तदधीनःफलभेदोऽपि सम्भवत्येवेति वाच्यम्;-तत्र "स्वयमुपस्थितस्य" इति न भक्त्यादिरूपसाधनान्तरनिष्ठाःप्रतिपाद्यन्ते; अपि तु ऐश्वर्यकैवल्यार्थिनः। भक्तिप्रपत्तिनिष्ठास्तु-"उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम्" इत्युक्तरीत्या ज्ञानिकोट्यन्तर्भूताः, 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इत्युक्तरीत्या भगवद्वरणविषयीभूता इति न तद्ग्रन्थविरोधगन्धोऽपि। तस्माद्भवदुक्ताधिकारिफलयोर्वैलक्षण्यं निष्प्रामाणिकमेवेति-आहुः।

अत्रास्मदाचार्याः-निरुक्ताधिकारिफलयोर्द्वैविध्यं प्रामाणिकमेव। साधनान्तरनिष्ठानां भगवति निरतिशयप्रीतेरभावेन भगवद्वरणीयाधिकारिवैलक्षण्यस्य शास्त्रसम्मतत्वात्। साधनान्तरनिष्ठाश्च भावनात्रयान्वयात्स्वार्थपरा अशुद्धा अनुपास्या इति सुस्पष्टं भगवता पराशरेणोक्तम्-"त्रिविधा भावना भूप विश्वमेतान्निबोध ताम्। कर्माख्या ब्रह्मसंज्ञा च तथा चैवोभयात्मिका॥ कर्मभावात्मिका ह्येका ब्रह्मभावात्मिकापरा। उभयात्मिका तथैवान्या त्रिविधा भावभावना॥ सनन्दनादयो ब्रह्मभावभावन-

या युताः । कर्मभावनया चान्ये देवाद्यास्स्थावरावराः ॥ हिरण्यगर्भादिषु च ब्रह्म-कर्मात्मिका द्विधा । अधिकारबोधयुक्तेषु विद्यते भावभावना । अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु" इति ।

अस्यार्थो वेदार्थसंग्रहश्रुतप्रकाशिकायां विस्तरेण प्रतिपादितः-"विश्वमेतत्-त्रिविधाभावना-भावनात्रयान्वितमित्यर्थः । तां-त्रिविधां भावनां, निबोध । भावनामवच्छेदकसंज्ञया निर्दिशति-कर्माख्येति । कर्माख्या-कर्मभावनेत्यर्थः । एकस्यैव संज्ञात्रयक्लिप्तिशङ्काव्यावृत्त्यर्थमाह-कर्मभावात्मिकेति । भावभावनाः-"भावार्थाःकर्मशब्दास्तेभ्यो ये प्रतीयेत" इति वचनाद्भावः-अनुष्ठेयः, अनुष्ठेयविषयीभावना-आन्तर उद्योगः, भावभावना । सा कर्मभावात्मिका-कर्मरूपानुष्ठेयविषया । ब्रह्मभावात्मिका-उपासनारूपानुष्ठेयविषया । उभयात्मिका-कर्मोपासनरूपोभयानुष्ठेयविषयेति त्रिविधेत्यर्थः । सनन्दनादय इति-सनन्दनादयो ब्रह्मभावभावनया युताः-उपासनरूपानुष्ठेयविषयया भावनयान्विता इत्यर्थः । ब्रह्मशब्दः-उपासनरूपज्ञानपर्यायः । "आगमोत्थं विवेकाच्च द्विधा ज्ञानं यथोच्यते । शब्दब्रह्मागममयं परं ब्रह्म विवेकजम्" "द्वे-ब्रह्मणी वेदितव्ये" "द्वेविद्ये वेदितव्ये वै इति च" इति, ब्रह्मशब्दस्य ज्ञानविद्याशब्दनिर्दिष्टागमजन्योपासनरूपज्ञानद्वयपर्यायत्वेन भगवता पराशरेणैव व्याख्यातत्वात्। 'स्थावरावराः' इति स्थावरशब्देन तदभिमानिदेवता विवक्षिता । सनन्दनादीनां समाधिविरोधिसकलकर्मक्षयात्समाधिनिष्पत्तिपौष्कल्येनानवरतब्रह्मानुसन्धानैकतानत्वान्न कर्मानुष्ठानावसरः । प्रधानाविरोधेन ह्यङ्गानुष्ठानम् । तस्माते ब्रह्मभावनया युताः। हिरणगर्भादयः-जगन्निर्वाहाधिकृतत्वात्, कदाचित्कर्मानुष्ठानम्, कदाचिदुपासनं चेति उभयभावनान्विताः । इतरे देवमनुष्याद्याः-कर्मभावनयान्विताः । "सनन्दनादयः, हिरण्यगर्भादयः, देवाद्याः" इत्यादिशब्दस्य को विषयः! आदिशब्दस्यासङ्कोचान्मुक्तेष्वपि भावनाद्वयप्रसङ्गः' इति शङ्काव्यावृत्त्यर्थं प्रयोजनमाह-अधिकार इति । "कर्मण्यैश्वर्यबोधोऽधिकारः" इत्यधिकारलक्षणम् । 'स्वप्रयोजनसाधनत्वात् कर्मणि स्वकीयत्वबुद्धिराधिकारः' इत्यर्थः । अधिकारबोधयुक्तेषु -अधिकाररूपबोधयुक्तेषु ।

अनुष्ठेयविषयस्वकीयत्वबुद्धियुक्तेष्वित्यर्थः । मुमुक्षोरुपासने स्वकीयत्वबुद्धिः, बुभुक्षोः कर्मणि स्वकीयत्वबुद्धिः । अधिकारबोधश्च केष्वित्यत्राह-अक्षीणेष्विति । विशेषज्ञान-कर्मसु विशेषज्ञानं-'देवोऽहम्, मनुष्योऽहम्' इत्यादिज्ञानम्; विशेषज्ञाने तद्धेतुषु च कर्मसु विद्यमानेषु आधिकारबोधस्सम्भवति; तद्युक्तेषु भावनात्रयान्वय इति न मुक्तेषु प्रसङ्ग इत्यर्थः" इति ।

अत्र च मुमुक्षोस्स्वप्रयोजनसाधनत्वरूपस्वकीयत्वबुद्धेस्स्पष्टतया प्रतिपादना-त्स्वाभिलषितमोक्षरूपफल एव तेषां निरतिशयप्रीतेस्तदर्थतया च उपासनादौ प्रीते-श्च सम्भवान्न भगवति निरतिशयप्रीतिसम्भव इति न तेषां भगवद्वरणीयत्वं, तद-भिलषितमोक्षस्य च तदनुष्ठितसाधनाधीनस्वातिशयलक्षणस्वार्थत्वसम्भवान्न परार्थ-मोक्षत्वरूपनिष्कृष्टमोक्षत्वमिति नोक्ताधिकारिफलवैलक्षण्यविरोधः ।

सिद्धोपायनिष्ठानां तु--"अतस्साक्षात्काररूपा स्मृतिस्स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य स एव परेणात्मना वरणीयो भवति" इति लघुसिद्धान्तश्री-भाष्ये अनुगृहीतरीत्या भगवति निरतिशयप्रीतिनिबन्धनतया स्वानुष्ठितभक्त्यादौ स्वयंप्रयोजनत्वबुद्धेस्सत्त्वेन तेषां भगवद्वरणीयत्वं निराबाधमेव । तत्सम्बन्धिमोक्षेऽपि "विनतविविधभूतव्रातरक्षैकदीक्षे" इत्यानुगृहीतरीत्या पारार्थ्यसम्भवादुक्ताधिकारिफ-लवैलक्षण्यं सूपपादमेव । एतदभिप्रायेणैव श्रुतप्रकाशिकायां "स्वयमुपास्थितस्य स्वी-कार एव" इत्यनुगृहीतम् ।

न चैश्वर्यार्थिविषयतयापि तद्ग्रन्थमङ्गमनं सम्भवतीति वाच्यम्; तथा सति "प्रियतम एव वरणीयो भवति" इत्यत्र तमप्प्रत्ययस्य वैयर्थ्यप्रसङ्गात् । तरतमप्र-त्ययोस्तारतम्यप्रयोजकतायास्सम्प्रतिपन्नतया 'ऐश्वर्यार्थिनः-प्रियाः, साधनान्तरनि-ष्ठाः-प्रियतराः, सिद्धोपायनिष्ठाः-प्रियतमाः' इति स्वरसतया प्रतीतेस्तत्सूक्तेः कैवल्यै-श्वर्यार्थिपरतया योजनस्याक्षरस्वारस्यविरुद्धत्वात् ।

न च 'कैवल्यार्थिनः-प्रियतराः, भगवदनुभवकामास्तु-प्रियतमाः' इति नाधि-

कारिवैलक्षण्यं तद्ग्रन्थेन प्रतिपाद्यते; अत एव "उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम्" इत्यैश्वर्यकैवल्यार्थिनां केवलौदार्यविषयत्वं, भगवदुपासकत्वरूपज्ञानिनां तु आत्मवद्भोग्यत्वं गीतायां भगवता प्रतिपादितमिति वाच्यम्; स्वातिशयरूपमोक्षापेक्षाधीनसाधनानुष्ठानशालिनामेव साधनान्तरानिष्ठत्वेन कैवल्यार्थिनामुपासकानां च तम्प्रत्ययेनैव व्यावृत्तिसम्भवात्। ज्ञानिनस्तु "तेषां सततयुक्तानां" "आस्थितस्स हि युक्तात्मा", "वासुदेवस्सर्वम्" इत्याद्युक्तरीत्या भगवत्येव निरतिशयप्रीतिमत्तया वरणार्हत्वेन नोदारकोटिनिविष्टता।

सिद्धोपायनिष्ठानां मूलमन्त्रजनितस्वरूपयाथात्म्यज्ञानवत्तया कदापि स्वप्रवृत्त्युद्देश्यभोगाश्रयत्वस्य, स्वभोगोद्देश्यकप्रवृत्त्यर्हत्वस्य चासम्भाविततया भावनात्रयान्वयस्य, वक्तुमशक्यत्वात्। साधनान्तरनिष्ठानान्तु कर्मण्यैश्वर्यबोधस्यावश्यम्भावेन केवलपारार्थ्यस्य फलसाधनयोरसम्भवादुक्ताधिकारिवैलक्षण्यं दुर्वारमेव।

न चोपायदशायां फलोपाययोस्स्वार्थत्वस्य कर्माधीनरुचिमूलकस्य सम्भवेऽपि, मुक्तिदशायां निश्शेषकर्मक्षयात्तन्मूलकरुच्यादीनामभावेन फले स्वार्थत्वासम्भवान्न फलवैलक्षण्यमिति वाच्यम्; मुमुक्षोर्देवयानारम्भ एव सर्वकर्मक्षयेऽपि, यथा विद्यामाहात्म्यादाविरजं सूक्ष्मशरीरमनुवर्तते; तथा तत्तदनुष्ठितसाधनजनितभगवत्सङ्कल्पात् 'यथाभिलषितं फलं भूयात्' इत्यादिकात्तथाविधमोक्षसिद्धेर्निष्प्रत्यूहत्वात्।

न च साध्योपायभूतभक्त्यादिनिष्ठानामेवार्चिरादिगत्यपुनरावृत्तिरिति वाच्यम्; "तद्य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यादिश्रुतौ पंचाग्निविद्ब्रह्मवित्साधारण्येनार्चिरादिगतिश्श्रुता; ब्रह्मविद्या च फलसाधनत्वेन सिद्धोपायफलत्वेन चाधिकारिभेदेनानुष्ठीयमाणा गत्यङ्गिका भवति; ब्रह्मविद्यायास्सिद्धोपायफलत्वं च "निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः" इत्याद्यनुगृहीतरीत्या निर्हेतुकभगवत्कटाक्षविशेषाद्भवति; सा च मुक्तिं प्रति व्याजभूता च भवतीति न काप्यनुपपत्तिः।

ननु "अविद्या निवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्"

इत्यादिश्रीभाष्यसूक्त्या वाक्यार्थज्ञानस्य मोक्षहेतुत्वं निराकृत्य "आत्मावारे द्रष्टव्यः" इत्यादिनोपासनात्मकज्ञानस्य मोक्षहेतुत्वं प्रसाध्य "एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि" इत्यादिना तस्यैव प्रीतिरूपापन्नत्वविधानात्साधनान्तरनिष्ठानामपि प्रीतिरूपापन्नज्ञानस्य सत्त्वात्, भगवद्वरणीयत्वमस्तीति सर्वैरप्यभ्युपगमनीयमेवेति चेत्;-मैवम्; "वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवास्मृतौ। सा च दृष्टित्वमभ्येति दृष्टिःप्रीतित्वमृच्छति" इत्यनुगृहीतरीत्या मोक्षहेतुज्ञाने क्रमेण ध्यानत्वस्मृतित्वप्रत्यक्षसमानाकारत्वप्रीतिरूपत्वात्मकाकारविशेषाणां सामान्यविशेषन्यायेन शास्त्रसिद्धानां प्रदर्शनार्थं "एवं प्रत्यक्षतापन्नाम्" इत्यादिग्रन्थारम्भः; तत्र च यस्य स्वयत्नेनोपासनारम्भः, तस्योपासने प्रत्यक्षतापत्तौ सत्यां, तद्विषयानुभवे निरतिशयप्रीतिः, अनुभूयमान ब्रह्मणि च तदर्थतया सातिशयप्रीतिः; स एव स्वयमुपस्थितः; तद्विषये महोदारस्य भगवतस्स्वीकार एव। यस्य तु "जायमानं हि पुरुषम्" "यस्य देवे परा भक्तिः" इत्याद्युक्तरीत्या भगवत्कटाक्षाभिवर्धितसत्त्वगुणेन भगवत्येव निरतिशयप्रीतिः, स एव "नायमात्मा" इत्यादिश्रुत्युक्तवरणविषयो भवति; तस्य फलसाधनतांशे ममतारहितत्वेन भावनात्रयान्वयासम्भवात्। अनुगृहीतश्चायमर्थः जिज्ञासाधिकरणभाष्ये "स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य स एव परेणात्मना वरणीयो भवति" इत्यादिना। तथा च प्रीतिरूपापन्नोपासनस्योभयसाधारणत्वेऽपि, साधनान्तरानिष्ठानां भगवति निरतिशयप्रीतेरभावेन न वरणार्हताप्रसक्तिः। उक्तं च भगवता गीतायाम्-"तेषां ज्ञानी नित्युक्त एकभक्तिर्विशिष्यते। प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति। अस्य च भाष्यम्-"तेषां ज्ञानी विशिष्यते। कुतः?-नित्ययुक्तः, एकभक्तिरिति च। तस्य हि मदेकप्राप्यस्य मया योगो नित्यः, इतरयोस्तु यावत्स्वाभिलषितप्राप्ति मया योगः। तथा ज्ञानिनो मय्येकस्मिन्नेव भक्तिः, इतरयोस्तु स्वाभिलषिते, तत्साधनत्वेन मयि च। अतस्स एव विशिष्यते" इति। अतोऽधिकारबोधयुक्तानां साधनान्तरनिष्ठानां भगवति निरतिशयप्रीतेरभावेन न वरणीयत्वसम्भव इति।

(४८.) अभिप्रायज्ञस्येश्वरस्य समीपे प्रार्थनाधिकेति वदतां प्रश्नमनुवदति-अनेनेति ।

मू॥ इवनर्थिक्क वेणुमो? सर्वज्ञन् इवन्निनैवरियानो? एन्निल्

छा॥ अनेनार्थनीयं किम्? सर्वज्ञः एतदभिप्रायं न, जानाति किम्? इति चेत् ॥ ४८ ॥

(४९). तस्योत्तरमाह—एतद्वाक्ये इति ।

---

एवंच-साधनान्तरनिष्ठानां फलसाधनयोर्ममताबुद्धेस्सत्त्वेन, सिद्धोपायनिष्ठानां तु तदसत्त्वेनोभयोःफलवैलक्ष्ण्यं प्रामाणिकमेवेति सम्प्रदायः ।

इत्थं च-जायमानकालभगवत्कटाक्षविशेषेण स्वरूपानुरूपमोक्षरुचिशालिनां सदाचार्यप्रसादलब्धमूलमन्त्रजनितस्वरूपयाथात्म्यज्ञानवतां, मन्त्रघटकनमश्शब्देन भोगमोक्षगोचरकृत्यनर्हत्वस्वभोगोद्देश्यकप्रवृत्त्यनर्हत्वस्वप्रवृत्त्युद्देश्यभोगानाश्रयत्वरूपसर्वप्रकारपारतन्त्र्यस्य प्रतिपादनात्, फलोपासनयोर्ममतागन्धरहितत्वेन केवलपरार्थानुभवकैङ्कर्यमेव परमपुरुषार्थ इति पूर्वाचार्यपरिशीलितःपन्था इति सर्वं रमणीयम् ।

अतोऽत्र कैवल्यशब्दः-पूर्वोक्ताधिकारित्रयपर इत्यवश्यमङ्गीकरणीयमिति ।

ननु मुक्त्यनन्तरं स्वार्थकैंकर्यपरार्थकैंकर्यादिफलभेदकथनं न युज्यते; तदा माध्वमतप्रसङ्ग इति मैवं शङ्किष्ठाः । तैर्मुक्तौ आनन्दतारतम्यादिकमङ्गीकृतम्, तद्वन्नास्माभिरुच्यते । न फलतारतम्यमपि कल्प्यते । श्रीभाष्यादिषु तत्क्रतुन्यायसञ्चारपूर्वकस्थापितत्वात् । अत एवानुगृहीतं चरमश्लोकटिप्पण्यां श्रीशुद्धसत्त्वरामानुजदेशिकैः-"स्वार्थपरार्थानुभवयोस्स्वरूपाननुरूपत्वानुरूपत्वसत्त्वेऽपि अत्यर्थप्रियपरमात्मस्वरूपादिविषयत्वेनानन्दांशे तारतम्याभावादिति भावः" इति ॥ ४७ ॥

(तस्योत्तरमाह) इति-"सर्वज्ञोऽपि हि" इति वचनसिद्धं परिहारमाहेत्य-

मू॥ इवन्पाशुरं केट्टवारे तिरुवुल्लमुहक्कुम् ॥ ४९ ॥

छा॥ एतद्वाक्ये श्रुते श्रीमनःप्रसन्नं भवति ॥ ४९ ॥

व्या॥ रोगेणौदने आशां त्यक्त्वा स्थितायाःप्रजाया रोगे नष्टे क्षुधाभिवृद्धौ 'ओदनम्' इत्यपेक्षारूपवाक्ये श्रुते माता यथा सन्तुष्टा भवति, तथानादिकालं प्राप्यान्तरप्रावण्यरूपरोगाक्रान्तः एतत्प्राप्ये आशां त्यक्त्वा स्थितोऽयं तस्मिन् रुच्युत्पत्तौ स्वसमीपे आगत्य एतदपेक्षागर्भवाक्यं वक्ति चेत्, तच्छ्रुत्वा शेषिणोऽस्य मनःसन्तुष्टं भवतीति तदर्थमर्थ्यत इति फलितार्थः ॥ ४९ ॥

(५०). इतःपरमस्य वाक्यस्य प्रतिपदमर्थं वक्तुं विचार्य प्रथमपदमुपादत्ते-श्रीमत इति ।

मू॥ श्रीमते ॥ ५० ॥

छा॥ श्रीमते ॥ ५० ॥

(५१.) तस्यार्थमाह-महालक्ष्म्येति ।

र्थः । यद्यप्युत्तरखण्डस्य फलमात्रपरत्वात्, पूर्वखण्ड एव इमावाशंकापरिहारौ कर्तव्यौ; तथापि तत्र प्रार्थनाया अप्रकटत्वात्, इह च वाक्यान्वयाय 'स्याम्' इत्यध्याहारस्यावश्यकत्वेन तत्प्राकट्यात्, अत्रैव तौ कृतौ इति ज्ञेयम् ।

(अस्य मनः) इति-"सर्वज्ञेऽपि हि विश्वेशे याच्ञा विज्ञापनादिभिः । तत्तदिष्टप्रदित्सात्मा प्रीतिरेव विवर्द्धते" इत्युक्तरीत्या प्रीतिर्भवतीत्यर्थः ॥ ४९ ॥

(महालक्ष्म्याः) इति-ननु 'श्रीमते' इत्यस्य 'नारायणाये' ति पदविशेषणत्वात्, "पेरियपिराट्टियारोडे कूडियिरुक्किर" इति व्याख्येयं, लोकार्यैः कथ "कूडि-

मू॥ पेरियपिशाट्टियारोडे कूडियिरुन्दुल्लवनुक्कु ॥ ५१ ॥

छा॥ महालक्ष्म्या सह स्थिताय ॥ ५१ ॥

व्या॥ अत्र-श्रीशब्दस्य पूर्ववाक्योक्तव्युत्पत्तिद्वयम्, तदर्थः, मतुबर्थनित्ययोगश्चानुसन्धेयः ॥ ५१ ॥

(५२). उभयत्र नित्ययोगस्य साम्येऽपि तत्तद्दशानुगुणमस्यास्स्थितिमाह-अस्योपायत्वावस्थायामिति।

मू॥ अवनुपायमामिडत्तिल् तान्पुरुषकारमायिरुक्कुम्, अवन्प्राप्यमामिडत्तिल् तान्प्राप्यैयुमाय्, कैङ्कर्यवर्धकैयुमायिरुक्कुम् ॥

छा॥ अस्योपायत्वावस्थायां स्वयंपुरुषकारभूता, अस्य प्राप्यत्वावस्थायां स्वयंप्राप्यभूता, कैङ्कर्यवर्धिका च तिष्ठति ॥ ५२ ॥

व्या॥ स यदा चेतनानामनिष्टनिवृत्तेरिष्टप्राप्तेश्चोपायो भवति, तदा सहायान्तरसंसर्गासहत्वात्स्वयमुपायभावेऽनन्विता सापराधचेतनानामपराधान्दृष्ट्वास्य कोपोत्पत्तिसमये तं सहयित्वाङ्गीका-

---

यिरुन्दुल्लवनुक्कु" इति व्याख्यात इति चेत्; अस्य विशेषणस्य प्राधान्यसूचनार्थम्। तथा च नारायणस्य यथा प्रधानतयोपेयत्वम्, तथा लक्ष्म्या अपि प्रधानोपेयत्वसूचनार्थम्। "कूडियिरुन्दुल्लवनुक्कु" इति शब्दस्वारस्यात्, केवलनारायणस्योपेयता नास्तीति सूच्यते। अत्र वक्तव्यार्थास्सर्वेऽपि प्रागेव प्रपंचिताः।

(व्युत्पत्तिद्वयम्)-कर्मणि व्युत्पत्तिः, कर्तरि व्युत्पत्तिश्च। (तदर्थः)-व्युत्पत्तिद्वयार्थः। (नित्ययोगश्च)-सर्वप्रकारनित्ययोगः ॥ ५१ ॥

(सः)-परमात्मा। (सापराधे)ति-"लक्ष्मीं पुरुषकारेण वृतवन्तो वरा-

राभिमुखं कुर्वन्ती पुरुषकारभूता तिष्ठति, स यदा चेतनानां कैङ्कर्यप्रतिसम्बान्धितया प्राप्यं भवति, तदा कैङ्कर्यप्रतिसम्बान्धितया स्थिता सती स्वयंप्राप्यभूता, एतैःक्रियमाणं कैंकर्यं तन्मनसि एकं दशगुणं कृत्वा प्रसादयतीति कैंकर्यवर्धका च तिष्ठतीत्यर्थः ।

अमुमर्थं परन्दपडिप्रबन्धे—"पूर्ववाक्ये, श्रीमच्छब्दः-चेतनानामपराधमीश्वरस्य स्वातन्त्र्यञ्च दृष्ट्वा 'एते अस्य क्रोधस्य विषयीभूता विनाशमप्राप्यामुमाश्रित्योज्जीवन्तु' इति सापराधचेतनानीश्वरेण घटयितुं सदात्यक्त्वा स्थितायास्स्थितिं वदति, अत्रायं श्रीमच्छब्दः-कैंकर्यप्रतिसम्बन्धित्वार्थम्, एतैः क्रियमाणं कैंकर्यमीश्वरमनस्येकं दशगुणं वर्धयितुञ्चानुभवविच्छेदे स्वसत्ताहानोर्निरन्तरसंश्लेषार्थम्, तेन सह क्षणमपि विश्लेषं विना सर्वदा संश्लिष्टत्वेन स्थितिं च वदति" इति विस्तरेणावोचत् ॥ ५२ ॥

नन । मत्क्षमां प्राप्य" इत्यादिकमभिमेत्याह-तंसहयित्वेति । "क्षमू- सहने" इति हि- धातुः । "शिक्षणक्षमेषु अपराधसहत्वं-क्षमा" इति क्षमास्वरूपमुक्तम् । सहयित्वं च- अपराधानुगुणदण्डाभावविषयकभगवदीयसंकल्पप्रयोजकत्वम् । क्षमोद्भावनं-कृपावात्सल्याद्युद्भावनस्याप्युपलक्षणम् । "कारुण्यरूपया" इति वचनात् । "पुरुषकारत्वं-घटकत्वम्" इत्यन्यत्र व्याख्यातत्वेऽपि, अत्रोपायसमभिव्याहृतत्वान्निरुक्तविधमेव पुरुषकारत्वं प्रकृतोचितमिति हृदयमिति ध्येयम्। (एकं दशगुणं कृत्वे) ति-'श्रावयतीति-श्रीः' 'शृणाति-विस्तारयतीति श्रीः' इति व्युत्पत्तिद्वयानुसारेणोक्तम् ।

(अत्रायम्)-उत्तरखण्डस्थश्रीमच्छब्दः । (अनुभवविच्छेदे) इति-

(५३.) श्रीमन्त्रे उत्तरपदस्यैतदुत्तरवाक्यस्य विवरणत्वप्रकारमाह-अस्मिन्नित्यादिना ।

मू॥ इदिले तिरुमन्त्रत्तिल् शोन्नप्राप्यत्तै विशदमाह अनुसन्धिक्किरदु ॥ ५३ ॥

छा॥ अस्मिन् श्रीमन्त्रोक्तं प्राप्यं विशदतयानुसन्धीयते॥५३

व्या॥ कैङ्कर्यप्रतिसम्बन्ध्येकं मिथुनमित्यमुमर्थं शाब्दत्वेन प्रतिपादयत्यस्मिन्वाक्ये, श्रीमन्त्रे 'नारायणाय' इति कैंकर्यप्रतिसम्बन्ध्येकं मिथुनमित्यस्यार्थत्वात्, अविशदमुक्तं प्राप्यं वैशद्येनानुसन्धीयत इत्यर्थः ।

तत्र 'नारायणस्यैव कैङ्कर्यकरणयोग्यो भूयासम्' इत्येतावदुक्तम्, कैङ्कर्यस्वीकर्त्रा श्रीमता भवितव्यम्, कैङ्कर्यकर्त्रा निर्ममेन भवितव्यमित्यनयोस्तत्रानुक्तत्वेन तयोरुभयोरत्रोक्तत्वात्, अस्य पदस्येदं वाक्यं विवरणम् ॥ ५३ ॥

(५४). अस्मै मिथुनायैव कैङ्कर्यं कर्तव्यमिति निर्बन्धः कथमित्यत आह-बालस्वामीत्यादिना ।

मू॥ इलैयपेरुमालैप्पोले इरुवरुमान शेर्तियिले अडिमै शेय्-

---

भगवदनुभवविच्छेदे इत्यर्थः । (स्वसत्ताहानेः) इति-"न च सीता त्वया हीना न चाहमपि राघव।मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ" इत्यनुसन्धेयम्॥५२॥

(अस्य पदस्य)—श्रीमन्त्रस्थतृतीयपदस्य । (इदं वाक्यम्) द्वयस्थोत्तरवाक्यम् । विवरणप्रकारस्तु विस्तरेण प्रागेव प्रपंचितः, उपरिष्ठात्प्रपंचयिष्यामः॥

है मुरै ॥ ५४ ॥

छा॥ बालस्वामिवत् उभयरूपमिथुने कैङ्कर्यकरणं प्राप्तम्॥५४

व्या॥ "भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतस्स्वपतश्च ते" इति स्वामी लक्ष्मीश्चेति मिथुने कैङ्कर्यकारी बालस्वामिवत्, उभयरूपमिथूने अस्यात्मनःकैङ्कर्यकरणं स्वरूपप्राप्तमित्यर्थः ।

मिथुनशेषत्वं स्वरूपं चेत्, मिथुनकैङ्कर्यं खलु स्वरूपप्राप्तम्॥

(५५). पुनश्चैतन्मिथुने कैङ्कर्यकरणसमये विद्यमानमाधिक्यमाह-कैङ्कर्यञ्चेत्यादिना ।

मू॥ अडिमैदान् सिद्धिप्पदुंरसिप्पदुमच्चेर्तियिले ॥ ५५ ॥

छा॥ कैंकर्यम्-सिध्यति रस्यति चैतन्मिथुने ॥ ५५ ॥

व्या॥ स्वतन्त्र ईश्वर उपेक्षामकृत्वा यथा कैंकर्यम् स्वीकरोति, तथा कुर्वन्तीयमिति "सीतामुवाच" "सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत्" इत्येतत्पुरुषकारेण स्वस्य स्वरूपानुरूपं कैंकर्यम् खलु अपेक्ष्य प्राप्तवतो बालस्वामिन इव, अस्य प्रार्थनीयकैंकर्यस्य सिद्धिः, मातापित्रुभयमिथुने शुश्रूषाकर्तुः पुत्रस्येव क्रियमा-

---

(भवांस्तु) इति-श्रीरामायणे अयोध्याकाण्डे (३१-२५) लक्ष्मणवचनम् ।

मिथुनकैंकर्यस्यैव स्वरूपप्राप्तत्वे हेतुमाह-मिथनशेषत्वमिति।(स्वरूपं चेत्) स्वरूपमेव । "उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्" इति वत् ॥ ५४ ॥

(कैंकर्यं सिध्यति) इति, अत्रापि पूर्वसूत्रोक्तलक्ष्मणस्य दृष्टान्तत्वेनाह-

णकैंकर्यस्य रसता च लक्ष्मीनारायणरूपमिथुने इत्यर्थः ॥५५॥

(५६.) अथ द्वितीयपदमुपादत्ते-नारायणायेति ॥

मू॥ नारायणाय ॥ ५६ ॥

छा॥ नारायणाय ॥ ५६ ॥

(५७.) तस्यार्थमाह-सर्वशेषिण इति ॥

मू॥ सर्वशेषियायुळ्ळवनुक्कु ॥ ५७ ॥

छा॥ सर्वशेषिणे ॥ ५७ ॥

व्या॥ नारायणत्वस्य-उभयविभूतिनाथत्वात् 'सर्वशेषिणे' इत्युक्तम् । कैंकर्यप्रतिसम्बन्धी भवति शेषी खलु ॥ ५७ ॥

(५८). कैंकर्यस्यानुभवजनितप्रीतिकारितत्वात्, तादृशप्रीतेरनुभाव्यविषयाधीनत्वाच्चानुभाव्यविषयस्य वक्तव्यत्वादाह-अत्रेति

मू॥ इदुले तिरुमेनियैयुं, गुणङ्गळैयुं शोल्लुम् ॥ ५८ ॥

छा॥ अत्र श्रीविग्रहः, गुणाश्चोच्यन्ते ॥ ५८ ॥

---

सीतामुवाचेति । "स भ्रातुश्चरणौ गाढं निपीडय रघुनन्दनः । सीतामुवाचातियशाः राघवश्च महाव्रतम्" इति अयोध्याकाण्डे (३१-२) लक्ष्मणवचनम् । "एवमुक्तस्तु रामेण लक्ष्मणस्संयतांजलिः । सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत्" इत्यारण्यकाण्डे (१५-६) ऋषिवचनम् । "मातृदेवो भव पितृदेवो भव" इत्यादिकमभिप्रेत्याह-मातापितेति । दार्ष्टान्तिकेऽपि "त्वं माता सर्वलोकानां देवदेवो हरिःपिता" इत्युक्तप्रकारेण लक्ष्मीनारायणयोर्मातृत्वपितृत्वे अनुसन्धेये ॥ ५५ ॥

(कैंकर्यप्रतिसम्बन्धी)—कैंकर्यप्रतिग्रहीता ॥ ५७ ॥

व्या॥ कैंकर्यप्रतिसम्बन्धिनं वदत्यस्मिन्पदे कैंकर्यपूर्वभाविनोऽनुभवस्य विषयीभूतो दिव्यमङ्गलविग्रहः, कल्याणगुणाश्चोच्यन्त इत्यर्थः।

"सदा पश्यन्ति सूरयः" "सोऽश्नुते सर्वान्कामान्" इत्यादिषूक्तप्रकारेण दिव्यमङ्गलविग्रहः, कल्याणगुणाश्च "रसं ह्येवायं लब्ध्वानन्दी भवति" इत्युक्तस्वरूपवत्, कैंकर्यवर्धका भोग्यभूताश्च हि भवन्ति।

'गुणाः' इति सामान्येनोक्तत्वात्, ज्ञानशक्त्यादिगुणानां वात्सल्यादिगुणानां सौन्दर्यादिगुणानांचाविशेषेण सर्वेषामनुभाव्यत्वात्पूर्ववाक्ये नारायणपदे उपायवरणस्योपयुक्ततयानुसन्धीयमाना गुणविशेषा अत्र प्राप्यतयानुसन्धेयाः। आश्रयभूतस्वरूपस्य विद्यमानमाकारद्वयमिवाश्रयीभूतानां गुणविशेषाणामाकारद्वयम-

(कल्याणगुणाः)-समस्तकल्याणगुणाः।

(रसमि) ति-अयं-मुक्तपुरुषः, रसं-रसस्वरूपं परमपुरुषं लब्ध्वैवानन्दी भवतीत्यर्थः। (स्वरूपवत्)-दिव्यात्मस्वरूपवत्।

(आश्रयभूतस्वरूपस्य)इति-समस्तकल्याणगुणानामाश्रयभूतदिव्यात्मस्वरूपस्येत्यर्थः। (आकारद्वयम्) इति-प्राप्यत्वप्रापकत्वरूपाकारद्वयमित्यर्थः। "उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ" इत्युक्तेः। (आश्रयीभूतानां गुणविशेषाणामाकारद्वयमस्ति) इति-उपायतावच्छेदकमुपेयतावच्छेदकं चाका-

स्ति । एतत्सर्वम् विस्तृतरहस्ये उक्तवान् ॥ ५८ ॥

(५९.) अथास्य पदस्य तात्पर्यमेतस्मिन्नित्याह-शेषित्वे तात्पर्यमिति ।

मू॥ शेषित्वात्तिले नोक्कु ॥ ५९ ॥

छा॥ शेषित्वे तात्पर्यम् ॥ ५९ ॥

व्या॥ अनुभाव्यत्वस्याविशिष्टत्वात्सकलगुणानां प्रतिपादकत्वेऽपि चतुर्थ्यंशोक्तवृत्तिविशेषाणामत्यन्तान्तरङ्गं शेषित्वमतोऽस्य पदस्य तात्पर्यमित्यर्थः ॥ ५९ ॥

(६०.) अस्य शेषित्वकथनस्य प्रयोजनमाह—प्राप्तविषय इति।

---

रद्वयमित्यर्थः । एतेन-'शरणागतिकरणसमये अष्टगुणविशिष्टानुसन्धानस्योक्तत्वात्, यथाक्रतुन्यायेन फलदशायामपि तद्विशिष्टमात्रब्रह्मानुभवादिकमेव' इति प्रत्युक्तम् । अत एवानुगृहीतम् "यथासि यावानासि योऽसि यद्गुणः करीश यादृग्विभवो यदिङ्गितः । तथा विधं त्वाहमभक्तदुर्ग्रहं प्रपत्तिवाचैव निरीक्षितुं वृणे" इति । तत्र गुणादीनां सौकार्यापादकत्वकार्यापादकत्वमात्रप्रतिपादनाच्च।(एतत्सर्वमि) ति-"सन्द्रा पश्यन्ती" त्यारभ्य "गुणविशेषाणामाकारद्वयमस्ति" इत्यन्तश्रीसूक्तिःपरन्दपडिग्रन्थे ॥ ५८ ॥

(अस्य पदस्य) इति—दिव्यमङ्गलविग्रहदिव्यात्मस्वरूपसमस्तकल्याणगुणगणप्रतिपादकनारायणपदस्येत्यर्थः ।

(अविशिष्टत्वात्)-तुल्यत्वात् । (वृत्तिविशेषाणाम्) इति-तदनुभववैभवोद्भावितहर्षप्रकर्षहठात्कारकारितकीर्तनस्तुतिनमस्कृतिगाननृत्तपरिचरणादिरूपवृत्तिविशेषाणामित्यर्थः ॥ ५९ ॥

(छाया वे) ति-पांचरात्रे मूलसंहितायाम् "यथा तरुणवत्सा वत्सं वेत्सात्र-

मू॥ प्राप्तविषयत्तिल् कैङ्कर्यमिरे रसिप्पदु ॥ ६० ॥

छा॥ प्राप्तविषये कैङ्कर्यं खलु रस्यते ॥ ६० ॥

व्या॥ "सर्वं परवशं दुःखम्" "सेवा श्ववृत्तिः" इत्युक्तप्रकारेण निषिद्धमप्राप्तविषयकैङ्कर्यमिव न भवति, "छाया वा सत्त्वमनुगच्छेत्" "सा किमर्थं न सेव्यते" इत्युक्तप्रकारेण विहितप्राप्तविषयकैङ्कर्यमस्य रसयुक्तं भवति इत्यर्थः ॥ ६० ॥

(६१). इदानीमस्मिन्पदे विभक्त्यंशस्यार्थमाह—इयं चतुर्थीत्यादिना ।

मू॥ इन्द चतुर्थी कैङ्कर्यत्तै प्रकाशिप्पिक्किरदु ॥ ६१ ॥

छा॥ इयं चतुर्थी कैङ्कर्यं प्रकाशयति ॥ ६१ ॥

व्या॥ शेषत्वज्ञानकार्यभूतोपायपरिग्रहानन्तरत्वात्तादर्थ्यप्र-

---

मातरम्, छाया वा सत्त्वमनुगच्छेत्" इति । अत्र वाशब्द इवार्थकः ।(से) ति-विहगेन्द्रसंहितावचनम् । "वासुदेवतरुच्छाया नातिशीता न घर्मदा । नरकाङ्गारशमनी सा किमर्थं न सेव्यते" इति ॥ ६० ॥

(तादर्थ्यप्रतिपादकत्वासम्भवादि) ति-स्वरूपयोग्यत्वरूपशेषत्वप्रतिपादकत्वासम्भवात्, फलोपधानरूपशेषत्वप्रतिपादकत्वमस्या इति भावः । "तस्मात्तादर्थ्यफलरूपकैंकर्यमेवार्थः" इति विस्तृतरहस्ये अनुगृहीतम् । (शेषत्वज्ञानकार्ये)ति-उपायपरिग्रहस्य फलकामनयागतत्वात्, शेषत्वज्ञानकार्यत्वोक्तिः-शेषत्वस्य परातिशयाधायकत्वात्, परातिशयस्य च-वृत्तिविशेषाभावे असिद्धेः, स्ववृत्तिविशेषैःपरस्यातिशयकरत्वस्यैव शेषत्वात्, शेषत्वज्ञाने परातिशयाधायकत्वेन परमपुरुषार्थरूपवृत्तिविशेषज्ञानस्यान्तर्गतत्वात् ।

तिपादकत्वासम्भवादियं चतुर्थी-परिगृहीतोपायफलभूतं कैङ्कर्यम् प्रकाशयतीत्यर्थः ।

कैङ्कर्यप्रकाशनं नाम-कैङ्कर्यप्रार्थनाप्रतिपादनम् । कैङ्कर्यम् नाम-भगवन्मुखविकासहेतुभूतो वृत्तिविशेषः ।

इदं च कैङ्कर्यम् "एतत्सामगायन्नास्ते" "नम इत्येव वादिनः" "येन येन धाता गच्छति तेन तेन सह गछति" इत्यादिपूक्तप्रकारेण कायिकवाचिकरूपं वर्तते ॥ ६१ ॥

(६२). एतत्कैङ्कर्यं प्रार्थनीयं चेत्कदाचित्कं भवेत् इति चेत्तत्राह-कैङ्कर्यञ्च नित्यमिति ।

मू॥ कैङ्कर्यन्दान् नित्यम् ॥ ६२ ॥

छा॥ कैङ्कर्यं च नित्यम् ॥ ६२ ॥

---

"आत्मेश्वरायार्थये कर्तुं दास्यमशेषम्" इत्युत्तरवाक्यघटितचतुर्थ्याः कैङ्कर्यप्रार्थनाप्रकाशकत्वं शाब्दमिति भट्टपादैरुक्तम्, अत्र तु विपरीतं किमित्यत्राह-कैंकर्यप्रार्थनाप्रतिपादनमिति ।

(नम इत्येवे) ति-भारते शान्तिपर्ववचनम् । "मुक्तानां लक्षणं ह्येतच्छ्वेतद्वीपनिवासिनाम् । बद्धांजलिपुटा हृष्टा नम इत्येव वादिनः" । अत्र । (कायिकवाचिकरूपम्)-मानसिकस्याप्युपलक्षणम् । तथा द्रविडसामद्वितीयशतकनवमदशकगाथायमुक्तम् ॥ ६१ ॥

(प्रार्थनीयं चेदि) ति-असिद्धेः प्रार्थनीयत्वेन लोके दर्शनात्, कैंकर्यस्य प्रार्थनीयत्वे अनित्यत्वापत्तेरिति भावः ।

व्या।। शेषत्वस्यैवात्मनः स्वरूपत्वात् "अकिंचित्क्करस्य शेषत्वानुपपत्तिः" इत्युक्तप्रकारेण किंचित्काराभावे तस्यानुपपन्नत्वाच्च कैङ्कर्यमात्मनो नित्यमित्यर्थः ।

तस्मादेव हि "नित्यकिङ्करः प्रहर्षयिष्यामि" "नित्यकिङ्करो भवानि" इत्याचार्यैरुक्तम् ॥ ६२ ॥

(६३). नित्यं चेत्प्रार्थनीयं किमित्यत आह-नित्यं प्रार्थित्वैवेति।

मू।। नित्यं प्रार्थित्ते पेरवेणुम् ॥ ६३ ॥

छा।। नित्यं प्रार्थित्वैव प्राप्तुं योग्यम् ॥ ६३ ॥

व्या।। विषयस्योत्तुङ्गत्वात्, आश्रयभूतचेतनस्यात्यन्तपरतन्त्रत्वात्प्रार्थनाविशेषाभावे कैङ्कर्यासिद्धेश्च नित्यं प्रार्थित्वैव प्राप्यमित्यर्थः ॥ ६३ ॥

(६४). अस्य नित्यप्रार्थनीयत्वस्य निदानमाह—शेषिण इत्यादिना ।

---

अनित्यत्वपरिहारपूर्वकं नित्यत्वं साधयति-शेषत्वस्येति । (स्वरूपत्वात्) स्वरूपनिरूपकत्वात् । (तस्य)-शेषत्वस्य ।

कैङ्कर्यस्य नित्यत्वे प्रमाणमाह-नित्यकिङ्कर इति । स्तोत्ररत्ने "भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिश्शेषमनोरथान्तरः । कदाहमैकान्तिकनित्यकिंकरःप्रहर्षयिष्यामि सनाथजीवितः" इति ॥ ६२ ॥

(विषयस्योत्तुङ्गत्वात्)-कैङ्कर्यविषयभूतस्येश्वरस्य सर्वस्मात्परत्वात्॥६३॥

(स्वरूपलाभः)-स्वासाधारणधर्मभूतशेषत्वरूपस्वरूपलाभः । (तस्य)-

मू॥ शेषिक्कतिशयत्तै विलैक्कै शेषभूतनुक्कु स्वरूपलाभमुम्, प्राप्यमुम् ॥६४॥

छा॥ शेषिणोऽतिशयस्य वर्द्धनं-शेषभूतस्य स्वरूपलाभः,प्राप्यं च ॥ ६४ ॥

व्या॥"नाकिंचित्कुर्वतश्शेषत्वम्" इत्युक्तरीत्या शेष्यातिशयकरत्वशून्यस्य वस्तुनःशेषत्वाभावात्, शेषिभूतेश्वरस्य स्ववृत्तिविशेषैः प्रीतिरूपातिशयवर्द्धनं-शेषभूतस्य स्वस्य स्वरूपलाभस्सन्तस्य मुखोल्लासानुभवस्योपयुक्तत्वात्प्राप्यं चेत्यर्थः । तस्मान्नित्यप्रार्थनीयमिति तात्पर्यम् ॥ ६४ ॥

(६४.) अनन्तरं चरमपदमुपादत्ते-नम इति ।

मू॥ नमः ॥ ६४ ॥ छा ॥ नमः ॥ ६४ ॥

(६५.) तस्यार्थमाह-कैंकर्येति ॥ ६५ ॥

मू॥ कैंकर्यत्तिल्कलै यरुक्किरदु ॥ ६५ ॥

छा॥ कैंकर्यविरोधि निवर्त्यते ॥ ६५ ॥

व्या॥ नमश्शब्दस्य सामान्येनाहङ्कारममकारनिवर्तकत्वेन श्रीमन्त्रे मध्यमपदनमश्शब्दवत्स्वरूपोपायपुरुषार्थविरोधिनां त्रयाणां निवर्तकत्वे सत्यपि कैंकर्यप्रार्थनानन्तरोक्तत्वात्कैंकर्यविरोधिनं निवर्तयतीत्यर्थः ॥ ६५ ॥

---

भगवतः ॥ ६४ ॥

नमश्शब्दस्य प्रकरणानुगुण्येनार्थः वक्तव्य इत्यभिप्रायेणाह-नमश्शब्दस्येति॥

(६६.) कैंकर्यविरोधी को वेत्यत आह—विरोधि नामेति ।

मू॥ कलैयावदु-तनक्कॆन्नप्पण्णुमदु ॥ ६६ ॥

छा॥ विरोधि नाम-स्वस्येति क्रियमाणत्वम् ॥ ६६ ॥

व्या॥ स्वस्येति क्रियमाणत्वं नाम-"भोक्ताहम्मम भोगोऽयम्" इत्युक्तप्रकारेणेदंस्वरसस्य हेतुरिति प्रतिपत्त्या करणम् । 'भगवन्मुखविकासहेतुत्वादिदमस्माकमादरणीयम्' इति प्रतिपत्तिं विना भोक्तृत्वप्रतिपत्तौ मदीयत्वप्रतिपत्तौ च जातायामपुरुषार्थो भवति॥

(६७.) पुनश्चैतत्कैङ्कर्यप्राप्तिविरोधिनोऽपि अस्मिन्पदे निवर्त्यन्त इत्याह-अत्राविद्यादयोऽपीति ।

मू॥ इदिले अविद्यादिहलुं कलियुण्णुम् ॥ ६७ ॥

छा ॥ अत्राविद्यादयोऽपिनिवर्त्यन्ते ॥ ६७ ॥

व्या॥ अहङ्कारममकारनिवृत्तिम्प्रार्थयतानेन नमसा "अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः । अविद्यातरुसम्भूतिवीजमेतद्द्विधा स्थितम्" इत्युक्तप्रकारेणानात्मन्यात्मबुध्यादिमूलका

---

(अपुरुषर्थो भवति)-स्वरूपाननुरूपत्वादिति भावः । शेषत्वं नाम स्वातिशयाधायकत्वविरहे सति परातिशयाधायकत्वमेव । तादृशस्वरूपस्य स्वार्थत्वमपुरुषार्थरूपमेवेति प्रागेवोक्तम् ॥ ६६ ॥

(अनात्मनी) ति-अनात्मनि-देहे या आत्मबुद्धिरस्ति, अस्वे स्वमिति या मतिरस्ति, द्विधा स्थितमेतत् अविद्यातरुसम्भूतिवीजम् । अविद्या-विद्येतरत्कर्म । अविद्यादिस्वरूपं चरमश्लोकप्रकरणान्ते व्यक्तीभविष्यति ।

कर्मोत्पत्तिकारणत्वेन स्थिताविद्या, तत्कार्याणि कर्माणि, तत्कार्यप्रकृतिसम्बन्धश्चैते सर्वे निवर्त्यन्त इत्यर्थः ।

अत एव हि द्वयविवरणभूते गद्ये नमश्शब्दार्थानुसन्धानावसरे "मनोवाक्कायैः" इत्यादिगद्येनाकृत्यकरणाद्यखिलकर्मनिवृत्तिम्, "अनादिकालप्रवृत्ते"त्यादिगद्येनाविद्यानिवृत्तिम्, "मदीयानादी"त्यादिगद्येनप्रकृतिसम्बन्धनिवृत्तिं च भाष्यकृतःप्रार्थितवन्तः।

(६८.) तथाप्यस्य प्रधानार्थःकैंकर्ये स्वप्रयोजननिवृत्तिरिति तामुपपादयितुं, तत्र प्रथमं कैंकर्यकरणसमयेऽस्यावस्थितिमाह-तवैवेति ।

मू।। "उनक्के नामाळ् चेय्वोम्" एन्नुम्बडियेयाहवेणुम् ॥

छा।।"तवैव वयं दास्यं कुर्मः"इत्युक्तप्रकारेणैव भवितव्यम्।।६८

---

(मनोवाक्कायैः) इति--"मनोवाक्कायैरनादिकालप्रवृत्ताकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारासह्यापचाररूपनानाविधानन्तापचारान्, आरब्धकार्यान्, अनारब्धकार्यान्, कृतान् क्रियमाणान्, करिष्यमाणांश्च सर्वानशेषतः क्षमस्व। अनादिकालप्रवृत्तविपरीतज्ञानमात्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं चाशेषविषयमद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व । मदीयानादिकर्मप्रवाहप्रवृत्ताम्, भगवत्स्वरूपतिरोधनकरीम्, विपरीतज्ञानजननीम्, स्वविषयायाश्च भोग्यबुद्धेर्जननीम्, देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थिताम्, दैवीम्, गुणमयीम्, मायां 'दासभूतःशरणागतोऽस्मि तवास्मि दासः' इति वक्तारं मां तारय ॥ ६७ ॥

(तथापि)-अकृत्यकरणादिप्रकृतिसम्बन्धान्तनिवृत्तिकथनेऽपि । एवकारा-

व्या॥ कैंकर्यकरणसमये " तवैव वयं दास्यं कुर्मः " इति तवास्माकं च मध्य स्थतया विद्यमानस्थितिं त्यक्त्वा तवैव प्रीत्यर्थम् वयं कैंकर्यम् कुर्मः' इत्युक्तप्रकारेण शेषिण एव प्रीत्यर्थम् कर्तव्यमित्यर्थः " स्वस्मा एव मां स्वीकुरु" इति शठकोपसूरिभिरुक्तम् ॥ ६८ ॥

(६९.) इदानीमस्य कैंकर्यस्य विघ्नानाह—सौन्दर्यमित्यादिवाक्यद्वयेन ।

मू॥ सौन्दर्यमन्तरायम्, कील्चोन्नकैंकर्यमुमप्पाडिये ॥६९॥
सौन्दर्यमन्तरायः, पूर्वोक्तकैंकर्यञ्च तथैव ॥ ६९ ॥

व्या॥ तस्य विग्रहसौन्दर्यम् चित्तापहारीसन्मूढत्वमुत्पादयतीति कैंकर्यस्य विघ्नः, एतन्नमसःपूर्वोक्तचतुर्थ्योक्तकैंकर्यमभिमतविषयपरिचर्येव स्वरसोपयुक्तत्वात्तन्मुखोल्लासप्रयोजनस्य तस्य विघ्न इत्यर्थः ॥ ६९ ॥

(७०) एवम्भूतत्वादेतद्विरोधिनिवृत्तिप्रार्थनाविच्छेदेन वर्तत

---

र्थः—तवास्माकञ्चेति ॥६ ८ ॥

(चित्तापहारी) इति-"चन्द्रकान्तननं राममतीवप्रियदर्शनम् । रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम्"। (अन्तरायः)-विघ्नः। "विघ्नोऽन्तरायःप्रत्यूहः" इति कोशः ॥ ६९ ॥

सदाशब्दार्थः-अत्रस्थितिकाले प्राप्यभूमिप्राप्तकाले इति। प्राप्यभूमिः-

इत्याह—कैंकर्यप्रार्थनावदिति ।

मू।। कैङ्कर्यप्रार्थनैपोले इप्पदत्तिल् प्रार्थनैयुमेन्नुमुण्डु ।।७०।।

छा।।कैंकर्यप्रार्थनावदस्मिन्पदे प्रार्थना च सदास्ति।। ७० ।।

व्या।। चतुर्थ्योक्तकैंकर्यप्रार्थना नित्या प्रतिपाद्यते, तद्वदेतत्पदोक्तकैंकर्यविरोधिनिवृत्तिप्रार्थनात्र स्थितिकाले प्राप्यभूमिप्राप्तिकाले चाविशेषेण सर्वेषु कालेषु अनुवर्तत इत्यर्थः ।। ७० ।।

(७१.) मालिन्यारहितभूमावपि स्वभोक्तृत्वादयो जायन्ते किमित्यत-आह भेषजेति ।

मू।। "मरुन्दे नङ्गल्भोगमहिल्चिक्कु" एन्नानिन्नूदिरे।।७१।।

छा।। "भेषजास्मद्भोगानन्दस्य" इत्युक्तं खलु ।। ७१ ।।

---

परमपदम् ।। ७० ।।

(मालिन्यम्)-अहंकारममकारादिकम् ।

प्रकरणोक्तार्थान् संगृह्य निगमयति-एवमिति । अत्र "नेतृत्वं (१) नित्ययोगं (२) समुचितगुणजातं (३) तनुख्यापनं (४) चोपायं (५) कर्तव्यभागं (६) त्वथ मिथुनपरं प्राप्यमेवं प्रसिद्धम् । (७) । स्वामित्वं (८) प्रार्थनां च (९) प्रबलतरविरोधिप्रहाणं(१०)दशैतान्मन्तारं त्रायते चेत्यधिगतनिगमषट्पदोऽयं द्विखण्डः" इति श्लोकोऽनुसन्धेयः ।। ७१ ।।

श्रीशैललक्ष्मणमुनेर्दासदासेन निर्मिता ।
द्वयाख्यमन्त्ररत्नार्थदीपिका वर्द्धतां सदा ।।

इति

श्रीलोकाचार्यकृतौ मुमुक्षुप्पडिरहस्ये द्वयप्रकरणम् ॥

व्या॥ अस्यार्थः—'तवानुभवजास्मदानन्दे स्वभोक्तृत्वबुध्या स्वरूपविनाशे प्रसक्ते तच्छान्तिहेतुभूतभेषजरूप हे स्वामिन्' इति नित्यसूरिभिरुच्यमानं वाक्यमुक्तं खल्वित्यर्थः ।

तस्मादेतद्विषयवैलक्षण्यप्रयुक्तायास्स्वभोक्तृत्वबुद्धेस्तत्रोत्पद्यमानत्वादस्मिन्पदे प्रार्थनेत्यर्थःसिद्ध इति । अत एव मुक्तानां लक्षणकथनसमये "नम इत्येव वादिनः" इत्युक्तम् ॥

एवं पुरुषकारत्वम् (१), नित्ययोगः (२), तदुद्भावितवात्सल्यादिगुणाः (३), तादृशगुणप्रकाशकदिव्यमङ्गलविग्रहः (४), गुणविग्रहविशिष्टवस्तुन उपायत्वम् (५), तदुपायस्वीकारः (६),—तत्फलभूतकैंकर्यप्रतिसम्बन्धिएकमिथुनमित्यमर्थः (७), तद्वस्तुनस्सर्वशेषित्वम् (८), तद्विषयकैंकर्यम् (९), कैंकर्यविरोधिनिवृत्तिश्चार्थां उक्ताः ॥ ७१ ॥

इति

श्रीमद्वरवरमुनिविरचिते मुमुक्षुप्पडिव्याख्याने

द्वयप्रकरणव्याख्यानम् ॥

॥ श्रीमते रामानुजाय नमः ॥

इति

श्रीमद्वाधूलकुलतिलकश्रीमन्महाचार्यचरणयुगलसंश्रितश्रीशैललक्ष्मणमुनीन्द्र

चरणयुगलसंभावितश्रीकौशिकबालधन्विश्रीरामानुजार्यदिव्यकटाक्ष-

लब्धसर्वार्थेन, श्रीकांचीपुरसौम्यजामातृमुनीन्द्राकस्मिककृपाल-

ब्धतुर्याश्रमेण, श्रीवाधूलकुलतिलकश्रीकुमारवेंकटार्य नि-

र्हेतुकदयावाप्तपंचसंस्कारेण श्रीसाकेतरामानुजदा-

सवर्येण विलिखिरचितायां मन्त्रार्थदीपिकायां

द्वयप्रकरणम् समाप्तम् ॥

क्वाहं मन्दमतिः क्व तादृशगिरष्षड्दर्शनीपारगाः

ते लोकार्यविपश्चितस्सुमनसां सन्दोहसम्पूजिताः।

तद्ग्रन्थाशयवर्णनोदितमिदं मौर्ख्यम्मदीयं वरम्

सोढव्यं हृदयालुभिर्बुधवरैर्वात्सल्यवाराकरैः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमल्लोकगुरवे नमः ॥

॥ श्रीमद्वरवरमुनये नमः ॥

॥ श्रीशैललक्ष्मणमुनये नमः ॥



श्रीमल्लोकाचार्यप्रणीत

# मुमुक्षुप्पडिरहस्यग्रन्थे चरमश्लोक-प्रकरणम् ।

मन्त्रार्थदीपिकासहितश्रीमद्वरवरमुनीन्द्र-प्रसादितव्याख्यासहितम्.

मूल्यम् २—०—०

आनन्दमुद्राक्षरशाला, मद्रास्.

॥ श्रीः ॥

श्रीमते रामानुजायनमः ।

श्रीमल्लोकगुरवे नमः ।

श्रीमद्वरवरमुनये नमः ।

# भूमिका ।

---

निखिलनिगम शिखरि शिखर निगूढनिक्षिप्तनित्य निरवद्यपरतत्त्व-परमहित परमपुरुषार्थसार्थ निर्धारणनिपुणपूर्वाचार्य प्रबन्धसन्दोह सम्भृत-रसास्वादनैकतात्पर्य निर्यापित सकलकालै स्समस्तैरपि विपश्चिदपश्चिमै-रास्तिकमणिभि रभिज्ञातमेवैतत् , यदुल्लंघित भगवच्छासनतया तद्विमनायित-फलभूतेऽस्मिन् संसारे परिभ्राम्यतां जीवानां तदाभिमुख्यसम्पादनमेकमन्त-रेण नान्यः कश्चिदस्ति मोक्षोपाय इति। एतदेव हि "न पश्यो मृत्युम्पश्यति" "सर्वं ह पश्यः पश्यती" त्यादिभिः श्रुतिभिरनन्ताभि र्घोघुष्यते। तत्प्रसा-दन साधनानि च श्रवणमननादीनि बहुधोपदिश्यन्ते, "आत्मा वा अरे द्रष्टव्य श्श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिना । ते च केचिदधि-कृताधिकारतया न सर्वसुलभाः, केचन च मृदितकषायैरेव सम्पाद्यतयाऽस्मा-दृशैरमीमांसितोपनिषदाशयै रदृढावलम्बितोपायै र्नशक्यन्ते सम्पादयितुमिति परिपश्यन्तः प्राञ्च एव दयमानमानसाः किमप्युपायान्तरं प्राचीकशन् भाग-वताभिमान भाजनतासम्पादनमिति। तथाह्युद्धुष्यते - "ये च वैष्णवसंश्रयाः। तेनैव ते प्रयास्यन्ति तद्विष्णोः परमम्पद" मिति ।

आः! भागवताभिमानसम्पादनमितीदं लघीयानुपाय इति हन्त! निर्भयं निर्विमर्शमेव च हि वयमाचक्ष्महे । 'त्वम्मे' इति भगवति व्याहरति "अहम्मे" इति सरभसमभिधातुं बद्धपरिकरेऽस्मिन् जगति भागवताभि-मानसम्पादनं नाम कष्टंकष्टं! गरीयः कर्म। आः! सत्यमेतत् । अथाप्यभि-धीयते श्रवणमननादिबहुतरायाससाध्य साधनसम्पादनवैयर्थ्यापेक्षया कस्य-चिद्भागवतस्याभिमाने ऽन्तर्बुभूषा हि क्लेशासहिष्णूनां स्वदेत चेतस' इति ।

मनसि कौटिल्यमावहतामधिकारिणां पुन स्सर्वमपि महते क्लेशायैवेत्या-स्तान्नाम तदतिदूरे; अक्षीणजायमानकटाक्षवीक्षणमधिकारिण मधिकृत्यात्र वाचो विसर इति। तस्य चास्य भागवताभिमानस्य निष्कृष्टनिरवद्यनिरतिशयोपायता श्रीमतो मूलमन्त्रस्य तात्पर्यपर्यवसानभूमिरिति निखिलनिगममर्मविदा माचार्याणां प्राचां रस्यं रहस्यम्।

मुमुक्षुचेतनाना मवश्यवेदितव्यतया निर्णीते रहस्यत्रितये प्राथमिकं हि रहस्यमिदं मूलमन्त्रो नाम । सचायम्—चतुर्विधदेहवर्णाश्रमाधिकारफलमोक्षसाधनगतियुगधर्मव्यूहरूपक्रियादि प्रपञ्चनचणशास्त्रविस्तरस्य जम्बूद्वीपनवमखण्डे जन्मलाभः, मानुषदेहसम्पादनम्, वपुषस्स्थेमा, सत्त्वगुणप्रचुरता, बाल्यमाभिमुख्यमित्यादीनि काममावश्यकानीति, कथञ्चित् प्राक्तन जन्मसञ्चितसुकृतवलेनैतावतोऽपि विभवस्य सत्यामपि सम्पत्तौ श्रेयस्सुलभानि विविधविघ्नकदम्बान्यतिलंघ्य, बलवन्ति प्रमाथीनिचेन्द्रियाणि सन्नियम्य भूयःप्रबन्धप्रचयाध्ययन मसंघटित मतितरामिति च वेदसारोपनिषत्सारतरानुवाकसारतमगायत्र्याः प्रथममधीयमानस्य सर्वशास्त्रनिचयसारभूतस्यातिसंक्षिप्तस्य अप्रतिमप्रभावस्य च प्रणवस्य परमकृपया प्रसादयित्वा परमात्मना भगवता श्रीमति बदरिकाश्रमे स्वांशभूतं नरं प्रति प्रकाशितः।

अथ द्वैतीयीकं रहस्यं मन्त्ररत्नापराभिधानं द्वयम् । तच्च तेन भगवता श्रीमति विष्णुलोके स्वीयमहिष्यै लक्ष्म्यै समुपदिष्टम्। अथ तार्तीयीकं - चरमश्लोकः। स च भारतसमरसमये स्यन्दनमध्यासीनेन नन्दनन्दनेन भगवता स्वाश्रितं पार्थमुद्दिश्य प्रत्यपादि।

एवन्नाम सकलजगज्जीवातुतया भगवदाविष्कृतस्य रहस्यत्रितयस्यार्थ मतिगोप्य मभ्यरक्षन् नाथयामुनयतिवराद्याः प्राञ्चो गुरवः। अथ च जगतामुपनिपतित मनल्पमनर्थ मप्रबोधप्रयुक्त मनुचिन्त्य दयामयान्तरङ्गाः श्रीमन्तो भट्टपराशरपादा अष्टश्लोकी मन्वगृह्णन् रहस्यत्रयार्थविवरणात्मिकाम्।

स चायं प्रबन्धो ऽनतिसंक्षेपविस्तरोऽपि सन् गीर्वाणवाणीनिबद्धतया तदेकान्तनिष्णातनिशितधिषणानामेव काममुपकारकता माटिटीके। एवमन्यान्यैरपि बहुभिराचार्यवर्यै रुद्घाटितेष्वपि बहुषु रहस्यव्याख्याप्रबन्धेषु, उच्चावचै स्तैस्तैर्हेतुभि रनुदितप्रचारेषु तेषु,

अथ भगवान् कमलासहचरः श्रीरङ्गमङ्गलविजृम्भण वैजयन्त्यात्मकः परमः पुमान् निरन्तरदुरन्तदुरितकान्तारभ्रान्ताविश्रान्त सन्ततसञ्चरणसमुद्विग्न संसारिसमूहसमुद्दिधीर्षासञ्चितं निखिलमपि निजं प्रयास मफलंग्रहिमवेक्षमाणो मानातीतश्च खेदमासीदन्, श्रीभाष्यकारचरणारविन्दचञ्चरीकायित श्रीवत्सचिह्नमिश्रात्मज श्रीभट्टपादपादपङ्केरुहमरन्दपान समेधितबोधवेदान्तवेद्यगुरुकरुणापरिणाहसमधिगतसकलशास्त्रार्थसारकलिवैरिगुरुवदनारविन्दनिर्गलविनिर्गलद्वचस्सुधापूररसास्वाद नित्यनिर्मलचेतसः श्रीकृष्णपाद- (वडक्कुत्तिरुवीथिप्पिळ्ळै) गुरोरात्मजन्मानमवातारयद्भगवन्तं लोकदेशिकम्।

श्रीमती भगवतो भाष्यकारस्येव अतिपवित्रविचित्रचरित्रस्य भव्यतरदिव्यरहस्यप्रबन्धबृन्दप्रणयनप्रकाशित विश्वातिशायिप्रभावातिशयस्य, अखर्वगर्वकथकसञ्चयकुञ्जरपुञ्जभञ्जनचुञ्चुवाग्विलासस्य,कुमति कुलकलितवैयाकुलीविदलन विशारदस्य, सकलश्रुतिस्मृतिविरुद्ध पद्धतिनिर्धूननैकबद्धश्रद्धस्य, निरङ्कुशसमङ्कुरच्छङ्कातङ्ककलङ्कसंघसम्मार्जनसमर्थस्य, निखिलपदार्थस्वरूपनिरूपणैदम्पर्येणार्वाचीनसर्वदुर्वादनिर्वापणनिपुणस्य, अनादिकर्मप्रवाहनिर्मितानङ्कुशप्रसरभगवत्सङ्कल्प कल्पितानल्प सङ्कटविशङ्कटासारसंसारपङ्कसङ्कलितमज्जनजगज्जनोज्जीवनैकव्यापारापारकृपाकूपारपूरपारवश्य परिकलितावतरणस्य च गुरोरस्य प्रभावं प्रतिपादयितुं के वयं मूका वराका इति ततो विरमामः।

आचार्यवर्येण चानेनानुगृहीतानि रहस्यप्रबन्धरत्नानि भूयांसि। तेषु- चाद्योपलभ्यमानानि—

(१) मुमुक्षुप्पडि.
(२) तत्त्वत्रयम्.
(३) अर्थपञ्चकम्.
(४) श्रीवचनभूषणम्.
(५) अर्चिरादि.
(६) प्रमेयशेखरम्.
(७) प्रपन्नपरित्राणम्.
(८) सारसंग्रहः.
(९) संसारसाम्राज्यम्.
(१०) नवरत्नमाला.
(११) नवविधसम्बन्धम्.
(१२) याहच्छिकप्पडि.
(१३) परन्दपडि.
(१४) श्रियःपतिप्पडि.
(१५) तत्त्वशेखरम्.
(१६) तनिद्वयम्.
(१७) तनिचरमम्.
(१८) तनिप्रणवम्.

इत्यादीनि। एषु च रहस्यप्रबन्धेषु - मुमुक्षुप्पडिग्रन्थः, श्रीवचनभूषण-ग्रन्थः, तत्त्वत्रयग्रन्थश्चेत्येतत् ग्रन्थत्रयं बहुतरगुणगण भाजनमिति भगवता विशदवाक्छिखामणिना श्रीमत्सुन्दरजामातृसंयमीन्द्रेण व्याख्यायि।

तत्र च मुमुक्षुप्पडिग्रन्थमधिकृत्यात्र किमपि प्रस्तूयते। मूलग्रन्थस्य चास्य बहुतरभावगर्भगभीरार्थसंभृतातिसंक्षिप्तशब्दसन्दर्भगर्भिततया सूत्ररूपतामभिमन्यमानेन श्रीमता वरवरमुनिना विरचितस्य विवरणस्य मूलभूतसूत्रसमेतस्य द्राविडवाणी प्रचुरस्यास्मादृशदाक्षिणात्यजनोपकारकत्वेऽपि, द्राविडभाषावैदेशिकाना मुत्तरदेशीयानां गीर्वाण वाणीकृतपरिश्रमाणां रहस्यार्थवेदनवैधुर्यखिन्नमानसानामनुपकारकतामभिप्रयद्भिः स्मरणीयमहिमभिः, अधीताध्यापित सकलवेदवेदान्ततन्त्रतर्कव्याकृति योगसांख्यसमाख्य शास्त्रविस्तरनिस्साधारण्य नैपुण्यपण्यपरिक्रीत निखिलपण्डितमण्डल प्रख्यापित-विख्यात्यतिशय सत्यापनचतुरभूयस्तर प्रबन्धनिबन्धन निर्धूतनिखिललोकहृदयगुहान्धकारैः श्रीगोवर्धनरङ्गाचार्यवर्यैः स्वसंस्कृतभाषामयो विवर्तो व्यरचि।

तैरेतैराचार्यवर्यै रनुगृहीतस्यास्य संस्कृतविवर्तभूतस्य मुमुक्षुप्पडिग्बन्ध-विवरणस्य तादात्विकसात्त्विकबहुप्रज्ञसुज्ञेय प्रमेयत्वेऽप्यद्यतननवीनवादग्रन्थ-वृन्दाविश्रमपरिश्रम दुर्दमोद्यमकथककुलखर्जूसम्मार्जनौर्जस्वल्य शैथिल्यात् मृदुप्रज्ञविज्ञानोत्पादनसाधनविशदतमार्थव्युत्पादननैरन्तर्यवैधुर्याच्च अपर्याप्तप्रवृत्तिकतया सूत्रस्थानीयमूलग्रन्थस्य वृत्तिस्थानीयतामुन्नीय अनुरूपभाष्यविशेष-परिपोषमन्तरा दुरारोहप्रमेयताञ्च निश्चिन्वद्भिः कैश्चिद्विपश्चिदपश्चिमै स्समभ्यार्थिताः श्रीरङ्गास्तरणवास्तव्यदिव्यदम्पतिकरुणापरिणाहप्रदत्तपारितोषिकभूत श्रीरङ्गनारायणसंयमिसार्वभौमपट्टालङ्करणेन क्षपितकतिपयकालाः अशेषविपक्षप्रतिक्षेपक्षमत्वेऽपि वेदान्तार्थविमर्शमात्रविश्रान्ताः दिगन्तनिरन्तरविसृत्वर-विपुलयशसः श्रीमत्साकेतरामानुजसंयमिसार्वभौमाः प्रस्तुतसूत्रवृत्ते भाष्य-स्थानीयं किमपि विशदं विवरणं पूर्वानुगृहीतबहुतरप्रबन्धविशदीकृतार्थसार-सर्वस्वभूतं मन्त्रार्थदीपिकासमाख्यं प्रसादयामासुः।

अनवरतरचितपरिचयनिचयनियन्त्रितनिखिलनिगमान्तसूक्तिमञ्जरी - सञ्जरीजृम्भन्मधुरमधुधारासारसारस्य सौवादवास्वादसमुद्यदुद्धुरमदभर - मन्थरतरकरणगणैरेतै र्यतीश्वरै रनुगृहीतं प्राचीनार्वाचीन सकलग्रन्थसारो -

द्वारेणातिप्रौढसरलसरसगम्भीरशब्दसन्दर्भमपरिमिताश्चर्यतात्पर्यवर्यपर्याप्तम्, पर्यायतः प्रतिपदार्थमुद्देशलक्षणशिक्षण स्वरूपनिरूपणप्रमाणगणप्रदर्शन तदनुगुणतर्कवर्गाविष्करण प्रतितर्कन्यक्करणपूर्वकप्रतिपक्षिपक्षप्रतिक्षेपस्वपक्षशिक्षितविषयकलास्थापक बहुतरयुक्तिनिकरनिदर्शनादिप्रदर्शनपूर्वकपूर्वाचार्यसूक्ति-संवादसन्दर्शनतद्विरुद्धवचनान्यथासिद्ध्याऽन्यपर्यादि पर्यालोचनादिभिस्सुनिरूपित भूयस्तरप्रबन्धार्थसार्थयाथार्थ्यम्, अनाद्यविद्यासम्बन्धनिबन्धनविस्मरतिमिर पटलावष्टम्भनष्टदृष्टीनामपि सद्यस्सकलतत्त्वप्रकाशनेन साभिधेयनिजनामधेयम्, अमेयभागधेयशालिविबुधलोकविलोकनीयस्वीयसौभाग्यम्, अभाग्यमषीविषीददशेषशेमुषीकक्रमतिलोकलोचनागोचरस्वरूपरूपम्, अनुरूपपरिचयशालिना मनायासनिषेव्य दिव्यतरवचनरचनानुयाय्यर्थ-प्रबोधनप्रदत्तसौहित्यम्, अत्यच्छगोक्षीरद्राक्षामाक्षिकेक्षुरसविक्षेपसदृक्षाति-भोग्यवाक्यविच्छदम्, अपरिच्छेद्यवैभवम्, पदेपदे पदार्थवाक्यार्थव्यङ्ग्यार्थ-तात्पर्यार्थावयवार्थविशिष्टार्थ घट्टार्थ विग्रहार्थ निर्गलितार्थ पदप्रयोजनपदस्वारस्य वाक्यस्वारस्य सङ्गत्यवतारिकाशङ्कासमाधानाद्यशेषविशेषपरिपुष्टप्रदेशम्, क्वचन रहस्यत्रयसारतद्व्याख्यानाद्युदीरिताऽसाम्प्रदायिकानुपपन्नार्थकदर्थनकृतार्थम्, क्वचिच्चार्वाचीनोत्तरकलीय वैष्णवविलिखितदूषणभापण प्रत्याख्यानसम्मुखीनञ्चेदं व्याख्यानं सकलसहृदयहृदयाह्लादकमिति व्याहर्तुं कियान्यं जनो मितरूपचमतिः ।

एतादृशस्य च व्याख्यानरत्नस्य सम्मुद्रय बहिरनाविष्करणेन काननज्योत्स्नासरीतिकतामवधारयता श्रीमता भगवद्भागवताचार्यकैङ्कर्योपयुक्तधनधान्यसमृद्धेन भाग्यनगराभिधान हैदराबादपत्तनकृतनिवासेन रामनारायण श्रीकृष्णप्रीतीनामधेयेन परमास्तिक चूडामणिना घनचिक्कणपत्रेषु सुन्दरतरैरक्षरैर्मुद्रापणमारचय्य प्रकाशनमकारीति तस्मै बहून् धन्यवादानाम्रेडयामः । मुद्रापणकृत्ये चाल महानुभावस्यास्य महतीं रुचिमुत्पादितवतः श्री तोताद्रिपीठपतिसंयमीन्द्रचरणनलिनाश्रितस्य भूतपुरीनिवासिनः श्रीसुदर्शनशर्मणश्च भूयसीं श्रेयस्सन्ततिमाशासता मशेषभागवता इत्यखिलमनवद्यम् ॥

इति,

श्रीकाञ्ची प्रतिवादिभयङ्करः

अण्णङ्गराचार्य नामा

श्रीवैष्णवदासः ।

॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमल्लोकगुरवे नमः ॥

॥ श्रीमद्वरवरमुनये नमः ॥

श्रीमद्वरवरमुनीन्द्रप्रसादितमुमुक्षुप्पाडिरहस्य-
चरमश्लोकप्रकरणव्याख्यानाव-
तारिकाऽऽरम्भः ॥

मध्यमरहस्यभूतद्वयार्थकथनानन्तरं, तत्र पूर्ववाक्यो-
क्तोपायवरणं - सर्वेश्वरेण स्वयमेव विहितत्वात्, तदभि-

---

॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमल्लोकगुरवे नमः ॥

॥ श्रीमद्वरवरमुनये नमः ॥

॥ श्रीशैललक्ष्मणमुनये नमः ॥

अव्यादव्याजकारुण्यनिधिरम्बुजलोचनः ।
श्रीरङ्गधामरसिकः श्रीमान्नारायणः सदा ॥
रम्यजामातरं नत्वा स्मृत्वा श्रीलोकदेशिकम् ।
प्रकरोमि सतां प्रीत्यै चरमश्लोकदीपिकाम् ॥

" श्रीमल्लोकगुरोर्व्याख्यां चरमश्लोकगोचराम् । अन्तिमां साधयन्नादा-
वाह क्रमानियामकम्—(मध्यमरहस्ये)त्यादिना । 'द्वयस्यार्थकथनानन्तरम्-

चरमश्लोकस्यार्थमाह ' इति क्रमरूपानियाम्यस्य प्रतिज्ञा । "मध्यमरहस्यभूत" "चरमरहस्यभूत" इति क्रमनियामकरूपहेतुं सङ्ग्रहेण विशेषणद्वयेन निर्दिश्य, काकाक्षिन्यायेन तदुभयमुपपादयति —(तत्र पूर्ववाक्ये)त्यादिना, (तात्पर्यस्य) इत्यन्तेन । 'द्वयविवरणभूतस्ये 'त्याद्युभयोपपादकसङ्ग्रहः । 'प्रतिपाद्यमानत्वात्, शब्दादेव प्रतिपाद्यमानत्वाच्च ' इति तद्विवरणं पञ्चम्यन्तद्वयम् । ' पूर्ववाक्योक्त ' ' उत्तरवाक्योक्त ' इति विशेषणाभ्यां 'पूर्वार्धेन' 'उत्तरार्धेन ' इति पदाभ्यां च विवरणिक्रमानुसारिविवरणक्रम इति सूचनमुखेन अर्थस्वभावपर्यालोचनासिद्धो विवरणविवरणिभावो युज्यत इति व्यज्यते । (तत्र) - द्वये । प्रथमेन पञ्चम्यन्तेन पूर्वार्धस्योक्तार्थविशदीकारेणार्थान्तरबोधनेन च द्वेधा पूर्ववाक्यविवरणत्वमुक्तम् । तत्रार्थान्तरबोधनेन विवरणत्वं तावदाह—(पूर्ववाक्ये)त्यादिना, (तदभिमतमित्यस्यार्थ-रूये)त्यन्तेन । 'सर्वेश्वरेण स्वयमेव विहितत्वात्-उपायवरणं तदभिमतम्' इत्यन्वयः । तत्पदं सर्वेश्वरपरम् । ' तदभिमतम् ' इत्यनेन ' शास्त्ररुचिपरिगृहीतो मूलमन्त्रः, आचार्यरुचिपरिगृहीतं द्वयम्, शरण्यरुचिपरिगृहीतश्चरमश्लोकः ' इति सम्प्रदायार्थोऽवगम्यते ।

स्पष्टमेतत् परन्दरहस्ये " एवं सुदृढं श्रुतिसिद्धत्वेऽप्येकस्योपादेयं यदा भवति, तदा शिष्टाचारगोचरत्वमावश्यकमिति "यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः । यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः " इत्यादिषु शिष्यकर्तव्यविधायकप्रदेशेषु ' यथा ते तेषु अवर्तन्त, तथा त्वमपि तत्र वर्तेथाः, ते यथा वर्तिष्यन्ते तथा त्वमपि वर्तेथाः ' इत्युक्तत्वात्, अष्टकायां पशुविशसनस्य शिष्टपरिग्रहाभावेन स्वरूपनाशकत्वात्, ' शिष्टाचारः प्रमाणमि 'ति शिष्टाचारस्यैव प्रधानप्रमाणतया मीमांसकैरुक्तत्वेन सकलशास्त्रसङ्ग्रहभूतश्रीमन्त्रोक्तार्थे शिष्टाचारस्यापेक्षितत्वाच्चास्यार्थस्य शिष्टाचारद्वारा प्रमाणं भवति द्वयम् । आचार्यरुचिपरिगृहीतस्यार्थस्य शरण्याभिमतत्वप्रकाशको भवति चरमश्लोकः - शरण्यानुमतिद्वारा प्रमाणं भवति । शास्त्रसिद्धः, शिष्टाचारसिद्धश्चार्थः - शरण्याभिमतः खलु तिष्ठति । तर्हि तदभिमतत्वस्य प्रत्येकमेक प्रमाणमपेक्षितं किमिति चेत्, " ज्योतिष्टोमेन स्वर्गकामो यजेत " इति विहितज्योतिष्टोमादेः स्वर्गार्थमनुष्ठातॄणां सद्भावेऽपि तत्तत्कर्मसमाराधितेन भगवता तत्तत्कर्मणां

फलप्रदानस्य क्रियमाणत्वेऽपि "यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ कामात्मानः स्वर्गपराः" इत्यधिक्षेपदर्शनात्, तथाऽनभिमतो न भवतीति अत्र शरण्याभिमतिरपेक्षिता खलु" इति ।

ननु 'व्रज' इत्यत्र धात्वर्थः - वरणम् । आख्यातार्थः-भावना । तथा चात्राभिमतिःकथं विधौ शब्दार्थ इत्याह—(विहितत्वादि)ति । विधिः-प्रेरणा । सा 'आचार्यप्रेरणया करोमि' इति शिष्यव्यवहारात्, अभिप्राय एव । तथा चाख्यातस्य लकारसामान्यरूपेण भावनावाचित्वेन विधित्वेन प्रेरणरूपाभिमतिवाचित्वमप्यस्तीति भावः ।

अत्रेदानीं विधिवाक्यस्य विधायकत्वप्रकारःकथ्यते । तत्र "स्वर्गकामो यजेत" इत्यत्र यजिधातोरुपरितने प्रत्यये धर्मद्वयमस्ति - आख्यातत्वं लिङ्त्वञ्चेति । तत्राख्यातत्वं सर्वलकारसाधारणम् । तदवच्छेदेन लिङ्प्रत्ययः - पुरुषप्रवृत्तिरूपामर्थभावनां प्रतिपादयति । सा चार्थभावना-किमंशकेनांशकथमंशरूपांशत्रयविशिष्टा । तथा हि 'यजेत' इत्यत्र प्रत्ययेन 'भावयेत्' इति प्रतीयते । सुबन्ताभिहितानां सर्वेषां कारकाणां लिङन्तार्थक्रियान्वयनियमे सति, लिङन्तस्य प्राधान्यात्, तत्रापि प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यात्, प्रथमं प्रत्ययार्थभावनाया उपस्थितिर्युक्ता । ततः करोतिसमानार्थकभावयतेः सकर्मकत्वात् 'किं भावयेत्' इति कर्माकाङ्क्षायां भिन्नपदोपात्तोऽपि स्वर्गो भाव्यत्वेनान्वेति । कर्मत्वेनेत्यर्थः । साध्यत्वेनेति यावत् । न तु समानपदोपात्तोऽपि यागो भाव्यत्वेनान्वेति । दुःखात्मकस्य यागस्येप्सिततमत्वरूपकर्मत्वायोग्यत्वात् । स्वर्गस्य तु आनन्दात्मकत्वेनेप्सिततमतया कर्मत्वेनान्वययोग्यत्वात्। ततश्च 'स्वर्गं भावयेत्' इति बोधो भवति । 'तत्केने'ति करणाकाङ्क्षायां समानपदोपात्तो यागः करणत्वेनान्वेति । 'यागेन स्वर्गं कुर्यात्' इति । ततः 'कथं यागेन स्वर्गं कुर्यात्' इति कथम्भावाकाङ्क्षायां अग्न्यन्वाधानावहननादिजन्यदृष्टोपकारेण प्रयाजादिजनितादृष्टोपकारेण सहितेन यागेन स्वर्गंकुर्यादिति, अग्न्यन्वाधानप्रयाजादिकमङ्गजातम् - इतिकर्तव्यतयाऽन्वेति । कथम्भावाकाङ्क्षापूरकत्वं - इतिकर्तव्यतात्वम् । यथा "ओदनकामः पचेत्" इत्यत्र लिङा भावना प्रतीयते । 'किं भावयेत्' इत्याकाङ्क्षायां ओदनो भाव्यत्वेनान्वेति । 'केन' इत्याकाङ्क्षायां 'पाकेन' इति लभ्यते । कथमित्याकाङ्क्षायां

मतमित्यस्यार्थस्य च, वरणाङ्गसाधनान्तरपरित्यागस्य, वरणे साधनत्वबुद्धिराहित्यस्य चशब्दादेव पूर्वार्धेन प्रतिपाद्यमा-

---

तृणपूत्कारादिसहितेनेति । ततश्च 'तृणपूत्कराद्युपकृतेन पाकेन तेजस्संयोगेन ओदनं भावयेत्' इति वाक्यार्थस्सम्पद्यते । तद्वद्यजेरपि बोध्यः । 'स एव लिङ्प्रत्ययो लिङ्त्वावच्छेदेन शब्दभावनां प्रेरणाख्यामभिधत्ते' इति मीमांसापरिभाषाऽनुसन्धेये-ति ।

ननु प्रवृत्तिमात्रस्य "सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनञ्च" इति न्यायेन भगवदधीनत्वात्, हेतुसाध्ययोरव्यावर्तकत्वमित्यत्राह—(सर्वेश्वरेण)ति । 'सर्वेश्वरेण' इत्यव्यावर्तकत्वशङ्काबीजम् । 'स्वयम्' इति अद्वारकत्वबोधनेन व्यावृत्तिः सिद्धेति परिहारः । तथा चाद्वारकभगवत्प्रेरणम् - "एष एव साधुकर्म कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषति" इत्यलोक्तोन्निनीषारूपतदभिमतिहेतुरिति नोक्तदोष इति भावः । (इत्यस्यार्थस्य च) इति वक्ष्यमाणसाधनान्तरपरित्यागप्रपत्तिसाधनत्वराहित्याभ्यां समुच्चयः । तथा च 'मध्यमरहस्ये वर्तमाननिर्देशरूपत्वात् न तत्राभिमतिप्रतिपत्तिरस्ति' इत्यर्थान्तरबोधनेन श्लोकः द्वयविवरणमिति भावः ।

अथ 'चरणौ' इति द्विवचनार्थभूतोपायपूर्तिरूपोक्तार्थविशदीकारमाह—(वरणाङ्गे)त्यादिना । वरणाङ्गेति - विशेषणेन श्लोके, ल्यप्प्रत्ययेनाङ्गत्वरूपार्थान्तरबोधनं व्यज्यते । एकशब्दार्थमाह—(वरण) इति । "एके मुख्यान्यकेवलाः" इत्युक्तं कैवल्यं तदर्थ इति भावः । ननु मन्त्ररत्नस्य वर्तमाननिर्देशरूपत्वेऽपि अनुवादस्य पुरोवादसापेक्षत्वात्, वेदे च वेदपुरुषस्यैव पुरोवादित्वात्, वरणस्यापूर्वत्वेन विध्यवश्यम्भावाच्च तत्राप्यभिमतिस्सिध्यत्येव । एवमुपायपूर्तिस्वभावपर्यालोचनया त्यागादिकमपि सिध्यत्येवेत्यत आह—(शब्दादेवे)ति । यद्यपि श्रीभाष्ये फलाधिकरणे "लिङादयोऽपि देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधति नान्यदलौकिकमिति प्रागेवोक्तम्" इति कर्तृव्यापारसाध्यत्वं विध्यर्थ इति प्रतिपादितम्, तथाऽप्यर्थान्तराबोधात् लिङः

नत्वात्, उत्तरवाक्योक्तकैंकर्यपूर्वभाविप्राप्तिप्रतिबन्धकसकलपापविमोचनस्योत्तरार्धेन शब्दादेव प्रतिपाद्यमानत्वाच्च, द्वयविवरणभूतस्य,

---

प्रेरणारूपाभिमतिवाचकत्वम्' इति भाट्टरीतिरिहाश्रिता। यत्र द्वित्वाभिधानं तत्रेतरव्यावृत्तिधीः इति नियतम् - व्यवच्छेदधिया यतः। 'यत्रानुवादः, तत्राभिमतिः' इति न नियमः। "भुक्त्वा चान्द्रायणं चरेत्" इत्यत्र 'भुक्त्वा स्थितश्चेत्' इत्यनुवादः, तत्र भोजने अभिमतिर्नास्ति इति बोध्यम्। ततः द्विधाविवरणं सम्भवत्येवेति भावः।

अथोत्तरार्धस्योक्तार्थविशदीकारेणोत्तरवाक्यविवरणत्वमाह—(उत्तरवाक्ये)ति। ननु "ब्रह्मविदाप्नोति परं - सोऽश्नुते" इत्यादौ उपासनफलतयैव भगवदनुभवरूपप्राप्तेः, वरणफलतया नोत्तरवाक्ये प्रतिपादनमस्तिः येन तत्र नमश्शब्देन विरोधिनिवृत्तिपरेण प्राप्तिप्रतिबन्धकनिवृत्तेस्सामान्येनोक्तायाः, सर्वपापविमोचनत्वरूपेण विशेषोक्तरूपस्योत्तरार्धस्य तद्विवरणत्वं स्यादित्यत्राह—(कैङ्कर्यपूर्वभावी)ति। चतुर्थ्यर्थः - कैङ्कर्यम्। तच्च पूर्वमेवोपपादितम्। कैङ्कर्यपूर्वभावित्वं च - प्राप्तिद्वारकं विवक्षितम्। 'भावान्तरमभावः' इति न्यायेन प्रथमभाविन्याः प्राप्तेरेव प्राप्तिप्रतिबन्धकनिवृत्तिरूपत्वमित्यभिप्रेत्य—(प्राप्तिप्रतिबन्धके)त्युक्तम्। प्रतिबन्धकत्वं - पापविशेषणम्। 'स्वयमेव स्वप्रतिबन्धकाभावः' इति व्यवधानाभावरूपसन्निकर्षादौ दृष्टम्। तथा च प्राप्यप्रतिबन्धकद्वारा कैङ्कर्यविरोधिभूतसर्वपापनिवृत्तेर्नमश्शब्देन सामान्येनोक्ताया विशेषरूपेण विवरणं युज्यत इति भावः। अर्थान्तरबोधनमप्यस्तीति ध्वनयति—(विमोचनस्ये)ति। क्रियापदाण्णिजन्ताच्च तत्रार्थान्तरबोधनात्। उपलक्षणमेतत्स्यात् स्फुटं तत्तु भविष्यति। पूर्ववदार्थिकसिद्धिं वारयति—(शब्दादेवे)ति।

(द्वयविवरणभूतस्य) इति - तथा च मूलमन्त्रार्थज्ञानमूलकाकाङ्क्षाविषयस्य चरमश्लोकार्थजिज्ञासामूलभूतोपस्थितिविषयस्य चार्थस्य मति-

पादनात्, कठवल्लीमन्त्रद्वयस्य गीतावचनस्य चरमश्लोकस्य चाध्ययनक्रमाभावेऽपि "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति न्यायेनार्थानुसन्धानरसिकैः पूर्वाचार्यैरेकवाक्यसहपठनात्, द्वयस्य मध्यमत्वम्, श्लोकस्य चरमत्वं चोपपद्यत इति भावः।

अत्र केचिदाचार्याः स्थूणानिखनन्यायेन दासजनमुद्बोधयन्ति। तथा हि—मन्त्ररत्नचरमश्लोकयोर्विवरणविवरणिभावसङ्गतिर्नोपपद्यते। श्लोके साक्षाद्वा प्रमाणद्वारा वा मन्त्ररत्नप्रतिपदकरणादर्शनात्, छान्दोग्यवाजसनेयाधीतोद्गीतविद्ययोरिवानयोर्विद्याभेदावगमेन प्रत्यभिज्ञाभङ्गात्, यजतिददात्योरिव पदव्रजधात्वोरिव भिन्नार्थतया प्रत्यभिज्ञाभङ्गात्, भिन्नार्थकयोर्विवरणविवरणीभावाप्रसिद्धेः, न्यायसिद्धविधिप्रत्ययेन मन्त्ररत्नस्य शान्ताकाङ्क्षतया तस्य लोकसिद्ध्याकाङ्क्षाविरहात्, श्लोकस्यापि मन्त्ररत्नार्थाकाङ्क्षाविरहेण व्यत्यासेन विवरणविवरणीभावस्याप्यसम्भवात्, मन्त्ररत्नोक्तसिद्धोपायस्याङ्गनैरपेक्ष्याच्चे—ति।

तदिदं हेतुसप्तकं क्रमशो निरस्यते—तथा हि तत्र प्रतिपदकरणादर्शनलक्षणः प्रथमहेतुरनुपपन्नः। अनधीतशाखार्थसंवाद्युपबृंहणेषु व्यभिचारात्। न हि तत्र महर्षिभिः स्वयोगमहिमसाक्षात्कृतानि शाखान्तराणि उपादाय तेषां साक्षाद्वा प्रमाणमुखेन वा प्रतिपदकरणं कृतम्। तथा सत्यनधीतशाखान्तराणामानन्त्येनोपबृंहणानामप्यानन्त्यापत्तेः। तत्तथात्वस्यानुपलम्भाच्च। न चैषां वेदविवरणत्वाभावशङ्का। "प्रायेण पूर्वभागार्थपूरणं धर्मशास्त्रतः। इतिहासपुराणाभ्यां वेदान्तार्थः प्रकाश्यते" "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इत्यादिभिस्तेषां तथात्वसिद्धेः।

किञ्च श्रीमन्नारायणचरणशब्दस्याचार्यात्मकभगवत्परस्य निष्कर्षकशब्दात्मकस्य "मामुपास्व" इति प्रतर्दनविद्यावाक्य इव, श्लोकेऽपि "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इत्युक्तवन्तमर्जुनं प्रत्याचार्यत्वकारिणा भगवता 'माम्' इति प्रतिपदकरणेनाचार्य एव श्रीमन्नारायणचरणद्वयशब्दार्थ इति विवरणात्, परव्यूहादिसाधारणस्य नारायणशब्दस्य 'मां' शब्देनातिसुलभावतारविशेषविषयेण प्रतिपदकरणात्, 'चरणौ' इति द्विवचनस्य 'सर्वधर्मान्परित्यज्य' इत्यनेन प्रतिपदकरणात्, 'पद - गतौ' व्रज - गतौ' इति धातुपाठानुसारेण पदव्रजधात्वोः पर्यायतया शरणपदोपश्लिष्टव्रजधातुना

प्रतिपदकरणात्, श्रीमच्छब्दस्याहन्ताविशिष्टविषयेणास्मच्छब्देन "अहन्ता ब्रह्मणस्तस्य साऽहमस्मि" इति व्युत्पादितेन प्रतिपदकरणमुखेन श्रियः स्वरूपनिरूपकतया नित्यान्वयस्य विशदीकरणात्, नमश्शब्दस्य सर्वपापोपश्लिष्टेन मोक्षधातुना प्रतिपदकरणात्, व्यक्तचतुर्थ्याः केवलेन मोक्षधातुना मुक्तसत्तापरेण प्रतिपदकरणात्, सर्वधर्मशब्दत्याजिधातुभ्यां "न कर्मणा न प्रजया धनेन त्यागेनैके" इत्यादिप्रमाणप्रत्यभिज्ञानात्, 'मां व्रज' इत्यनेन चरमपर्वोपायतायां हिततमामृतसेतुपरमतर्दनविद्यावाक्यरूपप्रमाणप्रत्यभिज्ञानात्, 'सर्वपापेभ्यो मोक्षयिष्यामि' इत्यनेन प्रपत्तेर्मोक्षफलकत्वे "मुमुक्षुर्वै शरणमहं प्रपद्ये" इति प्रमाणप्रत्यभिज्ञानाच्च साक्षात्परम्परया च श्लोके मन्त्रस्त्रप्रतिपदकरणस्याक्षततया हेतोरसिद्धत्वाच्च ।

न च विवरणसर्वांशावच्छेदेन विवरणिसर्वांशप्रतिपादनकरणस्यैवात्र विवक्षितत्वेनासिद्धिरिति वाच्यम् । तादृशविवरणस्याप्रसिद्धत्वात् । न च 'पचति, पाकं करोति' इत्यनयोस्तादृशविवरणाविवरणीभावः प्रसिद्ध इति वाच्यम् । तत्रापि धात्वंशे प्रतिपदकरणाभावात्, 'करोती'त्यत्र धातोरुपरि स्वार्थिकप्रत्ययाभावेन घञोऽपि तथात्वाभावात्, संसर्गांशस्यापदार्थत्वेन तद्वाचिनोऽम्पदस्य तथात्वाभावात्, 'करोती'ति कृञ्धातोः पदार्थैकदेशपरत्वेन तत्रापि तथात्वाभावात्, तदुत्तराख्यातेऽपि तथैव तदभावाच्च । न च पचधात्वपेक्षया घञन्तपाकपदस्य भिन्नत्वेन प्रतिपदत्वसम्भवात्, अन्विताभिधानपक्षे संसर्गस्यापि पदार्थत्वेनाम्पदस्यापि तथात्वोपपत्तेः, आख्यातान्तकृञ्धातोरिव पचधातूत्तराख्यातप्रतिपदत्वाच्च नानुपपत्तिरिति वाच्यम् । एवमपि 'चैत्रः पचती'ति वाक्यं प्रति 'चैत्रः पाकं करोती'ति वाक्यस्य 'चैत्रस्तण्डुलस्य पाकं करोती'त्यादेश्च विवरणत्वाभावप्रसङ्गो दुर्वारः । चैत्रपदांशे तण्डुलपदांशे च प्रतिपदकरणादर्शनात् । तस्मात्प्रतिपदकरणमस्तु वा मा वा उक्तार्थविशदीकारसहितोपयुक्तार्थान्तरबोधकत्वमेव विवरणशब्दमुख्यप्रवृत्तिनिमित्तमित्यास्थेयम् । तस्यैव शारीरकभारतादिवेदविवरणादिसाधारणत्वात् । तथा चानुगृहीतं वादिकेसरिमुनीश्वरैः रहस्यत्रयविवरणग्रन्थे "उक्तार्थविशदीकारयुक्तार्थान्तरबोधनम् । मतं विवरणं तत्र महितानां मनीषिणाम्" इति । अत्र 'महितानां मनीषिणाम्' इत्यनेन पदच्छेदादिव्याख्यानलक्षणमव्युत्पन्नपुरुषापेक्षयैवोक्तमिति सूचितम् । न हि व्युत्पन्नानां पदच्छेदादौ सन्देहसम्भवः । अतो व्याख्याने पदच्छेदादिकं व्युत्पादनमात्रमिति न तद्व्याख्यानस्य

मुख्यं प्रयोजनम्; किं तु व्युत्पन्नान्प्रति मूलोक्तार्थविशेषाकारबोधनेन तदुपयुक्तार्थान्तरबोधनेन च तत्समवेताप्रतिपत्त्यादिनिर्वहणमेवेति। प्रकृते तु तादृशलक्षणशालिनि चरमश्लोके तत्तथात्वाभावसाधकतया विवक्षितः, प्रतिपद्दर्शनाकरणरूपो हेतुर्बाधितः सत्प्रतिपक्षितश्चेति प्रथमहेतुरनुपपन्न एव।

विद्याभेदावगतिरूपो द्वितीयो हेतुरप्यनुपपन्नः। मन्त्ररत्ने श्लोकोक्तवेद्यैकदेशभूतचरणग्रहणस्योपलक्षणार्थत्वेनोभयत्रापि विशिष्टस्यैव वेद्यत्वात्। अन्यथा मन्त्ररत्नमूलभूते मन्त्रशेषे नमःपदेन "पन्था नकार उद्दिष्टो मःप्रधान उदीरितः। विसर्गः परमेशस्तु तत्रार्थोऽयं निरुच्यते। अनादिःपरमेशो यः शक्तिमान्पुरुषोत्तमः। तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान्" इति विसर्गार्थस्य भगवत एवोपायत्वाभिधानात्, नारायणशब्देऽपि "नारस्त्विति सर्वपुंसाम्" इत्यादिना तस्यैवोपायत्वाभिधानात्, मन्त्ररत्नार्थविवरणप्रकरणे पाद्मोत्तरखण्डे "स वै नारायणः श्रीमान् वात्सल्यगुणसागरः" इत्यारभ्य "कृपापीयूषजलधिः शरणं सर्वदेहिनाम्" इति भगवत एवोपायत्वाभिधानात्, "गृह्णीयान्मन्त्रराजानं मां गच्छेच्छरणं नरः" इत्यादिमन्त्ररत्नविनियोजकवाक्यैरपि तस्य भगवदेकशरणव्रज्या करणत्वासिद्ध्या तद्बलादैन्द्रीन्यायेन मन्त्ररत्नस्य विशिष्टभगवत्प्रपत्तिपरत्वासिद्धेश्चैवम्भूतबहुप्रमाणविरोधापत्तेः।

किं च "त्वत्पादमूलं शरणं प्रपद्ये" इत्यादिषु पादमूलभूतपादच्छायादिविषये पूर्वाचार्याणां प्रपदनानुष्ठानदर्शनेन तेषामपि भिन्नाभिन्नविद्यापत्त्या भगवत्पराङ्कुशादयस्स्वानुभवपरीवाहरूपैस्स्वप्रबन्धैर्मन्त्ररत्नमेवोपबृंहितवन्त इति सम्प्रदायस्यापि जलाञ्जलिप्रसङ्गात्। यदि च प्रपत्तव्यविषये सम्बन्धिसम्बन्धिपर्यन्तानुधावनस्य शेषत्वज्ञानपौष्कल्यरूपहेत्वन्तरायत्ततया हेतुदर्शनाधिकरणनयात्समुद्रशरणागतिप्राङ्मुखत्वादिनियमनयाच्च तदंशे विधितात्पर्यं नास्तीति कल्प्येत, तर्हि प्रकृतेऽपि दीयतां दृष्टिः।

अपि च विग्रहैकदेशरूपचरणमात्रोपासनस्य प्रतीकोपासनरूपत्वात्, "भूम्नः क्रतुवत्" इत्यादिन्यायेन प्रतिषिद्धत्वाच्च। चरणग्रहणस्य "वैश्वानरं द्वादशकपालं निर्वपेत्" "यदष्टाकपालो भवति" इत्यादाविव मन्त्ररत्नायनपदोक्तोपायप्रशंसार्थत्वस्यैवाभ्युपगन्तव्यत्वाच्च। अन्यथायनपदे भगवत उपायत्वानुसन्धानं शरणपदे चरणयोरुपायत्वानुसन्धानञ्च विरुद्ध्येयत। न ह्यसञ्जातविरोधिन्ययनपदे शक्तिविस्मरणं विश्वासमान्द्यमनादरं वा प्रामा-

णिकाः सहेरन् । न चैवं सिद्धान्ते पौनरुक्त्यम् । 'घटं घटमिति प्रत्येमी'त्यत्रेव दृष्टिविधिव्यावर्तनार्थत्वेनादोषात्, "अखिलजगत्स्वामिन् अस्मत्स्वामिन्" इतिवन्निरूपकभेदेनादोषाच्च । वस्तुतस्तु मन्त्ररत्नपूर्वखण्डमूलभूतस्य नमश्शब्दस्य "पन्था नकार उद्दिष्टः" इत्यादिना भगवदुपायत्वपरत्वेन परयोजनां प्रदर्शितवताहिर्बुध्न्येनैव पञ्चत्रिंशेऽध्याये "एका त्विच्छा क्रिया शक्तिस्तथान्या तु क्रियात्मिका । प्रथमा परमा लक्ष्मीर्जगत्त्रातुः कुटुम्बिनी । तत्त्वविद्भिरिदं प्रोक्तं द्वितीयेह सुदर्शनम्" इति भगवद्वैयधिकरण्येन प्रथमं सुदर्शनं प्रतिपाद्य "अथ वा भगवानेव स्वयं चक्रस्वरूपधृक् । अत्रस्थित इति प्राज्ञैः कथ्यते पुरुषोत्तमः" इति तत्रैव पुनः सामानाधिकरण्येन प्रतिपाद्य, अनन्तराध्याये "उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् । वर्तते साम्प्रतं चैष उपायार्थैकवाचकः" इत्यादिना "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः" इत्यादिना च भगवदात्मकसुदर्शनविषयतयैव मन्त्ररत्नार्थं योजयित्वा, तद्विषयं मन्त्रराजान्तरमप्युद्धृत्य "अनेनैव प्रपन्नस्य भगवन्तं सुदर्शनम्" इत्यादिना भगवत्सामानाधिकरण्येनैवोपसंहारात्, तेषामेव वचनानां मन्त्ररत्नचरमश्लोकव्याख्यानप्रकरणेषु पूर्वाचार्यैरुदाहरणात्, श्रीवचनभूषणव्याख्याने जनन्याचार्यैश्चरमश्लोकस्य चरमपर्वैकपरतायाः प्रकटीकृतत्वाच्च । द्वये वैयधिकरण्येन चरणशब्देन प्रतिपादितस्य चरमपर्वणश्चरमश्लोके अस्मच्छब्देन सामानाधिकरण्येन प्रतिपादनमित्युभयोरेकविषयत्वसम्भवात्, चरमश्लोके अर्जुनविषयस्य युष्मच्छब्दस्यास्मदाद्युपलक्षणकत्ववत्, आचार्यविषयत्वस्यास्मच्छब्दस्यास्मदाचार्याद्युपलक्षकत्वोपपत्तेश्च वेद्यभेदप्रयुक्तविद्याभेदोऽत्र दुर्निरूप एवेति द्वितीयहेतुरप्यनुपपन्न एव ।

अथ 'शब्दान्तरप्रयुक्तार्थभेदात्' इति तृतीयहेतुरप्यनुपपन्नः । "प्रजापतेस्सभां वेश्म प्रपद्ये" "जनकसुता कृपणां दशां प्रपन्ना" इत्यादिषु प्रोपसृष्टपदधातोर्ज्ञानातिरिक्तगत्यर्थेऽपि प्रयोगसत्त्वात्, 'पद-गतौ' 'व्रज-गतौ' इत्यनयोरैकार्थ्यस्य पठितत्वात्, श्रीलक्ष्मीतन्त्रे सप्तदशेऽध्याये "उपायापायसन्त्यागी मध्यमां वृत्तिमाश्रितः । मामेकं शरणं प्राप्य मामेवान्ते समश्नुते" इत्युपक्रम्य "एवं मां शरणं प्राप्य" "मामेव शरणं प्राप्य" इत्यभ्यस्य "अस्यां स्थितो जगन्नाथं प्रपद्येत जनार्दनम्" इति तस्यैव प्रोपसृष्टपदधातुनोपसंहृत्यानन्तरमेव "प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत्" इति तद्विषये व्रजधातोरपि प्रयुक्ततया तयोरेकार्थत्वावगमात् । न चैवं 'घटं

जानामि' इतिवत् 'घटं व्रजती'त्यपि ज्ञानबोधतात्पर्येण प्रयोगापत्तिः। व्रजधातोर्ज्ञानसामान्यसाधारण्यानङ्गीकारात्, किन्तु मानसक्रियारूपज्ञानविषयतामात्रमङ्गीक्रियते। तच्च प्रकृते प्रार्थनागर्भाध्यवसायात्मकं विधेयज्ञानान्तरम्। "त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः। शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्" इतिवचनात्। अत एव सकृत्त्वनियमवाचो युक्तिः। अन्यथा हि ज्ञानमात्रस्य वस्तुतन्त्रत्वेन नियमयितुं न शक्यते। अतो व्रजधातोः, प्रपूर्वकपदधातोश्च प्राप्तिरूपगतिवाचिनोः प्रकृते मानससिद्धोपायप्राप्तिलक्षणमानसानुष्ठाननिष्ठतया पर्यायत्वात्, तृतीयहेतुरप्यसिद्ध एव।

अथ 'भिन्नार्थकयोर्विवरणविवरणिभावाप्रसिद्धेः' इति चतुर्थहेतुरप्यनुपपन्नः। "आचान्तेन कर्तव्यम्, दक्षिणाचारेण कर्तव्यम्, उपवीतिना कर्तव्यम्" इत्याद्यर्थान्तराभिधायकस्मृतिवाक्यानां वेदविवरणत्वप्रसिद्धेर्दुरपह्नवत्वात्, मन्वन्तरवंशानुचरितपुरावृत्तादिप्रचुराणामितिहासपुराणादीनां तथात्वप्रसिद्धिसत्त्वात्, परपक्षप्रतिक्षेपाद्यर्थान्तरैकपरस्य शारीरकद्वितीयाध्यायस्य तथात्वप्रसिद्धिसत्त्वात्, वर्णस्वरमात्राद्यर्थान्तरपराणां शिक्षादीनां विद्यास्थानतया वेदविवरणत्वसत्त्वाच्च।

न च 'शिक्षादिषु विद्यास्थानत्वव्यवहारो वेदाङ्गत्वव्यवहारश्च परम्परया वेदार्थानुष्ठानोपकारकतयान्यथासिद्धः' इति वाच्यम्; दृष्टसम्भवन्यायेन शब्दरूपाणामङ्गानामर्थप्रत्यायनद्वारैव वेदोपकारकताया वक्तव्यत्वात्। अन्यथा "अधीतसाङ्गसशिरस्कवेदस्य" इति भाष्ये वादार्थजिज्ञासोपयुक्तापातप्रतीतिसामग्रीघटकतयाङ्गानामुपादानमनुपपन्नं स्यात्। लौकिकव्याख्यानान्तर्गतपदच्छेदविग्रहादिस्थानीये शिक्षाव्याकरणे शिक्षामन्तरेण प्रणवनमःपदादीनां सुसूक्ष्मपदविभागज्ञानासम्भवात्, अकारादिषु प्रकृतिप्रत्ययादिविभागस्य व्याकरणमन्तरेण ज्ञातुमशक्यत्वाच्च।

किञ्च - इन्द्रशत्रुस्थूलपृषत्यादिशब्देषु विवक्षितार्थज्ञानं समासविशेषज्ञाननिबन्धनम्। तद्ज्ञानञ्च व्याकरणज्ञानाधीनम्। तच्च स्वरविशेषव्युत्पादकशिक्षासापेक्षमेवेति स्वराद्यर्थान्तरप्रतिपादनद्वारा शिक्षाव्याकरणयोर्वेदविवरणत्वं दुरपह्नवम्।

व्याकरणस्यावयवविभागरूपार्थान्तरबोधनमुखेन वेदविवरणरूपत्वं श्रुत्यैवोक्तम्। तथा चैन्द्रवायवग्रहब्राह्मणे समाम्नायते—"वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्विति, सोऽब्रवीत्, वरं वृणै

मह्यश्चैवैष वायवे च सह गृह्यता इति तस्मादैन्द्रवायवस्सह गृह्यते तामिन्द्रो मध्यतोपक्रम्य व्याकरोत्, तस्मादियं व्याकृतावागुद्यते" (यजुषि - ६ - काण्ड - ४ - प्रश्ने - ७ - अनु) इति । वाक्यकारोऽपि "रक्षोहागमलघ्वसन्देहाः" (व्याकरणे महाभाष्ये - १ - आह्निके) इति वैदिकशब्दार्थसन्देहनिरसनं व्याकरणस्य चरमप्रयोजनमाह । महाभाष्यकारोऽपि "चत्वारि - चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँआविवेश" इति । चत्वारि शृङ्गाणि । चत्वारि - पदजातानि नामाख्यातोपसर्गनिपाताश्च" "चत्वारि वाक्परिमिता पदानि" इति श्रुति मूलत्वं ज्ञापयन् "उतत्वः पश्यन्न ददर्शवाचम्" (महाभाष्ये.- १ - आह्निके) इत्यादिना व्याकरणस्य वेदविवरणत्वमाह ।

ज्योतिषस्यापि "यज्ञकालार्थसिद्धये" इति वेदार्थविवरणात्मकत्वमुक्तम् । वेदे च "संवत्सरमेतद्व्रतं चरेत्" "संवत्सरमुख्यं भूत्वा" इत्यादिषु संवत्सरविधिः । "वसन्ते ब्राह्मणो ग्रीष्मे राजन्यः" इत्यादिषु ऋतुविधिः । "मासि मासि सत्रप्रतिष्ठान्युपयन्ति" मासि मासि मास्यतिग्राह्यान्" इत्यादिषु मासविधिः । "तं पूर्वपक्षे याजयेत्" इत्यादिषु पक्षविधिः । "एकाष्टकायां दीक्षेरन्" "फल्गुनीपूर्णमासे दीक्षेरन्" इत्यादिषु तिथिविधिः । "प्रातर्जुहोति, सायं जुहोति" इत्यादिषु प्रातरादिविधिः । "समयाविषिते सूर्ये" इत्यादिषु क्षणविधिः । "कृत्तिकास्वग्निमादधीत" "चित्रा नक्षत्र भवति" इत्यादिषु नक्षत्रविधिः । न चैषां कालविधीनां ज्योतिश्शास्त्रं विनैवार्थः सुनिर्णयः; तत्तत्कालावच्छेदकानां सूर्यपङ्क्तिस्पन्दादीनामसर्वज्ञदुर्विज्ञेयत्वात्, केषां चिदवच्छेदकानां स्वरूपतः प्रमाणान्तरगम्यत्वेऽपि कालविशेषावच्छेदकताया ज्योतिश्शास्त्रैकसमधिगम्यत्वाच्च ।

निरुक्तस्य वेदविवरणत्वं सुस्पष्टम् ।

छन्दोग्रन्थस्यापि "तस्मात्सप्तच्छन्दांसि चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते गायत्रीभिर्ब्राह्मणस्यादध्यात्, त्रिष्टुभ्भी राजन्यस्य जगतीभिर्वैश्यस्य देवश्छन्दांसि पूर्वम्" इत्यादिषु विधीयमानानां गायत्र्यादीनां मगणयगणादिभिः प्रमाणान्तरानवगतैर्विविच्य ज्ञापकतया वेदविवरणत्वं सिद्धम् ।

एवं षट्स्वप्यङ्गेषु ज्योतिषस्य प्रधानाङ्गत्वं शिक्षायां पठ्यते—"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत-

मुच्यते ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते" (पाणिनीयशिक्षायाम्-४१-४२. श्लोकौ) इति । एवमङ्गानां वेदार्थज्ञानोपयोगित्वात्, तेषां वेदाङ्गतया विद्यास्थानत्वव्यवहारो वेदविवरणत्वाभिप्राय एवेति तुरीयहेतुरपि असिद्ध एव ।

अथ 'मन्त्ररत्नस्य न्यायसिद्धविधिप्रत्ययान्ततयैव शान्ताकाङ्क्षत्वात्' इति पञ्चमहेतुरप्यनुपपन्नः । मन्त्ररत्नस्य विधिप्रत्यये कल्पकाभावात् । न चानुष्ठीयमानार्थप्रकाशकत्वलक्षणमन्त्रत्वस्यानुष्ठानापेक्षत्वात्, तस्य विधिसापेक्षत्वाच्च मन्त्रत्वमेव क्लृप्तकमिति वाच्यम्; विध्यभावस्यानुष्ठानस्यैवाप्रसक्त्याऽनुष्ठीयमानार्थप्रकाशकताया एवासिद्धत्वात्, प्रकृते सिद्धोपायप्रपदनस्य निधिग्रहणवद्रागकारितत्वेन विधिप्रत्ययनिरपेक्षत्वाच्च । न च विनियोजकवचनबलात्, मन्त्ररत्नस्य प्रपदनकरणत्वसिद्ध्या तत्कल्पकसिद्धिः; तादृशवचनबलेनैव तस्य मन्त्रस्य श्लोकोक्तशरणागतिशेषत्वस्यापि सिद्धतया कल्पनावैफल्यात् । "गृह्णीयान्मन्त्रराजानं मां गच्छेच्छरणं नरः" इति वचनेन मन्त्ररत्नं श्लोकोक्तवरणाङ्गतया हि विनियुक्तम् । न च शरणविषयकस्य मन्त्रस्य भगवत्प्रकाशनासामर्थ्यान्मन्त्रसामर्थ्यानुगुण्येन चरणप्रपदनविधिः कल्पनीय एवेति वाच्यम्; तथा सति "निवेशनः सङ्गमनो वसूनाम्" इत्यादिमन्त्रस्येन्द्रप्रकाशकस्य "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति विनियुज्यमानस्यापि गार्हपत्योपस्थानाङ्गत्वं परित्यज्य विधिकल्पनापूर्वकमिन्द्रोपस्थानाङ्गतास्वीकारापातात् ।

किञ्च - उत्तमपुरुषान्ते अस्मिन्मन्त्रे विधिप्रत्ययकल्पनायासोऽपि विफलः । परप्रेरणार्थकस्य विधिप्रत्ययस्यास्मदर्थविषयकत्वासम्भवेनान्वयबाधात् । तथा चोक्तं तान्त्रिकैः "एवं-'ददामि, गृह्णामि' इत्यादौ लडन्तत्वादेव न विधिशक्तिः, विशेषतश्चास्मदर्थविषयोत्तमपुरुषान्तत्वेन परप्रवर्तनात्मकविधिविरोधित्वम्; ततश्च 'यत्रापि अहं दद्यामि'त्यादौ लिङ्प्रत्ययश्रवणमुत्तमपुरुषे, तत्रापि लिङः स्वनिष्ठप्रवर्तनापरत्वमेव लक्षणया, न तु परप्रवर्तनात्मकविधिवाचित्वम्, इति विवेकः" इति । न चैवं मन्त्ररत्नेऽर्थबलाद्विधिसिद्धिरिति, पूर्वाचार्यसूक्तिविरोधः । विधायकवाक्यान्तरसिद्धिपरत्वेन तासान्नेयत्वात् । तस्मात्पञ्चमहेतुरप्यनुपपन्न एव । एतेनायम्मन्त्रः 'वेदबोधितकर्तव्यताकार्थानुष्ठानप्रकाशकः, वेदमन्त्रत्वात्' इत्यनुमानसिद्धेन वाक्यान्तरेण नैराकाङ्क्ष्यासिद्धिरिति प्रत्युक्तम् । चरमश्लोकेन सिद्धसाधनार्थान्तरयोः

प्रसङ्गात् । न चोभयोरर्थभेदात्तदप्रसक्तिः; चरणशब्दस्य निष्कर्षकतया भगव-दात्मकाचार्यपरत्वात्, श्लोके अस्मच्छब्दस्याप्याचार्यरूपभगवत्परत्वाच्च । तयोरर्थैक्यस्योक्तत्वात् । अन्यथा केवलचरणमात्रस्य कार्यापादकगुणानां ज्ञानशक्त्यादीनामभावेन समभिव्याहृतशरणशब्दार्थान्वयदौर्घट्यापत्तेः । एतेन-श्लोकस्थास्मच्छब्दस्येव विग्रहैकदेशलक्षकत्वं स्यादिति प्रतिबन्दी दूरापास्ता । न च निर्दोषश्रुतिश्रावितार्थाविश्वासे चार्वाकाविशेषप्रसङ्गात्, "चरणौ शर-णम्" इति श्रुतिबलादेव केवलचरणमात्रस्याप्युपायत्वमवश्याङ्गीकरणीयमिति वाच्यम्; "नान्यःपन्था अयनाय विद्यते" (पुरुषसूक्तम्) "विष्णुपोतं विना-नान्यत्किञ्चिदस्ति परायणम्" (विष्णुधर्मे - १ - ५९) इत्यादिना वेद्यभूत-सिद्धोपायान्तरनिषेधेन चरणशब्दोपलक्षणताया आवश्यकत्वात् । न चैवं भक्त्यादेरुपायत्वविरोधः; इष्टापत्तेः । तेषां वेद्यभूतसिद्धोपायान्तरत्वाभावेन तद-विरोधाच्च । किञ्च - पराधिकरणफलाधिकरणयोः प्राप्यप्रापकफलप्रदैक्य-स्योक्तत्वेन तद्विरोधाच्च । तथा चानुगृहीतं पूर्वाचार्यैः "श्रीमान्कृष्णः प्रपन्नानां फलदःशरणं फलम् । प्राचामाचार्यवर्याणामिति सिद्धान्तपद्धतिः" (सम्प्रदाय चन्द्रिकायांप्रथमश्लोकः) इति । एतेन - "माधवाङ्घ्रिद्वयोपायः" (पाञ्चरात्रे) इत्यादिना चरणयोरेवोपायोपेयताव्यवस्थापनं प्रत्युक्तम् । चेतनैकान्तस्य फलप्रदस्य चरणयोरसम्भावितत्वेन सिद्धान्तविरोधानिस्तरात् । किञ्च - मन्त्ररत्नोत्तरखण्डे भगवत एव प्राप्यत्वोक्त्या प्राप्यप्रापकैक्यसिद्धान्तनिर्वाहाय चरणपदस्य वा तदुत्तरनारायणपदस्य वा लक्षणेत्यत्र विनिगमनाविरहेण "दध्ना वा दधिना वा तृतीयान्तेन जुहोति" इतिवदनिर्धारणत्वापत्तेः ।

अपि च तत्क्रतुन्यायेन फलवाक्यानुसारेणैवोपासनस्य शिक्षणीयतया चरणशब्दस्यैव लक्षणेत्यत्र विनिगमसद्भावात्, मन्त्रशेषनारायणशब्दोत्तर-खण्डनारायणशब्दसूक्ष्मयोजनायोजितनमश्शब्दान्तर्गताविसर्गायनशब्दादीनां ब-हूनां लक्षणकल्पनापेक्षया लाघवात्, भूयसां न्यायाच्च चरणशब्दलक्षणाया एवावश्यकत्वाच्च । एतेन - अस्त्रभूषणाध्यायोक्तरीत्या दिव्यायुधादीनामिव चरणयोरपि चैतन्यस्यानुक्तिसिद्ध्या चेतनैकान्तोपायत्वोपपत्तिरिति प्रत्युक्तम् । "जगद्व्यापारवर्जम्" (ब्रह्मसूत्रम् - ४ - ४ - १०) इत्यादिषु चेतनान्तराणां मोक्षप्रदानपर्यन्तजगद्व्यापारशून्यतासिध्द्या चैतन्यसिद्धिमात्रस्य तदनुपपाद-कत्वात् । न चैवं चरणशब्दस्य स्वार्थपरित्यागे सत्याश्रयणसौकर्यापादकत-दसाधारणप्रकृतोपयुक्तगुणगणानादरलक्षणमहासाहसप्रसङ्गः; "काकेभ्यो दधि

रक्ष्यताम्" इत्यत्रैव चरणयोरप्युपलक्ष्यान्तर्नीतत्वेन समुद्रे गोष्पदवत् तेषामपि गुणानामादृतार्थान्तर्भावसिद्ध्या तत्प्रसङ्गात्। चरणशब्दस्य केवलचरणमात्रपरत्वं वदतामेवायं महासाहसप्रसङ्गः; निरतिशयवात्सल्यसौशील्यसौलभ्यादीनाञ्चेतनैकान्तानां भगवदसाधारणानां कार्यापादकगुणान्तराणाञ्चोपेक्षणात्।

यत्तु "पशुना यजेत" (शतपथब्राह्मणे ६ - २ - ४ - १२) इति विधेरेव मन्त्रानुसारदर्शनात्, प्रकृतेऽपि विधिवाक्यत्वेन विवक्षितश्लोकस्थास्मच्छब्दस्यैव लक्षणा समाश्रयणीयेति; तन्न, क्षोदक्षमम्। किमत्र पशुशब्दस्य वपाशब्दानुरोधो दृष्टान्तेऽभिमतः - उत च्छागशब्दानुरोधो वा। नाद्यः - पशुशब्दस्य वपालक्षणायां नियामकाभावात्। न च करणत्वानुपपत्तिसहितो "जातवेदो वपायागच्छे"ति मन्त्रवर्ण एव तन्नियामकम्; तृतीयार्थकरणतायास्साक्षात्परम्परासाधारणत्वेन वपायाः करणत्वे सत्यपि तद्द्वारा पशोःकरणताया अबाधितत्वात्। अन्यथा "व्रीहिभिर्यजेत" (आपस्तम्बश्रौतसूत्रं - ६ - ३१ - १४) इत्यादिष्वपि लक्षणाप्रसङ्गात्। पुरोडाशादिद्वारैव तेषामपि करणत्वात्। नापि द्वितीयः - तत्र पशुशब्दस्य विशेषलक्षणाया अनङ्गीकारात्। परन्तु नानार्थकशब्दानां प्रकरणादिनार्थविशेषलाभवदत्रापि पशुशब्दस्य मन्त्रलिङ्गबलात् अर्थविशेषनिर्धारणमात्रमङ्गीकृतम्। न चैतावता पशुशब्दलक्षणा; तथा सति भोजनकाले प्रयुक्तस्य सैन्धवशब्दस्य लाक्षणिकत्वापत्तेः। एतावानेवात्र विशेषः - सैन्धवशब्दः - शक्तिभेदान्नानार्थसाधारणः। पशुशब्दस्त्वेकयैव शक्त्येति। तथा चोक्तं शबरस्वामिना "छागोपकरणमस्योपदंशितम्। यदुपदंशने पशुशब्दश्छागाभिप्राय इति गम्यते। यथा युगवरत्रे उपदंशिते, ईषाचक्रादिसन्निधाने-चेत् 'अक्षमानय" इत्युच्यते। तदा यानाक्षमधिकृत्य ब्रूत इति गम्यते। न तु विदेवनाक्षमिति" (शाबरभाष्ये - ६ - ८ - ३५) इति। किञ्च - चरणशब्दाहंशब्दयोस्सामान्यविशेषरूपत्वाभावेन छागपशुन्यायोऽत्र नावकाशं लभते। तस्मात्पञ्चमहेतुरप्यनुपपन्न एव।

अथ - 'श्लोकस्य मन्त्ररत्नार्थाकाङ्क्षाविरहात्' इति षष्ठहेतुरप्यनुपपन्न एव। श्लोकस्य मन्त्ररत्नविभागे सति तद्गतास्मच्छब्दार्थपुरुषकारवैशिष्ट्यग्राहकाभावात्, तथैव गुणाष्टकवैशिष्ट्यज्ञापकाभावात्, मिथुनानुभवकैङ्कर्यलक्षणप्रधानप्राप्यांशप्रतिपादकाभावाच्च। तेषु तस्याकाङ्क्षासत्त्वेन नैराकाङ्क्ष्यासम्भवात्। एवं मन्त्ररत्नस्य श्लोकविभागे सति तदुक्तोपायस्य "न हि तत्करणं

लोके वेदे वा किञ्चिदीदृशम् । इति कर्तव्यता साध्ये यस्य नानुग्रहेर्थिता" इत्युक्तरीत्याऽङ्गाकाङ्क्षाविशिष्टतया तच्छान्त्ययोगाच्च ।

किं च यदत्र "अतप्ततनूः" (ऋ - वेदे - ७ - ४ - ८॥) इत्यारुणकेतुकाग्निचयनप्रकरणाम्नातावीष्टकाविनियुक्तमन्त्रविशेषस्यैकायनशाखान्तराम्नातस्य "तप्तचक्रं द्विभुजे धार्यम्" (महासुदर्शनोपनिषदि - १ - २॥) इति वाक्यस्य च सामान्यविशेषभावसिद्धवत्कारेण तद्वदत्र सामान्यविशेषभाव इति चोदनामुद्भाव्य तन्निरसनम्, तदप्यनुपपन्नम् । तनुशब्दस्य चतुर्भुजादिसाधारणतया तत्र तनुशब्दद्विभुजशब्दयोः सामान्यविशेषभावसम्भवेऽपि, प्रकृते विशिष्टवाचिनोऽस्मच्छब्दस्य तदेकदेशवाचिनश्चरणशब्दस्य च सामान्यविशेषभावस्य शङ्कितुमप्यशक्यत्वात् । न हि चतुर्भुजादिपिण्डेषु तनुशब्दव्यवहारवत्केवलहस्तपादादिषु अहमिति व्यवहारो दृष्टचरः । "द्विभुजे धार्यम्" इति शतपथाधीतो द्विभुजशब्दो हि न भुजद्वयमात्रपरः; भुजद्वये तप्तचक्रधारणस्यानुष्ठानविरहात् । किं तु बहुव्रीहिसमासेन मानुषपिण्डपर एव । न चैवं तप्तचक्राङ्कनस्य देशविशेषनियमः; "दक्षिणे तु भुजे विप्रः" इत्यादिनैव तन्नियमसिद्धेः ।

अथ यदपि चरमश्लोकपूर्वार्धे मांशब्दस्य तद्विवरणीभूतमन्त्ररत्नपूर्वखण्डस्थचरणशब्देनैकार्थ्याभ्युपगमे, उत्तरार्धे "अहं - मोक्षयिष्यामि" इत्यस्य 'चरणावेव मोक्षयिष्यते" इति विन्यासापादनम्; तदप्यलग्नकम् । उत्तरार्धस्योत्तरखण्डविवरणत्वेनोत्तरखण्डे चरणशब्दाभावेनापादकाभावात् । यदि च प्राप्यप्रापकैक्यमेवात्रापादकतया विवक्षितम् । तर्हि स्वपक्षस्यैवेदं दूषणम् । द्वयोत्तरखण्डे 'प्राप्यप्रापकैक्याय श्रीमते नारायणाय' इत्यस्य 'श्रीमद्भ्यां नारायणचरणाभ्याम्' इत्येव श्रीमतां मते विन्यासापत्तेः । किं च "ब्राह्मणो विद्वानभिजयति । तस्यैवं विदुषः" (तैत्तिरीयोपनिषदि - अम्भस्यानुवाके - ५२॥) इत्यादिषु प्रपत्तेरपि विधिनोपादानात्, "अहं स्मरामि मद्भक्तम्" (श्रीवराहचरमश्लोकः) "साध्यभक्तिस्तु सा हन्त्री" (लक्ष्मीतन्त्रे ) "सा हि ब्रह्मन्परज्ञानभक्त्या परिणतिर्मता" इत्यादिषु भजिनोपादानात्, "श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये" (छान्दोग्ये - ८ - १३ - १॥) इत्यादिषु भक्तेरपि प्रोपसृष्टेन पदिनाऽऽपादनात्, "आत्मानं युञ्जीत" (तैत्तिरीयोपनिषदि - ६ - ५०॥) इति समाध्यर्थकेन धातुनैव प्रपत्तेर्विधानाच्च द्वयपूर्ववाक्ये 'प्रपद्ये' इत्यनेन भक्तिसाधारणाकारेण विद्या-

विशेषप्रतीत्या प्रपत्तावपि "यज्ञेन दानेन"(बृहदारण्यकोपनिषदि - ६ - ४ - २२) इत्यादिना कर्मज्ञानादीनां "नाशान्तो नासमाहितः" (कठोप. १ - २ - २४॥) इत्यादिना समाधिप्रभृतीनाञ्चानुष्ठानस्य प्रसक्ततया चरमश्लोकमन्तरा तन्निवृत्तेरसम्भवेन प्रकरणान्तरस्थकुशाच्छन्दस्तुत्यादिविधिन्यायेन चरमश्लोकस्य द्वयैकवाक्यताया अवश्याश्रयणीयतया तयोर्नैराकाङ्क्षायोगाच्च ।

अपि च - द्वयस्य श्लोकेन सहैकवाक्यत्वाभावे पूर्वखण्डस्य "मन्मना भव"(गीता - १८ - ६५॥) इत्युक्तार्थपरतया तदुत्तरखण्डस्य "मां नमस्कुरु" (गीता - १८ - ६५॥) इत्युक्तार्थपरतया च भक्तिपरत्वापत्त्या तस्यातिरिक्तोपायपरत्वमभ्युपगच्छतां श्लोकेन सह तदेकवाक्यताया अवश्याभ्युपेयत्वाच्च। इदञ्च द्वयशरणशब्दोक्तोपायस्य सिद्धत्वेन "नासाधितन्तु करणम्" इति करणत्वानुपपत्तौ तत्साध्यत्वोपपादकविशेषाकाङ्क्षोत्थानात्, प्रतिबन्धकाभावमुखेन तथात्वोपपादकस्य त्यागविधेरेकवाक्यत्वासिद्धिर्निष्प्रत्यूहैव ।

अतश्च - द्वयोक्तोपायस्य सिद्धत्वेन स्वरूपनिष्पादकाङ्गनैरपेक्ष्ये सत्यपि सिद्धानामपि व्रीहीनां "व्रीहिभिः" इत्युक्तयागकरणत्वनिर्वाहकदृष्टद्वारकावहननवददृष्टद्वारकप्रोक्षणवच्च दृष्टादृष्टद्वारकाङ्गसापेक्षतायाः "न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता" इत्यर्थापत्तिसिद्धत्वेन श्लोकेन तत्पूरणस्य सम्भवतस्त्यागायोगाच्च ।

एतञ्च - ब्रह्मविद्यायां मुमुक्षाधिकारतया तन्निष्ठानां कामादिकार्यदुश्चरितादेरप्रसक्तत्वेऽपि "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।" (कठोप - १ - २ - २४॥):"शान्त उपासीत" (छा - -उप-३-१४-१॥) इत्यादिषु विद्योपकारकत्वज्ञापनार्थं पुनर्विधानवत्, "नानृतं वदेत्" (तैत्तिरीयसं. २ - ५-५-६॥) इति कर्मकाण्डेऽपि तथैव विधानवच्च प्रकृते विकल्पन्यायदुश्शकत्वस्वरूपविरुद्धत्वज्ञानादिभिःप्राप्तस्यैव साधनान्तरपरित्यागस्योपायोपकारकत्वज्ञापनाय "सर्वधर्मान्परित्यज्ये"ति विधानोपपत्त्या श्लोकस्याङ्गाकाङ्क्षापूरकत्वोपपत्तेश्च ।

अन्यच्च - "इतिहासपुराणाभ्यां वेदं समुपबृंहेत्" (भारते आदिप - १ - २९३॥) इति वचनबलात्, सर्वशाखाप्रत्ययन्यायाच्च अनधीतशाखार्थसंवाद्युपबृंहणाकाङ्क्षायास्सर्वसम्प्रतिपन्नत्वेन सर्ववेदसारभूतं मन्त्ररत्नंप्रति सर्वोपबृंहणसारभूतस्य गीतोपनिषत्तात्पर्यस्यैव विशिष्यविवरणत्वसिद्ध्या तयोर्नैराकाङ्क्ष्योक्तेर्बाधितत्वाच्च । तस्मात् "अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे

स्यात्" (पूर्वमीमांसासू-२-१-४६॥) इति न्यायेन द्वयोस्साकाङ्क्षत्वात्, तत्र विधिघटितस्य श्लोकस्यैव प्राबल्यात्, ऐन्द्रीन्यायेन मन्त्रगतशरणशब्द एवान्यथानेय इति "अहमेव मोक्षयिष्यामि" इत्युपपद्यत एव।

किञ्च "तप्ततनूः" "द्विभुजे धारयेत्" इति मन्त्रब्राह्मणयोरुदाहरणं श्रीमतां विवक्षितविपरीतम्। तत्र "द्विभुजे" इति ब्राह्मणानुसारेण मन्त्रगततनुशब्दस्यैव लक्षणाश्रयवदत्रापि मन्त्रगतचरणशब्दस्यैव लक्षणास्वीकारापातात्।

अपिच-"योऽहमस्मि स सन्यजे" (तै-बा-७-५-४॥) इत्याम्नातात्मयागीयस्य हविषः "योदश्शृतस्स रौद्रः, यो विदग्धस्स नैरृतः" इत्युक्तरुद्रादिदेवताकहविषोऽशास्त्रत्तया "यश्शृतस्सदेवानाम्" इति पाके प्राप्ते कृष्णलचरावियाच्छेद्यतादिना मुख्यबाधेन तापमात्रकर्तव्ये तस्यापि संस्कारान्तरवदेव शरीरद्वारकत्वे च सिद्धेशरीरे यत्रकुत्रापि दाहकृतेऽपि शास्त्रार्थनिष्पत्त्या लाघवादनियमे प्राप्ते "तप्तचक्रं द्विभुजे"इत्यनेन "दक्षिणे तु भुजे विप्रः" इत्यनेन च विशेषा नियम्यन्ते। तत्र नियमाः केवलमदृष्टार्था इत्यगत्या स्वीक्रियते। अत्र तु विग्रहानुसन्धानस्यदृष्टे सम्भवत्यदृष्टकल्पनाया अन्यायत्वात्। षाड्गुण्यप्रकाशकस्य विग्रहस्य गुणप्रकाशनरूपोपकारसत्त्वेन "व्रीहीनवहन्ति" (आपस्तम्बश्रौतसूत्रम्। १-७-१०॥) इत्यत्र दृष्टद्वारकत्वनिर्वाहाय तुषविमोकपर्यन्ताद्यात्तिविशेषविशिष्टावहननतात्पर्याङ्गीकारवत्, अत्रापि चरणशब्दस्य सौलभ्यप्रकाशकविग्रहैकदेशवाचिनो यावद्गुणप्रकाशकस्वावयवपर्यन्ततास्वीकारावश्यंभावात्। अत एव प्रकाशनीयगुणक्रमेणैव दिव्यावयवानामनुसन्धानक्रमसिद्धेश्चावश्यं चरणशब्दस्य विशिष्टपर्यन्ततासिद्धेश्च।

अथ चरमहेतुरप्यनुपपन्नः। ब्रह्मास्त्रन्यायेन साधनान्तरपरित्यागस्य प्रतिबन्धकाभावद्वारा दृष्टविधया सिद्धोपायोपकारकत्वसम्भवात्, सिद्धोपायस्यात्यन्तनिरपेक्षत्वे सर्वमुक्तिप्रसङ्गात्, प्रपत्तिसापेक्षत्वे नैरपेक्ष्यविरोधात्, उपायस्य सिद्धताविरोधाच्च, निवृत्तिसापेक्षतायाः पूर्वाचार्यैरङ्गीकाराच्चानुपपत्त्यभावेन श्लोकस्याङ्गांशपूरकत्वेन विवरणत्वसम्भवात्। सिद्धोपायस्यात्यन्तनिरपेक्षत्वे "न हि तत्करणं लोके" इत्युक्तरीत्योपायत्वानुपपत्त्या मन्त्रेणैव तदाकाङ्क्षायाश्शान्त्ययोगाच्च। तस्माच्छ्लोकस्य द्वयविवरणत्वमुपपद्यत एवेति पूर्वाचार्याणां सङ्गतिविशेषोपपादनं समीचीनयुक्तिमूलमेवेति सर्वं समञ्जसम्।

**पञ्चमवेदसारभूतगीतोपनिषत्तात्पर्यस्य चरमरहस्यभूतचरमश्लोकस्यार्थं संशयविपर्ययराहित्येनाह ।**

---

"मध्यमरहस्य" इत्युक्तस्य द्वयरहस्यत्वस्य द्वयप्रकरणोपोद्घात एवोपपादितत्वात्, "चरमरहस्ये"त्युक्तं श्लोके चरमरहस्यत्वमुपपादयति- **पञ्चमवेदे**ति । चरमश्लोकस्य रहस्यत्वं प्रथमे सूत्रे उक्तम् । "भारतः पञ्चमोवेदः" "वेदानध्यापयामास महाभारतपञ्चमान्" (भारते-आदिप-६४-१३१॥) इत्यादिकमत्रानुसन्धेयम् । महाभारतस्योपबृंहणत्वेऽपि उपबृंहणान्तरव्यावृत्त्यर्थं पञ्चमवेदत्वोक्तिः । एतच्च श्रीवचनभूषणव्याख्यानोपोद्घाते प्रमाणोपपत्तिसम्प्रदायप्रदर्शनेनाचार्यचरणैरेव प्रदर्शितम्, तत्रानुसन्धेयम् ।

पञ्चमवेदशब्देन भारतस्योपबृंहणसारत्वमुक्तम् । सारशब्देन गीतायास्सारतरत्वमुक्तम् । पञ्चमवेदसारत्वं लोकविदितमित्याह — **सारभूतेति ।** सारतराः-सारतया भवन्ति । न हि गीतावदुपबृंहणान्तरस्य सार्वजनीनं पारायणमस्तीति भावः ।

कथं गीतायास्सारतरत्वमित्यत्राह—**गीतोपनिषदि**ति । "ब्रह्मण्युपनिषण्णेत्युपनिषत् । "उपनिषत्वाद्वोपनिषत्" इति हि वाक्यम् । "गहने ह्रीयं विद्यासन्निविष्टा" इति तद्विषयं द्रमिडभाष्यम् । "गहने ब्रह्मणि, उपनिषण्णा" इति भाष्यविषया वामनटीका । अद्वारकभगवत्प्रतिपादकत्वमुपनिषण्णत्वम्" इति श्रुतप्रकाशिकोक्त उपनिषत्पदयोगार्थः, "उपनिषदमुदाराम्रुद्वमन्कापि-लक्ष्ये" (सङ्कल्पसूर्योदये-३-अङ्के-१४॥) इत्याद्यभियुक्तव्यवहारश्चात्रानुसन्धेयः। **(तात्पर्यस्य)** - तात्पर्यविषयार्थप्रतिपादकस्येत्यर्थः । चरमश्लोकार्थ एव गीतोपनिषदस्तात्पर्यम् । "ओरुवनैप्पिडिक्क निनैत्तु ऊरै वलैवारॅप्पोले" (श्रीवचनभूषणे-४-२॥) इत्युक्तन्यायेन तदर्थविवरणार्थं "शेषोऽन्यो ग्रन्थविस्तरः" (अग्निषु-६५-१३.) इति भावः । विवरणप्रयोजनमाह—**संशय विपर्ययराहित्येनेति ।** "अज्ञानसंशयविपर्ययनिवृत्त्यर्थं व्याख्यानम्" इति श्रुतप्रकाशिकासूक्तिरत्राभिप्रेता । इदश्चाज्ञानोपलक्षणम् । प्रयोजनाधिक्यात् । संशयविपर्ययोपपादनम्, संशयविपर्ययप्रकारश्च स्फुटी भविष्यति ।

अस्यार्थश्रवणार्थं हि श्रीभाष्यकारा अष्टादशवारं श्रीगोष्ठीपूर्णसमीपं गतवन्तः। पूर्णः स्वयमपि एतदर्थस्य

---

(आह) - तृतीयप्रकरणेनेत्यभिप्रायः। इत्थमेव चरमश्लोकाधिकारे श्रीमन्निगमान्तदेशिकैरनुगृहीता सङ्गतिः। तत्रैव द्रष्टव्या।

एवं द्वयचरमश्लोकयोर्विवरणविवरणिभावनिष्कर्षः कृतः। अथ सङ्गति-वाक्योक्तप्रयोजनसमर्थनम्। चतुर्भिरुक्तिमुखतो वाक्यषट्केण तन्यते -अस्यार्थे ति। श्रीभाष्यकारानुवृत्तिश्रीगोष्ठीपूर्णवराणम् । पूर्वार्योल्लङ्घिकारुण्यं सौकर्य-ञ्चेति हेतवः। संशयादेरयोगश्च पूर्वाचार्याविरुद्धता । उपादेयतमत्वञ्च श्लोके षोढा प्रदर्श्यते। चतुर्विधस्सम्प्रदायो द्विविधो वक्तुरादरः । संशयादिनिवृ-त्यर्थमिदं चरमश्लोकविवरणमित्युक्तम्; तत्र तावद्व्युत्पन्नं प्रति श्लोकस्यार्थ-बोधकत्वात्, संशयाद्ययोग इति शङ्कां शिष्याचार्यसम्प्रदायप्रदर्शनेन द्वेधा परि हरति—अस्यार्थेति वाक्यद्वयेन। (अस्य)--चरमश्लोकस्य। हीतिप्रसिद्धिः, हेतुश्च द्योत्यते। अत्र - 'आपाततःप्रतीतिस्स्याद्व्युत्पन्नस्यात्र यद्यपि। परीक्षक-प्रमा नैव भाष्यकारानुवर्तनात्' इत्यभिप्रायः।

अथ 'श्रीभाष्यकारैरभिनिवेशातिशयात् अष्टादशकृत्वो गमनेऽपि परम-कारुणिकैः श्रीगोष्ठीपूर्णमिश्रैः कि मिति तन्न विचारितम्' इति शङ्कां परि-हरन्, पूर्वाचारविरोधमुत्तरत्र परिहर्तुमुद्घाटयन्, संशयादिसम्भवं द्रढयति— पूर्ण इत्यादिना। 'पूर्णः, स्वयम्' इति पदद्वयेनान्वर्थनामधेयशालितया परम-कारुणिक इति शङ्काबीजं व्यज्यते । अपिशब्देन 'अनेककालम्' इत्यादेः 'म्लानियुक्तान्कृत्वे'त्यन्तस्य योग्यताम्, 'गतवन्तः' 'कृपां कृतवान्' इति पूर्वोत्तरवाक्यार्थयो स्समुच्चयश्च द्योतयति। (एतदर्थस्य)इति-अत्र "आवृ-णोति विवृणोति वीक्षते" इति न्यायो द्रष्टव्यः। (अस्ये) त्यादि - एतच्च 'निष्कृष्टसत्त्वनिष्ठः' इत्यादिना 'आस्तिकाग्रेसरः' इत्यन्तेन षट्प्रकारेण विव रिष्यति। अत्र सर्वेषां पुरुषाणामनादिवासनया स्वप्रवृत्तिप्रयोजनपरत्वादिति

गौरवम्, अस्याधिकार्यभावं च दृष्ट्वा हि अस्यास्तिक्या-दरपरीक्षार्थमनेककालं सञ्चारयित्वा ग्लानियुक्तान्कृत्वा, शपथपूर्वकमासोपवासान्कारयित्वा दौर्बल्यं कृत्वा कृपां कृतवान् ।

---

भावः । तेषामत्यन्तपरीक्षणासामर्थ्येनापातप्रतीतिप्रावण्यादिति च भावः । 'हि' इति पूर्ववत् । (अस्य)—श्रीभाष्यकारस्य । (आस्तिक्ये)ति-शास्त्रोक्तमतमतिमान् - आस्तिकः । आस्तिक्ये सत्यपि आपातप्रतीतिर्दूरसिं विनानादिसिद्धस्वयत्नस्वफलवासनया श्लोकार्थनिष्ठायामरुचिश्च विना तद-र्थात्यन्तबुभुत्सा - आदरः । परमात्मनो निर्हेतुकोपायत्वादिरूपार्थगौरवमा-लोच्य, तदस्तीतिमतिः—परीक्षिता । उक्तरीत्याधिकारिदौर्लभ्यमालोच्यादरः परीक्षित इति भावः । उपकोसलविद्याप्रजापतिविद्याकठवल्लीप्रभृतिप्रसिद्धान् "परीक्ष्य विविधोपायैः" (शाण्डिल्यस्मृतौ १-११७ ॥) इत्युक्तान् निवर्तनो-पायानाह - अनेककालमि त्यादि । 'सञ्चारयित्वे' त्यस्य 'ग्लानि' इत्य-नेनान्वयः । प्रस्थापनानि म्लानिश्च शपथस्समुपोषणम् । शुश्रूषादिक्लेशनश्च प्रकृते हेतुपञ्चकम् । म्लानिः - अत्र बहुकृत्वो गमनेऽपि स्वात्यन्ताभिलषित-श्लोकार्थोपदेशव्यतिरेकशङ्कातिरेकजनितं देहकार्श्यम् । (शपथपूर्वके)ति-एतत्प्रकारः श्रीमद्गुरुपरंपराप्रभावेऽप्युक्तः । (मासोपवासान्कारयित्वा)-'सह व्याधिनाऽनशितुं दध्रे' इतिवत् । (दौर्बल्यंकृत्वा)—गोबलीवर्दन्यायेन शुश्रूषादिकं विवक्षितम् । एवं शिष्याचार्याभ्यां शिष्यशिक्षार्थं संशयाद्यधीन-जिज्ञासाप्रकाशनपरीक्षणाभ्यां संशयादिमम्भवेन "संशयविपर्ययराहित्ये-नाह" इत्यन्वयः ।

अथ पूर्ववाक्योक्ताधिकारिदौर्लभ्यं प्रपञ्चयन्, पूर्वाचारविरोधशङ्काञ्च व्यञ्जयन् "तर्हि पूर्वाचार्यैः किमिति चरमश्लोकार्थो न निबद्धः' इति शङ्कां

'निष्कृष्टसत्त्वनिष्ठः, परमात्मनि रक्तः, अपरमात्मनि वैराग्यनिष्ठः, प्रमाणपरतन्त्रः, भगवद्वैभवे श्रुते 'इदमुपपन्नम्' इति विस्रम्भबाहुल्यवान्, आस्तिकाग्रे-

---

परिहरति - **निष्कृष्टेत्या**दिना। "जायमानं हि पुरुषम्" (भारते शान्तिमो ३८८-७३॥) इत्युक्तरीत्या निर्हेतुककटाक्षलब्धं मोक्षार्थचिन्ताहेतुभूतं लोकविलक्षणं सत्त्वम् - निष्कृष्टसत्त्वम्। तत्र निष्ठा-निश्चलास्थितिः, यस्य स इत्यर्थः। "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" (बार्हस्पत्यस्मृतिः) इति वचनम् - **परमात्मनी**त्यादिना स्मारितम्। अत्रापुरुषार्थमोक्षार्थिप्रतिक्षेपार्थमादिमम्। अत्रार्तादिनिवृत्त्यर्थं द्वितीयश्च विशेषणम्। प्रमाणस्वारस्यात्मगतकैङ्कर्यरसिकत्वम् — प्रमाणतन्त्रत्वार्थः। प्रमाणपारतन्त्र्यनिष्ठामाह— **भगवदि**त्यादिना। भगवच्छब्देन वक्ष्यमाणविश्वासातिशये हेतुर्व्यज्यते। देवकीजठरे वासस्स्वोदरे विश्वदर्शनम्। सान्दीपिनिसुतानीतिशिलास्त्रीत्वादिकं तथा। करणादिप्रदानस्य यौगपद्येऽप्यनुग्रहः। सदूर्वकोसलारोह इत्यादिर्वैभवो विभोः। **(श्रुते)** "काक्कैत्रायिलुम्" (मुदलायिरप्रबन्धे ८-१-१॥) इत्यादिरीत्या यतःकुतश्चिच्छ्रवणमात्रं विस्रम्भबाहुल्यनिमित्तमिति भावः। 'श्रुते' इत्युत्तरत्रान्वेति। "वक्ता श्रोता च दुर्लभः" (रामायणे-आर-३७-२॥) इति भावः। अनुपपत्तिप्रतिसन्धानाभावमात्रं विना श्रुतस्योपपत्त्युपन्यासो विस्रम्भातिशयसूचक इति भावः। **(विस्रम्भे)**ति - "मन्त्रे तीर्थे द्विजे दैवे दैवज्ञे भेषजे गुरौ। यादृशी भावना यत्र सिद्धिर्भवति तादृशी" (शेषसंहितायां २-३६॥) "विश्वासः फलदायकः" इत्यादिकमिह भाव्यम्।

अत्र "सारासारविवेकज्ञा गरीयांसो विमत्सराः। प्रमाणतन्त्रास्सन्तीति कृतो वेदार्थसङ्ग्रहः" इति श्रीमद्वेदार्थसङ्ग्रहान्त्यश्लोकोऽनुसन्धेयः। अत्राद्येन विशेषणेन "सारासारविवेकज्ञाः" इति फलितम्। "सत्त्वात्संजायते ज्ञानम्" (गीता-१४-१७॥) इत्युक्तेः। द्वितीयेन "गरीयांसः" इत्युक्तमुक्तम्। "स च-पूज्यो यथाह्यहम्" (गारुडपु-पूर्वखण्डे-२१९-१०) इत्युक्तेः। तृतीयेन 'विम-

**सरः कश्चिदस्ति चेत्, स एतच्छ्लोकार्थश्रवणानुष्ठानस्याधिकारी' इत्यधिकारिदौर्लभ्यात्, अर्थगौरवाच्चेदमप्रकाश्य छादितवन्तः भाष्यकारात्पूर्वे/। संसारिणां दुर्गतिं**

---

त्सराः" इति फलितम्। चतुर्थपञ्चमाभ्याम् "प्रमाणतन्त्राः" इत्युक्ते फलिते इत्यनुसन्धेयम्। वेदान्तश्रवणाधिकारादपि अधिकमधिकारमाह –**आस्तिके**-ति। 'स्वप्रवर्तितसकलशास्त्रमर्यादोल्लङ्घनेन निरङ्कुशस्वतन्त्रो भगवान्निर्हेतुककटाक्षेण केवलस्वार्थतया काश्चिदङ्गीकरोति' इत्युक्ते तत्र दृढाध्यवसायवान् -आस्तिकाग्रेसरः। **(कश्चिदस्तिचेत्)** "कश्चिन्मां वेत्ति तत्त्वतः" (गीता-७-३॥) "सुदर्लभः" (गीता-७-१९॥) "उल्लीरेल्" (पल्लीण्डु-३॥) इत्यादिकमत्रानुसन्धेयम्। **(एतच्छ्लोकार्थश्रवणानुष्ठानस्य)** - 'श्रवणश्चानुष्ठानश्च'इति समाहारैकवद्भावः। शरणवरणशोकनिवृत्त्योरनुष्ठानस्येत्यर्थः। अत्रानुष्ठानं यथा योग्यं द्रष्टव्यम्। "किमर्थं शोकसागरे निमग्नः" इति सूक्तिरीत्या भगवानेव मुक्तिप्रतिबन्धकानिष्टार्त्तिं करोति; मया न शोकःकार्य इति, स्वस्वत्वभ्रमादिकं विनिवर्त्य निर्भरत्वानुसन्धानमित्यादिकं बोध्यम्। अत्र 'आद्यविशेषणपञ्चकं श्रवणाधिकारः। चरमम् अनुष्ठानाधिकारः' इत्यवधेयम्। "अधिकारी, इति' इति "अधिकारिदौर्लभ्यात्" इत्यत्रहेतुः। इतिशब्दो हेतुपरः। "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" (अमरकोशः-३-काण्ड-ना-अ-७॥) इति निखण्डुदर्शनात्'। अनन्तरहेतुद्वयम्—"छादितवन्तः" इत्यत्रहेतुः।

'भवतु पूर्वाचार्यैर्गोपनम्, ततः प्रकृते किमायातम्' इति शङ्काम् 'तर्हि-कथं पूर्वाचार्योल्लङ्घनेन लोकाचार्यैर्निबन्धनं कृतम्' इति शङ्काञ्च परिहरति— **संसारिणामि**त्यादिना। **(उत्कूलकृपया)** इति तत्प्रकारश्च - शपथोल्लङ्घनम्, स्वानर्थानुमतिरित्यादिरूपेण प्रसिद्धः। अनुगृहीतञ्च श्रीशुद्धसत्त्वगुरुचरणाभिधानैः द्राविडागमदेशिकैः श्रीभाष्यकारातिमानुषस्तवे—"चरणयुगलवृत्त्या शारदापीठगत्या भुवनविदितकाञ्चीपूर्णनित्यानुवृत्त्या। शुभगुरुशपथञ्च स्वैरमुल्लङ्घ्य सूक्त्या क्षितिमवितुरहो ते केयमार्तानुकम्पा" इति। कृपा-

दृष्ट्वाऽसहिष्णुतयोत्कूलकृपयार्थस्य वैभवमदृष्ट्वाऽनर्थानेवालोक्य प्रकाशितवन्तो भाष्यकाराः ।

एवमुपदेशमात्रं विना इममर्थं सर्वेषां ज्ञात्वा यथोज्जीवनं स्यात्, तथा परमकृपया खलु अमुमर्थं बहुषु

---

स्वरूपमाह—**असहिष्णुतये**ति । **(अनर्थानेवालोक्य)**-वैमुख्यादिकमनालोक्येत्यर्थः । अनर्थदर्शनं कृपाया हेतुः । अर्थगौरववैमुख्याद्यनालोकने हेतुः-**उत्कूले**ति । **(प्रकाशितवन्तः)**इति "मन्त्रं यत्नेन गोपयेत्" (शेषसंहि-१४-५॥) इत्युक्तार्थस्य "आनृशंस्यं परोधर्मः" (श्रीरामायणे सुन्दर-३८-४१॥) इत्युक्तमानृशंस्यमपवाद इति भावः । 'यद्यप्यपारकारुण्यं पूर्वाचार्येष्वपि स्थितम् । भविष्यदवतारन्तु ज्ञात्वा तैस्तदुपेक्षितम्' इति भावः ।

ततोऽपि प्रकृते किमायतमिति शङ्काम्, 'तर्हि श्रीभाष्यकारनिष्ठा वा किमिति लोकाचार्यैर्नाश्रिता' इति शङ्काञ्च परिहरन्, 'यदर्थप्रतिपादनार्थं पूर्वाचार्यैर्गोपनं, श्रीभाष्यकारैः प्रकाशनञ्च कृतम्' इति पूर्वस्मिन्वाक्यद्वये निर्दिष्टं तं प्रकृतार्थमाह - **एवमि**त्यादिवाक्येन । स चार्थः-पूर्वाचार्यातिलङ्घिपरमकारुण्यरूपो हेतुः । **(एवम्)** श्रीभाष्यकाररीत्या । **(उपदेशमात्रम्)** इति मात्रशब्देन निबन्धनं व्यावर्त्यते । अत्र 'रचयिष्येऽतिसुगमां रहस्यत्रयटिप्पणीम् । इति तद्याकृतौ यत्नो यतिराजेन नादृतः' इति स्वावताररहस्यमभिप्रेतम् । स्वावतारेति - स्वस्य - श्रीरामानुजार्यस्य । वरवरमुनिवर्यः श्रीरामानुजाचार्यावतारभूत इति रहस्यमित्यर्थः । **(इममर्थम्)** - "अर्थस्य गौरवम्" "अर्थस्य वैभवम्" इति पूर्वोक्तसारतमार्थम् । **(सर्वेषाम्)**-पाश्चात्यानाम् । **(परमकृपया)** - पारम्यं-उपदेशार्थकृपामपेक्ष्य निबन्धनार्थकृपाया आधिक्यम् । **(खलु)** इति-प्रसिद्धिः, हेतुश्च द्योत्यते । **(बहुप्रबन्धेषु)**-श्रियःपतिप्पडि, यादृच्छिकप्पडि, परन्दपडि, तनिप्रणवम्, तनिद्वयम्, तनिचरमम्' एतेषु षट्सु । एकविषये नानाप्रबन्धनिर्माणनिबन्धनमाह—

प्रबन्धेषु संग्रहविस्तररूपेणोक्तवन्तः। अस्मिन्प्रबन्धे हि अन्यप्रबन्धवैलक्षण्येन स्त्रीबालानामप्यधिकर्तुं विशद-मुक्तवन्तः।

---

**सङ्ग्रहे**ति। सङ्ग्रहविस्तररूपेण निर्माणनिबन्धनञ्च मूलमन्त्रप्रकरणोपोद्घाते प्रपञ्चितम्। **(उक्तवन्तः)** - चित्तसन्निधानात् लोकाचार्या इत्यर्थः।

तर्हि तैष्पद्प्रबन्धैरेवास्य गतार्थत्वादिति शङ्कायां चतुर्थं हेतुमाह—**अन्यप्रबन्धे**त्यादिना षष्ठेन वाक्येन। **(स्त्रीबालानामपि)** - अपिः - अयोग्यत्वसूचकः। भगवत्कटाक्षविशेषात्तेषामपि सम्भव इति भावः॥ * ॥

(१) इत्थं सङ्गतिसाफल्ये साधयित्वाथ वाक्यशः।
व्याचिख्यासुर्वाक्यमाद्यं व्याख्यारूपं विवाक्षति॥

"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपस्य समाधानं व्याख्यानम् पञ्चलक्षणम्" (पाराशरपुराणे - १६-१७।) इति व्याख्या-प्रकारः। तत्राद्यवाक्यस्य वाक्ययोजनान्तेषु अनन्तर्भावात्, आक्षेपसमाधान-रूपत्वं व्यञ्जयन्, श्लोकव्याख्याने प्रवृत्तस्य नामधेयनिर्वचनमप्रस्तुतमिति शङ्कां परिहर्तुमाद्यवाक्यमवतारयति—**तत्रे**त्यादिवाक्येन। **तत्र**-चित्तसन्नि-धानात्तृतीयप्रकरणे इत्यर्थः। **(प्रथमम्)**-आद्यवाक्ये। यद्यपि "पूर्वं केषु-चिदुपायेषु इत्यारभ्य" इति प्रतीकमुपादास्यते, तथाप्यन्तावधिलाभाय 'प्रथ-मम्' इत्युक्तम्। आनुपूर्वीप्रदर्शनाय पुनःप्रतीकोपादानम्। अत्र "हृदयगतं कर्तुम्" इत्यन्तं वाक्यप्रयोजनकथनम्। "अस्ये"त्यादिकं वाक्यार्थकथ-नम्। अत्र 'चरमश्लोकव्याख्याने प्रवृत्तो लोकाचार्यस्तदुपोद्घाततया श्लोका-न्तरपरित्यागेनास्यैव श्लोकस्य व्याख्याने किं नियामकम्' इत्याक्षेपस्य 'तस्यैवोपादेयतमत्वात्' इति समाधानार्थमादिमं वाक्यमनुगृहीतवान्' इति व्यङ्ग्योऽर्थोऽभिप्रेतः। "इदन्तु ते गुह्यतमम्" (गीता ७-१।।) इति निर्दिष्टादपि अधिकोपदेशारम्भरूपस्य "सर्वगुह्यतमं भूयः" (गीता १८-६४।।) इति भगव-द्गीतोपनिषद्गतवचनस्य सत्त्वात्, तन्मुखेनैव वैभवख्यापनसम्भवे तन्मूलकाभि

(१) तत्र प्रथममस्य श्लोकार्थस्य गौरवं सर्वेषां हृदय-गतं कर्तुमस्य तु 'चरमश्लोकः' इति श्रीनाम्नो हेतुमाह-पूर्वं केषुचिदुपायेष्वित्यारभ्य ।

---

युक्तव्यवहारप्रदर्शनमनुचितमित्यत्राह— **सर्वेषां हृदयगतं कर्तुम्**इति । वचनमुखेन वैभवस्य स्त्रीबालैः पूर्वापरपर्यालोचनविधुरैः दुरधिगमत्वात्, अभियुक्ततमपूर्वाचार्याभिमतचरमश्लोकव्यवहारमुखेन वैभववर्णनस्य स्त्रीबालानामपि हृदयङ्गमत्वाच्च यथाश्रुतमेवोचितमिति भावः ।

ननु 'चरमश्चासौ श्लोकश्च' इति योगवृत्त्या कस्मिंश्चित् श्लोकसमुदाये विद्यमानान्तिमश्लोके चरमश्लोकत्वस्य लोकप्रसिद्धत्वात्, मोक्षोपायोपदेशश्लोकेषु प्रकृतश्लोकस्यान्तिमत्वेन प्रसिद्धार्थपरिग्रहसम्भवाच्च चरमोपायप्रतिपादकत्वरूपार्थान्तरकथनमयुक्तमिति शङ्कायां वाक्यतात्पर्यविषयार्थमाह— **अस्ये**ति । अस्य - श्लोकस्येत्यर्थः । तुना चरमश्लोकव्यवहारोऽस्मिन् श्लोके असाधारण्येन विशिष्यास्तीति व्यज्यते । **(श्रीनाम्नो हेतुः)** - सत्यं चरमश्लोकशब्दो यौगिक इति; किन्तु द्विरेफादिपदवत् श्लोकविशेषे व्यवहारप्रसिद्ध्या यौगिकनामधेयम् । वैवक्षिकान्तिमश्लोकत्वस्य 'उपाये चरमः, उपेये चरमः' इत्यादिष्वतिप्रसङ्गात् । तत्रापि न सामान्यतो नामत्वमात्रम्, किन्तु श्रीमत्त्वविशिष्टं नामत्वम् । श्रीमत्त्वम् - प्रतिपाद्यवैलक्षण्यम्, वक्तृवैलक्षण्यञ्च मूलोक्तम् । वक्तृवैलक्षण्यम् - अभियुक्ततमपूर्वाचार्यकर्तृकप्रचुरप्रयोगविषयत्वात् । तत्र पूर्वाचार्यकर्तृकप्रचुरप्रयोगविषयत्वरूपश्रीमत्त्वं नामत्वकल्पकम् । प्रतिपाद्यवैलक्षण्यरूपं श्रीमत्त्वं - सिद्धस्य नामत्वस्य निर्वाहकम् । प्रवृत्तिनिमित्तार्थकत्वात् । तथा च वक्तृवैलक्षण्यरूपश्रीमत्त्वविशिष्टनामत्वे हेतुः - मूलोक्तमर्थद्वारकं चरमत्वमेवेत्यर्थान्तरकथनं युक्तमिति भावः ।

अत्र तावत्तृतीयप्रकरणस्य करिष्यमाणत्वेन द्वितीयप्रकरणस्य प्रकृतत्वेन च वक्तृश्रोतृबुद्धिस्थत्वात्, 'पूर्वम्' इत्यत्रावध्यवधिमत्त्वभ्रमं वारयति—

## ॥ श्रीमते रामानुजाय नमः ॥

## श्रीमल्लोकगुरुप्रसादितमुमुक्षुप्पडिरहस्ये चरमश्लोकप्रकरणारम्भः ॥



मू॥ कीले शिल उपायविशेषङ्ङलै उपदेशिक्क, अवै 'दुश्शकङ्ङल्' एन्नुम्, 'स्वरूपविरोधिहल्' एन्नुम् निनैत्तु, शोकाविष्टनान अर्जुननैक्कुरित्तु अवनुडैय शोक निवृत्यर्थमाह 'इनि इदुक्कव्वरुहिल्लै' एन्नुम्बाडियान चरमोपायत्तै अरुलिच्चेय् हैयाले 'चरमश्लोकम्' एन्नु इदुक्कु प्पेरायिरुक्किरदु ॥ १ ॥

छा॥ पूर्वं केषु चिदुपायविशेषेषु उपदिष्टेषु ते 'दुश्शकाः' इति च 'स्वरूपविरोधिनः' इति च स्मृत्वा, शोकाविष्टमर्जुनं प्रति तस्य शोकनिवृत्यर्थं 'इत उत्कृष्टो नास्ति' इति चरमोपायस्यानुगृहीतत्वात् 'चरमश्लोकः' इत्यस्य नाम भवति ॥ १ ॥

व्या॥ अस्मात् श्लोकात्पूर्वमनेकेष्वध्यायेषु

---

अस्मादिति । 'अस्मात्' इत्यनेन श्लोकोऽपि व्याख्येयतया बुद्धिस्थ इति सूच्यते । अपरपदार्थान्वययोग्यतानुसारेण श्लोक एवावधिरिति भावः । अवधिमत्प्रतीतेर्योग्यतापरामर्शसापेक्षत्वात् तदप्रतिपत्तिं परिहरन्, उपेयादेरपि गीतायामुपदेशात् कार्त्स्न्येन 'पूर्वमुपायोपदेशः' इत्ययुक्तमिति शङ्काञ्च परिहरति—**अनेकेषु** इति । "उपरितनभागावसेयस्य ब्रह्मज्ञानस्य" (श्रीभाष्ये-१-११।) इति श्रीभाष्यसूक्तिप्रकारेण प्राचुर्यप्राधान्याभ्यां गीताशास्त्र

**कर्मज्ञानादिषु केषुचिदुपायविशेषेषु स्वप्राप्तिलक्षणमोक्ष-**

स्योपायपरत्वमेव । उपेयादिप्रतिपादनन्तु तत्र तादर्थ्येन क्रियत इति भावः । 'केषुचित्' इत्यत्र 'केचनोपाया उपदिष्टाः, केचनोपाया नोपदिष्टाः' इति भ्रमस्स्यात्; तद्व्यावृत्तिलाभायोपायव्यक्तिबहुत्वपरतामाह—**कर्मे**ति। आदि-शब्देन - भक्तियोगावताररहस्यपुरुषोत्तमज्ञानादिकं गृह्यते। 'उपायविशेषोपदेश-मात्रेण दुश्शकत्वस्वरूपविरोधित्वबुद्धिर्न घटते । सुकरस्वरूपानुरूपोपाय-विशेषाणामप्युपदेशसम्भवात्' इति शङ्कापरिहाराय, वस्तुतो दुश्शकत्वादि-विशिष्टस्वरूपा एवोपायविशेषा उपदिष्टा इति वास्तवस्वरूपप्रदर्शकतया 'केषुचित्' इति पदं सार्थकमिति भावः ।

'उपायविशेषेषु' इत्यस्य विवरणम्—**स्वप्राप्ती**ति । उपायशब्दस्य ससम्बन्धिकत्वेन, मोक्षसाधनपदेन मोक्षरूपसम्बन्धिनिर्देशः । कैवल्योपाय-स्यापि "जरामरणमोक्षाय" (गीता-६-२९॥) "यदक्षरं वेदविदो वदन्ति" (गीता७-११॥) "ओमित्येकाक्षरं ब्रह्म" (गीता ८-१३॥) इत्यादिषूपदिष्टत्वात्, तस्मिन्दुश्शकत्वादिज्ञानस्य वक्ष्यमाणशोकानुपयोगाच्च तद्व्यावर्तकं विशेषपद-मित्याभिप्रायेण— **स्वप्राप्तिलक्षणे**त्युक्तम् । स्वशब्दः-सन्निहितोपदेशकर्तृ-परः । ननु कर्मादीनां प्राप्तिसाधनतया पूर्वमुपदेशे तत्स्थाने वक्ष्यमाणस्य सिद्धोपायस्य कथं "मोक्षयिष्यामि" इति मोक्षसाधनतयोपदेश इत्यत्राह— **प्राप्तिलक्षणमोक्षे**ति । "भावान्तरमभावः" इत्यङ्गीकारेण प्राप्तिरेव मोक्ष-इति नोक्तदोष इति भावः ।

ननु "शरणंव्रज" इत्यत्र शरणशब्देन कर्माद्युपायान्तरस्थाने स्थित्वा फलप्रदत्वमुच्यते इति कैश्चिदुक्तम्—यदि 'चरमोपायस्य' इत्यत्र विवक्षितं स्यात्; तदा "शोकनिवृत्त्यर्थम्" इति व्याहतम् । करणे अनुष्ठित एव देव-ताया द्वारतया फलप्रदत्वेन शरणागतं प्रति ईश्वरस्य फलप्रदत्वमात्राङ्गीकारे शरणागतेरेव करणत्वापत्तौ स्वरूपविरोधज्ञाननिबन्धनशोकनिवृत्त्यनुपपत्ते-रिति शङ्कायाम्, शरणपदस्य करणपरत्वसूचनाय चरमोपायशब्दः करणरूप-साधनपर इति विवक्षन्, "सर्वधर्मान्" इत्यत्र त्याज्यधर्मस्थाने स्थितस्य "माम्" इत्युक्तेश्वरस्य शरणशब्देन निर्देशात्, धर्मशब्दस्यालौकिकश्रेयस्सा-धनपरत्वाच्च शरणशब्दस्साधनपर एवेति न्यायं सूचयितुं धर्मशब्दसमानार्थ-

साधनत्वेन विस्तरेणोपदिष्टेषु

कस्य "केषुचिदुपायविशेषेषु" इत्यत्रोपायशब्दस्य साधनपरत्वमाह— मोक्षसाधनत्वेनेति। यद्यपि 'स्वप्राप्तिलक्षणमोक्षसाधना उपायविशेषाः' इति वक्तुमुचितम्; तथापि वस्तुतस्तथाभूतानामपि कैङ्कर्यरूपेणोपदेशे वक्ष्यमाणरीत्या कैङ्कर्यरूपाणां तेषां यावच्छक्त्यवश्यानुष्ठेयत्वात्, स्वरूपानुरूपत्वाच्च वक्ष्यमाणशोकानुपपत्तेः। मूले 'उपायविशेषत्वं नोपदेशक्रियोपलक्षणम्; किन्तु तद्विशेषणम्' इत्यभिप्रायेण—साधनत्वेनेत्यनुगृहीतम्।

ननु मूले चरमश्लोकशब्दप्रवृत्तिनिमित्तकथनावसरे, चरमशब्दस्य प्रवृत्तिनिमित्तमात्रमुक्तम्; न तु श्लोकशब्दस्येति न्यूनतादोषप्रसङ्गः। चरमशब्दस्य लोकप्रसिद्ध्यापेक्षिकान्त्यपरत्वे अतिप्रसङ्गात्। चरमशब्दचरमवाक्यादिरूपेण व्यवहारं विना चरमश्लोकव्यवहारे निमित्तस्यावश्यवक्तव्यत्वादौच्छिकत्वन्तु अगतिरिति शङ्कायाम्, मूले दुश्शकशब्देन शोकहेतुभूतं ज्ञातुमशक्यात्वम्, शोकनिवृत्तिशब्देन ज्ञातुमशक्यत्वनिबन्धनशोकनिवृत्तिम् "केषुचिदुपायविशेषेषु" इत्यनेन ज्ञानाशक्तिहेतुं ज्ञातव्यबाहुल्यम् "चरमोपायस्य" इत्यनेन तत्प्रतिकोटिज्ञातव्याल्पत्वञ्च विवक्षित्वा ज्ञातव्यस्याल्पस्योपदेशात्, चरमार्थप्रत्यायकं श्लोकमात्रमित्यभिप्रेत्य चरमश्लोकव्यवहारः इत्यभिप्रायाश्रयणान्न न्यूनतादोषः।

एवं 'ज्ञातव्योपायबहुत्वाल्पत्ववत्, ज्ञापकबहुत्वाल्पत्वे अपि श्लोकशब्दप्रवृत्तिनिमित्ततया "उपदिष्टेषु" "अनुगृहीतत्वात्" इति पदाभ्यां विवक्षिते। कर्मज्ञानादीनां साङ्गोपाङ्गतया ज्ञातव्यत्वेन तत्र साङ्गोपाङ्गोपदेशानामपि ज्ञातव्यत्वात्, प्रकृते वरणरूपाङ्गस्य त्यागरूपोपाङ्गस्य च सिद्धोपायेन सह श्लोकमात्रेण ज्ञातुं शक्यत्वाच्चातो न न्यूनता दोषः' इति परिहारमभिप्रेत्य प्राथमिकोपदेशक्रियां विशिनष्टि—विस्तरेणेति। "प्रथने वावशब्दे" (पाणिनीये-३-३-३३॥) इत्यनुशासनमभिप्रेतम्। अनेनोत्तरत्र 'सङ्ग्रहेणानुगृहीतत्वात्' इत्यर्थो व्यज्यते।

'उपदिष्टेषु' 'अनुगृहीतत्वात्' इति पूर्वोत्तरसूक्तिमहिम्ना 'चरमश्लोकः कृपामात्रप्रसन्नेश्वरप्रोक्तः, अन्यत्सर्वं पूर्वशास्त्रं न तथा' इति वैषम्यं प्रतीयते। न च तद्युक्तम्। पाण्डुतनययुद्धप्रोत्साहनव्याजेन सर्वस्यापि चास्मदादि-

# अनुगृहीतेषु श्रुत्वा, 'कायक्लेशरूपत्वात्, इन्द्रियजयस्य दुस्साध्यत्वात्, सावधानेन चिरकालसाध्यत्वाच्च 'ते अनुष्ठातुमशक्याः' इति च,

पर्यन्तचेतनोज्जीवनाय निर्हेतुककृपया प्रवर्तितत्वात्। अतः - 'उपदिश्यानुगृहीतत्वात्' इत्येवं वाक्यशैली परिग्राह्या। एकत्रकृपोक्तावन्यत्रापि सा स्वतस्सिध्यतीति न कण्ठोक्तिः। एवञ्च 'प्रथममेव चरमोपायः किमिति न प्रदर्शितः' इति शङ्का रत्नकरीषसमावेशन्यायेन दुष्करत्वादिदूषितसाधनान्तरप्रदर्शनपूर्वकं चरमोपायप्रदर्शनेन, तस्य परभागातिशयसिध्यर्थं निर्हेतुककृपयैवोभयं प्रदर्शितमित्येवं परिहृता भवतीत्यभिप्रेत्याह — **उपदिष्टेष्वनुगृहीतेषु** इति। उपदेशेऽपि तदश्रवणे दुष्करत्वादिबुद्धिर्न सम्भवतीत्यभिप्रेत्य श्रवणपर्यन्तोपदेशो विवक्षित इत्याह — **श्रुत्वेति**।

प्रकृतत्वाद्विशेष्यलाभे सति 'ते' इति कण्ठोक्तिवैफल्यमित्याशङ्क्य, दुश्शकत्वादिबुद्धिहेतुभूतकायक्लेशरूपत्वादिस्वभावलाभाय तत्पदमित्यभिप्रेत्य, स्वभावविशिष्टवेषेण तत्पदार्थमाह—**काये**त्यादिना, **विरोधिनः** इत्यन्तेन। तच्छब्दस्य सर्वनामत्वेन प्रकृताकारपरामर्शित्वात्, बुद्धिस्थं कर्मादित्रयस्यापि क्लेशकरत्वं तावत्परामृश्यत इत्यभिप्रेत्य हेतुत्रयमाह - **काये**ति। कायस्य क्लेशः - कायिकव्यापारजनितदुःखमित्यर्थः। क्लेशरूपम् १ तत्प्राचुर्याच्चव्यपदेशः। अत एव कर्मविषयोऽयं हेतुः। ज्ञानयोगांशे अत्यन्तमिन्द्रियस्य वासिततया, तद्वद्भक्तियोगे तस्य दुष्करत्वाभावात्। अत एव 'कायक्लेशरूपत्वात्' इतिवत् 'इन्द्रियजयरूपत्वात्' इत्यनुक्तिः।

**(सावधानेने)**ति - "आप्रयाणात्तत्रापि हि दृष्टम्" (ब्रह्मसूत्रम्-४-१-१२॥) इति न्यायेन कर्मयोगादेराप्रयणानुवृत्तिसाधकं चिरकालसाध्यत्वं भक्तियोगस्य प्रसिद्धम्। एवं साङ्गभक्तियोगस्याप्रयाणमनुवर्तनेऽपि, अन्तिमस्मृत्यभावे पुनस्तथैव तस्यानुवर्तनीयत्वात्, अन्तिमस्मृतिहेतुभूतं विनावधाननैयत्यमपि तस्यास्तीति भावः। **(सावधानेन)** इत्यनेन ज्ञातुमशक्यत्वमपि

## स्वशरीरत्वकथनादिभिः :

दुश्शकशब्दविवक्षितमिति गम्यते । धर्मत्रये तत्पदोक्ते हेतुत्वव्यक्तयेऽधुना । तद्वैयधिकरण्येन वाक्यशैली समाश्रिता । यद्यप्युक्तमशक्यत्वं न दीपारोपणादिषु । तथापि तन्नानुगतमिति त्र्युक्त्येह गम्यते । दुःखेन कर्तुं शक्यत्वं कथं शोकाय सर्वगम् । इति मत्वाशक्यतोक्ता लक्षणात्र विवक्षिता । "ईषद्दुस्सुषु-कृच्छ्राकृच्छ्रार्थेषु खल्" (पाणिनिसू-३-३-१२६॥) इत्यनुशासनमत्र लक्षणा-बीजत्वेनाभिमतम् । प्रवृत्तौ कृत्यसाध्यत्वबुद्धिर्न प्रतिबन्धिका । अनुष्ठातुम-शक्यत्वमतो दुश्शकशब्दितम् । **(इति च)** इति वक्ष्यमाणसमुच्चयः ।

अथ "स्वरूपे" त्यादेरनुगतशोकनिमित्तपरतामाह - **स्वशरीरत्वे**त्या-दिना । "दुश्शकत्वविशिष्टेऽपि स्यात्स्वरूपविरोधिता । इत्यभिप्रेत्य विवृतमिदं-शब्देन तत्पदम् । शक्याशक्यपरत्वेऽपि शक्येऽप्यस्ति विरोधिता । इति तात्पर्यगमकं विरूपत्वादिदंपदम् । प्राग्वत्प्रकृतकण्ठोक्तिर्विरोध्याकारबोधनात् । सफलेत्यभिसन्धाय प्रयत्नात्मकतोदिता । अव्यावर्तकमप्यत्र स्वरूपपदमात्मनः । पारतन्त्र्यपरं सार्थं प्रतिकोटिसमर्पणात्" इत्यभिप्रायः । "भोगापवर्गकरण-कृत्यर्हे तदनर्हता । मुक्तस्य हेययोग्यस्य तदयोग्यत्ववर्त्मना । तदयोग्यस्य तत्प्राप्तिस्तत्स्वरूपविनाशिनी । स्त्रियःपुम्भाववद्यस्मान्न स्त्रीस्वातन्त्र्यमर्हति । स्वयत्नसाध्यभोगादिसाधनात्मकता त्विह । स्वयत्नरूपता प्रोक्ता पारतन्त्र्य-विरोधिनी । विरोधो द्विविधःप्रोक्तः पारतन्त्र्यस्वयत्नयोः । यो गोत्वाश्वत्वयो-र्लोके यश्चालोकान्धकारयोः । पारतन्त्र्यं स्वरूपस्य स्वयत्नस्य तु योगिता । द्वारं विरोधेऽभिप्रेतं मूलमित्याशयो मुनेः । तद्वतस्तदयोग्यत्वं शास्त्रैकावेद्य-मित्यतः । निरुक्ते परतन्त्रत्वे शास्त्रमत्र प्रदर्श्यते" - **स्वशरीरत्वकथ-नादिभिरि**ति । स्वशब्दः - पूर्ववत्प्रतिपादनकर्तृपरः । अत्र चिदचितोरनु-योगित्वमभिप्रेतम् । स्वशरीरत्वकथनं तावत् - भगवता सप्तमेऽध्याये प्रथमम् "मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः । असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु । ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । यज्ज्ञात्वा नेह भूयोऽन्य-द्ज्ञातव्यमवशिष्यते ॥ मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" इति श्लोकत्रयेण समग्रत्वेन ज्ञातव्यसर्वोत्तम-त्वेनातिदुर्लभानुसन्धानविषयत्वेन च प्रतिपादनपूर्वकं स्वस्वरूपयाथात्म्यं वक्त-

व्यत्वेनोपक्रम्य "भूमिरापोऽनलो वायुःखं मनो बुद्धिरेव च। अहङ्कार इतीयम्मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्" इति श्लोकाभ्यां क्रियते।

अत्र, प्रकृतिः - स्वभावः। स चापृथक्सिद्धिविशिष्टकार्यत्वविशिष्टलक्षणाधेयताशालिधर्मः। इदमेवाधेयत्वं शरीरपदप्रवृत्तिनिमित्तम्। "यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुञ्च शक्यम्, तच्छेषतैकस्वरूपञ्च, तत्तस्य शरीरम्" (श्रीभाष्ये-२-१-९॥) इति श्रीभाष्यकारैरनुगृहीतत्वात्। तत्र परशब्दविवक्षितोत्कर्षं विवृणोति - **ययेदमि**ति। अनेन 'अचेतनं जीवद्द्वारा स्वेन धार्यम्, यथाचेतनं चेतनेन धार्यम्, एवं सर्वं स्वेन धार्यम्' इति च विवक्षितम्। उक्तं धार्यत्वं गुणादिव्यावृत्त्यर्थस्वस्य चिदचिद्द्वारकोपादानत्वेनोपपादयन्, उपादानस्यैव सतो निमित्तत्वमपि वदन्, सौभरिशरीरवत् सङ्कल्पेन धारणं व्यावर्तयन्, जीवव्यावृत्तमेकस्यैव सतो व्यापकत्वेन धारणमप्याह - "एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहङ्कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तःपरतरं नान्यकिञ्चिदस्ति धनञ्जय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इतिश्लोकद्वयेन। "एतद्योनीनि" इति व्यष्टिचिदचितोस्समष्टिचिदचिदुपादनत्वमुक्तम्। "अहं कृत्स्नस्य" इति तद्द्वारकमुपादानत्वमुक्तम्। "प्रभवः प्रलयः" इति तादधीन्यात्तद्व्यपदेशः। सृष्टिसंहारयोरन्याधीनत्वभ्रमनिवृत्त्यर्थं द्वयोरुक्तिः। अनेन निमित्तत्वमप्यसङ्कोचाल्लब्धम्। "जन्माद्यस्य यतः" (ब्रह्मसूत्रम्-१-१-२॥) इति वत्।

निमित्तत्वोक्त्या सर्वथा चिदचितोस्स्वाविधेयत्वं स्वशेषत्वञ्च लभ्यते। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वलक्षणकर्तृत्वस्यैव निमित्तशब्दार्थत्वात्, स्वाधीनस्वरूपस्थितिप्रवृत्तिनिवृत्तिकत्वस्यैव विधेयशब्दार्थत्वात्, परगतातिशयाधानेच्छयोपादेयत्वान्ययोगव्यवच्छेदस्यैव शेषशब्दार्थत्वाच्च। अनेन सर्वत्र स्वस्यैव फलित्वफलसाधनानुष्ठातृत्वलक्षणकर्तृत्वार्हत्वरूपं स्वातन्त्र्यम्, जीवस्य तु सर्वत्राचिद्वत्फलित्वकर्तृत्वानर्हत्वरूपं पारतन्त्र्यञ्च व्यक्तम्। **(मत्तः)** इति - अनेन स्वस्यैव कर्तृत्वात्परत्वम्, कर्तुरेव सत उपादानत्वात्परतरत्वञ्चेति सूच्यते। यद्वा, स्वस्यैव फलित्वात् परत्वम् फलिन एव सतः कर्तृत्वात् परतरत्वञ्चेति सूच्यते। **(मयी)**ति - अनेन सङ्कल्पव्यावृत्तिः, जीवव्यावृत्तिश्च।

एवं धार्यत्वमुपपादितम् । अथ विधेयत्वमुपपादयितुं तदुत्कृष्टवस्तुषु प्रदर्शयति— "रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः । प्रणवस्सर्ववेदेषु शब्दःखे पौरुषं नृषु ॥ ८ ॥ पुण्यो गन्धः पृथिव्याश्च तेजश्चास्मि विभावसौ । जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥ बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् । बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥ बलं-बलवतां चाहं कामरागविवर्जितम् । धर्माविरुद्धो भूतेषु कामोऽस्मि भरत-र्षभ ॥ ११ ॥" इति । "प्रभवःप्रलयः" इति वदयं निर्देशः । अत्र स्वरूपे स्थितौ प्रवृत्तौ च स्वाधीनत्वं यथायोग्यमनुसन्धेयम् । अत्र "बीजं माम्" इत्यर्थेन स्वरूपेण तादधीन्यमुपादानतया सद्वारकत्वमस्तीति स्पष्टम् ।

पदार्थानामानन्त्यात् अनुगतरूपेण स्वाधीनत्वं स्पष्टयति—"ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥ इति श्लोकेन । 'मत्त एव' इति निमित्ततया स्वविधेयत्वमपि स्पष्टम् । "मयि सर्वम्" इत्युक्तदृष्टान्तासिद्धमर्थं स्पष्टयति—न त्वहमिति । पर-स्पराधाराधेयभावेऽपि धार्यत्वं जगत एव । न तु स्वस्येत्यर्थः । इत्थं चिद-चिदात्मकजगत आधेयत्वविधेयत्वशेषत्वलक्षणस्वशरीरत्वकथनेन तावत्क-र्तृत्वभोक्तृत्वानर्हत्वलक्षणमचिद्वत्पारतन्त्र्यं सर्वजीवस्वरूपसाधारणं प्रति-पादितम् ।

अथ भोगमोक्षसाधनानुष्ठातृत्वलक्षणकर्तृत्वस्य, तदुद्देश्यफलाश्रयत्वरूप-भोक्तृत्वस्य चाबाधितानुभवसिद्धत्वेऽपि, तदुभयं गुणत्रयमयप्रकृतिसम्बन्ध-निबन्धनत्वात् सदप्यौपाधिकमिति, लोकसिद्धकर्तृत्वभोक्तृत्वयोरौपाधिकत्व-कथनेन, उक्तं द्विविधं पारतन्त्र्यमुपपादयति — "त्रिभिर्गुणमयैर्भावैरेभिस्सर्व-मिदं जगत् । मोहितं नाभिजानाति मामेभ्यःपरमव्ययम् ॥ १३ ॥" इति श्लोकेन । इदमेवौपाधिकत्वं तृतीयेऽध्यायेऽपि "प्रकृतेःक्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" ॥ २७ ॥ इति श्लोकेन कथितम् । अत्रायं विवेकः - जीवस्वरूपस्य साङ्ख्यादिरीत्या कृति-मत्त्वसुखाश्रयत्वमात्ररूपयोः कर्तृत्वभोक्तृत्वयोरप्यभावः "कर्ताशास्त्रार्थवत्त्वात्" (ब्रह्मसूत्रम्-२-३-३३॥) इत्यधिकरणविरुद्धः । एवं परमात्मानपेक्षं कर्तृत्वं भोक्तृत्वञ्च "परात्तु तच्छ्रुतेः" (ब्रह्मसूत्रम्-२-३-४१॥) "फलमत उपपत्तेः" (ब्रह्मसूत्रम्-३-२-३८॥) इत्याधिकरणद्वयविरुद्धम् । परमात्मसापेक्षं भोगमोक्ष-साधनानुष्ठातृत्वरूपं कर्तृत्वम्, तदुद्देश्यफलाश्रयत्वरूपं भोक्तृत्वञ्च प्रमाण-

प्रसिद्धाचिद्वत्पारतन्त्र्यरूपस्वाभाविकाकारभञ्जकत्वात्, औपाधिकम्। प्रकृतिसम्बन्धनिबन्धनत्वात्, भोगमोक्षसाधनानुष्ठानस्य तदधीनत्वाच्च तदुद्देश्यफलभोक्तृत्वस्य। केवलपरमात्मभोगोद्देश्यककैङ्कर्यगोचरकृतिमत्त्वरूपं कर्तृत्वं, परमात्मनः अचिद्वोक्तृत्वापेक्षया जीवस्वरूपभोक्तृत्वे अतिशयसम्पादकं स्वकैङ्कर्यप्रवृत्त्यनुद्देश्यं निरतिशयभोग्यभूतपरमात्मस्वरूपरूपगुणविभूत्यनुभवितृत्वलक्षणं भोक्तृत्वश्चास्यानुभाविकम्। मोक्षदशानुवृत्तकैङ्कर्यगोचरकृतेर्भोगमोक्षसाधनानुष्ठानरूपत्वाभावात्, प्रकृतिसम्बन्धनिबन्धनत्वाभावाच्च। भोगमोक्षसाधनानुष्ठानानधीनत्वात्तदनुद्देश्यत्वाच्च निरुक्तभोक्तृत्वस्य—इति।

अथ निरुक्तं द्विविधं पारतन्त्र्यमाश्रयासिद्धिपराहतमिति शङ्कायामाश्रयकथनेन तदुपपादयति—"दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥" इति। तदेकोपायताप्रार्थनात्मकशरणागतिनिष्ठानां निरुक्तपारतन्त्र्यमस्ति। तदेकोपायत्वप्रार्थनायास्स्वस्वरूपविरोधेन मोक्षसाधनत्वाभावात्, कृत्यसाध्यत्वाच्च। 'मोक्षयिष्यामि' इत्युक्तमोक्षोपायसिध्यर्थतया विहितमोक्षोपायस्वीकारमात्ररूपत्वाच्च। तेषां केवलपरमात्मभोगोद्देश्यककैङ्कर्यगोचरकृतिमत्त्वात्, परमात्मभोगातिशयाधायककैङ्कर्यानुद्देश्यकभोगशालित्वाच्चेति भावः। "इमां प्रवर्तयति परहिंसां निवर्तयितुम्" (श्रीवचनभूषणे-प्रापकान्तरपरित्यागस्य स्वरूपविरुद्धत्वकथनावसरे-१३०-सू ॥) इत्यादिश्रीमल्लोकगुरुश्रीसूक्त्यभिप्रेताधिकारिविशेषणीभूताष्टाङ्गयोगाङ्गभूतशरणागतिरप्यत्र विवक्षिता। शब्दासङ्कोचस्य सम्भवतस्त्यागायोगात्। इत्थं शरणागतिरूपाश्रयकथनेन पारतन्त्र्यद्वयमुपपादितम्।

अथ शरणागतस्येतरव्यावृत्तिकथनेन तदुभयमुपपादयति—"न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः। माययापहृतज्ञाना आसुरं भावमाश्रिताः॥ १५॥ ॥ चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥ तेषां ज्ञानी नित्ययुक्तः एकभक्तिर्विशिष्यते। प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥ उदारास्सर्व एवैते ज्ञानीत्वात्मैव मे मतम्। आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १९ ॥ बहूनां जन्मनामान्ते ज्ञानवान्मां प्रपद्यते। वासुदेवस्सर्वमिति

समहात्मा सुदुर्लभः॥ १९॥" इति श्लोकपञ्चकेन। तत्र तावत् 'मां प्रपद्यन्ते' इत्यस्य व्यावर्त्याधिकारिण आह—नमामिति श्लोकेन।

अथ 'मामेव' इत्यवधारणव्यावर्त्याधिकारिणः प्रदर्शयितुमुपक्रमते—चतुर्विधा इति श्लोकेन। अत्र सुकृतशब्दः - ज्ञाताज्ञातसुकृतपरः। 'ज्ञानी' इत्यनेन साधनभक्तिप्रपत्तिनिष्ठा न गृह्यन्ते। तेषामनन्योपायत्वरूपस्वरूपयाथात्म्यज्ञानविधुरत्वेन, ज्ञानित्वेन तत्स्वरूपनिरूपणायोगात्। किन्त्वाधिकारिविशेषणीभूताष्टाङ्गभक्तिनिष्ठाः, तत्तादृशषडङ्गप्रपत्तिनिष्ठाः, तादृशशरणवरणनिष्ठाश्च गृह्यान्ते।

उपक्रान्तमर्थमाह—तेषामित्यादिश्लोकत्रयेण। नित्ययुक्तः - आश्रयणदशामारभ्य यावदात्मभावियोग इति भावः। एकभक्तिः - आर्तादीनान्तु प्रापकतया स्वस्मिन् प्राप्यतयान्यत्रापि भक्तिरिति भावः। 'नित्ययुक्तः' इति सालोक्यं सामीप्यञ्च सिद्धम्। सायुज्यमाह—प्रियो हीति। 'अहं प्रियः' इत्यस्य फलमाह—स चेति। इत्थं 'नित्ययुक्तः, अत्यर्थं, प्रियः' इति चाश्रयणदशमारभ्य वैषम्यमुक्तम्।

अथाश्रयणदशायामनुगताकारकथनपूर्वकं फलदशायां वैषम्यमाह—उदारा इति। "सकलफलप्रदो हि विष्णुः" (विष्णुधर्मे-४३-४६॥) इत्युक्तौदार्यगुणप्रदातृत्वमनुगताकार इति भावः। (आत्मैव)-अहमेवेत्यर्थः। 'सैवेयं दीपज्वला' इतिवत्ताद्रूप्यात्तन्निर्देशः। अनेन सारूप्यमुक्तम्। "मे मतम्" इत्यादरोक्तिः। अद्वैतं व्यावर्तयितुं तत्क्रतुन्यायाभिप्रायेणाह—आस्थित इति। प्राप्यप्राप्तृभावेन भेदोपासनादित्यर्थः। (अनुत्तमाम्)-'अन्येषां प्राप्यम् - अधमम्' इति भावः। यदा "आत्मैव" इत्यत्र शरीरप्रतिसम्बन्ध्यात्मा विवक्षितः। तथा च धारक इत्यर्थः। एवकारः - ज्ञानिनोऽन्यापेक्षयात्मत्वेन प्राधान्यं द्योतयति। 'राजैव दृष्टः' इतिवत्। "प्रियतम एव हि वरणीयो भवति, यथायं प्रियतम आत्मानं प्राप्नोति, तथा भगवान् स्वयमेव प्रयतते" (श्रीभाष्ये-१-१॥ लघुसिद्धान्तभाष्ये॥) इत्यादि श्रीभाष्यसूक्तिप्रकारेणोक्तार्थमुपपादयति—आस्थित इति। इदमेवात्मत्वमनुगृहीतं भगवद्यामुनाचार्यैः—"क्षणेऽपि ते यद्विरहोऽति दुःसहः" (स्तोत्ररत्ने-५६)इति।

किं बहुनेत्यभिप्रायेणैकोक्त्या वैषम्यमाह—**बहूनामिति**। "ज्ञानवान्" इति-'ज्ञानी च' इत्युक्तविशेष्यनिर्देशः; "मां वेत्ति तत्त्वतः" इत्युक्ततत्त्वज्ञानवानित्यर्थः। **(वासुदेवस्सर्वम्)**—अत्र "सर्वत्रासौ" (विष्णुपुराणे १-२-१२) इति व्युत्पत्तिरभिप्रेता। "वासुदेवः" इति हेतुः। "सर्वम्" इति साध्यम्। "सर्वगत्वादनन्तस्य" (विष्णुपुराणे" १-१९-८५) इतिवत्। **(सर्वम्)** - सर्वशरीरकम्। अनेन - 'फलसाधनानुष्ठाता, फलसाधनम्, फली च स एव' इत्युक्तं भवति। यद्वा, वासुदेवस्सः - सर्वविधबन्धुरित्यर्थः। अपि च "सर्वं कृष्णः" (तिरुवायूमोलि - ६-७-१।।) इति वत् वसुदेवपुत्रो धारकपोषकभोग्यभूत इत्यर्थः। विशिष्यवक्तुमशक्य इत्यभिप्रायेणाह—**स महात्मेति**। 'दुर्लभः' इति - आर्तादिव्यावृत्तिः। 'सु' इत्युपसर्गेण "कश्चिद्यतति सिद्धये" (गीता-७-३।।) इत्युक्तसाधन भक्तिनिष्ठादिव्यावृत्तिः। "कश्चिन्मां वेत्ति" इत्युपक्रान्तोऽधिकारी "स महात्मा" इत्युपसंहृतः।

इत्थं भगवत्प्रीत्यैकफलकभगवत्कैङ्कर्यैकगोचरकृत्यर्हत्वरूपं पारतन्त्र्यं सर्वात्मनां स्वाभाविकम्; तादृशवृत्तिफलोपधानन्तु व्यक्तिविशेषनियतमित्युपपादितम्।

"न मां दुष्कृतिनः" इत्युक्तान् विशिष्य प्रदर्शयन्, तद्विषयेऽपि स्वस्यैव फलसाधनानुष्ठातृत्वमपि वदन्, तन्मुखेन तत्रापि, लीलारसनिष्पत्त्या स्वस्यैव फलित्वं व्यञ्जयन्, "मूढाः" इत्युक्तमपि विवृण्वन्, आर्तादित्रयमपि विशदयति—"कामैः" इत्यादिनाध्यायशेषेण। अनुगृहीतं भगवद्यामुनाचार्यैः श्रीमति गीतार्थसङ्ग्रहे—"स्वयाथात्म्यं प्रकृत्यास्य तिरोधिश्शरणागतिः। भक्तभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तम उच्यते" (गीतार्थ सं·११।।) इति।

प्रकृतमनुसरामः—**(स्वशरीरत्वकथनादिभिः)** इति आदि - शब्देन लौकिककर्तृत्वादेर्भ्रान्तिनिबन्धनत्वकथनम्, पारतन्त्र्याधिकारिस्वरूपकथनम्, तद्दौर्लभ्यकथनञ्च गृह्यते। एवं नवमाध्याये "गतिर्भर्ता प्रभुस्साक्षी निवासश्शरणं सुहृत्" इत्यत्र गतिभर्तृप्रभुशरणशब्दैः प्राप्यत्वफलप्रदत्वस्वामित्वापरपर्यायफलित्वकरणत्वरूपोपायत्वानां कथनम्। "अहं हि सर्वय-

**प्रतिपादितपरतन्त्रस्वरूपस्य 'स्वयत्नरूपा इमे विरोधिनः' इति च बुध्वा,**

---

ज्ञानां भोक्ता च प्रभुरेव च" (गीता ९-२४॥) इत्यत्र फलित्वस्पष्टीकरणम्। दशमेऽध्याये "अहं सर्वस्य प्रभवः मत्तस्सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥ मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥" इति श्लोकत्रयेण कर्तृत्वस्पष्टीकरणम् । "हन्त ते कथयिष्यामि" (गीता १०-१९ ॥) इत्यादिना शरीरत्वस्पष्टीकरणम् । एकादशे - शरीरत्वप्रत्यक्षीकरणम्। त्रयोदशे "कार्यकारणकर्तृत्वे" इति "पुरुषःप्रकृतिस्थो हि" इति च कर्तृत्वभोक्तृत्वयोरौपाधिकत्वकण्ठोक्तिः। "उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः" (गीता १३-२२॥) इत्यसङ्कुचितफलित्वकण्ठोक्तिः; इत्यादिकमप्यत्रादिपदेन गृह्यते । तत्प्रपञ्चस्तु विस्तरभयान्न प्रदर्श्यते ।

**विरोधिन इति च**-पूर्वेणसमुच्चयः। पूर्वानुभवाभावात्कथं 'स्मृत्वा' इतिस्मृत्युक्तिः, तत्राह - ॒ध्वेति । "बुद्धिस्तात्कालिकी प्रोक्ता"इति निर्दिष्टतात्कालिकपूर्वापरपर्यालोचनप्रतिभाविशेष इह विवक्षितः । तस्य ज्ञातार्थपर्यालोचनरूपत्वात् 'स्मृत्वा' इत्युक्तमिति भावः । अत्र यद्यपि 'इति' इति मूलस्थपदद्वयं न विवरणार्थमुपात्तम्; तथापि तदनुपादाय - **(कायेत्यादि - अनुष्ठातुमशक्याः; स्वेत्यादि - इमे विरोधिनः, बुध्वा)** इति वाक्यशैली परिग्रहे, वाक्यस्यानान्वितत्वेनाबोधकत्वं स्यात्; मूलपदविवरणत्वस्य ज्ञातुमशक्यत्वात्। तत्परिहारार्थं 'दुश्शकाः' इति प्रतीकमुपादाय—**(कायेत्यादि - अशक्याः)** इत्यन्तमुक्त्वा, 'स्वरूपाविरोधिनः' इत्युपादाय—**(स्वेत्यादि - विरोधिनः)** इत्यन्तमुक्त्वा, 'स्मृत्वा' इत्युपादाय—**(॒ध्वा)** इत्युक्तौ, अतिगौरवं स्यात्; मूलवाक्यमनपेक्ष्य मूलवाक्यार्थस्य विशदश्शब्दबोधश्च न सिध्येत्; 'इति' इति पदद्वयोपादाने तु क्रमबलेन तत्तत्पदविवरणत्वस्य व्याख्यानवाक्येषु ज्ञातुं शक्यत्वात्, स्वयमेव

'एतैस्स्वामिनः प्राप्त्यवकाशः कोऽपि नास्ति, इतश्च्युत एव स्याम्' इति शोकेनाविष्टमर्जुनम्प्रति तस्य तादृशशोकनिरासार्थं सुशकत्वेन स्वरूपानुरूपत्वेन च 'इत उत्कृष्टो नास्ति' इति चरमभूतस्योपायस्यानुगृहीतत्वात् 'चरमश्लोकः' इति अस्य श्रीनाम भवतीत्यर्थः ॥ १ ॥

---

परस्परान्वितार्थकत्वाच्च नोक्तदोषद्वयमित्यभिप्रेत्य 'इति' इत्यस्य यथाश्रुतानुवादोऽन्यार्थं कृत इति ध्येयम् ।

(एतैः) - उपायान्तरैः । उपायान्तरव्यावृत्तिः - सुशकत्वेनेति । (स्वरूपानुरूपत्वेन) इति - आत्मयाथात्म्यज्ञानकार्यत्वात्, पारतन्त्र्यस्वरूपस्यानुरूपत्वमित्यर्थः । (चरमभूतस्योपायस्य) इति - "मामेकं शरणं व्रज" इति वक्ष्यमाणसिद्धोपायस्येत्यर्थः ।

ननु 'अयमर्थो गीताभाष्यविरुद्धः; तत्र भक्त्यङ्गकप्रपत्तिपरतायाः श्लोकस्यानुगृहीतत्वात् । अतोऽयमर्थो न साम्प्रदायिकः' इति चेत् । नैवम् । तथात्वस्यान्वारुह्यत्वेनाचार्यैरन्यत्र प्रपञ्चितत्वात् । "श्रीभाष्यसूक्तिश्चरमश्लोकगीताभाष्यसूक्तिवदन्वारुह्यवादः" इति चरमश्लोकटिप्पण्यामनुगृहीतत्वात् । व्याख्याता चेयं श्रीसूक्तिः श्रीशुद्धसत्त्ववरददेशिकैः "अन्वारुह्यवादः" इति चरमश्लोकगीताभाष्ये चरमश्लोकस्य "अथवा" इत्यादिनाङ्गप्रपत्तिपरत्वेन व्याख्यातत्वात्, तत्रान्वारुह्यवादत्वमङ्गीक्रियते । तद्वत् श्रीभाष्यसूक्तावुपासनस्य साधनत्वोक्तिः - अन्वारुह्यवाद इति तात्पर्यम्" इति । श्रीमद्वेदान्ताचार्यैश्चायमर्थो निक्षेपरक्षायां प्रपञ्चितः । इयं हि तत्सूक्तिः—"न तावद्भाष्यादिषु अङ्गप्रपत्तिवचनमात्राद्वैपरीत्यम्; उभयाकारयोगित्वेन प्रकरणोपयुक्तान्यतराभिधानोपपत्तिः । न च स्वातन्त्र्यं नास्तीति क्वचिदुक्तम् । श्रीमद्गीताभाष्ये तु "सर्वधर्मान्परित्यज्य" इत्यस्यानेकार्थाभिधानात्, अन्यतरानादरस्सूच्यते । अर्थस्वभावाच्च योजनाद्वयपरामर्शिनामतिरहस्यतया गोपितं प्रपत्तिस्वातन्त्र्यं स्वयमेवोन्मज्जतीत्याचार्यमुखादधिगच्छामः" इति । न तस्मात्सम्प-

दायविरोधगन्धोऽपि । चरमश्लोकस्य चरमोपायपरत्वं श्रीमद्यामुनदेशिकैः श्रीमद्गीतार्थसङ्ग्रहे प्रसादितम् । "स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः । नारायणःपरं ब्रह्म गीताशास्त्रे समीरितः" इति ।

अस्यायमर्थः—

अत्र, धर्मशब्दः - यथावस्थितचेतनस्वरूपानुरूपकेवलभगवदाराधनात्मकधर्मपरः । ज्ञानशब्दोऽपि - यथावस्थितस्वस्वरूपज्ञानपरः । स्वशब्दस्य तत्राप्यन्वयात् । यथावस्थितस्वस्वरूपस्य ब्रह्मपर्यन्ततया ज्ञानमपि ब्रह्मपर्यन्तमेव । वैराग्यशब्दः - "परमात्मनि यो रक्तः विरक्तोऽपरमात्मनि" (बार्हस्पत्यस्मृतौ) इत्युक्तभक्तियोगफलीभूततत्त्वद्वयवैराग्यपरः । एतेन-भक्तिरर्थादुक्ता भवति । साध्यभक्तिशब्देन "साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः । साध्यभक्तिस्स्मृता सैव प्रपत्तिरिति गीयते" (प्रपन्नपारिजाते-२-२७) इत्युक्ता साध्यभक्तिशब्दिता प्रपत्तिरुच्यते । तथा च कर्मज्ञानभक्तिप्रपत्तयश्चत्वारोऽपि साध्योपायाः क्रमेण सङ्गृहीताः । तेषामेकगोचरः - स्वसदृशगोचरान्तररहितो गोचर इत्यर्थः । एतेन - कर्मयोगस्याग्नीन्द्रादिविषयकत्वम्, ज्ञानयोगस्य जीवमात्रविषकत्वञ्च व्यावर्त्यते । यद्वा, एकगोचरः - एकस्वरूपेणैव गोचर इत्यर्थः । एतेन - अभिमतवस्तुषु औषधसम्मेलनन्यायेन शास्त्रविहितसाध्योपायान्तराणां, प्रपत्तिविषयसिद्धोपायविषयकत्वमुक्तं भवति । तथा चोक्तं महाभारते "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" (भारते - आरण्यपर्वे (८८-२६॥) इति । अथवा, एकगोचरः - प्रधानगोचर इत्यर्थः । प्राधान्यञ्च - "करणं कारणं कर्ता विकर्ता" (सहस्रनामाध्याये - ३८०॥) "चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः" (तै-आरणे. ३-२९॥ ) "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" (तै. ६-१-६॥ ) इत्याद्युक्तं सर्वप्रकारतत्तत्कर्मादिनिर्वाहकत्वाराध्यत्वफलप्रदत्वादिरूपं बोध्यम् । एतेन - "फलमत उपपत्तेः" (ब्रह्मसूत्रं ३-१-३७॥) इति सिद्धान्तितं सिद्धोपायत्वमभिप्रेतम् । तत्र हि "धर्मं जैमिनिः" (ब्रह्मसूत्रं ३-२-३९॥) इति धर्माणामेव फलसाधनत्वमिति पूर्वपक्षं कृत्वा "पूर्वं तु बादरायणो हेतुव्यपदेशात्" (ब्रह्मसूत्रं ३-२-४०) इति धर्माणां केवलभगवदाराधनात्मकतया साधनत्वनिरासपूर्वकं सिद्धोपायस्यैव सर्वफलोपायत्वं सिद्धान्तितम् ।

ननु तत्र कर्मोपासनाराधितादेव हि फलमुच्यते इति चेत्सत्यम् । आराधनमुपलक्षणमात्रम् । न फलहेतुतावच्छेदकम् । "उपपत्तेः" (ब्रह्मसूत्रं ३-२-३४।।) इत्यनेन विरोधात् । तत्र हि महोदारत्वमप्यन्तर्गतम् । न ह्युदारस्य फलदानांशे स्वाराधनापेक्षा । लुब्धस्य हि तदपेक्षा । औदार्यस्वरूपं तु समन्वयाधिकरणश्रुतप्रकाशिकायां "औदार्य-दातृप्रतिगृहीतृविभागबुद्धिविरहेण प्राप्तं कृतमिति प्रतिपत्तिमत्त्वम् । आत्मात्मीयं दत्त्वापि "ऋणं प्रवृद्धमिव मे" (भारते उद्योगप-४७-२१।।) इति स्थितिर्वा" (श्रुतप्रकाशिका-१-१-४।।) इत्यनुगृहीतम् । औदार्यस्य महत्त्वं नाम- गाम्भीर्यमेव् । तत्स्वरूपञ्च "गाम्भीर्यम् - सम्प्रदानलाघवदीयमानगौरवानपेक्षत्वम्" (श्रुतप्रकाशिका-१-१-४।।) इति तत्रैवानुगृहीतम् । तथा चैवंविधमहौदार्यस्य "फलमत उपपत्तेः" इति सूत्रगतोपपत्तिशब्दार्थान्तर्गतत्वेन भाषितत्वात्, तद्विरोधेन भगवदाराधनं न फलहेतुतावच्छेदकमिति उपलक्षणमात्रमेव ।

अथ 'नारायणः' इत्यनेन "माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः" (सुबालोपनिषदि-६।।) इत्युक्तं सर्वात्मना शरण्यत्वविशिष्टं शरणत्वम्, "तद्विश्वमुपजीवति" (तैत्तिरीयोपनिषदि ६-प्रश्ने नारायणानुवाके ११ ।। ) इति नारायणानुवाकोक्तं परगतस्वीकारशब्दितवरणविशेषकर्तृत्वरूपं भगवतो विश्वोपजीवित्वञ्चाभिप्रेतम् । एतेन - "यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः" इत्याद्युक्तप्रकारेण सर्वप्रकाररक्षणरूपभगवत्सौलभ्यस्य, "संबाहुभ्यां नमति संपतत्रैर्द्यावापृथिवी जनयन्देव एकः" (अथर्ववेदे-१३-२-२६।।) इत्युक्तपरत्वकाष्ठारूपत्वात् "विपर्यये तु नैवास्य प्रतिषेधाय पातकम्" (पाञ्चरात्रे) इत्युक्तप्रकारेण गुहादिष्विव चेतनपापैरनिवार्यत्वं स्मारितम् । 'परम्' इत्यनेन पराधिकरणोक्तं प्राप्यस्यैव भगवतः प्रापकत्वमभिप्रेतम् । एतेन भक्त्यादीनां चेतनव्यापाराणां भगवत्प्राप्त्युपायत्वानुपपत्त्या भगवत्प्राप्तेर्भगवदेककरणकत्वासिद्धिर्दर्शिता भवति । तत्र हि "अमृतस्यैष सेतुः" (मु-२-२-५।।) इति अमृतेन साकं ब्रह्मणः साध्यसाधनभावसम्बन्धव्यपदेशात्, साधनस्य च साध्यार्थत्वेनावरत्वात्, अमृतसाधनभूताद्ब्रह्मण उत्कृष्टममृतशब्दितं तत्त्वान्तरमस्तीति पूर्वपक्षं कृत्वा, "उपपत्तेश्च" (ब्रह्मसूत्रम्-३-२-३४।।) इति सूत्रे अमृतशब्दितपरत्वस्य परत्वादेव स्वभिन्नावरतत्वसाध्यत्वमनुपपन्नमिति परमपुरुषप्राप्तेः परमपुरुषैकसाध्यत्वोपपत्त्यामृतशब्दितपरत्वसाधनस्य ब्रह्मणः परतत्त्वभिन्नत्वं सिद्धान्तितम् ।

न चात्र सेतुत्वस्य रक्षकत्वरूपत्वं शङ्क्यम् । अचेतनविषयकसेतुशब्दे-नाचेतनसाधारणस्य करणत्वस्यैव झटितिप्रतीतेः । किञ्चात्र सेतुशब्दस्य फल-प्रदपरत्वे तदधिकरणपूर्वपक्ष एव नोदेतीत्यादिदोषः पूर्वमेवोक्तः ।

अथ ब्रह्मशब्देन "बृहति ब्रह्मयति तस्मादुच्यते परं ब्रह्म" (अथर्वशिखोप - ।।) "बृहत्वाद्ब्रह्मणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इति श्रुतिस्मृतिसिद्धं ब्रह्मयितृत्वब्रह्मणत्वरूपं मोक्षैककारणत्वमभिप्रेतम् । तच्च "स चानन्त्याय कल्पते" (श्वेताश्वतरोपनिषदे-५-९।।) इति श्रुतिप्रसिद्धसक-लसङ्कोचनिवृत्तिपूर्वकनिरवधिकज्ञानविकासरूपानन्त्यावहत्वरूपमेव । तच्च स-कलहेयप्रत्यनीकत्वात्मना स्वरूपगुणान्तर्गतं क्षान्तिकारुण्यादिमोक्षकरणताव-च्छेदकगुणविशेषात्मना निरूपितं स्वरूपविशेषणान्तर्गतञ्च । अत एव हि श्री-भाष्ये ब्रह्मशब्दार्थे "स्वभावतो निरस्तनिखिलदोषः" इत्यनुगृहीतम् । एवं भगवतस्स्वसम्बन्धिगतसंसारसम्बन्धात्मकहेयनिवर्तकत्वलक्षणमोक्षोपायत्वस्य-हेयप्रत्यनीकत्वात्मना स्वरूपनिरूपकतया केवलनिरूपितस्वरूपविशेषणगुणा-न्तरव्यावृत्तिमभिप्रेत्य श्रीपराशरभट्टपादैः "उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ" इत्यनुगृहीतम् ।

तथा च 'स्वधर्मे'त्यादिना—कर्मयोगगोचरत्वम्, ततो ज्ञानयोगगो-चरत्वम्, ततो वैराग्यपर्यन्तभक्तियोगगोचरत्वम्, ततो विशेषाधिकारिणां स्वेनैव रूपेण साध्यभक्तिशब्दितप्रपत्तिविषयत्वम्, ततो भगवतस्तादृशविशे-षाधिकारिविषये सर्वात्मना रक्षकत्वविशिष्टं शरणत्वम्, ततस्तस्य प्राप्याभिन्न-प्रापकत्वलक्षणं परत्वम्, ततस्तस्यासङ्कुचितस्वरूपविकासकरणत्वलक्षणं ब्रह्म-णत्वञ्च गीताशास्त्रप्रतिपाद्यस्य सिद्धोपायत्वोपपादकमर्थक्रमात्क्रमेणानुसंहितं भवति । एवम्भूतो नारायणः, गीताशास्त्रे समीरितः—समित्येकीकारे । एकीकृत्योक्त इत्यर्थः । आपादचूडं सिद्धोपायरूपैकेष्टसाधनतावच्छेदकाव-च्छिन्नबोधकत्वात्, गीतोपनिषदः एकशास्त्रत्वमिति भावः । तदेवं गीता-शास्त्रस्य सिद्धोपायोपदेशैकपरत्वात्, तत्तात्पर्यरूपश्चरमश्लोकोऽपि तत्पर एवेति सम्प्रदायो युज्यत एव । तथा चानुगृहीतं वेदान्ताचार्यैः "सुदुष्करेण शोचेद्यः येन येनेष्टहेतुना । स स तस्याहमेवेति चरमश्लोकसङ्ग्रहः" इति चरमश्लोकस्य सिद्धोपायैकपरत्वम्—इति । अतोऽस्य चरमोपायपरत्व-वर्णनं न सम्प्रदायविरुद्धमिति बोध्यम् ।

एवं 'सर्वधर्मपरित्यागपूर्वकं भगवन्तमेव शरणङ्गतस्य स एव भगवान् साधनमिति सिद्धोपायपरश्चरमश्लोकः' इति सत्सम्प्रदायपरम्पराप्राप्तोऽयमर्थ इत्युक्तं भवति।

अत्र कस्यचिच्छान्दसस्य पैशाचं - नायं श्लोकस्सिद्धोपायं प्रतिपादयति। प्रवृत्तिनिवृत्त्यन्वयविरहिणश्शास्त्रस्य प्रतिपादनापूर्त्या नैराकाङ्क्ष्यायोगात्। तथा च वार्तिकम् - "यावत्खलु प्रमातृणां प्रवर्तननिवर्तने। शब्दा न कुर्वते तावन्न निराकाङ्क्षबोधनम्" इति। केवलसिद्धपरस्य शास्त्रत्वञ्चानुपपन्नम्। तत्र च वार्तिकम् - "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रन्तूपपद्यते" (१-१-५-४०) इति। यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति; तथापि शास्त्रं प्रयोजनपर्यवसाय्येव। न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग. उपलब्धचरः। न च किञ्चित्प्रयोजनमनुद्दिश्य वाक्यस्य प्रयोगः, श्रवणं वा सम्भवति। तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्—'अर्थार्थी राजकुलं गच्छेत्' 'मन्दाग्निर्नाम्बु पिबेत्' "स्वर्गकामो यजेत' (यज २-८-३०।।) "न कलञ्जं भक्षयेत्" इत्येवमादिषु।

यत्पुनस्सिद्धवस्तुपरेष्वपि 'पुत्रस्ते जातः' 'नायं सर्पः रज्जुरेषः' इत्यादिषु हर्षभयनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम्; तत्र किं - 'पुत्रजन्माद्यर्थात्पुरुषार्थावाप्तिः, उत तज्ज्ञानात्' इति विवेचनीयम्। सतोऽप्यज्ञातस्यार्थस्यापुरुषार्थत्वेन तज्ज्ञानादितिचेत्; तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थस्सिध्यतीति अर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्। तस्मात्सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति; कस्यापि वाक्यस्यपरिनिष्पन्ने वस्तुनि तात्पर्यासम्भवात्, नायं श्लोकस्सिद्धोपायपरः—इति।

अत्र वेदान्ताचार्यैः समन्वयाधिकरणसिद्धान्तमनुसृत्य द्वेधा सिद्धान्तितम्। तत्र वेदान्तानां सिद्धधर्मभूतब्रह्मपरतयैव प्रामाण्यस्य भाष्यकारैस्समर्थिततया सिद्धोपायपरैश्शब्दैस्सिद्धोपाये ज्ञाते तत्स्वीकाररूपपुरुषप्रवृत्तेर्निधिग्रहणयत्नवत् रागप्राप्ततया तदंशे शास्त्रस्य प्रामाण्यायोगात्, मानान्तराप्राप्ते फलप्रदस्यैव भगवतस्तत्करणत्वरूपोपायत्वे एव चरमश्लोकस्य प्रामाण्यं सम्भवतीति सिद्धोपायपरत्वमस्योपपद्यत इत्येकः पक्षः। तथा चानुगृहीतं

तैरेव—"सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना । स स तस्याहमेवेति चरमश्लोकसङ्ग्रहः" इति । अत्र चरमश्लोकस्य सिद्धपरतयैव प्रामाण्यं प्रदर्शितम् ।

अथ "मामेकं शरणं व्रज" इत्यस्य "द्वयमर्थानुसन्धानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व" (शरणागतिगद्ये) इति भगवद्वचनतुल्यताङ्गीकारेण "पाथेयं पुण्डरीकाक्षनामसङ्कीर्तनामृतम्" (गारुडपुराणे - पूर्वखण्ड - २२१-१७॥) इत्युक्तस्वयम्प्रयोजनद्वयानुसन्धानात्मककार्यपरतयैव चरमश्लोकस्य प्रामाण्यमस्तु । तथापि तादृशानुसन्धानविषयतया प्राप्यभूतस्य सिद्धोपायस्य तत्र प्रधानप्रतिपाद्यतयान्वयात्, तत्रापि तस्य प्रामाण्यं युज्यत एवेति तदभिमतं पक्षान्तरम् । तस्य चायं सङ्ग्रहः—"दुर्विज्ञानैर्नियमगहनैर्दूरविश्रान्तिदेशैर्बालानर्हैर्बहुभिरयनैश्शोचतां नस्सुपन्थाः । निष्प्रत्यूहं निजपदमसौ नेतुकामस्य भूम्ना सत्पाथेयं किमपि विदधे सारथिस्सर्वनेता" (रहस्य - चरमश्लो ।) इति । अत्र 'दुर्विज्ञानैः' इत्युपायान्तराणां दुर्ज्ञेयत्वम्, 'नियमगहनैः' इति दुरनुष्ठेयत्वम्, 'दूरविश्रान्तिदेशैः' इति विलम्बितफलत्वम्, 'बालानर्हैः' इति "गर्भभूतास्तपोधनाः" (श्रीरामायणे-३-१-२१॥) इत्युक्तपरैकरक्ष्यत्वरूपस्वस्वरूपविरुद्धत्वञ्चोच्यते । 'शोचताम्' इत्यनेन स्वधर्मान्तरस्वरूपविरोधादिज्ञानजन्यशोकवतामेव सिद्धधर्माधिकार इत्युक्तम् । 'सुपन्थाः' इत्यनेन धर्मान्तराणां दुर्मार्गत्वम्, सिद्धधर्मस्य स्वरूपानुरूपत्वम्, तत्तथात्वस्य "नान्यः पन्थाः" (पुरुषसूक्तम्) "पन्था नकार उद्दिष्टः" (अहिर्बुध्न्यसंहिता-५२-३२॥) "अमृतस्यैष सेतुः" (मु-२-२-५॥) "अमृतस्य परं सेतुम्" (श्वे-६-१९॥) इत्यादिसुदृढप्रमाणसिद्धत्वञ्च सूचितम् । 'निष्प्रत्यूहम्' इत्यनेन "उपायान्तरेषु मनसोऽगमनाय" (मुमुक्षुप्प-२-१५८) इत्यनुगृहीतं प्रयोजनं विवक्षितम् । 'निजपदम्' इत्यनेन "तृणं दर्शयित्वा" (श्रीवचनभू-१४०.) इत्याद्यनुगृहीतं फलसाधनयोरैक्यमभिप्रेतम् । 'सुपन्थाः, नेतुकामः' इत्याभ्यां फलकरणस्यैव फलप्रदत्वमुक्तम् । 'स्वभूम्ना' इति परत्वसौलभ्ये विवक्षिते । यद्वा, भगवत एकस्यैव फलत्वफलप्रदत्वफलकरणत्वानां निर्वाहकं "श्रुतेस्तु शब्दमूलत्वात्" (ब्रह्मसूत्रं २-१-२७॥) इति शास्त्रैकसमधिगम्यं भगवदसाधारणं विचित्रशक्तिमत्त्वं विवक्षितम् । 'सत्पाथेयम्' इत्यनेन विधीयमानस्य शरणवरणस्य भोजनवद्रागप्राप्तत्वं विवक्षितम् । 'किमपि' इत्यनेन त्याज्य-

कोट्यनन्तर्भूतत्वानुपायत्वस्वरूपनिष्ठत्वादिवैलक्षण्यमभिप्रेतम् । 'विदधे' इत्यनेन रागप्राप्तक्षीरविधिन्यायेन शीघ्रप्रवर्तनार्थो विधिरित्यभिप्रेतम् । 'सारथिः' इत्यनेन सौलभ्यकाष्ठाभिप्रेता । 'सर्वनेता' इत्यनेन परत्वकाष्ठाभिप्रेता । 'सारथिः' इति मांशब्दार्थः । 'सर्वनेता' इत्यहंशब्दार्थः । 'सर्वनेता किमपि विदधे' इत्युक्त्या चरमश्लोकस्य कार्यपरत्वाभ्युपगमेन सिद्धोपायप्रामाण्यनिर्वाहपक्षस्सूचितः ।

अत्र प्रथमपक्षाभिप्रायेण तत्रतत्र वेदान्ताचार्याणां सिद्धोपायस्योपायान्तरस्थाननिवेशकथनम् । द्वितीयपक्षाभिप्रायेण प्रपत्तेरवश्यानुष्ठेयत्वकथनम् । तथा च स्वरूपयाथात्म्यज्ञानादिना शोचताम्मुमुक्षूणां भगवत एव सर्वधर्मस्थानीयत्वात्, प्रपत्तिपर्यन्तास्सर्वेऽप्युपायाः परित्याज्याः; फलप्रपत्तिस्तु अवश्यानुष्ठेयैवेति पक्षद्वयपर्यालोचनलब्धो निष्कर्षः । इदञ्च दर्शितं तैरेव— "उपायस्स्वप्राप्तेरुपनिषदधीतस्स भगवान्प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती" (रहस्य-सारे-उपायवि ।) इति । प्रसत्त्यै - स्वयम्प्रयोजनप्रसादायेत्यर्थः ।

तदेतदजानानाः केचित् छान्दसवेतालभीता निष्प्रपञ्चीकरणनियोगवादिमतमनन्यशरणाश्शरणयन्तो वेदान्ताचार्यदर्शितप्रथमपक्षप्रतिष्ठापनमभिमन्यन्ते ।

एषा हि तेषां प्रक्रिया - भक्तिप्रपत्त्युभयसाध्यं मोक्षं काङ्क्षमाणस्य भक्त्यनुष्ठानाशक्त्या प्रपत्तिमात्रमनुष्ठितवतस्तावन्मात्रेण मोक्षसिद्ध्यनुपपत्त्या, तस्य भक्तिस्थाने चरमश्लोकेन सिद्धोपायो विधीयते । तथा च तादृशाधिकारिणः प्रपत्तिरङ्गप्रपत्तिस्थानीयैव । तस्या उपायान्तरस्थाननिविष्टवेषेण सिद्धोपायनिष्पादकत्वात् । उपायान्तरस्थाननिवेशविशिष्टवेषेणाङ्गस्थानीयप्रपत्तिनिष्पादितस्सिद्धोपाय एव मोक्षकरणम् । तस्यैव गुरूपायकार्यकारित्वात् । सिद्धोपायस्योपायान्तरस्थानीयत्वं नाम - उपायान्तरनैरपेक्ष्यमेव । तथा चरमश्लोके 'सर्वधर्मान्परित्यज्य स्थितस्त्वम्' इति गुरूपायाशक्तमनूद्य, तम्प्रति "मामेकं शरणं व्रज" इति त्यक्तोपायान्तरस्थाने सिद्धोपायः, तदङ्गभूतभरन्यासानुष्ठानबलात् कर्तव्यतया विधीयते । तथा चोच्यते—"भरन्यासबलादेव स्वयत्नविनिवर्तये । त्यक्तोपायान्तरस्थाने रक्षको विनिवेशितः" (रहस्यत्रयसारे) इति । इत्थञ्च चरमश्लोकस्यकार्यपरतयैव सिद्धोपायप्रामाण्यं सङ्गच्छते—इति ।

अन्ये च—छान्दसपैशाचकान्दिशीकाः—ध्याननियोगवादिनां दिशमेव शरणयन्तो वेदान्ताचार्यप्रदर्शितद्वितीयपक्षप्रतिष्ठापनभ्रान्त्या चरमश्लोके न्यासनियोगशेषतया सिद्धोपायसिद्धिं सिद्धान्तयन्ति।

तत्र सिद्धनियोगवादी प्रष्टव्यः—नियोगः (१), विषयः (२), नियोज्यविशेषणम् (३), करणम् (४), इति कर्तव्यता (५), प्रयोक्ता (७), फलञ्च (७), सर्वं वक्तव्यमिति।

भगवत्प्रसाद एव नियोगः (१), सिद्धोपायो विषयः (२), महाविश्वासादिकं नियोज्यविशेषणम् (३), सिद्धोपाय एव करणम् (४), प्रपत्तिरेवेतिकर्तव्यता (५), मुमुक्षुरशक्तः प्रयोक्ता (६), मोक्षः फलं (७) इति चेत्;—

(१) तत्र फलार्थभगवत्प्रसादो नियोगः—उत स्वयम्प्रयोजनः प्रसाद इति। नाद्यः-अन्यार्थतयोद्दिष्टस्य प्राधान्यासम्भवेन नियोगत्वायोगात्। नियोगस्य हि—'कृतिप्रधानत्वम्, कृतिसाध्यत्वम्, इष्टत्वम्' इत्याकारत्रयं तान्त्रिकाभ्युपगतम्। इष्टत्वकृतिसाध्यत्वे - फलभावार्थसाधारणे। कृतिप्रधानत्वं हि आकारद्वयविलक्षणं फलभावार्थव्यावर्तकं वर्ण्यते। यथा टीकायामुक्तम्—"कार्यमर्थं प्रतिपादयतो वेदस्य प्रामाण्यम्" इति। अत्र 'अर्थ' शब्देन प्राधान्यं विवक्षितम्। यथा पञ्चिकायां "कार्यमर्थम् - प्रधानतया प्रतिपादयतो वेदस्य प्रामाण्यम्। तत्रैव प्रामाण्यशब्दव्युत्पत्तेः। व्युत्पत्त्यायत्तत्वात्तस्य" इति। प्रकरणशालिकायाञ्च "कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते" (प्रकरणपञ्चिकायां १० प्रकरणे॥) इति। तस्मात्प्रसादस्य फलार्थत्वे तस्य नियोगत्वं दुर्घटम्।

ननु फलस्यानुषङ्गिकत्वात्, प्रसादस्य प्राधान्यमुपपद्यते। तथा स्वप्राधान्यनिर्वहणायानुजीविनामभिमतं प्रभुःप्रददाति; तद्वदपूर्वस्थानीयो भगवत्प्रसादोऽपि स्वयम्प्रधानतया प्रतिपन्नः स्वप्राधान्यनिर्वहणाय स्वं साधयतः पुरुषस्य पुरुषार्थं ददातीति। तथोक्तं पञ्चिकायां—"आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये। कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव न" इति। (प्रकरणपञ्चिकायाम् - १० प्रकरणे॥) इतिचेत्;—मैवम्। फलस्यानुषाङ्गिकत्वे तदुद्देशाभावेन केवलप्रसादार्थव्यापारे पुरुषस्य प्रवृत्त्यनुपपत्त्या भगवत्प्रसादरूपनियोगस्यैवासिद्धिप्रसङ्गात्।

अथ स्वयम्प्रयोजनभगवत्प्रसादस्यैव नियोगत्वोक्तौ तत्परतया प्रतिपिपादयिषितस्य चरमश्लोकस्य केवलकैङ्कर्यपरत्वापातात् । प्रसादस्य फलप्रदत्वोक्तेः "फलमत उपपत्तेः" (ब्रह्मसूत्रं-३-२-३८॥) इत्यादिशास्त्रविरुद्धत्वेन स्वयम्प्रयोजनभगवत्प्रसादस्यानुषङ्गिकफलप्रदत्वस्यापि असम्भवेन तस्य नियोगत्वायोगाच्च । किञ्च - भगवत्प्रसादस्य नियोगत्वे तस्यैव प्रधानशेषित्वापत्त्या भगवतस्सर्वकर्मसमाराध्यत्वं सकलफलप्रदत्वञ्च दत्तजलाञ्जलिस्स्यात् । अत एव हि महतासंरम्भेणापूर्वनिराकरणपूर्वकं यागादीनां केवलभगवदाराधनात्मकत्वं, महोदारस्य भगवत एव सकलफलप्रदत्वञ्च शारीरकमीमांसायां प्रतिष्ठापितमाचार्यैः । तस्मात्प्रसादस्य नियोगस्थानीयत्वमनुपपन्नमेव ।

(२) अथ यदुक्तं 'सिद्धोपाय एव नियोगस्य विषयः' इति, तन्न । तस्य नित्यत्वेनाभव्यरूपत्वात्, क्रियारूपत्वाभावेनाभावार्थत्वाच्च । अपि चोत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुष्टयमपि कृतिसाध्यत्वं ब्रह्मणो न सम्भवति । न तावदुत्पाद्यस्सिद्धोपायः; "असम्भवस्तु सतोऽनुपपत्तेः" (ब्रह्मसूत्रम् १-३-९॥) इति सूत्रविरोधात् । "उत्पत्त्यसम्भवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः" (श्रीभाष्ये १-३-९॥) इति हि तत्र भाष्यम् । एतेनावस्थाभेदाच्चेतनादीनामिव सिद्धोपायस्यापि साध्यत्वसम्भावना निरस्ता । तर्हि कथं "बहुस्याम्" (तैत्तिरीयोपनिषदि - आनन्दवल्याम् - ६-२॥) इत्यादि बहुभवनं ब्रह्मण उपपद्यत इति चेत् - भ्रान्तोऽसि ? कार्यानुप्रवेशादेव हि ब्रह्मणः कार्यत्वमुच्यते । न स्वरूपविकारात्, स्वभावविकाराद्वा । विभूतिविकारात्कार्यत्वं हि । प्राप्ताप्राप्तविवेकात्, ब्रह्मणो हेयगुणप्रत्यनीकत्वनिरूपणाच्च विभूतिमात्रे पर्यवसन्नम् । न चैवं ब्रह्मणः कार्यवाचिशब्दार्थत्वाभावप्रसङ्गः; अनुप्रवेशविशेषस्यैव कार्यशब्दबुध्यो (ः) ब्रह्मपर्यन्ततानियामकत्वात् । कथं कार्यस्य ब्रह्मपर्यन्तत्वे सत्यपि ब्रह्मणः कार्यत्वासम्भव उपपद्यत इति चेत्—परम्परया कार्यत्वे सत्यपि साक्षात्तदभावोपपत्तेः । न चैवं "स एव स्रज्यः" (विष्णुपुराणे - १-२-७०॥) इत्यादिव्यवहारभङ्गप्रसङ्गः; "काठिन्यवान्यो बिभर्ति" (विष्णुपुराणे १-१४-२८॥) इति परम्परासम्बन्धस्यापि तादृशव्यवहारप्रयोजकत्वसत्त्वात् । यद्वा भवतु विभूतिविशिष्टत्वेषेण भगवतोऽपि कार्यत्वम्; तथापि तन्न विभूतिकार्यताप्रयोज्यम् । हेयप्रतिभटत्वशक्त्या तस्य प्रतिहतत्वात् । किन्तु केवलभगवदिच्छाप्रयोज्यमेव । "तदात्मानं स्वयमकुरुत" (तैत्तिरीयोपनिषदि आनन्दवल्याम् ७-१॥) इति श्रुतेः । तथा च

"अजायमानोबहुधा विजायते" (तैत्तिरीय ब्राह्मणे - आरणे ३-१३,॥) इत्युक्तप्रादुर्भाववत्, बहुभवनस्यापि चेतनयत्नप्रयोज्यत्वायोगात्, उत्पाद्यतया चेतनकृतिसाध्यत्वं सिद्धोपायस्य दुर्घटमेव।

अथ नापि प्राप्यतया तथात्वम्; अन्तरात्मतया नित्यप्राप्तत्वात्। नापि विकार्यतया; दध्यादिवदनित्यत्वप्रसङ्गादेव।

नापि संस्कार्यतया। संस्कारो हि-दोषापनयनेन वा, गुणाधानेन वा साधयति। न तावद्दोषापनयनेन; अखिलहेयप्रत्यनीकस्य भगवतो हेयतम-संसार्यपनेयदोषासम्भवात्। नाप्यतिशयाधानेन; अवाप्तसमस्तकामस्य क्षुद्रतमबद्धाधेयातिशयायोगात्। न च देहस्थया स्नानादिक्रियया तदात्मन इव ब्रह्मणोऽपि संस्कारसम्भवः; तथा सति सिद्धोपायस्यापि कर्मवश्य-त्वापत्तेः।

ननु न वयं सिद्धोपायस्य स्वेनैव रूपेण कृतिसाध्यतया विधेयत्वं ब्रूमः; किन्तु नैरपेक्ष्यविशिष्टवेषेणैव। तथा हि "मामेकं शरणं व्रज" इति विधिवाक्येन हि 'मामेकं शरणं कुरु" इति कर्तव्यतया सिद्धोपायो विधीयते। "द्रौपद्या सहितास्सर्वे नमश्चक्रुर्जनार्दनम्" (भारते-वनपर्वणि-१९२-५७॥) इति प्रकरणान्तरे व्रजधातुस्थाने कृञ्धातुप्रयोगात्। तत्र हि नमश्शब्दश्शरण-शब्दसमानार्थकः। तदनुष्ठानमूलभूतगुरूपदेशैकार्थ्यात्। इत्थं हि मार्कण्डे-योपदेशस्तत्र "गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः" (भारते-वन-१९२-५६) इति। "पन्था नकार उद्दिष्टः" (अहि-सं-५२-२२॥) इत्यादिनिर्वचनाच्च। तथाच 'शरणं व्रज' इत्यस्योपायं कुर्वित्यर्थः। शरणशब्दोक्तमुपायत्वं नाम—गुरूपायनैरपेक्ष्यमेव। अन्यस्य दुर्वचत्वात्। एवञ्च 'मां निरपेक्षं कुर्यात्'इति नैरपेक्ष्यविशिष्टवेषेणैव सिद्धोपायस्य विधेयत्वान्नानुपपत्तिः। तथा चानु गृहीतं निक्षेपरक्षायां—"गोप्तर्येव भगवति प्रपित्सोरुपायान्तरनिवृत्तिमभिस-न्धायोपायत्ववाचो युक्तिः; तेन निरपेक्षरक्षकत्वमनुसंहितं भवति। अतः "उपायार्थैकवाचकः" (अहि-सं-३६-३५॥) इति च तत्परमेव। ततश्चाङ्गिप्रपत्तौ उपायभूताया भक्तेस्स्थाने निवेश्य भगवानुपदिश्यते। भक्त्यापि हि भगव-त्कृपैवोत्तम्भ्यते। सा चाकिञ्चने प्रपन्ने स्वयमेवोत्तम्भ्येत। अतो भक्तिसाध्यां तामीश्वरस्वभाव एव, निर्वर्तयतीति अनुपायानां स एवोपायः" इति। तथा चैतदुक्तं भवति—अकिञ्चनस्याशक्त्योपायान्तरस्थाने सिद्धोपायश्चरमश्लोका-

दिना विधीयते। तेषां प्रपदनन्तु सिद्धोपायस्य गुरूपायस्थानस्थित्यापादको व्यापार एव। ततश्च भक्तिस्थानीयस्य सिद्धोपायस्य प्रपत्तिरङ्गस्थानीया। तस्या भक्तिस्थानीयत्वविशिष्टभगवत्स्वरूपनिष्पादकत्वात्। भगवतो भक्तिस्थानीयत्वं नाम-भक्तिकार्यकरणे भक्तिनैरपेक्ष्यमेव। तस्मान्नैरपेक्ष्यविशिष्टस्सिद्धोपाय एवात्र कर्तव्यतया विधीयत इति नानुपपत्तिरिति चेत्;—

नैवम्। प्राप्ताप्राप्तविवेकेन विशिष्टसाध्यताया विशेषणसाध्यतामात्रे पर्यवसानात्। अभावार्थस्य साध्यत्वेऽपि फलत्वमेव, न विधेयत्वम्। भावार्थस्यैव विधेयत्वनियमात्। तर्हि निरपेक्षीकरणमेव विधिविषयोऽस्त्विवति चेत्;- तथा सति सिद्धोपायविधिवादस्य त्यागप्रसङ्गात्। किञ्च - भगवत्कर्तृकापेक्षानिवृत्तेश्चेतनव्यापाररूपत्वाभावेन चेतनम्प्रतिनिरपेक्षीकरणस्यापि विधानायोगाच्च।

न च साक्षात्सिद्धोपायनिरपेक्षीकरणे चेतनस्याशक्तत्वेऽपि भगवत उपायान्तरस्थाननिवेशात्मकाङ्गानुष्ठानमुखेन सिद्धोपायनिरपेक्षीकरणं शक्यत एवेति वाच्यम्; तथा सत्यौचित्यात्, उपायान्तरस्थाननिवेशम्प्रति निरपेक्षसिद्धोपायस्य फलत्वमेव स्यात्। नाङ्गित्वम्। अस्त्विवति चेत्, न; सिद्धोपायस्य गुरूपायस्थानीयत्वपरित्यागप्रसङ्गात्। किञ्च सिद्धोपायोपायतायाश्चेतनक्रियासाध्यत्वं सर्वशास्त्रविरुद्धम्। "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" (भारते-वनपर्व-८६ २६॥) "स हि धर्मस्सनातनः" (भार-सभा-२८-२३॥) "उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणावतस्त्वां श्रीरङ्गेशय शरणमव्याजमभजम्" (श्रीरङ्गराजस्तवे २-८६॥) "दीपप्रकाश तदिह त्वदवाप्तये त्वामव्याजसिद्धमनपायमुपायमाहुः" (शरणागतिदीपिकायां-१०॥) इत्यादिभिर्भगवदुपायताया नित्यसिद्धत्वोक्तेः। तस्मात्सिद्धोपायस्य नियोगविषयत्वं दुरुपपादमेव।

(३) अथ यदुक्तं 'विश्वासादिकं नियोज्यविशेषणम्' इति, तन्न।— फलादिभ्यो विभिन्नत्वाद्विश्वासो विध्यनन्वयात्। विधेयान्तरहानेश्च न नियोज्यविशेषणम्॥ नियोज्यविशेषणता हि—फलकामनारूपतया, फलतया, निमित्ततया वा स्यात्। न पूर्वः - असिद्धेः। न द्वितीयः - फलस्य स्वरूपेण विशेषणत्वायोगात्। यदुक्तमागमप्रामाण्ये—"सिद्धमेव हि सर्वत्र नियोज्यस्य विशेषणम्। जीवनादि तथैवैकं कामनैव विशेषणम्" इति। काम्य-

मानतया विशेषणत्वेऽपि तदर्थसाधनविधानादर्शनात्; स्वर्गादिवत्स्वतो वा, पश्वादिवत्फलान्तरसाधनतया वा फलत्वस्यासिद्धेश्च । न तृतीयः - हिंसादिवत्, निषिद्धानुष्ठानतया निमित्तत्वे परिहरणीयत्वप्रसङ्गात् । जीवनपुत्रजन्मादिवत् केवलनिमित्तत्वकल्पने "मामेकं शरणं व्रज" "हरेस्स्वाम्यं स्वभावश्च सदा स्मर" (पांचरात्रे) इत्यादिविधिप्रत्ययोगः परिपन्थी । विधेयान्तरासिद्धिश्च ।

तद्विशिष्टश्च ब्रह्मस्वरूपं गुरूपायस्थानीयतया विधीयत इति चेत्; कोऽयं विधिः - किंकर्तव्यतावेधनम्, उताज्ञातज्ञापनमात्रम् । नाद्यः - विभोस्सिद्धोपायस्य घटपटादेरिव हानोपादानाद्यसम्भवेन त्यक्तोपायान्तरस्थाननिवेशविशिष्टवेषेणापि कृतिसाध्यत्वायोगात् । प्रसन्नत्वरूपेण साध्यमिति चेत्; तर्हि विशिष्टोपादनस्यात्र विशेषणार्थत्वात् 'प्रसाद एव साध्यः' इत्यागतम् । तथा सति स एव विधेयस्स्यात् । न ब्रह्म । अस्त्विति चेत्, कर्तृव्यापाररूपत्वाभावेन साक्षात्कृतिसाध्यतया विधेयत्वासिद्धेः । पारम्पर्येण साध्यत्वेऽप्यौचित्यात् स्वर्गादिवत् फलत्वस्य तद्धेतुभूतावान्तरव्यापारत्वस्य वा प्रसङ्गात् । न चेह तद्युक्तम्—नैमित्तिकतया कामनाधिकारत्वासिद्धेः, संवलिताधिकारत्वज्ञापकाभावात्, तदर्थविधेयान्तराभावे तस्यापि असाध्यत्वस्यैव प्रसङ्गाच्च ।

नापि द्वितीयः—"अमृतस्यैष सेतुः (मु-२-२-५ ।।) इत्यादिभिर्महाविश्वासादिरहितस्यापि तज्ज्ञानदर्शनेन तद्विशिष्टस्यैव तदधिकारित्वासिद्धेः । न यथावस्थितशास्त्रश्रवणवेलायामेव महाविश्वासादिशाली श्रोता महाविश्वासादेश्शास्त्राधिगम्यत्वेन श्रवणविश्वासयोरन्योन्याश्रयप्रसङ्गात् । आदावेव यथावस्थितप्रपत्तिशास्त्रार्थनिश्चयसंस्कारद्रढिमसम्पादनद्वारा तत्कार्यस्य विश्वासमहत्त्वस्य विधिविषयत्वमिति हि भवताम्मतम् । हितकारिवचनाद्विश्वासादिसम्भवेऽपि निरर्थकमिदं पुनरज्ञातज्ञापनम् । यदि हि महाविश्वासादिशालिनः परमपुरुष उपायान्तरस्थानीयो मोक्षं जनयेत्, किमस्य पुनस्तथात्वज्ञानेन । विश्वासादिशालिना साधनतया ज्ञायमानं ब्रह्मैव साधनमिति चेत्, तर्हि साधनतया ज्ञायमानमेव गुरूपायस्थानीयमित्यागतम् । ततश्च गतं ब्रह्मणस्तथात्वम् । एवञ्चासाधने ब्रह्मणि साधनान्तरस्थानीयत्वदृष्टिरेवेति मिथ्याज्ञानान्मोक्षप्रसङ्गः । फलप्रदत्वाकारेण ब्रह्मणस्साधनत्वमस्त्येवेति चेत्, किन्तेन; नैतावता करणरूपगुरूपायस्थानीयत्वम् । किञ्च फलप्रदत्वज्ञानस्य श्रवणमात्र-

सम्पाद्यत्वेन विधिव्यापारविषयत्वायोगाच्च। अविधेयज्ञानमात्रस्य मोक्षसाधनत्वे कुदृष्टिमतोत्थानप्रसङ्गात्, "इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका" (न्यायसिद्धाञ्जने-२-परिच्छेदे ।।) इति महाविश्वासस्यैव प्रपत्तित्वाभ्युपगमात्, अधिकारिविशेषणविधेययोरैक्यप्रसङ्गाच्च ।

समर्पणपर्यन्तसाधनत्वबुद्धिविशेषस्यैव प्रपत्तित्वाभ्युपगमान्न दोष इति चेत्, मैवम्। यथावस्थितसमर्पणस्याविशेषत्वज्ञानमात्रात्मकतया "परशेषत्वधीमात्रमधिकारिविशेषणम्" इति तस्याधिकारिविशेषणत्वाभ्युपगमेन तद्दोषतादवस्थ्यात् । अस्त्वनयोरैक्यमिति चेत्, न; सिद्धत्वसाध्यत्वलक्षणविरुद्धधर्माध्यासात्, 'तत्सिध्यैव चतत्सिद्धिः' इत्यात्माश्रयप्रसङ्गाच्च । 'रक्षाविश्वासः—विशेषणम्, रक्षकत्वज्ञानम्—प्रपत्तिः' इति नैक्यमिति चेत्, तथा सत्यन्योन्याश्रयणम् । रक्षाविश्वासस्य रक्षकत्वबुद्धिपूर्वत्वाद्रक्षाविश्वासविशिष्टं प्रति रक्षकत्वोपदेशात्, रक्षकत्वातिरिक्तं साधनत्वमुपदिश्यत इतिचेत्; किमत्र साधनशब्देन कर्तृतदितरसाधारणहेतुत्वमात्रं विवक्षितम्—उत कर्तृव्यतिरिक्तं किमपि कारकान्तरम्। पूर्वत्र स्थितमेवान्योन्याश्रयणम् । विशेषप्रतिपत्तेस्सामान्यप्रतिपत्तिमन्तरेणासिद्धेः । उत्तरत्र ब्रह्मणः करणत्वं दुर्निरूपमिति स्ववचनविरोधप्रसङ्गात्। गुरूपायस्थानीयत्वमेव ब्रह्मणः करणत्वमिति चेत्, गुरूपायस्थाने प्रपत्तेरेवावस्थिततया प्रपत्तिविषयस्य ब्रह्मणस्तथात्वोक्तिरुपचारमात्रं स्यात्। पूर्ववन्मिथ्याप्रत्ययादपवर्गप्रसङ्गो वा, स्वतन्त्रतयोत्कृष्टे कर्तरि ब्रह्मणि अस्वतन्त्रतयापकृष्टगुरूपायान्तरस्थानीयत्वदृष्टेर्महापराधरूपत्वं, ततो दृष्टिविधिनयस्यापि अत्र नावकाशः। कर्तरि ब्रह्मणि चेतनव्यापाररूपगुरूपायस्थानीयत्वबुद्धौ तदारोपितकरणत्वादेश्च कर्तृनिरूपितस्वरूपत्वे कर्त्रपेक्षायां जीव एव कर्तेति प्रतीयेत । तथा चाकर्मयोगादनुवर्तमानस्यात्मनि अकर्तृत्वानुसन्धानस्य प्रपत्तिदशायां परित्याग इति सम्यक्सम्प्रदायः परिरक्षितः। अत्यन्तपारतन्त्र्यनिष्ठा हि प्रपत्तिनिष्ठामातिष्ठन्ते।

कर्तर्येव ब्रह्मणि सहकारिनैरपेक्ष्यमात्रं साधनशब्देन विवक्षितमिति चेत्, न; विकल्पासहत्वात्। किमत्र नैरपेक्ष्यशब्देन साधनसामान्यनैरपेक्ष्यमभिप्रेतम् - किम्मुख्यकल्पनैरपेक्ष्यमात्रम्। नाद्यः - प्रपत्तिसापेक्षत्वेन बाधात्। द्वितीयेऽपि किम्मुख्यकल्पाधिकारिणि मुख्यकल्पनैरपेक्ष्यं विवक्षितम्,- उत तदनधिकारिविषये वा । नाद्यः-शक्तेषु मुख्यकल्पसापेक्षतया बाधात् । नापि

द्वितीयः - अनुकल्पाधिकारिविषये मुख्यकल्पनैरपेक्ष्यस्योदासीनघटादिनै-रपेक्ष्यवत्सार्वत्रिकत्वेन भगवतस्सर्वत्रोपायत्वप्रसङ्गात् । न चेष्टापत्तिः; सिद्धो-पायोपायतायाः प्रपन्नाधिकार्यसाधारणतया प्रपत्तिविद्यावेद्याकारत्वसिद्धान्त-परित्यागप्रसङ्गात्, ब्रह्मणःप्रपन्नविषये गुरूपायनिरपेक्षत्वे, ब्रह्मणो गुरूपाय-स्थाननिवेशानुसन्धानसिद्धान्तस्य परित्यागप्रसङ्गाच्च ।

अथ 'भगवति स्वात्मात्मीयसमर्पणमेव प्रपदनम्' इति नानुपपत्तिरिति-चेन्न; "नियतस्वमिति प्रबुद्धधीरथवा किन्तु समर्पयामि ते"(स्तोत्ररत्ने ५३।।) इत्यनुगृहीतरीत्या भगवन्निरुपाधिकशेषभूतस्य स्वात्मात्मीयस्य स्वेन समर्प-णीयत्वायोगात् । तथा समर्पणे चात्मापहारस्यानुच्छेदप्रसङ्गात् । तथा चानु-गृहीतं श्रीमति रहस्यत्रयसारे साङ्गप्रपदनाधिकारे "स्वस्य द्रव्यस्य राज्ञ उप-हारत्वेन प्रदानपुरुषवत्, 'ममेदम्' इत्यभिमानेन समर्पणे आत्मापहारचौर्यं समूलं न विनश्यति" इत्यादि । अयं भावः - स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वा-पादनरूपसमर्पणस्य निवर्तनीयस्वस्वत्वाभिमानपूर्वकत्वावश्यं भावेन समर्पणा-नुष्ठानमात्मापहारगर्भमेव स्यात्—इति ।

न च भृत्यहस्तन्यस्तराजाभरणस्य तदपेक्षासमये भृत्येन प्रतिपादनव-दत्रापि दानं युज्यत इति वाच्यम्; कर्मकर्तृत्वविरोधेन द्रव्यान्तरस्येव स्वात्म-नो हानोपादानयोरयोगात् । ईश्वरं प्रत्यपृथक्सिद्धविशेषणतयैव लब्धसत्ता-कस्यात्मनश्चेतनहस्तन्यासे सति स्वरूपनाशप्रसङ्गाच्च । न च न्यस्तत्वेन समर्पि-तत्वेन च भानमेव समर्पणम्; मिथ्याज्ञानादपवर्गप्रसङ्गात् । न हि वस्तुतो न्याससमर्पणे स्तः; सदा सर्वेषां भगवन्निष्ठत्वात् । अत एवात्महविर्होमरूपा प्रपत्तिरित्यपि न घटते; पदाहवनीयादिवदत्र देशविशेषासिद्धेः । "ब्रह्माग्नौ जहुयात्" इति स्मर्यत इति चेत्, मैवम् । ब्रह्मणो होमदेशात्मकत्वे तदाराध्या-काङ्क्षायां देवतान्तरमेव प्रतीयेतेति कर्मयोगात्प्रभृत्यनुवर्तमानस्य भगवदैका-न्त्यस्य प्रपत्तिदशायां परित्यागप्रसङ्गात्; आराध्यतया सर्वोत्कृष्टस्य ब्रह्मण-स्तदपेक्षया निकृष्टदेशविशेषात्मकत्वदृष्टेर्महापराधरूपत्वम् । किं च ब्रह्माग्नौ-कर्तव्यतया विवक्षितो हविःप्रक्षेपः किं रूपः । आत्महविः प्रतियोगिकब्रह्माग्नि रूपोऽधोदेशसंयोगजनकक्रियानुकूलव्यापार एवेति चेन्न; देशापरिच्छिन्नस्य ब्रह्मस्वरूपस्याधोदेशात्मना परिच्छिन्नानुसन्धानस्यापि महापराधरूपत्वात् । किञ्चास्य कःकर्तेति विवेचनीयम् । हविष्वेनाभिमत आत्मैवेति चेत्, न । स्वेनैव स्वस्य प्रक्षेप्तुमशक्यत्वात् । आत्महविस्स्वयमेवोद्गम्य ब्रह्माग्नौ पततीति

चेत्; किमापातसुन्दरं स्वयमुद्दश्यपतनं नाम ब्रह्मापृथक्सिद्धस्य तदुभयासम्भवात्। यदि च तथातथाभावनमात्रं होमः, तथा मिथ्याज्ञानादपवर्गोपत्तिर्जागर्त्येव। एतेन - 'परमात्मोद्देशेनात्मद्रव्यत्यागात्मको यागविशेष एव प्रपत्तिः' इत्यपि परास्तम्। अनात्मीयस्यात्मना त्यागासम्भवात्। यदि च स्वस्वत्वभ्रमनिवृत्तिरेव त्यागः, तस्य श्रवणमात्रभाविनो विधानानपेक्षणात्; तद्विधानमनर्थकम्। विधिबलादेव स्वसम्बन्धमारोप्य स त्यक्तव्य इति चेत्, धिक्त्वामन्धं, येन तत्त्वयाथात्म्यज्ञानकाष्ठाभूतायाः प्रपत्तेर्मिथ्याज्ञानैकनिष्पाद्यतां ब्रूषे।

अथ स्वस्वरक्षणासमर्थेन शक्तहस्ते तन्निक्षेपवदात्मनिक्षेप एव प्रपत्तिरित्यपि न साधीयः। आत्मनस्स्वस्वत्वाभावेन तन्निक्षेपायोगात्। चोरापहृतराजाभरणस्य राजहस्ते चोरेणैव निक्षेपवत्, प्रपत्तेर्महापराधताप्रसङ्गात्। लौकिकनिक्षेपाद्विलक्षणोपायमात्मनिक्षेप इति चेत्; किमिदं वैलक्षण्यम्। "ओमित्यात्मानं युञ्जीत" (तैत्ति-उप-नाराय-५०॥) 'ईदृशःपरमात्मासौ प्रत्यगात्मा तथेदृशः। अनयोरेष सम्बन्ध इति योगः प्रकीर्तितः" (शाण्डिल्यस्मृ-५-१७) इत्याद्युक्तमन्त्रनियमादिविशिष्टयथावस्थितशेषत्वानुसन्धानात्मकत्वमिति चेत्; तदपि मन्त्रादिश्रवणवेलायामेव सिध्यतीति न तस्यापि विधानापेक्षा। एतेन - आनुकूल्याद्यङ्गवैशिष्ट्यापेक्षया विधिरित्यपि प्रत्युक्तम्। श्रवणदशाभाविसम्बन्धज्ञानेनैवास्तिकानामानुकूल्यसङ्कल्पादीनां सम्भावितत्वात्। तस्मात्सिद्धोपायस्य साक्षात्कृतिसाध्यतया विधेयत्वायोगात्, परम्परया तद्विधेयत्वापादकविध्यन्तरासिद्धेः, सिद्धोपायविषयकाज्ञातज्ञापनरूपविधिविशेषस्याप्यसम्भवाच्च सिद्धोपायनियोगस्यैवासिध्या महाविश्वासादेर्नियोज्यविशेषणत्वं दुर्घटमेव।

(४) अथ यदुक्तं 'सिद्धोपाय एव करणम्' इति, तदप्यनुपपन्नम्। सिद्धस्य करणत्वे विधिवैयर्थ्यात्। "नासाधितन्तु करणम्" इति नियमभङ्गप्रसङ्गाच्च। गुरूपायस्थाननिविष्टतया नैरपेक्ष्यविशिष्टतया प्रसन्नत्वविशिष्टतया च सिद्धोपायस्य साध्यत्वाभ्युपगमान्न दोष इति चेत्; तर्हि साध्योपाय एव करणमित्यागतम्, न सिद्धोपायः। विशेषणस्य साध्यत्वेऽपि विशेष्यस्य सिद्धत्वात्सिद्धोपायत्वोपपत्तिरिति चेत्, तर्हि भक्त्यादीनामपि सिद्धोपायतैव स्यात्। धर्मभूतज्ञानस्य नित्यत्वात्। तत्र प्रीतिरूपमेव हि साध्यम्।

किञ्च सिद्धोपायस्य चेतनयत्नसाधितत्वाकारेण करणत्वाभ्युपगमे तस्यानित्यतया "न ह्यध्रुवैः प्राप्यते ध्रुवं तत्" (कठो-२-१०।।) "नास्त्यकृतःकृतेन" (मु-१-२-१२।।) इत्यादिश्रुतिविरोधो दुष्परिहरः। तत्र चेतनयत्नसाधितस्य नित्यफलकरणत्वनिषेधात् । किञ्च मोक्षप्राप्तिदशायां सिद्धोपायरूपं करणं वर्तते वा, न वा। आद्ये - नियोगस्यासिद्धिः। आशुतरविनाशिनः कालान्तरभाविफलकरणत्वान्यथानुपपत्त्या हि नियोगःकल्प्यते। द्वितीये - सिद्धोपायरूपाश्रयनाशे सति तत्प्रसादरूपनियोगस्य निराश्रयतयावस्थानासम्भवेन तस्यापि नाशापत्त्या मुक्तेराकस्मिकत्वमेव स्यात्। नैरपेक्ष्यादिविशिष्टस्वरूपस्सिद्धोपायो विशेष्यांशे प्रसादरूपं नियोगमुत्पाद्य पश्चाद्विशेषणनाशान्नश्यतीति चेत्; तथा सति नैरपेक्ष्यप्रसन्नत्वादिरूपविशेषणनाशस्य सापेक्षत्वनिग्रहवत्त्वाद्युन्मज्जनरूपत्वेन तत्प्रतिबन्धबलान्मोक्षासिद्धिप्रसङ्गात्। तस्माच्चेतनसाधितस्य सिद्धोपायस्य करणत्वमनुपपन्नमेव।

(५) अथ यदुक्तं 'प्रपत्तिरितिकर्तव्यता' इति, तदप्यनुपपन्नम्। प्रमाणाभावात्। सिद्धोपायस्योपायान्तरस्थाननिवेशमहिम्नैवोपायान्तराङ्गभूतायाः प्रपत्तेस्सिद्धोपायाङ्गत्वं सिध्यतीति चेत्, तर्हि कर्मज्ञानादीनामपि सिद्धोपायाङ्गत्वापत्तेः। "सर्वधर्मान्परित्यज्य" इत्यनेनैव तेषामङ्गत्वनिरास इति चेत्; भ्रान्तोऽसि, अशक्तिसिद्धत्यागानुवादरूपं हि तत्; न तावता शक्त्यंशानां निवारणं कर्तुं शक्यते। न चैवं नैरपेक्ष्यविधायकैकशब्दबलाच्छक्यांशानामपि गुरूपायाङ्गानां सिद्धोपायाङ्गत्वाभावसिद्धिः। तथा सति तेनैव प्रपत्त्यंशेऽपि नैरपेक्ष्यसिद्ध्या प्रपत्तेरप्यननुष्ठेयत्वापत्तेः। न च 'सर्वपापेभ्यो मोक्षयिष्यामि' इति फलवत्तया प्रतीयमानस्य सिद्धोपायस्य सन्निधौ 'मामेकं शरणं व्रज' इति विधीयमानाया अफलायाश्शरणागतेस्तदङ्गत्वसिद्धिरिति वाच्यम्; विकल्पासहत्वात्। 'मामेकं शरणं व्रज' इति विधिः - किं सिद्धोपायविधिः, उत तदङ्गविधिः, अहोस्विद्विशिष्टविधिर्वा। नाद्यः - अङ्गविध्यसिद्धेः। नापि द्वितीयः - अङ्गिविध्यसिद्धिप्रसङ्गात्। अथ तृतीये विशिष्टविधिवाक्यार्थः - कीदृशो विवेचनीयः। शरणवरणविशिष्टं सिद्धोपायभूतं 'मां कुर्वि' त्येव वाक्यार्थ इति चेत्; किं नाम सिद्धोपायकरणम्। किञ्च तदङ्गं वरणं नाम। उपायान्तरस्थाननिवेश एव सिद्धोपायस्य करणम्, भरन्यास एव तदङ्गभूतं वरणमिति चेत्; तर्हि तयोरुभयोरपि 'व्रज' इत्यनेनैव विधाने वाक्यभेदप्रसङ्गः। "सकृच्छ्रुतश्शब्दः, सकृदेवार्थं गमयति" इति न्यायेन युगप-

दुभयोरेकशब्देन विधातुमशक्यत्वात्। किञ्चात्र को नाम भरन्यासः; स्वदुर्वहस्य रक्षाभरस्य भगवच्छिरसि समर्पणमेवेति चेत्; काष्ठविचायकेन स्वदुर्भरस्य काष्ठभरस्यातिसुकुमारतमसार्वभौमशिरसि समर्पणवन्महदिदं साहसिकम्। यद्यस्य शास्त्रबलात् असाहसिकत्वमिष्येत, तर्हि भरन्यासवद्भगवदुरसि बाणप्रयोगोऽप्यनुष्ठीयताम् । "प्रणवो धनुश्शरोह्यात्मा" (मु-उप २-२-४॥) इत्यादिना तस्यापि विहितत्वात्। यदि च भरन्यासस्यैव धानुष्कव्यापारत्वेन रूपणं प्ररोचनादिप्रयोजनान्तरमेवेति, न तत्र शास्त्रतात्पर्यमिति मन्येत; तर्हि भरन्यासशास्त्रस्यापि तथैवान्यपरत्वेन भरन्यासासिद्धेस्तुल्यत्वात् ।

अथ कोऽयं रक्षाभरः—किं फलप्रदानपरः, उत तत्करणानुष्ठानपरो वा । नाद्यः—"न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्" (विष्णुपु-९-२२-२९॥) इति भगवव्द्यतिरिक्तस्य तत्प्रसङ्गायोगात्। नापि द्वितीयः—विकल्पासहत्वात्। किं सर्वप्रकारभरन्यासोऽत्र विवक्षितः, उत गुरूपायभरन्यासमात्रम्। नाद्यः-भरन्यासस्यापि अननुष्ठानप्रसङ्गात्। तदनुष्ठाने सति तद्भरस्यासमर्पिततया भरन्यासवैकल्यात् । नापि द्वितीयः-भरन्यासरूपाङ्गानुष्ठानदशायामेव गुरूपायभरस्य समर्पिततया तदनन्तरं भगवतो गुरूपायस्थाननिवेशरूपाङ्ग्यनुष्ठानासम्भवात्। तदनुष्ठाने दत्तापहारप्रसङ्गात्। नच भरन्यासमात्रेण स्वीकृतभरो भगवान्स्वयमेवोपायान्तरस्थाने निवेशिते तदनुसन्धानमेवात्र चेतनकृत्यमिति नानुपपत्तिरिति वाच्यम्; तथा सति व्यर्थमिदं पुनस्तदनुसन्धानम्। स्वयत्नविनिवृत्त्यर्थतया तदनुसन्धानं सार्थकमिति चेत्; स्वयत्नविनिवृत्तिरपि निरर्थैव । ब्रह्मास्त्रन्यायेन सिद्धोपायस्स्वयत्नविनिवृत्तमपेक्षते इतिचेत्; तर्हि गतं भगवतो नैरपेक्ष्यम्। निवृत्तिसापेक्षत्वं न नैरपेक्ष्यविरोधीति चेन्न; निवृत्तेरपि प्रवृत्तिवद्व्यापाररूपतायास्स्वरक्षणार्थतायाश्च लोकवेदयोस्सम्प्रतिपन्नत्वात् ।

किञ्च यथाशास्त्रं रक्षाभरे न्यासे कृतेऽपि पुनस्तत्र सन्देहाद्यदि कश्चित्प्रवर्तेत, तर्हि तस्य नास्तिकस्य भगवत्कर्तृकोपायान्तरस्थाननिवेशानुसन्धाने वा कथं स्वप्रवृत्तिनिवृत्तिस्स्यात् । किञ्चाशक्तस्यानुकल्पमात्रेऽधिकारात्, गुरूपायानुकल्पभूतं भरन्यासमनुष्ठितवतः फलार्थमनुष्ठेयशेषाभावेन गुरूपायभरस्यैवाप्रसक्त्या तन्न्यासश्शशशृङ्गसोदर एवेति प्रपत्तेस्सिद्धोपायेतिकर्तव्यतोक्तिरपि दुरुक्तिरेव ।

(६) अथ यदुक्तं 'मुमुक्षुः प्रयोक्ता' इति, तदप्यसङ्गतम् । तथा सति चेतनेश्वरयोस्स्वस्वामिभाववैपरीत्यापत्तेः, करणस्य प्रयोक्तृपारवश्यावश्यत्वेन सिद्धोपायस्य चेतनपारतन्त्र्यापातात्, प्रयोक्तुः फलस्वाम्यावश्यंभावात्, करणस्य फलार्थत्वावश्यम्भावाच्च, सिद्धोपायस्य चेतनशेषत्वापाताच्च । किञ्च-यदि चेतन एव प्रयोक्ता स्यात्, तर्हि कृतमीश्वरेण ; चेतनस्यैव स्वरक्षणसमर्थतया तत्साहाय्यानपेक्षणात् ! नियोगमुखेनैव दृष्टादृष्टसकलकार्यसाधनक्षमत्वात् । तस्माच्चेतनस्य प्रयोक्तृत्वमप्यनुपपन्नमेव ।

(७) अथ मुक्तेःफलत्वमप्यनुपपन्नम् । नैय्योगिकफलत्वे तस्यास्स्वर्गादिवदनित्यत्वप्रसङ्गात् । किं च-किं स्वार्थमुक्तिः फलम्, परार्था वा । नाद्यः-नित्यसंसारप्रसङ्गात् । "ममेति द्व्यक्षरो मृत्युः" (भारते-शान्तिप-१४-४ ।। इति स्मृतेः । नापि द्वितीयः-"शास्त्रफलं प्रयोक्तरि" (पूर्वमीमांसासूत्रं-३-७-१८ ।।) इति नैय्योगिकफलस्य प्रयोक्तृत्वेनियमेन तदयोगात् । तस्मात्सिद्धोपायनियोगवादिमतमत्यन्तमनुपपन्नमेव ।

अथ साध्योपायभूतन्यासनियोगवादी प्रष्टव्यः-कोऽत्र नियोगविषयः किं नियोज्यविशेषणम्, काचेतिकर्तव्यता, कश्चकर्ता, किं फलमिति ।

अत्र भरन्यास एव नियोगविषय इति चेन्न ; 'मामेकं शरणं व्रज' इति विधिवाक्ये भरस्य वा तन्न्यासस्य वा प्रतिपादकत्वाभावात् । 'व्रज गतौ' इति गत्यर्थकव्रजधातोर्ज्ञानार्थकत्वाश्रयणेऽपि भगवदेकविशेष्यकशरणत्वप्रकारकबुद्धिविशेषमात्रस्यैवात्र शब्दतोऽभिधानात् । ननु भगवदुपायत्वबुद्धिमात्रस्यैवात्र प्रतिपादनेऽपि "अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः" इति भरतमुनिप्रणीतशरणागतिलक्षणवचने "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्" (अहि-सं-३६-३६ ।।) इत्यहिर्बुध्न्यसंहितावचनयोश्च तस्य बुद्धिविशेषस्य प्रार्थनात्मकत्वाभिधानात्, तदैकार्थ्यादत्रापि व्रजधातुः प्रार्थनात्मकबुद्धिविशेषमेव प्रतिपादयति । तथा च 'मामेकं शरणं व्रज' इत्यनेन भगवदेकोपायत्वप्रार्थना विधीयत इत्यागतम् । अस्याश्च प्रार्थनायाः भरन्यासान्तरङ्गत्वात्, अयं प्रार्थनाविधिः पश्चालम्भविधिवत् प्रधानविधौ पर्यवस्यतीति

भरन्यासस्य विषयत्वमुपपद्यत इति चेत्; मैवम् । उपायत्वप्रार्थनाया भरन्यासाङ्गत्वे मानाभावात् ।

गोप्तृत्ववरणस्य भरन्यासाङ्गत्वं प्रमाणसिद्धमेवेति चेत्; भ्रान्तोऽसि । न हि गोप्तृत्वमेव शरणत्वम्; कर्तृत्वकरणत्वरूपयोस्तयोरत्यन्तभिन्नत्वात् । न च विरुद्धधर्मसमावेशायोगादन्यतरबाधश्शङ्क्यः; विनिगमनाविरहेणोभयोरपि बाधप्रसङ्गात् । कर्तृत्वकरणत्वयोरन्यत्र विरोधेऽपि "श्रुतेस्तु शब्दमूलत्वात्" (ब्रह्मसूत्रं २-१-२७ ॥) इति शब्दैकसमधिगम्ये ब्रह्मणि विरोधाभावात् । अन्यथा "तदात्मानं स्वयमकुरुत" (तैत्ति-उप-अनन्द-७-१॥) इत्यादि श्रुतिसिद्धकर्मकर्तृत्वनिमित्तोपादानत्वादीनामपि त्यागप्रसङ्गात् । "करणं कारणं कर्ता" (भारते—सहस्रना—२५४, श्लो ५६॥) "अमृतं साधनं साध्यम्" (विष्णधर्मे-६२-४॥) "योगी, योगविदां नेता" (भार-अनु सहस्रनाम-२५४-१८॥) "त्वमकरणस्वराडखिलकारकशक्तिधरः" (भागवते-१०-८७-२८॥) इत्यादिप्रमाणानां समुद्रघोषत्वापत्तेः । अत्र 'योगः' इत्यस्य भगवद्गुणकोशः-"युज्यते-प्राप्यते, अनेनेति योगः। "अकर्तरि च कारके संज्ञायाम्" (पाणिनीये-३-३-१९॥) इति घञ्" इति । ततश्च योगशब्देन भगवतस्स्वप्राप्तिलक्षणमोक्षकरणत्वमेवोच्यते, न कर्तृत्वम् । 'अकर्तरि' इति तन्निषेधात् । कर्तुरेव भगवतः कथमकर्तृत्वमिति चेत्; विशिष्टाद्वैतसिद्धान्ते विशेषणभेदेन विशिष्टभेदस्य मुख्यत्वाङ्गीकारान्मोक्षदानकर्तृभूतस्यापि भगवतः कर्तृतावच्छेदककरणतावच्छेदकयोर्भेदात्, करणस्य कर्तृभेदोपपत्तेः । अन्यथा लोके सर्वकार्यकारणानामपि तत्तत्कार्यकर्तृभूतभगवदात्मकत्वात्, वेदान्तिनां पक्षे सर्वेषां घञन्तशब्दानामकर्तृकारकपराणां मूकत्वमेव स्यात् । एतेन आदेशशब्दोदाहरणमपि प्रत्युक्तम् । तत्राप्येवमेव निर्वाहसम्भवात् । तस्माद्भगवतो मोक्षप्रदानकर्तृत्वकरणत्वयोर्भिन्नत्वेन गोप्तृत्ववरणमुपायत्ववरणश्च भिन्नभिन्नमेवेति न्यासस्योपायत्वप्रार्थनाङ्गत्वासिद्ध्या तद्विधायकस्य 'मामेकं शरणं व्रज' इत्यत्र भरन्यासविधिपर्यवसायित्ववचनं वञ्चनमेव ।

ननु अहिर्बुध्न्यसंहितायां षट्त्रिंशेऽध्याये—"बाह्यमाभ्यन्तरञ्चापि मम यागः पुरोदितः । न्यासाख्यं साधनंप्रोक्तं तन्मेब्रूहि महेश्वर ॥ २६ ॥" इति नारदेन पृष्टः अहिर्बुध्न्य उवाच "एतन्महोपनिषदं देवानां गुह्यमुत्तमम् । अभीष्टार्थप्रदं सद्यस्सर्वपापप्रणाशनम् ॥ २७ ॥ अवाच्यमेतत्सर्वस्मै नाभक्ताय कदा-

चन । भक्तोऽसि मे स्थिरश्चेऽति वक्ष्यामि हितकाम्यया ॥ २८ ॥ यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत् साङ्ख्येन योगेन न च भक्तितः ॥ २९ ॥ प्राप्यते परमं धाम यतो नावर्तते पुनः । तेन तेनाप्यते तत्सन्न्यासेनैव महामुने ॥ ३० ॥ परमात्मा च तेनैव साध्यते पुरुषोत्तमः । षोढा हि वेदविदुषो वदन्त्येनं महामुने ॥ ३१ ॥ आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासः गोप्तृत्ववरणन्तथा ॥ ३२ ॥ आत्मनिक्षेपाकार्पण्ये षड्विधा शरणागतिः । उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम् ॥ ३३ ॥ वर्तते साम्प्रतञ्चैष उपायार्थैकवाचकः । अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः ॥ ३४ ॥ त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम् ॥३५॥ भगव सर्वविजय सहस्रारापराजित । शरणं त्वां प्रपन्नोऽस्मि श्रीकरं श्रीसुदर्शनम् ॥ ३६ ॥ अनेनैव प्रपन्नस्य भगवन्तं सुदर्शनम् । तस्यानुबन्धाः पाप्मानः सर्वे नश्यन्त्यसंशयः ॥ ३७ ॥ कृतान्यनेन सर्वाणि तपांसि तपतां वर । सर्वे तीर्थास्सर्वयज्ञास्सर्वदानानि च क्षणात् ॥ ३८ ॥ कृतान्यनेन मोक्षश्च तस्य हस्ते न संशयः ।" इति; अथ "कथं तपांसि यज्ञाश्च तीर्थदानानि सर्वशः । तस्यैव न्यासमात्रेण सिध्यते तद्वद प्रभो ॥ ३९ ॥" इति पुनः प्रष्टः प्राह— "यानि निश्रेयसार्थानि चोदितानि तपांसि वै । तेषां तु तपसा न्यासमतिरिक्तं तपश्श्रुतम् ॥ ४० ॥ समित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसा योऽकरोद्देवे स स्वध्वर उदीरितः ॥ ४१ ॥ यागसाधनभूतेन स्वात्मना वै यमीश्वरम् । अत्तजयानि धर्माणि प्रथमानीति नश्श्रुतम् ॥ ४२ ॥ यज्ञरूपधरं देवं यजते स्वात्मनैव यः । तेन सर्वे कृता यज्ञा भवन्तीह महात्मना ॥ ४३ ॥ यज्ञरूपधरस्यास्य शरीरं वेदिरिष्यते । आस्यमाहवनीयाग्निर्हृदयं दक्षिणानलः ॥ ४४ ॥" इत्यादि । अत्र न्यासविद्यां प्रकृत्य मध्ये उपायत्वप्रार्थनायां विधानात्, उपायत्वप्रार्थना भरन्यासाङ्गमिति निश्चीयत इति चेन्न;—

अस्मिन्प्रकरणे भरन्यासस्य विधायकं न किञ्चिद्वचनं दृश्यते । उपक्रमोपसंहारयोर्न्यासशब्दश्श्रूयत इति चेत्, सत्यम्; न्यासशरणागतिशब्दो हि सामान्यविशेषापन्नौ । न्यासशब्दः—शेषत्वाध्यवसायत्वप्रवृत्तिनिमित्तकः । प्रपत्तिस्सामान्यवाचि । शरणागतिशब्दश्च—शेषत्वाध्यवसायगर्भभगवदेकोपायत्वप्रार्थनावाचि । तथा चास्मिन्प्रकरणे न्यासशब्देन शेषत्वाध्यवसायत्वरूपसामान्यधर्मपुरस्कारेण शरणागतिमुपक्रम्य मध्ये विशेषरूपेण तामेव

विधायान्ते च यथोपक्रममुपसंहारः कृत इतीदं प्रकरणं शरणागतिविषयमेव। तस्यानुकूल्याद्यङ्गपञ्चकप्रतिपादकं कथमुपपद्यत इति चेत्; इत्थमेव हि— आनुकूल्यादिकं हि सिद्धान्ते शरणागतसम्भावितस्वभावाः; ततश्च शरणागतेरेव ते अवस्थाविशेषाः। तत एव तेषां षण्णामपि शरणागत्यात्मकत्ववचनं यथाश्रुतमेवोपपद्यते। तथा च "षोढा हि वेदविदुषः" इत्यादेः "षड्विधा शरणागतिः" इत्यन्तस्यायमर्थः—'शरणागतित्वरूपविशेषधर्मावच्छिन्नो यो न्यासशब्दितः शेषत्वाध्यवसायः, स एव शरणागतसम्भावितस्वभावैरानुकूल्यसङ्कल्पादिरूपैष्षोढा परिणमति इति, तादृशपरिणामविशेषैश्शरणागत्यात्मकन्यासस्य षाड्विध्यं वेदविदो वदन्ति' इति।

प्रदर्शितश्च प्रपन्नपारिजाते न्यासशरणागतिशब्दयोरनयोस्सामान्य विशेषभावापन्नत्वं प्रपत्तिस्वरूपपद्धतौ—"अनन्यसाध्ये" इति भरतमुनिवचनमुपादय "शरणागतिशब्देन प्रपत्तिस्तु विशेषिता" इति भरतमुनिवचनगतयोः प्रपत्तिशरणागतिशब्दयोस्सामान्यविशेषभावमभिधाय "प्रपत्तिं संश्रयेद्भक्त्या शरणागतिलक्षणाम्। इति ह्युक्तं भगवता विष्वक्सेनाय शृण्वते" इति तत्र प्रमाणतया विष्वक्सेनसंहितावचनमप्युदाहृत्य, पश्चादेतत्पद्धतिसमाप्तौ "प्रपत्तिरपि सामान्याच्छास्त्रेऽन्यत्र प्रपञ्च्यते" इति सामान्यधर्मपुरस्कारेण प्रपत्तिप्रपञ्चनं प्रतिज्ञाय, "यद्येन कामकामेन" इत्यादिपूर्वोक्ताहिर्बुध्न्यसंहितावचनानि सामान्यरूपेण प्रपत्तिप्रतिपादकतयोदाहृतवद्भिर्वात्स्यवरदाचार्यैः।

उक्तश्च भारद्वाजसंहितायां प्रथमेऽध्याये न्यासस्य केवलशेषत्वज्ञानात्मकत्वम्, उत्तरोत्तरमानुकूल्यसङ्कल्पाद्यात्मना परिणतत्वञ्च—"स्वाभाविकोऽस्य सम्बन्धः पुंसो यः परमात्मना। तस्यैव बोधो न्यासाख्यः प्रथमं यात्युपायताम् ॥ ७५ ॥ स एवोपर्युपर्यस्य परां प्रीतिमुपावहन्। वृत्त्याख्यंफलतां याति तदेवामृतमुच्यते ॥ ७६ ॥ या स्वधर्मेष्वभिरतिः सा भवत्यनुकूलता। वर्जनं प्रतिषिद्धानां तथैषा प्रतिकूलता ॥ ७७ ॥ वेदवेदान्तविज्ञानं विश्वासो गोप्तरि स्वयम्। गोप्तृत्ववरणादन्यन्न विष्णोरर्चनादिकम् ॥ ७८ ॥ प्राप्यते ह्यात्मनिक्षेपो दास्यचिह्नैकलक्षणः। सतां देशिकमुख्यानां सेवा कार्पण्यमुच्यते ॥ ८९ ॥ अतः प्रपत्तिरेवेह वृत्तिर्भवति शाश्वती ॥ तस्यैवास्मीति बोधात्मा प्रपत्तिर्वृत्तिरेव च ॥ ८० ॥" इति।

अयमत्र विवेकः—'शेषत्वरूपस्वाभाविकजीवपरसम्बन्धबोध एव न्यास-शब्दार्थः। स द्विविधः—शरणागत्यात्मा, तद्भिन्नश्चेति। यश्शरणागत्यात्मा न्यासः—स त्वनुपायभूतः। तदितरस्तु प्रथममुपायभूतः। उभयविधयोरप्यन-योर्न्यासयोरानुकूल्याद्यात्मना परिणामोऽस्त्येव। तत्र शरणागत्यात्मको न्यासः—अहिर्बुध्न्यसंहितायामुक्तः। तदन्यस्तु भरद्वाजेने'—ति। तदेवमहि-र्बुध्न्यसंहितावचनानां शरणागतिप्रधानतायाः प्रमाणोपपत्तिसंप्रदायसिद्धतया तत्र भरन्यासविधानगन्धस्याप्यभावेन तद्बलेन भरन्यासस्योपायत्वप्रार्थ-नाङ्गकत्वसिद्धिरित्युक्तिर्दुरुक्तिरेव।

ननु "निक्षेपोऽपरपर्यायो न्यासः पञ्चाङ्गसंयुतः" (लक्ष्मीतन्त्रे १७-७४॥) इति प्रधानतया प्रतिपन्नस्य निक्षेपशब्दितन्यासस्य "आत्मा-त्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते" (लक्ष्मीतन्त्रे १७-७९॥) इति भरन्या-सात्मकत्वावगमात्, तदङ्गभूतविश्वासस्य "रक्षिष्यतीति विश्वासादभीष्टोपाय-कल्पनम्" (लक्ष्मीतन्त्रे १७-७७॥) इत्युपायत्वप्रार्थनारूपत्वावगमाच्च भर-न्यासस्योपायत्वप्रार्थनाङ्गत्वं सिध्यतीति चेन्न; "रक्षिष्यतीति निश्चित्य निक्षिप्तस्स्वस्वगोचरः" (लक्ष्मीतन्त्रे-१७-८९॥) इत्यनन्तरवचनानुगुण्येन "रक्षिष्यतीति विश्वासादभीष्टोपायकल्पनम्" इत्यत्रापि स्वस्वगोचरनिक्षे-पात्मकोपायत्वकल्पनस्यैव प्रतीत्या तस्य सिद्धोपायप्रार्थनापरत्वोक्तेरनु-पपन्नत्वात्।

अथ "प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम्" (लक्ष्मीतन्त्रे २८-१२॥) इति प्रकरणे "शरणं भव देवेश नाथ लक्ष्मीपते मम" (ल-न्त्रे-२८-१६॥) इति वचनात्, "आत्मात्मीयं भरं सर्वं निक्षिप्य श्रीपतेः पदे। उपायं वृणु लक्ष्मीशं तमुपेयं विचिन्तय" इतिवचनात्, "आत्मात्मीयं च यत्किञ्चिद्दुर्भरं दुस्त्यजं मम। तत्सर्वं तव विन्यस्तं शुभयोः पादपद्मयोः॥ उपेयायास्तव प्राप्तेस्त्वामुपायतया वृणे। उपायो भव मे देवि शरणं भव मेऽम्बुजे" इत्यादि प्रमाणेषु च भरन्यासस्योपायत्वप्रार्थनाङ्गकत्वं प्रतिपाद्यत इति चेन्न; विवक्षितवैपरीत्यस्यैव तत्र प्रतिपादनात्। "आत्मात्मीय-भरं सर्वम्" . . . उपायं वृणु लक्ष्मीशम्" इत्यादिनोपायत्वप्रार्थनाया एव भरन्यासाङ्गकत्वकण्ठोक्तेः। तस्मान्निरुक्तोपायत्ववरणप्रकरणेषु प्रति-पादितो भरन्यासश्शरणागत्यङ्गभूत एव। स च स्वस्य स्वरक्षणप्राप्त्य-

भावनिश्चयपूर्वकभगवत्प्राप्तिनिश्चयात्मक एव। अत्र प्रतिपाद्यमान आत्मात्मीयनिक्षेपोऽपि "अविवादस्तु तस्यैव पदयोरात्मनोऽर्पणम्" इत्युक्तभगवच्छेषत्वसंवादरूप एव। तस्यैव यथावस्थितन्यासरूपत्वात्। तथा च शेषत्वाध्यवसायपूर्वकशरणागतिरेवात्र सर्वत्र च विधीयत इति नात्रोपायप्रपत्तिरूपन्यासस्योपायत्वप्रार्थनाङ्गकत्वसिद्धिः।

किञ्च-भगवदेकोपायत्वप्रार्थनाया न्यासाङ्गत्वं बाधितम्। भगवदेकोपायताबुद्धेस्तदितरोपायपरिग्रहविरुद्धतया तदितरोपायान्तर्गतोपायप्रपत्तिप्रवृत्तिविघटकत्वात्। तथा चानुगृहीतं निक्षेपरक्षायां "तदेकशरणव्रज्या हि तदितरोपायपरिग्रहेण विरुध्येत" इति। तथा च चरमश्लोकभाष्यतात्पर्यचन्द्रिकायामपि "तदेकोपायताध्यवसायो हि तदन्योपायपरिग्रहेण विरुद्धः" इति।

ननु तदेकोपायत्वाध्यवसायात्मिका शरणागतिरेव भरन्यासः। "निक्षेपोऽपरपर्यायो न्यासः पञ्चाङ्गसंयुतः। सन्न्यासस्त्याग इत्युक्तश्शरणागतिरित्यपि" (ल-न्त्रे-१७-७४॥) इति वचनादिति चेत्, मैवम्; हरिशब्दस्य भेकाभिधानकोशपाठबलेन भेकसर्वेश्वरयोरभेदसिद्धिप्रतिज्ञावचनवदस्योपहास्यत्वात्। न्यासशरणागत्योश्शब्दान्तरादिभिर्भेदस्य सुप्रतिष्ठितत्वात्। तस्मादुपायप्रपत्तौ शरणागतिशब्दप्रयोगो गोप्तृत्ववरणप्राधान्योऽभिप्रायः। "उपाये गृहरक्षित्रोः" इति गोप्तुरपि शरणशब्दार्थत्वात् "श्रूयते हि कपोतेन शत्रुश्शरणमागतः" (श्रीरामायणे-युद्ध-१८-२४॥) इत्यादिषु शरणशब्दस्य गृहपरत्वविवक्षया शरणागतिशब्दप्रयोगवद्गोप्तृरूपार्थान्तरविवक्षयापि क्वचित्तत्प्रयोगोपपत्तेः। आनुकूल्यसङ्कल्पादिषट्के शरणागतिविशेषत्वोक्तिस्तु प्रकृतिविकृतिभावप्रयुक्ततादात्म्यनिबन्धना। शरणागतसम्भावितस्वभावविशेषाणामानुकूल्यसङ्कल्पादिकानां षण्णामपि शरणागतिपरिणामरूपत्वेन तथोक्त्युपपत्तेः।

'मामेकं शरणं व्रज' इति विधीयमानद्वयकरणक्प्रपत्तौ शरणशब्दप्रयोगो भगवदेकोपायत्वप्रार्थनारूपत्वाभिप्रायः। "भगवन्सर्वविजय सहस्रारापराजित। शरणं त्वां प्रपन्नोऽस्मि" (अहि-सं ३६-३६॥) इत्यादिद्वयसमानार्थकमन्त्रविशेषकरणकभगवदेकोपायत्वप्रार्थनात्मकप्रपत्तिविषयशरणागतिशब्दार्थनिष्कर्षके "उपाये गृहरक्षित्रोः" इति शरणशब्दस्यार्थान्तर

व्युदासेनोपायत्वैकपरताया व्याख्यातत्वात् । तस्मादुपायप्रपत्तिरूपभरन्यासे शरणागतिशब्दप्रयोगस्यार्थान्तरपरतयान्यथासिद्धत्वान्न तद्बलेन न्यासशरणागत्योरभेदसिद्धिरुपपद्यते ।

ननु "भक्तौ रङ्गपते यथा खलु पशुच्छागादिवद्वेदनध्यानोपासनदर्शनादिवचसामिच्छन्त्यभिन्नार्थताम् । व्यक्त्यैक्याच्छरणागतिप्रपदनत्यागात्मनिक्षेपणन्यासाद्येषु तथैव तन्त्रनिपुणैः पर्यायता स्मर्यते" (न्यासतिलके-१६॥) इत्याचार्यसूक्तिबलात्, न्यासशरणागत्योरभेदसिद्धिरकामेनापि स्वीकर्तव्यैवेति चेत्; सत्यम्; सामान्यविशेषरूपयोर्न्यासशरणागत्योरभेदः स्वीकृत एव । अत्र शरणागतिन्यासादिशब्दानामाचार्याभिप्रेता पर्यायता न तावदेकप्रवृत्तिनिमित्तकत्वरूपा । तथा सति च्छागपशुदृष्टान्तस्य वेदनध्यानादिदृष्टान्तस्य चासाङ्गत्यापातात् । किन्तु सामान्यविशेषणैकार्थनिष्ठतामात्रम् । तच्चाप्रतिषिद्धम् । प्रपदनशब्दप्रवृत्तिनिमित्तस्याध्यवसायत्वस्य, त्यागनिक्षेपशब्दप्रवृत्तिनिमित्तस्य फलस्वाम्यनिवृत्तिरूपफलसमर्पणत्वस्य, न्यासशब्दप्रवृत्तिनिमित्तस्य स्वाभाविकजीवपरसम्बन्धज्ञानत्वस्य च भगवदेकोपायत्वाध्यवसायात्मकशरणागतावङ्गीकारात् ।

एतदुक्तं भवति—सिद्धोपायाधिकारिणां परमैकान्तिनां कर्तव्यतया सिद्धान्तसिद्धा शरणागतिर्नाम - द्वयोत्तरखण्डोक्तप्रार्थनापर्यन्ततत्पूर्वखण्डोक्तभगवदेकोपायत्वप्रार्थनैव । "गृह्णीयान्मन्त्रराजानं मां गच्छेच्छरणं नरः" इति खण्डद्वयस्यापि शरणागतौ विनियोगात् । तत्रोत्तरखण्डार्थस्य पूर्वखण्डोक्तोपायफलकामनारूपत्वेनाधिकारिविशेषणान्तर्गतत्वात् "अहमस्म्यपराधानामालयः" (अहि-सं ३६-३३॥) इत्यादिशरणागतिलक्षणेषु पृथगनुक्तिः । शरणागतिसामान्यलक्षणवाक्ये द्वयोत्तरखण्डार्थस्यापि विशेषरूपेणोक्तौ फलान्तरार्थशरणागतिष्वव्याप्तिश्च स्यात् । तस्मात् "अहमस्म्यपराधानाम्" इत्यादिषु फलप्रार्थनां सर्वाधिकारिसाधारण्यायाहंशब्देन सङ्गृह्य लक्षणं प्रणीतम् । अतो लक्षणवाक्याविरोधः । शरणागतिशब्देऽपि, शरणशब्देन भगवदुपायत्वम्, गतिशब्देन - प्रार्थनात्मिका बुद्धिः, आङुपसर्गेण - विवक्षिता विशेषाश्च प्रतिपाद्यन्ते । विशेषाश्च यथासम्भवमव्यभिचरितत्वादयः । एतदभिप्रायेणैव भगवता पराङ्कुशमुनिना "अमन्दु पुहुन्देने" (तिरुवाय्मोलि - ६-१०-१०॥) इति प्रयोजनान्तरसङ्गादिरूपव्यभिचारा-

भावोऽपि अनुसंहितः। प्रयोजनान्तरार्थशरणागतौ साधनान्तरसङ्गरूपव्यभिचाराभावेऽपि प्रयोजनान्तरसङ्गरूपव्यभिचारसत्त्वेनोपसर्गार्थपूर्त्यभावाच्छरणागतिशब्दप्रयोगो गौण एव। द्वयोत्तरखण्डोक्तकेवलपरार्थप्रार्थनाविशिष्टानां परमैकान्तिनां शरणागतावेवाव्यभिचारपूर्तिसत्वात्, तत्रैव शरणागतिशब्दो मुख्यः। इयमेव शरणागतिः "सर्वात्मना यश्शरणं शरण्यं नारायणं लोकगुरुं प्रपन्नः" (भागवते-११-५-४१॥) इत्यादौ 'सर्वात्मना प्रपत्तिः' इत्युच्यते। तस्मान्मन्त्ररत्नखण्डद्वयार्थज्ञानस्यैव शरणागतिसंज्ञा नैकदेशज्ञानस्य। एवं शरणागत्यनुष्ठानप्रतिपादकप्रकरणेष्वपि "सकृदेव प्रपन्नाय तवास्मीति च याचते" (रामायणे-युद्ध-१८-३५॥) इत्यत्र "सकृदेव प्रपन्नाये"ति पूर्वखण्डार्थः, "तवास्मीति च याचते" इति उत्तरखण्डार्थः। एवं "अहमस्मि तवैवेति प्रपन्नाय सकृत्स्वयम्" (प्रपन्नपारिजाते ॥) "दासभूतश्शरणागतोऽस्मि तवास्मि दास इति वक्तारम्" (शरणागतिगद्ये) इत्यादिष्वनुसन्धेयम्। तदेवं खण्डद्वयार्थज्ञानस्यैव शरणागतिशब्दमुख्यार्थत्वात्, तत्र पूर्वखण्डक्रियापदार्थांशे - प्रपदनत्वस्य, तदुत्तमपुरुषाक्षिप्ताधिकारिवाचकाहंशब्दार्थांशे - शेषत्वज्ञानात्मकत्वरासत्त्वस्य, उत्तरखण्डार्थांशे - फलसमर्पणरूपत्यागत्वनिक्षेपत्वयोश्च सत्त्वात्, न्यासादिशब्दैस्सह शरणागतिशब्दस्य सामान्यविशेषभावेनैकार्थनिष्ठतामात्रं पर्यायत्वमुपपद्यत इति।

प्रत्युत प्रपत्तिविषयन्यासादिशब्दानां भक्तिविषयनानाविद्यासाधारणवेदनादिशब्दतौल्यं प्रदर्शयन्त्या वेदान्ताचार्यदिव्यसूक्त्या "नानाशब्दादिभेदात्" (ब्रह्मसूत्रम् ३-३-५६॥) इति सूत्रभाष्यश्रुतप्रकाशिकानुगृहीतरीत्या सामान्यविशेषभावापन्नैरेव वेदनादिशब्दैस्सद्विद्यादितत्तत्प्रकरणबलेन शब्दान्तरत्वमापन्नैर्यथा सदादिविद्यानां परस्परभेदस्सिध्यति, तथैव सामान्यविशेषरूपैर्न्यासशरणागत्यादिशब्दैरपि तत्तत्प्रकरणबलाच्छब्दान्तरत्वमापन्नैर्न्यासविद्याशरणागतिविद्यादीनां परस्परभेदसिद्धिर्निष्प्रत्यूहैवेति दर्शितम्। तस्मादेतत्सूक्त्युदाहरणं तवैव विपरीतफलम्—इति।

ननु "जीवात्मानं हविः कृत्वा तच्छरीरं महीयसि। ब्रह्माग्नौ जुहुयादोमित्यनेन द्वयरूपिणा" "अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत्" (वासिष्ठसंहितायां ॥) इत्यादिषु न्यासस्य द्वयमन्त्रकत्वविधानात्, तस्य शरणागतिरूपत्वं दुरपह्नवमिति चेन्न; तेषां वचनानां शरणागत्यन्त-

गतयथावस्थितस्वरूपफलसमर्पणमात्रपरत्वेनोपायप्रपत्तिरूपभरन्यासपरत्वा भावात् । शरणागतौ हि मन्त्ररत्नखण्डद्वयप्रतिपादितयोः प्रार्थनयोः कर्तृतया मूलमन्त्रघटकप्रणवप्रतिपादितं स्वरूपमेवानुसन्धेयम् । तदिदमुच्यते "जीवात्मानं हविः कृत्वा" इत्यादिवचनेन । 'द्वयरूपिणे'ति प्रणवविशेषणम् । विवरणविवरणिभावनिबन्धनोऽयमभेदोपचारः । तथा च द्वयमूलभूतमन्त्रशेषव्याख्येयतया द्वयैकार्थेन प्रणवेनेत्यर्थः । तेन ब्रह्माग्नौ जीवस्य होमो नाम जीवस्य ब्रह्मशेषत्वाध्यवसाय एव । तथा च शरणागतौ यत्स्वरूपानुसन्धानं क्रियते, तत् 'प्रणवेनैव कुर्यात्' इत्येतावदेवैतद्वचनतात्पर्यम् ।

अथ "अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत्" इत्यनेन शरणागतिपरिणामरूपतया प्रागुक्तेष्वानुकूल्यादिषु मध्ये य आत्मनिक्षेपरूपः परिणामः, "एनदावितन्दोलिन्देन्" (तिरुवाय्मोलि २-३-४ ।।) इत्यादिषु श्रीपराङ्कुशादिभिरनुष्ठीयमानः, तस्यापि द्वयकरणकत्वमुच्यते । तत्र शरणागतिरूपविद्याविशिष्टस्यैवात्मनो निक्षेपमभिसन्धाय मन्त्ररत्नखण्डद्वयस्यापि निक्षेपे विनियोगः कृतः । तथा च श्रीमन्नारायणचरणौ शरणं प्रपद्यमानो योऽहम्, सोऽहं श्रीमते नारायणायैव मः न' इति तादृशानिक्षेपानुष्ठानदशायां मन्त्ररत्नखण्डद्वयेनापि तत्स्वरूपानुसन्धानं पर्यवस्यति । तदेवमस्य वचनस्याप्यवस्थाविशेषविशिष्टशरणागतिविषयत्वात्, न तद्बलेन भरन्यासस्य शरणागतत्वसिद्धिरिति ।

ननु सम्भावितस्वभावात्मिके निक्षेपे मन्त्रविशेषनियमविधिर्न युज्यत इति चेन्न; मन्त्रविशेषनियमस्यापि सम्भावितस्वभावान्तर्गतत्वेनैव तदुपपत्तेः । कथं तर्हि तस्य विधेयत्वमिति चेत्, कथं वा "द्रष्टव्यः" (बृह-उप-४-४-६ ।।) इत्यादिषु दर्शनसामानाकारत्वादीनां विधेयत्वम् । ध्यानानुष्ठानद्वारा दर्शनस्यापि साधयितुं शक्यत्वादिति चेत्, अत्रापि सर्वात्मना भगवच्चरणारविन्दशरणागतिद्वारा साध्यत्वादेवेति पश्यतु भवान् । किञ्च न्यासशरणागत्योरभेदे तस्य मोक्षोपायत्वं दुर्लभम् । "नारायणं स लक्ष्मीकं प्राप्तुं तच्चरणद्वयम् । उपाय इति विश्वासो द्वयार्थश्शरणागतिः" इत्यभियुक्तवचनेन द्वयकरणकशरणवरणस्य भगवदेकोपायत्वाध्यवसायात्मकत्वात्, तथा विधायास्तस्याः "इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं

रुन्धे किं पुनस्सहकारिणाम्" (न्यायसिद्धाञ्जने-२-परिच्छेदे ॥) इत्याचार्यानुगृहीतरीत्या भगवदन्यानुपायत्वग्राहकतया 'भरन्यास उपायः' इत्युक्तेः 'माता मे वन्ध्या' इत्युक्तेरिवासङ्गतार्थत्वापातात् ।

न च "नारायणं सलक्ष्मीकम्" इत्यादेश्शरणागत्यङ्गकोटावधिकारकोटौ चानुप्रविष्टस्य विश्वासस्य शरणागतिं प्रति प्रधानोपकारकत्वबोधनपरार्थत्वान्नानुपपत्तिरिति वाच्यम्; तदापि भगवद्व्यतिरिक्तोपायसामान्यपरिग्रहविरोधिनो निरुक्तविश्वासस्य भगवदितरोपायान्तर्गतभरन्यासोपकारकत्वोक्तेरसङ्गतार्थानपायात् । किञ्च - अङ्गाधिकारिविशेषणानामैक्यादात्माश्रयोऽपि दुरुद्धरः । "मामेकं शरणं व्रज" इति प्रकृते विधीयमानाया भगवदेकोपायत्वाध्यवसायरूपायाश्शरणागतेरेव भरन्यासात्मकाङ्गिविद्यात्वस्वीकारात्, तादृशाध्यवसायस्यैवाङ्गत्वाधिकारत्वयोरप्यङ्गीकाराच्च । अङ्गतया प्रधानतया च द्वेधा विधीयमानस्यैव विश्वासस्याधिकारत्वाभ्युपगमे सिद्धत्वसाध्यत्वलक्षणविरुद्धधर्माध्यासो दुरुद्धरः । साध्यस्य विश्वासस्य नियोज्यविशेषणत्वरूपमधिकारत्वञ्च बाधितम् । "सिद्धमेव हि सर्वत्र नियोज्यस्य विशेषणम्" (आगमप्रामाण्ये) इति सिद्धत्वनियमात् ।

ननु प्रपत्तिशास्त्रार्थ विश्वासोऽधिकारः; रक्षिष्यतीति विश्वासः अङ्गम्; उपायत्वाध्यवसायोऽङ्गीति तेषां भेदान्नानुपपत्तिरिति चेन्न; निरपेक्षरक्षकत्वस्यैव त्वन्मते प्रपत्तिशास्त्रासाधारणार्थतया तस्यैव त्वन्मते उपायत्वात्मकत्वाच्च त्रयाणामैक्यात् । न च रक्षाविश्वासः केवलरक्षकत्वमात्रविषयः, तस्य सर्वोपायसाधारणतया प्रपत्त्यसाधारणाङ्गत्वायोगात् । किञ्च "मामेकं शरणं व्रज" इति भगवदेकोपायत्वाध्यवसायस्यैव प्राधान्येन विधीयमानत्वात् । "अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः" इत्यादिलक्षणग्राहकवचनेष्वपि प्रार्थनापर्यन्तभगवदेकोपायत्वाध्यवसायत्वस्यैव शरणागतिरूपप्रपत्तिलक्षणत्वाभिधानात्, "मुमुक्षुर्वै शरणमहं प्रपद्ये" (श्वेता-उप-६-१७॥) "श्रीमन्नारायणचरणौ शरणं प्रपद्ये" (महानारायणोपनिषादि॥) इत्यादिमन्त्रेष्वपि भगवदेकोपायत्वाध्यवसायस्यैव प्रकाशनात्, "प्रपत्तिर्विश्वासस्सकृत्प्रार्थनामात्रेणापेक्षितान्दास्यतीति विश्वासपूर्वकं प्रार्थनमिति यावत्" (भाष्यकारमुक्तकम्) इति प्रार्थनापर्यन्तविश्वासस्यैव प्रपत्तित्वेन मुक्तकेऽनुगृहीतत्वात्, स्वानुष्ठानरूपतया श्रीभाष्यकृत्प्रणीते

प्रथमगद्ये च भगवदेकोपायत्वप्रार्थनात्मकशरणागतेरेव प्रधान्येनानुष्ठितत्वात्, आनुकूल्याद्यङ्गपञ्चकस्य भरन्यासस्य वानुष्ठानादर्शनाच्च प्रार्थनापर्यन्तभगवदेकोपायत्वाध्यवसायस्यैव प्रपत्तित्वसिध्या तस्य प्रपत्त्युपकारकतामात्रत्वोक्तेरनुपपन्नत्वाच्च ।

न च गद्ये विश्वासपूर्वकप्रार्थनां कृत्वा, तदनन्तरं "नमस्कारात्मकं यस्तु विधायात्मनिवेदनम्" इत्यादिषु आत्मसमर्पणपरतया प्रसिद्धस्य नमःशब्दस्य "नमोऽस्तुते" इति प्रयुक्ततया विश्वासपूर्वकप्रार्थनाया भरन्यासाङ्गत्वं सिध्यतीति वाच्यम्; तत्र "नमोऽस्तुते" इत्यस्य द्वयोत्तरखण्डोक्तप्रार्थनापरत्वेन भरन्यासात्मकत्वायोगात् । तत्र हि "श्रीमन्नारायण तव चरणारविन्दयुगलं शरणमहं प्रपद्ये" इति मन्त्ररत्नपूर्वखण्डार्थानुसन्धानम्; "एवमवस्थितस्यापि" इत्यारभ्य "नित्यदास्यं दास्यतीति भगवन्तं नित्यकिंकरतां प्रार्थये" इत्यादिनोत्तरखण्डस्थचतुर्थ्यर्थकैङ्कर्यप्रार्थनानुष्ठानम्; "अपारकरुणाम्बुधे" इत्यारभ्य "नमोऽस्तुते" इत्यन्तेनोत्तरखण्डस्थनमश्शब्दार्थप्रार्थनानुष्ठानमिति क्रमेण मन्त्ररत्नार्था एवानुष्ठीयन्ते । तथा च "नमोऽस्तुते" इत्यनेन "तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता" (लक्ष्मीतन्त्रे-१६- ।।) इत्याद्युक्तः कैङ्कर्यविरोधिभूतफलस्वाम्यनिवृत्तिरूपो मन्त्ररत्ननमः पदार्थ एव प्रार्थ्यत इति नात्र भरन्यासप्रसक्तिः । एतेन-नमःपदस्यात्मनिवेदनपरत्वग्राहकप्रमाणोदाहरणमपि प्रत्युक्तम् । आत्मनिवेदनञ्चेत्-भरन्यासरूपमेवेति नियमाभावात्, नमश्शब्दश्चेत्-आत्मनिवेदनपर एवेति नियमाभावाच्च ।

किञ्चात्र नमश्शब्दस्य भरन्यासरूपत्वे "अस्तु" इति तस्य प्रार्थना नोपपद्यते । अनुष्ठीयमानात्रस्थस्य प्रार्थनीयत्वायोगात् । प्रार्थनाप्रकरणबलेनापि "अस्तु" इत्यस्य प्रार्थनापरत्वमेव दृढीकृतम् । 'अनुष्ठीयमानस्यैवानुवृत्तिः प्रार्थ्यते' इत्ययुक्तम् । सकृत्त्वनियमविरोधात् ।

ननु मास्तु "नमोऽस्तुते" इत्यनेन भरन्याससिद्धिः; तथापि "तव चरणारविन्दयुगलं शरणमहंप्रपद्ये" इत्युपायवरणप्रतिपादकशब्दसामर्थ्येन भरन्यासस्सिध्यतीति चेत्; इदं मातृशब्दस्वारस्याद्वन्ध्यात्वसिद्धिवचनवदत्यन्तमुपहास्यम् । भगवदेकोपायत्वप्रार्थनाया भरन्यासाद्युपायान्तरानुष्ठानविरोधित्वात् ।

ननु नायं विरोधः—"आकिञ्चन्यभरन्यासोपायत्वप्रार्थनात्मनाम् । त्रयाणां सौहृदं सूक्ष्मं यःपश्यति स पश्यति" (रहस्यत्रयसारे ) इति शरणवरणभरन्यासयोरतिसूक्ष्मसौहार्दस्याचार्यानुगृहीतत्वात्; युक्तश्चैतत्; तथा हि, भगवत उपायत्वं नाम - उपायान्तरस्थाननिविष्टत्वम् । तच्च स्वीकृतभरत्वमेव । एवञ्चोपायत्वप्रार्थनं नाम - भरस्वीकारप्रार्थनमेवेत्यागतम् । इदं च भरस्वीकारप्रार्थनं - स्वनिर्भरत्वरूपभरन्यासपर्यन्तमेवेति तादृशभरस्वीकारप्रार्थनात्मकोपायवरणप्रतिपादकशब्दस्य तत्काष्ठारूपभरन्यास - बोधनसामर्थ्यं उपपद्यत एवेति चेत्; नैवम् । "उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ" (श्रीरंगराजस्तवे-२-८७।।) इत्यनुगृहीतरीत्याखिलहेयप्रत्यनीकत्वापहतपाप्मत्वादिरूपेण भगवत्स्वरूपान्तर्गतस्य "कृष्णं धर्मं सनातनम्" (भारते-वनपर्वणि-८९-२६।।) इति नित्यसिद्धस्य भगवदुपायत्वस्य चेतनप्रवृत्तिविशेषोपाधिकोपायान्तरस्थाननिवेशरूपत्वायोगात्, अकिञ्चनसम्ब - न्ध्युपायान्तराप्रसिद्ध्या तत्स्थाननिवेशस्य शशविषाणसोदरत्वात्, शक्तस्य गुरूपायस्थाने तदशक्तानां लघूपायमात्रस्यैव शास्त्रविहितत्वात्, गुरोर्वा लघोर्वा फलसाधनतायाश्शास्त्रैकसमधिगम्यत्वात्, "उपायस्सुकरस्सोऽयं दुष्करश्च मतो मम" (लक्ष्मीतन्त्रे-१७-१०४।।) "विश्वासायासभूम्ना न्यसनभजनयोर्गौरवे को विशेषः" (न्यासतिलके १७।।) इति प्रपत्तेरपि भक्तिवद्गुरूपायत्वाविशेषात्, 'भक्त्या प्रपत्त्या वा' इति विकल्पितत्वाच्च प्रपत्तेरेव भक्तिस्थानीयतया भगवतस्तत्स्थाननिवेशोक्तेर्वञ्चनमात्रार्थत्वात् ।

"द्युभ्वाद्यायतनं स्वशब्दात्" (ब्रह्मसूत्रं-१-३-१।।) इति भगवदसाधारणस्य मोक्षोपायत्वस्योपायान्तरस्थानसम्बन्धरूपत्वोक्तेस्सार्वभौमगतस्येश्वरस्य सेवकजनस्थानसम्बन्धरूपत्वोक्तिवदत्यन्तपरिहसनीयत्वात्, स्वयमनुपायभूतस्योपायान्तरस्थाननिवेशमात्रोपायान्तरकार्यकारित्वोक्तेर्घटस्योद - याचलशृङ्गनिवेशेन दिनकरकार्यकारित्वोक्तिवदसङ्गतार्थत्वात्, लोकवेदयोः क्वचिदप्यकरणककार्योत्पत्तेरदृष्टतया तेन न्यस्तस्य कार्यसामान्यस्य करणजन्यत्वनियमात्, तद्बलेन भगवत्कर्तृकनिरपेक्षरक्षणस्यापि भगवत्करणकत्वसिद्ध्या भगवतो मोक्षकरणकत्वस्यापह्नोतुमशक्यत्वात्, भगवतो मोक्षकरणत्वरूपातिशयसिद्ध्यभ्यसूयया प्रपत्तेरेव मोक्षकरणत्वाङ्गीकारे करणस्यैव साधकतमत्वेन गुरूपायान्तरानपेक्षया भगवत उपायान्तरस्थाननिवेशरूपोपायत्वस्याप्यसिद्धिप्रसङ्गात्, गुरूपायसाध्यफलकामनावति चेतने गुरूपाय-

निष्पादनभरस्यैव विद्यमानतया तादृशभरस्य चेतनन्यस्तस्य भगवता स्वीकारे सति भगवता गुरूपायनिष्पादनस्यैव कर्तव्यत्वेन तदपहायोपायान्तरस्थाननिवेशस्य 'रथमाकर्षय' इत्युक्ते तूष्णीं रथस्थाने निवेशवत्क्रान्तव्यापारत्वप्रसङ्गात्, कर्मस्वधिकारिप्रतिनिधेः "तथा स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात्" (पूर्वमीमांसासूत्रं-६-३-२१॥) इति सूत्रेण प्रतिषिद्धतया भगवति गुरूपायभरसमर्पणस्य तद्विरुद्धत्वात्, "शास्त्रफलं प्रयोक्तरि" (पूर्वमीमांसासूत्रं ३-७-१८॥) इति सूत्रोक्तन्यायेन भरस्वीकारकर्तरि भगवत्येव फलप्रसङ्गेन चेतनस्य तत्फलप्राप्त्यनुपपत्तेश्च भवदुक्तानामत्यन्तासङ्गतत्वात्; 'मदशक्यं गुरूपायं त्वमेव निष्पादय' इति गुरूपायभरस्वीकारप्रार्थनायाः "त्वमेवोपायभूतो मे भव" (अहि-सं ३६-३४॥) इत्युपायत्वप्रार्थनायाश्च भिन्नभिन्नत्वेन तयोरैक्यासम्भवाच्च । भरस्वीकारप्रार्थना हि उपायान्तरप्रार्थनायामेव पर्यवस्यति । भगवदेकोपायत्वप्रार्थना तु तद्विपरीताकारा ।

ननु कथं तर्हि वेदान्ताचार्याणां "आकिञ्चन्यभरन्यास" इत्यादिश्रीसूक्तिरुपपद्यत इति चेत्; तत्र भरन्यासशब्देन भगवदेकरक्ष्यत्वरूपात्यन्तपारतन्त्र्यज्ञानस्यैव विवक्षिततया तस्य भगवदेकोपायत्वप्रार्थनान्तरङ्गत्वेन तत्सूक्त्युपपत्तेः । तथा चानुगृहीतं श्रीमति रहस्यत्रयसारे साङ्गप्रपदनाधिकारे "वपुरादिषु" इत्यादिस्तोत्ररत्नश्लोकद्वयव्याख्यानावसरे "एवं श्लोकद्वयेन यथावस्थितस्वरूपादिविवेकाभावेऽपि 'नमः' इति स्वसम्बन्धपरिहरणमेव "अहमपि तवैवास्मि हि भरः" इत्युक्तप्रकारेण भरसमर्पणप्रधानशास्त्रार्थे सार इत्युक्तं भवति" इति । अत्र "अहमपि तवैवास्मि हि भरः" इत्युक्तप्रकारेण" इत्यनेन भगवदेकरक्ष्यत्वाध्यवसायो विवक्षितः । "स्वसम्बन्धपरिहरणम्" इत्यनेन सर्वप्रकारपारतन्त्र्यमभिप्रेतम् । तथा च भगवदेकरक्ष्यत्वरूपसर्वप्रकारपारतन्त्र्याध्यवसाय एव भरन्यासशास्त्रस्य यथावस्थितार्थ इत्युक्तं भवति । अत एवानुगृहीतमन्यत्रापि "श्रीरंगेश्वर यावदात्मनियतत्वत्पारन्त्र्योचिता त्वय्येव त्वदुपायधीः" (न्यासतिलके-१०॥) इति । तस्मात्साधनप्रपत्तिरूपभरन्यासस्य कथञ्चिदपि भगवदेकोपायत्वप्रार्थनारूपत्वासम्भवात् 'मामेकं शरणं व्रज' इति भगवदेकोपायत्वप्रार्थनाविधिवाक्ये भरन्यासविधिवचनं बाधितमेव ।

ननु 'मामेकं शरणं व्रज' इत्यत्र भरन्यास एव विधीयते; नोपायत्वप्रार्थना । शरणशब्दस्यात्रोपायत्वार्थकत्वाभावात् । तथा हि "उपाये गृह-

रक्षिता:" (अहि-सं-३६-३३॥) इति शरणशब्दार्थनिष्कर्षकवचने पूर्वार्धे प्रकृतानुपयुक्तं शरणशब्दस्यार्थत्रयमुक्तम् । उत्तरार्धे तु प्रकृतोपयुक्तमर्थान्तरमुच्यते । तत्र "उपायार्थैकवाचकः" इत्यत्रार्थशब्दो निवृत्तिपरः । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" (अमरकोशे-३-नानार्थवर्गे २४२-श्लो॥) इति कोशात् । तथा च शरणागतिशब्दघटकीभूतश्शरणशब्दः—उपायनिवृत्तिवाचक इत्युक्तं भवति । 'उपायार्थैकवाचकः' इत्येकशब्देन पूर्वार्धोक्तमर्थत्रयं व्यावर्त्यते । तेन च शरणागतिशब्दस्योपायत्वप्रार्थनापरत्वं व्युदस्तम् । उपायनिवृत्तिर्नाम - स्वनिर्भरत्वपर्यन्तो भरन्यास एव । तस्माद्भरन्यासस्यैवशरणागतिशब्दार्थत्वात्तद्विधायके 'मामेकं शरणं व्रज' इति वाक्ये भरन्यास एव विधीयत इति युक्तम् । तस्य नियोगविषयत्वम् । तथा चानुगृहीतं श्रीमति रहस्यत्रयसारे द्वयाधिकारे शरणशब्दार्थव्याख्यानावसरे "इदं स्वनिर्भरत्वपर्यन्तम् । इयं निष्कर्षमभिप्रेत्य "साम्प्रतं त्वेष उपायार्थैकवाचकः" इत्युक्तम्" इति चेत्; मैवम् । तथा सति "मामेकं शरणं व्रज" इत्यत्र शरणशब्दस्यानन्वयप्रसङ्गात् ।

न हि भगवानुपायान्तरनिवृत्तिरूपः, येन मांशब्दसमानाधिकरण्येन शरणशब्दस्यान्वयस्स्यात्; यदि भावान्तरस्यैवाभावत्वात्, भगवत उपायान्तरनिवृत्तिरूपत्वमिष्येत; तर्हि प्रतियोगिविरुद्धभावान्तरस्यैवाभावरूपत्वात्; भगवतस्साधनान्तरविरोधित्वमावश्यकम् । तच्च न रक्षकत्वरूपेण; भगवति रक्षकत्वाकारस्य साधनान्तरानुकूलत्वात् । किन्तु ब्रह्मास्त्रन्यायेन करणत्वविशिष्टवेषेणैव भवतीति । "मामेकं शरणं व्रज" इत्यनेन भगवत उपायान्तरनिवृत्तिरूपत्वाध्यवसायं विदधताप्यन्ततो गत्वोपायत्वाध्यवसाय एव विधीयत इति भवतां स्वकपोलकल्पनं शिरोवेष्टनेन नासिकास्पर्शनमेव ।

किञ्च "त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः । शरणागतिः" (अहि-सं ३६-३४॥) इत्युक्तानन्तरप्रकृतोपायत्वप्रार्थनाविषयकशरणागतिशब्दघटकशरणशब्दार्थनिष्कर्षकपरेऽस्मिन्वचने शरणशब्दस्योपायपरत्वनिष्कर्षकत्वमेव स्वरसतः प्रतीयते । तदपहायार्थान्तरनिष्कर्षकत्वकल्पनं प्रकरणविरुद्धम् । अपि च शरणशब्दस्योपायान्तरनिवृत्तिवाचकत्वञ्चासिद्धम् । एवमसिद्धार्थपरत्वोक्तौ शक्त्यन्तरञ्च कल्पनीयं स्यात् । तथा च गौरवम् । "अगतिरशरणो भवाब्धौ लुठन्वरद शरणमित्यहं त्वां वृणे"

(वरदराजस्तवे-८२।।) इत्यादिष्वेकार्थत्वेन प्रतीयमानानां शरणशब्दानामर्थभेदकल्पनञ्चानुपपन्नम् । अन्यथा 'अशरणः' इत्यस्योपायान्तरनिवृत्तिरहित इत्येवार्थस्स्यात् । तच्च बाधितम् । अनन्योपायानामेव वरणाधिकारात् ।

ननु कथं तर्हि वेदान्ताचार्यसूक्तिरुपपद्यत इति चेत्; श्रूयतामवधानेन; संहितान्तरेषु "आकिञ्चन्यैकशरणाः केचिद्भाग्याधिकाःपुनः ।" "इदंशरणमज्ञानामिदमेव विजानताम्" (लक्ष्मीतन्त्रे-१७-१००।।) इत्यादिष्वाकिञ्चन्यशरणागत्यादिषु अनुपायभूतेषु शरणशब्दप्रयोगो दृश्यते । तत्र शरणशब्दस्य कोशादिप्रसिद्धमर्थत्रयञ्च बाधितम् । आकिञ्चन्यादीनामुपायत्वस्य वा, गृहत्वस्य वा, रक्षकत्वस्य वासम्भवात् । अतस्तत्र किमभिप्रेत्य शरणशब्दप्रयोग इत्याकाङ्क्षायामुपायान्तरनिवृत्तिमभिप्रेत्यैव तत्र शरणशब्दप्रयोग इति "वर्तते साम्प्रतश्चैष उपायार्थैकवाचकः" इत्यनेन निष्कृष्यते । तथा चाकिञ्चन्यशरणागत्योर्भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिरूपत्वात्, तत्रोपायान्तरनिवृत्तिरूपार्थान्तराभिप्रायेण शरणशब्दप्रयोगस्संहितान्तरेषूपपन्न इति केषाञ्चिन्मतम् । इदञ्च मतं श्रीमन्निक्षेपरक्षायां परमतत्वेन न्यदर्शि । तथा च तन्मतानुसारेणात्रापि शरणशब्दस्योपायान्तरनिवृत्तिपरत्वसूक्तिरुपपद्यत एवेति ।

ननु "मामेकं शरणं व्रज" "त्वमेवोपायभूतो मे भव" (अहि-सं २६-३४ ।।) इत्यादिष्ववधारणार्थकैकशब्दादिनोपायान्तरनिवृत्तिरुच्यते । सा च भरन्यासमन्तरा न भवति । तथा चानुगृहीतमाचार्यैः "अकृते तु भरन्यासे रक्षापेक्षणमात्रतः । पश्चात्स्वयत्नविरतिः न प्रसिध्यति लोकवत्" (रहस्यत्रयसारे ।।) इति । तथा चात्र भरन्यासोऽर्थाद्विधीयत एवेति चेन्न ; उपायान्तरव्यावृत्तिपरस्यावधारणस्य न्यासरूपोपायान्तरप्रवृत्तिं विनानुपपन्नत्वोक्तिर्वन्ध्याशब्दस्य स्वार्थे मातृत्वं विनानुपपन्नत्वोक्तिवत्परिहसनीयत्वात् । श्रीमद्वेदान्ताचार्यसूक्तेः केवलपारतन्त्र्यज्ञानरूपयथावस्थितन्यासमात्रविषयत्वेनान्यथासिद्धेश्च । किञ्चाशक्यांशभरन्यासमात्रेण स्वयत्नविरतिर्युज्यते । शक्यांशप्रवृत्तेर्निवारकाभावात् । न हि भवद्भिश्शक्याशक्यसर्वांशभरन्यासोऽभ्युपगतः; तथा सति प्रपत्तेरप्यननुष्ठानप्रसङ्गात् । गुरूपायरूपाङ्गिभरन्यासे कृते तदङ्गभूतानां शक्यत्वेऽपि प्रयोजनाभावात् । स्वत एव निवृत्तिर्भवतीति चेत्, तर्हि प्रपत्तेरपि भक्त्यङ्गान्तर्गतत्वेन प्रयोजना-

भावादेव तदनुष्ठानं न स्यात् । अशक्तानां गुरूपायस्थाने प्रपत्तेरेव विकल्पिततया नेयं प्रपत्तिर्भक्त्यङ्गमिति चेत्, तर्हि गुरूपायस्थाने प्रपत्तेर्विधिनैव निवेशिततया भगवतो भक्तिस्थाननिवेशस्यासङ्गतत्वापातात् । किङ्कुर्मो वयम्; भगवतो भक्तिस्थाननिवेशनमेव हि प्रपदनं नामेति चेत्, तर्हि प्रपत्तेरुपायत्वं त्यजथ; नोचेत्, परस्परप्रतिबन्धेनोभयोरपि भक्तिस्थाननिवेशासम्भवप्रसङ्गात् । तर्हि भगवत एवोपायत्वं त्यजत इति चेन्न; भगवत्कर्मकगुरूपायस्थाननिवेशनैकस्वरूपायामप्रपत्तेरेवासिद्धिप्रसङ्गात् । अनुपायभूतस्य गुरूपायस्थानीयत्वायोगात् । अनुपायभूतस्यैव भगवत उपायान्तरस्थानीयत्वेन भावनैवोपायान्तरस्थाननिवेश इति चेत्, मिथ्याज्ञानादपवर्गप्रसङ्गो दुरुद्धरः । तस्मात्प्रपत्तेरुपायत्वम्, भगवत उपायान्तरस्थननिवेशश्च वदतां प्रपत्तिरङ्गप्रपत्तिस्थानीयैव । गुरूपायस्थानीयस्य भगवतस्तथात्वनिष्पादकत्वात् ।

तथा च गुरूपायभरन्यासेऽपि गुरूपायाङ्गभूतायाः प्रपत्तेश्शक्यतयानुष्ठानवत्तदङ्गान्तराणामपि शक्तिसम्भवेऽनुष्ठानमापद्यत एवेति न भरन्यासमात्रात्स्वयत्ननिवृत्तिरुपपद्यते । अत एव हि प्रपन्नानां प्रामादिकपापप्रसक्तौ प्रतिपदविहितप्रायश्चित्तानुष्ठानम्, पुनःप्रपदनरूपप्रायश्चित्तानुष्ठानञ्च भवद्भिरङ्गीकृतमुपपद्यते । नो चेद्भरन्यासबलाद्भक्तिस्थाने भगवति स्थिते सति न्यासिनः सदापि समाधिनिष्ठतया प्रायश्चित्ताद्यननुष्ठानप्रसङ्गात् । "अपिचेत्पातकं किञ्चिद्योगी कुर्यात्प्रमादतः । योगमेव निषेवेत" इत्यादिना तन्निषेधात् । न्यासयोगस्य क्षणमात्रसाध्यत्वेन तदनन्तरं तद्योगानुप्रवृत्तिर्नास्ति इति चेत्, तदभावेऽपि भक्तिस्थाने भगवतस्सर्वदा स्थितत्वेन न्यासिनस्सर्वदा भक्तियोगनिष्ठत्वानपायात् । तस्मात्प्रपन्नस्य प्रायश्चित्ताद्यनुष्ठानोपपादनार्थमवश्यं भवद्भिर्भगवत्यशक्यांशभरन्यासमात्रं कृतमित्येवाङ्गीकरणीयतया तादृशभरन्यासमात्रेण स्वयत्नविरतिर्न स्यादेवेति "अकृते तु भरन्यासे" इत्याचार्यवचने भरन्यासशब्देनादृष्टद्वारकफलसाधनगोचरस्वप्रवृत्त्यनर्हत्वरूपसाधनपारतन्त्र्यज्ञानमेव स्वयत्नसामान्यनिवर्तकतया विवक्षितमिति तत्सूक्तिरन्यपरैवेति । तस्मात् "मामेकम्" इत्यवधारणबलात्, भरन्यासविधिसिद्धिरित्यनुपपन्नमेव ।

ननु मास्तु "मामेकं शरणं व्रज" इत्यनेन भरन्यासविधानम्; तथापि सर्वशाखाप्रत्ययन्यायसर्ववेदान्तप्रत्ययन्यायाभ्यां न्यासप्रकरणाम्नातायाः

प्रपत्तिविद्याया ऐक्यसिध्द्या "उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च" (ब्रह्मसूत्रं-३-३-४ ।।) इति शारीरकगुणोपसंहारसूत्रोक्तन्यायेन लक्ष्मीतन्त्रादिषु प्रपत्तिप्रकरणे विहितस्य भरन्यासस्य शरणागतिप्रयोगविधिवाक्येन विधानं युज्यत एवेति चेन्न ;—"नाना शब्दादिभेदात्" (ब्रह्मसूत्रं-३-३-८८ ।।) इति सूत्रोक्तन्यायेन न्यासशरणागत्योर्विद्याभेदस्य सिद्धतया सर्वशाखाप्रत्ययन्यायादीनामत्राप्रवृत्तेः । संयोगरूपरूपचोदनाख्यादिभेदनिबन्धनेन तयोर्भेदस्य प्रागेव निरूपितत्वात् । समर्थितश्च विस्तरेण तयोर्भेदश्श्रीवचनभूषणमीमांसाभाष्ये वरददेशिकैः ।

ननु "मामेकं शरणं व्रजे"त्यत्र मास्तु भरन्यासविधेयत्वम् ; तथापि न दोषः ; शरणागतेरेव नियोगविषयत्वसम्भवादिति चेत् ;—तर्हि भवान्प्रष्टव्यः - किं रूपा सा शरणागतिरिति । स्वेष्टलाभेच्छया तत्साधनक्षमपुरुषवशीकरणमेव शरणागतिरितिचेत्, न ; भक्तावप्येतल्लक्षणसत्त्वेनातिव्याप्तेः । भक्तिभिन्नत्वनिवेशे साध्यभक्तिरूपायां प्रपत्तावव्याप्तेः । साधनभक्तिभिन्नत्वनिवेशेन तद्वारणेऽपि स्वर्गाद्यर्थयागादावतिव्याप्तिः । गुरुतरसाधनभिन्नत्वनिवेशेन तत्परिहारे "न्यसनभजनयोर्गौरवे को विशेषः" (न्यसतिलके-१७।।) "उपायस्सुकरस्सोयं दुष्करश्च मतो मम" (लक्ष्मीतन्त्रे-१७-१९४।।) इति प्रपत्तेरपि गुरुतरसाधनतयासम्भवप्रसङ्गः । अत्यायासगर्भसाधनभिन्नत्वनिवेशेन तत्परिहारे अतिगुह्यैर्मणिमन्त्राञ्जनादिसुलभोपायैः परवशीकरणेष्वतिप्रसङ्गः । दृष्टद्वारकतद्वशीकरणविवक्षणेन तत्परिहारे शासनेन वा भृतिदानेन वा दक्षिणादानेन वा परवशीकरणेष्वतिप्रसङ्गः । तत्परिहारार्थमत्यायासविधुरदृष्टद्वारकदुर्बलकर्तृकनिरपेक्षप्रबलवशीकरणमेव शरणागतिरित्युक्तौ "मूर्खच्छन्दानुरोधेन" इत्युक्तरीत्या केवलमनुनयादिना सामादिना च प्रभुवशीकरणे वेश्याकर्तृकलीलालापादिद्वारकपुरुषवशीकरणे चातिव्याप्तेः । एतत्सर्वदोषपरिहारार्थं स्वेष्टलाभहेतुभूतनिरपेक्षप्रबलवशीकारप्रयोजकात्यायासविधुरदृष्टद्वारकदुर्बलकर्तृकस्वरक्ष्यताप्रकाशकव्यापार एव शरणागतिरित्युक्तौ मानसप्रपत्तावतिव्याप्तिः । रक्ष्यताप्रकाशकत्वाभावात् ।

सर्वज्ञविषये तस्यापि रक्ष्यताप्रकाशकत्वमस्त्येवेति चेत्, तदापि व्याधशरणागतावव्याप्तिः । कपोतावासवृक्षमूलदेशागमननिपातनादिरूपतद्व्यापारस्य कपोतवशीकरणोद्देश्यकत्वाभावात् । तत्र व्याधस्य शरणागतत्वभ्रान्त्यैव

तद्रक्षणस्यैव कृतत्वात्; व्याधस्य शरणागतत्वमेव नास्तीति चेत्, धिक्त्वाम्; यतः "सूक्ष्मःपरमदुर्ज्ञेयः सतां धर्मःप्लवङ्गम" (रामायणे ॥) इत्य-सर्वज्ञदुर्विज्ञेयतया शरण्याभिमतं शरणागतिधर्मं यथावदभिजानतोऽपि कपोतस्य भ्रान्तिं प्रलपसि। अथ ज्ञानाधिक्यकार्यभूतेयं भ्रान्तिरित्युच्येत, तदा तादृशभ्रान्तेर्ज्ञानादिकेषु सर्वेष्वपि सम्भवात्। तद्विषये भ्रान्तिजनकव्यापारोऽपि शरणागतिरित्येवाभ्युपेत्यम्। यद्येवं नाङ्गीक्रियेत, तर्हि भ्रान्त्या "द्विषन्तं नैव भोजयेत्" (भारते-उद्योगे-९१-१७॥) इति निषिद्धव्यापारे व्याधरक्षणे प्रवृत्तस्य कपोतस्य शरणागतसंरक्षणप्रयुक्तपुण्यलोकप्राप्तिवचनं विरुद्ध्येत। "श्रूयते हि कपोतेन" (रामायणे-युद्ध-१८-२४॥) इत्यादिना धर्मसंस्थापनार्थमवतीर्णेन भगवता स्वेन शरणागतसंरक्षणावश्यकर्तव्यतायां तादृशभ्रान्तपक्षिव्यापारस्य प्रमाणतमविशिष्टाचारत्वेनोदाहरणमप्यत्यन्तमसङ्गतं स्यात्। उच्यते हि शरण्यलक्षणपूर्तिः कपोतस्यैवेति "प्रपत्तव्यःकपोतवत्" (प्रपन्नपारिजाते-२-२९॥) इत्यादिषु।

किञ्च सर्वज्ञेन शरण्येन "मित्रभावेन सम्प्राप्तम्" (रामायणे युद्ध१८-३॥) इति "भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु" (अमरकोशः ॥) इति नानार्थकभावशब्देन मित्रत्वग्राहकलीलादिरूपव्यापारस्यापि शरणागतित्वोक्त्या व्याधादिव्यापाराणां शरणागतित्वस्य कैमुत्यसिद्धतया तत्साधारण्येनैव लक्षणाभिधानमावश्यकम्। अपि च यत्र यत्र प्रामाणिकानां शरणागतित्वव्यवहारः, तावत्साधारणात्मनीतरसाधारणञ्च शरणागतिलक्षणं वक्तव्यम्। प्रयोगानुसारेणैव लक्षणस्य वक्तव्यत्वात्। व्याधे च शरणागतत्वं "श्रूयते हि कपोतेन शत्रुश्शरणमागतः" (रामायणे युद्ध-१८-२४॥) इत्यादिषु घण्टापथं प्रयुज्यते। तस्मान्निरुक्तलक्षणस्याव्याप्तिर्दुर्वारैव। अथैतत्परिहारार्थं वशीकरणात्मकरक्ष्यत्वग्राहकव्यापारे स्वफलेच्छाप्रयुक्तत्वं परित्यज्य सामान्यरूपेण निवेशेऽपि व्याधादिव्यापारवदबुद्धिपूर्वकाणां विधेयत्वानुपपत्तेः बुद्धिपूर्वकाणाञ्च राजादिशरणागतिवदेव लोकतः प्राप्तत्वाच्च, तस्य नियोगविषयत्वायोगात्। न च भगवच्छरणागतिविषयशरण्यस्वरूपादीनां लोकतस्सिद्ध्यसम्भवाच्छरणागतेर्विधेयत्वम्, सिद्धपरवाक्यैरेव तत्सम्भवेन तदर्थं नियोगानपेक्षणात्।

ननु औचित्यमूलकैर्लौकिकन्यायैस्सामान्यरूपेण प्राप्ताया अपि शरणागतेश्शास्त्रैकसमधिगम्याधिकाराङ्गस्वरूपविशेषविशिष्टवेषेण विधिर्युज्यत इति

चेन्न;—शास्त्रमुखेनाधिकारादिकमजानतामपि व्याधवायसादीनां शरण्यसमीपागमनव्यापारविशिष्टमात्रेण फलसिद्धिदर्शनात्। शास्त्रमुखेन स्वयञ्च सर्वज्ञानतोऽपि भरतस्य शरणागतिवैफल्याच्च। शरणागतेः फलव्याप्तिं प्रति शरण्यहृदयानुसारित्वव्यतिरेकेणाङ्गादेरनावश्यकतया तद्विशिष्टवेषेणापि विधेयत्वायोगात्। न हि व्याधादयस्तु सत्सम्प्रदायान्वयेन त्वद्विवक्षितविशेषशास्त्राध्ययनपूर्वकमङ्गाधिकारादिपुष्कलां शरणागतिं कृतवन्त इति कुत्रचिल्लिखितमस्ति।

ननु फलान्तरार्थशरणागतौ मास्तु नियमः; मोक्षार्थे नियमस्स्यादेवेति चेन्न;—श्रीमति रहस्यत्रयसारे चरमश्लोकाधिकारे "आकिञ्चन्यैकधनानाम्, द्रौपदिदमयन्तिराक्षसिविभीषणक्षत्रबन्धुमुचुकुन्दराजेन्द्रपाण्डवदेवमुमुखत्रिशङ्कु शुनश्शेफकिरातककपोतादीनां शरणागतिसमये तदानुकूल्यादिकमन्तरा काञ्चिदितिकर्तव्यतोक्तिं नाद्राक्षम्, क्षणकालसाध्यतया निरपेक्षरूपप्रपत्तिमात्रेण तदानीमेव तत्तच्छरणागतानां तत्तदपेक्षितसिद्धिश्चाद्राक्षम्। एवं मोक्षार्थप्रपत्तावपि तदपेक्षितकाले फलसिद्धेर्न्यूनता नास्ति" इति शरण्यभार्यापहारतर्जनभर्त्सनादिनिरतानां व्याधराक्षसीवायसप्रमुखानामबुद्धिपूर्वकशरण्यसमीपागमनत्रिजटावाक्यप्रतिषेधादिमात्रलक्षणतात्कालिकानुकूल्यादिशङ्कितव्यापारविशेषाणामेव मोक्षार्थप्रपत्तीतिकर्तव्यतात्वेनाचार्यैरतिदिष्टतया मोक्षार्थशरणागतेस्तदतिरिक्ताङ्गकत्वायोगात्। *दधिपाण्डे व्यभिचाराच्च।

अथास्तु वा मोक्षार्थशरणागतेर्विशेषः; तत्राङ्गाधिकारयोर्विशेषं पश्चाद्विचारयामः। इदानीन्तु शरणागतिस्वरूपगतो विशेषः पृष्टव्यः-स किंरूप इति। स्वरूपफलसमर्पणरूपांशान्तरसाहित्यरूप एवेति चेत्, स्वरूपस्य चेतनशेषत्वाभावात्। तत्र भगवच्छेषत्वस्य नित्यसिद्धतया तदापादनासम्भवाच्च। स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपसमर्पणस्य स्वस्वरूपविषये फलविषये वा चेतनेन कर्तुमशक्तत्वेन तद्विशिष्टविधानायोगात्। तयोर्मनसा स्वस्वत्वमारोप्य तत्त्यागपूर्वकं तन्निष्ठे परस्वत्वे स्वापादितत्वबुद्धिः कर्तव्येति चेत्, मिथ्याज्ञानादपवर्गप्रसङ्गः। प्रमाणबलादिदं न विरुध्यत इति चेत्, न। "आध्यानाय प्रयोजनाभावात्" (ब्रह्मसूत्रं-३-१-१४)॥ इति सूत्रोक्तन्यायेन

* दधिभाण्ड इति कश्चिद्गोपः; यदृच्छया स्वगृहागतं श्रीकृष्णं निरुध्य स्वदधिभाण्डस्यापि मोक्षं प्रार्थितवान्॥

प्रियशिरस्त्वादेरिवात्मसमर्पणादेरपि भगवदनन्यार्हशेषत्वबुध्यारोहणसौक- र्यार्थमुपदेशसम्भवेन तादृशान्यपरवचनावलम्बेन सर्वशास्त्रनिषिद्धबुद्धिपूर्वका- त्मापहारस्य मोक्षहेतुत्वोक्तेरत्यन्तहेयत्वात् । अन्यथा "प्रणवो धनुश्शरो ह्यात्मा" (मु-उप-२-२-४॥) इत्याद्युक्तजीवात्मपरमात्मयुद्धस्याप्यनुष्ठानप्रस- ङ्गात् । भगवच्छेषभूतयोस्स्वरूपफलयोर्भगवच्छेषत्वेन ज्ञानादिकमेव सम- र्पणशब्दविवक्षितमिति चेन्न; तावन्मात्रस्य श्रवणमात्रसिद्धत्वेन नियोगविषय- त्वायोगात्।

नच यागस्वरूपे श्रुतेऽपि तदनुष्ठानप्रयत्नमन्तरा न सिद्ध्यति, तथैवा- त्रापीति न किञ्चित्सङ्कटमिति वाच्यम्; यागादेः क्रियारूपत्वेन ज्ञानरूपत्वा भावात् । तत्र त्यज्यमानद्रव्यगतनिवर्तनीयस्वस्वत्वापादनीयपरस्वत्वयोः कर्मोपाधिकयोः पारमार्थिकत्वाच्च भवति प्रयत्नान्तारापेक्षा। अत्र चात्मयाग- शब्दितशेषत्वज्ञानस्य केवलत्त्वज्ञानरूपत्वात्, निवर्तनीयस्वस्वत्वस्यापार- मार्थिकतया तत्त्वज्ञानमात्रेण तन्निवृत्तिसम्भवाच्च प्रयत्नान्तरस्या नपेक्षितत्वात्। नहि रज्जत्वज्ञानं, रज्जुसर्पनिवृत्तिश्च श्रवणातिरिक्तं विधेयव्यापारमपेक्षते। यदि चात्मनस्स्वस्वत्वनिवृत्तेस्तत्त्वज्ञानातिरेकिधर्मानुष्ठानसापेक्षता स्यात् । तर्हि गरुडध्याननिवर्तनीयस्य हालाहलस्येवात्मनस्स्वस्वत्वस्यापि पारमा- र्थिकमेव स्यात् । तथा चात्मनः केवलपरस्वत्वप्रतिपादकशास्त्राणामप्रामा- ण्यात्; आत्मापहारस्यैवाप्रसक्ततयात्मापहारप्रायश्चित्तार्थं प्रपत्त्यनुष्ठान- मिति भवन्मतस्य मूलोच्छेदप्रसङ्गः ।

नन्वात्मनस्स्वस्वत्वाभावादीनां पृथक्पृथक् श्रवणदशायां ज्ञातत्वेऽपि तेषां साहित्यस्याप्राप्तत्वात्, तद्विशिष्टवेषेण शरणागतिर्विधीयत इति नानुप- पत्तिरिति चेन्न;—द्वयार्थश्रवणमननदशयोस्सहैव तेषां ज्ञातत्वेन साहित्य- स्यापि प्राप्तत्वात्। न च स्वरूपतस्साहित्यमात्रस्य ज्ञातत्वेऽपि प्रार्थनाविशिष्ट- वेषेणाप्राप्तत्वात्तेन रूपेण विधीयत इति नानुपपत्तिरिति वाच्यम्;—प्रार्थ- नाया इच्छारूपत्वेन तस्या विषयवैलक्षण्यायत्ततया तस्या अपि प्राप्तत्वात्। न च प्रार्थनायास्स्वापेक्षाप्रकाशकव्यापाररूपाया अतिरिक्तत्वात्तस्या अप्रा- प्तत्वं शङ्क्यम्;—सर्वज्ञविषये इच्छाया अप्यपेक्षाज्ञापकव्यापाररूपतया तद- योगात्। न च "तवास्मीतिं च याचते" (रामायणे-युद्ध-१८-३१॥) ."तदे- कोपायता याच्ञा" (भरतमुनिवाक्यम्) इत्यादिषु प्रार्थनाया वाचिकव्यापा-

रात्मकत्वावगमात्, तादृशायाश्चाविशिष्टवेषेण विधिरुपपद्यत इति वाच्यम्;- मन्त्ररत्नार्थानुसन्धानार्थशब्दानुसन्धानदशायामेव तस्यापि प्राप्तत्वात् ।

न चाविधेयज्ञानस्य मोक्षहेतुत्वोक्तौ कुदृष्टिमतप्रवेशापत्त्या ज्ञानस्य विधेयत्वमावश्यकमिति वाच्यम्;—कुदृष्टिमतप्रवेशभीतिमात्रेणाविधेयज्ञानस्य विधेयत्वायोगात् । अनावृत्तज्ञानस्य मोक्षहेतुत्ववादेऽपि कुदृष्टिमतप्रवेशस्याविशिष्टतया तत्परिहाराय प्रपत्तेर्ध्यान रूपत्वाङ्गीकारप्रसङ्गाच्च । किञ्च ज्ञानस्य विधेयत्वासकृदावृत्तित्वाद्यङ्गीकारेऽपि नियोगवादिनां जरन्मायावादिनाम्मतप्रवेशस्य दुष्परिहारत्वाच्च । यदि च ध्यानध्येयविशेषनिरूपणादिना तन्मतप्रवेशः परिहीयेत, तदाविधेयज्ञानवादिमतप्रवेशप्रसङ्गस्यापि तथैव वारणसम्भवात्तदर्थं प्राप्तस्य विधेयत्वं न कल्पनीयमेव । किञ्चाविधेयज्ञानस्यास्माभिर्मोक्षसाधनत्वं नाभ्युपगम्यते; ज्ञानस्याधिकारिविशेषणमात्रत्वेन सिद्धोपायस्यैव मोक्षकरणत्वाभ्युपगमात् । न चाविधेयज्ञानस्याधिकारिविशेषणत्वमात्राभ्युपगमे कुदृष्टिमतप्रवेशः; "परशेषत्वधीमात्रमधिकारिविशेषणम्" इति वदतां भवताम्मतेऽपि तस्य तुल्यत्वात् । अस्मन्मतेऽपि भक्त्यधिकारिविषये असकृदावृत्तविधेयज्ञानस्यैव मोक्षसाधनत्वाङ्गीकाराच्च । तस्माच्छरणागतेस्सर्वात्मना प्राप्तत्वान्नियोगविषयत्वमनुपपन्नमेव ।

ननु 'व्रजे'ति विधेरवैयर्थ्यायावश्यं शरणागतेरप्राप्तांशान्तरवत्त्वमावश्यकमिति चेन्न;—"तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" "ब्राह्मणःप्रतिग्रहादिना धनमार्जयेत्" "ऋतावुपेयात्" (गौतमधर्मे १-५-१ ॥) इत्यादिरागप्राप्तानां मन्त्रार्थवेदनधनार्जनऋतुगमनादीनां नियमविधिवत्, अत्रापि । यदि शरणं व्रजेत्, तर्हि 'सर्वधर्मान्परित्यज्यैव व्रजेत्' इति सर्वधर्मपरित्यागपूर्वकत्व नियमविधिपरत्वेन विधिसार्थक्यस्य "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति निर्देशमहिम्नैव सिद्धतया तदपहाय शरणागतावप्राप्तांशान्तरगवेषणस्य सम्प्रदायविद्वेषमात्रनिबन्धनत्वात् । न च "शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्" (अहि-सं ३६-३४॥) इत्यादिषु केवलशरणागतिमात्रे विधिप्रत्ययश्रवणात्, तत्सार्थक्याय शरणागत्यन्तर्भावेनैवाप्राप्तांशपरिकल्पनमावश्यकमिति वाच्यम्;—तथा सति "श्रोतव्यो मन्तव्यः" (बृह-उप-४-४-६॥) इत्यादिष्वपि तत्कल्पनाप्रसङ्गात् । अपि च "तद्विजिज्ञासस्व" (तै-उप-भृगु-१-१॥) "अक्षैर्मा दीव्यः, कृषिमित्कृषस्व वित्तेरमस्व" (ऋग्वेदे-

७-८) इत्यादिषु रागतःप्राप्तानामेव श्रवणादीनामायासगर्भत्वबुध्या वा तन्द्रालुतया वा कार्यान्तरपरत्वेन वा येनकेनचिद्धेत्वन्तरेण प्रवृत्त्युपघाते सति तत्प्ररोचनेनोत्कटप्रवृत्तिसम्पादकतया तद्विधिसार्थक्यवत्, प्रकृतेऽपि "अमृतस्यैष सेतुः" (मु-२-२-५॥) इत्यादिसिद्धपरवाक्यजन्यसिद्धोपायज्ञानेन रागप्राप्तस्यापि मन्त्ररत्नार्थविचाररूपतत्परिग्रहस्य भगवदनभिमतत्वशङ्कया प्रवृत्त्युपघाते सति भगवदभिमतत्वज्ञापनेन प्रवर्तकतया तद्विधेस्सार्थकत्वेन तदर्थं शरणागतावप्राप्तांशान्तरकल्पनायोगात् । यदि केवलं विधिप्रत्ययसार्थक्यायैव विधिप्रत्ययान्तधात्वर्थानां सर्वेषामपूर्वत्वं कल्पनीयं स्यात् । तस्माच्छरणागतेरपूर्वप्रवृत्तिरूपांशान्तरविशिष्टवेषेण विधिविषयत्वं विधिप्रत्ययश्रवणबलादेव सिध्यतीत्युक्तिर्दुरुक्तिरेव ।

ननु "मामेकं शरणं व्रज" इति विधीयमानव्रजधात्वर्थस्य मन्त्रे 'प्रपद्ये, इति प्रपूर्वकपद्धातुना प्रतिपादनात्, प्रपूर्वकपद्धातोश्च "महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिः" इति विश्वासपूर्वकप्रार्थनात्मकबुद्धिविशेषपरत्वोक्त्या तादृशाकारविशिष्टवेषेण शरणागतेरप्राप्तत्वात्, विधिविषयत्वमुपपद्यत इति चेत्, मैवम् । विकल्पासहत्वात् । किमत्रमहाविश्वासपूर्वकत्वं प्रार्थनात्मकत्वमुभयमप्राप्तम्—उत महाविश्वासपूर्वकत्वमात्रं वा । नाद्यः-विषयवैलक्षण्यज्ञाननिबन्धनायाः प्रार्थनाया लोकसिद्धत्वेन तस्याः-पूर्वत्वायोगात् । नापि द्वितीयः-भगवत्कटाक्षविशेषप्रबुद्धसत्त्वानां परमास्तिकानामाचार्योपदेशलब्धार्थसामान्ये महाविश्वासस्यापि सिद्धत्वेन तस्य विधेयत्वायोगात् । न च तादृशभगवत्कटाक्षशून्यविषयोऽयं विधिरिति शङ्क्यम् ;-तेषां महाविश्वासस्य दुर्लभतया तान्प्रति तद्विधानस्य चन्द्राहरणविधानवत्, बाधितत्वापातात् । तस्मात् 'प्रपद्ये' इत्यत्र प्रपूर्वकपद्धातुरपि प्राप्तार्थविषय एवेति न तद्बलादत्र विधेयविषयसिद्धिः ।

किञ्चात्र भवान्पृष्टव्यः - नियोगविषयतया भवदभिमतस्य प्रपदनस्य फलकरणत्वमिष्टं न वेति । नाद्यः-भगवदेकोपायत्वप्रत्ययात्मकत्वरूपप्रपत्तिस्वरूपोच्छेदप्रसङ्गात् । तथा चानुगृहीतं वेदान्ताचार्यैर्न्यायसिद्धाञ्जने जीवपरिच्छेदे "इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किं पुनस्सहकारिणाम्" इति । श्रीमन्निक्षेपरक्षायाञ्च "तदेकशरणव्रज्या हि

तदितरोपायपरिग्रहेण विरुध्येत" इति । एवं तात्पर्यचन्द्रिकादिष्वपि द्रष्टव्यम् ।

ननु प्रपत्तेर्भगवदेकोपायत्वाध्यवसायात्मकत्वं न तया उपायत्वं वारयति, न तूपायताबुद्धिमेव प्रतिबध्नाति; तथाच प्रपत्तृभिरबुध्यमानं सत्प्रपत्तेरुपायत्वं सुसुखं तिष्ठत्येव । तथा चानुगृहीतमाचार्यैः "त्वय्येव त्वदुपायधीरपिहितस्वोपायभावास्तु मे" (न्यासतिलके १० ॥) इति । अपिहितस्वोपायभावा-आच्छादितस्वोपायताकेत्यर्थः । अगृहीतस्वोपायभावेति यावत् । "अपिधानतिरोधानपिधानच्छादनानिच" (अमर-९-दिग्वर्गे-८८ ॥) इति कोशादिति चेत्, मैवत् । वन्ध्याया मातृत्वग्रहस्य वन्ध्यया प्रतिज्ञावचनवदस्य परीक्षकपरिहसनीयत्वात् । अत्र भवान्पृष्टव्यः - प्रपत्तिस्वरूपेणैव प्रतिबन्धं तदुपायत्वज्ञानं केनोपायेन भवतां सम्भवतीति । विधिस्वारस्यपर्यालोचनादिनैवेति चेत्, तथा सति प्रपत्तिनिष्ठाभङ्गप्रसङ्गात् । तद्बलेन प्रपत्तिस्वरूपस्य भवद्भिर्बाधितत्वात् । इत्थञ्च-प्रपत्तेर्भ्रान्तिरूपत्वं वा वक्तव्यम्; नो चेत्, प्रपत्तिस्वरूपबाधकतर्काणां वा कुतर्कत्वमङ्गीकार्यमित्युभयतः पशारज्जुः।

ननु कथं तर्हि वेदान्तचार्यसूक्त्युपपत्तिरिति चेत्, श्रूयतामवधानेन । "अपिहितस्वोपायभावे"त्यत्र, पिहितो न भवतीत्यपिहितः, अपिहितः-स्वोपायभावो यया इति व्युत्पत्तिः; प्रकटितस्वोपाय भावेत्यर्थः । अयं भावः-सर्वासु ब्रह्मविद्यासु उपास्यगतमुपायत्वमेव तृतीयाश्रुत्यादिनोपचर्यते । तथापि तत्तद्विद्यास्वरूपैस्तथात्वं न प्रकटीक्रियते - भगवदेकोपायत्वाध्यवसायात्मकत्वेन । प्रपदनेन तु स्वस्य तथात्वं प्रकटीक्रियत इति वेदान्ताचार्यैस्तथानुगृहीतमिति नानुपपत्तिः । तथा च ब्रह्मविद्यानां मोक्षोपायत्वं नाम-मोक्षोपायभूतब्रह्मविषयकत्वमेव । तत्र सदादिविद्यानामुपायत्वोपलक्षितब्रह्मविषयकत्वात् । केषाञ्चित्तद्विशिष्टविषयकत्वेऽपि ब्रह्मव्यतिरिक्तोपायत्वाभावाविषयकत्वाच्च तेषां तथात्वमप्रकटम् । प्रपदनस्योपायत्वविशिष्टब्रह्मविषयकत्वात्, ब्रह्मव्यतिरिक्तानुपायत्वविषयकत्वाच्च । तथात्वमप्रकटितमिति प्रदर्शितम्भवति—इति । तस्मात्प्रपत्तेर्मोक्षोपायत्वोक्तौ भगवदेकोपायत्वाध्यवसायात्मकप्रपत्तिस्वरूपोच्छेदप्रसङ्गो दुरुद्धर एव ।

अथ नापि द्वितीयः-फलकरणस्य नियोगविषयत्वायोगात् । फलविशेषद्वारतयैव हि भावार्थो नियोगं विशेषयति, विशिंषन्नेव हि विषयो भवति;

तस्मात्फलविशेषानुपायस्य भावार्थस्य नियोगविशेषकत्वरूपविषयत्वासम्भवात्, अनुपायस्य नियोगविषयत्वमनुपपन्नम् ।

ननु ब्रह्मण उपायत्वं सेतुशब्दनिर्दिष्टसर्वलोकासङ्करकारित्वरूपम्, प्रपत्तेस्स्वात्मापहारप्रायश्चित्तत्वरूपमित्यनयोः परस्परभिन्नत्वात्, तादृश-भगवदुपायत्वज्ञानात्मकत्वं प्रपत्तेरुपायत्वेन न विरुध्यते । तथा चानुगृहीतं श्रीमति रहस्यत्रयसारे सिद्धोपायशोधनाधिकारे वेदान्ताचार्यैः—"प्रपत्तिरपि नोपायभूतेति कैश्चिदतिवादकरणमपि - सिद्धोपायप्राधान्याभिप्रायेण । तस्य प्राधान्यन्तु - प्रसादनैः प्रतिबन्धकरूपनिग्रहशमने । स्वाभाविकानुभवस्य प्रयोजकत्वात्" इत्यादिना सिद्धोपायोपायत्वस्य स्वरूपसत्ताप्रयोजकतात्मकत्वम्, प्रपत्तेः प्रायश्चित्तात्मकत्वञ्च "जितकौस्तुभचौर्यस्य सम्राजस्सर्वपाप्मनाम् । शिष्टं ह्यात्मापहारस्य निष्कृतिस्स्वभरार्पणम्" (रहस्य-सारे-साध्योपायशोधनाधिकारे।।) इति चेन्न;—"सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना । स स तस्याहमेवेति चरमश्लोकसङ्ग्रहः" (रहस्य-सारे-चरमश्लोकाधिकारे।।) इति श्रीमद्वेदान्ताचार्यैरेवोपायान्तराणां यादृशमुपायत्वं तादृशमेव तत्स्थानीयस्य सिद्धोपायस्येति मुक्तकण्ठमनुगृहीततया तयोर्भेदायोगात् ।

प्रपत्तेरात्मापहारप्रायश्चित्तत्वसूक्तिस्तु - यथा पापीनां प्रायश्चित्तं धर्मान्तरयोग्यतापादकतया धर्माधिकारप्रयोजनकम्, तद्वन्नमःपदोक्तपार-तन्त्र्यानुसन्धानलक्षणयथावस्थितसमर्पणस्यापि सिद्धोपायाधिकारभूतशर-णागतिप्रयोजनकतया केवलाधिकारिविशेषणमात्रोपयुक्त इत्येतावन्मात्राभिप्राया । एवं प्रपत्तेरनुपायत्वपराणां "चितःपरमचिल्लाभे प्रपत्तिरपि नोपधिः। विपर्यये तु नैवास्य प्रतिषेधाय पातकम्" (पांचरात्रे।।) इत्यादिप्रमाणमूलकपूर्वाचार्यदिव्यसूक्तीनामतिवादत्वोक्तिरपि—"एष तु वातिवदति, यस्सत्येनातिवदति" (छा-उप-७-१६-१।।) इत्यादौ भूमविद्यावेद्यविषयातिवादवत्, शरणागतिविद्यावेद्यगतप्रधानोपायत्वरूपसाधकतमत्वात्मकसर्वपापविमोचन - करणत्वरूपवास्तवाधिक्यवादत्वाभिप्रायैव । न त्वसदर्थवादत्वाभिप्राया । "नासता गुणेन स्तुतिरुपपद्यते" (द्रमिडभाष्यवाक्यम् ।।) इति तन्निषेधात् ।

तथा च "प्रसादनैः प्रतिबन्धकशमने" इत्याद्याचार्यसूक्तेरयमर्थः—चिरकालमन्यपराया भार्याया भर्तृसकाशे स्वस्वीकरणप्रार्थनावत्, प्रपत्तेरपि महापराधरूपतया, तदपराधक्षापणपुरुषकारपुरस्सरादिभिः प्रति-

बन्धकीभूतो निग्रहो यदि भगवतश्शाम्येत, तदानीमेव शरणागतेश्शरण्य-हृदयानुसारितया सिद्धोपायाधिकारिविशेषणत्वसम्भवात्, तद्विषये सिद्धोपायस्संसारनिवर्तनद्वारा स्वरूपानुरूपभगवदनुभवप्रयोजको भवति। यदि च निरङ्कुशस्वातन्त्र्याद्धरतप्रपत्ताविव शरण्यहृदयानुसारो न स्यात्, तदा सिद्धोपायस्स्वकार्यं न करोत्येवेति प्रपत्तेर्व्यभिचरितत्वात्, फलकरणत्वासम्भवेन निर्हेतुकप्रसादविशिष्टो भगवानेव प्रधानकारणम्—इति । तथा चोच्यते "नासौ पुरुषकारेण न चाप्यन्येन हेतुना । केवलं स्वेच्छयैवाहं प्रेक्षे कञ्चित्कदाचन" (लक्ष्मीतन्त्रे १३-१०॥) इति निरङ्कुशस्वतन्त्रसिद्धोपायप्राधान्यम् । तदेवमाचार्यसूक्तेस्त्वदुक्तार्थपरत्वाभावात्, प्रपत्तिसिद्धोपाययोर्भिन्नभिन्नोपायत्वमप्रामाणिकमेव ।

किञ्च - "तमेव विदित्वातिमृत्युमेति नान्यःपन्था अयनाय विद्यते" (श्वेता-उप-३-८ ॥) इति मृत्युशब्दितसंसारात्ययनं प्रति भगवद्व्यतिरिक्तोपाय-निषेधात्, प्रपत्तेःप्रतिबन्धकनिवृत्त्युपायत्ववचनं वेदान्तविरुद्धम् । न चात्र "एव विदित्वा' इत्युक्तवेदनविशेषातिरिक्तः पन्था निषिध्यते; न्यासविद्यादि-रूपाणामनेवंविधानामपि सत्त्वेन बाधात् । 'तमेव विदित्वा' इति श्वेताश्वतर-वाक्ये तच्छब्दार्थान्यमृत्युतरणोपायस्यैव सुस्पष्टं निषिद्धतया तद्विरोधाच्च । तथा चानुगृहीतमाचार्यचरणैरेव श्रीमन्निक्षेपरक्षायां—"नान्यःपन्थाः" इत्यत्र प्रकृतमपि वेदनमन्यस्य प्रतियोगित्वेन नान्वेति, अपि तु 'तम्' इति प्रकृत-परमपुरुष एव । तस्मात्, 'परमपुरुषादन्यः पन्थाः न विद्यते, स एव तु पन्था' इति वाक्यार्थस्तु प्रपत्तेरत्यन्तान्तरङ्गभूतः । श्वेताश्वतरास्तु - "महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः" (श्वे-३-१२॥) इति तमेव महापुरुषमधीयानास्तस्यैवान्यत्वप्रतियोगित्वमवधारणनिर्देशेन स्पष्टमामनन्ति—"वेदाहम्"इत्यारभ्य "तमेव विदित्वातिमृत्युमेति नान्यःपन्था अयनाय विद्यते" इति । तस्मात् "अमृतस्यैष सेतुः" (मु-२-२-८॥) इति न्यायेन परमपुरुषस्यैवामृतत्वोपायत्वमिह प्रतिपाद्यते । वेदनेतरनिषेधभाष्यन्तु फलिताभिप्रायेणेत्यधिकरणदर्पणे दर्शितमस्माभिः" इति । प्रपञ्चितमस्माभिः प्रागेव भगवतो निरपेक्षकरणत्वमित्यास्तां विस्तरः ।

किञ्च—प्रपत्तेरात्मापहारप्रायश्चित्तत्वमप्यनुपपन्नम् । परद्रव्यापहारिणस्सानुतापस्य समर्पितापहृतद्रव्यस्यैव शास्त्रेषु प्रायश्चित्ताधिकारोक्त्या

समर्पणरूपायाः प्रपत्तेरेव प्रायश्चित्तत्वाभ्युपगमे अधिकारिविशेषणविधेययोरैक्यापत्त्यात्माश्रयप्रसङ्गात् । न च समर्पणव्यक्तिभेदाश्रयणेन तदुपपत्तिः; अनुतापप्राप्ते समर्पणे सिद्धे सति पुनरप्यात्मापहारं विना समर्पणान्तरस्यानुष्ठातुमशक्यत्वात् । न च विधिबलात्समर्पणीयद्रव्यलाभार्थं परब्रह्मणस्सकाशात्प्रतिग्रहमुखेन स्वात्मरूपं समर्पणीयद्रव्यं सम्पाद्य पश्चात्समर्पयितुं शक्य इति वाच्यम्; आत्मापहारमन्तरेण प्रतिगृहीतृस्वरूपस्याप्यसिद्धितया तदयोगात् । आत्मापहारेणैव प्रतिगृहीतृस्वरूपस्यापि सम्पादने बुद्धिपूर्वकमेवात्मापहारस्याभ्यासप्रसङ्गेन तस्याप्रतीकारतया तत्प्रायश्चित्तस्यैवासम्भवप्रसङ्गाच्च ।

ननु कथं तर्हि "शिष्टं ह्यात्मापहारस्य" इत्याचार्यसूक्तिरुपपद्यत इति चेत्, प्रपत्तेर्भगवद्गुणविषयीकाराहाधिकारिविशेषणीभूतप्रातिकूल्याभिसन्धिविराममात्रात्मकत्वज्ञापनार्थतया तदुपपत्तिरिति पश्यतु भवान्। तथात्वे हि "स्वशासनातिवृत्तिव्यवसायनिवृत्तिमात्रेणानाद्यनन्तकल्पोपचितदुर्विषहानन्तापराधानङ्गीकारेण" (श्रीभाष्ये-२-२-३ ॥) इति भाष्यैकार्थ्यादाचार्यसूक्तिस्सुसङ्गता स्यात्। अत एव हि श्रीराममिश्रादिभिः "भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिः" (षडर्थसंक्षेपे ॥) इत्यनुगृहीतमुपपद्यते । तस्मात्प्रायश्चित्ततयापि प्रपत्तेर्नियोगविषयत्वमनुपपन्नमेवेति प्रपत्तेर्विषयत्वं दुरुपपादमेवेत्यन्यत्र विस्तरः ।

(२) अथ किं नाम साधनप्रपत्तिनियोज्यविशेषणम्; आकिञ्चन्यमेवेति चेत्, किमिदं सर्वोपायशून्यत्वरूपम्—उत कतिपयोपायशून्यत्वं वा । नाद्यः - उपायप्रतिपत्तियोग्यस्य सर्वोपायशून्यत्वायोगात् । नापि द्वितीयः- तस्य भक्त्यादिसाधरणत्वेन तदयोगात् । अथ गुरूपायभूतभक्त्यशक्तिर्लघूपायभूतप्रपत्तेर्नियोज्यविशेषणमिति चेन्न;—तस्या अपि कर्मज्ञानाद्यधिकारिसाधारणत्वात् । भक्तितदङ्ग एतदुभयाशक्तिरेव विवक्षितेति चेत्, प्रपत्तेरपि भक्त्यङ्गत्वाद्बाधः । प्रपत्तिभिन्नभक्त्यङ्गभक्त्येतदुभयाशक्तेरेव विवक्षणे त्वङ्गप्रपत्तिशास्त्रस्यानवकाशप्रसङ्गः। अथ महाविश्वास एव स्वतन्त्रप्रपत्तिनियोज्यविशेषणमित्युक्तावङ्गान्तर्गतस्यविश्वासस्याधिकारत्वमनुपपन्नम् । सिद्धत्वसाध्यत्वयोर्विरोधात् । "इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किं पुनस्सहकारिणाम्" (न्यायसिद्धाञ्जने ; २ ॥) "साधनं भगवत्प्राप्तौ स एवेति दृढा स्थितिः। साध्यभक्तिस्स्मृता सैव प्रपत्ति-

रिति गीयते" (प्रपन्नपारिजाते-२-२७॥) "नारायणं सलक्ष्मीकं प्राप्तुं तच्चरणद्वयम् । उपाय इति विश्वासो द्वयार्थश्शरणागतिः" इत्यादिषु प्रपत्तेरपि विश्वासात्मकत्वोक्त्या विधेयाधिकारिविशेषणयोरैक्यप्रसङ्गः ।

किञ्च-भगवदेकोपायत्वाध्यवसायात्मकमहाविश्वासस्य भगवद्व्यतिरिक्तोपायान्तरपरिग्रहप्रतिबन्धकतया तस्योपायप्रपत्त्यधिकारत्वोक्तिर्वैराग्यातिशयस्य काम्यकर्माधिकारत्वोक्तिवत्, बाधितार्थैव । अपि च महाविश्वासस्यापि भक्त्यादिसाधारणतया तत्त्वथात्वानुपपत्तिश्च । न च बृहस्पतिप्रभृतिभिरप्यविचाल्यस्य महाविश्वासविशेषस्यैव प्रपत्त्यधिकारत्वान्न दोष इति वाच्यम्;—तथा सत्यसर्वज्ञस्य तादृशविश्वासासम्भवेन प्रपत्तेस्सर्वाधिकारत्वं न स्यात् । स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्यानां महर्षीणामपि तादृशविश्वासस्य दुर्लभतया स्त्रीशूद्रादिषु तत्सम्भावनाया अप्यसम्भवात् । प्राचीनसुकृतविशेषादेव स्त्रीशूद्रादीनामेवंविधविश्वासस्सम्भवतीत्युक्तावपि व्यासादीनां प्रपत्त्यधिकारप्रसङ्गो दुर्वारः । तेषां त्वन्मते पूर्णविश्वासत्वात् । न च विश्वासविशिष्टस्याकिञ्चन्यस्यैवाधिकारत्वाद्व्यासादीनां सकिञ्चनत्वाच्च नानुपपत्तिरिति वाच्यम्;—तथा सति नाथादीनां प्रपत्त्यनधिकारप्रसङ्गात् । तेषामपि शक्तत्रैवर्णिकत्वाविशेषात् । न च विलम्बासहत्वाकिञ्चन्यैतदन्यतरविशिष्टविश्वासस्यैव प्रपत्त्यधिकारत्वान्नाथादीनामाकिञ्चन्याभावेऽपि विलम्बासहत्वसत्त्वात्, नानुपपत्तिरिति वाच्यम्;—तथा सति त्याज्योपादेयसाक्षात्कारवतां व्यासादीनामविलम्बासहत्वातिरेकसम्भवेन तेषामपि प्रपत्त्यधिकारप्रसङ्गात् । तेषामधिकारारम्भककर्मबलेन विलम्बासहत्वं न जायत इति चेत्, शान्तं पापम् । किं निखिलं जगत्करतलामलकवदध्यक्षयन्तो महर्षयोऽपि ललाटलिपिवशात्, बुद्धिपूर्वकमेव हेयविषयप्रवणा इति सम्प्रति ब्रूषे; तथैवेति चेत्, तथापि देहान्तरविलम्बासहत्वं प्रति नाधिकारारम्भककर्मणः प्रतिबन्धकत्वम् । यदि च वर्तमानदेहसम्बन्धासहत्वमेव प्रपत्त्यधिकार इतीष्येत, तदा दृप्तानां प्रपत्त्यधिकाराभावप्रसङ्गः । तस्मादत्र नियोज्यविशेषणमपि दुर्वचमेव ।

(३) अथ काऽत्रेतिकर्तव्यता?—आनुकूल्यसङ्कल्पादय एवेति चेन्न;-"प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते" (सनत्कुमारसंहितायाम् ।।) इत्युक्तनैरपेक्ष्यनिरोधात् । "सर्वधर्मान्परित्यज्य" इति प्रपत्त्यङ्गतया सर्वधर्मोपादान-

निषेधविरोधाच्च । न च 'सर्वधर्मान्परित्यज्य' इति निषेधस्य प्रपत्तिसापेक्षत्वेन दुर्बलत्वाच्चोदनालिङ्गकातिदेशप्राप्तान भक्त्यङ्गानां "न तौ पशौ" (पूर्वमी- १०-१-१६॥ शाबरभा० ॥) इति प्रतिषिद्धयोराज्यभागयोरिव पाक्षिकानुष्ठानसत्त्वात्, नैरपेक्ष्यादिवचनानां पाक्षिकाननुष्ठानमात्रपरत्वान्न विरोध इति वाच्यम् ;—तथा सति गुरुलघुविकल्पानुपपत्तेः । षोडशीग्रहणाग्रहणयोरिवात्रापि फलभेदाद्विकल्प इति चेत् ;—कथमत्र फलभेदः, विलम्बाविलम्बाभ्यामेवेति चेत्, तथा सत्यविलम्बितफलायाःप्रपत्तेः कर्मज्ञानादिसर्वभक्त्यङ्गसापेक्षतया सर्वाधिकारत्वं न स्यात् ।

किञ्च - सिंहव्याघ्रविषधरादिष्वानुकूल्यसङ्कल्पस्यात्यन्तमशक्यतया तस्येतिकर्तव्यतात्वानुपपत्तेश्च । "चराचराणि सर्वाणि भूतानि भगवद्वपुः" (अहिसं-५२-२२ ॥) इति सर्वेषां भगवद्वपुष्ट्वानुसन्धानेनानुकूल्यं सम्भवतीति नाशक्यतेति चेत्, न ; अग्निज्वालादिषु सहस्रवारं भगवद्वपुष्ट्वानुसन्धानेऽपि दाहकतया प्रातिकूल्यस्यैव दर्शनात् । प्रह्लादादिविषये तेषामानुकूल्यं श्रूयत इति चेत्, तर्हि तादृशानुकूल्यस्य भगवत्साक्षात्कारमन्तरानुपपन्नतयानुकूल्यसङ्कल्पविधेः भगवत्साक्षात्कारविधौ पर्यवसानप्रसङ्गात् । न चाहार्यात्मकानुकूल्यसङ्कल्पस्यैवात्र विवक्षितत्वान्न दोष इति वाच्यम् ;—"आनुकूल्येतराभ्यान्तु विनिवृत्तिरपायतः" (लक्ष्मीतन्त्रे-१७-७६ ॥) इति विनियोगवचनविरोधात् । आहार्यात्मकानुकूल्यसङ्कल्पादेः परहिंसाद्यपायनिवर्तकत्वायोगात् । एवं प्रातिकूल्यवर्जनमप्यशक्यमेव । रज्जुसर्पभ्रान्तिदशायामपि प्रातिकूल्यानुसन्धाननिबन्धनभयादीनां सार्वजनीनत्वेन तादृशप्रातिकूल्यस्य साधनान्तरानुष्ठानमन्तरा साक्षात्त्यक्तुमशक्यत्वात् । तत्राप्याहार्यसङ्कल्पमात्रमङ्गमित्युक्तौ श्रुतहानमश्रुतकल्पना च स्यात् । "प्रातिकूल्यस्य, वर्जनम्" इति प्रातिकूल्यवर्जनस्यैवाङ्गत्वं श्रुतम् ; तत्परित्यक्तम् । सङ्कल्पस्याङ्गत्वमश्रुतम्, तच्च परिकल्पितमिति । एवं विश्वासस्याप्यङ्गत्वमनुपपन्नम् । प्राचीनसुकृतफलस्य तस्य विधेयत्वायोगात् । तथा चानुगृहीतं निक्षेपरक्षायाम्—"निर्णीतशास्त्रप्रामाण्यस्य प्रत्यक्षतरसमस्ततदर्थस्यापि क्वचिदर्थे वैचित्र्यवशादघटितपदवदवभासमाने शास्त्रार्थान्यथाभावसम्भावनाया वासनाप्रवाहे मुहुः परिप्लवमानायास्सम्भवात्, केषाञ्चिदेवातिशयितपुण्यानां तदुच्छेदः, न तु सर्वेषाम्" इति ।

ननु च यद्यपि विश्वासमहत्त्वं स्वरूपत उपादातुं न शक्यते, तथापि यथावस्थितप्रपत्तिशास्त्रार्थनिश्चयसंस्कारद्रढिमसम्पादनद्वारा तत्कार्यविश्वास-हेतुत्वस्य विधिविषयता युज्यत इति चेत्; प्रपत्तेः क्षणमात्रसाध्यत्वभङ्ग-प्रसङ्गः। प्रपत्तिशास्त्रार्थनिश्चयसंस्कारद्रढिम्नश्चिरकालमननसाध्यत्वात्। अस्यैव महाविश्वासस्याधिकारत्वाभ्युपगमेन पुनस्तस्याङ्गतया विधेयत्वानुपपत्तेश्च। तथा चानुगृहीतं निक्षेपरक्षायाम् - "येषां यावज्जीवं बृहस्पतिप्रभृतिभिरपि प्रतिवादिभिस्संक्षोभ्यमाणानां प्रपत्तिशास्त्रार्थे शङ्काशङ्कुर्नाङ्कुरति, तेषां तदधि-कारः" इति। न च क्रियाविशेषान्तर्गतसमन्त्रकदेवतास्मरणादिवर्तं, विश्वास-स्मरणनियमे विधिव्यापार इति वाच्यम्;—ज्ञानावस्थाविशेषस्य, विश्वा-सस्य सततस्वतो भासमानत्वेन तज्ज्ञानस्य पाक्षिकाप्राप्तेरभावेन नियमविध्यं-योगात्। तदनुसन्धाने मन्त्रकरणकत्वनियमो विधीयत इति चेत्, तर्हि स न विश्वासरूपाङ्गविधिः, किन्तु मन्त्रविशेषनियमविधिरेव। स च "अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत्" इति वाक्यान्तरादेव प्राप्त इति विश्वास-विधिरनर्थक एव। किञ्च-विधिवाक्याद्विश्वासस्यानुष्ठेयतासिद्धौ तस्य मन्त्रेणानु-स्मरणं सिध्येत्। तदसिद्धावनुस्मरणमप्यसिद्धमेवेति विश्वासविधेर्मन्त्रार्थानु-स्मरणविधौ पर्यवसानमनुपपन्नमेव। किञ्च-विश्वासविधेस्तदनुस्मरणविधान-परत्वोक्तौ श्रुतहानमश्रुतकल्पनञ्च स्यात्। "रक्षिष्यतीति निश्चित्य निक्षिप्त-स्स्वस्वगोचरः" (लक्ष्मीत-१७-८१॥) "अनन्यसाध्ये स्वाभीष्टे महाविश्वास-पूर्वकम्" (भरतमुनिका ॥) "रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा" (लक्ष्मी-१७-६०॥) इत्यादौ विश्वासस्यैवाङ्गत्वं, श्रूयते, तत्परित्यक्तम्, विश्वा-सानुस्मरणस्य कुत्राप्यङ्गत्वं न श्रुतम्, तच्च परिकल्पितमिति।

एवं गोप्तृत्ववरणमपि रागप्राप्तत्वान्न विधेयम्। तस्य सर्वोपायसाधार-णत्वेन प्रपत्त्यसाधारणेतिकर्तव्यतात्वानुपपत्तिश्च। भगवतस्सर्वाधिकारिगोप्तृ-त्वस्य स्वतस्सिद्धत्वेन तस्य प्रार्थनीयत्वानुपपत्तिश्च। गोप्तृत्ववरणस्योपायनै-रपेक्ष्यप्रार्थनायां पर्यसानमिति चेत्, तर्हि तादृशप्रार्थनाया उपायान्तरप्रवृत्ति-विरुद्धत्वेनोपायप्रपत्त्यङ्गत्वासम्भवः। गुरूपायत्वासम्भवः। गुरूपायनैरपेक्ष्य-प्रार्थनायामेव पर्यवसानमित्युक्तावनुकल्पभूतलघूपायाधिकारिणि गुरूपायाशक्ते गुरूपायनैरपेक्ष्यस्यापि भगवतस्स्वतस्सिद्धत्वेन तत्प्रार्थनाया अप्ययोगात्। किञ्च गोप्तृत्ववरणविधेर्नैरपेक्ष्यप्रार्थनाविधानपरत्वोक्तावपि श्रुतहानमश्रुतकल्प नञ्च स्पष्टमेव। "गोपायिता भवेत्येवं गोप्तृत्ववरणं स्मृतम्" (लक्ष्मी-१७-७३॥)

इति श्रूयते, तत्परित्यक्तम्; 'त्वं गुरूपायनिरपेक्षो भव' इति वरणं कुत्रापि न श्रूयते, तच्च परिकल्पनीयमिति।

एवं कार्पण्यस्याप्यङ्गतया विधेयत्वमनुपपन्नम्। "त्यागो गर्वस्य कार्पण्यं श्रुतशीलादिजन्मनः" (लक्ष्मी-१७-६७॥) इत्युक्तस्वरूपस्य तस्य शास्त्रीयसर्वोपायदरिद्रतया गर्वप्रसक्तिरहितमकिञ्चनं प्रति विधातुमशक्यत्वात्। न-चोपासनान्तर्गतधर्मानुष्ठानजनितगर्वत्याग एवात्र विधीयत इति नानुपपत्तिरिति वाच्यम्:- "कार्पण्येनाप्युपायानां विनिवृत्तिरिहोदिता" (ल-न्त्रे-१७-७७॥)इति विनियोगप्रकारप्रतिपादकवचनविरोधात्, "उपाया नैव सिद्ध्यन्ति ह्यपाया बहुलास्तथा। इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते" (लक्ष्मी-१७-६८॥) इति कार्पण्यस्वरूपप्रदर्शकवचनविरोधाच्च। न च "अशक्तस्यातिकृच्छ्रेषु दुराशादार्ढ्यशालिनः" (रहस्यत्रयसारे- ॥) इत्युक्तरीत्या स्वाधिकाराज्ञानेन दुश्शकसाधनान्तरप्रवृत्तानां प्रपत्त्यधिकारिणामुपायान्तरश्रुतशीलादिप्रयुक्तगर्वप्रसङ्गसत्त्वात्। तद्विषये कार्पण्यविधिवचनं तद्विनियोगप्रकारवचनञ्चोपपद्यत इति वाच्यम्;—तथा सति तादृशरहितविषये प्रपत्तेः पञ्चाङ्गत्वभङ्गप्रसङ्गात्। तेषां त्यक्तव्यगर्वाभावेन तत्त्यागलक्षणकार्पण्याननुष्ठानायोगात्। न चोपायान्तराशक्तत्वादिलक्षणस्वाधिकारानुसन्धानमेव कार्पण्यशब्दार्थ इति नानुपपत्तिरिति वाच्यम्; तथा सति श्रुतहानाश्रुतकल्पनप्रसङ्गात्। उपायान्तरानुष्ठानप्रयुक्तगर्वत्यागो विधीयते, तत्परित्यक्तम्, सर्वोपायसाधारणस्य तत्तदधिकारानुसन्धानस्य कुत्राप्यङ्गत्वं न श्रुतम्, तस्य च कार्पण्यरूपप्रपत्त्यसाधारणाङ्गतया विधानं कल्पनीयमिति। किञ्च - अधिकारिविशेषंप्रति विहितस्योपायस्याधिकारानुसन्धानमन्तरेणानुष्ठातुमशक्यतया प्रधानविधिबलादेवाधिकारानुसन्धानस्यापि प्राप्तत्वात्, पुनस्तस्य विधानमप्यनुपपन्नम्।

तस्मादानुकूल्यादीनां विधेयत्वपक्षे सर्वत्र श्रुतार्थपरित्यागपूर्वकं विश्वामित्रसृष्टिरेव शरणीकरणीयेति शास्त्रोक्तानामानुकूल्यादीनामितिकर्तव्यतात्वमनुपपन्नमेव। नन्वानुकूल्यसङ्कल्पादीनां सम्भावितस्वभावत्वं वदतामपीयं विश्वामित्रसृष्टिरावश्यक्येवेति चेन्न;—यथाश्रुतानामानुकूल्यसङ्कल्पादीनामेव सिद्धोपायफलतया प्रपन्नेषु सम्भावितत्वात्।

(४) अथ कोऽत्र कर्ता। जीव एवेति चेत्, स किमचिन्मिश्रवेषेणकर्ता, निष्कृष्टवेषेण वा। नाद्यः - "आत्मा यजमानः, शरीरमिध्मम्" (तै-उप-६-

५२॥) इति श्रुतिविरोधात्, "योऽहमस्मि, स सन्यजे" (तै-ब्रा-३-७-५-४) "वपुरादिषु योऽपि कोऽपि वा" (स्तोत्ररत्ने-५२॥) इत्यादिविरोधाच्च। तत्र सर्वत्र यथावस्थितात्मस्वरूपस्यैव कर्तृत्वावगमात्। नापि द्वितीयः - निष्कृष्टवेषस्य नियोगविषयकर्तृत्वासम्भवात्। नियोगकर्तृत्वं हि - "स्वतन्त्रः कर्ता" (पाणि-सू-१-४-५४॥) इत्युक्तस्वातन्त्र्यसापेक्षम्। तच्च स्वातन्त्र्यमौपाधिकत्वाच्चेतनस्याचिद्विशिष्टवेषनिष्ठम्, न तु स्वरूपनिष्ठम्। भगवच्छरीरभूतस्य चेतनस्य पारतन्त्र्यैकस्वरूपत्वात्। न च ज्ञानक्रियाकर्तृत्वज्ञातृत्वस्य प्रत्यगात्मनस्स्वाभाविकत्वात्, प्रपत्तेर्ज्ञानरूपत्वाच्च न दोष इति वाच्यम्;—स्वाभाविकासङ्कुचितज्ञानाश्रयतारूपज्ञातृत्वस्य स्वाभाविकत्वेऽपि करणसापेक्षविधेयज्ञानक्रियाविशेषकर्तृत्वस्य स्वाभाविकत्वायोगात्। तथा च जिज्ञासाधिकरणभाष्यम्—"ज्ञानप्रसरे तु कर्तृत्वमस्त्येव। तच्च न स्वाभाविकम्। अपि तु कर्मकृतमित्यविक्रियास्वरूपमेवात्मा" इति। तत्त्वसारे च "आदावीश्वरदत्तयैव पुरुषस्स्वातन्त्र्यशक्त्या स्वयं तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन्वर्तते" (तत्त्व-रे ५८॥) इत्यनुगृहीतम्।

किञ्च - यदि चेतनस्य स्वातन्त्र्यं स्वरूपान्तर्गतम्, तदाहङ्कारममकारयोस्स्वरूपान्तर्गतत्वात्, तत्कार्यविषयान्तरप्रावण्यादीनामुपादेयत्वमेव स्यात्। तथा च "स स्वराड्भवति" (छा-उप-७-२५-२॥) (विष्णुतत्त्वे-१-८-९॥) "स्वातन्त्र्यमतुलं लब्ध्वा" "स यदि स्त्रीलोककामो भवति" (छा-८-२-८॥) इत्यादिष्वापातप्रतीतार्थ एव साधीयानित्यविद्यानिबर्हणार्थशास्त्राणां दत्तजलाञ्जलिता स्यात्। तस्माच्चेतनानां प्रथमप्रवृत्तौ स्वातन्त्र्यलक्षणं कर्तृत्वं केवललीलार्थमेव, भगवता विशिष्टवेषे स्वेच्छयाकल्पितमिति। निष्कृष्टवेषे तदभावान्निष्कृष्टस्वरूपस्योपायप्रपत्तिकर्तृत्वमनुपपन्नमेव।

ननु मोक्षदशायां कैङ्कर्यकर्तृत्वस्येवोपायप्रपत्तिकर्तृत्वस्यापि स्वाभाविकत्वमुपपद्यत इति चेत्, न; कैङ्कर्यकर्तृत्वस्य "क्रियतामिति मां वद" (रामा-आर-१५-७॥) इत्युक्तरीत्या प्रयोज्यकर्तृतामात्ररूपत्वेन स्वातन्त्र्यप्रयुक्तत्वाभावात्। अत एव चेतनस्य फलित्वावहत्वाभावाच्च। पारतन्त्र्यानुरूपतया स्वाभाविकत्वसम्भवेऽपीश्वरप्रेरणां विनैव तदनुमतिमात्रेण चेतनानां स्वफलेच्छया तत्तत्साधनप्रवृत्तेस्स्वातन्त्र्यप्रयुक्तत्वात्, फलित्वावहत्वाच्च। पारतन्त्र्यविरुद्धत्वेन तादृशोपायप्रपत्तिकर्तृतायास्स्वाभाविकत्वायोगात्। एतेन

चेतनस्य कर्तृतायास्स्वाभाविकत्वे प्रमाणतया "कर्ता शास्त्रार्थवत्त्वात्" (ब्र-सू-२-३-३२ ॥) इत्यधिकरणोदाहरणं प्रत्युक्तम् । तत्र कर्तृत्वसामान्यस्य सद्भावसमर्थनेऽपि प्राप्ताप्राप्तविवेकेन स्वातन्त्र्यप्रयुक्तस्वरूपविरुद्धकर्तृतायाः स्वाभाविकत्वासमर्थनात् । सांसारिकप्रवृत्तिकर्तृताया इव साधनप्रवृत्तिकर्तृताया अपि स्वातन्त्र्यसापेक्षत्वात्, फलित्वावहत्वाच्च स्वरूपविरुद्धत्वाविशेषेण प्रकृतिसम्बन्धोपाधिकत्वसिद्धेर्निष्प्रत्यूहत्वात् । तथा च भाष्यम्—"यच्च प्रकृतेः क्रियमाणानि" (गीता-३-२७ ॥) इत्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति, तत्सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता, न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृतेत्युच्यते" इति । अत्र सांसारिक प्रवृत्तिकर्तृतायास्स्वरूपाप्राप्ततयैव, गुणसंसर्गकृतत्वनिर्णयादुपायप्रवृत्तिकर्तृताया-मप्ययं निश्चयस्समान एवेति निष्कृष्टस्वरूपस्यात्मन उपायकर्तृत्वमनुपपन्नमेव । किञ्च-"अधिकारबोधयुक्तेषु विद्यते भावभावना । अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु" (वि-पु-६-७-५१ ॥) इति 'देवोऽहम्, मनुष्योऽहम्' इत्यादि विशेषज्ञानविशिष्टस्यैव भावनात्रयान्वयात्, तदन्तर्गतन्यासभावनाया अपि विशिष्टवेषान्वय एवेति निष्कृष्टवेषनिष्ठता तस्य दुरुपपादैव ।

ननु भवतश्चायं समानो दोषः, स्वरूपज्ञानात्मकयथावस्थितन्यासद्वयश्रवणवरणकैङ्कर्यादीनां मनःप्रभृतिकर्मोपार्जितकरणादिसापेक्षतया दुरपह्नवत्वादिति चेत्, भ्रान्तोऽसि ! अस्मन्मते भगवत्पर्यन्तप्रत्यग्वस्तुयाथात्म्यज्ञानलक्षणयथावस्थितन्यासस्य यथावस्थिताहंप्रत्ययात्मकत्वेन स्वयंप्रकाशतया करणादिनिरपेक्षत्वात् । नचैवं स्वरूपपरशास्त्रवैयर्थ्यम्, प्रत्यक्त्वाद्यंशे शास्त्रार्थसार्थक्यवदत्राप्युपपत्तेः । प्रत्यक्त्वानुकूलत्वादीनां स्वयम्प्रकाशता ह्युभयवादिसम्प्रतिपन्ना । तथापि तद्विषयशास्त्रस्य यथा वा विपरीतज्ञानोपमर्दकतामात्रेण सार्थक्यम्; तथैवात्मस्वरूपस्य विशेष्यपर्यन्तताया अपि स्वतःप्रकाशत्वेऽपि तद्विपरीताकारस्वनिष्ठत्वभ्रान्त्युपमर्दकतया तत्परशास्त्राणां सार्थक्यानपायात् । एवं स्वयम्प्रयोजनद्वयश्रवणादीनाम्मनःप्रभृतिसापेक्षत्वेऽपि स्वरूपानुरूपत्वान्मुक्तिदशासाधारण्याच्च स्वरूपप्रयुक्ततया गुणसंसर्गकृतत्वाभावनिश्चयात्, प्रकृतिसम्बन्धोपाधिकत्वाभावस्सिद्ध्यति । तथा च शरणागतकर्तृकद्वयानुसन्धानादिषु मनःप्रभृतीनां करणत्वं प्रासङ्गिकमेवेति प्राकृतत्वादीनां न तत्रोपयोगः । किन्तु प्राकृतत्वोपलक्षितकरणस्वरूपस्यैव तत्र करणतयोपयोगः । तस्माच्छरणवरणादीनां न प्राकृतत्वविशिष्टकरण-

कलेवरविशिष्टस्वरूपनिष्ठत्वम्। उपायप्रपत्तेस्तु - स्वातन्त्र्यसापेक्षत्वात्, अधिकारबोधावच्छेदकदेवादिविशेषभ्रमसापेक्षत्वाच्च प्राकृततत्त्वविशिष्टकरणादिविशिष्टस्वरूपनिष्ठत्वमावश्यकमेवेति तत्रैवायं दोषोऽसाधारणः। शास्त्रवश्यानामेव हि - उपायान्तराधिकारः। शास्त्रवश्यता च विशिष्टवेषस्यैव। द्वयश्रवणादिकन्तु नैवम्। नित्यसूरिष्वपि "श्रुत्वा न तृप्येयुः दिविषदः" (तिरुवाय्मोलि १०-६-११॥) इति तत्सद्भावात्।

ननु उपायान्तरप्रवृत्तिरपि अत्यन्तपारतन्त्र्यानुगुणैव, शास्त्रस्य भगवत्प्रेरणात्मकत्वात्; यथोक्तं "श्रुतिस्स्मृतिर्ममैवाज्ञा" (विष्णुधर्मे-७६-३१॥) इतीति चेन्नः—कामनाधिकारशास्त्राणामनुज्ञामात्ररूपत्वेनाज्ञारूपत्वायोगात्। आज्ञारूपत्वे भक्त्यादीनां नित्यकर्मान्तर्भावप्रसङ्गात्। "श्रुतिस्स्मृतिर्ममैवाज्ञा" इत्यस्यापि नित्यनैमित्तिकमात्रविषयत्वात्। उपायान्तराणामपीश्वरप्रेरितत्वे भगवत एव स्वर्गादिभोक्तृत्वप्रसङ्गात्। प्रेरकस्यैव फलभागित्वनियमात्। यदि चेतनगतस्वर्गानुभवस्यैव सार्वभौमशुकविहारदर्शनन्यायेन केवलभगवदर्थत्वमिष्येत, तदा स्वर्गाद्यनुभवस्यैव भगवतो भोगरसलीलारसात्मकद्विविधातिशयाधायकतया निरतिशयकैङ्कर्यात्मकत्वेन तत्त्यागे कृत्याकरणरूपापचारप्रसङ्गात्। "जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा" (छा-उप-८-१२-३॥) इति नित्यस्वर्गप्राप्त्या निरतिशयविषयप्रावण्येन भगवदतिशयाधानार्थमेवानित्यस्वर्गादिकं परित्यज्यत इति न दोष इति चेत्, धिक्त्वां शठम्; यदेवं नित्यविषयानुभवमनोरथमनोऽपि वाङ्मात्रेण वैराग्यं भावय। वेदान्तानामप्यपार्थान्वर्णयसि।

ननु श्रीमति रहस्यत्रयसारे साङ्गप्रपदनाधिकारे - सार्वभौमशुककर्तृकयथेच्छाविहरणदृष्टान्तेन, मुक्तानां स्वच्छन्दविहरणानन्दस्यैव भगवदतिशयाधायकत्वसूक्तिः कथमुपपद्यत इति चेत्;—नमःपदार्थज्ञानान्मुक्तानां स्वार्थानुभवानन्दासम्भवादेव प्रपत्तिप्ररोचनार्थातिवादत्वेनैवोपपत्तेः। अनुद्दिष्टानुषङ्गिकमुक्तानन्दमात्रविषयतया वा तदुपपत्तेश्च। स्वप्रवृत्त्युद्देश्यभोगस्यैव नमःपदेन निषेधात्। तस्माज्जीवानां स्वभोगोद्देश्यकप्रवृत्तेर्निष्कृष्टस्वरूपविरुद्धत्वात्, तादृशव्यापारान्तर्गतोपायप्रपत्तिकर्तृत्वं निष्कृष्टजीवस्वरूपस्य दुरुपपादमेव।

(५) अथ - अस्य किं फलम् । सर्वपापविनिर्मोचनमेवेति चेत्, नः तस्य "अहम् - मोक्षयिष्यामि" इति सिद्धोपायकार्यत्वेन श्रूयमाणतया तस्य प्रपत्तिफलत्वायोगात् । न च "अहम् - मोक्षयिष्यामि" इतीश्वरस्य फलप्रदानकर्तृत्वोक्तावपि तत्र तस्य करणत्वानुक्त्या प्रपत्तेः करणत्वमबाधितमिति सर्वपापविमोचनस्य प्रपत्तिफलत्वमुपपद्यत इति वाच्यम् ;—शरणपदेन तत्र भगवत एव करणत्वोक्त्या तदयोगात् । समानप्रकरणे लक्ष्मीतन्त्रे "प्रापयाम्यात्मनात्मानं निर्धूताखिलकल्मषम्" (ल-न्त्रे-१६-४४।।) इति मोक्षप्रदानकर्तृत्वकरणत्वयोर्भगवत एव प्रतिपादनाच्च । किञ्च 'सर्वपापेभ्यो मुक्तो भविष्यसि' इत्यनुक्त्वा "मोक्षयिष्यमि" इत्युक्त्या भगवत्कर्तृकस्वीकरणकरक्षासङ्कल्पस्यैव शरणवरणफलत्वप्रतीत्या तदपहाय तादृशसङ्कल्पविषयमोचनमात्रस्य फलत्वोक्तेरनुपपन्नत्वाच्च । अपि च लक्ष्मीतन्त्रे "एवं मां शरणं प्राप्य वीतशोकभयक्लमः । निरारम्भो निराशश्च निर्ममो निरहङ्कृतिः । मामेव शरणं प्राप्य तरेत्संसारसागरम्" (ल-न्त्रे-१७-६१ ।।) इत्यादि । 'एवं मां शरणं प्राप्य' इति शरणागतिमुक्त्वा, 'वीतशोकभयक्लमः' इत्यारभ्य 'मामेव शरणं प्राप्य' इत्यन्तेन शोकनिवृत्त्यादिसिद्धोपायसिद्धिपर्यन्तं शरणागतिफलमभिधाय, तदनन्तरं सिद्धोपायफलतया संसारसागरतरणोक्त्या, अत्रापि तदनुसारेण 'मोक्षयिष्यामि' इति सङ्कल्पात्मकसिद्धोपायकर्तृकवरणविशेषात्मकसम्बन्धविशेषेण सिद्धोपायलाभस्यैव फलतयोक्तेर्वैरूप्यत्वेन तद्विरोधाच्च ।

न च सिद्धोपायलाभस्यैव प्रपत्तिफलत्वमस्तु, को दोष इति वाच्यम्;- तथासति प्रपत्तेरधिकारिविशेषणतात्मकत्वसिद्ध्यास्मन्मतप्रवेशापत्तेः । न च सिद्धोपायसिद्धिं प्रत्यदृष्टविधया शरणागतेस्साधनत्वाभ्युपगमान्न दोष इति वाच्यम् ;-दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । नित्यसिद्धस्य सिद्धोपायस्य प्रतिबन्धकनिवृत्तिमात्रसापेक्षत्वेन भगवत्प्रवृत्तिविरोधिस्वप्रवृत्ति - निवृत्तिरूपतया श्रीराममिश्राद्युक्तायाः प्रपत्तेः प्रतिबन्धकाभावात्मकदृष्टविधयैवोपकारकत्वोपपत्तेः । अपि च "निश्चित्य त्वदधीनताम्" (अष्टश्लो ८ ।।) इत्याद्यनुगृहीतरीत्या भगवदत्यन्तपारतन्त्र्यज्ञानेन स्वरूपविरुद्धत्वज्ञानप्राप्तं साधनान्तरत्यागम् स्वरूपतया रागप्राप्तं सिद्धोपायवरणञ्च भगवदनभिमतत्वशङ्कया कर्तुमसामर्थ्यात्, स्वरूपानुरूपसाधनालाभाच्च शोचतोऽधिकारिणश्शोकनिवृत्तये भगवता साधनान्तरत्यागशरणवरणयोस्स्वाभिमतत्वज्ञापन -

(२) अथास्य श्लोकस्य वाक्यार्थमाह—अत्र पूर्वार्धेनेति।

मू॥ इदिल् पूर्वार्धत्ताले अधिकारिकृत्यत्तै अरुलिच्चेयूहिरान्। उत्तरार्धत्ताले - उपायकृत्यत्तै अरुलिच्चेयूहिरान्॥

छा॥ अत्रपूर्वार्धेन-अधिकारिकृत्यमाह। उत्तरार्धेन-उपायकृत्यमाह॥ २॥

व्या॥ अर्धद्वयात्मकेऽस्मिन् श्लोके, पूर्वार्धेन - तदुपायाधिकारिणः कर्तव्यांशमाह। उत्तरार्धेन - उपायभूतस्य तस्य कर्तव्यमंशमाहेत्यर्थः॥ २॥

(३) अधिकारिकृत्यं किमित्यत आह—अधिकारिण इति।

मू॥ अधिकारिक्कु कृत्यमावदु-उपायपरिग्रहम्॥ ३॥

छा॥ अधिकारिणः कृत्यं नाम-उपायपरिग्रहः॥ ३॥

व्या॥ अधिकारिणोऽस्यात्र कर्तव्यमेतदुपायस्वीकार इत्यर्थः॥ ३॥

---

पूर्वकं चेतनसंरक्षणे स्वस्यैव प्राप्तताज्ञापनस्यैवावश्यकतया "माशुचः" इति शोकनिवृत्तिपरस्य चरमश्लोकस्य सिद्धोपायोपदेशमात्रपरताया एव स्वरसतः प्रतीत्या फलान्तरसाधनान्तरविधायकत्वोक्तेरनुपपन्नत्वाच्च। तस्मादयं श्लोकश्चरमोपायप्रतिपादकपर इति सर्वं समञ्जसम्॥ १॥

(कर्तव्यांशमाह)-अधिकारसिध्द्यर्थं कर्तव्यांशमाहेत्यर्थः॥ २॥

(४) तर्हि तावन्मात्रं विधीयताम्, उपायान्तरपरित्यागः किमित्युच्यत इत्यत आह—तं साङ्गमिति।

मू॥ अत्ते साङ्गमाह विधिक्किरान् ॥ ४ ॥

छा ॥ तं साङ्गं विदधाति ॥ ४ ॥

व्या ॥ तम् - उपायस्वीकारम्, उपायान्तरपरित्यागरूपाङ्गेन सह विदधातीत्यर्थः।

"प्रक्षाल्य पादावाचमेत्, स्नात्वा विधिवदर्चयेत्। स्थित्वार्घ्यं भानवे दद्यात्, ध्यात्वा देवं जपेन्मनुम्" इत्याचमनाद्यङ्गत्वेनोक्तपादप्रक्षालनादिकं विना तेषामनुष्ठानासम्भववत्, अत्रापि ल्यबन्तपदेनाङ्गत्वेनोक्तोपायान्तरत्यागं विना स्वीकारोऽयुक्त इति सिद्धः खलुः।

तस्मात् 'सर्वधर्मान्परित्यज्य स्थितश्चेत्' इति दुष्करत्वबुध्या स्वतःप्राप्तमुपायान्तरत्यागमनूद्य, सिद्धोपायस्वीकारो विधीयते' इत्यनुवादपक्षोऽयुक्त इति भावः॥४॥

---

(उपायान्तपरित्यागरूपाङ्गेन सह)-इत्यनेन-विशिष्टविधिरिति सूच्यते।

विशिष्टविधिपरत्वोपपादनाय स्मृतिसिद्धप्रयोगं दर्शयति-प्रक्षाल्येति। ल्यपः-विधिपरत्वं सिद्धम्।

वेदान्ताचार्योक्तानुवादपक्षस्यानेकदोषयुक्तत्वादनादरणीयत्वमाह—तस्मादिति। (तस्मात्) इति पादप्रक्षालनाचमनादीनामिव त्यागस्वीकारयोरपि वैधत्वादित्यर्थः। अनुवादपक्षे उपायान्तरत्यागस्य स्वीकाराङ्ग-

त्वाभावात्, आकिञ्चन्याधिकारभङ्गप्रसङ्गो दुर्वारः। तथा हि "सर्वधर्मान्परित्यज्य" इत्यत्रोक्तसर्वधर्मपरित्यागस्यानुवादत्वपक्षे अस्मिन् श्लोके 'स्थितः, चेत्' इति पदद्वयाभावात्, अध्याहारदोषः, पदद्वयाध्याहारदोषः, उपायान्तरत्यागस्य स्वीकाराङ्गतया विहितत्वाभावेन स्वतःप्राप्तत्वात्, अवघातस्वेदवत्स्वीकाराङ्गत्वाभावात्, त्यागस्वीकारयोरङ्गाङ्गिभावभङ्गप्रसङ्गात्, 'त्यागपूर्वकस्वीकारःकर्तव्यः' इति नियमभङ्गात्, प्रपत्तेरकिञ्चनाधिकारत्वनियमभङ्गप्रसङ्गात्, उपायान्तरत्यागं विनैव सिद्धोपायपरिग्रहस्य कर्तुंशक्यत्वेन सिद्धोपायस्य नैरपेक्ष्यभङ्गः, "अथ पातकभीतस्त्वं सर्वभावेन भारत। विमुक्तान्यसमारम्भो नारायणपरो भव" (विष्णुधर्मे-६६-८१॥) इति त्यागस्वीकारयोर्विधायकधर्मदेवतावचनविरोधश्च दुर्वारः। तस्मात् त्यागस्य विधेयत्वमङ्गीकरणीयमिति भावः।

अत्र वेदान्ताचार्योक्तानुवादपक्षदूषणोक्त्या, तैरुक्तपक्षान्तरदूषणस्यापुपलक्षणमित्यस्मदाचार्याः प्राहुः।

तथा हि—प्रपत्त्यधिकारानुवादपरः (१), कार्पण्यविधानपरः (२), नैरपेक्ष्यानुसन्धानपरः (३), अशक्यारम्भनिषेधपरः (४), अशक्यप्रत्याशानिषेधपरः, (५), ब्रह्मास्त्रन्यायसूचनपरश्चेति (६), षोढा परित्यागशब्दार्थयोजनां वर्णयन्ति।

(१) अत्र हि—अशक्त्याद्यश्रुतेः पार्थे तद्बाधाद्विध्यनन्वयात्। विवक्षावैपरीत्यादप्याद्यः कल्पोऽसमञ्जसः। तथा हि—अधिकारानुवादंवदन्वादी प्रष्टव्यः - कोऽधिकारः, स केनानूद्यत इति। सर्वधर्मपरित्याग एवाधिकारः, स च 'परित्यज्य' इत्यनेनानूद्यत इति चेत्, भ्रान्तोऽसि; सर्वधर्मशक्तानामेव तत्परित्यागरूपाधिकारसम्भवेन प्रपत्तेस्सर्वाधिकारत्वभङ्गप्रसङ्गात्। न ह्यनुपात्तस्य लोकवेदयोस्त्यागो दृष्टचरः। यदि चात्रानुपादानमेव त्यागशब्देन विवक्ष्येत, तर्हि श्रुतहानमश्रुतकल्पनञ्च स्यात्।

ननु—धर्मिस्वरूपाननुष्ठानेऽपि फलेच्छाधीनेच्छाविषयतासम्बन्धेन सर्वेषां धर्माणां सर्वैरप्युपादानसम्भवात्। तेन सम्बन्धेन तत्त्याग एवात्र त्यागशब्दविवक्षित इति नानुपपत्तिः। तथा चानुगृहीतं सारे चरमश्लोकाधिकारे—"आशयास्वीकारे आशात्यागस्त्याग इति वक्तुमुचितः" इति। इति

चेत्, मैवम्;—धर्मविचारानर्हतया धर्मस्वरूपानभिज्ञेषु शास्त्रपर्युदस्तादिषु निरुक्तोपादानस्याप्यसम्भवेन तद्दोषतादवस्थ्यात् । न हि लोके स्वेषामसम्भावितमभिलषन्तो दृश्यन्ते । येनाज्ञानाशक्तपर्युदस्तादीनां ब्रह्मविद्याभिलाषस्स्यात् । न चासम्भावितत्वज्ञानाभावदशायां सामान्येन 'मोक्षोपायो मे स्यात्' इतीच्छयोपात्तानां सर्वधर्माणां पश्चादसम्भावितत्वादिनिरूपणेन जायमानो यस्त्यागः, स एवात्राधिकारत्वेन विवक्षित इति नानुपपत्तिरिति वाच्यम्;—तथा सति बालमूकादीनामसम्भावितत्वादिनिरूपणाक्षमाणां प्रपत्त्यधिकाराभावप्रसङ्गात् । न चेष्टापत्तिः; "बालमूकजडान्धाश्च पङ्गवो बधिरास्तथा । सदाचार्येण सन्दृष्टाः प्राप्नुवन्ति परांगतिम्" (भारद्वाजसं-१-३२॥) इत्यादिशास्त्रविरोधात् । आचार्यनिष्ठाया अपि प्रपत्तिविशेषरूपत्वात् । अनुगृहीतश्चाचार्यैश्श्रीमद्रहस्यत्रयसारे अधिकारविभागाधिकारे "'उक्तिः,आचार्य निष्ठा' इत्येतदपि प्रपत्तौ गुणभेदः" इति ।

ननु अस्त्वेवं बालादिसाधारणी सर्वधर्माशक्तिरेव प्रपत्त्यधिकार इति, स चात्र 'सर्वधर्मान् परित्यज्य' इत्यनेनार्थात्प्रतिपाद्यत इति चेन्न;—अनुष्ठानमन्तरानुपपन्नस्य त्यागस्यानुष्ठानशक्तिसापेक्षत्वेन तस्याशक्त्याक्षेपकत्वायोगात् । अशक्तेःप्रपत्त्यधिकारत्वे शक्तानामज्ञपर्युदस्तविलम्बासहानामनधिकारप्रसङ्गाच्च । न च शक्त्याद्यन्यतमस्यैवाधिकारत्वाभ्युपगमान्न दोष इति वाच्यम्;—स्वतपोबलेन राक्षसनिरसने शक्तानां दण्डकारण्यवासिनाम्महर्षीणां प्रपत्त्यधिकाराभावप्रसङ्गात् । न च तेषां विलम्बासहत्वादुपायान्तरत्यागश्शङ्क्यः; स्वतपोबलात्मकोपायान्तरस्यैव शरणवरणापेक्षयापि शीघ्रकारितया वातापिजित्त्यादिसिद्धतया तदयोगात् । किञ्चाशक्त्याद्यन्यतमस्याप्यत्र शक्त्या लक्षणया वा प्रतिपादकाभावेन विवक्षितासिद्धिश्च । तस्मात् "सर्वधर्मान्परित्यज्य" इत्यस्याधिकारज्ञापकत्वोक्तिर्दुरुक्तिरेव ।

अथ यदुक्तं 'परित्यज्य' इत्यनुवादः, इति, तत्र पृच्छामः - केनेदमनुवादंप्राप्तमिति । शोकात्मना लिङ्गेनैवेति चेन्न; न हि दुष्करमुपायान्तरं त्यक्तवतश्शोकोदय उपपद्यते । किन्तु तत्र यतमानस्यैव शोकस्स्यादिति सर्वधर्मापरित्यागस्यैवेदं लिङ्गं साधकम् । एतेन "अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्" (गीता-९-३३॥) इत्येतदुदाहरणमपि प्रत्युक्तम् । दृष्टान्तमात्रेणार्थासिद्धेः । तत्र हीमंलोकं प्राप्तमर्जुनम्प्रत्युपदेशप्रकरणेनैव तस्यैतल्लोक-

प्राप्तेस्सिद्धतया 'प्राप्य' इत्यस्यानुवादरूपत्वम् । न हि तद्वदत्र सर्वधर्मपरित्यक्तवन्तमर्जुनम्प्रत्येवायं चरमश्लोकोपदेश इति प्रकरणादिना सिद्ध्यति; येन त्वाश्रुतेरङ्गत्वग्राहिकाया अयोग्यविषयतया योग्यतानुसारात् 'सर्वधर्मान्परित्यज्य' इत्ययमनुवादस्स्यात् ।

ननु 'मा शुचः' इत्युक्तश्शोको न तावद्धर्मदौष्कर्यानुसन्धाननिबन्धनः, येनायं धर्मात्यागसाधकस्स्यात्; किन्तु फलालाभनिबन्धन एवेति ब्रूमः; तथा च भक्तिपर्यन्तान् धर्मान् श्रुतवतोऽर्जुनस्य फलालाभनिबन्धनश्शोकस्स्वापेक्षितसाधनशून्यतां गमयतीति नानुपपत्तिरिति चेन्न;—विकल्पासहत्वात् । किमर्जुनस्य स्वापेक्षितसाधनशून्यत्वम्-कृष्णोपदेशधर्माणामननुष्ठानात्, अहोस्विदनुष्ठीयमानानामपि तेषां स्वापेक्षितसाधनत्वाभावाद्वा । आद्ये किमनुष्ठानाभावो ज्ञानशक्त्याद्यभावनिबन्धनः, केवलतन्द्रालुत्वनिबन्धनः । शक्रतनयस्य घोरतपश्चर्यादिभिर्दिव्यास्त्रादिकं साधयतश्शिवमौलिप्रहारसमर्थस्य जितेन्द्रियाग्रगण्यस्य साक्षाद्गीतोपनिषदुपदेशपात्रभूतस्यार्जुनस्यापि ज्ञानशक्त्याद्यभावे तदितरेषां तदभावस्य कैमुत्यसिद्धतया साधनान्तराणामननुष्ठानलक्षणाप्रामाण्यापातात् । अथ नाद्यद्वितीयः - केवलतन्द्रालुतया भगवदाज्ञातिलङ्घने भगवन्निग्रहप्रसङ्गात् । तन्द्रीप्रयुक्तस्य त्यागस्य तामसादित्यागरूपत्वेन तस्य प्रपत्त्यधिकारत्वायोगाच्च । अथ नापि द्वितीयः - मोक्षसाधनतयोपदिष्टानां धर्माणां मोक्षसाधनत्वाभावे तत्परशास्त्राणां मोहनशास्त्रत्वापातात् ।

ननु न वयं धर्माणां मोक्षसाधनत्वाभावं ब्रूमः, किन्त्वविलम्बितमोक्षसाधनत्वाभावमात्रमङ्गीकुर्मः; तथा चार्जुनस्य विलम्बासहिष्णुतया तम्प्रति भक्तिपर्यन्तोपायविशेषाणामपेक्षितसाधनत्वाभावो न विरुद्ध्यत इति चेत्, मैवम्;— अवताररहस्यज्ञानरूपाङ्गसचिवस्य भक्तियोगस्याशुकारितायाः "त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" (गीता-४-९।।) इति पूर्वमेवोपदिष्टत्वेन तदभिज्ञस्यार्जुनस्याविलम्बितमोक्षरूपस्वापेक्षितसाधनशून्यताया बाधितत्वात् । न चावताररहस्यज्ञानाङ्गकस्याप्युपासनस्य "त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" इति देहावसान एव मोक्षप्रदत्वावगमेन वर्तमानदेहेऽपि शोचतःपरमार्तस्यार्जुनस्य न तत्स्वापेक्षितसाधनायालमिति वाच्यम्;- परमहृप्त्या चरमश्लोकमपि विस्मृत्य लोकान्तरं प्राप्तवतोऽर्जुनस्य परमार्त-

त्वोक्तेरतिसाहसिकत्वात् । प्रपन्नैरप्यन्ततो गत्वा ब्रह्मविदपचारादिरूपप्रबल-प्रतिबन्धकप्रयुक्तफलविलम्बसम्भावनाभीत्या "भगवन्भक्तिमपि प्रयच्छ मे" (स्तोत्ररत्ने-५४॥) "परभक्तियुक्तं मां कुरुष्व" (शरणागतिगद्ये॥) इत्यादिषु ब्रह्मविदपचारसामग्रीविघटकपरभक्तिप्रार्थनस्य श्रीमन्निक्षेपरक्षायामनुगृहीत-त्त्वेन प्रपत्त्यपेक्षया भक्तेरेव शीघ्रकारित्वाच्च ।

किञ्च "तच्चित्तविमलाह्लादक्षीणपुण्यचया तदा । तदप्राप्तिमहादुःख-विलीनाशेषपातका । निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका" (वि-पु-५-१३-२१॥) इत्युक्तरीत्या परमार्तिरूपायास्तीव्रभक्तेरेवानुभवमुखेन क्षण-मात्रे पुण्यपापरूपोभयविधप्रारब्धजातनाशकतायाश्चिन्तयन्तीवृत्तान्तासिद्ध-तया, परमार्तविषये भक्तेरेवातिशीघ्रकारित्वोपपत्तेश्च ।

ननु कथं तर्हि भक्त्यपेक्षया प्रपत्तेश्शीघ्रकारित्वसिद्धान्तोपपत्तिरिति चेत्, अवताररहस्यज्ञानादीनां सिद्धान्ते पृथगुपायतया भक्त्यङ्गत्वानभ्युप-गमेन भक्तेश्चिरकालसाध्यत्वानपायात्तदुपपत्तेः । न चैवमवताररहस्यचिन्त-नादेरुपासनाङ्गत्वग्राहकपूर्वाचार्यवचनविरोधः ; प्रपत्तेः केवलभक्त्यङ्गत्वग्राहक-चरमश्लोकभाष्यवचनवत्तेषामप्यन्यथासिद्धत्वात् । एतावानेव विशेषः-प्रपत्तेः प्रमाणबलात् - भक्त्यङ्गत्वम्, स्वतन्त्रत्वञ्चेत्याकारद्वयमभ्युपेत्यम् ; अव-ताररहस्यज्ञानादेराकारद्वयग्राहकत्वप्रमाणाभावात्, फलश्रुतिस्वारस्यानु-रोधात्, लाघवात्, स्वतन्त्रत्वमात्रमङ्गीकार्यम्—इति । तस्मात् 'मा शुचः'इत्युक्तशोकस्यार्जुनकर्तृकसर्वधर्मपरित्यागसिद्धग्राहकत्वायोगात्, तत्परि-त्यागप्रयोजकतया त्वद् विवक्षितानामशक्त्यादीनामर्जुने बाधितत्वाच्च"सर्वधर्मा-न्परित्यज्य" इत्यनेनाशक्त्यादिसिद्धस्त्यागोऽनूद्यत इत्युक्तिरपि दुरुक्तिरेव ।

अथैवं त्यागानुवादपक्षे 'व्रज' इति विध्यन्वयोऽपि दुर्घटः । तथा हि 'व्रज' इत्यत्र शरणागतिर्विधीयते, तस्य रागप्राप्तत्वेन विधेयत्वायोगात् । स्ववेश्मनि 'निधिरस्ति' इत्युक्ते तद्ग्रहणयत्नवत्, सिद्धपरवाक्यैः "अमृतस्यैष सेतुः" (मु-२-२-५ ॥) इत्यादिभिर्भगवतश्शरणत्वेऽवगते सति रागादेव तत्स्वीकारप्रवृत्तेः । यथा 'समर्थः कारुणिकस्सर्वैश्वर्यसम्पन्नः परमोदारस्सर्वा-पेक्षितप्रदस्सार्वभौमोऽस्ति' इत्युक्ते तत्तत्फलार्थिनां तदभ्यर्थना सिद्ध्यति ; तथैव सिद्धोपायप्रार्थनारूपापि शरणागतिर्लोकसिद्धैवेति न तत्र विधाना-पेक्षा । ननु तावदुपायत्वप्रार्थनामात्रमत्र विधीयत इत्युच्यते, येन विधि-

वैयर्थ्यं स्यात्; किन्तु आनुकूल्याद्यङ्गपञ्चकसहिता स्वरूपभरफलसमर्पणरूपांशत्रयविशिष्टा शरणागतिरत्र विधीयते; न चेयं विना विधानमुपपद्यत इति नानुपपत्तिरिति चेत्, मैवम्;—आनुकूल्यसङ्कल्पादीनामत्र वाचकाभावात्। न च लक्षणया तदुपपत्तिरिति वाच्यम्;-"न विधौ परश्शब्दार्थः" इति तन्निषेधात्। किञ्च "ओमित्यात्मानं युञ्जीत" (तै-उप-६-५०॥) "मुमुक्षुर्वै शरणमहं प्रपद्ये" (श्वे-उप-६-१८॥) "कृतानुकूल्यसङ्कल्पः प्रातिकूल्यं विवर्जयन्" (लक्ष्मी- ) इत्यादिभिरंशत्रयस्यानुकूल्यादीनाञ्च विहितत्वेन चरमश्लोके पुनस्तद्विधानायोगात्।

अपि च "मामेव ये प्रपद्यन्ते" (गीता-७-१३॥) "तमेव शरणं गच्छ" (गीता-१८-६१॥) इत्यादिष्वानुकूल्याद्यङ्गपञ्चकविशिष्टभरन्यासस्य प्राप्तत्वात्, स्वरूपफलसमर्पणयोर्मुमुक्षुसामान्ये प्राप्तत्वाच्च नात्र तेषां विधेयत्वसम्भवः। अङ्गत्वेन प्राप्तायास्त्वङ्गप्रपत्तेस्स्वातन्त्र्यमात्रमेव हि चरमश्लोकावसेयम्। तस्मात् "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति सर्वधर्मपरित्यागविशिष्टशरणागतिविषयोऽयं विधिः। विशेष्ये बाधात् सविशेषणेहीतिन्यायेन सर्वधर्मपरित्यागविषय एवेति वक्तव्यम्। तच्च तस्याप्यनुवादं वदतां दुर्घटमेवेति विध्यनन्वयो दुष्परिहर एव।

अथास्तु वा 'परित्यज्य' इत्यस्यानुवादरूपत्वम्; 'व्रजे'इतिविधेः रागप्राप्तक्षीरविधिन्यायेन शीघ्रप्रवृत्तिमात्रार्थत्वं च; तथापि न वादीष्टसिद्धिः; चेतनस्वरूपान्तर्गतानन्यशरणत्वरूपाकिञ्चन्यलक्षणसाधनपारतन्त्र्यात्मकप्रपत्त्यधिकारानुवादपरत्वेनान्यथासिद्धेः। तस्यैव साक्षात्प्रपत्त्यधिकारत्वात्। तथा चानुगृहीतं वेदान्ताचार्यैश्श्रीमद्रहस्यत्रयसारे साध्योपायशोधनाधिकारे- "अतस्त्रैवर्णिकत्वादेर्भावोऽभावो हि कस्यचित्। नाधिकारःप्रपत्तेस्स्यादाकिञ्चन्यमनाश्रितः" इति। न च कादाचित्कसामग्र्यभावनिबन्धनकतिपयोपायशून्यतामात्रमाकिञ्चन्यशब्दार्थः; "अनागतानन्तकालसमीक्षयाप्यदृष्टसन्तारोपायः" (श्रीरं—गद्ये।) "त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि" (जितन्ता-१-१०॥) इत्यादितद्विवरणविरोधात्। अनुगृहीतश्च सारे चरमश्लोकाधिकारे "तत्र परीत्युपसर्गेण "अनागतानन्तकालसमीक्षयाप्यदृष्टसन्तारोपायः" "त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि" इत्यादिषूक्तरीत्याऽत्यन्ताकिञ्चनस्य सर्वकालेऽपि सर्वप्रकारेण च योग्यताविरहज्ञानात्, उत्पन्न-

नैराश्यातिशय उच्यते" इत्याकिञ्चन्यस्य सदातनसर्वोपायान्तरानर्हतात्मकत्वम्। तस्माच्चेतनस्य स्वरूपान्तर्गतं सर्वोपायान्तरानर्हत्वलक्षणं साधनपारतन्त्र्यमेवाकिञ्चन्यशब्दार्थः। एतादृशाकिञ्चन्यज्ञानप्रयुक्तसर्वधर्मत्यागसिद्धेरर्जुने शोकद्योत्यतया 'परित्यज्य' इत्यस्य भवत्वनुवादरूपत्वम्, "निश्चित्य त्वदधीनतां मयि सदा" (अष्टश्लो-८॥) इत्यादिश्लोके "मा शुचः" इत्युक्तशोकस्य सदातनभगवत्पारतन्त्र्यरूपचेतनस्वरूपज्ञानप्रयुक्तत्वेन श्रीपराशरभट्टारकैर्विहिततया तादृशशोकस्य तत्कारणपारतन्त्र्यात्मकनिरुक्ताकिञ्चन्यज्ञानद्योतकत्वोपपत्तेः। दर्शितञ्च वेदान्ताचार्यैः प्रपत्तेस्स्वरूपान्तर्गतपारतन्त्र्यप्रयुक्तत्वम्—"श्रीरङ्गेश्वर यावदात्मनियतत्वत्पारतन्त्र्योचिता" (न्यासतिलके-१८॥) इति। तस्मात् "सर्वधर्मान्परित्यज्य" इत्यत्र "भूमिरापोऽनलो वायुः" (गीता-७-४॥) इत्यादिप्रतिपादितात्यन्तपारतन्त्र्यरूपस्वस्वरूपयाथात्म्यज्ञानप्राप्तस्वरूपविरुद्धसाधनान्तरत्यागानुवादस्यैव वेदान्ताचार्याणामप्यभिप्रेततया साधनान्तरस्वरूपानुरूपत्वसंरक्षणप्रत्याशया सर्वधर्मनिषेधविध्यपलापे प्रवृत्तस्य वादिनः "सर्वधर्मान्परित्यज्य" इत्यस्यानुवादत्वव्यवस्थापनव्यसनं त्रिवक्षितविपरीतमेवेत्यास्तां विस्तरः।

(२) अथ कार्पण्यरूपाङ्गविधिं वदन्वादी प्रष्टव्यः—किं नाम कार्पण्यम्, तत्कस्याङ्गतया केन विधीयत इति। सर्वधर्मानर्हत्वपर्यन्तसर्वधर्मराहित्यरूपाकिञ्चन्यापराधालयत्वादिप्रतिसन्धानमेव कार्पण्यम्, तच्च "शरणं व्रज" इत्युक्तशरणागत्यङ्गतया "सर्वधर्मान्परित्यज" इत्यनेन विधीयत इति चेत्,-मैवम्; कार्पण्यस्याकिञ्चन्यादिप्रतिसन्धानरूपत्वे मानाभावात्। "त्यागो गर्वस्य कार्पण्यं श्रुतशीलादिजन्मनः। उपाया नैव सिध्यन्ति ह्यपायबहुलास्तथा। इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते" (लक्ष्मी-१७-६८॥) इत्यादिप्रमाणान्तरविरोधाच्च। तत्र कार्पण्यस्य गर्वत्यागात्मकताप्रतिपादनात्।

ननु—"अनादिवासनायोगादनैश्वर्यात्स्वभावजात्। मलावकुण्ठितत्वाच्च दृक्क्रिया विहितार्हि या। तत्कार्पण्यं तदुद्बोधो द्वितीयं ह्यङ्गमिष्यते" (अहि-सं-१२-१६॥) इति स्वाभाविकानैश्वर्यशब्दितसाधनपारतन्त्र्यात्मकाकिञ्चन्यप्रयुक्तकर्मज्ञानविघातस्यापि कार्पण्यात्मकत्वमुच्यत इति चेत्,—किन्तेन। न चैतावता कार्पण्यस्याकिञ्चन्यप्रतिसन्धानात्मकत्वं लभ्यते। किञ्चाकिञ्चन्यस्य प्रपत्त्यधिकाररूपत्वेन तत्प्रतिसन्धानस्याङ्गकोटिनिवेशोऽप्यनुप-

पन्नः। न हि ज्योतिष्टोमादिस्थले स्वर्गकामनादिरूपाधिकारप्रतिसन्धानस्याङ्गत्वं दृश्यते। अथास्तुवा तस्याङ्गत्वम्; तथाप्यस्यासाधारणाङ्गपक्षकान्तर्भावो दुरुपपादः। तस्य साधारणाङ्गत्वात्। न ह्यधिकारप्रतिसन्धानमन्तरेण क्वचित्साधनानुष्ठानं भवति।

अपि च सर्वधर्मानर्हत्वपर्यन्तसर्वधर्मराहित्यरूपाकिञ्चन्यादेः प्रतिसन्धानं-किं प्रमात्मकम्, उताहार्यरूपं वा। नाद्यः—तादृशकार्पण्यरूपाङ्गोपसंहारसमर्थस्य प्रधानोपसंहारासामर्थ्यापातात्, प्रधानोपसंहारसमर्थस्य तादृशाङ्गोपसंहारासामर्थ्यापाताच्च। न हि सर्वधर्मानर्हस्य कस्यचित् प्रपत्तिरूपपरमधर्मार्हत्वं वक्तुं युक्तम्।

ननु अनन्यशरणत्वरूपसाधनपारतन्त्र्यात्, सिद्धोपायव्यतिरिक्तसर्वधर्मानर्हस्य जीवस्वरूपस्य तदेकशरणव्रज्यार्हस्य युज्यत इति चेत्, भ्रान्तोऽसि; शरणागतेरपि भगवद्व्यतिरिक्तधर्मत्वाविशेषात्। न च युष्माभिः प्रपत्तेरनुपायत्वमङ्गीक्रियते। येन तस्य फलसाधनत्वलक्षणधर्मत्वाभावश्शङ्केतापि।

ननु गुरूपायभूतभक्तितदङ्गकर्मज्ञानादिरूपसर्वधर्मानर्हत्वादिविषयप्रमात्मकप्रतिसन्धानस्यैवात्र कार्पण्यरूपतायाः विवक्षितत्वान्नानुपपत्तिरिति चेन्न;—प्रपत्तेरपि भक्त्यङ्गान्तर्गततया भक्तितदङ्गसर्वधर्मानर्हस्य प्रपत्त्यर्हत्वायोगात्। प्रपत्तिव्यतिरिक्तभक्तितदङ्गानर्हत्वाविषयकप्रमात्मकप्रतिसन्धानस्यैव कार्पण्यरूपत्वविवक्षणेऽपि देशवासनामसङ्कीर्तनादीनां "सहकारित्वेन च" (ब्र-सू-३-४-३३।।) इति सूत्रोक्तधर्माणाञ्च प्रपत्तिव्यतिरिक्तत्वात्, भक्त्यङ्गत्वाच्च, तदनर्हाणामधिकारिणां शशविषाणसोदरत्वात्, कस्यचित्सम्भवेऽपि तादृशस्य तस्य प्रपत्त्यनर्हताया अपि कैमुतिकन्यायसिद्धत्वाच्च। न हि सुशकतमदेशवासनामसङ्कीर्तनादिष्वशक्नुवन्कश्चिदिति दुर्लभमहाविश्वासादिसाध्यां "उपायस्सुकरस्सोऽयं दुष्करश्च मतो मम" (ल-न्ले-१७-१०४।।) इत्युक्तां प्रपत्तिमुपसंहर्तुं शक्नुयात्। न च प्रपत्त्यपेक्षया दुष्करसर्वोपायानर्हत्वस्यैवाकिञ्चन्यशब्दार्थत्वाश्रयणात्तत्प्रतिसन्धानलक्षणकार्पण्यविधेर्नानुपपत्तिरिति वाच्यम्;—तथा सति प्रपत्त्यपेक्षया सुशकानां तत्तुल्यानाञ्च धर्मान्तराणां दत्तजलाञ्जलित्वापत्तेः। प्रपत्त्यपेक्षया दुष्करोपायेषु अनर्हाणां सर्वेषामकिञ्चनत्वेन प्रपत्त्यधिकारितया देशवासादीनामधिकार्यन्तराभावात्।

अथ नापि द्वितीयः-आकिञ्चन्यादिप्रतिसन्धानस्याहार्यरूपत्वे मिथ्याज्ञानादपवर्गप्रसङ्गात् । गुरूपायशक्तानामप्येतादृशकार्पण्यादिसम्भवेन तेषामपि प्रपन्नत्वापाताच्च । ननु - कथं तर्हि "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः" (अहि-सं-३६-३३॥) "अकिञ्चनोऽनन्यगतिश्शरण्य त्वत्पादमूलं शरणं प्रपद्ये" (स्तो-र-२१॥) इत्यादिष्वाकिञ्चन्यं प्रतिसन्धीयत इति चेत्, सत्यम् । न च तत्प्रतिसन्धानमुपायप्रपत्त्यङ्गभूतकार्पण्यात्मकम्, येनोपायान्तरसामान्यानर्हत्वरूपाकिञ्चन्यप्रतिसन्धानोपायप्रपत्तितदङ्गानुष्ठानयोर्मिथो विरोधस्तत्रापि प्रसज्येत । किन्त्वनुपायभूतायास्सिद्धोपायाधिकारिकृत्यरूपायाश्शरणागतेस्स्वरूपनिष्पादकतया तदधिकारभूतपराधालयत्वाकिञ्चन्यादि - प्रतिसन्धानमेव तत्र क्रियत इति नानुपपत्तिरिति पश्यतु भवान् । तस्मात्कार्पण्यस्याकिञ्चन्यप्रतिसन्धानात्मकत्वोक्तिर्दुरुक्तिरेव ।

अथ यदुक्तं 'शरणं व्रज' इत्युक्तशरणवरणाङ्गत्वेन कार्पण्यं विधीयत इति, तदप्यनुपपन्नम् । तान्त्रिकन्यासाङ्गतया प्रतिपन्नस्य कार्पण्यस्य शरणागत्यङ्गत्वोक्तेरन्यथाज्ञानकार्यत्वात् । न च "सन्न्यासस्त्याग इत्युक्तश्शरणागतिरित्यपि" (ल-न्त्रे-१७-७४ ॥) इत्यादिना न्यासशरणागत्योरभेदसिद्धिः, तथा सति भेकहरिशब्दप्रयोगबलेन भेकनारायणयोरभेदप्रसङ्गात् । संयोगरूपचोदनाख्याविशेषैर्न्यासशरणागत्योर्भेदो हि दुरपह्नवः । स्वार्थकैङ्कर्य - रूपफलान्तरसंयुक्तो न्यासः । 'मोक्षयिष्यामि' इति परगतस्वीकारात्मकफलसंयुक्तं वरणम् । स्वरूपभरफलसमर्पणं न्यासस्य रूपम् । तदेकोपायतायाच्ञा वरणस्य रूपम् । "क्षेत्रज्ञं ब्रह्मणि न्यसेत्" इति न्यासस्य चोदना । 'मामेकं शरणं व्रज' इति वरणस्य चोदना । 'न्यासविद्या, शरणागतिविद्या' इत्याख्येति संयोगरूपचोदनाख्याभेदैर्न्यासशरणागत्योर्भेदस्यान्यत्र पूर्वाचार्यैः प्रपञ्चितत्वात् । व्यक्तश्चेदं सिद्धतात्पर्यटिप्पण्याम् । तस्मात् 'मामेकं शरणं व्रज' इति वरणविधायकवाक्ये न्यासविद्याप्रतिपादनगन्धाभावात्, "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ॥ शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्" (अहि-सं ३६-३४ ॥) "अनन्यसाध्ये स्वभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः" इत्यादिशरणागतिप्रकरणेषु कार्पण्याद्यङ्गप्रसङ्गाभावाच्च 'सर्वधर्मान्परित्यज्य' इत्यत्र शरणागत्यङ्गतया कार्पण्यविधानोक्तिर्दुरुक्तिरेव ।

अथ यच्चोक्तं 'आकिञ्चन्यादिप्रतिसन्धानलक्षणं कार्पण्यं 'परित्यज्य' इतिशब्देन विधीयते' इति, तदप्यनुपपन्नम्; कण्ठतस्तेन सर्वधर्मपरित्यागस्यैव विधीयमानत्वात्। त्यागवाचिनस्त्यजिधातोर्नित्यसिद्धत्यागरूपाकिञ्चन्यप्रतिसन्धाने लक्षणाभ्युपगमान्न दोष इति चेन्मैवम्; "न विधौ परश्शब्दार्थः" इति तन्निषेधात्। 'सर्वधर्मान्' इति कर्मकारकानन्वयप्रसङ्गाच्च। नित्यसिद्धत्यागस्यात्यन्ताभावरूपत्वेन क्रियारूपत्वाभावात्, सर्वधर्मशब्दार्थस्य तत्र कर्मत्वेनान्वेतुमशक्यत्वात्, त्यागप्रतिसन्धानस्य क्रियारूपत्वेऽपि तस्य त्यागकर्मकतया धर्मकर्मत्वासम्भवाच्च तदन्वयदौर्घट्यात्।

नन्वेवमन्वयदौर्घट्यादिदोषसद्भावेऽपि शङ्कराद्युक्तबहुप्रमाणविरुद्धार्थान्तरापेक्षयायमर्थ उपादेय एवेति चेत्, भ्रान्तोऽसि; न ह्यर्थान्तरगतं बहुप्रमाणविरुद्धत्वं भवदुक्तार्थस्य साधुत्वं साधयेत्। न हि 'घटश्चक्षुर्ग्राह्यः' इति वाक्यस्य चक्षुर्ग्राह्यत्वविशिष्टवायुपरत्वोक्तिर्बहुप्रमाणविरुद्धेति तावन्मात्रेण चक्षुर्ग्राह्यरूपपरत्वाश्रयणं प्रामाणिकास्सहेरन्। स्नानशौचाचारगुरूपसदनमन्त्रश्रवणमहाविश्वासानुकूल्यसङ्कल्पादिनानाधर्मानुष्ठानशालिषु प्रपत्त्यधिकारिष्वनर्हत्ववचनपर्यन्तसर्वधर्मराहित्यानुसन्धानरूपकार्पण्यविधानमपि बहुप्रमाणविरुद्धमेवेति शङ्कराद्युक्तार्थापेक्षया भवदुक्तार्थस्य न कोऽपि विशेषः। येन तदपेक्षया भवदुक्तार्थस्योपादेयता स्यात्। यदि कतिपयधर्मानर्हत्वानुसन्धानमेवास्मद्विवक्षितमिति सर्वसङ्कोचाद्विरोधं ब्रूषे; तर्हि ततो वरमधिकारिविशेषव्यवस्थया यथाश्रुत्यसङ्कुचितार्थवर्णनमिति भवदुक्तार्थापेक्षया तदेवोपादेयं स्यात्। न चात्र सिद्धान्ते व्यवस्थापकविशेषणासिद्धिः; 'मा शुचः' इत्युक्तस्वरूपयाथात्म्यज्ञाननिबन्धनशोकस्यैव व्यवस्थापकत्वात्। 'निश्चित्य त्वदधीनतां मयि सदा" (अष्टश्लोक्यां-८॥) इति स्वरूपयाथात्म्यज्ञाननिबन्धनत्वेन तस्य शोकस्य पूर्वाचार्यैर्व्याख्यातत्वात्। तस्मात् "सर्वधर्मान्परित्यज्य" इत्यस्य कार्पण्यविधिपरत्वमसम्भवदुक्तिकमेव।

(३) अथ नैरपेक्ष्यविधिं वदन्वादी प्रष्टव्यः—कस्याचिन्नैरपेक्ष्यं, केन कथं विधीयत इति। 'व्रज' इति विधीयमानस्य प्रपदनस्य सर्वधर्मनैरपेक्ष्यं 'परित्यज्य' इत्यनेनाङ्गतया विधीयत इति चेन्न;—प्रपत्तिगतनैरपेक्ष्यस्य पुरुषव्यापाररूपत्वाभावेन पुरुषंप्रति तस्य विधानायोगात्। नैरपेक्ष्यानुसन्धानस्यैव विधेयत्वविवक्षणान्न दोष इति चेन्मैवम्;—प्रपत्तिश्रवणदशायां

प्रतिपन्नस्य तन्नैरपेक्ष्यस्य प्रपत्त्यनुष्ठानदशायां स्वत एवानुसन्धानसंभवेन तस्यापि विधेयत्वायोगात् । अथ तदनुसन्धाननियमस्यैवात्र विधेयत्वविवक्षणान्न दोष इतिचेन्न ;—"इयं केवललक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किं पुनस्सहकारिणाम्" (न्यायसिद्धाञ्जने-२।।) इति श्रीमन्निगमान्तगुरुभिरनुगृहीतरीत्या भगवदेकोपायत्वप्रत्ययात्मिकायां प्रपत्तावुपायान्तरानुपायत्वानुसन्धानस्यापि अन्तर्गततया प्रपत्त्यनुष्ठानदशायां तन्नैरपेक्ष्यानुसन्धाननियमस्यापि प्राप्तत्वेन तस्यापि विधेयत्वायोगात् ।

अथ किं नैरपेक्ष्यं विधीयत इति वक्तव्यम् । सहकारिनैरपेक्ष्यमेवेति चेन्न ;—आनुकूल्यसङ्कल्पादिसहकारिविधायकशास्त्रविरोधापत्तेः । न चोपायान्तरसाधारणसहकारिनैरपेक्ष्यस्यैव विवक्षितत्वान्न दोष इति वाच्यम् ;—प्रातिकूल्यवर्जनरक्षाविश्वासगोप्तृत्ववरणानां साधारणत्वेन बाधात् ।

अथ स्वाङ्गव्यतिरिक्तसहकारिनैरपेक्ष्यमेव विधीयत इति चेत्; भ्रान्तोऽसि । स्वाङ्गव्यतिरिक्तादृष्टेश्वरप्रतिबन्धकाभावादिसहकारिसापेक्षत्वेन बाधात् । न च स्वाङ्गव्यतिरिक्तमोक्षोपायासाधारणसहकारिनैरपेक्ष्यस्यैव विवक्षितत्वान्न दोष इति वाच्यम् ;—तादृशसात्त्विकत्यागरूपफलसमर्पणसापेक्षत्वेन तद्दोषतादवस्थ्यात् । न च फलसमर्पणस्य प्रपत्त्यङ्गत्वम् ; पञ्चाङ्गत्वविरोधात् । नाप्यङ्गिस्वरूपान्तर्भावः ; अङ्गिस्वरूपस्य सर्वफलार्थसाधारण्यावश्यम्भावेन तदयोगात् ।

अथ सहकार्यन्तरनैरपेक्ष्यस्य विधिं वदता तत्सापेक्षतायाःप्रसञ्जकं वक्तव्यम् । ब्रह्मविद्यान्तराणां यज्ञदानतपःप्रभृतिधर्मसापेक्षत्वदर्शनात् । तत्तुल्यन्यायतया प्रपत्तावपि ब्रह्मविद्यात्वमेव तत्प्रसञ्जकमिति चेन्न ;—शरणागतेरधिकारिविशेषणतया न्यासाङ्गिनत्वेनोपायभूतब्रह्मविद्यातौल्यन्यायस्याधिकारिविद्यायामप्रवृत्तेः । "नहि तत्करणं लोके वेदे वा किञ्चिदीदृशम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता" (श्लोकवार्ति-१-१-५-३७।।) इत्युपायस्यैव हीतिकर्तव्यतापेक्षानियमः । नाधिकारस्य । न च 'शरणं व्रज' इति न्यासो विधीयते ; शब्दस्यासमर्थत्वेन श्रुतहानाश्रुतकल्पनयोःप्रसङ्गात् । किञ्च न्यासेऽपि धर्मान्तरनैरपेक्ष्यं बाधितम् । तत्तद्वर्णाश्रमविहिताचारनिषिद्धवर्जनाभ्यां विनानुकूल्यसङ्कल्पप्रातिकूल्यवर्जनयोरनुपपन्नत्वेन तदुभयसापेक्षस्य न्यासस्य शास्त्रीयसर्वधर्मसापेक्षत्वानपायात् । न च सङ्कल्पमात्रस्यैवाङ्गत्वान्न दोष इति

वाच्यम्;—"प्रातिकूल्यं परित्यक्तमानुकूल्यञ्च संश्रितम्" (लक्ष्मीतन्त्रे-२८-११॥) इति प्रतिसन्धानविरोधात्। "अशास्त्रीयोपसेवा च तद्व्याघात उदीर्यते" (अहि-सं५२-२२॥) इत्यशास्त्रीयसेवायाःप्रातिकूल्यवर्जनविरोधित्वोक्तेः,"तद्व्याघातो निराकृतिः" (अहि-सं-४२-२३॥) इति चराचरानिराकरणस्यानुकूल्यविरोधित्वोक्तेश्चानुकूल्यप्रातिकूल्यवर्जनयोरेवाङ्गत्वसिद्धेश्च। यदि सङ्कल्पमात्रस्याङ्गत्वम्, तर्ह्यशास्त्रीयोपसेवानिराकृत्योस्सद्भावदशायामपि सङ्कल्पमात्रस्य मिथ्यारूपस्य सम्भवेन विरोधाभावात्तयोस्तद्विरोधित्वोक्तिःकथमिव सङ्गच्छेत।

किञ्च - "आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः" (लक्ष्मीतन्त्रे १७-७६॥) इत्यनयोरङ्गयोरकृत्यकरणकृत्याकरणरूपापायनिवृत्तिजननद्वारैवाङ्गिस्वरूपोपयोगः प्रतिपादितः। सङ्कल्पविषयार्थानुष्ठानाप्रयोजककेवलमिथ्याभूतसङ्कल्पमात्रस्याङ्गत्वोक्तेस्तद्विरुद्धत्वाच्च न्यासस्य धर्मान्तरसापेक्षत्वमवर्जनीयमेव। अपि च शास्त्रेष्वानुकूल्यमात्र एव क्वचित्सङ्कल्पशब्दश्श्रूयते, प्रातिकूल्यवर्जनविषये कुत्रापिसङ्कल्पशब्दो न श्रुतः। तथा च तद्विषयकसङ्कल्पमात्रस्याङ्गत्वोक्तौ श्रुतहानाश्रुतकल्पनयोः प्रसङ्गेन यथाशास्त्रं प्रातिकूल्यवर्जनस्यैवाङ्गत्वमकामेनापि स्वीकर्तव्यमेव। तथा च "स्वस्य स्वामिनिवृत्तिर्या प्रातिकूल्यविवर्जनम्। तदङ्गं पञ्चमं मोक्तमाज्ञाव्याघातवर्जनम्" (अहि-सं-५२-२१॥) इत्यस्य प्रातिकूल्यवर्जनस्य विधिनिषेधशास्त्रानुष्ठानात्मकत्वेन तदङ्गस्य न्यासस्य वर्णाश्रमादिधर्मसापेक्षत्वं दुरपह्नवमेव।

नन्वित्थं सति न्यासस्य सकृत्त्वविरोधो दुष्परिहरः, यावज्जीवमनुष्ठेयानां वर्णाश्रमादिधर्माणामङ्गार्थत्वे यावज्जीवमङ्गावृत्तेरप्यवर्जनीयत्वादिति चेन्न;—यावज्जीवमनुष्ठानस्योक्तेरङ्गत्वोपपत्त्या तदर्थमङ्ग्यावृत्त्यनावश्यम्भावात्, सकृत्त्ववचनस्याङ्गिमात्रविषयत्वात्, महाविश्वासरूपाङ्गस्य यावज्जीवानुवृत्तिं वदतस्तव गत्यन्तराभावादेवमेव प्रपत्तेस्सकृत्त्ववाचो युक्तेराश्रयणीयत्वाच्च। न चोदनाद्यनृतवचनादिमहापराधक्षामणार्थस्य न्यासस्य पश्यन्त्येव शेषिणि बुद्धिपूर्वको मिथ्यासङ्कल्पोऽङ्गतयाऽनुष्ठेय इति सिद्धान्तनिर्धारणं कथं न प्रामाणिकाः परिहरेयुः।

अथ यदुक्तं 'परित्यज्य' इत्यनेन नैरपेक्ष्यं विधीयत इति, तदप्यनुपपन्नम्। त्यजिधातोर्नैरपेक्ष्यार्थकत्वे लक्षणाप्रसङ्गात्, 'धर्मान्' इत्यस्यानन्वयप्रसङ्गाच्च। ननु न वयं नैरपेक्ष्यं साक्षाद्विधेयं ब्रूमः, किन्तु 'परित्यज्य' इत्य-

नेनाङ्गतया सर्वधर्मत्यागो विधीयते; ततश्च तात्पर्यवृत्त्या नैरपेक्ष्यं विधीयत इति नानुपपत्तिरिति चेत्;—कोऽयमङ्गतया त्यागो नाम? - अङ्गत्वस्यैव त्याग इति चेत्, अन्यधर्मस्यान्येन त्यक्तुमशक्यतया पुरुषं प्रति तस्याशक्यतया चन्द्राहरणाद्युपदेशवदानर्थक्यापत्तेः। अथ - यद्यङ्गत्वबुद्धित्यागस्य विधेयत्वमिष्येत, तर्ह्यङ्गत्वबुद्धिं विना स्वरूपतोऽनुष्ठीयमानानां धर्माणामङ्गता स्यात्। अङ्गत्वबुद्धेरेव त्यागविधानात्। किञ्चास्मिन्पक्षे त्यागशब्दलक्षणादोषोऽपि दुष्परिहरः। न चाङ्गत्वभ्रान्तित्यागस्यैवात्र विधेयत्वान्नानुपपत्तिरिति वाच्यम्; भ्रान्तित्वादेव भ्रान्तेस्त्याज्यतायास्सिद्धत्वेन विधेयत्वायोगात्। अथाङ्गभूतानां धर्माणां स्वरूपत्याग एवाङ्गतया त्याग इति चेत्, वर्णाश्रमधर्माणां सर्वेषामुपासनाङ्गत्वेन तेषां प्रपत्तेस्स्वरूपतस्त्याज्यत्वे तेषां पश्वादितुल्यता - प्रसङ्गात्। यदि विनियोगपृथक्त्वेनाङ्गतयानुष्ठीयमानापेक्षया नित्यत्वादिविशिष्टानां भेदमाश्रित्य निर्वाह इष्येत, तर्हि सिद्धान्ती विजयी स्यात्। शब्दस्वारस्यसिद्धस्य सर्वधर्मस्वरूपत्यागपक्षस्याप्येवमेव निर्वाहसम्भवात्।

किञ्चाङ्गभूतसर्वधर्मत्यागविधिं वदन्वादी प्रष्टव्यः - सर्वधर्मशब्दार्थासङ्कोचःप्रतिपादयिषितो न वेति। नाद्यः - सर्वेषां तादृशधर्माणां परित्यक्तुमशक्यत्वेन सागरतरणोपदेशवदप्रमाणत्वप्रसङ्गात्। यदृच्छयापि हि क्रियमाणानि कर्माणि प्रपत्त्युपकारकाणि भवन्ति। अत एव ह्यज्ञातसुकृतादिकमवकाशं लभते। तथा च स्मर्यते—"ईश्वरस्य च सौहार्दं यदृच्छासुकृतं ततः। विष्णोः कटाक्षमद्वेषमाभिमुख्यञ्च सात्त्विकैः। सम्भाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः" (पांचरात्रे ॥) इति, तेषामाचार्यघटनद्वारा प्रपत्त्युपकारकत्वम्। उपकारकतया बुद्धिपूर्वकोपादानाभावोऽत्र विवक्षित इति चेन्न—नियामकाभावात्। तथा सत्याचार्योपासनन्यासविद्याश्रवणसच्छिष्यलक्षणान्तर्गता - स्तिक्यधर्मशीलत्वादीनां परित्याज्यत्वप्रसङ्गात्। तदनुष्ठानेऽङ्गवैकल्येन प्रपत्तिवैफल्यापत्तेः। नात्र प्रपत्त्युपकारकत्वबुध्या तदनुष्ठानमिति चेत्, कुतस्तर्हि, प्रपन्नेतरलोकसङ्ग्रहार्थमिति चेत्, किं स्वाधिकारविरुद्धानुष्ठानेन लोकसङ्ग्रहः। तथा सत्यूर्ध्वरेतसां ग्रहस्थाश्रमधर्मानुष्ठानप्रसङ्गः। लोकसङ्ग्रहणमपि किं धर्मबुध्या, केवलदृष्टार्थं वा। आद्ये किं नित्यनैमित्तिकबुध्या, काम्यबुध्या वा। नाद्यः - "अहरहस्सन्ध्यामुपासीत" इत्यादिवचत्तथात्वग्राहकप्रमाणभावात्। नापि प्रथमे द्वितीयः - मुमुक्षोः प्रपित्सोः कामान्तरासम्भवेन प्रपत्त्यर्थत्व एव पर्यवसानात्। तथा च तस्यैव बुद्धिपूर्वकप्रपत्त्युपकारकानुष्ठानात्मकत्वाद्या-

घातो दुरुद्धरः। अथ केवलदृष्टार्थत्वे लोकायतिकरहस्यावतारः। आचर्योपासनसच्छिष्यलक्षणाद्यभिनयानां प्रपत्त्यर्थत्वाभावेन गुरुजनादिवञ्चनामात्रप्रयोजनकत्वात्। प्रपत्त्युपकारकबुध्यभावेऽपि दृष्टप्रयोजनविरहेऽपि करुणापरतन्त्रतयाचार्योपासनसच्छिष्यसदाचारादिधर्मलोपमूलपरानर्थपरिजिहीर्षया तत्सङ्ग्राहकं परार्थानुष्ठानमुपपद्यत इति चेन्न, सर्वलोकोज्जीवनप्रपत्तिधर्मविपरीतानुष्ठानेन तन्निष्ठकृत्स्नवैदिकवर्गसङ्ग्रहासिध्यासङ्ग्राह्यतमपरानर्थपरत्वेन परमनैर्घृण्यप्रसङ्गात्।

स्वरूपतः पुरुषार्थतया 'रागवशात्तदनुष्ठानमिति चेन्न, तथाविधरागसम्भवे भक्त्यधिकारितया "न भक्तिमांस्त्वच्चरणारविन्दे" (स्तोत्ररत्ने-२२॥) इत्युक्ताधिकारविरोधप्रसङ्गात्, अल्पशो रागप्राप्तस्यापि निषिद्धस्यानुष्ठानायोगाच्च। न हि 'धर्मो हि धृतिसाधनम्, श्रेयस्साधनमित्यर्थः, ततश्च धर्माणां त्यागोऽत्र श्रेयस्साधनत्वत्यागः' इति चेन्न; अन्यस्वभावस्यान्येन त्यक्तुमशक्यत्वात्। नित्यत्यक्तत्वेन वा त्यागसिध्यनुपपत्तिः। तद्बुद्धित्यागोऽत्र विवक्षित इति चेन्न; लक्षणाप्रसङ्गात्। "न विधौ परश्शब्दार्थः" इति न्यायविदः। यथावस्तुवेदिनः आचार्योपासनादीनां विद्याधिगमाद्यर्थतया ज्ञातत्वेन तद्बुद्धेः परित्यक्तुमशक्यत्वाच्च। स्वापेक्षया श्रेयस्साधनत्वबुद्धित्यागोऽत्र विवक्षित इति चेत्, किमसौ-क्रियमाणेषु, उताक्रियमाणेषु। आद्ये-सर्वप्रकारश्रेयस्साधनत्वबुद्धित्यागे भ्रान्तत्वप्रसङ्गः। तेषामेव धर्माणां स्वरूपतोऽनुष्ठीयमानत्वेन यत्रकुत्रचिच्छ्रेयसि पर्यवसानात्, तद्बुध्यभावेऽननुष्ठेयत्वप्रसङ्गाच्च। आहुश्च-"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते"इति। ईश्वरप्रीतिमुद्दिश्य तत्पारतन्त्र्यादिमात्रचिन्तने नानुष्ठाने तु कर्मयोगाद्यनतिरेक एव। उत्तरत्र स्वरूपे परित्यक्ते प्रसङ्गाभावेन निष्प्रयोजनः; तदुपकारकताबुद्धिनिषेधस्स्यात्। किञ्चात्र त्यागः प्रपदनञ्चेति द्वयविधाने वाक्यभेदस्स्यात्। न चासौ युक्तः, "सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" (श्लोकवा-१-१-४-९॥) इति न्यायात्।

न चात्र विधीयमानाङ्गत्वबुद्धित्यागस्य प्रपत्त्यङ्गतायाः 'परित्यज्य' इति-त्वाश्रुत्यवगततया विशिष्टविधिरुपपद्यत इति वाच्यम्;-तस्यापि गत्यभावविषयत्वात्। किञ्चायमङ्गतया धर्मान्तरोपादानत्यागविधिः—किं तादृशोपादानाशक्तविषयः, उत शक्तविषयः। न तावदाद्यः—अकिञ्चनतयाभिमते तादृशाधिकारिणि त्यागविधिवैयर्थ्यात्। न ह्यशक्तं प्रति निषेधापेक्षा। अथ शक्तम्प्रत्येव

निषेधे तेषां धर्माणामधर्मत्वप्रसङ्गः । न चाश्रमभेदेन तत्तद्धर्मभेदनिषेधवदयं निषेध इति वाच्यम्;—तत्रान्यस्य निषिद्धानामन्यैरनुष्ठानसम्भवात् । इहतु साक्षाद्भक्त्यनुष्ठानाशक्तानां प्रपत्त्यधिकारितया तान्प्रत्येव परम्परया भक्तिनिष्पादकाङ्गानां निषेधे अधिकार्यन्तरासिद्धेः । न च साक्षात्परम्परया च भक्तिनिष्पादनाशक्तानामेव प्रपत्त्यधिकाराभ्युपगमात्, न दोष इति वाच्यम्;-तर्हि तेषां भक्त्यङ्गभूतधर्मानुष्ठानशक्तेरेवाभावेन तान्प्रति तत्त्यागविधानायोगात् । न च भक्त्यङ्गशक्तेषु केषाञ्चिन्मुमुक्षुविशेषाणामेव प्रपत्त्यधिकारव्यवस्थाङ्गीकारान्नानुपपत्तिरिति वाच्यम्;—तादृशव्यवस्थापकविशेषादृष्टेः । न च प्रपदनरुचिरेव विशेषः, तथा सति मोक्षं प्रति साक्षात्साधनपरंपरासाधनभूतयोः प्रपदनभक्त्यङ्गयोर्यथारुचिविकल्पापातात् । न चेदं युक्तम्, विषयफलयोस्तुल्यविकल्पायोगेन प्रपत्तेरपि भक्त्यङ्गतापत्तेः । तथा च कृतं स्वतन्त्रप्रपत्तिप्रतिष्ठापनव्यसनेन ।

न च ज्ञानाधिक्यनिबन्धनविश्वासदार्ढ्यस्यैव प्रपत्त्यधिकारव्यवस्थापकत्वाभ्युपगमान्न दोष इति वाच्यम्;—परोक्षस्य तादृशज्ञानाधिक्यस्य कर्मयोगाद्युपयुक्तश्रवणमननादिशालिष्वपि सत्त्वात् । अपरोक्षस्य तस्य प्रपित्सावधि दुर्लभत्वात् । सुलभत्वेऽपि "न चात्मवेदी" इत्युक्तकार्पण्यवैकल्यप्रसङ्गात् । किञ्चास्मिन्पक्षे अभावरूपाणां धर्माणामपि परित्यागस्य यथाविधानमवश्यम्भावात् । तत्त्यागस्य च तत्प्रतियोगिभावानुष्ठानात्मकतया प्रपत्त्यङ्गतया निषिद्धानुष्ठानप्रसङ्गो दुष्परिहरः । अभावरूपाणामहिंसादीनां न धर्मत्वम्, अपि तु पापाभावमात्ररूपत्वमिति चेन्न; तेषामेव नियमसहकृतानां धर्मत्वात् । अतो विहिताननुष्ठानं निषिद्धानुष्ठानञ्चावश्यंभावीति स्वैरदोषो दुष्परिहर एव ।

अथ सर्वधर्मशब्दसङ्कोचेन शक्त्यनुरूपनित्यनैमित्तिकव्यतिरिक्तप्रपत्त्यनुपयुक्तदुष्करतपःप्रभृतिधर्माणामङ्गतयोपादानप्रतिषेधपक्षे नियामकनिर्मुक्तस्सर्वशब्दयोगः परिपन्थि; तादृशदुष्करतपःप्रभृतीनामनुपकारकत्वेनैवाप्रसक्ततया तत्प्रतिषेधवैफल्यञ्च । किञ्च प्रपत्तेः क्षणकालसाध्यतया तत्सिद्ध्यनन्तरभाविनां क्षेत्रवासगुरुशुश्रूषाद्वयानुसन्धानभगवद्विग्रहसेवातत्कैङ्कर्यादीनां त्यागप्रसङ्गो दुर्वार एव । न चैषां यावज्जीवमनुष्ठितानामाराद्उपकारकत्वम्, अनभ्युपगमात् । अभ्युपगमे वा प्रपदनानन्तरं मृतानामुपायवैकल्यप्रसङ्गः ।

न च जीवति सापेक्षमन्यस्मिन्नेत्यत्र नियामकमस्ति । कृत एव प्रतिबन्धकनिवृत्तनार्थत्वमपि दूरोत्सारितम् । प्रपत्तिरूपपरमधर्मस्य सर्वप्रतिबन्धकनिवारकत्वेनाभिमतस्य प्रतिबन्धकान्तरासम्भवात् । एतेन - प्रत्यवायपरिहारार्थमपि गतम् । "अकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारासह्यापचाररूपनानाविधानान्तापचारान्" (शरणागतिगद्ये।।) इत्युक्तरीत्या प्रपत्तेरेव सर्वप्रत्यवायपरिहारकत्वात् । किञ्च - अकरणनिषिद्धकरणयोर्हि प्रत्यवायप्रसक्तिः । इह च "सर्वधर्मान्परित्यज्य" इति प्रपत्त्यनुपकारकाणां निषिद्धत्वात् । तत्त्यागे न प्रत्यवायप्रसङ्गः । प्रत्युत तदत्याग एव निषिद्धानुष्ठानजनितः प्रत्यवायस्स्यात् तदेवं शब्दस्वारस्यसिद्धसर्वधर्मस्वरूपत्यागाङ्गत्वविधिपक्षे प्रसञ्जितानां दोषाणां नैरपेक्ष्यविधिपक्षेऽपि अविशिष्टत्वेन स्वारसिकयोजनामपहाय लक्षणासङ्कोचाश्रयणादिना "सर्वधर्मान्परित्यज्य" इत्यस्य व्यर्थकल्पनं पूर्वोक्तसहस्रदूषणदूषितं सदाचार्यसम्प्रदायबहिष्ठं स्वकपोलकल्पितं नैरपेक्ष्यमात्रविधानपरत्वमसम्भवदुक्तिकमेव ।

(४) अथ—यदुक्तं 'अशक्यारम्भनिषेधपरम्' इति, तदप्यसत् । अशक्यत्वादेव तन्निवृत्तेः । प्राप्ततया तद्विधानायोगात् । यद्यशक्यत्वं जानन्नपि न निवर्तेत, स कथं निषेधवाक्यश्रवणाद्वा निवर्तेत । तस्माद्विफल एवायं विधिः । किञ्च - किमयं दुष्करारम्भत्यागः - प्रपत्त्यङ्गतया विधीयते, उत स्वतन्त्रतया वा । नाद्यः - दुष्करारम्भरहितानामङ्गवैकल्येन प्रपत्तिवैफल्यापत्तेः । नापि द्वितीयः - वाक्यभेदप्रसङ्गात् । न चेष्टापत्तिः, "सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते" इति न्यायविरोधात्, 'परित्यज्य' इति त्वाश्रुत्या त्यागस्याङ्गत्वेन प्रतीयमानतया तद्विरोधात्, स्वतन्त्रस्य कर्मणो ल्यबन्तेन विधातुमशक्यत्वाच्च । किञ्चायं निषेधविधिः - कथमशक्यारम्भं निवर्तयतीति वक्तव्यम् । अनिष्टानुबन्धज्ञापनेनैवेति चेत्, किमलौकिकमनिष्टानुबन्धि ज्ञापयति, उत लौकिकं वा । नाद्यः - दृष्टे सम्भवत्यदृष्टकल्पनाया अन्यायत्वात् । दृश्यते ह्यशक्तेषु प्रवृत्तानां विफलायासरूपानिष्टानुबन्धः । अथ नापि द्वितीयः- लौकिकत्वादेव शास्त्रगम्यत्वायोगात् । तथा चोक्तं "असन्निकृष्टवाचा च द्वयमत्रजिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा" इति । तस्मात् 'परित्यज्य' इति विधिर्व्यर्थ इत्युक्तेरपरपर्याय एवायमशक्यारम्भनिषेधपरत्वनिर्वाह इति सिद्धम् ।

(५) अथ - यदुक्तं 'अशक्यप्रत्याशानिषेधपरम्' इति, तदप्यनुपपन्नम् । अशक्यत्वादेव तत्प्रत्याशानिवृत्तिसम्भवेन तन्निषेधायोगात् । न च मुख्यकल्पस्य साक्षात्साधयितुमशक्यत्वेऽप्यनुकल्पानुष्ठानाद्वा परम्परासाधनानुष्ठानाद्वा मुख्यकल्पस्तत्फलं वा साधयितुं शक्यतममिति कृतिसाध्यताज्ञानात् प्रवृत्त्याशासम्भवेन तद्वारणार्थोऽयं निषेधस्सप्रयोजन एवेति वाच्यम् ;—तथासत्यनुकल्पविधानतन्निषेधयोर्मिथोविरोधस्य दुष्परिहरत्वापातात् । सर्वेषां मुमुक्षूणां प्रथमप्रवृत्तिदशायां मोक्षोपायभूतायाः परभक्तेरत्यन्ताशक्यत्वेन तान्प्रति तदङ्गोपाङ्गभूतकर्मज्ञानादिद्वारा भक्तिनिष्पादनप्रत्याशायाश्च "सर्वधर्मान्परित्यज्य" इति निषिद्धतयानुपादेयत्वापत्तौ कर्मज्ञानादिशास्त्राणां दत्तजलाञ्जलित्वमेव स्यात् ।

किञ्चास्मिन्पक्षे धर्मशब्दस्याशक्यधर्मानुकल्पादिविषयप्रत्याशायां लक्षणाया आवश्यकतया श्रुतहानाश्रुतकल्पने च स्याताम् । अपि च लक्षणाकल्पनायामपि प्रत्याशाया विषयवैलक्षण्याधीनत्वेनापुरुषतन्त्रतया तन्निवृत्तिविधानञ्च बाधितम् । न च कामिनीप्रावण्यनिषेधवद्धर्मप्रत्याशानिषेधोपपत्तिः । तत्र नरकादिरूपबलवदनिष्टज्ञापनेन भवति विधेर्निवारकता । न चात्र नरकादिरूपबलवदनिष्टानुबन्धेन युज्यते । शास्त्रीयधर्मविषयप्रत्याशायास्सात्त्विकतास्तिक्याद्यतिरेककारितत्वेन तस्य निषिद्धविषयप्रावण्यनरकादिजनकत्वायोगात् । न च भवद्भिरुपायान्तराणां पारतन्त्र्यरूपस्वरूपनाशात्मकबलवदनिष्टानुबन्धित्वमङ्गीक्रियते । येनाभिचारस्येवाधिकारिभेदमाश्रित्य विधिनिषेधयोरविरोधसिद्धान्त इव, भवन्मतेऽपि समर्थितस्स्यात् ।

(६) अथ - यदुक्तं 'सर्वधर्मान्परित्यज्य' इत्यनेन ब्रह्मास्त्रन्यायस्सूच्यते' इति, तत्र पृच्छामः - कथं सूच्यत इति । धर्मविषयकनिषेधविधेः - धर्माणां प्रकृतोपायविघटकत्वरूपबलवदनिष्टानुबन्धज्ञापकत्वादिति चेत् ; किं साध्योपायविघटकत्वरूपानिष्टानुबन्धज्ञापकतया, उत सिद्धोपायविघटकत्वज्ञापकतया वा । नाद्यः—तथासति भक्तेः प्रपत्तिविघटकतया तत्स्थाननिविष्टेन भगवता प्रपत्तिविघ्नप्रसङ्गात् । गुरूपायकार्यकरणार्थमेव हि गुरूपायस्थाने भवद्भिर्भगवान्निवेश्यते । नापि द्वितीयः-सर्वशक्तेर्निरङ्कुशस्वतन्त्रस्य सिद्धोपायस्यातिक्षुद्रचेतनव्यापारेण विघटनायोगात् । न ह्ययमीश्वरादप्यतिशयितशक्तिको बद्धचेतनः । किञ्च भवन्मते फलप्रदस्यैव सिद्धोपायशब्दार्थतया तस्य

सर्वधर्मसाधारणत्वेन तैस्तद्विघटनायोगाच्च । किञ्चायं निषेधविधिः—किमु-पायान्तरशक्तविषयकः, उताशक्तविषयको वा । नाद्यः-शक्तं प्रत्येव निषेध-विधिविरोधप्रसङ्गात् । नापि द्वितीयः-अप्रसक्तप्रतिषेधापातात् ।

अथ विलम्बाक्षमतया प्रपत्तिमधिकुर्वाणं शक्तं प्रत्येवायं निषेध इति चेत्, तर्हि प्रपत्तेस्सर्वाधिकारत्वभङ्गप्रसङ्गः । विलम्बाक्षमान् शक्तान्प्रत्येवाल विधानात् । किञ्च विकल्पितोपायेषु एकमनुतिष्ठतस्तदितरोपायाप्रसक्त्या तत्प्रतिषेधो विफल एव । न च प्रपत्तेरशक्ताधिकारत्वेनानुकल्पतया तन्निष्ठैः पश्चाच्छक्तिसम्भवे मुख्यकल्पाशया भक्त्याद्युपायान्तरप्रसक्तिस्स्यादिति तन्निषेधोपपत्तिरिति वाच्यम्; 'परित्यज्य' इति ल्यप्प्रत्ययेन विधीयमानत्या-गस्य शरणागतेः पूर्वकालीनत्वोक्त्या तद्विरोधात् । 'मामेकं शरणं प्राप्य सर्व धर्मान्परित्यज्य' इति हि तदानीं वक्तव्यम् । न च सद्विद्यादीनां विकल्प-विस्मरणेन नानाविधब्रह्मविद्यानां समुच्चित्याधिकुर्वतामपि केषाञ्चिन्म-न्दधियां विकल्पविस्मरणमात्रेण ब्रह्मविद्याविशेषाणां निषेधायोगात् । ये विकल्पं विस्मरन्ति, ते कारुणिकैर्विकल्पमेव श्रावयितव्याः । न तु ब्रह्म-विद्यानिषेधेन तासु बलवदनिष्टानुबन्धित्वभ्रान्तिजननेनान्धे तमसि भ्राम-यितव्याः । ब्रह्मविद्यानां बहूनां समुच्चित्यानुष्ठानेऽपि फलस्याविशेषात् । आयासातिशयवैफल्यमात्रमेव तत्रानिष्टम् । अनिष्टान्तरे प्रमाणाभावात् । एकैकविद्यानिष्ठं प्रत्यन्येषां निषिध्यत्वोक्तौ बलवदनिष्टान्तरानुबन्धबोधो निषेधवाक्यादवर्जनीय एवेति तत्तद्विद्यानिष्ठानां विद्यान्तरेष्वभिचारतुल्यता-प्रतिपत्तिरवश्यकर्तव्या स्यात् ।

ननु न वयं सर्वविद्यानिष्ठानां विद्यान्तरनिषेधं ब्रूमः, किन्तु न्यास-निष्ठान्प्रत्येव तदितरेषां प्रतिषेधतीति नानुपपत्तिरिति चेन्न;—तथा सति न्यासनिष्ठैर्भगवत उपायान्तरस्थाननिवेशस्य महापराधरूपत्वेन परिहरणी-यत्वापातात्, अभिचारतुल्यतया शास्त्रनिषिद्धस्योपायान्तरस्य स्थाने सर्वोत्कृष्ट-भगवन्निवेशस्य महापराधरूपत्वात्, बलवदनिष्टानुबन्धिस्थाने निविष्टस्यापि भगवतो बलवदनिष्टप्रदत्वापत्त्या तद्भयेनापि तस्यावश्यपरिहरणीयत्वाच्च । तस्मात् - ब्रह्मास्त्रन्यायेनोपायान्तरप्रतिषेधपक्षेऽपि सद्विद्यादिधर्मान्तराणाम-धर्मवत्त्याज्यत्वाविशेषेण तदपेक्षया शब्दस्वारस्यसिद्धः वक्ष्यमाणस्वरूपत्याग-पक्ष एव ज्यायानिति सर्वमवदातम् ॥ ४ ॥

(५) तर्हि सुशकत्वादिभिः रागप्राप्तस्यास्य विध्य-पेक्षा किमित्यत आह--रागप्राप्त इति ।

मू ॥ रागप्राप्तमान उपायंताने वैधमानाल् कडुहपरि-ग्रहिक्कैक्कुडलायिरुक्कुमिरे ॥ ५ ॥

छा ॥ रागप्राप्त उपायो वैधश्चेत् शीघ्रपरिग्रहस्योप-युक्तो भवति खलु ॥ ५ ॥

व्यां ॥ भोग्यतया रागप्राप्तं क्षीरं पित्तरोगस्यौषधत्वेन विहितश्चेत्, यथा शीघ्रपरिग्रहस्योपयुक्तं भवति, तथो-पायान्तरेभ्योऽस्य विद्यमानेन वैलक्षण्येन चेतनस्य राग-प्राप्त उपायः 'स्वीकुरु' इति विधिप्रयुक्तश्चेत्, शीघ्रस्वी-कारस्योपयुक्तो भवति खल्वित्यर्थः ॥ ५ ॥

---

(सुशकत्वादिभिः) इत्यादिशब्दः - स्वरूपानुरूपत्वादिपरः । (रागप्राप्तस्यास्य) - अनुरागप्राप्तस्यास्य सिद्धोपायस्वीकरस्येत्यर्थः ।

(विहितश्चेत्) - वैद्यशास्त्रे विहितश्चेदित्यर्थः । (वैलक्षण्येन) सुशकत्वस्वरूपानुरूपत्वशीघ्रफलप्रदत्वादिवैलक्ष्यण्येनेत्यर्थः ॥ ५ ॥

(पूर्वार्धपदसङ्ख्यामाह) इति - "एकादशपदा वानुष्टुब्भ-वति" इति नृसिंहतापनीयोपनिषदि नृसिंहमन्त्रप्रकरणे "उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्" इति श्री-नृसिंहचरमश्लोकस्य एकादशपदात्मकत्वेन कथनात्, अस्यापि शेषसंहिता-दिषु कृष्णानुष्टुब्मन्त्रत्वेन प्रतिपादनात्, एकादशपदत्वं सिद्धमित्यभिप्रेत्य पूर्वार्धमात्रस्यैव पदसङ्ख्यामाहेत्यर्थः ।

(६) इतःपरमस्य प्रतिपदार्थं वक्तुं पूर्वार्धपदसङ्ख्यामाह—अत्र पूर्वार्धे षट्पदमिति ।

मू॥ इदिल् पूर्वार्धमारुपदम् ॥ ६ ॥

छा॥ अत्र पूर्वार्धे षट्पदम्॥ ६ ॥

(७) अत्र प्रथमपदमुपादत्ते - सर्वधर्मानिति ।

मू ॥ सर्वधर्मान्॥ ७॥

छा ॥ सर्वधर्मान् ॥ ७॥

(८) तस्यार्थमाह—सर्वान्धर्मांश्चेति ।

मू ॥ एल्लाधर्मङ्गलैयुम् ॥ ८ ॥

छा ॥ सर्वान्धर्मांश्च ॥ ८ ॥

(९) अस्य - धर्मशब्दबहुवचनसर्वशब्दरूपेण त्र्यंशत्वात्, एतत्त्रयाणामपि अर्थं वक्तुं, प्रथमं धर्मलक्षणमाह - धर्मो नामेति ।

मू ॥ धर्ममावदु - फलसाधनमायिरुक्कुमदु ॥ ९ ॥

छा ॥ धर्मो नाम-फलसाधनभूतः ॥ ९ ॥

---

सूते - श्रीनृसिंहचरमश्लोकादिव्यावृत्त्यर्थं - अत्रेति पदम् । श्रीनृसिंहमन्त्रे तु पूर्वार्धस्य पदपञ्चकरूपत्वेन, उत्तरार्धस्य षट्पदत्वेन च विद्यमानत्वात् । उत्तरार्धन्तु पदपञ्चकरूपमिति कुमारवरदाचार्यप्रभृतयः । "पदत्रयात्मकं पूर्वं षड्द्वादशपदं द्वयम् । व्याख्याव्याख्येयरूपत्वं तत्रैषामुपपद्यते" इत्याहुः । न च माङ उपपदत्वान्नित्यसमासश्शङ्कनीयः । "अतिङ्" (पाणिनीये - ३-२-१९।।) इति निषेधात् । पदपंचकमिति रम्यजामातृदेवाः । "सह" (पाणि-२-१-४।।) इति योगविभागात् 'पर्यभूषयत्' इत्यादिवत्समासः । नास्तीत्येकं पदमित्यादिव्यवहारदर्शनादिति तदाशयः । "ते प्राग्धातोः"

(१०) धर्मशब्दस्य दृष्टफलसाधनेषु च व्याप्तत्वात्, तद्व्यावर्तयति - अत्रोक्तो धर्मशब्द इति।

मू॥ इङ्ग्चोल्लुहिर धर्मशब्दम् - दृष्टफलसाधनङ्गलै च्चोल्लुहै अन्त्रिक्के, मोक्षफलसाधनङ्गलैच्चोल्लुहिरदु॥ १०

छा॥ अत्रोक्तो धर्मशब्दः - न दृष्टफलसाधनानि वदति, किन्तु मोक्षफलसाधनानि वदति॥ १०॥

व्या॥ पूर्वमुपायोपदेशसमय एव दृष्टफलसाधनानां व्यावृत्तत्वात्, मोक्षोपायोपदेशप्रकरणाच्चात्रोक्तो धर्म-

---

(पाणि-१-४-८०॥) इत्यादिना प्रयोगनियमे अनुशिष्यमाणेऽपि हीनपदानां प्रयोगनियमश्शास्त्रेण क्रियते" इति पतञ्जलिनोक्तम्। "चतुर्विधे पदे चात्र द्विविधस्यात्र निर्णयः। क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः॥ तयोरर्थाभिधाने हि व्यापारो नैव विद्यते। यदर्थद्योतकौ द्वौ तु वाचकस्स विचार्यते" इति कौमारिलोक्तरीत्या चादिषु पठितस्य माङो निपातत्वेन द्योतकतया 'शुचः' इत्यस्यैव शोकप्रतिषेधाभिधायित्वम्। माङ्शब्दो द्योतकपरो निपातवाचक इति पक्षमाश्रित्य समभिव्याहारेण एकादशपदव्यवहारस्समञ्जसः" इति तात्पर्यचन्द्रिकादिषूक्तार्थोऽत्रानुसन्धेयः॥ ६॥

(धर्मशब्दस्य दृष्टफलसाधनेषु च व्याप्तत्वात्) इति- धर्मत्वं नालौकिकफलसाधनत्वमात्रम्। कारीर्यादीनां लौकिकत्वात्। नाप्यदृष्टद्वारा, साक्षात्सुखोल्लासहेतुभूते दीपारोपणादौ धर्मत्वं न स्यात्। किन्तु शास्त्रैकगम्यफलसाधनताकम् - इति भावः।

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः। वेदवादरताःपार्थ नान्यदस्तीतिवादिनः॥ कामात्मानस्स्वर्गपरा जन्मकर्मफलप्रदाम्। क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति॥ भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम्। व्यवसायात्मिका बुद्धिस्समाधौ न विधीयते" (गीता-२-४२, ४३, ४४॥) इत्यादिकमभिप्रेत्याह—पूर्वमुपायोपादेशसमय एवेत्यादि॥ १०॥

शब्दः - पुत्रपश्वन्नाद्यैहिकफलस्वर्गाद्यामुष्मिकफलरूप-दृष्टफलसाधनानि न प्रतिपादयति, किन्तु भगवत्प्राप्ति-रूपमोक्षसाधनानि वदतीत्यर्थः ॥ १० ॥

(११) इतःपरं बहुवचनार्थमाह - ते चेति ।

मू ॥ अवैदान् - श्रुतिस्मृतिविहितङ्गलाय् पलवायि-रुक्कैयाले बहुवचनप्रयोगम्पण्णुहिरदु ॥ ११ ॥

छा ॥ ते च - श्रुतिस्मृतिविहिताः, बहुविधा इति बहु-वचनप्रयोगःकृतः ॥ ११ ॥

व्या ॥ तादृशमोक्षफलसाधनानि उपबृंह्योपबृंहणरूप-श्रुतिस्मृतिभिर्विहितानि बहूनि, अतः 'धर्मान्' इति बहु-वचयप्रयोगःकृत इत्यर्थः ॥ ११ ॥

(१२) एवं स्थितास्ते के इत्यत आह—ते चेति ॥

मू ॥ अवैयावन - कर्मज्ञानभक्तियोगङ्गलुम्, अवतार-रहस्यज्ञानम्, पुरुषोत्तमविद्यै, देशवासम्, तिरुनाम-सङ्कीर्तनम्, तिरुविलक्केरिक्कै, तिरुमालै येडुक्कै तोडक्क-मान उपायबुद्ध्या शेय्युमवैयुम् ॥ १२ ॥

छा ॥ ते च - कर्मज्ञानभक्तियोगाः, अवताररहस्यज्ञा-नम्, पुरुषोत्तमविद्या, देशवासः, श्रीनामसङ्कीर्तनम्, श्रीदीपारोपणम्, श्रीमालाधारणम्, इत्येतत्प्रभृतीनि उपायबुद्ध्या क्रियमाणानि ॥ १२ ॥

---

(तादृशे)ति-भगवत्प्राप्तिरूपमोक्षाख्यपुरुषार्थसाधनानीत्यर्थः॥ ११॥

व्या॥ पूर्वं बहुत्वेनोक्तास्ते च - "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" (गी-३-२०॥) "तस्मादसक्तस्सततं कार्यं कर्म समाचर" (गी-३-१९॥) इति स्वतन्त्रसाधनत्वेनोक्तः कर्मयोगः, "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" (गी-४-३३॥) "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" (गी-४-३७॥)

---

(कर्मणैव) इति-"यतो ज्ञानयोगाधिकारिणोऽपि कर्मयोग एवात्मदर्शने श्रेयान्। अत एव हि जनकादयो राजर्षयो ज्ञानिनामग्रेसराः कर्मयोगेनैव संसिद्धिमास्थिताः-आत्मानं प्राप्तवन्तः" इति गीताभष्यम् ।

(तस्मादि) ति-"असक्तो ह्याचरन्कर्म परमाप्नोति पुरुषः" इदमुत्तरार्धम्। अत्र भाष्यम् "यस्मादसाधनायचात्मदर्शनस्यैव साधनाप्रवृत्तिः, यस्माच्च साधने प्रवृत्तस्यापि सुशकत्वादप्रमादत्वादन्तर्गतात्मयाथात्म्यानुसन्धानत्वाच्च ज्ञानयोगिनोऽपि मात्रया कर्मानुवृत्त्यपेक्षत्वाच्च कर्मयोग एवात्मदर्शननिर्वृत्तौ श्रेयान्। तस्मादसङ्गपूर्वकं कार्यमित्येव, सततं-यावदात्मप्राप्ति, कर्मैव समाचार। 'असक्तः' 'कार्यम्' इति वक्ष्यमाणाकर्तृत्वानुसन्धानपूर्वकं च कर्माचरन्पूरुषः कर्मयोगेनैव परमाप्नोति-आत्मानं प्राप्नोतीत्यर्थः" इति।

(स्वतन्त्रसाधनत्वेने) ति-कर्मादीनां पृथङ्मोक्षोपायत्वं प्रागेव समर्थितम्।

(सर्वं कर्माखिलमि) ति-"श्रेयान्द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप" इदं पूर्वार्धम्। अत्र भाष्यम्—"अन्तर्गतज्ञानतया कर्मणो ज्ञानाकारत्वमुक्तम्; तत्रान्तर्गतज्ञाने कर्मणि ज्ञानांशस्यैव प्राधान्यमाह। उभयाकारे कर्मणि द्रव्यमयादंशात् ज्ञानमयोऽशंश्रेयान्; सर्वस्य कर्मणस्तदितरस्य चाखिलस्योपादेयस्य ज्ञाने परिसमाप्तेः; तदेव सर्वैस्साधनैः प्राप्यभूतं ज्ञानं कर्मान्तर्गतत्वेनाभ्यस्यते, तदेवाभ्यस्यमानं क्रमेण प्राप्यदशां प्रतिपद्यते" इति।

(न हि) ति-"तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति" इदमुत्तरार्धम्। अत्र भाष्यम्—"यस्मादात्मज्ञानेन सदृशं, पवित्रं-शुद्धिकरम्, इह-

"ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा" (गी-४-३७॥) इत्युक्तकर्मसाध्यज्ञानयोगः, "भक्त्या त्वनन्यया शक्यः" (गी-११-५४॥) "मन्मना भव मद्भक्तः" (गी-९-३४॥) इत्यादिभिरुक्तः कर्मज्ञानसहकृतभक्तियोगः,

---

जगति, वस्त्वन्तरं न विद्यते, तस्मादात्मज्ञानं सर्वपापं नाशयतीत्यर्थः। तत्-तथाविधं ज्ञानम्, यथोपदेशमहरहरनुष्ठीयमानज्ञानाकारकर्मयोगेन संसिद्धिः कालेन स्वात्मनि स्वयमेव लभते" इति।

(ज्ञानाग्निरि)ति "यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन" इदं पूर्वार्धम्। अत्र भाष्यम्—"सम्यक्प्रवृद्धोऽग्निरिन्धनसञ्चयमिवात्मयाथात्म्यज्ञानरूपोऽग्निर्जीवात्मगतमनादिकालप्रवृत्तानन्तकर्मसञ्चयं भस्मीकरोति" इति।

(भक्त्ये)ति "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप" इति। अत्र भाष्यम्—"अनन्यया तु भक्त्या तत्त्वतश्शास्त्रैर्ज्ञातुम्, तत्त्वतस्साक्षात्कर्तुम्, तत्त्वतः प्रवेष्टुं च शक्यः। तथा च श्रुतिः—"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति।

मन्मना भवेति "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः" इति। अत्र भाष्यम्—"मन्मना भव - मयि सर्वेश्वरेश्वरे निखिलहेयप्रत्यनीककल्याणैकताने सर्वज्ञे सत्यसङ्कल्पे निखिलजगदेककारणे परस्मिन्ब्रह्मणि पुरुषोत्तमे पुण्डरीकदलामलायताक्षे स्वच्छनीलजीमूतसङ्काशे युगपदुदितदिनकरसहस्रसदृशतेजसि लावण्यामृतमहोदधौ उदारपीवरचतुर्बाहौ अत्युज्वलपीताम्बरे अमलकिरीटमकरकुण्डलहारकेयूरकटकभूषिते अपारकारुण्यसौशील्यसौन्दर्यमाधुर्यगाम्भीर्यौदार्यवात्सल्यजलधौ अनालोचितविशेषाशेषलोकशरण्ये सर्वस्वामिनि तैलधारावदविच्छेदेन निविष्टमना भव। तदेव विशिनष्टि - मद्भक्तः - अत्यर्थमत्प्रियत्वेन युक्तो मन्मना भवेत्यर्थः। पुनरपि विशिनष्टि - मद्याजी - अनवधिकातिशयप्रियमदनुभवकारितमद्यजनपरो भव। यजनं नाम - परिपूर्णशेषवृत्तिः। औपचारिकसांस्पर्शिकाभ्यवहारिकादिसकलभोगप्रदानरूपो हि यागः। यथा मदनु-

"जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" (गी-४-९॥) इतिविरोधिनिवृत्तिपूर्वकभगवत्प्राप्तिसाधनत्वेनोक्तमवतारहस्यज्ञानम्,

---

भवजनितनिरवधिकातिशयप्रीतिकारितमद्यजनपरो भवसि, तथा मन्मना भवेत्युक्तंभवति। पुनरपि तदेव विशिनष्टि - मां नमस्कुरु - अनवधिकातिशयप्रियमदनुभवकारितात्यर्थप्रियाशेषशेषवृत्त्यावपर्यवस्यन्मय्यन्तरात्मनि अतिमात्र - प्रह्वीभावव्यवसायं कुरु । मत्परायणः - अहमेव परमयनं यस्यासौ मत्परायणः । मया विनात्मधारणासम्भावनया मदाश्रय इत्यर्थः। एवमात्मानं युक्त्वा मत्परायणस्त्वमेवमनवधिकातिशयप्रीत्या मदनुभवसमर्थं मनःप्राप्य मामेवैष्यसि। आत्मशब्दोऽत्र मनोविषयः। एवं रूपेण मनसा मां ध्यात्वा मामनुभूय मामिष्ट्वा मां नमस्कृत्य मत्परायणो मामेव प्राप्स्यसीत्यर्थः। तदेवं लौकिकानि शरीरधारणार्थानि वैदिकानि च नित्यनैमित्तिकानि कर्माणि मत्प्रीतये मच्छेषतैकरसो मयैव कारित इति कुर्वन् सततं मत्कीर्तनयतननमस्कारादिकान् प्रीत्या कुर्वाणो मन्नियाम्यं निखिलजगच्छेषतैकरसमिति चानुसन्दधानोऽत्यर्थप्रियमद्गुणगणश्चानुसन्धायाहरहरुक्तलक्षणमिदमुपासनमुपाददानो मामेव प्राप्स्यसि" इति।

(जन्मकर्मचे)ति—"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥ ६॥ यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ ७॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे॥ ८॥ जन्मकर्म च मे...... मामेति सोऽर्जुन॥ ९॥" अत्र भाष्यम्—"अवतारप्रकारं, देहयाथात्म्यं, जन्महेतुश्चाह । अजत्वाव्ययत्वसर्वेश्वरत्वादि सर्वं पारमेश्वरं प्रकारमजहदेव स्वां प्रकृतिमधिष्ठाय आत्ममायया सम्भवामि। प्रकृतिः - स्वभावः । स्वमेव स्वाभावमधिष्ठाय स्वेनैव रूपेण स्वेच्छया सम्भवामीत्यर्थः । स्वस्वरूपं हि "आदित्यवर्णं तमसःपरस्तात्" (पुरुषसूक्ते॥) "क्षयन्तमस्य रजसःपराके" (सामवेदसं-उत्तर-१७-अध्या. २-खं. ४-अनु २-वा॥)"य एषोऽन्तरादित्ये हिरण्मयःपुरुषः" (छा-उप-१-६-६॥)

"तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः" (तै-उप-शिक्षा-६-१ ।।) "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" (तै-नारा-६-१-८ ।।) "भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसः" (छा-उप-३-१४-२।।) "माहारजनं वासः" (बृ-उप-४-३-६।।) इत्यादिश्रुतिसिद्धम् । आत्ममायया - आत्मीयया मायया । "माया वयुनं ज्ञानम्" (वेदनिघण्टुः - धर्मवर्गः - ११।।) इति ज्ञानपर्यायोऽत्र मायाशब्दः । तथा चाभियुक्तप्रयोगः - "मायया सततं वेत्ति प्राणिनां च शुभाशुभम्" (भारते-अनु-२२९-६।।) इति । आत्मीयेन ज्ञानेन - आत्मसङ्कल्पेनेत्यर्थः । अतोऽपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं सर्वमैशं स्वभावमजहत्स्वमेव रूपं देवमनुष्यादिसजातीयसंस्थानं कुर्वन्नात्मसङ्कल्पेन देवादिरूपस्सम्भवामि । तदिदमाह—"अजायमानो बहुधा विजायते" (पुरुषसू।।) इति श्रुतिः । इतरपुरुषसाधारणं जन्माऽकुर्वन् देवादिरूपेण स्वसङ्कल्पेनोक्तप्रक्रियया जायत इत्यर्थः । "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन । तान्यहं वेद सर्वाणि" "तदात्मानं सृजाम्यहम्" "जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः" इति पूर्वापराविरोधाच्च ॥ ६ ॥ जन्मकालमाह । न कालनियमोऽस्मत्स्वभावस्य; यदायदा हि धर्मस्य - वेदोदितस्य चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयावस्थितस्य कर्तव्यस्य, ग्लानिर्भवति । यदायदा च तद्विपर्ययस्याधर्मस्याभ्युत्थानं, तदाहमेव स्वसङ्कल्पेनोक्तप्रकारेणात्मानं सृजामि ॥ ७ ॥ जन्मनः प्रयोजनमाह । साधवः - उक्तलक्षणधर्मशीला वैष्णवाग्रेसराः - मत्समाश्रयणे प्रवृत्ताः मन्नामकर्मस्वरूपाणां वाङ्मनसागोचरतया मद्दर्शनाद्विना स्वात्मधारणपोषणादिकमलभमानाः क्षणमात्रकालं कल्पसहस्रं मन्वानाःप्रशिथिलसर्वगात्रा भवेयुरिति मत्स्वरूपचेष्टितावलोकनालापादिदानेन तेषां परित्राणाय, तद्विपरीतानां विनाशाय च, क्षीणस्य वैदिकस्य धर्मस्य मदाराधनरूपस्याराध्यस्वरूपप्रदर्शनेन स्थापनाय च देवमनुष्यादिरूपेण युगेयुगे सम्भवामि । कृतत्रेतादियुगविशेषनियमोऽपि नास्तीत्यर्थः ॥ ८ ॥ एवं कर्ममूलहेयत्रिगुणप्रकृतिसंसर्गरूपजन्मरहितस्य सर्वेश्वरत्वसार्वज्ञसत्यसङ्कल्पत्वादिसमस्तकल्याणगुणोपेतस्य साधुपरित्राणमत्समाश्रयणैकप्रयोजनं दिव्यम् - अप्राकृतं मदसाधारणं मम जन्मचेष्टितं च तत्त्वतो यो वेत्ति, स वर्तमानदेहं परित्यज्य पुनर्जन्म नैति, मामेव प्राप्नोति । मदीयदिव्यजन्मचेष्टितयाथात्म्यविज्ञानेन विध्वस्तसमस्तमत्समाश्रयणविरोधिपापोऽ

"एतद्बुध्वा बुद्धिमांस्स्यात्कृतकृत्यश्च भारत" (गी-१५-२०॥) इत्यभिमतफललाभेन कृतकृत्यङ्करोतीत्युक्ता पुरुषोत्तमविद्या,

---

स्मिन्नेव जन्मनि यथोदितप्रकारेण मामाश्रित्य मदेकप्रियो मदेकचित्तो मामेव प्राप्नोति ॥ ९ ॥" इति ।

(एतद्बुध्वे)ति—"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥ उत्तमःपुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ १७ ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितःपुरुषोत्तमः ॥ १८ ॥ यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत॥ १९॥ इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ । एतद्बुध्वा बुद्धिमांस्स्यात्कृतकृत्यश्च भारत॥ २०॥" अत्र भाष्यम्—"अतो मत्त एव सर्ववेदानां सारभूतमर्थं शृणु । क्षरश्चाक्षरश्चेति द्वाविमौ पुरुषौ लोके प्रथितौ । तत्र क्षरशब्दनिर्दिष्टः पुरुषो जीवशब्दाभिलपनीयब्रह्मादिस्तम्बपर्यन्तक्षरणस्वभावाचित्संसृष्टसर्व-भूतानि । अत्राचित्संसर्गरूपैकोपाधिना पुरुष इत्येकत्वनिर्देशः । अक्षरशब्दनिर्दिष्टः कूटस्थः अचित्संसर्गवियुक्तः स्वेन रूपेणावस्थितो मुक्तात्मा । स त्वचित्संसर्गाभावादचित्परिणामविशेषब्रह्मादिदेहासाधारणो न भवतीति 'कूटस्थः' इत्युच्यते । अत्राप्येकत्वनिर्देशोऽचिद्वियोगरूपैकोपाधिनाभिहितः। न हीतः पूर्वमनादौ काले मुक्त एक एव । यथोक्तं "बहवो ज्ञानतपसा पूता मद्भावमागताः" (गीता-४-१० ॥) "सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" (गीता-१४-२ ॥) इति ॥ १६ ॥ उत्तमः पुरुषस्तु ताभ्यां क्षराक्षरशब्दनिर्दिष्टाभ्यां बद्धमुक्तपुरुषाभ्यामन्यः-अर्थान्तरभूतः, 'परमात्मा', इत्युदाहृतस्सर्वासु श्रुतिषु ॥ 'परमात्मा' इति निर्देशादेव ह्युत्तमः पुरुषो बद्धमुक्तपुरुषाभ्यामर्थान्तरभूत इत्यवगम्यते । कथं ? यो लोकत्रयमाविश्य बिभर्ति-लोक्यत इति लोकः, तत्त्रयम्—लोकत्रयम् । अचेतनं तत्संसृष्टश्चेतनो मुक्तश्चेति प्रमाणावगम्यमेतत्त्रयं य आत्मतया आविश्य बिभर्ति, स तस्माद्व्याप्याद्भर्तव्याच्चार्थान्तरभूतः, इतश्चोक्ताल्लोकत्रयादर्थान्तरभूतः । यतस्सोऽव्ययः, ईश्वरश्च । अव्ययस्वभावो हि व्ययस्वभावादचेतनात्तत्सम्बन्धेन तदनुसारिणश्च चेतनादचित्सम्बन्धयोग्यतया पूर्वसम्बन्धिनो मुक्ताच्चार्थान्तरभूत एव । तथै-

"देशोऽयं सर्वकामधुक्" (गारुडपु-श्रीरंगमा-१०-अ॥) इति सर्वकामफलप्रदत्वेनोक्तपुण्यक्षेत्रवासः, "सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम्" (भार-आनु-१४९-१३१॥) इति सर्वपापविमोचनपूर्वकभगवत्प्राप्तिफलत्वेनोक्तं श्रीनामसङ्कीर्तनम्,

---

तस्य लोकत्रयस्येश्वरः ईशितव्यात्तस्मादर्थान्तरभूतः ॥ १७ ॥ यस्मादेवमुक्तैस्स्वभावैः क्षरं पुरुषमतीतोऽहम्, अक्षरान्मुक्तादप्युक्तैर्हेतुभिरुत्कृष्टतमः, अतोऽहं लोके वेदे च 'पुरुषोत्तमः' इति प्रथितोऽस्मि। वेदार्थावलोकनात् 'लोके' इति स्मृतिरिहोच्यते; श्रुतौ स्मृतौ चेत्यर्थः। श्रुतौ तावत् "परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" (छा-उप-८-१२-२ ॥) इत्यादौ। स्मृतावपि "अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः" (वि-पु-५-१७-३३ ॥) इत्यादौ ॥ १८ ॥ य एवम्-उक्तेन प्रकारेण पुरुषोत्तमं माम-सम्मूढो जनाति-क्षराक्षरपुरुषाभ्यामव्ययस्वभावतया व्यापनभरणैश्वर्यादियोगेन च विसजातीयं जानाति, स सर्ववित्-मत्प्राप्त्युपायतया यद्वेदितव्यं तत्सर्वं वेद। भजति मां सर्वभावेन-येच मत्प्राप्त्युपायतया मद्भजनप्रकारा निर्दिष्टास्तैश्च सर्वैर्भजनप्रकारैर्मां भजते, सर्वैर्मद्विषयैर्वेदनैर्मम या प्रीतिर्या च मम सर्वैर्मद्विषयैर्भजनैः; उभयविधा सा प्रीतिरनेन वेदनेन मम जायते ॥ १९ ॥ इत्येतत्पुरुषोत्तमत्ववेदनं पूजयति - इत्थं मम पुरुषोत्तमत्वप्रतिपादनं सर्वेषां गुह्यानां गुह्यतममिदं शास्त्रं त्वमनघतया योग्यतम इति कृत्वा मया तवोक्तम्। एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च-मां प्रेप्सुना उपादेया या बुद्धिः, सा सर्वा उपात्ता स्यात्। यच्च तेन कर्तव्यम्, तत्सर्वं कृतं स्यादित्यर्थः। अनेन श्लोकेनानन्तरोक्तं पुरुषोत्तमविषयं ज्ञानं शास्त्रजन्यमेवैतत्सर्वं करोति, न तु साक्षात्काररूपमित्युच्यते ॥ २० ॥" इति।

**(देशोऽयमि)**ति - "भद्रं भद्रप्रदं पुण्यं तीर्थानामुत्तमं विदुः। पवित्रं परमं पुण्यं देशोऽयं सर्वकामधुक् ॥

**(सर्वपापे)**ति - "वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः। सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥

"घृतेन वाथ तैलेन दीपं यो ज्वालयेन्नरः। विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु॥ विहाय सकलं पापं सहस्रादित्यसन्निभः। ज्योतिष्मता विमानेन विष्णुलोके महीयते" (नारसिंहपु-३३-२७॥)इति पापनिवृत्तिपूर्वक भगवत्प्राप्तिसाधनत्वेनोक्तं श्रीदीपारोपणम्, एवं विरोधिनिवृत्तिपूर्वकभगवत्प्राप्तिसाधनत्वेनोक्तं श्रीमालाकैङ्कर्यम्, एतत्प्रभृतीनि साधनबुद्ध्या क्रियमाणानि तानि इत्यर्थः॥ १२॥

(१३) अथ सर्वशब्दार्थमाह - सर्वशब्देनेति।

मू॥ सर्वशब्दत्ताले अव्वो साधनविशेषङ्गलै अनुष्ठिक्कुमिडत्तिल् अवत्तुक्कु योग्यतापादकङ्गलान नित्यकर्मङ्गलैच्चोल्लुहिरदु॥ १३॥

छा॥ सर्वशब्देन तादृशसाधनविशेषानुष्ठानसमये तेषां योग्यतापादकानि नित्यकर्माण्युच्यन्ते॥ १३॥

व्या॥ धर्मविशेषणेन सर्वशब्देन बहुवचनेनोक्तता-दृशसाधनविशेषाणामनुष्ठानसमये,

---

(एतत्प्रभृतीनि) इति - देवालयमार्जनप्रदक्षिणनमस्कारादीनि उच्यन्ते। तथाचोक्तं विस्तरेण रहस्यत्रयजीवातुग्रन्थे। कैङ्कर्यबुद्ध्याक्रियमाणव्यावृत्त्यर्थं—साधनबुद्ध्येति। कर्मादीनाम्पृथगुपायत्वं प्रागेवोक्तमिति नात्र लिख्यते॥ १२॥

(धर्मविशेषणेन) - धर्मशब्दविशेषणेनेत्यर्थः। (साधनविशेषाणाम्) - कर्मादीनामित्यर्थः। "सन्ध्याहीनः" इत्यादेः - तत्तद्वर्णोचितनित्यकर्मविहीनं उक्तसाधनानुष्ठानायोग्य इति तात्पर्यम्। अवताररहस्य

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु" (दक्षस्मृ-१-२९॥) इत्युक्तप्रकारेण स्वानुष्ठानेन तेषां योग्यतासम्पादकानि सन्ध्यावन्दनपञ्चमहायज्ञादीनि नित्यकर्माणि उच्यन्त इत्यर्थः॥ १३॥

(१४) उक्तं निगमयति - एवमित्यादिना ।

मू॥ आह, 'श्रुतिस्मृतिचोदितङ्ङलाय् नित्यनैमित्तिकादिरूपङ्ङलान कर्मयोगाद्युपायङ्ङल्' एन्रपडि ॥ १४ ॥

छा॥ एवं, 'श्रुतिस्मृतिचोदितान्नित्यनैमित्तिकादिरूपान्कर्मयोगाद्युपायान्' इत्यर्थः ॥ १४ ॥

व्या॥ एवं पूर्वोक्तसर्वप्रकारेण "चोदनालक्षणोऽर्थो धर्मः" (पूर्वमी-१-१-२॥) इति 'चोदनारूपविधिवाक्यप्रमाणकोऽर्थो धर्मः' इत्युक्तत्वाच्छ्रुतिस्मृतिरूपप्रमाणविहितान्, नित्यनैमित्तिकप्रभृत्यङ्गरूपकर्मयोगाद्युपाया नित्यर्थः ॥ १४ ॥

---

ज्ञानाद्यपायानां तत्तद्वर्णाश्रमोचितनित्यकर्मानुष्ठानं योग्यतापादकमिति भावः। कर्मज्ञानभक्तिरूपोपायानां त्रैवर्णिकाधिकारत्वम्, अवताररहस्यज्ञानादीनां सर्वाधिकारत्वमिति ज्ञेयम् । (पञ्चमहायज्ञादीनि) - "ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैव च । भूतयज्ञो नृयज्ञश्च पञ्चयज्ञाःप्रकीर्तिताः" (यमस्मृतौ॥) "अध्यापनं ब्रह्मयज्ञःपितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" (गोभिलस्मृतिः- २-प्रपाठके-२७॥) इत्यादिकमिह भाव्यम् । आदिपदं दर्शादितर्पणपरम् ॥ १३ ॥

(चोदने)ति - पूर्वमीमांसासूत्रम् । अत्र धर्माधर्मयोर्लौकिकाकारहीनयोः लक्षणप्रमाणासम्भवात्, "अथातो धर्मजिज्ञासा" (पूर्वमी-१-१-१॥)

## (१५) स्वरूपविरुद्धत्वादधर्मत्वेन वक्तव्यत्वे एतान् धर्मानिति कथमाहेत्यत आह - इममित्यादिना ।

**मू॥ इवत्तै धर्ममॆन्गिरदु - भ्रमित्तवर्जुनन्करुत्ताले ॥**

**छा॥ इमं धर्ममित्युक्तिः भ्रान्तार्जुनाभिप्रायेण ॥ १५॥**

---

इति तद्विचारस्याशक्यत्वाशङ्का स्वर्गादिसाधनताख्यस्य चोदनागम्यस्याकारस्य सत्त्वात् लक्षणं सुवचमिति परिहृता । प्रवर्तनाबोधकलिङादिसमभिव्याहृतं वाक्यं चोदना, सा लक्षणं - प्रमाणं यस्य सः अर्थ धर्म इति धर्मस्वरूपनिर्वचनादिति सूत्रार्थः ॥ १४ ॥

**(स्वरूपविरुद्धत्वात्)** - भगवदत्यन्तपारतन्त्र्यस्वरूपविरुद्धत्वादित्यर्थः। **(अधर्मत्वेन)** - स्वरूपानुरूपफलस्य विरुद्धत्वेनेत्यर्थः ।

**(भगवदत्यन्ते)**ति - पारतन्त्र्यञ्च - पराधीनफलत्वपराधीनकर्तृत्वस्वरक्षणोपायप्रवृत्त्यनर्हत्वरूपेणानेकविधम् । राज्ञे भृत्यः - स्वकर्मानुगुणफलमात्रे पराधीनत्वात्परतन्त्रः । पराधीनस्वीयकृतिसाध्यसाधनप्रीतपराधीनफलकत्वात्, उपासक ईश्वरस्यातिपरतन्त्रः । पराधीनाखिलस्वव्यापाराधीनसाधनताकपराधीनफलकत्वात्, सिद्धोपायनिष्ठ ईश्वरस्यात्यन्तपरतन्त्रः । अत्यन्तपारतन्त्र्यं नाम-स्वरक्षणोपायप्रवृत्त्यनर्हत्वम् । तच्च-स्वापेक्षितप्रदात्यन्ताभिमतान्यस्वीयोपायप्रवृत्तिकजातीयत्वम् । प्रयोजनान्तरापेक्षयोपासकस्याभिमतत्वात्, तदीयोपायप्रवृत्तेरीश्वरस्याभिमततरत्वात्, बाधवारणाय - अत्यान्ताभिमतान्येति । सर्वजीवसाधारण्याय-जातीयपदम् । तच्च भगवद्भिन्नचेतनत्वम् । उपायान्तरप्रवृत्तेः, प्रपत्तेश्चाभिमत तारतम्यम्—"ममेति द्व्यक्षरो मृत्युः" (भारते-आश्व-५१-२९ ॥) इत्यादिमूलमन्त्रस्थनमश्शब्दविवरणसंहितावचनस्वारस्यात्, सिद्धोपायविधिस्थलेषु उपायान्तरप्रतिषेधस्वारस्यात्, "विष्णूपायोऽन्यफलस्सोऽधमः परिकीर्तितः । अन्योपायो विष्णुफलो मध्यमः परिकीर्तितः । माधवाङ्घ्रिद्वयोपायो माधवाङ्घ्रिप्रयोजनः । यस्स एवोत्तमःप्रोक्तो माधवेनैव तेन वै" इत्याद्युक्तमधिकारिविभाजकप्रमाणस्वारस्यात्, एकान्तिपरमैकान्तिविभागस्वारस्यात्, प्रारब्धनिवृत्त्यनुवृत्तिरूपफलतारतम्यात्, अनुबन्धिपर्यन्तफलसिद्धितदभावरूपवैषम्यात्, "नार्हन्ति शरणस्थस्य" (लक्ष्मी-

# व्या ॥ भगवदत्यन्तपारतन्त्र्यरूपोद्देश्यस्य,

तन्त्रे १७-६३ ॥) इत्यादि स्वारस्यात्, "मामेवैष्यसि" (गीता-१८-६५ ॥) "अहं+मोक्षयिष्यामि" इति भगवदुक्तिवैलक्षण्यात्, "येन त्वं बत संरब्धः" (लक्ष्मी-१७-५४ । ) "उद्धरिष्याम्यहं देवि संसारात्स्वयमेव तान्" इत्यादि-स्वारस्यात्, "अस्मिन् हि वर्तमानानां विधौ विप्रनिषेविते । पूर्वे त्वय उपायास्ते भवेयुरमनोहराः" (लन्त्रे-१७-७५ ॥) इत्यादिवचनस्वारस्यात्, "कर्मिणो ज्ञानिनो भक्तास्स्वयत्नकृतबुद्धयः । तस्मात्कर्माद्युपायास्तु सान्तराया अनेकशः" इत्यादिस्वारस्याच्च दुरुपह्नवम् ।

न च 'गुरुरूपभक्तियोगश्शक्ताधिकारः, लघुरूपप्रपत्तिस्त्वशक्ताधिकारा; तस्मादुपायान्तरनिषेधनिन्दानिकर्षप्रतिपादकवचनानि उपायान्तराशक्तानां प्रपत्तिरुच्यर्थार्थवादपराणि' इति वाच्यम् ;—जितेन्द्रियाग्रगण्यमर्जुनं प्रत्युपदिष्टत्वात्, देहावसानमोक्षहेतुसावताररहस्यचिन्तनसद्विद्यादिशक्तैः नाथयामुनयतिवरादिभिरनुष्ठितत्वाच्च प्रपत्तेरशक्तिमात्राधिकारत्वाभावात्, नानुकल्पत्वसम्भवः । अत एव भक्तेरपि न मुख्यकल्पत्वम् । अन्यत्र मुख्यानुकल्पयोः प्रतिनियतस्वभावस्य भक्तिप्रपत्त्योरसत्त्वाच्च न तयोर्गौणमुख्यभावः । अन्यत्रानुकल्पविधिस्थलेषु मुख्यप्रतिषेधस्यादर्शनात्, अत्र तद्दर्शनात्, अनुकल्पप्रवृत्तस्य मुख्याशारम्भनिमित्तप्रायश्चितादर्शनात्, अत्र तद्दर्शनाच्च मुख्यानुकल्पान्तरेषु प्रतिनियतस्वभावोऽस्य नास्ति । मुख्योपायनिष्ठस्य मध्यमाधिकारित्वम्, अनुकल्पनिष्ठस्योत्तमाधिकारित्वञ्चान्यत्रादर्शनात्, अत्र तद्दर्शनाच्च न तयोर्मुख्यानुकल्पभावस्सम्भवति । अन्यत्र मुख्याशारम्भप्रयुक्तप्रायश्चित्तविध्यभावेऽपि, इहवचनबलात्प्रायश्चित्तमावश्यकमिति चेत्; 'तत्प्रायश्चित्तवचनमेवानुकल्पत्वभञ्जकम्' इति स्यात् । तस्मात् 'उपायान्तरापेक्षया प्रपत्त्यतिशयपरवचनानि "मानसं प्रवरं स्नानम्" "मानसं विष्णुचिन्तनम्" इत्यादिवचनानीव' इति वचनमनुपपन्नम् ।

एवमुपायान्तरेषु प्रपत्तौ च विद्यमानाभिमततारतम्यस्य दुरपह्नवत्वात्, तयोर्विशिष्टाभिमतिजनकत्वतदभावरूपत्वे उचितत्वानुचितत्वे उपपन्ने इत्यभिप्रायेणाह—**भगवदत्यन्तपारतन्त्र्ये**ति । उपासनस्यापि केनचिद्रूपेणपारतन्त्र्यानुगुणत्वात्, तद्व्यावृत्त्यर्थं—**अत्यन्त**पदम् । अत्यन्तपारतन्त्र्यञ्च-

विरोधित्वादधर्मवाच्यत्वस्य प्राप्तौ सत्यामेतस्मिन्धर्मवचनम् - 'स्वधर्मभूतयुद्धोऽधर्मः' इति, 'अयं धर्मः' इति च भ्रान्तार्जुनस्य तात्पर्येणेत्यर्थः ॥ १५ ॥

(१६) एवं प्रथमपदार्थमुक्त्वा, अथ द्वितीयपदमुपादत्ते - परित्यज्येति ।

मू॥ परित्यज्य ॥ १६ ॥

छा॥ परित्यज्य ॥ १६ ॥

(१७) इदमपि 'त्यागः, ल्यप्, उपसर्गः' इति त्र्यंशमिति, तत्र त्यागवेषं प्रथममाह - त्यागो नामेति ।

मू॥ त्यागमावदु - उक्तोपाय ङ्गलै अनुसन्धित्तु 'शुक्तिकैयिले रजतबुद्धिपण्णुवारैप्पोलेयुम्, विपरीतदिशागमनं

---

पूर्वोक्तरीत्या स्वापेक्षितप्रदात्यन्ताभिमतान्यस्वीयोपायप्रवृत्तिकजातीयत्वपर्यवसितादृष्टद्वारक साधनप्रवृत्त्यनर्हत्वम् । पूर्ववत्, उपासनप्रवृत्तेः प्रयोजनान्तरपरप्रवृत्त्यपेक्षयातिशयिताभिमतिविषयत्वात्, बाधवारणाय—अत्यन्तेति-अभिमतिविशेषणम् । उपायोपेयाधिकारापेक्षितप्रवृत्तेः, उपायस्वीकारप्रवृत्तेः, कैङ्कर्यप्रवृत्तेश्चात्यन्ताभिमतिविषयत्वात्, बाधवारणाय - उपासनादिपरोपायपदम् । उपायत्वमिह - भगवदन्यत्वे सति अदृष्टद्वारकमोक्षसाधनत्वम् । 'प्रथमदलेन सिद्धोपायस्वीकारः, द्वितीयदलेनाधिकारकैङ्कर्यप्रवृत्तयश्चोचिताः' इति सिद्धम् । अत्र वक्तव्योऽर्थस्सर्वोऽपि प्रथमप्रकरण एव प्रपञ्चितः ।

(विरोधित्वात्) - अप्राप्तत्वादित्यर्थः ॥ १५ ॥

(इदमपि) - अपिस्समुच्चये । सर्वधर्मशब्दोऽत्र समुच्चयः । (त्यागवेषम्) - त्यागप्रकारमित्यर्थः ।

पण्णुवारैप्पोलेयुम्, अनुपायङ्गलिले उपायबुद्धि पण्णि-नोम्' एन्गिर बुद्धिविशेषत्तोडे त्यजिक्कै ॥ १७ ॥

छा ॥ त्यागो नाम - उक्तोपायान् अनुसन्धाय 'शुक्तौ रजतबुद्धिकर्तार इव, विपरीतदिशागमनकर्तार इव च, अनुपायेषु उपायबुद्धिं कृतवानस्मि' इति बुद्धिविशेषेण त्यजनम् ॥ १७ ॥

व्या ॥ अत्रोक्तत्यागो नाम - केवलत्यजनं न भवति, पूर्वोक्तानुपायप्रकारानुसन्धाय 'रजतभिन्नशुक्तौ रजत-बुद्धिकर्तार इव; स्वकार्यसिद्ध्युपयुक्तां काञ्चिद्दिशं गन्तु-मुद्युक्तास्तद्विपरीतदिशं तद्दिक्त्वेन ज्ञात्वा गच्छन्त इव च, 'भगवत्प्राप्त्युपायापेक्षावन्तो वयमनुपायेषूपायबुद्धिं कृतवन्तः' इति बुद्धिविशेषेण त्यजनमित्यर्थः ॥ १७ ॥

(१८) अथोपसर्गार्थमाह - परीत्यादिना ।

मू॥ 'परि' एन्गिर उपसर्गत्ताले - पातकादिहलै विडु-माप्पोले, रुचिवासनैहलोडुम्, लज्जैयोडुङ्कूड मरुवलि-डादपडि विडवेणुमेन्गिरदु॥ १८ ॥

---

(अत्र)-अस्मिन् श्लोके। (उपायप्रकारान्)-चेतनसाध्यत्वाशक्त-त्वेश्वरसापेक्षत्वादिप्रकारानित्यर्थः। (अनुपायेषु)-स्वरूपानुरूपभगवत्प्रा-प्तिसाधनाभावेषु । (उपायबुद्धिम्)-भगवत्प्राप्तिसाधनत्वबुद्धिम् । त्याग-स्वरूपमुपरिष्टादुपपादयिष्यामः ॥ १७ ॥

छा॥ 'परि' इत्युपसर्गेण - 'पातकादित्यागवत्, रुचि वासनाभ्यां लज्जया सहापुनरन्वयं त्यागःकर्तव्यः' इत्युच्यते ॥ १८ ॥

व्या॥ "परि साकल्ये" इति साकल्यपरत्वस्वीकारो न सम्भवति, तस्य सर्वशब्द उक्तत्वेनानपेक्षत्वात् । आधिक्यवाचकेन परीत्यनेनोपसर्गेण "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः" (मनु-११-५४॥) इत्युक्तपातकादीनां त्यागसमये पुनरन्वयहेतुभूतरुचिवासनाभ्यां सह 'अस्माभिरिदं किमिति कृतम्' इति लज्जितस्सन् यथा त्यजति तथा "अथ पातकभीतस्त्वम्" (विष्णुध-६६-७१॥) इति धर्मदेवतया पातकत्वेनोक्तानामुपायान्तराणां त्यागसमये बुद्धिपूर्वकं,

---

(पातकादीनाम्)-आदिपदमुपपातकपरम् । दार्ष्टान्तिके उपायान्तराणां पातकत्वे प्रमाणं दर्शयति—(अथ पातकभीतस्त्वम्)-इति । पदेपदे राजसूयादिकर्तुर्धर्मपुत्रस्यान्यपातकत्वाभावात्, "गतौचापि वर्तते मे महद्भयम्" (जितन्ता-१-९॥) इत्युक्तरीत्या भयजनकत्वेनोक्तोपायान्तराणामेव अत्यन्तपारतन्त्र्यलक्षणस्वरूपहानिरूपानिष्टावहत्वेन पापशब्दमुख्यार्थत्वं सम्भवतीत्यभिप्रायेणाह—धर्मदेवतया पातकत्वेनोक्तानामुपायान्तराणामिति ।

(धर्मदेवतये)ति - श्रीविष्णुधर्मे षट्षष्ठितमेऽध्याये - "शतानीकः ॥ श्रुतं मया यथा पूर्वमार्यको मे युधिष्ठिरः । सशरीरो गतस्स्वर्गं जितमात्मीयकर्मभिः ॥ १७ ॥ यथैतद्भगवानाह स यथा पाण्डुपूर्वजः । धर्मोप-

देशाद्गोविन्दमाराधयत तद्वद ॥ १७ ॥ **शौनकः ॥** पुरा शासति धर्मज्ञे धर्मपुत्रे युधिष्ठिरे । तस्यैव वैश्वदेवान्ते चण्डालोऽभ्यागमत्किल ॥ १९ ॥ स उपेत्य गृहं तस्य धर्मपुत्रस्य धीमतः । उवाच श्वपचो द्वारे मश्रयावनतस्थितः ॥ २० ॥ **चण्डालः ॥** कस्यैतद्भवनं दिव्यं मणिरत्नविभूषितम् । शुद्धस्फटिकसोपानं मणिकाञ्चनतोरणम् ॥ २१ ॥ **प्रतिहारः ॥** अष्टाशीतिसहस्राणि ब्राह्मणानां दिनेदिने । युधिष्ठिरमृते भूपं कस्य वेश्मनि भुञ्जते ॥ २२ ॥ कथमेतं न जानीषे चन्द्रबिम्बमिवापरम् । युधिष्ठिरस्य भवनं देवराजगृहोपमम् ॥ २३ ॥ **चण्डालः ॥** अबलस्य बलंराजा बालस्य रुदितं बलम् । बलं मूर्खस्य वै मौनं तस्करस्यानृतं बलम् ॥ २४ ॥ गच्छ जल्पस्व राजानं प्रतीहार वचो मम । दुःखार्तःकार्यवान् राजन् चण्डालो द्वारि तिष्ठति ॥ २५ ॥ **शौनकः ॥** इत्युक्तो धर्मराजस्य प्रतीहारो यथोदितम् । निवेदयामास च तं धर्मराजोऽब्रवीदिदम् ॥ २६ ॥ **युधिष्ठिरः ॥** किं रूपं कीदृशं शीलं कश्चार्थः किं प्रयोजनम् । ब्रूहि द्वास्थ यथावन्मे नरस्तिष्ठति कीदृशः ॥ २७ ॥ **प्रतीहारः ॥** काककोकिलवर्णाङ्गो मग्नवासोऽरुणेक्षणः । यवमध्यकुशग्रीवो वक्रपादो महाहनुः ॥ २८ ॥ **युधिष्ठिरः ॥** ब्रूहि गच्छ दुरात्मानं चण्डालं पापकर्मिणम् । देवकार्यस्य वेलायां कुतस्त्वं प्रत्युपस्थितः ॥ २९ ॥ चण्डालं पतितं दृष्ट्वा नरः पश्येत भास्करम् । स्नातस्त्वेतान्समालोक्य सचेलस्नानमर्हति ॥ ३० ॥ **शौनकः ॥** इत्याज्ञप्ते तथोक्तस्तु चण्डालस्तेन वै ततः । प्रत्युवाच प्रतीहारमीषन्मन्युपरिप्लुतः ॥ ३१ ॥ **चण्डालः ॥** किं देवकार्येण नराधिपस्य कृत्वा हि मन्युं विषये स्थितानाम् । तदेवकार्यं स च यज्ञहोमो यदश्रुपाता न पतन्ति राष्ट्रे ॥ ३२ ॥ पापिनः किं विचारेण गुणवन्निर्गुणेष्वपि । समं वर्षति पर्जन्यस्सस्येष्वपि तृणेष्वपि ॥ ३३ ॥ निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः । न हि संहरते ज्योत्स्नां चन्द्रश्चण्डालवेश्मसु ॥ ३४ ॥ इत्येतद्वचनं श्रुत्वा निर्जगाम युधिष्ठिरः । प्रत्युवाच च चण्डालमीषत्कोपसमन्वितः ॥ ३५ ॥ **युधिष्ठिरः ॥** कुतस्ते भयमुत्पन्नं येन त्वं गृहमागतः । आबाधाकारणं सर्वं

यथावत्कथयस्व मे ॥ ३६ ॥ **चण्डालः ॥** न भुञ्जते ब्राह्मणा मे सर्वश्चो-
द्विजते जनः । प्राणिहिंसा च नोच्चैर्विर्देवा मुष्णन्ति मा नृप ॥ ३७ ॥ अनेक-
जन्मसाहस्रीं प्राप्य संसारपद्धतिम् । मनुष्यैः कुत्सितां जातिमापन्नो मुषितोऽस्मि
भोः ॥ ३८ ॥ कर्मभूमिमिमां राजन् प्रार्थयन्ति दिवौकसः । तां सम्प्राप्य
वृथा जन्म मुष्टोऽस्मि कुरुसत्तम ॥ ३९ ॥ दुःखे दुःखाधिकान्पश्येत्सुखे पश्ये-
त्सुखाधिकान् । आत्मानं शोकहर्षाभ्यां शत्रुभ्यामिव नार्चयेत् ॥ ४० ॥
सोऽहमिच्छामि विज्ञातुमपि दुष्कृतकर्मकृत् । वक्तुमर्हसि धर्मज्ञ कःपापिष्ठतरो
मया ॥ ४१ ॥ चण्डालो ह्यभवं राजन् सर्ववर्णबहिष्कृतः । अभक्ष्यं नास्ति
मे किञ्चित्कःपापिष्ठतरो मया ॥ ४२ ॥ **युधिष्ठिरः ॥** अध्वना सुपरि-
श्रान्तं ब्राह्मणं गृहमागतम् । अनर्चयित्वा यो भुङ्क्ते स पापिष्ठतरस्त्वया ॥ ४३ ॥
मातरं पितरञ्चैव विकलञ्चेलदुर्लभम् । यो नाभ्युद्धरते पुत्रः स पापिष्ठतर-
स्त्वया ॥ ४४ ॥ गोगणस्य तृषार्तस्य जलार्थमभिधावतः । विघ्नमाचरते
यस्तु स पापिष्ठतरस्त्वया ॥ ४५ ॥ विवाहयित्वा यःकन्यां कुलजां शील-
मण्डनाम् । विना त्यजति दोषेण स पापिष्ठतरस्त्वया ॥ ४६ ॥ आशाकरस्त्व-
दाता यो दातुश्च प्रतिषेधकः । दत्तं च यःकीर्तयति स पापिष्ठतरस्त्वया ॥
४७ ॥ बहुपुत्रैर्दरिद्रैश्च धने सति नरोत्तमैः । याचितो न प्रयच्छेद्यः स पापिष्ठ-
तरस्त्वया ॥ ४८ ॥ ब्राह्मणः क्षत्रियो वापि वैश्यश्शूद्रोऽपि वा पुनः । स्वधर्मं
सन्त्यजेद्यस्तु स पापिष्ठतरस्त्वया ॥ ४९ ॥ **चण्डालः ॥** कृतार्थोऽहं गमि-
ष्यामि यशो धर्ममवाप्नु हि । तुष्टोऽस्म्यहं महाराज मत्तःश्रोक्तास्त्वयाधमाः ॥
५० ॥ **युधिष्ठिरः ॥** देवतानामृषीणाञ्च पितृणाञ्च कृतं मया । साम्प्रतं देश-
कालोऽयं त्वमेवात्र भवातिथिः ॥ ५१ ॥ **चण्डालः ॥** चण्डालोऽहं महा-
राज पतितो लोकवर्जितः । कथन्नु हीनो वर्णेभ्यो भोक्ष्यामि भवतो गृहे ॥
५२ ॥ **युधिष्ठिरः ॥** चण्डालो भव पापो वा शत्रुर्वा पितृघातकः । देशका-
लेऽभ्युपगतं भरणीयं हि वेद्म्यहम् ॥ ५३ ॥ **चण्डालः ॥** दशसूना सम-
श्चक्री दशचक्री समो ध्वजी । दशध्वजि समा वेश्या दशवेश्यासमो नृपः ॥ ५४ ॥
दशसूना सहस्राणि यो वा हयति सौनिकः ॥ तेन तुल्यस्स्मृतो राजा घोर-
स्तस्य प्रतिग्रहः ॥ ५५ ॥ **युधिष्ठिरः ॥** नानागोत्राभिवरणा भुञ्जते ब्राह्म-

णा मम। न ते वदन्ति वाग्दुष्टं यथैतत्कीर्तितन्त्वया ॥ ५६ ॥ **चण्डालः ॥**
लोभात्मानो न जानीयुः ब्राह्मणा राजकिल्बिषम् । वरं श्वमांसमत्तुं वै न तु राजपरिग्रहः ॥ ५७ ॥ राजकिल्बिषदग्धानां ब्राह्मणानां युधिष्ठिर। स्विन्नानामिव बीजानां पुनर्जन्म न विद्यते ॥ ५८ ॥ राजप्रतिग्रहो राजन् मध्वास्वादो विषोपमः। बुधेन परिहर्तव्यश्श्वमांसस्येव भक्षणम् ॥ ५९ ॥ अधीत्य चतुरो वेदान् सर्वशास्त्रार्थतत्त्ववित् । नरेन्द्रभवने भुक्त्वा विष्टायां जायते क्रिमिः ॥ ६० ॥ **युधिष्ठिरः ॥** निन्दसे सर्वराजानः न चात्मानं प्रशंससि। भवानुपेन्द्रश्शक्रो वा शर्वो वा त्वं पिनाकिधृत् ॥ ६१ ॥ अथवा नीचरूपेण पितानस्त्वमिहागतः। **धर्मः ॥** ज्ञातोऽस्मि पृथिवीपाल तुष्टश्च तव दर्शनात् ॥ ६२ ॥ नन्दन्तु भूमिभागास्ते येषां त्वमवनीपतिः। निर्जित्य परसैन्यानि क्षितिं धर्मेण पालय ॥ ६३ ॥ स्वल्पायामपि वेलायामागोनिन्दायितं मनः। **युधिष्ठिरः ॥** किं मे राज्येन भो तात विषयैर्जीवितेन वा॥६४॥ यो हि सूनासहस्रैस्तु दशभिः परिवेष्टितः। **धर्मः ॥** मा विषादं कुरुश्रेष्ठ सम्पैहि युधिष्ठिर ॥ ६५ ॥ यज्ञेशं यज्ञपुरुषं त्वं वै विष्णुं समाश्रितः। येषां न विषये विप्राः यज्ञैर्यज्ञपतिं हरिम् ॥ ६६ ॥ यजन्ति भूभुजां तेषामेतत्सूनोदितं फलम्। येषां पाषण्डसंकीर्णं न राष्ट्रं ब्राह्मणोत्कटम् ॥ ६७ ॥ ते तत्सूनासहस्राणां दशानां भागिनस्त्वया। येषां न यज्ञपुरुषः कारणं पुरुषोत्तमः॥ ६८ ॥ ते तु पापसमाचारास्सूना पापौघभागिनः। त्वन्तु मत्प्रभवस्तात विष्णुभक्तस्तथैव च ॥ ६९ ॥ इष्टिर्वैश्वानरी पापमपहास्यति तेऽखिलम् । सत्वं वरय भद्रं ते वरं यन्मनसेच्छसि ॥ ७० ॥ सम्यक्श्रद्धा समाचारादहमाराधितस्त्वया। अथ पातकभीतस्त्वं सर्वभावेन भारत ॥ ८१ ॥ विमुक्तान्यसमारम्भो नारायणपरो भाव। परःपराणामाद्यो यो योगिध्येयो जनार्दनः॥ ७२॥ तदर्थं चापि कर्माणि कुर्वन्पापं व्यपोहति। लोभादिव्याप्तहृदयो यःपापं कुरुते नरः ॥ ७३ ॥ विलयं याति तत्सर्वमच्युते हृदयस्थिते । शमायालं जलंवह्नेस्तमसो भास्करोदयः ॥ ७४ ॥ शान्तिःकलेरघौघस्य नामसङ्कीर्तनं हरेः।
**युधिष्ठिरः ॥** प्रसन्नो यदिमे तात तवार्हो यदि वाप्यहम् ॥ ७५ ॥ वरं तदेकमेवैतत्प्राप्तुमिच्छाम्यहं ततः। जाग्रत्स्वप्नसुषुप्तेषु योगस्थस्यं सदा मम॥ ७६ ॥

तेषु प्रवृत्तेर्हेतुभूता रुचिः,अबुद्धिपूर्वकान्वयोपयुक्ता वासना, ताभ्यां सह 'भगवदेकसाधनैकवेषस्य स्वरूपस्यात्यन्तविरुद्धानेतान्किमिति कुर्महे' इति लज्जासहितस्सन् पुनस्तत्रान्वयो यथा न स्यात्तथा त्यागःकर्तव्य इत्युच्यत इत्यर्थः ॥ १८ ॥

(१९) अथ ल्यबर्थमाह—ल्यपेति ।

मू ॥ ल्यप्पाले "स्नात्वा भुञ्जीत" एन्नुमाप्पोले उपायान्तरङ्गलै विट्टे पत्तवेणुमेन्गिरदु ॥ १९ ॥

छा ॥ ल्यपा "स्नात्वा भुञ्जीत" इतिवत् उपायान्तराणि त्यक्त्वैवाश्रयणं कर्तव्यमित्युच्यते ॥ १९ ॥

व्या॥ 'त्यज्य' इतिल्यपा "भुक्त्वा चान्द्रायणं चरेत्" (भार-आश्व-वैष्णवध-९७-१४॥)इत्येवं न भवति, किन्तु

---

या काचिन्मनसो वृत्तिस्सा भवत्यच्युताश्रया । या या जायेत मे बुद्धिर्यावज्जीवाम्यहं ततः ॥ ७७ ॥ सा सा छिनत्तु सन्देहान् कृष्णाप्तेःपरिपन्थिनः । यथा गोविन्दमाराध्य सशरीरस्सुरालयम् ॥ ७८ ॥ प्राप्नुयामि यथा तात प्रयच्छ प्रवरं वरम् । **धर्मः** ॥ एवमेतदशेषं ते मत्प्रसादाद्भविष्यति ॥ ७९ ॥ नास्ति गोविन्दभक्तानां वाञ्छितं भुवि दुर्लभम् । **श्री शौनकः** ॥ इति धर्मोपदेशेन सर्वदेववरं हरिम् । आराध्य पाण्डवो यातस्सशरीरस्सुरालयम् ॥ ८० ॥" इति ।

**(तेषु)** - उपायान्तरेषु । **(भगवदेके)**ति - एकशब्देन साधनान्तरं व्यवच्छिद्यते । **(साधनैके)**ति - एकशब्दः - ज्ञातृत्वादिव्यवच्छेदपरः ॥ १८ ॥

**(इत्येवं न भवति)** इति - "भुक्त्वा चान्द्रायणं चरेत्" इत्यत्रानुवादस्य दर्शनात्, तद्वदत्र ल्यपानुवाद उच्यत इति भावः । 'सर्वधर्मान्

"स्नात्वा भुञ्जीत" इति विधिर्भोजनकरणसमये 'स्नानं कृत्वैव भोजनं कर्तव्यम्'इति नियमयति, तथा सिद्धोपाय-परिग्रहसमये त्याज्यानि उपायान्तराणि त्यक्त्वैव परिग्रहः कार्य इति नियम उच्यत इत्यर्थः ॥ १९ ॥

(२०) एवं त्यक्त्वैवाश्रयणीय इत्यस्य तात्पर्यमाह—चचालेत्यादिना ।

मू॥ "चचाल चापं च मुमोच वीरः" एन्गिरपडियें इवै अनुपायङ्गलानमात्रमन्निक्के कालकट्टेन्गिरदु॥ २० ॥

छा॥ "चचाल चापं च मुमोच वीरः" इत्युक्तप्रकारेणेदमनुपायमात्रमेव न भवति, किन्तु पादबन्धनमित्युच्यते॥ २० ॥

व्या॥ "यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा । स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः" (रामा-यु-५६-१४०) इत्यस्मिन्श्लोके 'रावणे रामशरैर्भृशं पीडिते स्थितिभ्रष्टेगमनेमतिं कुर्वति हस्ते धनुस्सद्भावपर्यन्तं स्वामी गमनं प्रत्यबध्नात्, पश्चा-

परित्यज्य" इतिल्यपा शरणवरणस्य त्यागोत्तरकालीनत्वदर्शनात् शरणवरणस्य सर्वधर्मपरित्यागपूर्वकत्वनियमोऽवगम्यते । अनुवादपक्षे तु नियमो नोपपद्यत इति हृदयम् ॥ १९ ॥

(यः) इति - पुरा । वज्रपातयुक्ताशनिसन्निपातादिमध्यमपदलोपि समासः । वज्रम् - इन्द्रायुधम् । अशनिः - औत्पातिकः । न चुक्षुभे - नार्तिं प्राप्तः । नापि चचाल - नार्तिनिमित्तं चलनं प्राप्तः । राजा-अन्यूनराजभावश्च

स्यक्तस्य धनुषो हस्ते सद्भावदशायां प्रतिपक्षजयस्य साधनं नाभवदित्येतावदेव न, किन्तु "गच्छानुजानामि" (रामा-यु-५९-१४४॥) इति पश्चात्कृतानुमतेः स्वामिना पूर्वमकृतत्वात् गमनविरोधितया पादबन्धनमेव जातम्' इत्युक्तप्रकारेण उपायान्तरेष्वेतेषु ईषदन्वयो न केवलं फलस्यासाधनम्, अपि तु फलस्य प्रतिबन्धको भवति' इत्यर्थः॥ २०॥

(२१) किञ्चात्रान्वयः फलालाभस्य प्रयोजको भवतीत्यमुमर्थं सदृष्टान्तमाह - चक्रवर्तिवदिति।

मू॥ चक्रवर्तियैप्पोले इलक्कैक्कुरुप्पु॥ २१॥

छा॥ चक्रवर्तिवत् च्युत्युपयुक्तः॥ २१॥

व्या॥ 'पूर्वमेव वरप्रदानं कृत्वा इदानीमसत्यं वक्तुं न शक्यम्' इत्याभासरूपसत्यधर्ममवलम्ब्य स्थितः "रामो विग्रहवान्धर्मः" (रामा-आर-३७-१३॥) इत्युक्तस्वामिनासहावस्थानरूपोज्जीवनरूपपुरुषार्थाच्च्युतश्चक्र-

---

स्थितः। सः रामबाणाभिहतः, भृशार्तः-भृशमार्तः, क्षुब्धः। चचाल। वीरोऽपि चापं मुमोच। स्वस्य स्वरक्ष्यत्वात् स्वयंत्यक्तवान्, रामैकरक्ष्यत्वद्योतनाय।

(गच्छे)ति - "गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचर राज लङ्काम्। आश्वास्य निर्याहि रथी च धन्वी तदा बलं द्रक्ष्यसि मे रथस्थः" इति। रिपौ पुरो विलसति कथं गच्छेयमित्यत्राह - अनुजानामि इति। रणार्दितः - युद्धे श्रान्तः। रात्रिंचर राज - कूटयोधिन्निति सापहासोक्तिः। आश्वास्य - विश्रम्य। रथी धन्वीच सन्निर्याहि। स त्वं तदा - तादृशं मे बलं रथस्थ इत्युपलक्षणम्। धानुष्कश्चसन्द्रक्ष्यसीत्यन्वयः॥ २०॥

वर्तीव आभासरूपोपायान्तरेषु अन्वयः "कृष्णं धर्मं सनातनम्" (भार-वनप-८६-२६॥) इति सनातनधर्मभूतभगवद्विषयेनोज्जीवनरूपपुरुषार्थाच्च्युतेःप्रयोजको भवतीत्यर्थः ॥ २१ ॥

(२२) अथात्रोक्तं सर्वधर्मपरित्यागतात्पर्यमजानद्भिरुक्तं दूषणं परिहर्तुं तत्पक्षमुत्क्षिपति-सर्वधर्मानित्यादिना।

मू॥ 'सर्वधर्मङ्ग्लैयुं विट्टु' एन्रु चोल्लुकैयाले शिलरधर्मङ्गल्पुट्टुरुमेन्राहैल् ॥ २२ ॥

छा॥ 'सर्वधर्मान्त्यक्त्वा' इत्युक्तत्वात् केचिदधर्माणामवकाशमित्याहुः ॥ २२ ॥

व्या॥ त्याज्यानामेव धर्माणां 'इदं कुरु' 'इदं माकार्षीः' इति विधिनिषेधात्मकत्वात्, 'सर्वधर्मान्परित्यज्य' इति कथनात् विहितानुष्ठानवत् निषिद्धपरिहारोऽपि त्यागविषयस्स्यात्, तदा पिहिते कपाटे उद्घाटिते निहीनपदार्थानुप्रवेशनवत् अधर्मभूतनिषिद्धप्रवृत्तयःप्रविष्टास्स्युरिति केचिद्वदन्तीत्यर्थः ॥ २२ ॥

---

सत्यादिधर्माणां दृष्टफलसाधनत्वात्, भगवत्प्राप्तेरसाधनत्वाच्च—**आभासरूपे**त्युक्तम्। (**कृष्णम्**) इति - संनातनम् - नित्यसिद्धम्। स्वरूपसनातनत्वस्य सर्वात्मसाधारणत्वात्, अत्र तत्कथनं नातिप्रयोजनम्। तस्मात्, 'महाशूरः' इत्यादिषु महत्त्वस्य शौर्यादिष्विव, अत्र सनातनत्वं धर्मविशेषणम्। तच्च नित्यसिद्धम्, न तु चेतनयत्नादिसाध्यम्। धर्मत्वम् - अदृष्टद्वारकमोक्षसाधनत्वम्, यस्य तथा विधमिति लभ्यते। तदाह—**सनातनधर्मभूते**ति ॥२१॥

(२३) तं परिहरति—स नभवेदिति ।

मू॥ अदु कूडादु, 'अधर्मङ्गलैच्चेय्ये' शोल्लामैयाले॥

छा॥ स न भवेत्, 'अधर्मान्कुरु' इत्यनुक्तत्वात्॥

व्या॥ सर्वधर्मत्यागकथनात् अधर्माः प्रविशेयुरिति न सम्भाव्यते, 'धर्मान्त्यज' इत्युक्तिमात्रेण 'अधर्मान्कुरु' इत्यनुक्तत्वादित्यर्थः॥ २३॥

(२४) अधर्मनिवृत्तेरपि धर्मशब्दवाच्यत्वात् 'तं त्यज' इत्युक्ते 'अधर्मान्कुरु' इत्यर्थादुक्त एवेति प्रतिवाद्युक्तिमनुवदति—स्वत इति ।

मू॥ तन्नडैये शोल्लित्ताहादो एन्निल्॥ २४॥

छा॥ स्वत एवोक्तो न भवति किमिति चेत्॥ २४॥

(२५) तस्योत्तरमाह—न भवतीत्यादिना ।

मू॥ आहादु, धर्मशब्दमधर्मनिवृत्तियैक्काट्टामैयाले॥

छा॥ न भवति, धर्मशब्दस्याधर्मनिवृत्तिप्रकाशकत्वाभावात्॥ २५॥

व्या॥ धर्मत्यागं वदतानेन 'अधर्मान्कुरु' इत्यर्थस्स्वत एवोक्तो न भवति, धर्मशब्दस्याधर्मनिवृत्त्याद्यङ्गसहितप्रधानभूतविहितानुष्ठानस्य प्रतिपादकत्वात्,

---

(अर्थात्) इति-निवृत्तिनिवृत्तेः प्रवृत्तिरूपत्वात्, निवृत्तिनिवृत्तिरूपार्थबलादित्यर्थः॥ २४॥

(अधर्मनिवृत्त्याद्यङ्ग)ति—आदिना प्रवृत्तिरूपाङ्गान्युच्यन्ते।

(प्रधानभूतविहितानुष्ठानस्य)-धर्मशब्दवाच्येषु प्रधानभूताङ्गिरूप-

सामान्येनाधर्मनिवृत्तिमात्रस्याप्रकाशकत्वादित्यर्थः ॥ २५ ॥

(२६) अधर्मनिवृत्तेर्मुख्यतया धर्मशब्दवाच्यत्वाभावेऽपि सर्वशब्दसाहित्येन धर्मशब्दो विशेषणभूताधर्मनिवृत्तिं न प्रकाशयति किमित्यत आह—प्रदर्शयत्यपीत्यादिना।

मू॥ काट्टिनालुमत्तैयोलिन्दवत्तैच्चोल्लित्तामित्तनै॥२५॥

छा॥ प्रदर्शयत्यपि तद्व्यतिरिक्तं वदति॥ २६ ॥

व्या॥ एवं प्रदर्शयत्यपि तस्यात्राविवक्षितत्वात् तद्व्यतिरिक्तविहितानुष्ठानरूपधर्मान्प्रतिपादयतीत्यर्थः।२६

(२७) 'अत्रैवं तात्पर्यकल्पनं केन हेतुना' इत्यत आह-स्वमित्यादिना।

मू॥ तन्नैयुम्, ईश्वरनैयुम्, फलत्तैयुं पार्ताल् अवै पुहुरवलियिल्लै ॥ २७ ॥

---

प्रवृत्तिधर्मानुष्ठानस्येत्यर्थः। धर्माणां प्राधान्यम्-अव्यवधानेन फलजनकत्वम्। (सामान्येन)-इति-धर्मत्वेनेत्यर्थः ॥ २५ ॥

(एवम्)-धर्मविशेषणत्वेन। (प्रदर्शयत्यपि)—धर्मशब्दस्याधर्मनिवृत्तेर्वाचकत्वेपीत्यर्थः।(अत्र)-सर्वधर्मपरित्यागपूर्वकसिद्धोपायवरणस्थले। (अविवक्षितत्वात्)-सिद्धोपायस्य निरपेक्षत्वभञ्जकतया प्रवृत्तिधर्माणामिव त्याज्यतयाविवक्षितत्वादित्यर्थः। धर्मनिवृत्तिवत् अधर्मनिवृत्तिरपि चेतनप्रयत्नसामान्यनिरपेक्षभूतेश्वरस्य निरपेक्षोपायत्वस्यात्यन्तान्तरङ्गत्वात् अपेक्षितेति भावः ॥ २६ ॥

छा॥ स्वम्, ईश्वरम्, फलञ्च पश्यति चेत् तत्प्रवेशमार्गो नास्ति ॥ २७ ॥

व्या॥ अधर्मानुष्ठानस्य शेषिण अनिष्टत्वात् तस्यातिशयकरणस्वरूपत्वादनिष्टकरणस्याप्राप्तस्वरूपं स्वं पश्यति चेत्, सहायान्तरसंसर्गासहतया चेतने स्वयत्ननिवृत्तिव्यतिरिक्तप्रवृत्त्यंशानपेक्षोपायभूतमीश्वरं पश्यति चेत्, एतत्प्रवृत्तिफलस्य तत्प्रीतिरूपत्वात् तादृशं फलञ्च पश्यति चेत्; एतत्त्रितयविरोधिभूतस्य तस्य प्रवेशमार्गो नास्तीत्यर्थः।

तस्माद्धर्मशब्दोऽधर्मनिवृत्तिं प्रदर्शयत्यपि तद्व्यतिरिक्तं वदतीत्येवाङ्गीकरणीयमिति तात्पर्यम् ॥ २७ ॥

---

(तस्य)-ईश्वरस्य शेषिणः। (तादृशम्) - भगवत्प्रीतिरूपम्।

(तस्मात्)—निषिद्धानुष्ठानस्य स्वरूपोपायपुरुषार्थानां त्रयाणाञ्च विरोधित्वादित्यर्थः।

अत्र 'परित्यज्य' इत्यत्र स्वरूपत्याग एवाचार्यैः प्रपञ्चितमिति सत्सम्प्रदायविदां प्रक्रिया। तत्स्थापनाय पूर्वपक्षयुद्घाटितानि स्वरूपत्यागसिद्धान्तदूषणानि अस्मत्प्राचार्यप्रसादितरीत्या क्रमशो निरस्यन्ते।

तत्र श्रीमति रहस्यत्रयसारे चरमश्लोकाधिकारे—यदुक्तम् "कर्मयोगज्ञानयोगभक्तिरूपाणां धर्माणां स्वरूपत्यागः प्रपत्त्यङ्गमिति पक्षे प्रपत्तिस्सर्वाधिकारा न स्यात्। धर्मानुष्ठानशक्तान्प्रत्येव तत्त्यागस्य विधेयत्वात्" इति। तन्न। अस्य चोद्यस्य स्वपक्षेऽपि तुल्यत्वात्। नैरपेक्ष्यविधानपक्षे सद्विद्याद्यङ्गभूतधर्माणामङ्गतयोपादाननिवृत्तेर्विधेयत्वाभ्युपगमेन तादृशधर्मोपादानाशक्तेषु तत्त्यागविधानासम्भवेन तेषां प्रपत्त्यधिकाराभावप्रसङ्गस्य तुल्यत्वात्। एवं

ब्रह्मास्त्रन्यायसूचनपक्षेऽपि 'सर्वधर्मान्परित्यज्य' इत्यनेन प्रपत्त्या सहसमुच्चयेन प्रसक्तानां सद्विद्यादीनां त्यागस्य विधेयत्वाभ्युपगमेन सद्विद्याद्यशक्तान्प्रति तद्विधानासम्भावाच्च तुल्यो दोषः। किञ्च सिद्धान्ते सर्वधर्मपरित्यागो-नाम-असम्बन्धप्रयोजको व्यापारः। सम्बन्धविशेषावच्छिन्नप्रतियोगिताकाभावानुकूलव्यापार इति यावत्। अत्र सम्बन्धे विशेषश्च मोक्षोपयुक्तापूर्वप्रयोजकतावच्छेदकत्वरूपो ग्राह्यः। तथा च मोक्षोपयुक्तापूर्वप्रयोजकतावच्छेदकसम्बन्धावच्छिन्नधर्मनिष्ठप्रतियोगिताकाभावप्रयोजकव्यापार एवप्रकृते धर्मत्यागशब्दार्थ इत्युक्तं भवति।

एवञ्च धर्मानुष्ठानाशक्तानामपि तद्विषयकेष्टसाधनता ज्ञानेच्छाद्याश्रयत्वसम्धन्धेन धर्मवैशिष्ट्यानपायात्तादृशसम्बन्धस्य मोक्षोपयुक्तादृष्टप्रयोजकतावच्छेदकत्वानपायाच्च तत्सम्बन्धावच्छिन्नधर्मनिष्ठप्रतियोगिताकाभावप्रयोजकतादृशज्ञानेच्छानिवृत्तिलक्षणव्यापारात्मकधर्मत्यागस्य तान्प्रत्यपि विधातुं शक्यत्वेन प्रपत्तेस्सर्वाधिकारताया अक्षतत्वाच्च।

अथ यदुक्तं "प्रपत्तेरशक्ताधिकारत्वं कार्पण्यरूपाङ्गविरुद्धम्" इति, तदप्यनुपपन्नम्। शरणागतेःकार्पण्याङ्गकत्वे मानाभावात्। कार्पण्यविधायकप्रकरणानां तान्त्रिकन्यासविषयत्वात्। किञ्च "त्यागो गर्वस्य कार्पण्यं श्रुतशीलादिजन्मनः" (लक्ष्मीतन्त्रे-१७-६७।।) इत्यादिविवरणानुसारेण कार्पण्यस्य धर्मानुष्ठानशीलत्वज्ञानजनितगर्वत्यागरूपतायास्सिद्धत्वेन धर्मानुष्ठानासमर्थानां तद्गर्वस्यैवाप्रसक्त्या शक्तान्प्रत्येव तत्त्यागविधानसम्भवात्, प्रपत्तेरशक्ताधिकारत्वमेव कार्पण्यरूपाङ्गानुगुणमिति तस्य तद्विरोधोक्तेर्विपरीतज्ञानकार्यत्वाच्च। यदि चापराधालयत्वाकिञ्चन्याद्यनुसन्धानमेव कार्पण्यमिति स्वकपोलकल्पितकार्पण्यस्वरूपविरुद्धत्वमेवात्राभिमतं स्यात्, तदापि न विरोधः। औपाधिकशक्तेस्स्वाभाविकाशक्त्यनुसन्धानविरोधित्वाभावात्, चेतनस्य स्वरूपविरुद्धसाधनान्तरानुष्ठानस्य सांसारिकप्रवृत्तितुल्यत्वेन तदनुकूलशक्तेः प्रकृतिसम्बन्धोपाधिकत्वात्, कार्पण्यप्रयोजकाशक्तेः "अनैश्वर्यात्स्वभावजात्" (अहि-सं-५२- ।।) इति स्वाभाविकत्वावगमाच्च। तथा च स्वस्वरूपान्तर्गतानन्यशरणत्वात्मकसाधनान्तरानर्हत्वरूपाकिञ्चन्यप्रतिसन्धानलक्षणकार्पण्यवत एव प्रकृतिसम्बन्धौपाधिकया शक्त्याप्रसक्तानां साधनान्तराणां त्यागस्य विधातुं युक्ततया त्यागविधेःकार्पण्यविरोधोक्तिरनुपपन्नैव।

अथ यच्चोक्तं "पुहलोन्त्रिल्लावडियेन्" (तिरुवाय्मोलि-६-१०-१०॥) "कुलङ्गलाय" (तिरुच्चन्दविरुत्तम्-९०॥) "कुलित्तुमून्रु" (तिरुमालै-२५॥) "न धर्मनिष्ठोऽस्मि" (स्तोत्ररत्ने-२२॥) इत्याद्याकिञ्चन्यानुसन्धानसूक्ति-विरोधः" इति, तदप्यनुपपन्नम् । पराङ्कुशभक्तिसारयोर्जन्मयोगित्वेन विदुरादिवद्ब्रह्मविद्यासम्पन्नत्वात्, श्रीभक्ताङ्घ्रिरेणुयामुनदेशिकयोश्शक्तत्रैवर्णिकाग्रगण्यत्वेन ब्रह्मविद्यानिष्पादनसमर्थत्वाच्च, तत्सूक्तीनां भक्त्याद्यशक्त्यादिपरत्वे बाधितार्थकत्वापातात् । तस्मात् "पुहलोन्त्रिल्लावडियेन्" इति श्रीपराङ्कुशसूक्तौ स्वरूपान्तर्गतमनन्यशरणत्वमुच्यते । "कुलङ्गलाय" इति श्रीभक्तिसारसूक्तौ औपाधिकशरीरधर्माणां ब्राह्मण्यादीनां विविक्तात्मस्वरूपसंस्पर्शाभावः, "कुलित्तु" इति श्रीतुलसीभृत्यसूक्तौ अग्निहोत्रादिदास्यविरुद्धस्ववर्णधर्मानुष्ठानत्यागः, "न धर्मनिष्ठोऽस्मि" इति श्रीरक्षागत्राचार्यसूक्तौ साक्षाद्धर्मभूतस्वरूपानुरूपसाध्यभक्त्यादिनिष्ठापूर्त्यभावश्च प्रतिपाद्यते । अन्यथा भृगुपुत्रस्य यागाग्रपूजापात्रभूतस्य भक्तिसारस्य वर्णचतुष्टयातीतत्वं बाधितम् । ब्राह्मणोत्तमस्य तुलसीभृत्यस्य तदभावोक्तिश्च बाधिता । परमधार्मिकस्य यामुनमुनेरधार्मिकत्वादिकञ्च बाधितमेव । तस्माद्यथोक्त एवार्थः । त्वन्मतेऽपि यामुनादीनां विलम्बाक्षमतयैव प्रपत्त्यधिकारत्वम्, न त्वशक्त्यादिना । विलम्बाक्षमोऽपि अशक्त एवेति चेत्, तथा सति सर्वेषामशक्त एवान्तर्भावापत्त्या "भक्त्यादौ शक्त्यभावः" (रहस्यत्रयसारे-१०-अधिकारे ॥) इत्यादिविभागस्यानुपपन्नत्वापातात् । तस्माद्यामुनादीनां शक्तत्वं विस्मृत्य तत्सूक्तिविरोधोद्घाटनं तवैव विपरीतफलम् ।

अथ यदुक्तम् "ईश्वरापेक्षयात्यन्तपारन्त्र्यात् उपायान्तरेषु नित्याशक्तः 'त्वम्' इति मध्यमाक्षिप्तयुष्मच्छब्देनोपायान्तरानर्हतां दर्शयित्वा तादृशस्याधिकारिणः 'सर्वधर्मान्परित्यज्य' इति त्यागो विधीयत इति पक्षे उपायान्तरविधायकसर्वशास्त्रविरोधः, धर्मानर्हस्य धर्मत्यागो विधीयत इति स्ववचनविरोधः, कैङ्कर्यादिपरमधर्मविषयस्वप्रवृत्तिविरोधश्च स्यात्" इति, तदप्यनुपपन्नम् । साधनान्तरशास्त्राणामौपाधिकशक्तिविशिष्टविषयतया स्वाभाविकाशक्तेस्तद्विरोधाभावात् । स्वभावतो धर्मान्तरानर्हस्याप्यौपाधिकशक्तिवशात्प्रसक्तानां धर्माणां प्रतिषेधोक्तौ स्ववचनविरोधाप्रसक्तेः । कैङ्कर्यादीनां फलरूपत्वेन साधनत्वाभावात्, साधनान्तरनित्याशक्तानामपि तत्प्रवृत्तौ विरोधाभावाच्च तदुपपत्तेः ।

अथ यच्चोक्तं "अधिकारिणो नित्याशक्तत्वे तं प्रति 'व्रज' इति विधानमपि न घटते" इति, तदप्यसत् । 'व्रज' इत्यनेनाधिकारिकृत्यस्यैव विधीयमानतया तस्योपायत्वाभावेन विरोधाभावात् । उपायान्तरनित्याशक्तं प्रति उपायान्तरविधाने हि विरोधः, न त्वनुपायभूतस्य कस्यचिद्विधाने । नहि घटकारणाशक्तस्य हि तन्तूपायस्य पटकारणविधाने विरोधोऽस्ति ।

अथ यदुक्तं "जीवानामुपायान्तरनित्याशक्तत्वोक्तिः - स्वानभिमतं त्यागानुवादपक्षमेव स्थिरीकरोति" इति, तददप्यनुपपन्नम् । निरङ्कुशस्वतन्त्रेण भगवता स्वातन्त्र्याद्यौपयिकशक्तिप्रदानपूर्वकं कर्तव्यतया विहितानां साधनान्तराणां परतन्त्रचेतनैर्भगवन्नियोगं विना स्वाभाविकाशक्तिज्ञानमात्रेण त्यक्तुमशक्यतया नित्याशक्तिमात्रेण त्यागस्य प्राप्त्ययोगात् । अत एव अनुगृहीतं "निश्चित्य त्वदधीनताम्मयि सदा कर्माद्युपायान् हरे कर्तुं त्यक्तुमपि (अष्टश्लो-८॥)प्रपत्तुमनलम्" इति । अतश्चेतनानामुपायान्तरनित्याशक्तत्वेऽपि 'परित्यज्य'इति भगवत्कर्तृकं विधानं विना त्यागस्य प्राप्त्ययोगात्, नित्याशक्तिवचनमनुवादपक्षस्थापकमित्युक्तिर्दुरुक्तिरेव ।

अथ यदुक्तं "त्यागविधिवादिभिरपि प्रपत्तेस्सर्वाधिकारत्वनिर्वाहायाशक्तविषये अनुवादपरत्वमप्यवश्याश्रयणीयम् । तथा च वाक्यभेदप्रसङ्गो दुर्वारः" इति, तदप्यनुपपन्नम् । मोक्षार्थादृष्टप्रयोजकतावच्छेदकसम्बन्धावच्छिन्नधर्मनिष्ठप्रतियोगिताकाभावप्रयोजकव्यापाररूपत्यागविधिमाश्रित्यैव प्रपत्तेस्सर्वाधिकारत्वनिर्वाहसम्भवेनाशक्तविषये अनुवादपरत्वाश्रयणस्यास्माकमावश्यकत्वात् ।

अथ यदुक्तं "एकस्मिन्नेवाधिकारिणि फलभेदं विना गुरुलघुविकल्पानुपपन्नः" इति, तदप्यनुपपन्नम् । सद्विद्यादिप्रकरणे ब्रह्मानुभवमात्रफलश्रवणात्, प्रपत्तिप्रकरणेष्वेव कैङ्कर्यपर्यन्तफलश्रवणाच्च भक्तिप्रपत्त्योःफलवैषम्यसत्त्वात्, "रङ्गिन्प्रारब्धभङ्गात् फलमधिकम्" (न्यासतिलके-१५॥) "विलम्बेन प्राप्तिर्भजनसुखमेकस्य विपुलं परस्याशुप्राप्तिःपरिमितरसा जीवितदशा" (रहस्यत्रयसारे-८-अधिकारे॥) इत्यादिरीत्या फलवैषम्यसत्त्वाच्च "नरस्य बुद्धिदौर्बल्यात् उपायान्तरमिष्यते" (ल-न्त्रे-१७- ॥) इत्युपायान्तराणां ज्ञानविश्वासमान्द्याधिकारत्वात्, "त्वामेव शरणंप्राप्य निस्तरन्ति मनीषिणः" (जितन्ता-१-४॥) "सर्वज्ञश्शरणं याति योगमार्गपराङ्मुखः" (प्रपन्नपारि-

जाते-२-पद्धत्याम्, १० श्लो।।) "किन्तु तस्य च मन्त्रस्य कर्मणःकमलासन। न लभ्यतेऽधिकारी वा श्रोतुकामोऽपि वा नरः" (पांचरात्ने-सात्यकितन्त्रे।।) "सूक्ष्मःपरमदुर्ज्ञेयस्सतां धर्मःप्लवङ्गम" (रामायणे ) इत्यादिभिर्ज्ञानि-विश्वासपूर्तेश्शरणागत्यधिकारत्वाच्चाधिकारभेदस्यापि सत्त्वात्, "उपायस्सु-करश्चायं दुष्करश्च मतो मम" (ल-न्त्रे-१७-१०४ ।।) "विश्वासायासभूम्नो-र्न्यसनभजनयोर्गौरवे को विशेषः" (न्यासतिलके-१७।।) इत्युभयोर्गौरवा-विशेषात्, अवश्यकॢप्तनियतपूर्ववृत्तिभगवत्कृपाव्यतिरिक्तयोर्भक्तिप्रपत्त्योरन्य-थासिद्ध्या भगवत्कृपैव फलहेतुरिति ज्ञापयितुं वत्सलतरेण शास्त्रेणात्यन्त-गुरुलघुभूतयोरेकफलविषये विकल्पेनोपदेशसम्भवाच्च विरोधाभावात्। किञ्च फलैक्य एव लोकवेदयोस्सर्वत्र विकल्पदर्शनेन फलभेदं विना विकल्पोऽनुप-पन्न इत्युक्तेर्व्याहतत्वाच्च।

अथ यच्चोक्तं "गुरूपायशक्तस्यैव तत्त्यागविशिष्टलघूपायविधाने लघू-पायश्रुतवतां गुरूपाये प्रवृत्त्यसम्भवात्, प्रकारान्तरेणाधिकारिभेदस्य वक्तु-मशक्यत्वाच्च गुरूपायविधायकशास्त्राप्रामाण्यप्रसङ्गः" इति, तदप्यनुपपन्नम्। "अशक्तस्यातिकृच्छ्रेषु दुराशा दार्ढ्यशालिनः। कस्यचिद्बुद्धिदौर्बल्यं लघु-त्यागस्य कारणम्" (रहस्यत्रयसारे-२९-अधिकारे।।) "नियत्यावैयात्यं निय-मयि तु मेवं प्रभवति" (रहस्य-सारे-८ अधि।।) इत्याद्युक्तरीत्या लघूपायं श्रुत-वतामपि केषाञ्चिन्मूर्खाणां कर्मपरिपाकवशात् लघूपायानादरपूर्वकं गुरू-पाय एव प्रवृत्तिसम्भवात्, पूर्वोक्तरीत्याधिकारिभेदसद्भावाच्च विरोधा-भावात्। तथा चानुगृहीतं सहस्रनामभाष्ये "स्तवैरर्चेन्नरस्सदा" इत्यत्र भगवत्स्तुतेः परमधर्मत्वव्यवस्थापनप्रकरणे "न चैषः पूर्णाहुतिन्यायस्या-विषयः, तस्यातिवादविषयत्वात्। सङ्कीर्तनादिप्रकरणेषु प्रायेण वाक्यशेषत्व-प्रार्थनाद्यर्थवादलिङ्गादर्शनाच्च। किञ्च प्रबलप्रमाणविरोधाभावे अर्थवादपदा-नामपि स्वतः प्रामाण्यतः स्वार्थपरित्यागश्च साहसम्, अन्याय्यत्वात्। ननु गुरुदीर्घदुष्करतपस्समाधिविशेषरूपमहाधर्मसाध्यतत्त्वज्ञानोपक्रमस्य वाङ्मात्र-साध्यत्ववादोऽप्यतिवादः, गुरुशास्त्रवैयर्थ्यप्रसङ्गेन प्रमाणविरुद्धश्च;—तदिदम-विदितभगवत्प्रभावस्य छान्दसस्य पैशाचम्। लघीयोऽपि भगवत्सङ्कीर्तनं दुर्व-हामपि धुरं धारयत्येव। न गुरुशास्त्रानर्थक्यम्, तस्य समर्थाधिकारत्वात्। अस्य तु सत्यसति वा सामर्थ्ये भगवदसाधारणरुचिसमुचितभाग्यवदधिका-रत्वाच्च। गरीयसोऽपि भगवत्प्रसाद एव फलहेतुः, लघीयसि किं दण्डनिवा-

रितः। यथा च गरीयसि प्रयोगवैपुल्यादेवः प्रसीदति, तथा लघीयस्यापि भावशुद्धिविशेषात् प्रसीदेत् । यथोक्तं "सम्यग्व्यवसितो हि सः" (गीता-९-३०॥) "पत्रं पुष्पं फलं तोयम्" (गीता-९-२६॥) "यो न वित्तैर्न विभवैर्न वासोभिर्न भूषणैः। तोष्यते हृदयेनैव कस्तमीशं न पूजयेत्" (विष्णुधर्मे-९०-३९॥) "दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा। अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम्" (व्याससमृतौ॥) "पृथिवीं रत्नसम्पूर्णां यः कृष्णाय प्रयच्छति। तस्याप्यन्यमनस्कस्य सुलभो न जनार्दनः" (विष्णुधर्मे-७३-६॥) इत्यादि। भावभेद एव हि धर्माधर्मनिधानम्। न क्रियाविशेषः। यथा श्रीविष्णुतत्त्वे "भावशुद्धिर्मनुष्याणां प्रमाणं सर्ववस्तुषु। अन्यथालिङ्ग्यते कान्ता स्नेहेन दुहितान्यथा" इति। तथा "तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः। प्रसह्य चित्ताहरणं न कल्कस्तान्येव भावोपहितानि कल्कः" (भारते आदि-१-२७९॥) इति। अन्यत्र "गङ्गादितीर्थेषु वसन्ति मत्स्या देवालये पक्षिसङ्घाश्च नित्यम्। भावोचितास्ते न फलं लभन्ते तीर्थानि पुण्यायतनाश्च मुख्याः" इति। उपपन्नं चैतत्, सर्वज्ञस्यावाप्तसमस्तकामस्यानपेक्षस्य भगवतो भावशुद्ध्याराध्यत्वम्, न द्रविणकणार्पणादिना। "याथातथ्येन पण्डितम्" इतिन्यायात्।" इत्यादिना।

अथ यच्चोक्तं "लघूपायप्ररोचनार्थं गुरूपायं विधाय पश्चात्तमेव प्रतिषेधति शास्त्रमित्युक्तिरपि अत्यन्तानुचिता" इति,तदप्यत्यन्तानुचितमेव। अभिचारादिशास्त्रवैफल्यापातात्। भगवता बादरायणेन स्वशिष्यमुखेन पूर्वमीमांसायां कर्मप्ररोचनार्थैर्देवतानिराकरणादिभिःकाम्यकर्मप्रवर्तनपूर्वकं पश्चात्स्वयमेव ब्रह्ममीमांसायां तत्पक्षप्रतिक्षेपपूर्वकं ब्रह्मविद्याप्रवर्तनदर्शनेन तद्विरोधाच्च। न च गुरूपायविधानेन लघूपायप्ररोचनमसम्भावितमिति शङ्क्यम्; उष्ट्रभारारोपणन्यायेन वेदभारभराक्रान्तविषये तथैव प्ररोचनस्य न्यायत्वात्। बालानां सुकरौषधप्ररोचनार्थं दुष्करौषधविधिप्रतिषेधयोः लोकदर्शनेन तन्न्यायेनात्रापि तत्सम्भवाच्च। यदि गुरूपायसाध्यस्य लघूपायसाध्यत्वायोगात्, लघूपाये गुरूपायफलश्रुतेरङ्गविषयकाङ्क्षिफलोपचारमात्रतया पर्यवसानात्, विवक्षितवैपरीत्यापत्त्या गुरूपायस्य प्ररोचकत्वं न स्यादित्युच्येत; तर्हि तुल्यन्यायेन स्वतन्त्रप्रपत्तेर्दत्तजलाञ्जलिता स्यात्। यद्यधिकारिविशेषविषये लघोर्गुरुकार्यकारित्वमिष्येत, तर्हि गतं लघोर्गुरुकार्यकारित्वाभावनियमेन। मुख्यकल्पाशक्तेषु अनुकल्पस्य शास्त्रबलादेव हि साधनत्वं सिद्ध्यति, न ह्यधि-

कार्यशक्तेरुपायसामर्थ्यपूरकतया। तस्मात् गुरोर्वा लघोर्वा शास्त्रविहितस्यैवोपायत्वात् लघूपायगुरूपायकार्यकारित्वासम्भवनिबन्धनं गुरूपायशास्त्रस्य प्ररोचकत्वासम्भववचनमत्यन्तमनुचितमेव।

अथ यदुक्तं '"अनुपायभूताः कर्मादयः शास्त्रेणोपायत्वेन विधीयन्ते' इति चेत्, श्रुतिस्मृत्यादीनां मोहनशास्त्रत्वापत्त्या शरण्यस्वरूपाद्यसिद्धिप्रसङ्गः" इति, तदप्यनुपपन्नम्। तादृशोपदेशस्य जगदुज्जीवनार्थत्वेन मोहनशास्त्रसाम्यापादकत्वायोगात्। "त्रैगुण्यविषया वेदाः" (गीता-२-४५।।) इत्युक्तप्रकारेण राजसतामसानुजिघृक्षया तत्तद्रुच्यनुगुणसाधनान्तरादिविधायकप्रकरणस्य स्वार्थे तात्पर्याभावलक्षणाप्रामाण्यसत्त्वेऽपि निस्त्रैगुण्यविषयकप्रकरणस्य प्रामाण्यानपायेन शरण्यस्वरूपादिसिद्धेरविकलत्वात्।

अथ यच्चोक्तं "लोके धनार्थिविषये कृषिरत्नवाणिज्ययोर्गुरुलघुभूतयोर्यत्तुल्यविकल्पवचनम्, यच्च शास्त्रे समावर्तनविषये तथाविधं वचनम्, यदपि रहस्ये भक्तिप्रपत्तिविषये तथाविधं कूरनाथवचनम्, तत्सर्वमधिकारिव्यवस्थां विना नोपपद्यते" इति, तदप्यनुपपन्नम्। "उत्पतन्नपि चाकाशं विशन्नपि च सागरम्। अटन्वा पृथिवीं कृत्स्नां नादत्तमुपतिष्ठते।। अचेष्टमानमासीनं श्रीःकञ्चिदुपतिष्ठति। कार्मी कर्मानुसृत्यान्यो न प्राज्ञमधिगच्छति" इत्याद्युक्तरीत्या धनप्राप्तेः पूर्वकर्मानुगुणतया तत्र स्वयत्नस्याप्रयोजकतां ज्ञापयितुमेकाधिकारिविषये गुरुलघ्वोस्तुल्यवद्विकल्पोपपत्तेः। एवमेव शास्त्रेऽपि विधिस्वातन्त्र्यज्ञापनाय समावर्तनादौ गुरुलघुविकल्पोपपत्तेः। तथैव रहस्यशास्त्रेषु निर्हेतुकभगवत्प्रसादस्यैव फलहेतुतया भक्तिप्रपत्त्योरन्यथासिद्धिं ज्ञापयितुं तयोस्तुल्यवद्विकल्पोक्तिरिति निर्वाहसम्भवात्, तत्तत्कर्मविशेषेण लघूपायानादरपूर्वकं गुरूपायेऽपि प्रवृत्तिसम्भवाच्च तद्व्यवस्थानामनावश्यकत्वात्।

अथ यच्चोक्तं "ज्ञानविश्वासदार्ढ्यस्य प्रपत्त्यधिकारत्वे चरमश्लोकाद्युपदेष्टॄणां व्यासादीनामुपासनानधिकारप्रसङ्गः, ते पूर्वं ज्ञानविश्वासपूर्तिदशायां चरमश्लोकमुपदिश्य पश्चाद्भ्रान्ता बभूवुरित्यत्र मानाभावात्" इति, तदप्यनुपपन्नम्। चरमश्लोकार्थसम्प्रदायस्य श्रीपराङ्कुशसम्प्रदायपरंपराप्राप्तत्वेन तत्र व्यासादीनामनन्वितत्वात्, मूलप्रवर्तनस्य तत्त्वज्ञानं विनाप्युपपत्तेः। चतुर्मुखप्रसादादर्थज्ञानं विनैव वाल्मीकिमुखात् "मा निषाद" (रामायणे-बालकाण्डे-२-१५।।) इत्यादिश्लोकप्रवृत्तिवत् चरमश्लोकादिप्रवृत्तिसम्भवात्, "कश्चिन्मां

वेत्ति तत्त्वतः" (गीता-७-३॥) "न मे विदुस्सुरगणाः प्रभवं न महर्षयः" (गीता-१०-२॥) इत्यादौ स्वयत्नजनितज्ञानानां देवानां महर्षीणां च भगवत्तत्त्वयाथात्म्यज्ञानाभावस्य भाषिततया तेषां देवगुह्यचरमश्लोकार्थोपदेष्टृत्वासम्भवात्, "ब्रह्मरुद्रार्जुनव्याससहस्रकरभार्गवाः । ककुत्स्थात्रेयकपिलबुद्धाद्या ये सहस्रशः । शक्त्यावेशावतारास्तु विष्णोस्तत्कालविग्रहाः । अनुपास्या मुमुक्षूणां यथेन्द्राग्न्यादिदेवताः" इति व्यासादीनाम्मुमुक्षुभिरनर्च्यत्वकण्ठोक्तेः, "अधिकारबोधयुक्तेषु विद्यते भावभावना । अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु" (वि-पु-६-७-५१॥) इत्यादिना तेषामधिकारबोधरूपाहङ्कारममकारान्वयेनाशुद्धत्वोक्तेः, "कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्" (वि-पु-३-४-५॥) इति व्यासस्य भगवदाविष्टवेषेणैव भारतादिप्रवर्तकतया तदन्तर्गतचरमश्लोकादिप्रवर्तनौपयिकज्ञानादीनां भगवद्दत्तत्वाच्च व्यासादीनां बुद्धिदौर्बल्यानपायेनोपासनाधिकारस्य निष्प्रत्यूहत्वात् ।

अथ यच्चोक्तं "सर्वधर्मान्परित्यज्य" इति निषिद्धानां धर्माणां लोकसङ्ग्रहाय प्रपन्नैरनुष्ठाने सन्न्यासिनो गृहस्थैकान्तधर्मानुष्ठानवत् निषिद्धाचरणे पर्यवसानात्, भगवन्निग्रहलोकोपक्रोशौ प्रसज्येयाताम्" इति, तदप्यतिहेयम् । लोकसङ्ग्रहार्थतयानुष्ठीयमानानां निषेध्यपरधर्मशब्दवाच्यानन्तर्भावात् । मोक्षफलसाधनतया विधीयमानव्यापारमात्रपरो हि 'सर्वधर्मान्' इत्यत्र धर्मशब्दः । "अविप्लवाय धर्माणां पालनाय कुलस्य च । सङ्ग्रहाय च लोकानां मर्यादास्थापनाय च ॥ प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः । मनीषी वैदिकाचारं मनसापि न लङ्घयेत्" (ल-न्त्रे-१७-९३,९४॥) इत्यादिना श्रीलक्ष्मीतन्त्रादिषु प्रपन्नमधिकृत्यैव लोकसङ्ग्रहार्थव्यापाराणां विशिष्य विहितत्वेनोत्सर्गापवादन्यायात् लोकसङ्ग्रहार्थधर्मानुष्ठानस्योपपन्नत्वात्, अन्यथाङ्गतया सर्वधर्मत्यागविधानं वदतस्तवापि प्रपत्त्यङ्गत्वेनानुकूल्यादिधर्मानुष्ठाने गृहस्थैकान्तधर्ममनुतिष्ठतस्सन्न्यासिन एव भगवन्निग्रहलोकोपक्रोशयोः प्रसङ्गात्, सर्वलोकप्रसिद्धसन्न्यासवैकल्यवदसर्वज्ञदुर्विज्ञेयप्रपन्नधर्मवैकल्यस्य लोकोपक्रोशजनकताया असम्भवदुक्तिकत्वात्, सर्वज्ञजनानां सर्वज्ञत्वादेवोपक्रोशासम्भवेनासंज्ञाह्यत्वाच्चानुपपत्त्यभावात् ।

एतेन यदुक्तं "प्रपत्त्यधिकारिणः प्रतिषिद्धानां तेनैव कैङ्कर्यबुद्ध्यानुष्ठाने स्वाधिकारविरोधः" इति, तदपि प्रत्युक्तम् । अग्नीषोमीयादिपश्वालम्भवद्वि-

शेषवचनेनैव तदनुष्ठानाविरोधात्, कैङ्कर्यरूपव्यापाराणां निषेध्यवाचिधर्मशब्दार्थानन्तर्भावस्य पूर्वमेवोक्तत्वात्, भक्त्यङ्गभूतधर्मत्यागविधिवादिनां भवताम्मतेऽपि कैङ्कर्यानुष्ठाने प्रपत्तेरङ्गवैकल्यप्रसङ्गेनास्य चोद्यस्य त्वयापि परिहरणीयत्वाच्च ।

न च प्रपत्तेः क्षणमात्रसाध्यतया तदुत्तरमनुष्ठीयमानानां धर्माणामविरोधित्वमिति वाच्यम्;—अधिकारविरोधचोद्यस्यापि तथैव परिहर्तुं शक्यत्वात् । न चाङ्गभूतधर्मत्यागविधिपक्षे प्रपत्तेस्सर्वधर्मनैरपेक्ष्यमात्रस्वीकारात् अनपेक्षितधर्मानुष्ठानं न विरोधाय प्रभवति इति नानुपपत्तिरिति वाच्यम्;-तथा सति विधिपक्षपरित्यागप्रसङ्गात् । 'सर्वधर्माणामङ्गत्वेन त्यागो विधीयते' इति विधिपक्षनिर्वाहो हि भवद्भिःप्रतिज्ञातः । यदि प्रपत्तेर्नैरपेक्ष्यमात्रं 'परित्यज्य' इत्यनेनोच्येत, तर्हि तेऽस्यानुवादरूपत्वमेव, न विधिरूपत्वम् । तस्मादत्र भवतां प्रतिज्ञानुरोधेन प्रपन्नान्प्रति भक्त्यङ्गानां प्रतिषिद्धत्वावश्यंभावेन प्रपत्तेरङ्गपौष्कल्यार्थं तदधिकारिभिर्भक्त्यङ्गतयावक्लृप्तवर्णाश्रमशौचाचारशिखायज्ञोपवीतकौपीनकटिसूत्राहिंसासत्यवचनशमदमादिसवासनत्यागपूर्वकं कृत्याकृत्यविवेकशून्यपशुमृगपक्षिमृगतुल्यवृत्तिकत्वनियमपरिपालनप्रसङ्गो दुर्वार एव । अथ यद्यङ्गतयानुष्ठीयमानापेक्षया कैङ्कर्यत्वेनानुष्ठीयमानानां भेदमाश्रित्य वा, दीपारोपणमालाकरणादिभिः प्रपन्नानां कालयापनविधायकविशेषशास्त्रमवलम्ब्य वा निरुक्तदोषपरिहारो मन्येत, तर्हि प्रकृतेऽपि दीयतां दृष्टिः ।

अथ यदुक्तं "निषेधवाक्यसिद्धनिवृत्तिरूपधर्माणां स्वरक्षणार्थस्वव्यापाररूपत्वाभावेन शरणागत्यविरुद्धतया प्रवृत्तिरूपधर्मत्याग एवात्र विवक्षित इति निर्वाहोऽपि मन्दः; निवृत्तेश्च व्यापारविशेषरूपतायाः, स्वरक्षणार्थतायाश्च लोकवेदसिद्धत्वात्" इति, तदपि मन्दम् । निषेधवाक्यसिद्धनिवृत्तिरूपव्यापाराणां धर्मशब्दार्थत्वाभावात् । "यतोऽभ्युदयनिश्श्रेयससिद्धिस्स धर्मः" (वैशेषिकसूत्रम्-१-१-२॥ इति कणादमुनिना तल्लक्षणस्य सूत्रितत्वात्, "अत्र सुखजनकतावच्छेदकतया सिद्धा धर्मत्वजातिः धर्मलक्षणमभिमेपतम्" इति तद्विवरणेऽभिधानात्, "चोदनालक्षणोऽर्थो धर्मः" (पूर्वमी-१-१-२॥) इति जैमिनिनापि तल्लक्ष्यस्य सूत्रितत्वात्, "य एव श्रेयस्करः, स एष धर्मशब्देनोच्यते । कथमवगम्यतां? 'यो हि यागमनुतिष्ठति, तं धार्मिकः' इति

समाचक्षे । यश्च यस्य कर्ता, स तेन व्यपदिश्यते । यथा 'पावकः, लावकः' इति । तेन यःपुरुषं निःश्रेयसेन संयुनक्ति, स धर्मशब्देनोच्यते । न केवलं लोके । वेदेऽपि "यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन्" (पुरुषसूक्तम्।।) इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति" इति तत्र शाबरस्वामिना भाषितत्वाच्च । तथा च लोकवेदयोरभक्ष्यभक्षणादिनिषिद्धनिवृत्तिमात्रेण धार्मिकत्वव्यवहाराभावात्, अभ्युदयनिःश्रेयससाधननिष्ठेष्वेव तद्व्यवहाराच्च श्रुत्यादिचोदितप्रवृत्तिरूपव्यापारमात्रस्यैव धर्मशब्दवाच्यतया "सर्वधर्मान्परित्यज्य" इत्यत्र प्रवृत्तिरूपव्यापारमात्रस्यैव निषिद्धतया तदनन्तर्गतानां निवृत्तिरूपव्यापाराणामनिषेधादेव प्रवृत्तिस्वरूपाविरुद्धतया तदनुष्ठानविरोधचोद्यं मन्दमेव ।

ननु मास्तु निवृत्तिरूपधर्मानुष्ठानस्य 'सर्वधर्मान्परित्यज्य' इति प्रतिषेधविरोधः, स्वरक्षणार्थव्यापारानर्हत्वरूपस्वस्वरूपविरोधो दुष्परिहर इति चेत्, भ्रान्तोऽसि; न हि वयमभक्ष्यभक्षणादिनिवृत्तिं स्वरक्षणार्थमनुतिष्ठामः, येन निरुक्तस्वरूपविरोधस्स्यात् । किन्तु भगवदनिष्टनिवृत्तेः कैङ्कर्यान्तर्गतत्वेन स्वयं प्रयोजनतयैव । न चैषां भगवदनिष्टत्वे मानाभावः, निरुपाधिकनिषेधेनैव तेषां तदनिष्टत्वसिद्धेः । किञ्चाभक्ष्यभक्षणादिशास्त्रनिषिद्धानुष्ठाने नरकादिरूपं तत्फलं स्यात् । न हि तन्निवृत्तेःकिञ्चित्फलं वर्तते । न च तत्रानिवृत्तिःफलम् । अनिष्टस्याजातत्वेन तन्निवृत्त्ययोगात् । न चैवं निष्फलत्वादेवं त्यागप्रसङ्गः । प्रवृत्तिरूपव्यापारं प्रति इष्टसाधनताज्ञानस्यैव निवृत्तिरूपव्यापारं प्रति स्वप्रतियोगिविषयकद्विष्टसाधनताज्ञानस्यैव हेतुत्वाभ्युपगमेन विरोधाभावात् । न चैवमपि स्वदुःखस्यैव द्विष्टशब्देन ग्राह्यतया स्वदुःखप्रसङ्गभीतिप्रयुक्तनिषिद्धनिवृत्तिरूपव्यापारस्य स्वरक्षणार्थत्वं दुस्त्यजमिति वाच्यम्;—स्वेषां भगवद्दास्यैकस्वरूपत्वं जानतां भगवदनिष्टस्यैव द्विष्टशब्देन ग्राह्यतया विरोधाभावात् । अपि च "त्यज धर्ममधर्मं च त्यज सत्यानृते उभे । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ।। त्यज धर्ममसङ्कल्पात् त्यजाधर्ममहिंसया । उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात्" (भारते-शा-मो-३३७-४०,४१।। ३३९-४४ ।।) इति महाभारतवचनयोर्धर्मवदधर्माणामपि त्याज्यतया विशिष्योक्तत्वेन तदनभिज्ञानेनाधर्मानुष्ठानात्मकाधर्मनिवृत्ति-त्यागप्रसञ्जनचोद्यमत्यन्तमन्दमेव ।

अथ यच्चोक्तं "सर्वधर्मान्परित्यज्य" इत्येतद्विधिबलादेव प्रवृत्तिनिवृत्तिरूपसर्वधर्मसवासनत्यागेन यथेच्छाचरणमेव प्रपन्नस्य शास्त्रीयःपन्था इत्युक्तौ, प्राचीनप्रपन्नानामर्वाचीनानां च सावधानकैङ्कर्याचरणं, अपराधपरिहारादिकञ्च सर्वं शास्त्रीयं स्यात् । यथाप्रमाणं प्रपत्तिसम्प्रदायप्रवर्तकानां परमकारुणिकानां तेषां भ्रमविप्रलम्भादिसम्भावनापि नास्ति । येन तदाचाराणामन्यथासिद्धिस्सम्भाव्येत" इति, तदप्यनुपपन्नम् । "सर्वधर्मांश्च सन्त्यज्य सर्वकामांश्च साक्षरान्" (शरणागतिगद्ये।।) "तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम्" (भागवते-११-१२-१४।।) "त्यज धर्ममधर्मञ्च त्यज सत्यानृते उभे" (भारते-शा-मो-३२९-४४।।)इत्यादिबहुप्रमाणैः प्रपन्नानां धर्मवत्कलञ्जभक्षणादिकामानामधर्माणाञ्च त्यागस्य विधीयमानतया तदनुसारेण "सर्वधर्मान्परित्यज्य" इत्यत्र धर्मशब्दस्य प्रवृत्तिरूपधर्ममात्रपरताया एवावश्यकतया, अत्र निवृत्तिरूपधर्मनिषेधवाचिशब्दाभावेनैतद्वचनबलात् निवृत्तिरूपधर्मत्यागस्य शास्त्रीयत्वशङ्काया उत्थानायोगात् । प्रपन्नानां मोक्षफलं प्रति सिद्धोपायस्यैकस्यैव साधनतया तदनुष्ठितकैङ्कर्यापराधपरिहारादीनां मोक्षसाधनत्वाभावेन मोक्षसाधनत्वबुध्यानुष्ठीयमानप्रवृत्तिरूपव्यापारमात्रपरधर्मशब्दार्थानन्तर्भावेन तदनुष्ठानस्याशास्त्रीयत्वप्रसङ्गायोगात् । 'सर्वधर्मान्परित्यज्य' इति धर्माणां प्रतिषेधेऽपि तादृशमोक्षसाधनप्रवृत्तिरूपधर्मशब्दार्थव्यतिरिक्तकैङ्कर्याद्यनुष्ठानस्य प्रपत्तिसम्पादयप्रवर्तकपरमकारुणिकानामभ्रान्तानामेवोपपन्नतया तेषां तदनुष्ठानस्य भ्रमविप्रलम्भादिप्रसञ्जकत्वायोगाच्च । भ्रमविप्रलम्भादिरहितेन परमकारुणिकेन लक्ष्मणेन नित्याग्निहोत्रादिधर्माणां स्वरूपेण त्यक्तत्वात्, तथाभूतया वैदेह्या लङ्कारुद्धया स्नानादिनित्यधर्माणां स्वरूपेण त्यक्तत्वात्, तादृशेनैव पराङ्कुशेन पूर्ववर्णशुश्रूषादिवर्णधर्माणां स्वरूपेण त्यक्तत्वात्, तादृशैरेव तिरुक्कण्णमङ्गैयाण्डान्नामकैर्नित्यनैमित्तिकादिसर्वधर्माणां स्वरूपेणैव त्यक्तत्वाच्च सर्वधर्मस्वरूपत्यागस्यैव शास्त्रार्थत्वे पूर्वाचार्यविरोधाभावाच्च । पूर्णाधिकारिषु पराङ्कुशादिषु स्वरूपत्यागदर्शनेन तदितरानुष्टानस्य तदनुष्ठानानुरोधेनान्यथानेयत्वात् ।

अथ यच्चोक्तं "प्रपत्तिक्षणावच्छिन्नसर्वधर्मस्वरूपत्यागोऽङ्गमित्युक्तावपि, तत्क्षणावच्छिन्नभगवत्क्षेत्रवासशिखायज्ञोपवीतोर्ध्वपुण्ड्रधारणादिवर्जनप्रसङ्गो दुर्वारः" इति, तदप्यनुपपन्नम् । सर्वधर्मत्यागानुवादं भक्त्यङ्गसर्वधर्मत्यागविधिं च वदतस्तवापि अस्य चोद्यस्य तुल्यत्वात् । अनुवादपक्षे भगवत्क्षेत्रवा-

सशिखा यज्ञोपवीतकौपीनकटिसूत्रादिकान्सर्वान् धर्मान्परित्यज्य स्थितस्यैव प्रपत्त्यधिकारपौष्कल्यात् । तथाङ्गभूतधर्मत्यागविधिपक्षेऽप्यभक्ष्यभक्षणापेयपानागम्यगमनादिनिषिद्धविषयसेवया भक्त्यङ्गभूतशान्तिदान्त्यादिकं सवासनं त्यक्तवतामेवाङ्गतया भक्त्यङ्गसर्वधर्मत्यागलक्षणप्रपत्त्यङ्गपौष्कल्याच्च ।

नन्वङ्गतया सर्वधर्मत्याग आकारान्तरेण तदनुष्ठानं न वारयति इति चेत्; कोऽयमङ्गतया त्यागो नाम-अङ्गत्वत्याग एवेति चेत्, किं विद्यमानस्याङ्गत्वस्य त्यागः, उताविद्यमानस्य । नाद्यः-विद्यमानस्य त्यागायोगात् । नाप्यन्त्यः-अविद्यमानस्य सुतरां त्यागायोगात् । भक्तिस्थले विद्यमानस्याङ्गत्वस्य प्रपत्तिस्थले त्यागो विधीयत इति चेत्, भ्रान्तोऽसि; न हि गोशृङ्गस्य शशे त्यागो विधातव्यः। भक्त्यङ्गगताङ्गत्वस्य प्रपत्तिनिरूपितत्वाभावेन प्रपत्तिस्थले तत्त्यागस्याप्रसक्तप्रतिषेधरूपत्वेन तद्विधानायोगात्। न भक्त्यङ्गजातीयानां धर्माणां प्रपत्त्यङ्गत्वबुद्धित्यागो विधीयत इति न दोष इति वाच्यम्;-तथासति धर्मशब्दस्य तद्विषयकप्रपत्त्यङ्गत्वबुद्धौ लक्षणापत्तेः । न चेष्टापत्तिः । विधौ तन्निषेधात् । उपायताबुद्धित्यागपक्षे स्वरूपस्याङ्गतावदङ्गताबुद्धित्यागपक्षेऽपि स्वरूपाङ्गतापत्तेर्दुर्वारत्वाच्च । तस्माद्भक्त्यङ्गजातीयसर्वधर्मस्वरूपत्याग एव प्रपत्त्यङ्गतया सर्वधर्माणां त्याग इत्यकामेनापि स्वीकर्तव्यमेव । तथात्व एव प्रपत्तेर्भक्त्यङ्गनैरपेक्ष्यसंरक्षणसम्भवात् । तथा च पूर्वोक्तरीत्या प्रपत्तिक्षणे प्रपन्नानां शिखायज्ञोपवीतकौपीनकटिसूत्रशौचादिधर्मत्यागस्त्वन्मते प्रसज्यत एवेति ।

अथ यच्चोक्तं "सर्वधर्मान्परित्यज्य" इत्येतदधिकारनैरपेक्ष्यान्यतरपरमित्येव पूर्वाचार्यसिद्धान्तात्, तस्य सर्वधर्मस्वरूपत्यागरूपाङ्गविधिपरत्वमनुपपन्नम्'' इति, तदप्यनुपपन्नम् । एकशब्दशोकशब्दयोरन्यतरवैयर्थ्यापत्तेः । एकशब्दस्य नैरपेक्ष्यपरत्वात्, शोकस्याधिकारसूचकत्वेनाधिकारपरत्वाच्च । तस्मात्तत्सार्थक्याय 'सर्वधर्मान्परित्यज्य' इत्यस्याङ्गपरत्वमेवाश्रयणीयमिति ।

अथ यच्चोक्तं "प्रपत्तेरशक्ताधिकारत्वे "इदं शरणमज्ञानाम्" (ल-न्ते-१७-९९ ।।) इत्यादौ सर्वज्ञभक्तयोः कथं तदधिकार उच्यत इति चेन्न; तत्र सर्वज्ञवाचिपदानां ज्ञानवदशक्तलाक्षणिकत्वात्, भक्तशब्दस्य विलम्बाक्षमपरत्वाच्च । "शरैस्तु सङ्कुलां कृत्वा" (रामायणे-सुन्द-३९-३०।।) इत्याद्युक्तशक्तिपरित्यागलक्षणसीतानुष्ठानविरोधः - तस्य प्रपन्नोत्तरकृत्युदाहरणमात्रत्वात्;

नोचेदुपायविधायकशास्त्रवैयर्थ्यं स्यात्" इति, तदप्यनुपपन्नम् । निजानत्पद-लक्षणायाः कल्पकाभावात्, "सर्वज्ञश्शरणं याति योगमार्गपराङ्मुखः" (प्रपन्नपारिजा-३-१८ ॥) इति तद्विवरणपरमाचार्यसूक्तिविरोधात्, तत्र निजानत्पदोक्तसार्वज्ञस्य योगमार्गपराङ्मुख्यहेतुत्वज्ञापनेन सर्वज्ञशब्दस्य शक्तविषयत्वावगमात्, सीताया भस्माहंतेजसस्स्वाभाविकतया प्रपत्त्यनन्तरजातत्वाभावेन तत्त्यागरूपतदनुष्ठानस्योत्तरघट्युदाहरणत्वायोगात्, रावणेन सीतापहारात्पूर्वमेव रावणापहारात्स्वसंरक्षणार्थं सीताया रामविषये भरन्यासः कृत इत्यत्र मानाभावात्, "जीवन्तीं मां यथा रामस्सम्भावयति कीर्तिमान्" (रामायणे-सुन्द-२८-१०॥) इत्यादिना मारुतिमुखेनानन्तरमेव स्वरक्षणप्रार्थनायाः कृततया पूर्वमेव तस्याः प्रपत्त्युक्तेर्विरुद्धत्वाच्च । "नरस्य बुद्धिदौर्बल्यादुपायान्तर इष्यते" (ल-त्रै-२८-१७ ॥) "जन्मान्तरसहस्रेषु या बुद्धिर्भाविता नृणाम् । तामेव लभते जन्तुरुपदेशो निरर्थकः" (इतिहाससमुच्चये-२-३० ॥) इत्याद्युक्तप्रकारेण जन्मान्तरकर्मविशेषाधीनबुद्धिदौर्बल्यशालिनां साधनान्तराधिकारिणां जागरूकत्वेन तत्परशास्त्रानर्थक्यगन्धाभावाच्च । अधिकस्यात्र वक्तव्यस्य पूर्वाचार्यकृतप्रपत्त्यधिकारकारिकादिषु प्रपञ्चितत्वाच्च ।

अथ यच्चोक्तं "धर्माणां "विहितत्वाच्चाश्रमकर्मापि" (ब्र-सू-३-४-३२॥) इति सूत्रोक्तविनियोगान्तरस्य प्रपन्ने निवारकाभावः" इति, तदप्यनुपपन्नम् । "देवर्षिभूतात्मनृणां पितॄणां न किंकरो नायमृणी च राजन् । सर्वात्मना यश्शरणं शरण्यं नारायणं लोकगुरुं प्रपन्नः" (भागवते-११-५-४१॥) "विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन्सर्वयज्ञास्समाप्ताः" (भारते—अनुशासनप-१८-९ ॥) "नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रो नो वा वर्णी न च गृहपतिर्नो वनस्थो यतिर्वा" "विष्णुदासा वयं यूयं ब्राह्मणा वर्णधर्मिणः" "ते वर्णानां पञ्चमाश्चाश्रमाणां विष्णोर्भक्ताः पञ्चकालप्रपन्नाः" "एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः । विष्णुना व्यपदेष्टव्यस्तस्य सर्वं स एव हि" इत्याद्युक्तरीत्या सर्वात्मना भगवत्प्रपन्नानां सर्ववर्णाश्रमोत्तीर्णतया प्रयोजकाभावादेव "विहितत्वाच्चाश्रमकर्मापि" (ब्र-सू-३-४-३२ ॥) इत्युक्ताकारान्तरविशिष्टानां धर्माणां तेष्वप्रसक्तेः ।

न चैवं पूर्वाचार्याणां व्यवस्थया वर्णाश्रमधर्मानुष्ठानविरोधः; धर्मसंस्थापनार्थमवतीर्णस्य भगवतो वस्तुतो वर्णाश्रमोत्तीर्णत्वेऽपि यथा राम-

कृष्णादिभिः सर्वलोकप्रसिद्धक्षत्रियत्वाद्यनुसारेण लोकसङ्ग्रहार्थं क्षत्रियधर्मादिकमनुष्ठितम्, यथा च शेषाद्यवतारभूतभाष्यकारादीनां वस्तुतो वर्णाश्रमोत्तीर्णत्वेऽपि सर्वलोकप्रसिद्ध्यनुसारेण व्यवस्थया वर्णाश्रमादिधर्मानुष्ठानं कृतम्, तथैव सर्वात्मना प्रपन्नानां मुमुक्षूणामपि लोकप्रसिद्ध्यनुसारेणैव व्यवस्थया धर्मानुष्ठानं लोकसङ्ग्रहार्थमुपपद्यत इत्यनुपपत्त्यभावात् ।

न चैवं प्रपन्नाचाराणां परवञ्चनमात्रार्थत्वेन लोकायतिकरहस्यावतारप्रसङ्गः; "लोकसङ्ग्रहमेवापि संपश्यन्कर्तुमर्हसि" (गीता-३-२० ॥) "अविप्लवाय धर्माणां पालनाय कुलस्य च । सङ्ग्रहाय च लोकानां मर्यादास्थापनाय च ॥ प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः । मनीषी वैदिकाचारं मनसापि न लङ्घयेत् ॥ यथा हि वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम् । लोकोपयोगिनीं रम्यां बहुसस्यविवर्द्धनीम् । लङ्घयन् शूलमारोहेदनपेक्षोऽपि तां प्रति । एवं विलङ्घयन्मर्त्यो मर्यादां वेदनिर्मिताम् । प्रियोऽपि न प्रियो मेऽसौ मदाज्ञाव्यतिवर्तनात्" (ल-न्त्र-१७-९३, ९४, ९५, ९६॥) इति केवलभगवदाज्ञारूपशास्त्रास्तिक्यातिशयेन स्वविषयकलोकप्रतीत्यनुसारेण व्यवस्थया तत्तद्धर्मानुष्ठानशालिनां लोकायतिकरहस्यावतारचोद्यस्य महापापफलत्वात् ।

अथ यदुक्तं "अग्नीन्द्रादिदेवतान्तरमन्त्रकरणकवर्णाश्रमधर्मानुष्ठाने पारमैकान्त्यविरोधस्स्यादिति चोदनं वेदान्तव्युत्पत्त्यभावकृतम्, तेषां मन्त्राणां "साक्षादप्यविरोधं जैमिनिः" (ब्र-सू-१-२-२९॥) इत्युक्तरीत्या साक्षाद्भगवत्परत्वेऽपि विरोधाभावात् । "उपासात्रैविध्यात्" (ब्र-सू-१-१ ३२॥) इत्युक्तरीत्या तत्तद्देवतान्तरविशिष्टाराधनेऽपि पारमैकान्त्यविरोधाभावाच्च" इति, तदप्यनुपपन्नम् । देवतान्तरलिङ्गरहितानां मन्त्राणां साक्षाद्भगवत्परत्वसम्भवेऽपि तद्वतां तदयोगसम्भवात्, मधुविद्यायां कार्यब्रह्मोपासनस्य वसुपदप्राप्तिलक्षणफलान्तराभिधानात्, तन्न्यायेनैव "उपासात्रैविध्यात्" इत्युक्तत्रिविधोपासनान्तर्गतेन्द्रप्राणाद्युपासनस्यापि फलान्तरप्राप्तेस्सिद्धत्वेन तत्रापि विशेणांशस्याराध्यताया अवर्जनीयत्वात्, "एकान्ती तु विनिश्चित्य देवताविषयान्तरैः । भक्त्युपायं समं कृष्णप्राप्तौ कृष्णैकसाधनः ॥ देवतान्तरशब्दादि भक्तिकृष्णाख्यहेतुषु । साम्यकृत्परमैकान्ती हरौ स्वामीति बुद्धिमान्" (प्रपन्नपारिजाते-५-२,३॥) इत्युक्तैकान्तिपरमैकान्तिलक्षणयो-

रूपासकानां दुर्लभतया तन्निष्ठोदाहरणेन पारमैकान्त्यभङ्गाभावोपपादनस्यासङ्गतत्वाच्च।

अथ यच्चोक्तं "प्रपन्नानां शास्त्रीयकैङ्कर्यवदर्थद्रव्यार्जननिवेदितविनियोगादिभिस्साधनान्तरप्रयोजनान्तरप्रसङ्गो न स्यात्, तथैव विधिबलप्राप्तानीन्द्रादिरूपाराध्यविशेषणैरपि देवतान्तरप्रसङ्गो न स्यादेव। "ये यजन्ति पितॄन्देवान्ब्राह्मणान्सहुताशनान्। सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते" (दक्षस्मृतौ।।) इति सर्वत्र भगवत एवाराध्यत्वात्" इति, तदप्यनुपपन्नम्। तथा सति "देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि" (गीता-७-२३।।) "पितॄन्यान्ति पितृव्रताः।भूतानियान्ति भूतेज्या"(गी-९-२५।।)इति फलभेदानुपपत्तिप्रसङ्गात्, सर्वेषां भगवद्भक्तत्वेन भगवत्प्राप्तेरेव सर्वत्र फलतया वक्तव्यत्वात्, मन्त्ररत्नप्रथमखण्डे मतुबन्तप्रतिपन्नविशेषणस्य स्वविशेष्यसमानोद्देश्यत्वं वदतां तदपेक्षयान्तरङ्गभूतसामानाधिकरण्यप्रतिपन्नविशेषणानामनुद्देश्यतावादस्यात्यन्तपरिहसनीयत्वात्, अनुगृहीतश्च वेदान्ताचार्यैः—"प्रतर्दनादिविद्यासु चेतनान्तराणां लक्ष्मीतुल्यं विशेषणत्वं—"प्रतर्दनादिविद्यासु वेद्येऽपि परमात्मनि। अचेतनवदिच्छाप्रश्चेतनश्च विशेषणम्॥ इत्थं प्रपत्तिविद्यायां तत्तन्मन्त्रानुसारतः। विष्णुपत्न्या गुणाद्यैश्च विशिष्टविषयोऽत्र नः" इति, कैङ्कर्यादिप्रयोजकस्य भगवच्छेषत्वस्य स्वस्वरूपान्तर्भाववद्वर्णाश्रमादीनां देवतान्तराराधनप्रयोजकानां स्वरूपान्तर्गतत्वाभावेन तयोरत्यन्तवैषम्यसत्त्वेन कैङ्कर्यादिदृष्टान्तोदाहरणस्यानुपपन्नत्वाच्च।

अथ यच्चोक्तं "पूर्वाचार्यप्रणीतपारमैकान्त्याधिकारकनित्यग्रन्थेषु देवर्षिपित्रादिरूपिणो भगवत एवाराध्यत्वोक्त्या न वर्णाश्रमधर्मैः पारमैकान्त्यविरोधः" इति, तदसत्यम्। भगवच्छरीरत्वविशिष्टानां देवर्षिप्रभृतीनामेव तत्रतत्र तत्तत्कर्माराध्यकण्ठोक्तेः, भगवच्छरीरभूतस्वात्मोपासकस्य पञ्चाग्निविदस्स्वात्मोपासकत्ववत् तच्छरीरभूतदेवतान्तराराधकानामपि देवतान्तरनिष्ठत्वस्यावर्जनीयत्वात्, तत्तत्प्रबन्धाधिकारभूतस्य पारमैकान्त्यस्यापि परमपुरुषैकविषयकपरत्वनिश्चयमात्ररूपत्वेन पूर्वोक्तलक्षणपारमैकान्त्यरूपत्वाभावाच्च। इत्थं हि नित्ये भाष्यकारवचनम्—"देवानृषीन्पितॄन्भगवदात्मकान्ध्यात्वा" इति। अत्र भगवान् आत्मा येषां, ते भगवदात्मकाः, तान्- भगवच्छरीरभूतानित्यर्थः। तथा च प्राधान्येन देवतान्तरविषयकमेव ध्यानमि-

त्यागतम् । एवमेव "नारायणात्मकान्देवानृषीन्सन्तर्पयेत्पितॄन्" इत्यादिश्रीमद्वेदान्तिवचनादिष्वपि द्रष्टव्यम् ।

यदि वर्णाश्रमधर्मेषु देवर्षिपितृप्रभृतीनामाराध्यान्तर्भावो न स्यात्, तर्हि तेषां देवादिऋणनिवर्तनरूपत्वाभावेन प्रत्यवायवारकत्वमेव न स्यात् । जन्मसिद्धदेवादिऋणत्रयनिबन्धनप्रत्यवायजातस्य वर्णाश्रमधर्मानुष्ठानरूपतत्तद्देवताराधनात्मकऋणनिवृत्त्यैव निष्पाद्यत्वात् । न च भगवदाराधनेन देवतान्तरऋणनिवृत्तिः; अन्याराधनेनान्यऋणनिवृत्त्ययोगात् । सकृदाराधनेन सर्वऋणनिवृत्त्या वा यावज्जीववर्णाश्रमधर्मानुष्ठानवैफल्यापत्तेः ।

न च प्रमाणबलात् तत्तत्कालीनभगवदाराधनानां तत्तदृणैकदेशमात्रनिवर्तकत्वम्, तादृशप्रमाणस्यैव दुर्लभत्वात् । "यावज्जीवमग्निहोत्रं जुहुयात्" "अहरहस्सन्ध्यामुपासीत" "ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" (यजुषि-काण्डं ६, प्रश्न , अनुवाके , पंजा ।।) इत्यादिभिर्देवतान्तराराधनरूपाणामेव सतां तदृणनिवर्तकतायास्सोपपत्तिकप्रमाणसिद्धत्वात् । भगवद्दासभूतस्य चेतनस्य भगवदपेक्षया ऋणित्वासम्भवेन ऋणापकरणार्थैर्वर्णाश्रमधर्मैर्निष्कृष्टरूपस्य भगवत्समाराध्यत्वायोगात्, अत एव तेषां निष्कृष्टस्वरूपप्रयुक्तत्वाभावेन कैङ्कर्यरूपत्वासम्भवाच्च; प्रपन्नानां वर्णाश्रमप्रयुक्तत्वाकारेण वर्णाश्रमधर्मानुष्ठाने पारमैकान्त्यविरोधस्य दुरुद्धरत्वात् ।

न चैवं लोकसङ्ग्रहार्थवर्णाश्रमधर्मानुष्ठानेऽपि पारमैकान्त्यविरोधप्रसङ्गः; लोकसङ्ग्रहार्थानां वर्णाश्रमप्रयुक्ततया देवतान्तरऋणापकरणार्थत्वाभावेनार्थानुसन्धानरहितकेवलमन्त्रोच्चारणपूर्वकं वा, तत्तद्देवतोपलक्षितभगवत्स्वरूपध्यानपूर्वकं वा, "साक्षादप्यविरोधं जैमिनिः (ब्र-सू-१-२-२९।।) इति न्यायेन साक्षाद्भगवत्स्वरूपानुसन्धानपूर्वकं वानुष्ठानेऽपि लोकसङ्ग्रहणरूपप्रयोजनसिद्धेः रक्षततया तत्र देवतान्तराणामाराध्यतयानुसन्धानानावश्यंभावेन विरोधाभावात् । न च प्रपन्नानां वर्णाश्रमाभावे सर्वेषां सर्ववर्णाश्रमधर्मानुष्ठानप्रसङ्गः; वस्तुतस्तदभावेऽपि भगवत्प्रादुर्भावेष्विव लोकप्रतीत्या तत्सत्त्वेन तदनुष्ठानव्यवस्थोपपत्तेः । तथा चोक्तं "प्रादुर्भावैस्सुरनरसमो देवदेवस्तदीया जात्या वृत्तैरपि च गुणतस्तादृशो नात्र गर्हा" इति ।

अथ यच्चोक्तं "श्रीभाष्यकारैः स्वान्तिमदशायां कृच्छ्रेणोत्थाय सन्ध्याकाले जलाञ्जलिप्रक्षेपस्यानुष्ठितत्वात्, वर्णाश्रमधर्माणामौपाधिकत्वेन त्याज्य-

तावचनं पूर्वानुष्ठानविरुद्धम्" इति, तदप्यनुपपन्नम् । श्रीभाष्यकारस्यानन्तावतारूपतया वस्तुतस्तस्य वर्णाश्रमयोरेवाभावेन तदनुष्ठानस्य वर्णाश्रमाप्रयुक्ततया केवललोकसङ्ग्रहार्थत्वात् । केवललोकसङ्ग्रहार्थानां भगवदाज्ञाकैङ्कर्यरूपत्वस्य प्रागेवोक्तत्वात् ।

अथ यच्चोक्तं "प्रपन्नस्य वर्णाश्रमाद्युत्तीर्णत्वोक्तिः—कलिकोलाहलक्रीडावर्द्धिकैव । तथा सति शास्त्रीयसर्वव्यवस्थाभङ्गप्रसङ्गात् । धर्मव्याधतुलाधारशबरीविदुरादीनां शास्त्रेषु तत्तज्जात्यादिनिरूपणविरोधाच्च । न च भक्तम्लेच्छादिपूजावचनं प्रपन्नस्य जात्याद्यपगमे प्रमाणम् ।—"जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः । तानि कृत्या हतानीव विनश्यन्ति समन्ततः" (रहस्यत्रयसारे-२०-अधिकारे ॥) इत्याद्युक्तजामिपूजावत् भक्तम्लेच्छादि-पूजाया अपि तत्तज्जात्यनुसारेण नियाम्यत्वात्" इति, तदप्यनुपपन्नम् । प्रपन्नानां वस्तुतो वर्णाश्रमाद्यभावेऽपि लोकप्रतीत्यनुसारेणैव शास्त्रीयसर्वव्यवस्थाद्युपपत्तेः । "स च पूज्यो यथा ह्यहम्" (गारुडपु-पूर्वखण्डे-२१९-१०॥) इति भक्तम्लेच्छादीनां भगवत्तुल्यत्वेन पूज्यतायाश्शास्त्रकण्ठोक्ततया तदनादरेण तेषां जामिशङ्कितस्त्रीविशेषतुल्यतोक्तौ सद्यश्चण्डालतापत्तेर्दुष्परिहरत्वात्, "निन्नोडुमोक्क वलिपडवरुलिनायपोल्" (तिरुमालै-४२॥)इत्यनुगृहीतरीत्या विलक्षणभागवतानां भगवत्तुल्यत्वेन पूज्यतायाश्श्रीरङ्गनाथेन श्रीलोकसारङ्गमहामुनिस्कन्धे योगिवाहमारोप्यानुष्ठापितत्वाच्चप्रपन्नानां तत्तज्जात्यनपगमोक्तेरत्यन्तविरुद्धत्वात् ।

तस्मात्प्रपन्नकर्तृकलोकसङ्ग्रहार्थव्यापाराणां वर्णाश्रमप्रयुक्तत्वाभावेन केवलभगवदाज्ञाकैङ्कर्यरूपतया कैङ्कर्याणां च सिद्धपरवाक्यश्रवणजन्यस्वरूपप्राप्तजनितरागप्राप्ततया स्वयंप्रयोजनत्वेन "चोदनालक्षणोऽर्थो धर्मः" (पूर्वमीमांसासू - १ - १ - २ ॥) इत्युक्तलक्षणधर्मरूपत्वसम्भवेन, त्याज्यधर्मान्तर्भावस्य सुदुर्लभतया सर्वधर्मस्वरूपत्यागस्य शरणवरणाङ्गत्वे कैङ्कर्यस्यापचाररूपत्वाद्यसम्भवेन "सर्वधर्मान्परित्यज्य" इत्यनेन सर्वधर्मस्वरूपत्याग एव सिद्धोपायाधिकारिकृत्यरूपशरणवरणाङ्गतया विधीयते इति सिद्धान्ते न कोऽपि दोष इति सर्वमवदातम् ।

अथ स्वरूपत्यागसिद्धान्तस्याचार्यसूक्त्यादिविरोधशङ्काः क्रमशः प्रतिक्षिप्यन्ते ।

तत्र तावत् "अतस्स्वरूपत्यागोक्तौ कैङ्कर्यस्यापचारता। उपायत्वमतित्यागे तत्स्वरूपाङ्गता भवेत्" (रहस्य-सारे-२९॥) इति वेदान्तदेशिकश्रीसूक्तौ सिद्धान्तसिद्धोपायान्तरस्वरूपत्यागभ्रान्तित्यागावेव दूषिताविति केषाञ्चिद्वचनमयुक्तम्। कैङ्कर्यपर्यन्तसर्वधर्मस्वरूपत्यागसात्त्विकत्यागपक्षयोरेव तत्र दूषितत्वात्। सिद्धान्ते "इवत्तै धर्ममेन्गिरदु भ्रमित्तवर्जुनन्करुत्ताले" (मुमु-पडि ३-२०२॥) इति धर्माभासानामेव त्याज्यवाचिधर्मशब्दार्थत्वाभ्युपगमेन "यत्त्वत्प्रियं तदिह पुण्यमपुण्यमन्यत्" (अतिमानुषस्तवे-५३ ॥) इति निरुपाधिकभगवत्प्रियतया परमधर्मभूतस्य भगवदसाधारणपरिचरणस्य त्यागानभ्युपगमात्, उपायत्वभ्रान्तित्यागपक्षे धर्मस्वरूपानुष्ठानस्याप्रसक्त्या तदङ्गत्वप्रसङ्गायोगाच्च। तस्मादयं श्लोक औत्प्रेक्षिकत्यागवादनिराकरणपर एवेति तस्य सिद्धान्तदूषणात्मकवचनमयुक्तमेव।

अथ "अतोऽशक्ताधिकारत्वमाकिञ्चन्यपुरस्क्रिया। अनङ्गभावो धर्माणामशक्यारम्भवारणम्॥ तत्प्रत्याशाप्रशमनं ब्रह्मास्त्रन्यायसूचनम्। सर्वधर्मपरित्यागशब्दार्थास्साधुसम्मताः" (रह—सारे—२७॥) इत्यनयोश्श्लोकयोः प्राक्प्रतिक्षिप्तं पक्षषट्कमेव साम्प्रदायिकत्वेन वेदान्ताचार्यैरनुगृहीतमिति केचिन्मन्यन्ते, तदप्ययुक्तम्, निरुक्तदोषदुष्टानां तेषां साम्प्रदायिकत्वायोगात्। किन्तु सर्वधर्मस्वरूपत्यागविधेरधिकार्यवस्थानुगुण्येन षोढाफलपर्यवसानमेव साम्प्रदयिकतया तद्वचनाभिप्रेतम्। तथा हि-उपायान्तरविषयकोपायत्वज्ञानतदिच्छायत्नादिसर्वव्यापारवर्जितात्यन्ताकिञ्चनविषये त्यक्तव्योपायान्तरव्यापारस्य कस्यचिदपि अभावेन त्यागविषयकाप्रवर्तप्रवर्तनरूपविधिव्यापारस्य प्रयोजनाभावात्, योग्यतानुसारेण त्यागविधिरज्ञातज्ञापनमात्रे पर्यवस्यन्ननुवादतुल्यतां भजते। एतदधिकारिविशेषमभिप्रेत्यैव तत्रतत्र वेदान्ताचार्याणां त्यागानुवादवचनम्।

न चैवं तादृशाधिकारिणस्त्यागानुष्ठानविरहादङ्गवैकल्यम्; अधिकाररूपविद्यांप्रति सिद्धस्याप्यङ्गत्वसम्भवात्। एवमङ्गाधिकारयोरैक्यमभिप्रेत्य तत्रतत्र तेषामधिकारानुवादवचनम्। यद्वा 'त्यागं जानीहि' इत्यज्ञातज्ञापनविधिसिद्धत्यागानुसन्धानलक्षणत्यागानुष्ठानस्यैवाङ्गत्वसम्भवात् नानुपपत्तिः। एतदभिप्रायेणैवं वेदान्ताचार्याणां त्यागविधेराकिञ्चन्यानुसंधानलक्षणकार्पण्यविधिपरत्ववचनम्।

अथ येषामधिकारिणां ब्रह्मविद्याङ्गानुष्ठानरूपो वा तदारम्भमात्ररूपो वा तत्प्रत्याशादिरूपो वा साधनान्तरविषयकत्यक्तव्यापारस्सम्भवति। तेषां विषये त्यागविधिरप्रवर्तने तत्तद्व्यापारनिवारणमात्रे पर्यवस्यतीति श्रीवेदान्ताचार्यैस्तत्तदधिकार्यभिप्रायेण नैरपेक्ष्यविधानपरत्वमशक्यारम्भनिवारणपरत्वं तत्प्रत्याशानिवारणपरत्वं चानुगृहीतम् ।

अथ येषामुपायान्तरविषये साङ्गप्रधानोपसंहारार्थज्ञानशक्त्यादिपूर्त्या तदनुष्ठानमस्ति, तद्विषये त्यागविधिस्साक्षादुपायान्तरत्याग एव पर्यवस्यतीति तदधिकार्यभिप्रायेण ब्रह्मास्त्रन्यायसूचनमनुगृहीतम् । तस्मादुदाहृतश्लोकयोस्स्वरूपत्यागविधिफलपर्यवसानसंप्रदायप्रदर्शनमात्रपरत्वात् प्राक्दूषितपक्षद्वूकपरत्ववचनमनुपपन्नमेव ।

अत्रेदमवधेयम्—सिद्धान्ते वरणाङ्गतया विधीयमानसर्वधर्मपरित्यागो नाम-येन सम्बन्धेन वर्तमानानां धर्माणां साक्षाद्वा परम्परया चिकीर्षादिद्वारा वा मोक्षार्थादृष्टप्रयोजकता स्यात्, तत्सम्बन्धावच्छिन्नधर्मत्वावच्छिन्नप्रतियोगिताकाभावप्रयोजकव्यापार एव । स च यथासम्भवमधिकार्यवस्थानुगुण्येनोपायान्तरयोग्यताज्ञानतदुपायत्वज्ञानतत्प्रत्ययाशाचिकीर्षातदारम्भादिनिवृत्तिमात्र एव पर्यवस्यतीति साधुसम्मतं षोढात्यागविधिपर्यवसानमुपपन्नमिति ।

इत्थमर्थाविशेषेऽपि न्यायवैदेशिकैः परैः। देशिकाचरिते मार्गे दिङ्मोहे नैव लङ्घ्यते ॥ आपातचारुभिः केचित् बालिशाः मुग्धजल्पितैः । रचयन्ति वरीवस्यां महामोहमहीपतेः॥ सर्वधर्मेष्वशक्तानां प्रपत्तौ यद्यधिक्रिया । तर्हि वन्ध्यासुता एव प्रपद्येरंस्तथाविधाः॥ भक्तौ साक्षादशक्तानां प्रपत्तिरिति यन्मतम् । कर्मज्ञानतदङ्गादिवैफल्याच्च बाधितम्॥ अवताररहस्यादिसापेक्षे साङ्गपञ्चके। न्यासेऽस्मिन्नैरपेक्ष्यं च शशशृङ्गसहोदरम् ॥ यद्यशक्तानपेक्षत्वं प्रपत्तेर्वस्तुतो भवेत् । भक्तिस्थाने भगवतो निवेशस्तु तदा कुतः॥ कार्पण्याशक्त्यसंरंभत्यागादिविधिवर्णनम्। धीविलम्बादिभिर्दुष्टमित्याद्यैरेव दर्शितम्। शरणागतिसामर्थ्ये विकल्पाभ्यां निवारिते। शक्योपायान्तरे वन्ध्यातत्परित्यागचोदना ॥

अथ यच्चान्यत्र "सर्वधर्मान्परित्यज्य" इत्यस्योपायबुद्धित्यागविधायकत्ववचनं—तत्सर्वं स्वरूपत्यागशेषभूतभ्रान्तित्यागावश्यकत्वमात्रपरम् ।

"नीर्नुमदेन्निवै वेर्मुदल्मायुत्तु" (तिरुवाय्मोलि-१-२-३ ॥) इति भगवता श्रीपरांकुशमुनिना भ्रान्तित्यागावश्यकतायाः प्रदर्शितत्वात् । शुक्तौ रजत-ग्रावद्भ्रान्त्यनुवृत्तिभावनात्मयान्वयस्य दुष्परिहरत्वेन तत्त्यागं विना सर्व-धर्मस्वरूपत्यागायोगात् । तथा चोक्तं विष्णुपुराणे—"अधिकारबोधयुक्तेषु विद्यते भावभावना। आक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु" (वि-पु-६-७-५१॥) इति। अयमर्थः-'देवोऽहं, मनुष्योऽहम्' 'ब्राह्मणोऽहम् क्षत्रियोऽहं' इत्यादिदे-हात्माभिमानरूपविशेषज्ञानेषु तद्धेतुभूतेषु कर्मसु वाक्षीणेषु सत्सु चेतनानां "मत्फलसाधनत्वान्मदर्थमिदं कर्म" इति कर्मफलस्वाम्यलक्षणममतात्मकाधि-कारबोधो भवति, तादृशाधिकारबोधयुक्तेषु भावभावना, भवो नाम-यज्युपा-स्यादिधात्वर्थः, तस्य भावना तदनुष्ठानानुकूलान्तरोद्योगः, स विद्यत इति। तथा च भगवत्कटाक्षसहकृताचार्योपदेशबलेन वर्णाश्रमाद्यभिमानफलित्वाद्य-भिमानरूपाहङ्कारममकारयोर्निवृत्तौ सत्यामेव कर्मज्ञानादिभावनान्वयश्शक्यते त्यक्तुमिति भ्रान्तित्यागस्यावश्यकत्वमुपपन्नमेव ।

तथा चोक्तं महाभारते शान्तिपर्वणि मोक्षधर्मे—"त्यज धर्ममधर्मं च त्यज सत्यानृते उभे । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ त्यज धर्ममसङ्कल्पात् त्यजाधर्ममहिंसया । उभे सत्यानृते बुध्या बुद्धिं परमनिश्च-यात्" (भार-शा-मो-३३७-४०,४१ ॥) इति। अत्र प्रपत्तिप्रकरणेषु धर्मत्याग-स्यानुवादभ्रान्तिं वारयितुं—'धर्मं त्यज' इति स्वातन्त्र्येण धर्मत्यागो विधी-यते । "वीडुमिन्" (तिरुवाय्मोलि-१-२-१ ॥) इति वत् । एतेन त्यागस्य विधेयत्वं न प्रपत्त्यङ्गतामात्रप्रयुक्तम्, किन्तु कलञ्जभक्षणादीनामिव निष्कृष्टा-त्मस्वरूपं प्रति धर्माणां बलवदनिष्टानुबन्धित्वप्रयुक्तमपीति सिध्यति। 'अधर्मं च त्यज' इत्यनेन 'सर्वधर्मान्परित्यज्य' इत्यादिष्वभावरूपधर्माणां धर्मशब्दा-न्तर्भावभ्रान्तिर्व्यावर्त्यते । 'धर्ममधर्मं च त्यज' इति धर्माधर्मयोरेकक्रियान्वय-स्वारस्यात् अधर्माणां यथा त्यागः, तथैव धर्माणामपि त्यागः कर्तव्य इति लभ्यते। एतेन बुद्धित्यागादिपक्षा व्यावर्त्यन्ते । 'सत्यानृते त्यज' इत्यनेन "सर्वकामांश्च साक्षरान्" इत्युक्तचेतनाचेतनरूपभोग्यान्तरत्यागो विधीयते। 'उभे सत्यानृते त्यक्त्वा' इत्यादारातिशयादनुवादः। तेन स्वयंप्रयोजनतया सर्वलोकानुभूयमानयोश्चेतनाचेतनयोस्त्यागस्यातिदुर्लभत्वम्, "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" (नारदपरिव्राजकोपनि-३॥) इत्यपरमात्मनि

वैराग्यस्य स्वरूपानुरूपतया पुरुषार्थत्वञ्च गम्यते। 'येन त्यजसि तत्त्यज'- येन-ज्ञानेन, सत्यानृते त्यजसि, तदपि ज्ञानं वक्ष्यमाणप्रकारेण त्यजेत्यर्थः।

अथ विहितेषु त्यागेषु प्रधानांशः प्रतिपाद्यतेऽनन्तरश्लोकेन—त्यज- धर्ममसङ्कल्पादित्यादिना। असङ्कल्पात्-फलसङ्कल्पत्यागात्, अधिकारबोध- त्यागात् इति यावत्। यद्वा "तदा हि सङ्कल्पतरोः फलानि" इत्यत्रेव, सङ्कल्पाः-सङ्कल्पना, देवाद्याकारेणैकिकृत्यात्मकल्पना; अधिकारबोधस्यापि मूलभूतं देहात्माभिमानरूपं विशेषज्ञानमिति यावत्। तत्त्यागोऽसङ्कल्पः, तस्मा- दित्यर्थः। तथा च धर्मस्वरूपत्यागस्य प्रधानप्रयोजकमधिकारबोधस्य वा तन्मूलभूतदेवादिदेहात्माभिमानस्य वा त्याग इत्युक्तं भवति। अथाधर्मत्यागे प्रधानांशमाह—त्यजाधर्ममहिंसयेति। निषिद्धत्यागेषु मध्ये प्राधान्येन हिंसा- त्याग एवावश्यकर्तव्यः। अधर्माणां प्रायशः परहिंसायामेव पर्यवसानात्। हिंसात्यागेनैव प्रायशोऽधर्मास्त्यक्तास्स्युरित्यर्थः। अथ पुत्रभार्यादिचेतना- न्तराणां गृहोपकरणादिरूपाचेतनानाञ्च यथाकथञ्चित्त्यागसम्भवेऽपि ब्रह्मानु- भवान्तर्भावेनैवानुभूयमानस्य स्वस्वरूपस्य नित्यकैङ्कर्योपकरणभूताप्राकृत- रूपादीनाञ्च कथञ्चिदपि त्यागायोगात्, सत्यानृतसामान्यत्यागः कथं घटत इत्यपेक्षायामाह—उभे सत्यानृते बुद्ध्येति। तयोस्स्वरूपत्यागसंम्भवात्, स्वभोग्यतात्यागेनैव त्यागः कर्तव्य इत्यर्थः। अथ 'येन त्यजसि तत्त्यज' इत्याद्युक्तं विवृणोति—बुद्धिं परमनिश्चयात् इति। यथा स्वभोग्यत्वाभाव- विषयिण्या बुध्द्या सत्यानृते त्यक्ते तामपि, बुद्धिं परमनिश्चयात्-परस्य "सा काष्ठा सा परागतिः" (कठोप-१-३-११॥) इति वशीकार्यकाष्ठात्वेन श्रूय- माणस्य चरमोपायभूतस्य परमपुरुषस्यैव निश्चयात्, तादृश बुद्धिप्रवर्त- कतया कारयित्वे निश्चयात्, त्यजेत्यर्थः। अत्र बुद्धेस्त्यागो नाम- तादृशबुद्धेस्स्वकर्तृकत्वभ्रमत्याग एव। न च बुद्धौ स्वस्य प्रयोज्यकर्तृतायां विद्यमानत्वात्, बाधश्शङ्क्यः; प्रयोज्यस्य परवशत्वेन कर्तृत्वायोगात्। "स्वतन्त्रः कर्ता" (पाणिनीयसू- ॥) इति स्वतन्त्रस्यैव कर्तृत्वस्मरणात्। यद्वा भगव- त्प्रेरणनिरपेक्षकर्तृत्वभ्रमत्यागस्यैवात्र त्यागशब्दविवक्षितत्वान्न दोषः। तथा चानुसंहितं पूर्वाचार्यैः 'अदुवुमवनदिन्नरुळे" (तिरुवाय्-८-८-३॥) "वयित्तिल् कोण्डु मन्न वैत्तेन्मतियाले" (तिरुवाय्-८-८-९॥) "यानोट्टि येन्नुळ्ळिरुत्तुव- मेन्निलन्" (तिरुवाय्-१-७-७॥) "शरणमिति वचोऽपि मे नोदियात्" (वरद-

राजस्तवे-८८ ।।) इत्यादिषु । तदेवं त्यागशब्दार्थविवरणपरे वचनद्वये धर्मत्यागसिद्धये सङ्कल्पादिरूपभ्रान्तित्यागस्यैव प्राधान्येनावश्यानुष्ठेयतायाम्-प्रदर्शिततया 'सर्वं धर्मान्परित्यज्य' इत्यत्र केषांचिद्बुद्धित्यागवचनं भ्रान्तित्यागावश्यकत्वपरमेव ।

अथ यदपि "इवन् तानिवैतन्नै नैराह विट्टिलन्" (मुमुक्षुप्पडि-३-२८१।।) इत्यादिसाक्षात्त्यागाभाववचनं, तदपि प्रपन्नावश्यंभाविस्वरूपानुरूप-कैङ्कर्यादिव्यापारेषु वर्णाश्रमधर्मादीनामतिदेशप्राप्तदंशानुवृत्तिमात्रपरम् । तथा हि प्रपन्नेन यल्लोकसङ्ग्रहार्थं वा केवलभगवत्प्रीत्यर्थं वा कर्मादिकमनुष्ठीयते तत्सर्वं कुण्डपायिनामयनाग्निहोत्रवद्धर्मान्तरमेव । गुणभेदात्, फलभेदात्, देवतादिभेदाच्च । लोकसङ्ग्रहार्थेषु हि "कुर्याद्विद्वांस्तदासक्तश्चिकीर्षुर्लोकसङ्ग्रहम्" (गीता-३-२५ ।।) इत्यसङ्गपूर्वकत्वलक्षणगुणभेदात्, "यद्यदाचरति श्रेष्ठः" (गीता-३-२१।।) "मनीषी वैदिकाचारम्" (ल-न्त्रे-१७-९४ ।।) इति प्रशस्ततममनीषित्व लक्षणाधिकारभेदात्, "अनपेक्षोऽपि तां प्रति" (ल-न्त्रे-१७-९६ ।।) इति प्रत्यवायपरिहारार्थत्वाभावप्रतीत्या केवललोकसङ्ग्रहद्वारकभगवत्प्रीतिमात्रप्रयोजनकत्वावगमाच्च केवलवर्णाश्रमधर्मापेक्षया भेदस्सिद्धः । एवं केवलप्रीत्यर्थदीपारोपणादिषु च "मद्भक्तो मद्याजी-भव" (गीता-९-३४।।) इति प्रीतिकारितत्वरूपगुणभेदात्, असाधारणदिव्यविग्रहविशिष्टभगवत्स्वरूपात्मकदेवताभेदात्, स्वयंप्रयोजनतत्प्रीतिमात्रात्मकफलभेदाच्चोपासनान्तर्गतयज्याद्यपेक्षया भेदस्सिद्धः ।

न चात्र प्रसिद्धकर्मानुवादेन गुणादिविधानं शक्यते वक्तुम्, फलस्याविधेयत्वात् । "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः" इति तदसम्भवाच्च । तस्मादाग्नेयादिकाम्येष्टिवत्, कुण्डपायिनामयनाग्निहोत्रादिवच्चेदं सर्वं धर्मान्तरमेव । तथा च सूत्रं "फलश्चाकर्मसन्निधौ" (पूर्वमीमां-२-३-२५ ।।) इति । अस्य शावरभाष्यम्—"अनारभ्य किंचिच्छ्रूयते—"आग्नेयमष्टाकपालं निर्वपेत् रुक्कामः" "अग्नीषोमीयमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामः" "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इति । अत्र सन्दिह्यते-किं प्राकृतेष्वाग्नेयादिषु फलं विधीयते, उत प्राकृतेभ्यः कर्मान्तराण्येतानि । किं प्राप्तं ? प्राकृतेषु फलविधिरिति । कुतः-विदिता आग्नेयादयः प्रत्यभिज्ञायन्ते । तस्माच्चेषामनुवादः फलसम्बन्धार्थं इत्येवं प्राप्ते ब्रूमः-फलश्च भेदकं-अकर्म-

सन्निधौ श्रूयमाणम् । कथम्?-अनुवादे सति न शक्यते फलं विधातुम् । विधायकस्याभावात् । न ह्यविधीयमानो हि उपायो रुचो भवति इति गम्यते । अपि च रुक्कामे अत्र विधीयमाने कामस्यानित्यत्वात्, आग्नेयादीनां नित्यत्वात्सम्बन्धो नावकल्पेत । एवं सर्वत्र । तस्मात्कर्मान्तराणि". इति ।

एवमेतत्पूर्वाधिकरणसूत्रं "प्रकरणान्तरे प्रयोजनान्यत्वम्" (पूर्वमी-२-२-२४ ।।) इति । अत्र भाष्यम्—"कुण्डपायिनामयने श्रूयते-"मासमग्निहोत्रं जुहोति" "मासं दर्शपूर्णमासाभ्यां यजते" इत्येवमादि । तत्र सन्दिह्यते-किं नियते अग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः, अथ किं नियताग्निहोत्रान्नियताभ्यांच दर्शपूर्णमासाभ्यां कर्मान्तरविधानमिति । किं तावत्प्राप्तं-नियतेषु कालविधिः इति । कुतः? कालविधिसरूप एष शब्दो मासमिति । कथम् कालविधिसरूपता, 'यदग्निहोत्रं जुहोति' इति विदितम्, मासमित्यविदितम्, एवञ्चाग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च नार्थान्तरवृत्तौ भविष्यतः । तस्मात्कालविधिः । ननु कुण्डपायिनामयनप्रकरणं बाध्यतैवम् । कामं बाध्यताम्, वाक्यं हि बलवत्तरम् । एवं प्राप्ते ब्रूमः-प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे, तस्य वाचकं भवितुमर्हति । ननु प्रत्यक्षोऽग्निहोत्रस्य। दर्शपूर्णमासयोश्च गुणविधिः । नेत्युच्यते । कथम्? "उपसद्भिश्चरित्वा" इत्युक्त्वा इदमभिधीयते । न चोपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति ।तस्मादशक्यः-तत्र मासविधिः । अथोच्येत, उपसदोऽपि विधीयन्ते इतिं, तथा गुणविधानार्थेऽस्मिन्वाक्ये अनेकगुणविधानात्, वाक्यं भिद्येत । अस्मिन्पक्षे पुनरतन्त्रं अग्निहोत्रशब्दो न कर्म विशेक्ष्यति, तेन वाक्यभेदो न भविष्यति । तस्मत्कर्मान्तरमिति सिद्धम्" इति ।

अत्र "फलं चाकर्मसन्निधौ" इति पूर्वोदाहृताग्नेयादिकाम्येष्ट्यधिकरणे फलस्य विधेयत्वासम्भवात् यथा कर्मभेदसिद्धिः, तथैवात्रापि "अविप्लुवाय धर्माणां" (ल-न्त्रे-१७-९३।।) इत्यारभ्य "मनीषी वैदिकाचारं मनसापि न लङ्घयेत्" (ल-न्त्रे-१७-१४।) इति प्रपत्तिप्रकरणे विधीयमाने कर्मणि लोकसङ्ग्रहादिमूलकस्य केवलस्य च स्वयंप्रयोजनभगवत्प्रीतिरूपफलस्य विधातुमशक्यत्वात् केवलवर्णाश्रमधर्मापेक्षया भेदस्सिध्यति । यथा चानन्तरोदाहृतमासाग्निहोत्राद्यधिकरणे मासोपसदाद्यनेकगुणानां प्राप्ते कर्मणि विधातु-

मशक्यतया भेदसिद्धिः, तथैवात्रापि लोकसङ्ग्रहादिरूपफलस्यासङ्गरूपगुणस्य मनीषित्वात्प्राशस्त्यलक्षणनिमित्तस्य च प्राप्ते कर्मणि विधातुमशक्यत्वात् लोकसङ्ग्रहार्थानां केवलवर्णाश्रमधर्मेभ्यो भेदसिद्धिः ।

एवं "मन्मना भव" (गीता-१८-६५॥) इत्युक्तपरिपूर्णशेषवृत्तिरूपप्रपन्नावश्यंभाविव्यापाराणामप्युपासनविधिप्राप्तकर्मज्ञानाद्यनतिरेकेण तदनुवादेन "मद्भक्तो मद्याजी-भव" (गीता-१८-६५॥) इति प्रीतिरूपगुणस्यासाधारणदिव्यविग्रहविशिष्टदेवताविशेषस्य च विधातुमशक्यत्वेन तेषां तद्भेदसिद्धिरित्यनुसन्धेयम् । तदेवं "मन्मना भव" इत्यादेरनेकगुणविशिष्टपरिपूर्णशेषवृत्त्यादिरूपधर्मान्तरपरत्वमभिप्रेत्यानुगृहीतं श्रीयामुनदेशिकैःश्रीगीतार्थसङ्ग्रहे "ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः । तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः ॥ भगवध्यानयोगोक्तिवन्दनस्तुतिकीर्तनैः । लब्धात्मा तद्गतप्राणमनोबुद्धीन्द्रियक्रियः ॥ निजकर्मादिभक्त्यन्तं कुर्यात्प्रीत्यैव कारितः । उपायतां परित्यज्य न्यसेद्देवे तु तामभीः" इति ।

अयं भावः—"मन्मना भव" "सर्वधर्मान्परित्यज्य" इति श्लोकद्वयस्यैकप्रकरणत्वात्, "सर्वगुह्यतमं भूयः" (गीता-१८-६४॥) इत्युपासनप्रकरणापेक्षया प्रकरणान्तरत्वाच्चेदं श्लोकद्वयं परमैकान्तित्वापत्तिविशिष्टज्ञानिविषयम् । तत्र पूर्वश्लोकेन विरोधिनिवृत्तिपरद्वयोत्तरखण्डस्थनमश्शब्दाक्षिप्तेष्टप्राप्तिर्विशदीक्रियते । चरमश्लोकेन तदतिरिक्तखण्डद्वयार्थो व्याख्यायत इति विवेकः । उत्तरखण्डार्थैकदेशस्य प्रथमं विवरणन्तु प्राधान्याभिप्रायम् । "ओलिविल्कालमेल्लाम्" (तिरुवाय्-३-३-१॥) इत्यत्र परांकुशमुनिभिस्तथैव व्याख्यानात् । तत्र च प्रथमश्लोकपूर्वार्द्धेन उपेयाधिकारिविशेषणरूपमुपायफलमुच्यते । उत्तरार्द्धेनोपेयमिति विभागः । तथा च "मन्मना भव" इत्यादिना "निस्संशयस्सुखमास्व" (शर-गद्ये) इत्यादितुल्यत्वात् केवलोपायफलत्वेन विधिप्रेरितत्वायोगात्, केवलनिर्हेतुकभगवत्कटाक्षनिबन्धप्रीतिप्रेरितत्वात्, तेषां वेदान्तविहितान्तर्याम्यादिविषययज्ञादिरूपत्वायोगाच्चासाधारणदिव्यमङ्गलविग्रहविशिष्टभगवदनुभवजनितप्रीतिकारितकैङ्कर्यरूपधर्मान्तरत्वमेव-इति ।

एतदेतत्सर्वमभिप्रेत्यानुगृहीतं श्रीसहस्रनामभाष्ये "एष मे सर्वधर्माणाम्" इत्यादिविवरणावसरे "धर्मो हि - ऐहिकाः - पशुपुत्रा

ह्यर्थाः, आमुष्मिकाः - स्वर्गाद्यर्थाः, असङ्गैर्भगवदाराधनबोधानुष्ठितेष्टा - पूर्तपरिकर्मितत्वज्ञानसमाधिशरीरो मोक्षार्थः, सानुरागभगवत्स्मरणकीर्तन- प्रणामादिस्तदसाधारणात्मा चेति चतुर्विधाः । तत्राधिकृतम इति तमपा त्रिभ्यश्च चतुर्थमुत्कर्षति" इति । तदेवं प्रपन्नावश्यंभाविधर्माणां धर्मान्तरेभ्यो भेदस्य प्रमाणोपपत्तिसम्प्रदायसिद्धत्वात्, तेषां त्याज्यधर्मानन्तर्भावाच्च प्रपन्नानामुपायान्तरस्वरूपत्यागस्य सिद्धत्वेन "नेराहविट्टिलन्" इति सूक्तिः- "सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथासक्तः" (गीता-३-२५॥) इत्यतिदेशिकांशानुवृत्तिमात्राभिप्रायैव । अत एव तत्र तत्र प्रपन्नकर्तृकलोकसङ्ग्रहार्थव्यापारेषु तत्तद्वर्णाश्रमधर्माणामतिदेशोऽपि सफलः। यद्वा बुद्धिभेदस्यैव प्राधान्येन धर्मभेदनियामकत्वात् प्रपन्नानां सर्वधर्मस्वरूप- त्यागो बुद्धिविशेषत्याग एव पर्यवस्यतीत्यभिप्रायेण वा "नेराहविट्टिलन्" इत्यादिसूक्त्युपपत्तिः । तदप्यनुगृहीतं श्रीसहस्रनामभाष्ये "भावभेद एव धर्माधर्मनिदानम् । न क्रियाविशेषः । यथा श्रीविष्णुतत्त्वे "भावशुद्धिर्मनु- ष्याणां प्रमाणं सर्ववस्तुषु । अन्यथालिङ्ग्यते कान्ता स्नेहेन दुहितान्यथा" इति । तथा "तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः । प्रसह्यचिन्ताहरणं नकल्कस्तान्येवभावोपहितानि कल्कः" (भारते-आदि-१० ३०१॥) इति । अन्यत्र "गङ्गादितीर्थेषु वसन्ति मत्स्या देवालये पक्षि- सङ्घाश्च नित्यम् । भावोज्झितास्ते न फलं लभन्ते तीर्थानि पुण्यायतनाश्च- मुख्याः" इति" इति ।

न चैतावतास्मिन्पक्षे प्रपन्नस्योपायान्तरस्वरूपत्यागो नास्तीति भ्रमित- व्यम्; तथा सति स्नेहेन स्वसुतां संश्लिष्यतः सुतागमनरूपमहापातकस्य स्वरूपत्यागाभावप्रसङ्गात् । तस्मात्प्रपन्नानां सर्वधर्मान्तरस्वरूपत्यागो न क्रियात्यागनिबन्धनः, किन्तु तद्धर्मान्तरत्वप्रयोजकबुद्धिविशेषत्यागमात्र - निबन्धन इत्येतावद्विवक्षया "नेराहविट्टिलन्" इत्यनुगृहीतमिति नानुपपत्तिः। अथवा भाष्यकारकृतगुरुवचनातिलङ्घनन्यायेनानृशंस्यातिशयेन प्रपन्नानां निषिद्धधर्मान्वयस्य भगवद्बुद्ध्या तस्य कैङ्कर्याद्यन्तर्भावस्य च सम्भवमभि- प्रेत्यैवमनुगृहीतमिति नानुपपत्तिः । अत एव "लोकापवादभीतियाल्लुम्" इत्यादिसूक्तिः । "पुरिट्टकट्टि" इत्यादिन्यायोदाहरणञ्चोपपद्यते ।

ननु लोकसङ्ग्रहाद्यर्थव्यापाराणां धर्मान्तरत्वमनुपपन्नम्, "सर्वथापि त एवोभयलिङ्गात्" (ब्र-सू-३-४-३४॥) इति सूत्रे तेषामपि वर्णाश्रम-धर्मानतिरेकस्य प्रत्यभिज्ञालिङ्गेन साधितत्वादिति चेत्, भ्रान्तोऽसि, तस्य सूत्रस्य विद्यार्थत्वाश्रमार्थत्वरूपाकारद्वयविशिष्टकर्ममात्रविषयत्वात्। इत्थं हि तत्सूत्रार्थः - सर्वथापि - उभयत्र विनियोगेऽपि, त एव - यज्ञादयः, कुतः? - उभयलिङ्गात् - उभयत्र प्रत्यभिज्ञानाख्यलिङ्गात् - इति। न ह्यत्र लोकसङ्ग्रहार्थस्य केवलभगवत्प्रीत्यर्थस्य वा वर्णाश्रमधर्मान्तर्भावप्रतिपादनं प्रतीयते। येनैतत्सूत्रविरोधस्स्यात्। न च तुल्यन्यायादस्य सूत्रस्य त्वदुक्तार्थसाधनपरत्वसम्भवः। "यज्ञेन दानेन" (बृह-उप-६-४-२२॥) इत्यादिवाक्येन यज्ञादीनां केवलसुबन्तपदोपात्तत्वेनानूद्यमानतया विधेयत्वायोगादगत्या वर्णाश्रमधर्मान्तर्गतयज्ञाद्यनुवादेन वेदनरूपफलसम्बन्धस्यैव विधेयत्वाभ्युपगमावश्यंभावात्तत्र प्रत्यभिज्ञालिङ्गादैक्यसाधनसम्भवेऽपि, प्रकृते "कुर्याद्विद्वांस्तथासक्तः" (गीता ३-२५) "कार्यं कर्म समाचर" (गीता-३-१९॥) "मनसापि न लङ्घयेत्" (ल-न्त्रे-१७-९४) "मन्मना भव" इत्यादिषु लोकसङ्ग्रहकैङ्कर्ययोर्विधीयमानतयात्र तन्न्यायानवतारात्। तस्माल्लोकसङ्ग्रहाद्यर्थानां धर्मान्तरत्वात् तदनुष्ठानं न धर्मस्वरूपत्यागविधिना विरुद्ध्यते।

तदेवं सिद्धान्ते धर्माभासानां स्वरूपत्यागस्याभिप्रेतत्वादेव "सन्न्यासि सुन्बुलुवचै विडुमाप्पोले" इत्यादिदृष्टान्तोपन्याससङ्गच्छते। सन्न्यासिनां पूर्वाश्रमधर्मत्यागो हि न बुद्धित्यागादिरूपः, किन्तु स्वरूपत्यागरूप एव। एवं "सर्वधर्मङ्गळैयुं विट्टेन्गैयाले शिलरधर्मङ्गळ्पुहुरुमन्नाहिल्" इति शङ्कोत्थानमपि स्वरूपत्यागोक्तावेव सङ्गच्छते। निषिद्धनिवृत्तिविषयकबुद्धित्यागादीनां निषिद्धानुष्ठानरूपत्वासम्भवेन बुद्धित्यागादिपक्षे तच्छङ्कोत्थानाप्रसक्तेः। अत एव "पातकादिहलै विडुमापोले" इति दृष्टान्तकथनमप्युपपन्नम्। लोके पातकानां सरुचिवासनं स्वरूपतो लज्जापुरस्सरत्यागस्यैव दृश्यमानत्वेन बुद्धित्यागादिपक्षे तस्य दृष्टान्तत्वायोगात्। एवं "अनुपायङ्गलानमात्रमन्रिक्के काल्कट्टेन्गिरदु" इत्यादिसूक्तिजातश्च स्वरूपत्यागसिद्धान्तप्रदर्शकमनुसन्धेयम्।

तस्माद्धर्माभासानां भ्रान्तित्यागपूर्वकस्वरूपत्याग एव वरणाङ्गमिति सिद्धम्। अत्र भ्रान्तिर्नाम - अतस्मिन्तद्बुद्धिः। स च बलवद्दनिष्टानु-

बन्धित्वविशिष्टनिःश्रेयससाधनत्वाभाववत्सु तथाविधसाधनत्ववत्त्वज्ञानमेव । "धर्मेण पापमपनुदति" (तैत्ति-नारा ६-६३ ॥) इत्यत्र मुमुक्षुंप्रति पुण्यकर्मणां ब्रह्मविद्याप्रतिबन्धरूपबलवदनिष्टानुबन्धितया पापशब्देन निर्देशवत्, "अथ पातकभीतस्त्वम्" (विष्णुधर्मे ६६·७१ ॥) इत्यत्र चरमश्लोकसमानप्रकरणे कर्मज्ञानाद्युपायान्तराणां पापशब्दनिर्देशदर्शनात्, बलवदनिष्टानुबन्धित्वं सिद्धम् । "न ह्यध्रुवैः प्राप्यते" (कठोप-१-२-१०॥) "नायमात्मा प्रवचनेन लभ्यः" (मुण्ड-३-२-३ ॥) "विष्णुपोतं विनानान्यत्किश्चदस्ति परायणम्" (वि-ध-१-५९ ॥) "त्वत्पादकमलादन्यं न मे जन्मान्तरेष्वपि । निमित्तं कुशलस्यास्ति" (जितन्ता-१-९·॥) इत्यादिभिश्चेतनव्यापाराणां निःश्रेयससाधनत्वनिषेधात् तदभावश्च सिद्धः ।

न चैवं कर्माद्युपायत्वग्राहकशास्त्रविरोधः । तस्य स्वार्थानुभवकैङ्कर्यादिलक्षणमोक्षसाधनत्वमात्रपरतया विरोधाभावात् । अत एव हि स्वर्गाद्यर्थकाम्यकर्मणामिव कर्मयोगादीनामपि फलमुखेन बलवदनिष्टानुबन्धित्वात् प्रपन्नापेक्षया पापत्वमुपायान्तरत्वञ्चोपपद्यते । एवं परार्थकैङ्कर्यरूपेष्टसाधनत्वाभाववत्तां स्वार्थकैङ्कर्यरूपफलान्तरसाधनतया बलवदनिष्टानुबन्धिनां चोपायान्तराणां स्वस्वरूपविनाशकत्वलक्षणबलवदनिष्टानुबन्धित्वं "त्यज धर्ममधर्मञ्च" इत्यादिषु धर्माणामधर्मतुल्यतया निषेधावगतम् । एवम्भूतानां च तेषां सिद्धोपायनिष्ठाभङ्गरूपानिष्टानुबन्धित्वं "उपायापायसंयोगे निष्ठया हीयतेऽनया" (ल-न्त्रे-१७-९१ ॥) इत्यादिप्रमाणात् "उपायानामुपायत्व-स्वीकारेऽप्येतदेव हि"(लन्त्रे-१७-९२॥) इत्यादितत्प्रायश्चित्तदर्शनात्, सिद्धोपायाधिकाररूपप्रपत्तेस्तदेकशरणव्रज्यरूपत्वलक्षणवस्तुसामार्थ्यात्, ब्रह्मास्त्रन्यायाच्चावगतम् । तदेव स्वार्थानुभवादिलक्षणमोक्षरूपबलवद्द्वेषविषयफलान्तरहेतुत्वात्, स्वस्वरूपनाशकत्वात्, सिद्धोपायनिष्ठाभञ्जकत्वाच्च बलवदनिष्टानुबन्धिषु परार्थकैङ्कर्यलक्षणमोक्षात्मकपरमनिःश्रेयसरूपेष्टसाधनत्वाभाववत्सु साधनान्तरेषु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताग्रह एवात्र त्याज्यतया विवक्षितो भ्रान्तिरित्युक्तं भवति ।

न चैवं "नोत्तनोन्विलेन्" (तिरुवाय्-५-७-१ ॥) "न धर्मनिष्ठोऽस्मि" (स्तो-त्रे-२२॥) इत्यादिनिर्वेदविरोधः सर्वज्ञादीनां पराङ्कुशादीनां भ्रान्त्यसम्भवेन स्वरूपनाशकत्वाद्यनिष्टानुबन्धिसाधनान्तरालाभप्रयुक्तशोकासम्भवादिति

वाच्यम् ;—फलाभिसन्धिविशिष्टवेषेण ब्रह्मविद्याविरोधिनां यज्ञादीनां तद्रहिततया ब्रह्मविद्यावर्धकत्ववत्, मोक्षसाधनतया विहितस्वप्रवृत्तित्वेनाकारेण स्वरूपविरुद्धानामपि कर्मादीनां सर्ववेदपरमतात्पर्यविषयभूतकेवलकैङ्कर्यत्वाद्याकारेण स्वरूपानुरूपत्वात्, "प्रियतम एव हि वरणीयो भवति" इति जिज्ञासाधिकरणलघुसिद्धान्तश्रीभाष्यसूक्तिरीत्या प्राप्याधिकारिविशेषणत्वात्' प्रसङ्गात्पूर्वोत्तराघाश्लेषविनाशहेतुत्वाच्च तेषां तदलाभनिबन्धनक्लेशोपपत्तेः। एवं कर्मयोगादीनां केवलप्रीतिकारितकैङ्कर्यरूपत्वमेव सर्ववेदपरमतात्पर्यविषयीभूतमित्ययमर्थः - श्रीयामुनाचार्यैर्गीतार्थसङ्ग्रहे "निजकर्मादिभक्त्यन्तं कुर्यात्प्रीत्यैव कारितः। उपायतां परित्यज्य न्यसेद्देवे तु तामभीः" इति सङ्गृह्य दर्शितः। तस्मादुपायान्तराणामुपायत्वग्रहस्य भ्रान्तित्वमुपपन्नम्। एवंभूतभ्रान्तेस्त्यागो नाम - भ्रान्तित्वज्ञानमेव। भावान्तरस्यैवाभावत्वात्।

तथा चानुगृहीतं श्रीलोकाचार्यैः - "त्यागो नाम" इत्यादिना। अयम्भावः—"त्यज धर्ममसङ्कल्पात्" इति समूलकत्यागस्यैव कण्ठतश्शास्त्रे विधानात्, "उपायत्वग्रहं तत्र वर्जयेन्मनसा सुधीः" (ल-न्त्रे-१८-९८॥) "उपायानामुपायत्वस्वीकारेऽप्येतदेव हि" (ल-न्त्रे-१७-९२॥) इति फलान्तरोपायेषु स्वाभिमतोपायत्वग्रहनिषेधपूर्वकं तत्तथात्वभ्रमे प्रायश्चित्तविधानात्, भगवता पराङ्कुशमुनिना "नीर्नुमदेन्निवै वेर्मुदल्मायूत्तु" (तिरुवाय् -१-२-३॥) इति समूलकत्वरूपत्यागप्रकारस्यानुगृहीतत्वाच्चोपायान्तरप्रवृत्तिहेतुभूततद्गोचरोपायता भ्रान्तिविषयबाधनिश्चयसहकृततादृशोपायान्तरत्याग एवात्र त्यागशब्दविवक्षितार्थो भवितुमर्हति—इति।

अत्र शुक्तिकारजतबुद्धिदृष्टान्तेनोपायान्तराणां स्वापेक्षितसाधनत्वाभावोऽभिप्रेतः। विपरीतदिग्गमनदृष्टान्तेन तेषां स्वापेक्षितपरार्थकैङ्कर्यविरुद्धस्वार्थकैङ्कर्यरूपफलान्तरहेतुत्वनिष्ठाभञ्जकत्वस्वरूपनाशकत्वादिलक्षणबलवद् - निष्टानुबन्धित्वमभिप्रेतम्। "बुद्धिविशेषत्तोडे त्यजिक्कै" इति बुद्धिविशेषसहकृतस्त्याग इत्यर्थः। अत्र 'बुद्धिविशेषत्तोडे' इत्यन्तेन पूर्वाचार्यैःप्रदर्शितो बुद्धित्यागः - स्वरूपत्यागसिद्धान्तान्तर्गतो भ्रान्तित्याग एवेति न तद्विरोध इति दर्शितम्। 'त्यजिक्कै, इत्यनेन ज्ञानचिकीर्षाप्रयत्नादिरूपसम्भावितसम्बन्धसामान्येन सर्वधर्मस्वरूपत्यागो विवक्षितः। तेन प्रागुक्तरीत्या वरणस्यासर्वाधिकारत्वप्रसङ्गशङ्का व्युदस्ता। तथा च श्रीलोकाचार्यैः 'सर्वधर्मान्परित्यज्य'

(२८) एवं द्वितीयपदार्थमुक्तवान् ; अनन्तरं तृतीय-पदमुपादत्ते—मामिति ।

मू ॥ माम् ॥ २८ ॥

छा ॥ माम् ॥ २८ ॥

(२९) तस्यार्थमाह—सर्वरक्षकमित्यादिना ।

मू ॥ सर्वरक्षकनाय्, उनक्कुक्कैयालाय्, उन्निशैवु-पार्त्तु; उन्दोषत्तै भोग्यमाहक्कोण्डु, उनक्कुप्पुहलाय्, नी-र्शुडुमाप्पोले शेर्पारे पिरिक्कुम्पोदुं विडमाट्टादे रक्षिक्कि्र एन्नै ॥ २९ ॥

छा ॥ सर्वरक्षकम्, तव हस्तकिङ्करम्, त्वदिच्छां दृष्ट्वा, त्वद्दोषं भोग्यत्वेन स्वीकृत्य, तव रक्षकम्, उष्ण-जलवत् घटयन्त्यामेव विघटयन्त्यामपि त्यक्तुमशक्तम्, रक्षन्तं माम् ॥ २९ ॥

व्या ॥ 'अस्मद्रक्षणमयं करोति, न वा' इति संश-याकरणाय सर्वेषां रक्षणे दीक्षितम्, 'स्वोत्कर्षम्, अस्म-दपकर्षं च दृष्ट्वास्माभिर्मिलित्वा वर्तते, न वा' इति भया-

---

इत्यस्य भ्रान्तित्यागपूर्वकसर्वधर्मस्वरूपत्यागपरत्वेनैव स्पष्टं व्याख्यातत्वात्, श्रीवेदान्ताचार्याणामपि तत्रैव तात्पर्यपर्यवसानात्, तथा सत्येव सकलप्रमाण-सम्प्रदायोपपत्तेश्च चरमश्लोके स्वरूपत्याग एव त्यजिधात्वर्थ इति सर्वं समञ्जसम् ॥ २७ ॥

(सर्वरक्षकम्) इति, अत्राधिकारानुगुणं सर्वरक्षकत्वमुच्यते, 'तव रक्षकम्' इत्यत्र कृपानुगुणरक्षकत्वमुच्यते, अतो न पुनरुक्तिदोषः ।

जननाय "सेनयोरुभयोर्मध्ये रथं स्थापय" (गी-१-२१॥) इति प्रेरणया कार्यस्वीकारयोग्यम्, त्वद्रक्षणेच्छया "रक्ष्यापेक्षां प्रतीक्षते" (लक्ष्मी-तन्त्रे-१७-७५॥) इत्युक्तप्रकारेण रक्ष्यभूतस्य तवेच्छां दृष्ट्वा, 'अस्मद्दोषं दृष्ट्वा दूरी भवति किम्' इति भयाजननायास्थानस्नेहकारुण्यधर्माधर्मधियाकुलस्य तव दोषं भोग्यत्वेन स्वीकृत्य, अशरण्यशरण्यत्वात्त्वेतरेषां च रक्षकाभावदशायामाश्रयितुं योग्यं रक्षकम्, शीतलस्वभावयुक्तजलस्यौष्ण्यभजनवत्, अपराधं क्षमापयित्वा घटयन्त्यां पुरुषकारभूतायां "कमलवासिनी अपि च्छिद्रं वदति चेत्" (पेरि-तिरु-४-९-२॥) इत्युक्तरीत्या दोषं प्रदर्श्य दूरीकुर्वन्त्यां त्यक्तुमक्षमं, "मद्दासा एवं न कुर्वन्ति" (पेरि-तिरु-४-९-२॥) इति वैमुख्येन स्थित्वा रक्षन्तं मामित्यर्थः ॥ २९ ॥

(३०). 'माम्' इति विभवरूपस्य दर्शितत्वात्, व्यावर्त्यानाह---अनेनेति।

---

(रक्ष्यापेक्षामि)ति, लक्ष्मीतन्त्रे सप्तदशेऽध्याये "सर्वज्ञोऽपि हि विश्वेशस्सदा कारुणिकोऽपि सन्। संसारतन्त्रवाहित्वाद्रक्ष्यापेक्षां प्रतीक्षते" इति ॥ (अस्थाने)ति, "अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलम्। पार्थम्प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्" इति गीतार्थसंग्रहश्लोकः। 'अस्थाने स्नेहकारुण्याभ्यां जाता धर्माधर्मधीः - अस्थानस्नेहकारुण्यधर्माधर्मधीः' इति विग्रहो द्रष्टव्यः ॥ २९ ॥

मू ॥ इत्ताल् - परव्यूहङ्गळैयुम्, देवतान्तर्यामित्व-त्तैयुं तविर्किरदु ॥ ३० ॥

छा ॥ अनेन - परव्यूहौ, देवतान्तर्यामित्वं च व्याव-र्त्यन्ते ॥ ३० ॥

व्या ॥ 'माम्' इत्यवतीर्य नेत्रविषयतया समीपे स्थितस्य स्वस्य वरणीयत्वेनोक्तत्वाद्देशविप्रकृष्टतया द्रष्टुं प्राप्तुं चाशक्यौ परव्यूहौ, असाधारणविग्रहयोगाभावे-नोपायान्तरनिष्ठानामुद्देश्यमग्नीन्द्रादिदेवतान्तर्यामित्वं च व्यावर्त्यन्त इत्यर्थः ॥ ३० ॥

(३१) 'धर्मान्सर्वान्त्यक्त्वा स्वमाश्रय' इत्युक्तत्वा-त्फलितं कञ्चिदर्थविशेषमाह - धर्मसंस्थापनमिति ।

मू ॥ धर्मसंस्थापनं पण्णाप्पिरन्दवन्ताने 'सर्वधर्मङ्ग-ळैयुं विट्टु एन्नैप्पत्तु' एन्गैयाले 'साक्षाद्धर्मं ताने' एन्गि-रदु ॥ ३१ ॥

---

(अग्नीन्द्रादी)ति - देवतान्तर्यामित्वम् - इन्द्रप्राणाद्यधिकरणन्या-येन परमात्मज्ञानपर्यन्तज्ञानविशिष्टाग्नीन्द्रादिदेवतान्तर्यामित्वमिति मन्तव्यम् । आचार्यान्तर्यामिण अत्यन्तोपादेयत्वात्तत्संग्रहाय सामान्यतोऽन्तर्यामिव्या-वृत्तिर्न कृतेति बोध्यम् । अनेन - वरणीयविषयो भगवान् 'अग्नीन्द्रादिदेवतान्त-र्यामी वा, असाधारणदिव्यमङ्गलविग्रहविशिष्टो वा' इति संशये वरणविषय-भूतो भगवान् परव्यूहदेवतान्तर्यामिव्यावृत्तः, असाधारणदिव्यमंगलविग्रह-विशिष्ट इत्युक्तंभवति । अर्चावतारस्य विभवावतारशेषत्वात्, अर्वाचीनानां सर्वेषामपि वरणविषयत्वाच्चार्चावतारव्यावृत्तिर्नोक्ता ॥ ३० ॥

छा॥ धर्मसंस्थापनं कर्तुमवतीर्णेन स्वयमेव 'सर्वधर्मान् त्यक्त्वा मामाश्रय' इत्युक्तत्वात् 'साक्षाद्धर्मस्स्वयमेव' इत्युच्यते॥ ३१॥

व्या॥ "धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे" (गी-४-८॥) इत्युक्तरीत्या स्वप्राप्त्युपयुक्तधर्मसंस्थापयितुमवतीर्णेन स्वयमेव "सर्वधर्मान्परित्यज्य" इति मोक्षसाधनतया शास्त्रसिद्धान्सर्वधर्मान् त्यक्त्वा मामाश्रय', इत्युक्तत्वात् ते न साक्षाद्धर्माः, स्थापनीयस्साक्षाद्धर्मस्तु "कृष्णं धर्मं सनातनम्" (भार-वन-८६-२६॥) इति सनातनधर्मस्स्वयमेवेत्यर्थ इत्युच्यत इत्यर्थः॥ ३१॥

(३२) अनेन फलितमाह—अनेन त्यक्तसाधनेभ्य आधिक्यमुच्यत इति।

मू॥ इत्ताल् - विट्ट साधनङ्गलिलेत्तं शोल्लुहिरदु॥ ३२॥

छा॥ अनेन त्यक्तसाधनेभ्य आधिक्यमुच्यते। ३२।

व्या॥ एवमुक्तेनानेन प्राक्त्यक्तसाधनेभ्योऽस्य साधनस्य वैलक्षण्यमुच्यत इत्यर्थः॥ ३२॥

(३३) तच्च किमित्यत आह—तच्चेत्यादिना।

---

(ते न साक्षाद्धर्माः) इति, कर्मज्ञानादीनां व्याजत्वेन धर्मत्वम्, न तु भगवत्प्राप्तेरद्वारकधर्मत्वम्। अद्वारकधर्मत्वं भगवत एवेति भावः। तत्र प्रमाणं दर्शयति - कृष्णमिति॥ ३१॥

मू ॥ अदावदु - सिद्धमायु, परम चेतनमायु, सर्व-शक्तियायु, निरपायमायु, प्राप्तमायु, सहायान्तरनिर-पेक्षमायिरुक्कै ॥ ३३ ॥

छा ॥ तत्र—सिद्धत्व—परमचेतनत्व—सर्वशक्तित्व—निरपेक्षत्वानि ॥ ३३ ॥

व्या॰॥ अनेन प्रागुक्तसाधनेभ्योऽस्याधिक्यं नाम-चेतनप्रवृत्त्या स्वस्वरूपसिद्ध्यभावेन सनातनधर्मत्वा-त्सिद्धत्वम्, "यस्सर्वज्ञस्सर्ववित्" (मुण्ड-उप-१-१-९॥) इत्यादिषूक्तप्रकारेण सर्वज्ञविषयत्वात्परमचेतनत्वम्, "परास्य शक्तिर्विविधैव श्रूयते" (श्वेत-उप-६-८॥) इत्युक्तसर्वशक्तित्वम्, चेतनसाध्यत्वेन मध्येऽपायानां प्रवेशानवकाशेन सिद्धवस्तुत्वान्निरपायत्वम्, परतन्त्रैतच्चे-तनस्वरूपस्याप्राप्तत्वाभावेन प्राप्तत्वम्, पूर्वोक्तपरमचेत-नत्वादिना सहायान्तरनिरपेक्षत्वं चेत्यर्थः ॥ ३३ ॥

---

(सिद्धत्वे)ति, सिद्धोपायस्य सिद्धत्वं - स्वरूपतो धर्मतस्संसर्गत-श्चोत्पत्तिशून्यत्वम् । "कृष्णं धर्मं सनातनम्" "स हि धर्मस्सनातनः" इति स्वरूपतो नित्यत्वमुच्यते । "उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ" इत्यादिना, वात्सल्यादिवाचकमन्तरत्नपूर्वखण्डनारपदेन च धर्मतो नित्यत्वं सिद्धम् । "नारस्त्विति सर्वपुंसां समूहः प्रोच्यते बुधैः । गतिरालम्बनं तेषां तेन नारायणः स्मृतः" (पाद्मोत्तरे-२२६-५२॥) इति सिद्धोपायोपायतायाः स्सकलचेतननिरूपितत्वोक्त्या संसर्गस्यापि नित्यत्वं सिद्धम् । एतत्सर्व-मभिप्रेत्याह—चेतनप्रवृत्त्येत्यादिना । (परतन्त्रैतच्चेतनस्वरूपस्य)-अदृष्टद्वारकफलसाधनगोचरप्रवृत्त्यनर्हत्वरूपस्वरूपस्येत्यर्थः ॥ ३३ ॥

(३४) एतत्सहायान्तरनिरपेक्षत्वं सहेतुकं स्थापयति—इतर उपाया इत्यादिनावाक्यत्रयेण।

मू॥ मत्तै उपायङ्ग‍ल् साध्यङ्गलाहैयाले स्वरूपसिद्धियिल् चेतननै अपेक्षित्तिरुक्कुम्; अचेतनङ्गलुमाय् अशक्तङ्गलुमायिरुक्कैयाले कार्यसिद्धियिल् ईश्वरनै अपेक्षित्तिरुक्कुम्, इन्द उपायं अवत्तुक्केदित्तिह्यायिरुक्कैयाले इतर निरपेक्षमायिरुक्कुम्॥ ३४॥

छा॥ इतर उपायाः साध्यत्वात् स्वरूपसिद्धौ चेतनमपेक्षन्ते, अचेतनत्वेनाशक्तत्वेन च कार्यसिद्धौ ईश्वरमपेक्षन्ते, अयमुपायस्तत्प्रत्यनीकतया इतरनिरपेक्षः॥३४॥

व्या॥ एतद्व्यतिरिक्तोपायानां चेतनप्रवृत्त्या साधनीयत्वात् स्वस्वरूपसिद्धौ प्रवृत्तिकरं चेतनमपेक्षन्ते, अस्येष्टानिष्टार्थान् ज्ञातुं कर्तुं च योग्यताभावेनाचेतनत्वेनाशक्तत्वेन च स्थितत्वात् चेतनस्येष्टानिष्टप्राप्तिपरिहाररूपकार्यस्य सिद्धौ "फलमत उपपत्तेः" (शारी-सू-३ २-३७॥) इत्युक्तप्रकारेण फलप्रदत्वोपयोगिसर्वशक्तित्वाद्युपपत्तिमन्तमीश्वरमपेक्षन्ते, सिद्धत्वपरमचेतनत्वसर्वशक्तित्वाद्येतत्प्रत्यनीकतयान्यनिरपेक्ष इत्यर्थः॥३४॥

---

(अन्यनिरपेक्षः) इति, ननु प्रपत्तिकरणे भगवान्रक्षति, नो चेन्नेत्यतस्तत्सापेक्षत्वमस्तीति कथमन्यनिरपेक्षत्वोक्तिरिति चेन्न; तेषामधिकारिविशेषणत्वमात्रम्, लब्धस्वरूपमात्रत्वे रक्षतीति। न चाधिकारिविशेषणस्यापि कुतोऽपेक्षेति वाच्यम्, तस्य वैमुख्याभावमात्रपरत्वात्। अस्तु

(३५) इतःपरमस्मिन्पदे आश्रयणसौकर्यापादकानां गुणानां प्रकाशनप्रकारमाह—अत्रेत्यादिना ।

मू ॥ इदिले - वात्सल्यस्वामित्वसौशील्यसौलभ्यङ्ग-लाहिर गुणविशेषङ्गल् नेशह प्रकाशिक्किरदु ॥ ३५ ॥

छा ॥ अत्र - वात्सल्यस्वामित्वसौशील्यसौलभ्यरूप-गुणविशेषाः साक्षात्प्रकाशन्ते ॥ ३५ ॥

व्यां ॥ अधर्मबुध्या स्वधर्मेभ्यो निवृत्तस्यार्जुनस्य दोष-मदृष्ट्वापेक्षितार्थानां कथनात् - वात्सल्यं प्रकाशते । स्वप-रत्वस्य बहुकालकथनमात्रेण विनार्जुनस्य प्रत्यक्षयोग्य-

---

तन्मात्रसापेक्षत्वम् , तथाप्युपायत्वेन नापेक्षते, निरुपाधिपितृत्वाद्याकारेणाभि-मुख्यं स्वयं चेतने संपादयतीति निरपेक्षत्वं सिद्धम् । अत्रेदं बोध्यम्—स्वतो भोग्यभूतं क्षीरं रोगरूपोपाधिग्रस्तस्य कटुरपि तादृशोपाधिनिवृत्तौ स्वत एव भोग्यं यथा भवति, अग्निसम्बन्धरूपोपाधिवशादुष्णजलं उपाधिनिवृत्तौ स्वत एव शीतं यथाभवति, मृत्तिकाद्युपाधिवशादनुपलभ्यमानं जलं तन्निवृत्तौ यथा स्वत एवोपलभ्यते, सेतुरूपोपाधिवशात्प्रतिरुद्धं जलं तन्निवृत्तौ यथा स्वत एव प्रसरति, स्वदोषरूपोपाधिवशाद्दुष्टःपिता तन्निवृत्तौ यथा स्वतोऽनुगृह्णाति, तथा सर्वेश्वरस्त्वदीयकृपा चेतनस्वरूपविरुद्धाचरणरूपोपाधिनिवृत्तौ स्वतएव रक्षति प्रसरति चेति तत्र साधनान्तरापेक्षानास्ति—इति ॥ ३४ ॥

'माम्' इति शब्दस्य 'सर्वशक्तियाय्' इत्याद्यर्थवर्णनमयुक्तम् , अस्मिन्प्रकरणे आश्रितकार्याद्यापादकगुणानामप्रतिपादितत्वादिति शङ्कायां, प्रकरण-पर्यालोचनायां तादृशवात्सल्यादिगुणानां सुस्पष्टतया प्रतिपादनमस्तीति द्योतनायेदं वाक्यं प्रवृत्तमित्यभिप्रायेणाह—अधर्मबुध्येत्यादिना । "न योत्स्यामीति गोविन्दमुक्त्वा तूष्णीं बभूवह" (गीता-१ ९॥) इत्यधर्मबुध्या स्वधर्मेभ्यो युद्धेभ्यो निवृत्तस्यार्जुनस्य वैमुख्यदोषमनाकलय्याध्यात्मशास्त्रा-र्थानां कथनाद्वात्सल्यं प्रकाशते, "अहं कृत्स्नस्य जगतःप्रभवः प्रलयस्तथा" इत्यादिस्थले स्वपरत्वस्यानेकवारकथनमात्रेण विना "दिव्यंददामि ते चक्षुः

तया कृतत्वात् - स्वामित्वं प्रकाशते। "हे कृष्ण हे यादव" (गी-११-४१॥) स्पष्टं इति अर्जुनेन स्वयं वक्तुं योग्यतया तेन सह मिलित्वा विनियोगकरणात् - सौशील्यं प्रकाशते। अप्राकृतदिव्यविग्रहस्य नेत्राभ्यां द्रष्टुं योग्यताकरणात् - सौलभ्यं प्रकाशत इत्यर्थः।

'गुणविशेषाः' इति वचनम् - आश्रयणस्यपेक्षिता स्पष्टं इति प्रदर्शनार्थम्। 'साक्षात्प्रकाशन्ते' इति - स्पष्टं प्रकाशन्त इत्यर्थः॥ ३५॥

(३६) एतेषां सर्वेषां मध्ये सौलभ्यस्यात्यन्तापेक्षितत्वात्, अवतारप्रयुक्तसौलभ्यमात्रेण विना सारथ्येऽवस्थितसौलभ्यमाह—हस्तगतेति।

---

पश्य मे योगमैश्वरम्" (गीता-११-८॥) इत्यर्जुनस्य दिव्यचक्षुःप्रदानेनाप्रमेयं विश्वरूपविग्रहं प्रत्यक्षयोग्यतया कृतत्वात्स्वामित्वम्, "हे कृष्ण हे यादव" "सेनयोरुभयोर्मध्ये रथं स्थापयमेऽच्युत" (गीता-१-२१॥) इति अर्जुनेन वक्तुं योग्यतया तेन सह मिलित्वा विनियोगकरणात् महतोमन्दैस्सह नीरन्ध्रेणसंश्लेषस्वभावत्वरूपसौशील्यम्, तस्यैवादृष्टपूर्वनिरतिशयाद्भुतरूप - दर्शनहर्षभयाकुलितस्य "किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव। तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते" (गीता-११ ४६॥) इति परिचितपूर्वशुभाश्रयरूपदर्शनाकाङ्क्षायां जातायां "व्यपेतभीः प्रीतमनाःपुनस्त्वं तदेव मे रूपमिदं प्रपश्य" (गीता-११-४९॥) इति स्वासाधारणाप्राकृतदिव्यमंगलविग्रहस्य स्वसाधारणनेत्राभ्यां द्रष्टुं योग्यताकरणात्सौलभ्यञ्च प्रकाशत इत्यर्थः॥ ३५॥

अत्र 'माम्' इति अपरोक्षनिर्देशेन सौलभ्यप्राधान्यं सूचितम्। तदाह—**हस्तगते**ति। अस्मच्छब्दस्य बुद्धिस्थविषयतावच्छेदकावच्छिन्नवाचकत्वात् 'माम्' इत्यस्य 'कैयुमुळुमुक्कोलुम्' इत्यादिविशिष्टार्थो भवति।

मू ॥ कैयुमुलवुकोलुम्, पिडित्तशिरुवाय्कयिरुम्, सेनाधूलिधूसरितमान तिरुक्कुललुम्, तेरुक्कुक्कीले नात्तिन तिरुवडिहलुमाय् निर्किर सारथ्यवेषत्ते 'माम्' एन्नु काट्टुहिरान् ॥ ३६ ॥

छा ॥ हस्तगतकशादण्डः, धृतप्रग्रहरज्जुः, सेना - धूलिधूसरितकेशपाशः, रथस्याधःप्रदेशस्थापितश्रीपादौ, एवं स्थितसारथ्य वेषं 'माम्' इति प्रदर्शयति ॥ ३६ ॥

व्या ॥ अश्वान्प्रेरयित्वा सञ्चारणार्थे श्रीहस्ते धृतः कशादण्डः, तान्वामतो दक्षिणतश्चालयितुं स्थापनस्थले स्थापयितुं धृता प्रग्रहरज्जुः, श्रीशिरसि किञ्चिदाच्छाद-नाभावेन सेनाधूलिभिर्धूसरितः श्रीकेशपाशः, "रथ-सञ्चारयितृस्वामिनो मञ्जीरध्वनियुक्तचरणौ" (सहस्रगी-३-६-१०॥) इत्युक्तप्रकारेण समर्पितमञ्जीरौ रथस्याध-स्स्थापितचरणावेवंस्थितं सारथ्यवेषं 'माम्' इति प्रदर्श-यतीत्यर्थः ॥ ३६ ॥

---

अत्रास्मदाचार्याः— द्वयस्थनारायणचरणशब्दव्याख्यानरूपत्वात् 'मामि' ति शब्दस्य, तत्र चरणशब्देन भगवत्सम्बन्धमन्त्रार्थपदाचार्ययोस्ता-त्पर्यवृत्त्या प्रतिपादनात्, अत्र तदप्रतिपादने सङ्ग्रहविवरणयोर्वैरूप्यापत्त्या-त्रापि तादृशतात्पर्यकत्वं स्वीकरणीयम् । तत्प्रकारश्च—'कैयुमुलवुकोलुम्' इत्यादिना प्रतिपाद्यते । "साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्ना-नुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना" (जयाख्यसं-१-६४॥) मर्त्यमयीं तनुम् - साक्षात्-असाधारणदिव्यविग्रहं, कृत्वा ; अत्रासाधारणत्वं - अहङ्कार चेतनसाधारणत्वाभावः ; स्वस्मिन्निरतिशयप्रीतिविशिष्टं पुरुषं स्वस्यासाधार

(३७) एवं तृतीयपदार्थमुक्तवान्, अनन्तरं चतुर्थपदमुपादत्ते - एकमिति।

मू॥ एकम्॥ ३७॥

छा॥ एकम्॥ ३७॥

(३८) तस्यार्थमाह—अयमेकशब्द इत्यादिना।

मू॥ इन्द एकशब्दम् - स्थानप्रमाणत्ताले अवधारणार्थत्तैक्काट्टुहिरदु॥ ३८॥

छा॥ अयमेकशब्दः - स्थानप्रमाणेनावधारणार्थं प्रदर्शयिति॥ ३८॥

व्या॥ अस्योपायविशेषस्य प्रयोगस्थलेऽवधारण - प्रयोगसद्भावात्, उकारवदयमेकशब्दः - स्थानप्रमाणे - नावधारणार्थं प्रदर्शयतीत्यर्थः॥ ३८॥

---

दिव्यविग्रहं कृत्वेत्यर्थः। अत्रेश्वरस्याचार्यविषयेऽत्यन्तपरतन्त्रतयान्वयात् सर्वात्मसाधारणान्तरात्मत्वापेक्षया वैलक्षण्यं स्फुटम्। इत्थं च "क्षेमस्स एव हि यतीन्द्र भवच्छ्रितानाम्" (यतिराजविंशत्याम् १८॥) इत्यादिप्रमाणानुसारेणाचार्यस्यैव मोक्षोपायत्वं प्रतिपाद्यते। अत्र 'कैयुमि' त्यादिना शास्त्रमुच्यते। 'उलक्कोलुम्' इति प्रेरककशावाचिना प्रवर्तकशास्त्रमुच्यते। 'पिडित्त' इत्यादिना निषेधशास्त्रप्रवर्तनं गम्यते। 'सेनाधूलि' इत्यादिना स्वाचार्यविषये शेषत्वं, 'तेरुक्कुले' इत्यादिना स्वशिष्यविषयकारुण्यं च प्रतीयते। तथा च विधिशास्त्रप्रवर्तकत्वनिषेधविधिप्रवर्तकत्वस्वाचार्यविषयशेषत्वस्वशिष्यविषयकारुण्यरूपाचार्यासाधारणगुणप्रतीत्या चरणशब्दविवरणत्वं सम्भवत्येव। एतादृशार्थविशेषो हि गोष्ठीपूर्णैश्श्रीरामानुजयोगीन्द्रस्योपदिष्टार्थ इति सम्प्रदायः—इति प्राहुः॥ ३६॥

(३९) एतदुपायनिर्देशानन्तरमवधारणप्रयोगवचनानि अस्योदाहरणत्वेनाह - मामेवेत्यारभ्य ।

मू ॥ "मामेव ये प्रपद्यन्ते" (गी-७-१४॥) "तमेव चाद्यम्" (गी-१५-४॥) "त्वमेवोपायभूतो मे भव" (अहि-सं-३७-३८॥) "आरेनेक्कु निन्पादमे शरणाह तन्दोलिन्दाय्" (सहस्रगी-५-७-१०॥) एन्रु शोल्लुहिरपडिये ॥ ३९ ॥

छा ॥ "मामेव + न्ते" "तमेव + म्" "त्वमेव + भव" "मार्गं मम त्वच्चरणावेव शरणं दत्तवानसि". इत्युक्तप्रकारेण ॥ ३९ ॥

व्या ॥ "मामेव ये प्रपद्यन्ते" "तमेव चाद्यं पुरुषं प्रपद्ये" त्वमेवोपायभूतो मे भव" "मार्गं मम त्वच्चरणावेव शरणं दत्तवानसि" इत्यादिस्थलेषु 'मामेव' 'तमेव' 'त्वमेव' 'त्वच्चरणावेव' इति स्वीकार्यवस्तुनिर्देशानन्तरमवधारणोक्तिप्रकार इत्यर्थः ॥ ३९ ॥

---

(तमेव चाद्यम्) इति, "तमेव चाद्यं पुरुषंप्रपद्येयतप्रवृत्तिः प्रसृतापुराणी" - "अज्ञानादिनिवृत्तये तमेव चाद्यंपुरुषम्" इत्युपक्रम्य "आद्यं पुरुषमेव शरणं प्रपद्येत् - तमेव शरणं प्रपद्येत, यतः - यस्मात्कृत्स्नस्य" इत्यादिषु, "प्रपद्येयतःप्रवृत्तिः" इति वा पाठः । तमेव चाद्यं पुरुषं प्रपद्य - शरणमुपगम्य, इयतः - अज्ञाननिवृत्त्यादेः" इत्यादिषु च श्रीगीताभाष्येऽपि पाठद्वयं स्फुटम् । तत्रार्थप्राप्तिवशेन प्रपत्तिविधिरित्ययमर्थस्सिद्धः । एतदभिमेत्य पाठद्वयसाधारण्येन, प्रमाणप्रतीकोपादानं दर्शयति—तमेव चाद्यं पुरुषं प्रपद्ये - इति । यद्वा, गीताभाष्यारूढद्वितीयपाठे 'प्रपद्ये' इति उत्तमपुरुषः ।

(४०) एतद्व्यावर्त्यमाह—अनेनेत्यादिना ।

मू ॥ इत्ताल् 'व्रज' एन्गिर स्वीकारत्तिलुपायभावत्तै त्तविर्किरदु ॥ ४० ॥

छा ॥ अनेन 'व्रज' इति स्वीकारे उपायभावो निवर्त्यते ॥ ४० ॥

व्या ॥ उपायान्तराणां व्यावर्त्यत्वं न भवति, पौनरुक्त्यप्रसंगात्, देवतान्तराणां व्यावर्त्यत्वं न संभवति, 'माम्' इत्यसाधारणाकारत्वोक्तेस्तत्पूर्वमेव सिद्धत्वाच्च, अतोऽनेनावधारणेन 'व्रज' इत्युपरिवक्ष्यमाणस्वीकारे उपायत्वं निवर्त्यत इत्यर्थः ॥

---

'यतःप्रवृत्तिः' इत्याद्युत्तरवाक्यम् । 'अहं तमाद्यं पुरुषं प्रपद्ये' इति भगवद्वचनम् । 'विधेयप्रपत्त्यां प्रवृत्त्यौत्कट्यसिद्ध्यर्थं स्वानुष्ठानं दर्शयति' इत्यभिप्रायेण 'तमेव चाद्यं पुरुषं प्रपद्ये' इति प्रमाणप्रतीकोपादानम् । अत एव हि—"अस्तु वा कृष्णस्य स्वस्मिन्नेवायमुत्तमःपुरुषः, तथापि धर्मसंस्थापनार्थावतार रूपस्य परमरहस्यतमार्थोपदेशाङ्गभूताचार्योपासनरूपधर्मप्रवर्तनार्थमाद्य - पुरुषस्वरूपेण सर्वगुरुभूतस्य स्वस्य तदानींतननमस्कारप्रतिपादनं न कृष्णस्यान्योपासकत्वपरम्" इति ब्रह्मविद्याविजये महाचार्यैर्निर्वाहःकृतः ॥ ३९ ॥

(देवतान्तराणामि) ति, ननु देवतान्तरस्य मोक्षप्रदत्वप्रसक्तिरेव नास्ति कथं ? तन्निषेधःक्रियत इति चेत्, रुद्रान्तर्याम्युपासनस्य मोक्षप्रदस्य विहितत्वात्, एवमिन्द्राद्यन्तर्यामीति तेषां प्रवेशः । अतःप्रपन्नस्य तत्तदन्तर्यामिभावण्यं व्यवच्छिद्यते । ननु परत्वप्रतिसन्धानेन विशेषणतया तेषां प्रवेश अवर्जनीय इति चेत्, न, उपलक्षणघटितत्वात्परत्वस्येति भावः ।

स्वीकारस्योपायत्वशङ्कास्ति किमित्यत आह—अन्वयेति । (अन्वयव्यतिरेकाभ्याम्)- 'यत्सत्त्वे यत्सत्त्वम्, यदभावे यदभावः' इत्युक्तान्वयव्याप्त्या, व्यतिरेकव्याप्त्या चेत्यर्थः । तथा चोपायस्वीकारसद्भावे मोक्षः,

अयं स्वीकारोऽन्वयव्यतिरेकाभ्यां साधनमिति ज्ञायते, अतोऽस्य साधनत्वमवश्यं निवर्त्यं खलु ॥ ४० ॥

(४१) स्वीकारं विनोपायस्य कार्यकरत्वाभावात्, फलस्यावश्यमेतदपेक्षासत्त्वेनात्रोपायत्वनिवृत्तिः कथमि - त्यत आह—स्वीकारश्चेति ।

मू॥ स्वीकारन्दानुमवनाले वन्ददु ॥ ४१ ॥

छा॥ स्वीकारश्च तेनागतः ॥ ४१ ॥

व्या॥ स्वीकारानन्तरमस्यानिष्टनिवृत्तीष्टप्राप्तिकरण-

---

तदभावे मोक्षाभाव इति । (अस्य साधनत्वम्) - अस्य स्वीकारस्य साधनत्वम् । (निवर्त्यम्) - सिद्धोपायस्य नैरपेक्ष्यसिद्ध्यर्थं निवर्त्य-मेवेत्यर्थः ।

स्वीकारस्यान्वयव्यतिरेकव्याप्त्या विधिप्रत्ययेन च साङ्गत्वात् उपाय-त्वेन प्राप्तौ सत्यां स्वीकार्योपायनैरपेक्ष्यबलेन स्वीकारस्योपायत्वनिवृत्तिः कथं सम्भवतीति चेत्, उच्यते; अधिकाराङ्गयोग्यतापादककर्मणां फलेन सहान्वयव्यतिरेकादिसद्भावेऽपि साधनत्वाभाववत्, अस्य स्वीकारस्य तत्स-द्भावेऽपि उपायत्वासिद्धेः । किञ्चैकपदस्यैतद्विना प्रयोजनाभावात्, परि-ग्राह्योपायस्य सर्वज्ञत्वसर्वशक्तित्वसहायान्तरनिरपेक्षत्वादिरूपत्वाचास्य स्वी-कारस्य मुख्योपायत्वाभाववद्गौणोपायत्वमपि नास्ति । तर्हि किमस्य प्रयो-जनम् - परिग्रह्यमाणोपायस्याधिकारमात्रम् । एवं 'स्वीकार उपायो वा, अधिकाररूपो वा' इति संशये नोपायत्वं स्वीकारस्य, किन्त्वधिकारत्वमेवे-त्युक्तंभवति ॥ ४० ॥

(स्वीकारानन्तरमि) ति, स्वीकारात्पूर्वमप्यद्वेषप्रभृतिकैङ्कर्यप्राप्ति-पर्यन्तमीश्वरकृपिफलत्वेन मध्यपातिस्वीकारस्यापि उपायफलत्वमेव युक्तम्; अर्चिरादिगत्यादीनां ब्रह्मविद्याफलत्ववदित्यभिप्रायः । अत एव "निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः" इत्यनुगृहीतम् ॥ ४१ ॥

रूपमिदं तेनैव यथा भवति, तथा तत्पूर्वभाविस्वीकारश्च तेनैवागत इत्यर्थः ॥

अनेन - स्वीकारस्योपायकार्यत्वम्, नोपायत्वमित्युक्तं भवति ॥ ४१ ॥

(४२) तेनागतत्वमेवाह—सृष्टीत्यादिना ।

मू ॥ सृष्ट्यवतारादिमुखत्ताले पण्णिन कृषिफलम् ॥

छा ॥ सृष्ट्यवतारादिमुखेन कृतकृषिफलम् ॥ ४२ ॥

व्या ॥ करणकलेबरविधुरत्वेन भोगमोक्षशून्यत्वेनाचिद्विशेषितया स्थितदशायां करणकलेबरविशिष्टो ज्ञानविकासशाली यथा भवति, तथा "साम्मुख्येन परितोऽवरुध्य" (सहस्रगी-२-७-६।) इत्युक्तप्रकारेण तदङ्गीकारार्थमनेकावतारान्कृत्वा, अवतरणस्थलेषु आश्रयणरुचिविश्वासजनकानि गुणचेष्टितानि प्रकाश्य तेन कृता कृषिः फलितेत्यर्थः ॥ ४२ ॥

(४२) अस्मिन्नर्थे प्रमाणं दर्शयति - तदपीति ।

मू॥ "अदुवुमवनादिन्नरुले" (सहस्रगी-८-३॥) ४३॥

छा॥ "तदपि तस्य सरसकृपैव" ॥ ४३ ॥

व्या॥ "ज्ञानोपरितनेषु एकं तस्य कृपया प्राप्तये मम ज्ञानस्यान्तर्निवेशितवानहम्" (सहस्रगी-८-८-३॥) इति 'ज्ञानाधिक्यवतां नित्यसूरिणां सत्तादिनिर्वाहकमद्वितीयं तं तस्य कृपया प्रापयितुं ममापेक्षारूपज्ञानस्यान्तर्निवेशितवानहम्' इति स्वस्वीकारोक्त्यनन्तरम्" तदपि

तस्य सरसकृपैव" इति.स स्वीकारश्च तस्य निर्हेतुककृप-या जात इति सूर्युक्तेः, स्वीकारश्च तस्य कृषिफलमित्येव स्वीकार्य इत्यर्थः ॥ ४३ ॥

(४४) एवम्भूतत्वादस्मिन्स्वीकारे सामर्थ्यं नास्तीति मन्तव्यमित्याह—एतं विनापीत्यादिना ॥

मू॰॥ इत्तै योलियवुं ताने कार्यं शेय्युमेन्रु निनैक्क-क्कडवन् ॥ ४४ ॥

छा॥ एतं विनापि स्वयमेव कार्यं करोतीति मन्त-व्यम् ॥ ४४ ॥

व्या॥ अस्य स्वीकारस्यापि स्वयमेव कृषिकर्ता स एक एवेति एतदर्थं सोऽस्माकं न करोति, एतं विनापि एत-दात्मोज्जीवनकरः स्वयमेवास्माकमिष्टानिष्टप्राप्तिपरिहार-रूपकार्यं करोतीति प्रतिपत्तिःकर्तव्येत्यर्थः ॥ ४४ ॥

(४५) एवं किमर्थम्मन्तव्यमित्यत आह—अन्यथे-त्यादिना ॥

---

(निर्हेतुककृपये)ति, अनेन - भगवन्निर्हेतुककटाक्षलब्धविशेषज्ञान-वत्त्वं श्रीपराङ्कुशार्यस्येति फलितम् । निर्हेतुकत्वसमर्थनेन दासेन प्रपञ्चितोऽय-मर्थ इति नात्र विस्तरभयाल्लिख्यते ॥ ४३ ॥

(अस्य स्वीकारस्यापि) - इति, ईश्वरस्य कदाचित् सम्बन्ध-ज्ञानेन सौहार्द्रादिना वा क्वचित्कृपालुतया क्वचिदुपायतया चेतनविषये कार्य-करणात् स्वीकारनैरपेक्ष्येणाद्वेषप्रभृतिकार्यकरणदर्शनात् कार्यकाले स्वीकार सापेक्षत्वं नास्तीत्यभिप्रायः ॥ ४४ ॥

मू ॥ अल्लादपोदु उपायनैरपेक्ष्यं जीवियादु ॥ ४५ ॥

छा ॥ अन्यथा उपायनैरपेक्ष्यं न जीवति ॥ ४५ ॥

व्या ॥ एवं विनापि कार्यं करोतीति प्रतिपत्तिमकृत्वा 'अयञ्चावश्यकः, तस्य कार्यकरणाय' इति प्रतिपत्तिकरणे उपायस्य सहायान्तरनैरपेक्ष्यं न जीवतीत्यर्थः ॥ ४५॥

(४६) तर्हि अयं स्वीकारः किमर्थमित्यत आह— अयमित्यादिना ।

मू ॥ इदु सर्वमुक्तिप्रसङ्गपरिहारार्थम्, बुद्धिसमाधानार्थम्, चैतन्यकार्यम्, रागप्राप्तम्, स्वरूपनिष्ठम्, अप्रतिषेधद्योतकम् ॥ ४६ ॥

छा ॥ अयम् - सर्वमुक्तिप्रसङ्गपरिहारार्थः, बुद्धिसमाधानार्थः, चैतन्यकार्यम्, रागप्राप्तः, स्वरूपनिष्ठः, अप्रतिषेधद्योतकश्च ॥ ४६ ॥

व्या ॥ अयं स्वीकारः - एतद्विषये किंचिदपि अनपेक्ष ईश्वरस्स्वयमेवोज्जीवयति चेत् सर्वेऽपि मुक्ता भवेयुरिति सर्वमुक्तिप्रसङ्गपरिहाराय भवति, 'दीर्घकालमस्म-

---

(तर्हि) इति, स्वीकारस्यानुपायत्वादयं स्वीकारः किमर्थमित्यर्थः ।

(सर्वमुक्तिप्रसङ्ग) ति - स्वीकारमन्तरा फलप्रदाने सर्वेषामपि स्वीकारंविना मुक्तिस्स्यादिति स्वस्यैव शङ्कायां तथाविधाशङ्कापरिहारार्थ इति भावः ।

दुरक्षिता स इदानीं रक्षति इति किमवलम्ब्ये,' व्याकुलतां विना बुद्धिसमाधानायोपयुक्तः; अयं चाचेतनो न भवति, किन्तु चेतनः, तस्मात् 'स एवोपायः' इत्यध्यवसाय एतच्चैतन्यकार्यम्, वैधं एव न, रसज्ञस्यास्य रागप्राप्तः, स्वरूपातिरेकं विना तदेकरक्ष्यत्वरूपस्वरूपे स्थितः, अनादिकालं स्वरक्षणादिभिस्तत्कृतरक्षणं प्रतिबन्धुमुद्युक्तस्यैतस्य निवृत्तिं प्रकाशयतीत्यर्थः ॥ ४६ ॥

---

(रसज्ञस्य) - सुकरत्वसिद्धत्वादिभिरानन्दरूपत्वज्ञानवतः । (स्वरूपातिरेकं विना) इति, शेषिणा क्रियमाणस्यानुमतिं कृत्वा स्थितेः शेषत्वपारतन्त्र्यकार्यत्वादस्य स्वीकारस्य स्वरूपाद्बाह्यत्वं विना स्वरूपानुरूपत्वमित्यर्थः। (तदेकरक्ष्यत्वे)ति - अदृष्टद्वारकसाधनानुष्ठानेन स्वकर्तृकरक्षणकर्मत्वानर्हत्वे सत्युपायानपेक्षभगवद्रक्ष्यत्वम् - तदेकरक्ष्यत्वम् ॥ (अप्रतिषेधद्योतकः) इति - प्रतिषेधस्याभावः - अप्रतिषेधः । अर्थाभावेऽव्ययीभावः । प्रतिषेधत्वं - निवर्तना । परकीयनिवृत्त्याख्ययत्नानुकूलपुरुषाभिप्राय इत्यर्थः । तदभावः—परकीयप्रवृत्त्याख्ययत्नानुकूलपुरुषाभिप्रायः। एवमुपायानपेक्षरक्षणविषयभगवदीयनिवृत्त्याख्ययत्नप्रयोजकाभिप्रायाभाव इति पर्यवसितम् । तद्द्योतकत्वं - स्वीकारस्येति भावेनाह—अनादिकालमित्यादिना । (तत्कृतरक्षणम्) इति - 'यद्येते विदितात्यन्तपारतन्त्र्याः मामेवोपायत्वेन वृण्वते, तदा संसारात्स्वयमेव तानुद्धरिष्यामि; यदि पुनस्स्वयत्नवासनावशात् मद्विषयकस्मृतिरूपां भक्तिमुपायबुद्ध्यानुतिष्ठन्ति, तेऽपि मामेवैष्यन्ति' इति तेन यद्यर्थगर्भसङ्कल्परूपेण कृतरक्षणमित्यर्थः । (एतस्य निवृत्तिम्) - स्वरक्षणे स्वान्वयस्य निवृत्तिमित्यर्थः । सा च अदृष्टद्वारकसाधनविषयनिवृत्त्याख्ययत्नविशेषरूपा ॥ ४६ ॥

(४७) इदानीं 'माम्' इति पदात्पूर्वमत्र चेश्वरस्या-भिप्रायमाह—पूर्वमित्यादिना ।

मू ॥ कील् तानुं पिररुमान निलैयैक्कुलैत्तान्, इङ्गु तानुमिवनुमान निलैयैक्कुलैक्किरान् ॥ ४७ ॥

छा ॥ पूर्वं स्वयमितरे चेति स्थितिं निवारितवान्, अत्र स्वयमयञ्चेति स्थितिं निवारयति ॥ ४७ ॥

व्या ॥ "सर्वधर्मान्परित्यज्य" इत्यत्र सकलोपायांश्च त्यजेत्युक्तत्वात्, फलप्रदस्स्वयमुपायान्तराणि मिलित्वा स्थितिं निवारितवान्, 'एकम्' इत्यत्र स्वीकारे उपाय-भावनिवृत्तेः, उपायभूतस्स्वयं स्वीकारे उपायबुद्धिं कृत्वा स्थितः अयञ्चेति स्थितिं निवारयतीत्यर्थः । उपायान्त-राणां 'इतरे' इत्युक्तिः "त्वत्तोऽन्यस्मात्कस्माच्च" (ति-रुवा-५-७-३)) इत्युक्तिरिव ॥ ४७ ॥

(४८) अथ, साधनबुद्ध्या एतत्कृतस्वीकारस्य दोष-माह—तमित्यादिना :

मू ॥ अवनै इवन्पत्तुं पत्तु अहङ्कारगर्भम्, अवद्य-करम् ॥ ४८ ॥

छा ॥ तमयमाश्रयतीति स्वीकारोहङ्कारगर्भः, अवद्य-करः ॥ ४८ ॥

---

(इतर इत्युक्तिः) इति - द्राविडभाषायां "यावराङ्गम्" इति चेतनपरत्वोक्ति दर्शनात्तथोक्तिः ॥ ४७ ॥

व्या ॥ निरुपाधिकरक्षकं तं तद्रक्ष्यभूतोऽयं स्वरक्षणाय स्वीकरोतीति स्वीकारः - स्वकर्तृत्वरूपाहङ्कारगर्भः, पितुः पुत्रेण लेखनस्वीकारवदवद्यकरश्चेत्यर्थः ॥ ४८ ॥

(४९) तर्हि रक्षकः क इत्यत आह - तस्य स्वीकार एव रक्षक इति ।

मू ॥ अवनुडैय स्वीकारमे रक्षकम् ॥ ४९ ॥

छा ॥ तस्य स्वीकार एव रक्षकः ॥ ४९ ॥

व्या ॥ अस्यात्मनो रक्षणे समर्थस्य तस्य 'अमुं वयं रक्षाम' इत्यभिमानेन स्वीकार एवास्य रक्षक इत्यर्थः ॥

(५०) चेतनप्रवृत्तिष्वेकमप्ययमुपायो न सहत इत्यर्थं विशदयितुं, उपायान्तराणामस्य च विद्यमानं विशेषमाह—इतरेत्यादिना ।

मू ॥ मत्तै उपायङ्ङळुक्कु निवृत्तिदोषम्, इदुक्कु प्रवृत्ति दोषम् ॥ ५० ॥

---

**(निरुपाधिकरक्षकमि)**ति - निरुपाधिकत्वम् - उपाधिप्रयुक्तत्वाभावः । रक्षकतायां निरुपाधिकत्वम् - उपायानपेक्षत्वम् । **पितुः-पुत्रेण लेखनस्वीकारवदि)**ति - उत्पादकत्वाद्धितैषिणस्स्वाज्ञानदशायामपि स्वरक्षितुः पितुः पुत्रेण स्वज्ञानदशायां 'मां त्वं रक्ष' इति लेखनस्वीकारे कृते उभयोरपि विद्यमानस्य सम्बन्धस्य न्यूनत्ववत्, सत्ताकारणभूतस्य सर्वदशायामपि रक्षकस्याकारवाच्यस्येश्वरस्य मकारवाच्यस्यास्य च विद्यमानस्य सम्बन्धस्यावद्यकारी स्यात् । लेखन स्वीकारो नाम - रक्षकनाम्नः स्ववक्षसि लेखनम् । असम्बन्धिनो रक्षकस्य नाम्नस्तदसम्बन्धिनस्स्वस्य वक्षसि लेखनमित्यर्थः । तद्वदसम्बन्धावभासकस्स्यादिति भावः ॥ ४८ ॥

छा ॥ इतरोपायानां निवृत्तिर्दोषः, अस्य प्रवृत्तिर्दोषः॥

व्या ॥ सिद्धोपायभूतैतद्व्यतिरिक्तोपायानां चेतन-प्रवृत्त्या स्वरूपस्य साधनीयत्वात्, अस्य स्वयत्ननिवृत्ति-र्दोषो भवति, अस्योपायस्य सहायान्तरसंसर्गासहत्वात्, अस्य चेतनस्य प्रवृत्तिरेकापि दोषो भवतीत्यर्थः ॥ ५० ॥

(५१) चेतनव्यापार एकोऽपि नापेक्षित इत्यत्र प्रमाणमाह—व्यापारो न कर्तव्य इति ।

मू ॥ "शित्तवेण्डा" (तिरुवा-९-१-७) ॥ ५१ ॥

छा ॥ व्यापारो न कर्तव्यः ॥ ५१ ॥

व्या ॥ सिद्धोपायस्वीकारप्रतिपादिकायां "अन्यःकोऽपि नास्ति" (तिरुवा-९-१-७) इति गाथायां "व्यापारो न कर्तव्यः" इति - महान्व्यापारो न कर्तव्य इत्युक्तत्वात्, अस्मिन्नुपाये प्रविष्टस्यैकोऽपि व्यापारो न कर्तव्य इत्यर्थ उच्यत इत्यर्थः ॥ ५१ ॥

(५२) अयं चास्मिन् श्लोके उक्त इत्याह - निवृत्तिः प्रागुक्तेति ।

मू ॥ निवृत्ति कीले शोल्लित्तु ॥ ५२ ॥

छा ॥ निवृत्तिः प्रागुक्ता ॥ ५२ ॥

---

(दोषोभवति) - निरपेक्षोपायस्वभञ्जकत्वात् प्रतिबन्धको भवतीत्यर्थः ॥ ५० ॥

व्या॥ "सर्वधर्मान्परित्यज्य" इति सकलप्रवृत्ति-निवृत्तिरेवास्यापेक्षिता-इत्यर्थः पूर्वमुक्त इत्यर्थः॥ ५२॥

(५३) तर्ह्युपकारस्मृतिरपेक्षिता, सोपाये नान्वेति किमित्यत आह - उपकारस्मृतिरित्यादिना।

मू॥ उपकारस्मृतियुं चैतन्यत्ताले वन्ददु, उपायत्तिल्न्तर्भवियादु॥ ५३॥

छा॥ उपकारस्मृतिश्च चैतन्येनागता, उपाये नान्तर्भवति॥ ५३॥

व्या॥ 'मम दुष्टं मनो नाशितवान्" (तिरुवा २-७-८) "प्रीत्या प्रणमन्मन एव दत्तवानसि" (तिरुवा-२-७-७) इत्यादिषु एतदुपायविषये अस्योपकार-स्मृतिश्चास्य चैतन्यप्रयुक्ता, 'अस्यास्सद्भावादेव हि ईश्वरः कार्यं करोति' इत्युपाये नान्तर्भवतीत्यर्थः॥ ५३॥

(५४) एवं चतुर्थपदार्थमुक्तवान्, अथ पञ्चमपद मुपादत्ते - शरणमिति।

मू॥ शरणम्॥ ५४॥

छा॥ शरणम्॥ ५४॥

(५५) तस्यार्थमाह—उपायत्वेनेति॥

मू॥ उपायमाह॥ ५५॥

छा॥ उपायत्वेन॥ ५५॥

(५६) अर्थान्तरप्रदर्शकस्य सत्त्वेऽपि अत्रोपायत्व-प्रदर्शनं सहेतुकमाह - अयं शरणमित्यादिना।

मू॥ इन्द शरणशब्दम् - रक्षितावैयुम्, गृहत्तैयुम्, उपायत्तैयुङ्काट्टक्कडवदे याहिलुं, इव्विडत्तिलुपायत्तैये काट्टुहिरदु; कीलोडे शेरवेण्डुहैयाले॥ ५७॥

छा॥ अयं शरणशब्दः - रक्षितारम्, गृहम्; उपायं च प्रदर्शयति, तथाप्यत्रोपायमेव प्रदर्शयति, पूर्वेणान्वयावश्यकत्वात्॥ ५७॥

व्या॥ "उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम्। वर्तते" (                    ) इत्युक्तप्रकारेणायं शरण शब्दः - रक्षितारं गृहमुपायं च प्रदर्शयति, तथापि, "साम्प्रतं चैष उपायार्थैकवाचकः" (                    ) इत्युक्तप्रकारेणास्मिन्स्थले उपायमेव प्रदर्शयति; 'सर्वधर्मान् त्यक्त्वा स्वमाश्रय' इति कथनप्रकरणत्वात् पूर्वेणान्वयावश्यकत्वादित्यर्थः।

ननु पूर्वोक्तसाधनान्तरपरित्याग एव स्वीकार्यवस्तुन उपायत्वं ज्ञापयतीति शरणशब्दप्रयोगो नापेक्षित इति चेत्, अपेक्षित एव, प्रापकसमय इव प्राप्यसमयेऽपि नदीनिस्तरणानन्तरं प्लवपरित्यागवत् साधनान्तरपरि-

---

(प्रापकसमय इव) - भगवन्तमुपायत्वेनाश्रयणसमय इवेत्यर्थः। (प्राप्यसमयेऽपि) - प्राप्यतयाश्रयणवेलायामपीत्यर्थः। (तद्विशि-

त्यागस्य समानत्वात्, तद्विशिष्टत्वेऽपि स्वीकारमात्रस्य व्यवच्छेदकत्वाभावात् ।

न चोपायान्तरत्यागस्य स्वीकाराङ्गत्वेन विहितत्वात् स्वीकार्यस्योपायत्वप्रदर्शनसामर्थ्यात्, शरणशब्दप्रयोगस्य प्रयोजनं नास्तीति वक्तुं शक्यते, अर्थात्प्राप्त्यपेक्षयापि शाब्दत्वस्य युक्तत्वात्। आक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात्" (श्रीभाष्ये १-१-१) इति भाष्यकारैरुक्तम् ।

एवमुपायवाचिनानेन शरणशब्देनास्य वस्तुनः प्राप्यतया स्वीकार्यत्वस्य प्रापकतया स्वीकार्यत्वस्य च विद्यमानत्वात्, अत्र प्राप्यतया स्वीकारो व्यवच्छिद्यते॥

---

(विशिष्टत्वेऽपि) - उपायान्तरत्यागविशिष्टस्वीकारत्वेऽपि । (स्वीकारमात्रस्य) - साधनान्तरपरित्यागविशिष्टस्वीकारमात्रस्येत्यर्थः। (व्यवच्छेदकत्वाभावात्) - शरणशब्दमन्तरा प्राप्यत्वेनाश्रयणस्य व्यवच्छेदकत्वाभावादित्यर्थः । अतः प्राप्यतयाश्रयणस्य व्यवच्छेदस्यावश्यंभावेनात्र शरणशब्दोऽपेक्षित इति भावः।

'विहितत्वात्' इत्यनन्तरम् 'यद्यत्साङ्गम्, तत्तत्साधनम्' इति न्यायेनेति योजनीयम्। (अर्थात्) - अर्थबलेनेत्यर्थः। साङ्गत्वादिति भावः। उपायान्तरत्यागस्य स्वीकाराङ्गतया विद्यमानत्वेन स्वीकार्यवस्तुन उपायत्वस्य प्रदर्शनप्रकारः कथमिति चेत्;—श्रीमन्त्रे द्वये च 'ईश्वर एवोपायः' इत्यस्यार्थस्य प्रकाशनात्, अत्र शरणशब्दस्य स्वीकार्यवस्तुविशेषणत्वात्, एकशब्देन स्वीकारे उपायभावस्य त्यागकथनात्, उपायान्तरपरित्यागस्य

(५८) अथ षष्ठं पदमुपादत्ते—व्रजेति।

मू॥ व्रज॥ ५८॥

छा॥ व्रज॥ ५८॥

(५९) तस्यार्थमाह—बुद्धिं कुरु इति।

मू॥ बुद्धि पण्णु॥ ५९॥

छा॥ बुद्धिं कुरु॥ ५९॥

(६०) तं विशदयति—गत्यर्था इत्यादिना।

मू॥ गत्यर्थमावदु बुद्ध्यर्थमाय्, अध्यवसि एन्नपडि॥

छा॥ गत्यर्था बुद्ध्यर्था इति अध्यवसायं कुर्वित्यर्थः॥

व्या॥ "व्रज - गतौ" इति धातोः 'गत्यर्थाः बुद्ध्यर्थाः' इति न्यायेन गत्यर्थानां बुद्ध्यर्थत्वात्, अध्यवसायं कुर्वित्यर्थ इत्यर्थः।

"इयं बुद्धिर्नाम - त्याज्यकोटयुत्तीर्णः, उपायकोट्यननुप्रविष्टः, प्रापकान्तरपरित्यागपूर्वकः, भगवद्रक्ष्यत्वानुमतिरूपः, चैतन्यकार्यभूतः, प्रार्थनागर्भः, भगवन्मुखविकासहेतुभूतः, स्वरूपानुरूपः, व्यभिचारविलम्ब-

---

स्वीकार्योपायस्य निरपेक्षत्वप्रकाशकत्वाच्च, स्वीकाराङ्गभूतोपायान्तरपरित्यागस्यान्यथानुपपत्त्या स्वीकार्यवस्तुन उपायत्वं प्रदर्शयतीति। उक्तार्थे संवादप्रमाणमाह—आक्षेपत इति॥ ५७॥

अत्र बुद्धिशब्दः - विलक्षणमानसज्ञानात्मकाध्यवसायपरः। न ज्ञानसामान्यवाचकः। 'घटं व्रजति', इत्यप्रयोगात्, इति भावेन ग्रन्थान्तरस्थाचार्यचरणसूक्तिमाह **इयमि**ति॥ ६०॥

विधुरः, अध्यवसायात्मकज्ञानविशेषः" इति परन्दपडि-प्रबन्धे उक्तवान्, सोऽत्रानुसन्धेयः ॥ ६० ॥

(६१) सामान्येन गतिवाचकस्यास्य मानसकायिक-वाचिकरूपगतित्रयप्रदर्शकस्यापि मानसिकरूपाध्यवसाय मात्रे सङ्कोचः किमिति क्रियत इत्यत आह वाचिकेत्यादिना।

मू ॥ वाचिककायिकङ्गलुमिदुक्कपेक्षितङ्गलायिरुक्क-च्चेयूदेयुं ज्ञानान्मोक्षमाहैयाले मानसमानवनुष्ठानत्तै शोल्लुहिरदु ॥ ६१ ॥

छा ॥ वाचिककायिकयोरस्यापेक्षायामपि "ज्ञाना-न्मोक्षः" इत्युक्तत्वान्मानसिकानुष्ठानमुच्यते ॥ ६१ ॥

व्या ॥ "मनसा वाचा कर्मणा च" (तिरुवा ६-५-११) इत्युक्तप्रकारेण करणत्रयेणापि स्वीकारस्याधिकारि-पूर्त्युपयुक्तत्वात्, वरणोक्तिरूपवाचिकस्याञ्जल्यादिरूप-कायिकस्यास्य स्वीकारस्यापेक्षायां सत्यामपि "ज्ञानान्मो-क्षः" ( ) इत्युक्तत्वात् एतद्द्वयं विना मानसानुष्ठानमात्रमुच्यत इत्यर्थः ॥ ६१ ॥

(६२) एवं प्रतिपदमर्थ उक्तः; अथ पूर्वार्धोक्तार्थ-मनूद्य निगमयति--एवमित्यादिना।

---

(ज्ञानान्मोक्ष इत्युक्तत्वादि)ति - कायिक वाचिकशरणागति-स्थलेऽपि ज्ञानमुखाद्यैव मोक्षस्य सम्भवात्, सर्वाधिकारिसाधारणं ज्ञानमेव धात्वर्थ इति भावः ॥ ६१ ॥

मू॥ आह - त्याज्यत्तैच्चोल्लि, त्यागप्रकारत्तैच्चोल्लि, पत्तप्पड्मुपायत्तैच्चोल्लि, उपायनैरपेक्ष्यं शोल्लि, उपायत्वंशोल्लि उपायस्वीकारं शोल्लुहिरदु॥ ६२॥

छा॥ एवं - त्याज्यमुक्त्वा, त्यागप्रकारमुक्त्वा, आश्रयणीयमुपायमुक्त्वा, उपायनैरपेक्ष्यमुक्त्वा उपायत्वमुक्त्वा उपायस्वीकार उच्यते॥ ६२॥

व्या॥ एवं पूर्वार्धेन - 'सर्वधर्मान्' इति त्याज्यमुक्त्वा, 'परित्यज्य' इति त्यागप्रकारमुक्त्वा, 'माम्' इत्याश्रयणीयमुपायमुक्त्वा, 'एकम्' इत्युपायनैरपेक्ष्यमुक्त्वा, 'शरणम्' इत्युपायत्वमुक्त्वा, 'व्रज' इत्युपायस्वीकार उच्यत इत्यर्थः॥ ६२॥

(६३) अनन्तरमुत्तरार्धस्यार्थं वक्तुं तत्र प्रथमपदमुपादत्ते—अहमिति।

मू॥ अहम्॥ ६३॥

छा॥ अहम्॥ ६३॥

(६४) अस्मिन्नुत्तरार्धे ईश्वरेणाक्रियमाणमंशमाह—स्वकृत्यमाहेति।

मू॥ स्वकृत्यत्तै अरुलिच्चेय्हिरान्॥ ६४॥

छा॥ स्वकृत्यमाह॥ ६४॥

व्या॥ अधिकारिकृत्यं हि पूर्वार्धे उक्तम्, उपायभूतस्य स्वस्य कृत्यस्य कथनमस्मिन्हि॥ ६५॥

(६५) अथास्य पदस्यार्थमाह---सर्वज्ञ इत्यादिना।

मू ॥ सर्वज्ञनाय्, सर्वशक्तियाय् प्राप्तनान नान्॥

छा ॥ सर्वज्ञः, सर्वशक्तिकः, प्राप्तभूतोऽहम्॥ ६५॥

व्या ॥ "यस्सर्वज्ञस्सर्ववित्" (मु-१-१-९) इत्युक्तप्रकारेण सर्वेषां ज्ञाता, "परास्य शक्तिर्विविधैव श्रूयते" ( . ) इत्युक्तरीत्या सर्वशक्तिकः, शेषित्वात्प्राप्तोऽहमित्यर्थः॥ ६५॥

(६६) सर्वेषु गुणेषु सत्सु अहंशब्देनैतद्गुणविशेषप्रदर्शनस्य प्रयोजनमाह—अस्य पूर्वस्थितेत्यादिना।

मू ॥ इवन् कील्निन्रनिलैयुम्, मेल्पोक्कडि अरिहैक्कुम्, अरिन्दपडिये शेयूदु तलैक्कट्टुहैक्कुमेकान्तमान गुणविशेषङ्ळैयुं तन्पेराहच्चेयूदु तलैक्कट्टुहैक्कीडान बन्धविशेषत्तैयुं काट्टुहिरदु॥ ६६॥

छा ॥ अस्य पूर्वस्थितस्थितिम्, उपरिमार्गं च ज्ञात्वा, ज्ञातप्रकारेण कृत्वा समापयितुमेकान्तगुणविशेषान् स्वफलत्वेन कर्तुमुपयुक्तं बन्धविशेषञ्च दर्शयति॥ ६६॥

व्या ॥ अस्य चेतनस्यानिष्टनिवृत्तीष्टप्राप्त्योः करणसमये, अस्य पूर्वस्थितस्थितिमुपरिगन्तव्यमार्गं च ज्ञातुं, ज्ञातप्रकारेण तान्कृत्वा समापयितुं हेतुभूतान्सर्वज्ञत्वसर्वशक्तित्वरूप गुणविशेषान्, अस्य कार्यकरणसमये

एतदर्थं विना स्वफलत्वेन कर्तुमुपयुक्तं शेषित्वरूपसम्बन्ध विशेषं च प्रकाशयतीत्यर्थः ॥

'माम्' इत्यत्राश्रयणैकान्तगुणविशेषाणां प्रकाशवत् 'अहम्' इत्यत्र कार्यैकान्तभूतगुणविशेषाः प्रकाशन्ते खलु । 'वात्सल्याद्यभावे आश्रयणासम्भववत्, ज्ञान-शक्त्याद्यभावे कार्यकर्तृत्वस्याघटितत्वात् । अत्र ज्ञान-शक्तिप्राप्तिकथनं - पूर्तेरप्युपलक्षणम् ॥ ६६ ॥

(६७) अस्मिन्पदे 'माम्' इत्यत्र सारथित्वेन स्थि-तिरूपस्य पारतन्त्र्यस्य प्रतिकोटिनस्वस्वातन्त्र्यस्य प्रकाशनप्रकारमाह - स्वार्थं स्वीकृतेत्यादिना ।

मू ॥ तनक्काह कोण्ड सारथ्यवेषत्ते अवनै यिट्टुप्पारादे तन्नैयिट्टुप्पातु अञ्जिनवच्चं तीर तानान तन्मैयै 'अहम्' एन्नु काट्टुहिरान् ॥ ६७ ॥

---

'माम्' 'अहम्' इतिशब्दौ अस्मच्छब्दावेव, तथात्वे 'माम्' इत्यत्र वात्सल्यादीनाम्, 'अहम्' इत्यत्र सर्वज्ञत्वादीनां प्रदर्शनप्रकारः कथमित्यतआह—**मामित्यत्रे**ति । आश्रयणप्रकरणपाठितत्वात् 'माम्' इत्यस्य तत्रावश्यापेक्षितगुणविशेषात्मकवात्सल्यादीनां प्रकाशकत्ववत्, उपाय-कृत्यकथनप्रकरणपठितत्वात्, 'अहम्' इत्यस्य तत्रावश्यापेक्षितगुणविशेषात्मकसर्वज्ञत्वादीनां प्रकाशकत्वं युक्तमिति भावः । **(वात्सल्याद्यभावे)** इति आश्रयणसौकर्यापादकत्वेन प्रसिद्धानां वात्सल्यादीनां तत्राननुसन्धानेऽपि आश्रयणासम्भववत्, आश्रितकार्यापादकत्वेन प्रसिद्धानां सर्वज्ञत्वादीना-मत्राननुसन्धानेऽपि कार्यकरत्वस्यासम्भावितत्वात्, वात्सल्यादीनां सर्वज्ञत्वा-दीनाञ्चावश्यकत्वमेवेत्यर्थः ॥ ६६ ॥

छा ॥ स्वार्थं स्वीकृतसारथ्यवेषं तन्निमित्तममत्वा स्वार्थं मत्वा भीतभयनिवृत्त्यर्थं स्वस्वभावम् 'अहम्' इति दर्शयति ॥ ६७ ॥

व्या ॥ 'माम्' इति सारथ्यवेषेण स्थितस्य प्रपदनकथनसमये अर्जुनःस्वरक्षणार्थं स्वीकृतं सारथ्यवेषं सर्वाधिकस्य "एवंनैच्यस्थितिः स्वगुणेन हि' इति तन्निमित्तममत्वा 'अस्माकं नीचवृत्तिं कृत्वा सारथित्वेन स्थितोऽयं खलु' इति स्वनिमित्तं दृष्ट्वा 'सर्वधर्मान् त्यक्त्वा मामाश्रयेत्युक्तवान्, इदं किम्?' इति भीतभयनिवृत्त्यर्थं स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिकस्य निरङ्कुशस्वातन्त्र्येण स्थितस्य स्वस्य यथावस्थितवेषं 'अहम्' इति दर्शयतीत्यर्थः ॥ ६७ ॥

---

(स्वाधीने)ति - "स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्" इति श्रीरंगगद्यानुसारिणीयं सूक्तिः । "स्वशब्देन-मुक्तप्राप्यस्य कैङ्कर्योद्देश्यस्य सर्वेश्वरस्य श्रुत्यादिप्रसिद्धं निरतिशयानन्दत्वादिकं सूच्यते । स्वाधीन शब्देन - भगवत्स्वरूपाधीनत्वं तदिच्छाधीनत्वं च विवक्षितम् । सर्वस्य साक्षात्परंपरया वा तदाश्रिततया तत्स्वरूपाधीनत्वं । तत्र नित्यानां पदार्थानां तदिच्छाधीनस्वरूपत्वं, तदभावे तेषामभावः प्रसजेदिति प्रसङ्गमुखेन स्थाप्यम् । तदभिप्रायेणाहुः - "इच्छात एव तव विश्वपदार्थसत्ता" इति । अभाषि च शारीरकान्ते "परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथावस्थानमस्तीति शास्त्रादवगम्यते" इति । अनित्यानां तु तदिच्छाधीनस्वरूपत्वं तदायत्तोत्पत्तिकतया हि प्रसिद्धम् । गुरुद्रव्याणां पतनप्रतिबन्धेन धार्यत्वमपि तदिच्छाधीनत्वविशेष एव । चेतनशब्द इह जीवविषयः । बद्धमुक्तनित्यरूपेण जीवा-

(६८) एवम्भूतस्यास्य पारतन्त्र्येण स्थितिश्च स्वरूपं न भवति, इत्यमुमर्थमाह—पूर्वमित्यादिना।

मू ॥ कीलिलपारतन्त्र्यमुमिन्द स्वातन्त्र्यत्तिनुडैय एल्लै निलमिरे ॥ ६८ ॥

छा॥ पूर्वमुक्तं पारतन्त्र्यञ्चास्य स्वातन्त्र्यस्य सीमाभूमिः खलु ॥ ६८ ॥

व्या ॥ पूर्वं, सारथ्येन स्थितस्य पारतन्त्र्यं च, मनोभीष्टकरणसमये स्वस्य निवारकाभावरूपस्वातन्त्र्यस्य सीमाभूमिः खल्वित्यर्थः ॥ ६८ ॥

(६९) अनन्तरं द्वितीयपदमुपादत्ते—त्वा इति।

---

नां त्रैविध्यम् । अचेतनशब्दश्चात्राचिद्द्रव्यपरः । त्रिगुणकालशुद्धसत्त्वरूपेणाचेतन त्रैविध्यम् । द्रव्याणां तदधीनत्वोक्त्या तत्तद्धर्माणां तादधीन्यं कैमुत्य सिद्धमिति तदनुक्तिः । अचेतनद्रव्यस्यापि धर्मभूतज्ञानस्य चेतनग्रहणे विशेषणतयोपात्तत्वात्, अत्र पृथगनुपादानम् । चेतनमात्रैवा त्रैविध्यान्वयः? । चेतनाचेतनानां स्वरूपं स्वासाधारणस्वभावैर्निरूप्यं धर्मि । तस्य भेदः - तत्तद्व्यक्तितो वर्गतश्च परस्परव्यावृत्तिरूपोधर्मः । स्थितिः - कालान्तरेऽपि विद्यमानता । सा च द्रव्याणां स्वरूपेषु सर्वकालानुवृत्तिरूपा । तेषां तत्तदवस्थाविशिष्टवेषेण तु कालपरिच्छिन्ना कालतारतम्यवती चेति तद्भेदः । प्रवृत्तिः - व्यापारः । निवृत्तिरप्यकरणसङ्कल्परूपाप्रवृत्तिविशेषः । एतद्भेदः तत्तत्कार्यादिभिर्द्रष्टव्यः । अत्र स्वेच्छाधीनसर्वतत्त्वोक्त्या स्वार्थसर्वोपादानत्वसूचनात्सर्वशेषित्वमपि सिद्ध्यति । तदाहुः "उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी" (श्रीरंगराजस्तवे-२- ) इति ।" इति गद्यसूक्तेरर्थो वर्णितः श्रीवेदान्तदेशिकैः । (निरङ्कुश)ति - स्वातन्त्र्यम् - इच्छायां सत्यामनिवार्यत्वम् । तस्य निरङ्कुशत्वम् - नियामकान्तराप्रतिबन्धत्वम् ॥ ६७ ॥

मू ॥ त्वा ॥ ६९ ॥

छा ॥ त्वा ॥ ६९ ॥

(७०) तस्यार्थमाह—अज्ञमित्यादिना ।

मू ॥ अज्ञनाय्, अशक्तनाय्, अप्राप्तनाय्, एन्नैये उपायमाह पत्तियिरुक्किर उन्नै ॥ ७० ॥

छा ॥ अज्ञम् अशक्तम्, अप्राप्तम्, मामेवोपायत्वेन स्वीकृत्य स्थितं त्वाम् ॥ ७० ॥

व्या ॥ तव कार्याणि ज्ञातुं योग्यज्ञानरहितम्, ज्ञातेऽपि करणोपयुक्तशक्तिरहितम्, तत्सद्भावेऽपि तव रक्षणस्य प्राप्तिरहितम्, एवंस्थितत्वात्सर्वधर्मान्विहाय मामेव निरपेक्षोपायत्वेन परिगृह्य स्थितं त्वामित्यर्थः॥ ७०॥

(७१) अनन्तरं तृतीयपदमुपादत्ते-सर्वपापेभ्य इति।

मू ॥ सर्वपापेभ्यः ॥ ७१ ॥

छा ॥ सर्वपापेभ्यः ॥ ७१ ॥

(७२) अस्य च पाप बहुवचनसर्वशब्दरूपतया त्र्यंशत्वात्, एतत्त्रितयमप्यन्तर्भाव्यास्य पदस्यार्थमाह - मत्प्राप्तिप्रतिबन्धकानीति ।

मू ॥ 'मत्प्राप्तिप्रतिबन्धकङ्गळ्' एन्नु यावै यावै, शिल पापङ्गलैक्कुरित्तु अञ्जुहिराय्, अव्वो पापङ्गळेल्लावत्तिल् निन्नुम् ॥ ७२ ॥

छा ॥ 'मत्प्राप्तिप्रतिबन्धकानि' इति यानि यानि पापानि प्रति बिभेषि, तेभ्यःपापेभ्यः ॥ ७२ ॥

व्या ॥ पापं नाम - इष्टविरोध्यनिष्टहेतुश्च । मोक्षप्रकरणत्वात्, अत्रेष्टविरोधि भगवल्लाभविरोधीति । तत्र ज्ञानविरोधिरुचिविरोध्युपायविरोधिनां पूर्वमेव निवृत्तत्वात्, इदानीं प्राप्तिविरोधिन एव सत्त्वात्, तव मत्प्राप्तेः प्रतिबन्धकानीति यानि यानि पापान्युद्दिश्य बिभेषि, तेभ्यस्सर्वेभ्यः पापेभ्यः इत्यर्थः ॥ ७२ ॥

(७३) तत्र बहुवचनविवक्षितानाह—असत्य इत्यादिना।

मू॥ "पोयूनिनूञानमुं पोल्लावोलुक्कुं अलुक्कुडम्बुम्" (तिरुवि-१) एन्गिरपडिये अविद्याकर्मवासनारुचिप्रकृति सम्बन्धङ्गळैच्चोल्लुहिरदु ॥ ७३ ॥

छा ॥ "असत्ये स्थितंज्ञानं दुष्कर्म मलिनदेहश्च" इत्युक्तप्रकारेणाविद्याकर्मवासनारुचिप्रकृतिसम्बन्धा उच्यन्ते ॥ ७३ ॥

व्या ॥ "पोयूनिनूञानमुं पोल्लावोलुक्कुं अलुक्कुडम्बुम्" इति - 'उत्पत्तिविनाशादियोगेनासत्यशब्द-

---

'असत्ये' इत्यस्य "सत्यञ्चानृतञ्च सत्यमभवत्" (तै-आनन्द- ) "यदस्ति यन्नास्ति च विप्रवर्य" (वि-पु-२-१२-३८॥) इत्यादिश्रुतिस्मृत्यनुसारेणार्थमाह—उत्पत्तिविनाशेति। "मांसासृक्पूयविण्मूत्रस्नायुमज्जा-

वाच्याचेतनविषये आत्मज्ञानम्, तादृशदेहात्माभिमान-हेतुकसांसारिकदुष्कर्मप्रवृत्तिः, तादृशकर्महेतुकागतमांसासृगादिमलरूपदेहसम्बन्धश्च' इत्युक्तप्रकारेणाविद्या कर्म वासना रुचिः प्रकृतिसम्बन्धश्चेत्येतान्वदतीत्यर्थः।

अत्र अविद्यानाम - ज्ञानानुदयरूपा, अन्यथाज्ञान-रूपा, विपरीतज्ञानरूपाचेति त्रिविधमज्ञानम्।

कर्मनाम - पुण्यपापे । मोक्षप्राप्तौ पापवत्पुण्यमपि त्याज्यम्। पुण्यपापे विधूय" (मुण्ड ३-१-३) इत्युच्यते खलु।

---

स्थिसंहतौ । देहे" (वि-पु-१-१७-६३॥) इति वचनं हृदि निधायोक्तम्-मांसासृगिति॥

(ज्ञानानुदयरूपे)ति - देहात्माभिमानरूपेत्यर्थः। धर्म्यैक्ये सति प्रकारान्तरारोपणेन ज्ञानं - अन्यथाज्ञानम् । यथा 'पीतश्शङ्खः' इति। इदं रजःकार्यम्। धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं-विपरीतज्ञानम्। यथा 'शुक्ताविदं रजतम्' इति। इदं तमःकार्यम्। "अयथावत्प्रजानाति बुद्धिस्सा पार्थ राजसी। अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान्विपरीतांश्च बुद्धिस्सा पार्थ तामसी" (गीता-१८-३१, ३२) इति स्मृतेः॥

ननु "धर्मेण पापमपनुदति" (तै-६-५०॥) इति पापरूपकर्मविशेषस्य निरसनीयत्वमात्रमाह श्रुतिः, कथं पुण्यस्यापि निरसनीयत्वमिति शङ्कायां, तत्रापि पापशब्दस्य पुण्यपापपरत्वं दर्शयितुं पुण्यपापयोरुभयोरपि पापशब्दार्थत्वे श्रुतिं दर्शयति—पुण्यपापे इति । अलौकिकत्वे सति अनिष्टफलासाधारणकारणत्वं पापत्वम्, तत्पुण्यस्यापि समानमिति भावः। वासुदेवे मनो यस्य जपहोमार्चनादिषु। तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्" (वि-पु-२- ) इत्यादिभिः पुण्यस्यापि मुमुक्षुं प्रत्यनिष्टफलदत्वं सिद्धम्॥

वासना नाम - अज्ञानवासना, कर्मवासना, प्रकृति-सम्बन्धवासना च। रुचिश्च - विषयभेदेन बहुविधा।

प्रकृतिसम्बन्धो नाम - स्थूलसूक्ष्मरूपाचित्सम्बन्धः ॥

(७४) अथ सर्वशब्दविवक्षितमाह - तृणच्छेदेत्यादिना।

मू॥ तृणच्छेदकण्डूयनादिहळैप्पोले प्रकृतिवासनैयाले अनुवर्तिक्कुमवै एन्न, लोकापवादभीतियालुं करुणैयालुं कलक्कत्तालुं शेय्युमवै एन्न, एल्लावत्तैयुं निनैक्किरदु ॥ ७४ ॥

छा॥ तृणच्छेदकण्डूयनादिवत् प्रकृतिवासनया अनुवर्त्तमानानि, लोकापवादभीत्या करुणया कालुष्येण च क्रियमाणानि, इत्येतत्सर्वं स्मर्यते ॥ ७४ ॥

व्या॥ तृणच्छेदनं कण्डूयनस्थलोल्लेखनमेतत्प्रभृतिवत्, अबुद्धिपूर्वकं प्रकृतिवासनयानुवर्तमानानि उत्तराघानि, करणाभावे 'लोका अपवदन्ति' इति भयेन,

---

(अज्ञानवासना-) विषशस्त्रादिदर्शने भयादीनां हेतुभूता त्रिविधाज्ञानवासना। (प्रकृतिसम्बन्धवासना-) विषयान्तरचापल्यहेतुभूतप्रकृतिसम्बन्धवासना।

(अचित्सम्बन्धः) शरीरसम्बन्धः ॥ ७३ ॥

(उत्तराघानि) - प्रामादिकपराणि। न तु बुद्धिपूर्वककृतपापपरोऽयम्। तथा ज्ञानस्यैवासिद्धेः। (करणाभावे) इत्यादि - अयं कल्पः

'अस्मान्दृष्ट्वा लौकिका एतान् त्यजन्ति' तेषां विनाशः स्यात्, हन्त' इति कृपया क्रियमाणानि नित्यनैमित्तिक-कर्माणि, रजस्तमोभ्यां भ्रमित्वा त्यक्तोपायेषु अन्वये पुनःप्रपत्तिकरणमित्येतत्सर्वं स्मर्यत इत्यर्थः॥ ७४॥

(७५) साधनबुद्ध्या कृता अपि ते वस्तुगत्या साधन-कोटावन्विता भवन्तीति तमर्थं शङ्कापूर्वकमाह—उन्मत्त-प्रवृत्तेरिति।

मू॥ उन्मत्तप्रवृत्तिक्कु ग्रामप्राप्तिपोले त्यजित्त उपा-यङ्गळिले इवै अन्वितङ्ङळामो एन्नु निनैक्कवेण्डा॥ ७५॥

छा॥ उन्मत्तप्रवृत्तेर्ग्रामप्राप्तिवत् त्यक्तोपायेषु एतेऽन्विता भवन्ति किमिति न विचारणीयम्॥ ७५॥

व्या॥ "उन्मादश्चित्तविभ्रमः" (नामलि० नाट्य) इत्यु-क्तप्रकारेण चित्तविभ्रमवान्कश्चित् 'अमुं ग्रामं गच्छामि" इति बुद्धिं विना केनचिन्मार्गेण गतश्चेत्, तस्य मार्गस्य केनचिद्ग्रामेण सम्बन्धस्य विद्यमानत्वात्, तं ग्रामं यथा प्राप्नोति, तथा साधनबुद्धिराहित्येन लोकापवादभीत्या-

---

संयोगरूपचोदनाख्याभेदनिबन्धनज्ञानशून्यतयोपायत्वज्ञानपरित्यागपूर्वकं-केवलवर्णाश्रमादिकर्मानुष्ठातृपरः। कर्मणः कैङ्कर्यरूपत्वेनान्यत्र प्रपीश्चतत्वात्।

(उन्मत्तप्रवृत्तेरि)ति-लोके कस्यचिद्ग्रामस्य केनचिन्मार्गेण सम्ब-न्धस्सिद्ध एवेति उन्मत्तस्यापि मार्गेण गमने ग्रामप्राप्तिस्सम्भवत्येव; कर्मणान्तु फलसाधनताज्ञानपूर्वकानुष्ठानस्य फलजनकत्वेऽपि तच्छून्यस्य फलजनकत्वं न सम्भवत्येवेति कथं दृष्टान्तदार्ष्टान्तिकभाव इति शङ्काभिप्रायः। ताद्दश-ज्ञानस्य संचारसाध्यतया तत्पूर्वं तादृशज्ञानमन्तरा केवलहितैषिवचनबलादेव

दिना कृतान्येतानि त्यक्तोपायेष्वन्वितानि भवन्ति कि-मिति न विचारणीयम्; अन्वितान्येव भवन्तीत्यर्थः ॥

"आनृशंस्यप्राधान्येनानुष्ठानेऽपि उत्क्षिप्तपिण्डस्या-काशेऽस्थितिवत्, तान्यपि केनचित्फलेन सम्बध्नन्ति । तस्मात्तान्यपि पापशब्दवाच्यानि" इति तन्निश्लोके एतै-रेवोक्तम् ॥ ७५ ॥

(७६) तत्तथा भवतु, पुनःप्रपत्तेः को वा दोष इत्यत आह—कलुषितेनेति ।

मू ॥ कलङ्कि उपायबुद्धया पण्णुं प्रपत्तियुं पातकत्तो-डोक्कुम् ॥ ७६ ॥

छा ॥ कलुषितेनोपायबुद्ध्या क्रियमाणा प्रपत्तिरपि पातकसदृशा ॥ ७६ ॥

व्या ॥ सकृदनुष्ठानं विना पुनरनुष्ठानासहप्रपत्तिस्व-भावमज्ञात्वा कलुषितेनानिष्टनिवृत्त्यर्थं वेष्टप्राप्त्यर्थं वो-पाय बुद्ध्या पुनःकृता प्रपत्तिरपि "अथ पातकभीतस्त्वम्" (गी-१९-६५) इत्युक्तोपायान्तरवत्पातकसमेत्यर्थः ॥

---

कर्मानुष्ठानं फलं जनयतीति श्रीभाष्यादौ व्यवस्थापिततया साधनबुद्धिमन्त-रानुष्ठानेऽपि फलजनकत्वं सम्भवत्येवेति समाधानाभिप्रायः । ज्ञानरहित-कर्मानुष्ठानस्यैव दृष्टान्तत्वेनोदाहरणम्—उत्क्षिप्तपिण्डस्येति ॥ ७५ ॥

(पातकसमा) इति पातकशब्दवाच्यसाधनान्तरवत्प्रतिबन्धिकैवेत्यर्थः । एकशब्देन स्वार्थप्रपत्तेरपि निषिद्धतया पुनरपि तदन्वये पातक एवेति भावः ॥ ७६ ॥

(७७) अनन्तरं चतुर्थपदमुपादत्ते-मोक्षयिष्यामीति।

मू ॥ मोक्षयिष्यामि ॥ ७७ ॥

छा ॥ मोक्षयिष्यामि ॥ ७७ ॥

(७८) तस्यार्थमाह - मुक्तो यथेति ।

मू ॥ मुक्तनांपडि पण्णक्कडवेन् ॥ ७८ ॥

छा ॥ मुक्तो यथा स्यास्तथा कुर्याम् ॥ ७८ ॥

व्या॥ एतेभ्यो विमोचितो यथास्यास्तथा कुर्यामित्यर्थः॥

(७९) इतःपरं णिजर्थमाह—णिचेत्यादिना ।

मू ॥ णिच्चालें 'नानुं वेण्डा, नीयुं वेण्डा, अवै तन्न- डैये विट्टुप्पोंकाण्' एन्गिरान् ॥ ७९ ॥

छा ॥ णिचा 'अहमपि नापेक्षितः, त्वमपि नापेक्षितः, तानि स्वयमेव विहाय गच्छन्ति' इत्याह ॥ ७९ ॥

---

(मोक्षयिष्यामि) "मोक्ष - मुक्तीभवने" इति धातुः । न तु मुच्लृधातुः । तथा सति 'मोचयिष्यामि' इति प्रसङ्गः ॥ ७७ ॥

(एतेभ्यः) इति - "ध्रुवमपाये" इत्यादिना पञ्चमी । यद्यपि धात्वर्थक्रियानाश्रयत्वं बाधितम्, तथापि मोचनगर्भितमुक्तीभवनक्रियानाश्रयत्वं पापानामिति पञ्चम्युपपत्तिः । 'सुप्तोऽपि सिंहो व्याघ्राद्धरिणं मोचयिष्यति' इति वत्, णिच उपपत्तिः । एतेन - 'अजान् ग्रामान्नयति, शिष्यं पाठं पाठयति' इत्यादिषु सर्वेषु णिच्प्रयोगस्थलेषु प्रयोजकव्यापारप्रयोज्यव्यापारयोरुभयोरावश्यकत्वेन "अहमपि नापेक्षितः, त्वमपि नापेक्षितः" इति कथनं कथमुपपद्यत इतिशङ्का परास्ता । 'अल्पोऽपि राजकीयश्चोराद्धिरण्यं मोचयिष्यति' इत्यादिकमेवमेव द्रष्टव्यम् ॥ ७८ ॥

व्या ॥ 'इष्यामि' इति णिचा स्वयंकर्तृत्वेन विना स्वयं प्रयोजककर्ता भूत्वा 'विमोचयिष्यामि' इत्युक्तत्वात्, 'मयापि अस्यैको यत्नो न कर्तव्यः, त्वयाप्यस्य न प्रार्थनीयम्, त्वत्कृतमदाश्रयणरूपराजकुलमाहात्म्येन त्वां दृष्ट्वा स्वयमेव भयं प्राप्य "वनं गतानि किं नापश्यं हन्त" (पेरियतिरुव० ५४) इत्युक्तप्रकारेण गतमार्गो यथा न ज्ञायते, तथा स्वयमेव विहाय गच्छन्ति' इति वदतीत्यर्थः ॥ ७९ ॥

(८०) एवं वदतस्तस्य तात्पर्यं प्रकाशयति—ममेत्यादिना ।

मू ॥ 'एन्नुडैय निग्रहफलमाय् वन्दवै नानिरङ्गिनाल् किडक्कुमो ? ' एन्गै ॥ ८० ॥

---

(इष्यामीति णिचे)ति - 'इदं व्याख्यानं णिच्प्रत्ययसामान्यस्य शक्तिग्राहकं न भवति, किन्तु प्रकृतस्य णिचः । अत्र 'सुप्तो मृगेन्द्रः व्याघ्राद्धरिणं मोचयिष्यति' इत्यादौ सत्ताश्रयलक्षणव्यापारस्यैव णिच्प्रत्ययेन बोधनात् मोक्षकर्मीभूतमृगे सिंहे च सत्ताश्रयत्वापेक्षयातिरिक्तव्यापारस्याभावात्, सर्वत्र णिचः प्रयोज्यकर्तृगतकर्तृतानिर्वाहकव्यापार एवार्थ इति न नियम इति भावः' इत्याहुरस्मदाचार्याः । 'इष्यामीति णिचा' इति प्रदर्शनं - द्राविडबालानां णिच्प्रत्ययबोधनार्थमित्याहुः । स्थूलारुन्धतीनयात् 'इष्यामि' इत्येतदुपलक्षितेन णिचेत्यर्थः । अयादेशस्थानिनो गुणस्य स्थानीभूते णिजिकार एव सुखोच्चारणार्थं 'इष्यामि' इत्यनेन सहोपात्तः" इति सूक्तिसाधुत्वमालायाम् ॥ ७९ ॥

छा ॥ 'मम निग्रहफलत्वेनागतानि अहमनुगृहीतवांश्चेत् तिष्ठन्ति किम्?' इत्यर्थः ॥ ८० ॥

व्या ॥ पापानि नाम - भस्मगोमयादिराशौ एरण्डवत् उत्थाय सर्पवत्कण्ठग्राहीणि न भवन्ति खलु, चेतनकृतकर्माणि क्षणध्वंसित्वात् तदानीमेव नष्टानि; अज्ञत्वात्कर्त्राऽनेनापि विस्मृतानि, स्वतस्सर्वज्ञेनैकमप्यविहाय ज्ञात्वा प्राप्तकाले अवश्यं तोलयित्वानुभावयितुर्मम निग्रहरूपत्वात्, तादृशनिग्रहफलत्वेनागतानि, निग्रहप्रतिकोट्यनुग्रहमहं कृतवांश्चेत्तद्विषये पुनस्तिष्ठन्ति किमित्यर्थ इत्यस्य तात्पर्यमित्यर्थः ॥ ८० ॥

(८१) 'स्वयमेव विहाय गच्छन्ति' इत्यत्राभिप्रेतमाह—अनादिकालमित्यादिना ।

मू ॥ अनादिकालं पापङ्गळैक्कण्डु नी पट्टपाट्टै अवै तान्पडुम्पडि पण्णुहिरेन् ॥ ८१ ॥

छा ॥ "अनादिकालं पापानि दृष्ट्वा त्वत्कृतभयं तान्येव यथा प्राप्नुवन्ति, तथा कुर्याम् ॥ ८१ ॥

व्या ॥ अनादिकालं दुःखावहानि पापान्येवाक्रम्य वर्तमानानि तानि दृष्ट्वा त्वत्कृतकम्पनं सर्वं मदाश्रयणराजकुलमाहात्म्यवन्तं त्वां दृष्ट्वा तानि स्वयमेव यथा विकीर्णशिरोरुहाण्यनुभवन्ति, तथाकुर्यामित्यर्थः ।

"तानि स्वयमेव विहाय यथा गच्छन्ति तथा करणं नाम - 'एतान्यस्माकं पूर्वं विद्यमानानि, इदानीं निवृत्तानि' इति यथा न ज्ञायन्ते, तथा निवर्तनम्। तच्च एतानि स्मृतिविषयाण्यपि स्वस्वाभाविकवेषं दृष्ट्वा स्वप्नदर्शनवत्, एतान्यागन्तुकानि सन्ति निवृत्तानीति स्थितिः, स्मृत्या दुःखस्याननुवर्तनञ्च" इति तनिश्लोके एतैरुक्तमत्रानुसन्धेयम् ॥ ८१ ॥

(८२) 'मोक्षयिष्यामि' इत्युत्तमाभिप्रेतं कञ्चनार्थविशेषमाह—इतःपरमित्यादिना।

मू ॥ इनि उन्कैयिलुन्नैक्काट्टित्तारेन्, एन्नुडम्बिललुक्कै नाने पोक्किक्कोळ्ळेनो ? ॥ ८२ ॥

छा ॥ इतःपरं त्वद्धस्ते त्वां न दास्यामि, मच्छरीरमलमहमेव न निवर्तयिष्यामि ? ॥ ८२ ॥

व्या ॥ एतावत्कालं 'मत्कार्यस्याहं समर्थोऽस्मि' इति स्थितत्वात्, 'स्वकार्यं स्वयमेव कुर्यात्' इति स्थितः, मम त्वं शरीरतया शेष इति ज्ञात्वा मयि भरन्यासकरणा-

---

' (स्वस्वाभाविकवेषम्)-अपहतपाप्मत्वादिकम्। (एतानि) पापानि ॥ ८१ ॥

(उत्तमाभिप्रेतम्) इति - 'त्वं मुक्तो भविष्यसि' इत्यनुक्त्वा उत्तमपुरुषनिर्देशः - "ददाम्येतद्व्रतं मम" (श्रीरामायणे-युद्ध-१८-३४) "ददामि बुद्धियोगं तम्" (गीता-१०-१०) इत्यादाविव भगवत एव भर इति श्रुतप्रकाशिकाचार्यानुगृहीतरीत्याभिप्रायद्योतनायेति मन्तव्यम् ॥

नन्तरं 'तव पापविमोचनयत्नं कुरु' इति त्वद्धस्ते त्वां न दास्यामि, मम शरीरभूतस्य तवाविद्यादिरूपमालिन्यं शरीरिभूतोऽहमेव किं न निवर्तयिष्यामीत्यर्थः ॥

'मच्छरीरमालिन्यमहमेव न निवर्तयिष्यामि किं ?' इति कथनम् - यत्फलित्वमुभयमपि स्वस्यैवेति प्रकाशार्थम् । तस्मात्तव विरोधिषु किमपि न तिष्ठतीति भावः ।

"विरोधिनिवृत्तेरभिमतप्राप्तेरुभयोरपि फलत्वे सति एकस्य कथनं कथमिति चेत्, एकस्योक्तौ अन्यस्य स्वयमेव प्राप्तेरन्या नोक्ता, "मामेवैष्यसि" (गी. ९-३४)

---

विरोधिनिवृत्तिकथनमभिमतसिद्धेरुपलक्षणमित्याह—**विरोधिनिवृत्तेरि**ति । **(स्वयमेव प्राप्तेः)** इति - प्रतिबन्धके निरवशेषं निवृत्ते सति भगवत्प्राप्तेस्स्वरूपानुबन्धित्वेन स्वयमेवाविर्भवतीति भावः । यथा सेतौ भग्ने जलं स्वयमेव गंच्छति, न केनचिन्नेतव्यम् - तद्वत् । ""यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा । यथोदपानकरणात्क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः । तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो गुणाः" (विष्णुधर्मे-१०४-५५॥) "पूर्वं मुक्ताः कर्मबन्धैर्मद्देशप्राप्तिपूर्वकम् । निस्सङ्कोचा भवन्त्येते मम साधर्म्यमागताः । आविर्भूतस्वरूपाश्च विध्वस्ताशेषकल्मषाः । समस्तहेयप्रध्वंसात् ज्ञानानन्दादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या ह्यात्मगुणाश्च ते" (पाञ्चरात्रे॥) "परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा-८-१२-२॥) "सम्पद्याविर्भावस्स्वेन शब्दात्" (ब्रह्मसू-४-४-१॥) इत्यादिवचनमिहानुसन्धेयम् ।

पक्षान्तरेण समाधत्ते - **मामेवैष्यसी**ति । अत्रायमभिप्रायः-"मामेवैष्यसि" इत्याद्यव्यवहितपूर्वश्लोकस्य "सर्वधर्मान्" इति श्लोकस्य च भिन्न-

इति पूर्वोपायस्योक्तं फलं विनास्योपायस्य फलान्तराभा-
वात् नोक्तमिति वा। तर्हि विरोधिनिवृत्तेः कथनं किमर्थ-
मिति चेत्, तस्या अधिकत्वादुक्तम् । विरोधिनिवृत्तौ
जातायां फलस्य स्वतस्सिद्धत्वात्, प्रत्येकं न वक्तव्य हि"
इति सङ्ग्रहेण श्रियःपतिप्पडिरहस्ये, विस्तरेण परन्दप्पडि-
प्रबन्धे तन्निश्लोके चोक्तौ शङ्कापरिहारौ अत्रानुसन्धेयौ ॥
८२ ॥

---

प्रकरणत्वं केचन वदन्ति। एकप्रकरणत्वं केचन। तत्र भिन्नप्रकरणत्वं वदता-
मयमाशयः - पूर्वं साधनभूतानां कर्मादीनां प्रतिपादनपूर्वकं साधनभूतभक्तेः
प्रतिपादनस्य प्रकृतत्वात् "मामेवैष्यसि" इत्यादिश्लोकेन तादृशसाधनभूत-
भक्तिरेव प्रतिपादयिष्यते। "सर्वधर्मान्" इत्यादिश्लोकेन तु पूर्वं "मामेव
ये प्रपद्यन्ते" इत्यादिना भक्त्यङ्गतया विहितायाः प्रपत्तेरत्र स्वातन्त्र्यमात्रं
प्रतिपाद्यते। इत्थं च साधनभूतभक्तिप्रतिपादकपूर्वप्रकरणे विरोधिनिवृत्तिरूप-
फलस्य पूर्वमेव बहुग्रन्थेन प्रतिपादितत्वात् "मामेवैष्यसि" इतिश्लोके अभि-
मतप्राप्तिरूपफलमपि प्रतिपादितमेव। एवं प्रपत्तेस्स्वातन्त्र्यप्रतिपादकचरम-
श्लोके फलस्य वक्तव्यत्वेऽपि विरोधिनिवृत्तेरभिमतप्राप्तेश्च द्वयोरपि फलत्वेन
विरोधिनिवृत्तिरूपफलस्य प्रतिपादने अभिमतप्राप्तिरूपफलस्यार्थात्सिद्धत्वेन
पृथग्वक्तव्यत्वाभावात्सर्वपापनिवर्तनरूपानिष्टनिवृत्तिमात्रं प्रतिपादितमिति।
द्वयोरेकप्रकरणत्वं वदतामयमाशयः - साधनभक्तिप्रकरणं "मामेवैष्यसि"
इति श्लोकात्पूर्वमेव समाप्तम्। अतो "मामेवैष्यसि" इति प्रकृतश्लोकद्वये-
नापि साध्यभक्तिः प्रपत्त्यात्मिका प्रतिपाद्यते। तत्र पूर्वश्लोकेन भगवत्प्राप्ति-
रूपाभिमतप्राप्तेरुक्ततया तदतिरिक्तफलस्यासत्त्वात् अस्मिन् श्लोके विरोधि-
निवृत्तिरूपफलं प्रतिपाद्यत इति। द्वयोरेकप्रकरणत्वमभिप्रेत्यैव—पूर्वो-
पायस्योक्तं फलं विनास्योपायस्येत्यादिकमुक्तम्। समर्थितं च द्वयो-
रेकप्रकरणत्वं वादिकेसरिभिस्तत्त्वदीपे। भिन्नप्रकरणत्वाभिप्रायेणाह—
तर्हीत्यादिना। (तस्याः) - विरोधिनिवृत्तेः। (अधिकत्वात्) -

(८३) अनन्तरं चरमपदमुपादत्ते—मा शुचः इति ।

मू ॥ मा शुचः ॥ ८३ ॥

छा ॥ माशुचः ॥ ८३ ॥

(८४) तस्यार्थमाह—त्वं तव कार्य इत्यादिना ।

मू ॥ 'नी उन्कार्यत्तिले अधिकरियामैयालुम्, नानुन्कार्यत्तिले अधिकरित्तुक्कोण्डुपोरुहैयालुम्, उनक्कुशोकनिमित्तमिल्लै काण्' एन्रु अवनुडैय शोकनिवृत्तियैप्पण्णिक्कोडुक्किरान् ॥ ८४ ॥

छा ॥ 'त्वं तव कार्येऽनधिकृतवान्, अहं तव कार्येऽधिकृत इति, तव शोकनिमित्तं नास्ति' इति तस्य शोकनिवृत्तिं करोति ॥ ८४ ॥

व्या ॥ त्वं तव कार्येऽधिकृतश्चेत् 'मत्कार्यस्य किं कुर्याम्' इति कालुष्येण शोकः प्राप्तः, अहं तव कार्येऽनधिकृतश्चेत् 'मत्कार्येऽयमुदासीनतया स्थितः; वयं कुत्राञ्जी-

---

पूर्वोपायनिष्ठाधिकार्यपेक्षया प्रपन्नस्य विरोधिनिवृत्तेराधिक्यादित्यर्थः । भक्तिनिष्ठस्य कृत्स्नमपि प्रारब्धम् - अकृतप्रायश्चित्तम्, बुद्धिपूर्वोत्तराघं चानुभवैकविनाश्यम् । विद्यया सञ्चितस्य नाशः । प्रामादिकोत्तराघस्याश्लेषः । प्रपन्नस्य तु अभ्युपगतप्रारब्धम् अकृतप्रायश्चित्तम्, बुद्धिपूर्वोत्तराघं चानुभवविनाश्यम् । पुरुषकारोपायमहिम्ना सञ्चितानभ्युपगतप्रारब्धयोर्विनाशः, प्रामादिकोत्तराघस्याश्लेषः । एवंरूपत्वात्तदपेक्षयास्याधिक्यं सिद्धमिति भावः ॥ ८२ ॥

(त्वम्) - अज्ञः, अशक्तः, अप्राप्तश्च त्वम् । (कार्ये) - इष्टानिष्टप्राप्तिपरिहाररूपकार्ये । (अहम्) - सर्वज्ञत्वादियुक्तोऽहम् ॥ ८४ ॥

वितुं गच्छामः' इति शोकः प्राप्तः, तथा विना यत्नफलित्वमुभयमपि यथा स्वस्य न भवति तथा स्वरूपपारतन्त्र्यं ज्ञात्वा तव रक्षणकार्येऽनधिकृतत्वात्, तव रक्षणे यत्नफलित्वमुभयमपि यथा मदीयं स्यात् तथा स्वामिभूतस्य मम तव पार्श्वे अभ्यन्तरं विना स्थितत्वात् तव रक्षणकार्येऽधिकृतत्वाच्च तव शोकनिमित्तं नास्तीति पूर्वं शोकाविष्टस्य शोकनिवृत्तिं करोतीत्यर्थः ॥

अनेन 'अहं त्वा' इति पदाभ्यामुक्तं रक्षकरक्ष्यभूतयोरनयोस्स्वभावमनूद्य शोकापनोदनमुक्तम् ॥ ८४ ॥

(८५) अथ निवर्तकस्य स्वस्य निवर्त्यानां पापानां च स्वभावानुक्त्वा शोकापनोदनकरणप्रकारमाह - निवर्तकस्वरूपमित्यादिना।

मू ॥ निवर्तकस्वरूपत्तैच्चोल्लि, निवर्त्यङ्गळ् उन्नै वन्दु मेलिडादेन्रु शोल्लि 'उनक्कु शोकनिमित्तमिल्लैकाण्' एन्गिरान् ॥ ८५ ॥

छा ॥ निवर्तकस्वरूपमुक्त्वा, निवर्त्यानि त्वामागत्य नाक्रमन्त इत्युक्त्वा, 'तव शोकनिमित्तं नास्ति' इत्याह ॥

व्या ॥ 'अहम्' इति सर्वज्ञत्वादिगुणविशिष्टस्य विरोधिनिवर्तकस्य स्वस्वरूपमुक्त्वा, 'त्वा सर्वपापेभ्यो मोक्षयिष्यामि' इति णिचा 'निवर्त्यानि पापानि त्वां दृष्ट्वा स्वयमेव भीतानि गच्छन्ति' इति मामेवोपायत्वेन स्वी-

कृत्य स्थितं त्वा नाक्रमन्त इत्यर्थमुक्त्वा, अनन्तरम् 'माशुचः' इत्युक्तत्वात्, एवम्भवनानन्तरं तव शोकनिमित्तं नास्तीत्याहेत्यर्थः ॥ ८५ ॥

(८६) एतद्विरोधिनिवृत्त्यर्थं स्वस्योद्युक्तत्वेन स्थितिं ज्ञापयित्वास्य शोकनिवृत्तिप्रकारमभियुक्तोक्तिं निदर्शनं कृत्वाह—केनेत्यादिना ।

मू ॥ "एत्तिनालिडक्कडल् किडत्ति येन्नेञ्जमे" (तिरुच्च० ११५) एन्गिरान् ॥ ८६ ॥

छा ॥ "केन दुःखसागरे मग्नो दीनमनः ?" इत्याह ॥

व्या ॥ श्रीमहीसारोपकारकः - स्वस्य श्रीमानसं प्रति 'सर्वेश्वरोऽस्य विरोधि दूरीकृत्य दास्यं स्वीकर्तव्यमिति विचार्यागत्य मनसि प्रविश्य स्थितः' इत्युक्त्वा, 'अथ किमर्थं त्वं दुःखसागरे निमग्नः' इत्युक्तवान्; तद्वदीश्वरोऽपि इदानीमस्य सर्वपापानि दूरीकर्तुं स्वकृतव्योपरं ज्ञापयित्वा, 'त्वं किमर्थं शोचसि' इति तं प्रत्याहेत्यर्थः ॥ ८६ ॥

---

साक्षाच्छोकस्यापुरुषतन्त्रत्वात्, विधेयत्वासम्भवेन शोकनिमित्तस्यैव निषेधः कृत इति भावेनोक्तम् - शोकनिमित्तं नास्तीति ॥ ८५ ॥

(अभियुक्ते)ति - अभियुक्तत्वम् - वेदप्रामाण्यनिरूपणाधिकृतत्वम् । "अभियुक्ताश्च ये यत्र यन्निबन्धप्रयोजनाः । तत्तत्यगुणदोषाणां ज्ञाने चाधिकृता मताः" इत्यभियुक्तस्वरूपमुक्तम् ।

(श्रीमहीसारोपकारकः) - श्रीभक्तिसारदिव्यसूरिः ॥ ८६ ॥

(८७) इतःपरमेतच्छ्लोकस्यापुनरङ्कुरं निवृत्तेरुपयुक्तं कञ्चिद्भगवदभिप्रायविशेषमाह—पापानि मयीत्यादिना ।

मू ॥ पापङ्गळै नान् पोरुत्तु 'पुण्यम्' एन्ऱु निनैप्पिडा-निर्क नी शोकिक्ककक्कडवैयो ? ॥ ८७ ॥

छा ॥ पापानि मयि सहित्वा 'पुण्यम्' इति स्मरति त्वं शोचितुं योग्यः किम् ? ॥ ८७ ॥

व्या ॥ त्वया कृतानि पापानि पूर्वमेव मत्क्षमाविषयाणि कृत्वा, पुनश्च त्वद्विषये मम विद्यमानेन वात्सल्येन "कृतपापमुपदात्वेन स्वीकृत्य" (तिरुच्चन्द० ११९) "कुर्वन्ति चेत्कुर्वन्तु" (पेरिया० ४-९-२) इत्युक्तप्रकारेण तानि पापानीत्यमत्वा पुण्यानीति स्मरति त्वं शोचितुं योग्यः किमित्यर्थः ॥

एवमुत्तरार्धे पञ्चभिः पदैः - निवर्तकस्वरूपम्, निवर्त्याश्रयम्, निवर्त्यानि पापानि, तन्निवृत्तिप्रकारं, तत्कार्यं शोकनिवृत्तिञ्चोक्तवान् ॥ ८७ ॥

(८८) इतःपरं - एतच्छ्लोकार्थे रुचेर्यस्य कस्यचिज्जा-

---

(पापानीत्यमत्वे)ति भगवदभिप्रायेणाश्रितविषयपापस्य "स्तन्यं तद्विषसम्मिश्रं रस्यमासीज्जगद्गुरोः" (हरिवंशे- ) इत्यादिरीत्या पुण्यत्वे चेतनेन पापाचरणे स्वरूपहानिर्भवेदित्यभिप्रायः । चेतनस्य यादृशं स्वरूपं शास्त्रशिक्षितं तादृशमेव युक्तम् ॥ ८७ ॥

एवं प्रतिपदमर्थमुक्तवान्; अथ चरमश्लोकार्थनिष्ठाक्रमनिरूपणसूत्राणामर्थं वक्तुं सर्वेषां सुखग्रहणाय तद्ग्रन्थसङ्गतिमाह—इतःपरमित्यादिना ।

यमानाया विद्यमानदौर्लभ्यम् (८८), अस्य श्लोकस्यास्मिन्नर्थे तात्पर्यमित्यमुमर्थम् (८९), अत्र विश्वासोत्पत्तिदौर्लभ्यम् (९०,९१), ईश्वरेणास्य प्रथममुपदेशाकरणे हेतुम् (९२), वेदपुरुषकृतोपायान्तरविधानस्य हेतुम् (९३), उपायान्तराणां स्वरूपेण त्यागे दोषो नास्तीत्यमुमर्थम् (९४), तेषां मुखान्तरेणान्वितत्वात्स्वरूपेण न त्यक्तानीत्यमुमर्थम् (९५, ९६) फलस्य साधनमेतदित्यमुमर्थम् (९७), फलसिद्धेरस्यापेक्षितमंशम् (९८), ईश्वरस्यास्य सुकृतमनिष्टमित्यमुमर्थम् (९८), अस्मिन्नर्थे आस्तिक्याद्युत्पत्त्योज्जीवनं, तदभावे नाशं एवेत्यमुमर्थम् (१००), व्यवसायहीनोऽत्रान्वितश्चेद्विनाशपर्यन्तं भवतीत्यमुमर्थम् (१०१), अस्याधिकारिण एते इत्यमुमर्थञ्च (१०२) क्रमेणोक्त्वा समापयति ।

तत्र प्रथमं कस्यचिद्व्युत्पत्तौ विद्यमानं दौर्लभ्यं दर्शयितुमेकमैतिह्यमाह—उय्यक्कोण्डारित्यादिना ।

मू॥ उय्यक्कोण्डार्विषयमाह उडैयवररुळिच्चेय्द्वार्तैयै स्मरिप्पदु ॥ ८८ ॥

छा॥ उय्यक्कोण्डार्विषये भाष्यकृदुक्ता वार्ता स्मर्तव्या ॥ ८८ ॥

व्या॥ तत्त्वनिर्णयं कृतवतः उय्यक्कोण्डारित्यस्य भक्तिनिष्ठत्वात्तस्य प्रपत्तिनिष्ठामुत्पादयितुं तदग्रे एतच्छ्लोकार्थ उक्ते 'अर्थस्थितिस्समीचीना वर्तते, तथाप्यमुं त्यक्त्वा तामवलम्बितुं रुचिर्मम नास्ति' इति तेनोक्ते 'विद्यावत्त्वात्, अर्थे प्रीतोऽभवत्, भगवत्प्रसादाभावाद्रुचिर्नोत्पन्ना' इति तद्विषये रामानुजस्वाम्युक्ता वार्ता स्मर्तव्येत्यर्थः॥ ८८॥

(८९) अथास्य श्लोकस्य तात्पर्यमस्मिन्नित्यमुमर्थमाह—अस्येति।

मू॥ इदुक्कु ईश्वरस्वातन्त्र्यत्तिले नोक्कु॥ ८९॥

छा॥ अस्य ईश्वरस्वातन्त्र्ये तात्पर्यम्॥ ८९॥

---

(तत्त्वनिर्णयङ्कृतवतः) इति - श्रीभगवद्रामानुजाचार्यैश्शक्तं तत्त्वनिर्णयपुण्डरीकाक्षं प्रत्येवोपादिष्टत्वात् शक्ताशक्तविभागेन भक्तिप्रपत्त्यनुनुष्ठानोपवर्णनमसमञ्जसमिति सिद्धम्॥ (अर्थस्थितिस्समीचीना) इति - भगवच्छरीरतया शेषभूतस्यात्मनः प्रापकान्तरपरित्यागपूर्वकतदेकोपायत्वाध्यवसायरूपार्थस्थितिस्स्वरूपानुरूपत्वात्समीचीनैवेत्यर्थः। (भगवत्प्रसादाभावात्) - जायमानकालनिर्हेतुककटाक्षाद्यभावादित्यर्थः॥८८

(ईश्वरस्वातन्त्र्ये तात्पर्यम्) इति - अत्रायमाशयः - ईश्वरस्य स्वातन्त्र्यं द्विविधम् - पर्यनुयोज्यमपर्यनुयोज्यमिति। रचनानुपपत्त्यधिकरणे "स भगवान्पुरुषोत्तमस्स्वमाहात्म्यानुगुणलीलाप्रवृत्तः' इत्याद्यनुगृहीतं

व्या ॥ शास्त्राणि सर्वाणि एककोटौ स्वयमेककोटा-विति स्थितस्यास्य श्लोकस्य शास्त्रविहितान्सर्वधर्मान् सवासनं त्याजयित्वास्य चेतनस्य स्वयमेव निरपेक्षसाधनं भूत्वा प्राप्तिप्रतिबन्धकानि सकलपापानि दूरीकृत्य स्वं प्रापयितुः स्वाधीनसकलप्रवृत्तिकस्येश्वरस्य स्वातन्त्र्ये तात्पर्यमित्यर्थः ॥ ८९ ॥

(९०) अथात्र विश्वासोत्पत्तिदौर्लभ्यमाह— अय-मित्यादिना ।

मू ॥ "इद्दुतान् अनुवादकोटियिले" एन्रु वङ्गिप्पुरत्तु-नम्बि वार्तै ॥ ९० ॥

छा ॥ "अयञ्चानुवादकोटौ" इति वङ्गिप्पुरनम्बि-वार्ता ॥ ९० ॥

व्या ॥ अयं श्लोकश्चानुवादकोटाविति आप्ततमवङ्गि-प्पुरनम्बि - उक्ता वार्ता इत्यर्थः ॥ ९० ॥

---

स्वातन्त्र्यमपर्यनुयोज्यम् । तदन्यत्पर्यनुयोज्यम् । चरमश्लोकस्य च प्राथमिक-स्वातन्त्र्येणैव प्रवृत्तिः - इति सम्प्रदायः । अन्ये तु द्वितीयस्वातन्त्र्येण प्रवृत्तिं मन्यन्ते । तथा सति सकलशास्त्रापेक्षयान्तरङ्गभूतप्रतितन्त्रार्थप्रतिपादकत्वं कथं सङ्गच्छत इति पर्यालोचनीयमिति ॥ ८९ ॥

(आप्ततमे)ति - आप्ततमत्वम् - यथार्थदर्शनसामर्थ्ये सति यथार्थ-वादित्वम् । (अनुवादकोटौ) इति अत्रानुवादः - अनुष्ठानपर्यन्तत्वरा-तिशय एव । अर्जुनस्य कारणान्तरेण स्वरूपविरुद्धसर्वधर्मपरित्यागपूर्वक-भगवच्चरणारविन्दशरणागत्यनुष्ठानपर्यन्तत्वराविश्वासाद्यतिशयोत्पत्त्यनन्तर-मेव भगवता चरमश्लोकोपदेशात्, तादृशत्वरातिशयानन्तरमुपदिष्ट इत्यनु-

(९१) तत्केन हेतुनेत्यत्र आह—अर्जुन इत्यादिना ।

मू ॥ अर्जुनन् कृष्णनुडैय अमानुषचेष्टितङ्गळालुम्, ऋषिहळवाक्यङ्गळालुम्, कृष्णन् तन्कार्यङ्गळिले अधिकरित्तुक्कोण्डु पोरुहैयालुम् 'इवने नमक्कुत्तञ्जम्' एन्नु तुणिन्दपिन्बु तन्नैप्पत्तच्चोल्लुहैयाले ॥ ९१ ॥

छा ॥ अर्जुनः कृष्णस्यातिमानुषचेष्टितैः, ऋषिवाक्यैः, कृष्णस्य स्वकार्ये अधिकृत्य स्थितत्वाच्च 'अयमेवास्माकं शरणम्' इति विश्वस्तस्तदनन्तरं स्वाश्रयणस्योक्तत्वात् ॥

---

वाद एवायं चरमश्लोकः । न च कारणान्तरेणानुष्ठानस्य प्राप्तत्वे एतदुपदेशः किमर्थमिति वाच्यम्; अनुष्ठानस्य प्राप्तत्वेऽपि स्वोत्पन्नस्य ज्ञानस्य विपाकस्य दार्ढ्यार्थमस्योपदेशस्यावश्यकत्वात् ।

केचित् - अस्य वाक्यस्य चरमश्लोकविषये विश्वासोत्पत्तिदौर्लभ्यस्य व्यवस्थापकत्वात् 'परित्यज्य स्थितश्चेत्' इति पूर्वं निरस्तानुवाद एवायमित्यस्य वङ्गिपुरत्तुनम्बिनामकस्याचार्यस्याभिप्राय इति वदन्ति । तत्तु 'आप्ततम' इति व्याख्यानविरुद्धम् । स्वेनैव निरस्तपक्षावलम्बिनः आप्ततमत्वेन सङ्कीर्तनस्य सन्दर्भविरुद्धत्वं च । अतोऽस्मिन् श्लोके अनुष्ठानपर्यन्तत्वरातिशयवत एवार्जुनस्य चरमश्लोकोपदेशात् प्राप्तानुवादरूपानुवाद एवायमिति तेषामाशयः । न तु प्रमाणान्तरप्राप्तसाधनानुष्ठानपरित्यागरूपानुवादप्रदर्शक इति ।

ननु सर्वधर्मपरित्यागपूर्वकसिद्धोपायवरणात्मिकायाश्शरणागतेरनुष्ठितत्वे कथमर्जुनस्य मुक्तिर्नास्तीति वक्तुं शक्यत इति चेत्, नैवम्; अर्जुनस्य शरणागत्यनुष्ठानपर्यन्तत्वरातिशय एव जातः, न त्वनुष्ठानम् । तस्मात्तस्य मुक्तिर्नास्तीति वक्तुं सुशकत्वात् । तत्कथमवगम्यते इति चेत्, 'मा शुचः' इति भगवद्वचनेनैव सुस्पष्टमवगम्यते । शरणागत्यनुष्ठाने कृते सत्यर्जुनस्य शोकानुवृत्तेरेवाप्रसक्तत्वेन 'माशुचः' इति शोकापनोदनस्यैवानवसरग्रस्तत्वापत्तेः । तथाचार्तविशेषरूपसिद्धोपायाधिकारस्यैवार्जुनेऽसम्भवात्, अनुष्ठानं

ण्या ॥ अस्याधिकार्यर्जुनो बाल्यात्प्रभृति कृष्णस्याघटितघटनासामर्थ्यप्रकाशकातिमानुषचेष्टितैः, "एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः। नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ॥ पुण्या द्वारवती यत्र तत्रास्ते मधुसूदनः। साक्षाद्देवः पुराणोऽसौ स हि धर्मस्सनातनः॥ ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ पवित्राणां हि गोविन्दः पवित्रं परमुच्यते। पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम्" (भारतारण्य तीर्थयात्रापर्व ८६-२४, २५, २६, २७) "यत्र नारायणो देवः परमात्मा

---

तस्य न विद्यत एवेति। तथा चानुगृहीतं श्रीपराशरभट्टदेशिकैः "निश्चित्य त्वदधीनतां मयि सदा कर्माद्युपायान्हरे कर्तुं त्यक्तुमपि प्रपत्तुमनलं सीदामि" इति ॥ ९० ॥

(अघटिते)ति - अन्येन कर्तुमशक्यस्य घटनायां सामर्थ्यम् - अघटितघटनासामर्थ्यम्। (अतिमानुषचेष्टितैः) - मानुषानतिक्रान्तैश्चेष्टितैः। (नारायणः) - उभयविभूतिनाथः। (श्रीमान्)-श्रियःपतिः। (नागपर्यङ्कम्) - अनन्तम्। हीति प्रसिद्धिः। (स हि धर्मस्सनातनः) - स एव सनातनो धर्मः। हीति श्रुत्यर्थप्रसिद्धिः। "अमृतस्यैष सेतुः" "नायमात्मा प्रवचनेन" इत्यादिश्रुतेः। (ये चे)ति 'ये च वेदविदः' इत्यनेन पूर्वभागेऽपि ज्योतिष्टोमादिकं भगवत्प्रीणनमात्रम्, तद्व्याजेन भगवानेव स्वर्गाद्यलौकिकश्रेयस्साधनतया धर्मत्वेन विवक्षित इति गम्यते। वेदशब्दस्य गोबलीवर्दन्यायेन पूर्वभागपरत्वात्। विच्छब्दस्यार्थवेदनपर-

सनातनः। तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च" (भारतारण्यपर्व ८८-२७) "कृष्ण एव हि लोकाना-मुत्पत्तिरपि चाप्ययः। कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्" (भारतारण्यपर्व ४१-२३) इत्यादिभिः परावरतत्त्वयाथात्म्यविदृषिवाक्यैः, बाल्यात्प्रभृतिपुरवास-दशायां वनवासदशायां चाविशेषेण कृष्णस्य स्वकार्यसमर्थत्वेन रक्षणं कृत्वा स्थितत्वाच्च 'एतदुक्तोपायांस्सर्वे ऽस्माकं न शरणम्, अयमेवास्माकं शरणम्' इति विश्वस्तः, तदनन्तरम् 'तर्हि मामाश्रय' इत्युक्तत्वादित्यर्थः ॥ ९१ ॥

(९२) अस्य प्रथमम् उपदेशाकरणे हेतुमाह—पूर्वमित्यादिना।

मू ॥ पुरम्बुपिरन्ददेह्लामिवन्नेञ्ञेचोदिक्कैक्काह ॥ ९२॥

---

त्वात्। अध्यात्मविदः - "द्वासुपर्णा" (मुण्डको ३-१-१॥) इत्याद्युक्तरीत्या शरीरान्तर्वर्तिजीवपरमात्मविद इत्यर्थः। अनेन वेदान्तेषु आत्मपरमात्मविद्ये भगवत्प्रीणनमात्रम्, तद्व्याजेन भगवानेव कैवल्यमोक्षरूपालौकिकश्रेयस्साधनतया धर्मत्वेनाभिमत इति गम्यते। 'सनातनम्' इति न स्वरूपानादित्वपरम्, भगवत्स्वरूपानादित्वोक्तेः प्रकृतेऽनुपयोगात्। किन्तु ज्योतिष्टोमादेः भगवत्प्रीतिरूपालौकिकश्रेयस्साधनत्वं यथा दृष्टादृष्टपरिकरसापेक्षम्, न तथा भगवतः फलसाधनत्वम्-अदृष्टद्वारककिञ्चिद्व्यापारसापेक्षम्। सर्वस्यापि व्यापारस्य भगवत्प्रसादरूपादृष्टसाध्यत्वात्। तस्माद्भगवतो धर्मत्वं सनातनमित्यभिप्रायः। (कृष्णस्य हि कृते) - कृष्णस्य शेषभूतमित्यर्थः ॥ ९१ ॥

छा ॥ पूर्वं विस्तारस्सर्वः "एतन्मनश्शोधनार्थम् ॥ ९२

व्या ॥ "यच्छ्रेयस्स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" (गीता २-७) इत्यस्योपायोपदेशकरणारम्भदशायां पूर्वममुमनुपदिश्योपायान्तराणां विस्तरेणोपदेशस्सर्वः 'तावन्मात्रे पर्यवस्यति, उत तेषां दोषदर्शनेनास्योपायस्याऽधिकारी भवति' इत्यस्य हृदयशोधनार्थमित्यर्थः ॥ ९२ ॥

(९३) तर्हि अयमेव ह्येवं हृदयशोधनार्थमुपायान्तराण्युपदिदेश, वेदपुरुषस्तानि किमिति विदधातीत्यत आह—वेदपुरुष इत्यादिना ।

मू ॥ वेदपुरुषनुपायान्तरङ्गळै विधित्तदु - कोण्डिप्पशु वुक्कुत्तडिकट्टिविडुवारैप्पोले, अहङ्कारममकारङ्गळालवन्द कळिप्पत्तु स्वरूपज्ञानं पिरक्कैक्काह ॥ ९३ ॥

छा ॥ वेदपुरुष उपायान्तराणि विदधाति - दुष्टपशोर्यष्टिं बध्वा गमयितार इव, अहङ्कारममकाराभ्यामागतं गर्वं त्यक्त्वा स्वरूपज्ञानोत्पत्त्यर्थम् ॥ ९३ ॥

---

(एतन्मनश्शोधनार्थम्) इति - न च स्वतस्सर्वज्ञस्य हृदयशोधनानुपपत्तिः; लोके सदाचार्यपदनिर्वाहकान्प्रति "परीक्ष्य विविधोपायैः" (शाण्डिल्यस्मृ- ) इत्युक्तशिष्यहृदयपरीक्षणज्ञापनार्थमेव भगवता वदनुष्ठानोपपत्तेः । स्वस्यापि गीतोपनिषदाचार्यत्वसिद्धेः । "आचार्यं मां विजानीयात्" इत्यन्यत्र प्रसिद्धेश्चेति तात्पर्यम् ॥ ९२ ॥

व्या ॥ आप्ततमभूतो वेदपुरुषः "विज्ञाय प्रज्ञां कुर्वीत" (बृहदारण्य० ६-४-२१) "ओमित्यात्मानं ध्यायथ" (मुण्डकोप० २-२-६) "आत्मानमेव लोकमुपासीत" (बृहदारण्य० ३-३-१५) "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृहदार० ६-५-६) इत्यादिनोपायान्तराणि मोक्षसाधनत्वेन विदधाति, चौर्येण सस्यादिभक्षणं कृत्वा सञ्चरन्त्याः गोस्साध्वीचीन्यसम्पादनार्थं गले यष्टिं बध्वा गमयितार इवाहङ्कारममकारवश्यस्य गर्वितस्यास्य "जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः" (लघ्वत्रिस्मृति १) इत्युक्तप्रकारेण कायक्लेशरूपकर्मानुष्ठानेन्द्रियजयप्रभृतिभिर्दुष्करैश्श्रमं प्राप्य तादृशगर्वं त्यक्त्वा भगवत्पारतन्त्र्यरूपस्वरूपज्ञानोत्पत्त्यर्थमित्यर्थः ॥ ९३ ॥

(९४) तर्ह्येवं स्वरूपज्ञानोदयहेतुभूतस्यास्य त्यागे दोषो न भवतीत्यत आह—सन्न्यासीत्यादिना ।

---

(वेदपुरुषः) - वेदाधिष्ठानदेवताविशेषः । ज्ञानपरवाक्यमुदाहरति—विज्ञायेति । ध्यानपरवाक्यमुपादत्ते—ओमित्यात्मानमिति । 'ध्यायथ' इति वर्तमानापदेशरूपत्वात्, विधिरस्फुट इत्यभिप्रायेण स्फुटविधिरूपवाक्योपादानम्—आत्मानमेवेति । (लोकम्) - लोक्यत इति लोकः= सदा दर्शनविषयः; तं - लोकम् । उपासनस्य दर्शनसमानाकारत्वरूपविशेषसमर्पकवाक्योपादानम्—आत्मावेत्यादि । विधिप्रत्ययलब्धम् - मोक्षसाधनत्वेनेति । विद्याबहुत्वाभिप्रायेण बहुवचनम् । (अस्य) - चेतनस्य ॥ ९३ ॥

मू ॥ सन्न्यासि मुन्बुळ्ळवत्तै विडुमाप्पोले, इव्वळवु पिरन्दवन् इवत्तै विट्टा कुत्तं वाराडु ॥ ९४ ॥

छा ॥ सन्न्यासी पूर्वं स्थितान् यथा त्यजति, तथैतद्ज्ञानोत्पत्तिमान् एतान् त्यजति चेत् दोषो नास्ति ॥ ९४

व्या ॥ चरमाश्रमेऽन्वितः पूर्वाश्रमधर्मान्यथा त्यजति तथान्योपायानां स्वरूपविरोधित्वादिना सिद्धोपायावगाहनोपयुक्तैतावद्ज्ञानपाकोत्पत्तिमान् एतदुपायान्तराणि त्यजतिचेत् दोषो न भवतीत्यर्थः ॥ ९४ ॥

(९५) एतेषामाकारान्तरेणान्वितत्वात् एतेष्वस्य स्वरूपत्यागो नास्ति इत्यमुमर्थमाह—अयमित्यादिना ।

मू ॥ इवन्दान् इवै तन्नै नेराह विट्टिलन् ॥ ९५ ॥

छा ॥ अयमेतान् साक्षान्न त्यजति ॥ ९५ ॥

व्या ॥ साधनान्तरपरित्यागपूर्वकसिद्धसाधनपरिग्रहं कुर्वन्नयमधिकारी कर्मज्ञानादीनेतान् स्वरूपतो न त्यजतीत्यर्थः ॥ ९५ ॥

(९६) तत्कथमित्यत आह—कर्मेत्यादिना ।

मू ॥ कर्मम् - कैङ्कर्यत्तिले पुहुम् । ज्ञानम् - स्वरूपप्रकाशत्तिले पुहुम् - भक्ति - प्राप्यरुचियिले पुहुम् । प्रपत्ति - स्वरूपयाथात्म्यज्ञानत्तिले पुहुम् ॥ ९६ ॥

छा ॥ कर्म - कैङ्कर्येऽन्तर्भवति । ज्ञानम् - स्वरूपप्रकाशेऽन्तर्भवति। भक्तिः प्राप्यरुचावन्तर्भवति। प्रपत्तिः स्वरूपयाथात्म्यज्ञानेऽन्तर्भवति ॥ ९६ ॥

व्या॥ स्ववर्णस्वाश्रमोचितत्वेनानेनानुष्ठितानि विहितकर्माणि - साधनबुध्या विनानृशंस्येन परार्थतयानुष्ठितत्वादीश्वरस्यात्यन्ताभिमतत्वात्तत्प्रीतिरूपेण क्रियमाणकैङ्कर्येऽन्तर्भवन्ति।

"सूक्ष्मज्ञानम्" (तिरुवा० ५-७-१) इत्युक्तप्रकारेण स्वस्वरूपज्ञानपूर्वकं परस्वरूपं साक्षात्कर्तुमुपयुक्तं सूक्ष्मज्ञानम् - साधनबुद्धौ निवृत्तायां स्वरूपप्रकाशेऽन्तर्भवति।

"भक्त्या त्वनन्यया लभ्यः" (गीता ११-५४) इत्युक्तप्रकारेण भगवत्प्राप्तिसाधनभूता भक्तिः-तत्र साधनबुद्धिनिवृत्तौ भोजनस्य क्षुधेव प्राप्यभूतकैङ्कर्यस्य पूर्वक्षणेऽनुवर्तनीयायां रुचावन्तर्भवति।

सिद्धोपायवरणरूपा प्रपत्तिः - एकपदोक्तप्रकारेण साधनभावनिवृत्तौ अत्यन्तपरतन्त्रतयानन्यशरणस्य स्वरूपस्य याथात्म्यज्ञानेऽन्तर्भवतीत्यर्थः ॥ ९६ ॥

(९७) भक्तिप्रपत्त्योरुभयोर्निवृत्तौ स्वस्य फलसाधनं भवतीति कथमित्यत आह—एकस्य फलस्येत्यादिना।

मू ॥ ओरु फलत्तुक्कु ... आरियवळियैयुम्, एळिय-वळियैयुमुपदेशिक्के ... डुमोळिय भगवत्प्रसा-दमे उपायमाहक्कडवदु ॥ ९७ ॥

छा ॥ एकस्य फलस्य - दुर्लभमार्गस्य, सुलभमार्गस्य चोपदिष्टत्वात्, एतदुभयं विना भगवत्प्रसाद एवोपायो भवति ॥ ९७ ॥

व्या ॥ भगवत्प्राप्तिरूपस्यैकस्य फलस्य, "जन्मान्तर-सहस्रेषु तपोज्ञानसमाधिभिः । नराणां क्षीणपापानां कृष्ण भक्तिः प्रजायते" (लघ्वत्रिस्मृति) इत्युक्तप्रकारेणा-नेकजन्मसु कर्मज्ञानादिरूपाङ्गैः साधनीयत्वात् दुर्ल-भस्य भक्तिमार्गस्य, "सर्वधर्मान्परित्यज्य" इति सकल-प्रवृत्तिनिवृत्तिपूर्वकत्वात्, सकृदनुष्ठेयत्वाच्च सुलभस्य प्र-पत्तिमार्गस्यचोपदिष्टत्वात् साधनगौरवलाघवे तात्पर्यं विना तत्तद्व्याजेन फलप्रदस्य तस्य प्रसादस्यैव प्रधान-त्वात् भक्तिप्रपत्तिरूपैतदुभयं विना भगवतः प्रसाद एवो-पायो भवतीत्यर्थः ॥ ९७ ॥

(९८) तर्हि फलस्यैतस्मिन् यत्किञ्चिदपि नापेक्षितं किमित्यत आह—फलस्येत्यादिना ।

मू ॥ पेत्तुक्कु वेण्डुवदु विलक्कामैयुमिरप्पुम् ॥ ९८ ॥

छा ॥ फलस्यापेक्षितम् - अप्रतिषेधः, याच्ञा च ॥

